



पार्थसारथिमिश्रकृता

# शास्त्रदीपिका

प्रभाव्याख्यासहिता

राष्ट्रपतिसम्मानित संस्कृतविदुषा

## पं. पट्टाभिराम शास्त्रिणा

संशोध्य सम्पादिता



श्रीः

संस्कृतविद्यापीठग्रन्थमालायाः पञ्चविंशं पुष्पम्

# शास्त्रदीपिका प्रभासहिता

श्रीपार्थसारथिमिश्रप्रणीतशास्त्रदीपिका तत्सद्ध्यनाथकृतप्रभासहिता

( प्रथमो भागः )




प्रधान सम्पादकः

डॉ० सी० आर० स्वामिनाथन्

प्राचार्यः

दिल्ली केन्द्रिय संस्कृत विद्यापीठस्य

सम्पादकः

आचार्यः-पी० एन्० पट्टाभिरामशास्त्री

विद्यासागरः

श्री लालबहादुरशास्त्रिकेन्द्रियसंस्कृतविद्यापीठम्

नूतन दिल्ली

वि० सं० २०३४ (१९७८)

● प्रकाशक :
श्री लालबहादुरशास्त्रिकेन्द्रियसंस्कृतविद्यापीठम्
नूतन दिल्ली

● प्रथम संस्करणम् : ५५० प्रतयः

● मूल्यम् : रु० ५०/

● मुद्रक :
मदन मोहन धवन
श्री माधव मुद्रणालय
बाँसफाटक, वाराणसी-२२१००१
फोन : ६५८३९

# SASTRADIPIKA

of

## Parthasarathi Misra

With the Commentary

## PRABHA

by

## Tatsat Vydyanatha

Ist Part




Chief Editer
Dr. C. R. SwamiNathan
Principal, Sri Lalbahadur Kendriya
Sanskrit Vidyapeetha

Editer
Acharya P. N. Pattabhirama Sastri
Vidyasagar

Sri Lalbahadur Kendriya
Sanskrit Vidyapeetha
1978

*Published by*
Sri Lalbahadur Kendriya
Sanskrit Vidyapeetha
New Delhi

Ist Edition
**550 Copys**

**Prize Rs. 50·00**

*Printed by*
**M. M. Dhawan**
at Shree Madhava Mudranalaya
**Bansphatak, Varanasi-221001**

# प्रधान-सम्पादकीयम्

परब्रह्मणः परमेश्वरस्य निःश्वसितभूतानां कृतकेतरशब्दसङ्गुम्फितानां स्वतः प्रामाण्यमावहतां वेदानां सम्यगर्थावबोधनाय प्रवृत्तानि चतुर्दश विद्यास्थानानि प्रसिद्धानि वर्त्तन्ते। तेषां मध्ये व्याकरणं मीमांसाऽऽन्वीक्षिकीति शास्त्रत्रयं शास्त्रान्तराणां जीवातुभूतमिति सर्वेषां विदितचरमेव। अत एव प्राचीनकालेषु ये विपश्चितस्त्रयाणामप्येषां पूर्णतयाऽध्ययनमकार्षुस्ते 'पद-वाक्य-प्रमाणज्ञा' इति प्रसिद्धिमवापुः।

तत्र वाक्यशब्देन सङ्केतितस्य मीमांसाशास्त्रस्य पदप्रमाणयोन्तरा मध्यमणिन्यायेन विराजतो व्याकरण-न्यायशास्त्राभ्यां वैशिष्ट्यमुपगतम्। वेदोदितानां धर्माणामवगमने मीमांसायाः प्राधान्यं तत्र हेतुः। न केवलं यज्ञादीनां किन्त्वा गर्भोत्पत्तेर्मरणपर्यन्तमा च सूर्योदयात् सुषुप्तिपर्यन्तं कर्तव्यानां नित्य-नैमित्तिक-काम्यरूपाणां दृष्टादृष्टफलजनकानां प्रत्यवायपरिहारमात्रोद्देशेन वा कर्तव्यानां सर्वासाञ्च मानवप्रवृत्तीनां चोदनाप्रदा खलु कर्मकाण्डात्मिका वैदिकी संहिता। तत्प्रतिपादितेषु विषयेषु पौर्वापर्यवैषम्ये प्राप्ते सति मुख्यात्वगौणत्वादिनिर्णये, अव्याप्त्यतिव्याप्त्यसङ्गत्यादिदोषनिवारणे, विधि-नियम-परिसङ्ख्याऽर्थवादादिक्रमेण श्रुतिवाक्यानि विविच्य तेषां मिथस्तरतमभाव-निर्धारणे च प्रवर्तयद् मीमांसाशास्त्रं पदप्रमाणाभ्यामधिकं मानवजीवनस्य नियन्त्रणायोपकुर्वद् 'वेदोऽखिलो धर्ममूल'मिति सूक्तिं सार्थीकरोति।

धर्मप्रतिपादिकाः स्मृतयोऽर्थशास्त्रं कामशास्त्रं च मीमांसामुपकुर्वन्ति। किं बहुना? त्रयाणामपि पुमर्थानां सम्पादनाय कामदोग्ध्रीं श्रुतिं दोग्धुं वत्सत्वेनोपकरोति पूर्वमीमांसा, तत्परमुत्तरमीमांसा औपनिषदानां तत्त्वानां सम्बोधनेन मोक्षद्वारमुद्घाटयति। एवं च पुरुषार्थचतुष्टयस्याप्त्यै यथा मीमांसायाः साक्षात्सम्बन्धस्तथा नेतरेषाम्। यद्वत् सप्राण एव कश्चिच्चक्षुर्भ्यां द्रष्टुं प्रभवति तथा नेत्रभूते व्याकरणन्यायशास्त्रे मीमांसाभिधप्राणस्य सापेक्षे स्तः।

तादृश मीमांसाशास्त्रस्याध्ययनाध्यापनपरम्परायां ह्रासं गतायां स्वयं तत्साम्प्रतं लुप्तप्रायमिति कस्य मनो न दोदूयते? कस्य वा शास्त्रान्तरे निष्णातस्यापि सचेतसश्चेतसि ह्रियं नोत्पादयति? आधुनिकसभ्यतायां दृढं विश्वसतोऽपि जनस्य हृदये वैदिकपरम्परायां च मीमांसैव प्रभविष्यति। अतो धर्मनिरपेक्षतावादिनोऽपि मानवसमुदायस्य कल्याणमभिलषतां समेषां मीमांसाऽध्ययनस्य संरक्षणेन लाभोऽवश्यं भावी।

मीमांसा च भाट्ट-प्राभाकरभेदेन द्विधा प्रसिद्धा। तत्र भाट्टमतानुयायिष्वग्रगण्यस्य श्रीमतः पार्थसारथिमिश्रस्य शास्त्रदीपिकाख्यो ग्रन्थो नैकेषां विदुषां पर्यालोचनात्मकैर्व्याख्यानैस्समलङ्कृतः पाण्डित्यनिकषायितो वर्तते। तद्व्याख्यास्वन्यतमा 'प्रभा'-ऽभिधा व्याख्या। 'दीपिका' 'प्रभा' चेमे प्रत्यधिकरणं शास्त्रसङ्गतिमध्यायसङ्गतिं प्रकृतसङ्गतिमनन्तरसङ्गतिं च प्रदर्श्य कल्यं तत्थ्यञ्च निरूपयतः। सा चेयं 'प्रभा' व्याख्या कुवलयानन्दादीनामनेकग्रन्थानां व्याख्यारचनया विद्वन्मण्डलस्य महोपकारं कृतवता महाराष्ट्रदेशीयेन तत्सद्वैद्यनाथाख्येन विरचिता चिरकालादमुद्रितैवावर्तत। तस्या व्याख्याया मूलेन सह सम्पादनं प्रकाशनं च 'दिल्लीस्थ-श्रीलाल-बहादुर शास्त्रि केन्द्रिय संस्कृत विद्यापीठ' द्वारा भवतीति विद्यापीठसदस्या वयं धन्याः।

अहोभाग्ययमस्माकं यच्छास्त्रमिदं संरक्षितुं पञ्चषा विद्वांसो देशेऽस्मिन्नद्यापि विराजन्ते येषां जीवनकाल एवास्या अध्ययनाध्यायनपरम्परायाःपुनरुज्जीवनाय किञ्चित् कर्तुं वयं शक्नुमः। तादृशेषु विद्वत्सु स्वनामधन्याः नैकबिरुदसमलंकृताः विशेषेण मीमांसायां निष्णाताः पट्टाभिरामशास्त्रिणोऽस्मद्भागधेयेन ग्रन्थमिमं सम्पादयितुं परिष्कृत्य प्रकाशमानेतुञ्चोपकृतवन्तः। पण्डितप्रकाण्डानां महामहोपाध्याय ब्रह्मश्री-चिन्नस्वामिशास्त्रिणामन्तेवासिन इमे 'दीप इव प्रदोपादि'ति वचनानुसारेण स्वगुरुचरणेभ्य उपलब्धां शेमुषीं निजामन्दानवरताऽभियोगेन द्रढीकृत्य लोकोपकाराय प्रयुञ्जन्तो निखिलां संस्कृत जगतीमधमर्णयन्ति। अस्य विद्यापीठस्य सौभाग्यमिदं यदेतेषां प्रयत्नस्य श्रद्धायाश्च मूर्तिमत्पुस्तकमिदं विदुषां समक्षमधुनानीयते। नित्यं वृद्धोपसेविनोऽस्य विद्यापीठस्य भूतपूर्वप्राचार्या मम सुहृदः श्रीमण्डनमिश्रार्याः अध्वरमीमांसाकुतूहलवृत्तिवत् कार्यमिदं शास्त्रिवर्याणां द्वारा निर्वर्तयितव्यमिति सम्यङ्निर्णयमकुर्वन्। तस्य च निर्वहणे शिष्यवात्सल्येन शास्त्रे श्रद्धातिशयाच्च वार्धक्यप्रयुक्तां निजशरीरग्लानिमप्यविगणय्य प्रयतितवद्भ्यः पण्डित पट्टाभिरामशास्त्रिभ्यो धन्यवादात्मकं नमोवाकमन्तरा तत्प्रयत्नानुरूपं प्रत्युपकारं कर्तुमक्षमा वयम्।

ग्रन्थस्यास्य प्रकाशनेन मीमांसाऽध्ययनाध्यापने पुनः प्रेरिते भविष्यत इति दृढोऽस्माकं विश्वासः। विश्वसिमश्च नचिरादेव विद्यापीठेऽस्मिन् मीमांसाऽध्यापन व्यवस्था च भविष्यति, यदर्थं राष्ट्रिय-संस्कृत-संस्थापनाधिकारिणां प्रचोदनाय भगवती श्रुतिः प्रार्थ्यत इति शम्।

१५–३–७८ डा० सी० आर० स्वामिनाथन्

# किञ्चिन्निवेदनम्

श्रीपार्थसारथिमिश्रविरचितशास्त्रदीपिकायास्तर्कपादं विहाय तत्सत्श्रीराम-भट्टात्मजतत्सच्छ्रीवैद्यनाथभट्टविरचित -प्रभा- व्याख्यासहितायाः पञ्चमाध्यायान्तो भागः प्रकाशपथमानीयते मीमांसाध्यायिनामुपकाराय । ग्रन्थोऽयं श्रीलालबहादुरशास्त्रि-केन्द्रियसंस्कृतविद्यापीठात् दिल्लीतः प्रकाशितः । ग्रन्थोऽयं सोमनाथभट्टविरचित-मयूखमालिकासहितः बम्बईनगरे पूर्वं मुद्रितः मूलमात्रञ्च वाराणस्यां प्रकाशितम् । उभयमप्यनुपलम्भदोषदूषितम् । विना ग्रन्थेनाध्यायिनोऽध्यापकाश्च महान्तं क्लेश-मनुभवन्ति । अस्मिन् व्यतिकरे दिल्लीसंस्कृतविद्यापीठप्राचार्यः Dr. मण्डनमिश्र-महोदयो मया बोधितः । सोऽपि स्वप्रकाशनसमितिनियोगमवाप्यास्य प्रकाशनमन्व-मन्यत । प्रकाशितस्यैव व्याख्यासहितस्य प्रकाशनापेक्षया नूतनव्याख्यासहितस्य प्रकाशनमुचितमिति निश्चित्य चेन्नपुरीराजकीयमातृकाकोशागारात् श्रीराजचूडामणि-दीक्षितैः कृतां शास्त्रदीपिकाटीकां कर्पूरवर्तिकां प्रतिलिपिकरणपूर्वकं प्राप्तुं तमवोचम् । सोऽपि मद्वचनानुसारेण विद्यापीठव्ययेन ततः प्रतिलिपिं विधाय तृतीयाध्यायस्य पञ्चम-पादात् पञ्चमाध्यायप्रथमपादपर्यन्तं भागमवाप्य मह्यं प्रेषितवान् । पुस्तकमवाप्याहं भग्नोत्साहोऽभवम् । संख्यातीता अशुद्धयस्तत्र लेखकस्यासन् । तस्य संशोधनं मूलमातृका-संवादेन विनातिदुश्शकम् । मूलमातृकां प्राप्तुं प्रायतिषि, परं विफलप्रयत्नोऽहमभवम् । चेन्नपुरीमातृकागारेऽपि प्रतिलिपिपूर्वकं सम्पादितैव मातृका ( Paper Mss ) आसीत् । तल्लेखकस्य यास्त्रुटयस्तदपेक्षयास्य लेखकस्याधिकास्त्रुटयः । मूलहस्तलि-खितमातृकां विना संशोधनमसाध्यमिति व्याख्यान्तरान्वेषणे प्रावर्तिषि । जयपुरमहा-राजसंस्कृतमहाविद्यालयपुस्तकालये तत्सद्वैद्यनाथविरचितटीका प्रभानाम्नी वर्तत इत्यस्मार्षम् । ततस्तां मातृकामवाप्य प्रतिलिपिं विधाय मुद्रणाय सामग्रीं ( Press copy ) समपादयम् । इमं विषयं Dr. मण्डनमिश्रमहोदयायावबोध्य 'कर्पूरवर्ति-कायाः' प्रकाशनं कालान्तरे भवतु, सम्प्रति 'प्रभा' व्याख्यया सह शास्त्रदीपिका प्रकाश्यतामिति । स च तथैव प्रकाशनसमितितः स्वीकृतिमवाप्य मां कार्यमारब्धुं प्रेरितवान् । प्रेरणया केवलं किं भवतु ? सर्वंकारकार्यसमारम्भे भवन्ति बहवः प्रत्यूहाः । अल्पीयसोऽपि कस्यचन प्रतिबन्धकस्य सत्त्वे कार्यं न सम्पद्यत इति शास्त्रस्य रीतौ विद्यमानायां सर्वंकारः शास्ता कथमिदं कार्यमनुमन्येत । प्रथमं मुद्रणालयस्थिरी-करणम्, तदर्थं त्रयाणां मुद्रणालयानां सम्भावितव्ययसूचकप्रार्थनापत्रप्रेषणम्, समिति-द्वारा तत्परीक्षणम्, ततः स्वीकृतिरित्येकं पटलम् । अन्यच्च महत्पटलम् – पत्राणां (Paper) क्रयणम् । तदर्थं स्थानत्रयात् मूल्यसूचकप्रार्थनापत्रप्रेषणम् तत्परीक्षणम्

ततस्स्वीकृतिरिति। इदं कार्यद्वयं महता प्रयासेन सम्पादितम्। अस्य सम्पादनाय सं० २०३४ आषाढतः कार्तिकपर्यन्तं कालो व्यतीतः। एतदभ्यन्तरे प्रभामातृकान्तरान्वेषणपटलं प्रवृत्तम्। तत्र साफल्यमवापम्। वाराणसेयसरस्वतीभवने खण्डिता अपरिपूर्णा च द्वे मातृके अलभे। ताभ्यां कृतसंवादानि मुद्रणाय पत्राणि ( Press copy ) कार्तिकान्तेऽदाम्। तत आरब्धमिदं सम्पादनकार्यं भूयोभिः प्रत्यूहैराक्रान्तमभवत्-मम यत्र कुत्रचिद्गमनागमने, शरीरास्वास्थ्यम्, मुद्रणकार्यालयीयप्रत्यूहाश्च। सर्वापेक्षया भयङ्करः प्रत्यूहो फाल्गुनमाससमाप्तिः। कालः खल्वयं सर्वाणि कार्याणि कबलयितुमिच्छति। समाप्ते कार्ये सर्वकाराय प्रदत्त एव द्रव्यस्य कोशाद्विमोचनम्। यदि कार्यं न परिसमाप्तं तर्हि तदर्थं स्वोकृतद्रव्यस्य परिलोपः। तस्मिंश्च परिलुप्ते मुद्रणालयस्य क्लेश इत्यादिकं समवेक्ष्य षष्ठाध्यायान्तं भागं प्रकाशयितुमिच्छन्नपि तथा कर्तुं न प्राभवम्। अतः पञ्चमाध्यायान्तो भागः सम्पादितः प्रेक्षकाणां हस्तमासादयतीति प्रसीदामि।

अधिगत 'प्रभा' मातृकासु जयपुरमातृकाविवरणं प्रस्तौमि—जयपुरमातृकायां प्रथमोऽध्यायो नोपलब्धः। काशिकराजकीयमातृकाकोशागारस्थपुस्तकात्प्रथमाध्यायमलिखम्। तत्सद्वैद्यनाथः तर्कपादं विहायावशिष्टं शास्त्रदीपिकाया भागं व्याख्यत्। तत्र जयपुरमातृकायां द्वितोयाध्यायस्य ३४ पृष्ठानि, प्रतिपृष्ठं १४ पङ्क्तयः, प्रतिपङ्क्ति च ५६ अक्षराणि। अध्यायान्ते लेखकेन १७७५ संवदब्दे भाद्रपदमासे शु० ७ लिखितमिति निर्दिष्टमस्ति। तृतीयाध्यायस्य ५३ पृष्ठानि। तत्र विंशतिपृष्ठपर्यन्तं द्वितीयाध्यायलेखकेन लिखितम्, तदुपरितनो भागो लेखकान्तरेण। द्वितीयलेखकपुस्तके ४३ पृष्ठानि, प्रतिपृष्ठं पङ्क्तयः १६ प्रतिपङ्क्ति चाक्षराणि ३४। चतुर्थाध्याये १५ पृष्ठानि, पङ्क्तयः १६, अक्षराणि ३६। पञ्चमाध्यायः १२ पृष्ठात्मकः। पङ्क्तयोऽक्षराणि च पूर्ववत्। पञ्चमाध्यायान्ते लेखकेन संवत् १७७५ आश्विने कृष्णे तृतीयायां चन्द्रवासरे इति लिखितम्। षष्ठाध्यायस्य २० पृष्ठानि, परिमाणञ्च पूर्ववत्। संवत् १७७५ आश्विने ७ गुरौ इति लेखकेन लिखितम्। प्रथमाध्यायं विहाय पूर्वषट्के १३४ पृष्ठानि जयपुर मातृकायाम्।

सप्तमाध्यायतः आ द्वादशाध्यायपर्यन्तं १०५ पृष्ठानि। पङ्क्तीनामक्षराणाञ्च पूर्ववत्स्थितिः। ग्रन्थान्ते 'संवत् १७७५ मार्गशिरमासे कृष्णपक्षे ५ रविवासरे लिखितं काशीमध्ये किशोरदासकायस्थदासदासानुदास श्रीवल्लभपद किङ्करेण इति' निर्दिष्टम्। इयं जयपुरमातृकास्थितिः। ग्रन्थोऽयं लेखकप्रमादजनितत्रुटिनिरासपूर्वकं साधु संशोधितः। अक्षराणि च सुवाच्यानि। मन्ये-मातृकेयं तत्सद्वैद्यनाथभट्टेन स्वयं संशोधिता स्यात्, अथवा तन्नियुक्तेन केनचन तदन्तेवासिना। तत्र चेदं कारणं प्रतिभातियद्ग्रन्थसमाप्तौ तत्सद् वैद्यनाथो लिखति—

'मुनिरसमुनिचन्द्रसम्मितेऽब्दे शुभतरमाधवमासि शुक्लपक्षे ।
पुरहरमहिलातिथौ युगादौ कृतिरियमीशपदेऽर्पिता प्रभाख्या' ॥

इति । अनेन ग्रन्थकृतः १७६७ सं० समयो निश्चितः । एवं वैद्यनाथतत्सत्कृतोदाहरण-चन्द्रिकाख्यकाव्यप्रदीपोदाहरणव्याख्यानरूपग्रन्थान्ते—

'वियद्वेदमुनिक्ष्माभिर्मितेऽब्दे कार्तिके सिते ।
बुधाष्टम्यामिमं ग्रन्थं वैद्यनाथोऽभ्यपूरयत्' ॥

इति लिखितेन पद्येन १७४० विक्रमाब्द इति स्पष्टं ज्ञायते । उदाहरणचन्द्रिका-प्रणयनानन्तरं शास्त्रदीपिकाप्रभा प्रणीतेति निश्चिते सति प्रभाया लेखनानन्तरं तस्याः प्रतिलिपिसम्पादनाय 'किसो (शो) रदासः' तत्पद्वैद्यनाथेन तदन्तेवासिना वा नियुक्तस्स्यात् । ग्रन्थसमाप्तेः प्रतिलिपिसम्पादनस्य च मध्येऽष्टाबब्दा एव । अस्तु यथा तथा वा । वैक्रमाब्दस्याष्टादशशतककालिकोऽयं ग्रन्थकृदिति निश्चयो भवति ।

तत्सद्वैद्यनाथभट्टः पदवाक्यप्रमाणपारावारपारीणतत्सद्रामभट्टस्यात्मजः, स्व-पितुस्सकाशादेव लब्धविद्यः पितृतुल्यवैदुष्यः व्याकरणेऽलङ्कारे मीमांसायाञ्च ग्रन्थान् प्रणिनाय । अलङ्कारग्रन्थेषु कुवलयानन्दोऽप्पय्यदीक्षितेन्द्रविरचितः, श्रीमम्मटा-चार्यविरचितकाव्यप्रकाशः, काव्यप्रकाशटीकाप्रदीपश्चानेन व्याख्याताः । सर्व एवेमे प्रकाशिताः । शास्त्रदीपिकायाः 'प्रभा' प्रकाशनसापेक्षा जातेति वक्तुं नितरां जिह्रेमि । प्रभा च स्वयंप्रकाशा परांश्च प्रकाशयतीति स्थितेऽपि तस्याः प्रकाशकत्वेन दिल्ली-संस्कृतविद्यापीठं जातमिति नितरां प्रसीदामि । प्रकाशकस्यापि विद्यापीठस्येयं प्रभा प्रकाशिका स्यादिति च विश्वसिमि ।

प्रभेयं सङ्कुचितगात्रापि व्याख्यानियमानपरित्यज्य मूलपदानि यानि यानि व्याख्यासापेक्षाणि तानि न परित्यजति । यावदपेक्षिता सामग्री मूलावबोधाय तावत्या परिपूर्णेयम् । पूर्वापराधिकरणसङ्गतिमविहाय शृङ्खलाबद्धेयं मीमांसेत्यव-गमनाय प्रभेयमारचिता ग्रन्थकृतेति कथनमनुचितं न स्यात् । श्रौतपदार्थेषु समीचीनं वैदुष्यमाबिभर्ति व्याख्याकार इति तत्र तत्र व्याख्याशैल्या प्रतीयते । महतः प्रामाणि-कस्य च शास्त्रदीकापिकाग्रन्थस्य व्याख्यामारचयता तत्सद्वैद्यनाथविदुषा नूनं मीमांसासम्प्रदायः परिरक्षितः । प्रभाविषये यदन्यद्वक्तव्यं तद् द्वितीयभागे विवेचयामः ।

तेषु तेषु सम्प्रदायेषु मीमांसासम्प्रदायो दृढतरोऽनेकलौकिकवैदिकपदार्थसङ्ग्रा-हक इति सर्वैर्दार्शनिकैरभ्युपगम्यते । महर्षिर्जैमिनिरस्य सम्प्रदायस्य परीक्षकाग्रणीः । तासु तासु महर्षीणां गोष्ठीषु सम्प्रवृत्तानैकविधान् कर्मकाण्डसम्बन्धिनो वेदैकप्रतिपा-द्यान् विषयान्, तांस्तांश्च महर्षिगोष्ठीषु प्रचलितानाचारांश्च वैदिकान् निशम्य निशाम्य सुपरीक्ष्य चानल्पं शास्त्रं जैमिनिस्सूत्ररूपेण जग्रन्थ । सूत्रारूढ एवाध्यनाध्या-

पनसम्प्रदायः प्रावर्तत। सम्प्रदायो नामाविच्छेदेन गुरुशिष्यपारम्पर्येण विद्याप्राप्तिः। भगवान् जैमिनिः स्वीयसूत्रकदम्बे आत्रेया-श्मरथ्यै-तिशायन-कामुकायन-कार्ष्णाजिनि-जैमिनि-बादरायण-बादरि-लावुकायनादीनां नामानि सादरं स्मरति। सर्व एवेमे मीमांसासम्प्रदायान्तर्गताः। तपोवनेषु जायमानासु शास्त्रचर्चागोष्ठीषु सामाजिकाचार-वादविवादपरम्परासु सर्वं इमे समवेताः स्वं स्वं मतं प्रतिपादयाम्बभूवुः। तानिमान् विषयान् मनसि कृत्वा जैमिनिस्सूत्रात्मना निर्माय स्वशिष्यानध्यापयामास। काशकृत्स्नरपि महर्षिर्मीमांसासम्प्रदायप्रवक्ताभवदिति 'काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी' (४.१ १४) इति महाभाष्यवचनादवगच्छामः। एवं ब्रह्मामहेश्वर-प्रजापती-न्द्रा-दित्य-वसिष्ठ-पराशर प्रभृतीनामपि मीमांसासम्प्रदाय आसीदित्यपि प्रामाणिकग्रन्थेभ्योऽवगच्छामः। तत्र जैमिनिपर्यन्तमक्षुण्णोऽयं सम्प्रदाय आगतः। जैमिनिस्तु दिव्यदृष्टया लोकेष्वायतौ ह्रासस्थितिमवगत्य सूत्रात्मना विषयान् अगुम्फीत्। गुम्फनमिदं प्रायो द्वापरस्य कलेश्च सन्धिसमये समभवदित्यभ्यूहितुं शक्यते। जैमिनिपर्यन्तं मीमांसासम्प्रदायस्य प्रवचनकालः तदूर्ध्वं सूत्रारूढाध्ययनाध्यापनसम्प्रदायः प्रावर्ततेत्यपि वक्तुं शक्यते। कलेः प्रारम्भात् प्रायः बहुषु शतकेषु सम्प्रदायोऽयमनवच्छिन्नोऽचालीत्। सूत्राध्ययनाध्यापनसम्प्रदायेऽपि न्यूनतां स्मृतिशक्तेर्यविदन्वभवन् महर्षयः पतञ्जलिवात्स्यायनप्रभृतयः तावत् व्याकरणन्यायसूत्राणां भाष्याणि विरचयामासुः। व्यासजैमिनिसूत्राणाञ्चोपवर्षो वृत्तिमरचयत्। इतः प्रभृति वृत्त्यारूढस्सम्प्रदायः प्राचलत्। वृत्त्यारूढसम्प्रदायस्यापि महान् कालो व्यत्यगात्।

अस्मिन्नेव समये क्रमशः श्रीशबरश्रीशङ्करप्रभृतीनामाचार्याणामाविर्भावः। प्रायः विक्रमाब्दानां पूर्वं पञ्चशतं वर्षाणि कालस्स्यात्। आधुनिकेतिहासग्रन्थलेखकानामिमानि वाक्यानि कर्णारुन्तुदानि भवेयुर्यानि मयोदीरयिष्यन्ते। आ च हिमवतः आ च कुमारिकायाः भारते जनिमातस्थिवान् सर्वोऽपि मानव इदं स्मरेदेवेति मन्ये यद्वयं कलियुगे वर्तामह इति। ज्योतिषसम्प्रदायान्तर्गतैर्विद्वद्भिः पञ्चाङ्गेषु कल्यब्दा लिख्यन्ते तथैव विक्रमसंवत्सरा अपि। तत्राद्य ५०७९ कल्यब्दः प्रचलति, तथा २०३४ विक्रमसंवत्सरोऽपि। महर्षिभिर्निर्णीतेन पथा गणनासम्प्रदायोऽयमागतः। प्रामाणिक्यामस्यां गणनायां सत्यामपि सम्प्रतितनेतिहासलेखकैः पाश्चात्यैः भारतीयानामतिचिरन्तनात्कालात्प्रवर्तमानं शिक्षितसम्प्रदायमजानद्भिः जानद्भिर्वा तत्राभ्यसूयद्भिः ज्ञानपूर्वकं सम्प्रदायं तं परिलोपयितुकामैः स्वेच्छया B. C., A. D. इत्यक्षरैः ग्रन्थकृतां समयं परिगणय्य ग्रन्थलेखनद्वारा कश्चन पन्था आविष्कृतः। तस्मिन्नेव पथि गन्तुं तानेव ग्रन्थान् पाठ्यक्रमेऽपि निवेशयद्भिस्तैः भारतीया बालाश्शिक्षिताः। त एव बाला अद्य प्रौढा यथायथं तमेव पन्थानमनुसरन्त इतिहासग्रन्थान् लिखन्तो महतीं प्रतिष्ठां लभन्ते। स्वरचितेतिहासविषये प्रमाणञ्च तेषामेव पाश्चात्यानां वचनम् अमुकेन स्वपुस्तक

एवं लिखितम् अमुकश्चैवं निर्दिदेश इति। नितरां जिह्रेमि-आधुनिकेतिहासग्रन्थ-लेखका अधुनापि पाश्चात्यपुच्छावलम्बिन इति। स्वातन्त्र्यमवाप्य त्रिंशद्वर्षाणि व्यतीतानि, तत्रापीयं दशास्माकं चिरन्तनानामितिवृत्तविषये। उदाहरणार्थं मीमांसा-भाष्यकारान् श्रीशबरस्वामिनः वेदान्तसूत्रभाष्यकारांश्च भगवच्छङ्कराचार्यान् गृह्णीमः–भगवत्पादेभ्यः प्राचीनाः शबरस्वामिन इति निर्विवादम्। तत्र भगवत्पादानां कः काल इति प्रथमतो विचार्य शबरस्वामिनां कालमनन्तरं विमृशामः। आधुनिक पाश्चात्यप्रवर्तितपथावलम्बिन इतिहासलेखकाः विक्रमाष्टमनवमशताब्द्योः भगवत्पादान् कर्षन्ति। A. D. A. D. इति वदन्तो लिखन्तश्च नूनं पाश्चात्यपृष्ठगामित्वं स्वस्या-वद्योतयन्ति। भगवत्पादानां कालनिर्णये तैः प्रवर्तितसम्प्रदायादृते नान्यत्किमपि बलीयः प्रमाणं भवेदित्यकामेनापि स्वीकर्तव्यम्। तैः प्रवर्तितेष्वनेकेषु पीठेषु सम्प्रदायोऽधुनापि प्रचलति। तच्च शारदापीठस्य श्रीकाञ्चीकामकोटिपीठस्य च शिष्यपारम्पर्यस्थित्यव-लोकनेन ज्ञायते यदाद्यशङ्कराचार्याः शारदापीठनिर्दिष्टयुधिष्ठिरसंवदनुसारेण २६३१ संख्याकसंवदि विक्रमसंवत्सरात् ४५४ संख्याकवर्षेभ्यः पूर्वम्, काञ्चीकामकोटिपीठसंप्र-दायानुसारेण च २५९३ संख्याक कलिवर्षे विक्रमसंवत्सरात्पूर्वं ४५४ वर्षेभ्य आसन्निति। अर्थात् सार्धद्विसहस्रवर्षेभ्यः पूर्वं तेषां काल इति निश्चितं भवति। आधुनिकेतिहासविदां गणनानुसारेण सहस्राधिकवर्षाणां भेद आपतति। संप्रदायो बलान्निश्चितो न प्रामा-णिकः, सम्प्रदायः कल्पितोऽपि स्यादिति कथयन् स्वपितरमपि न विश्वसेत्। यथाहि ऋषीणां नदीनाञ्च मूलं दुरवगाहमिति लोकानामाभाणकं तथैव सम्प्रदायमूलमपि। सम्प्रदाये चेदनास्था वाविश्वसनीयता वा भवेत्तर्ह्यार्षमिति किञ्चिन्नैव सिध्येत्। अतः शारदापीठकाञ्चीकामकोटिपीठसम्प्रदायाभ्यां परिशील्यमानाभ्यां निश्चितमिदमवगतं भवति-यद् भगवत्पादा विक्रमात्पूर्वं चतुर्थपञ्चमशतक्योरासन् इति। ततः पूर्वं शबरस्वामिनः।

अत्रेदं प्रबलं प्रमाणान्तरमुपलभ्यते-विक्रमार्कभूपतेस्सभायामवन्तिनाथशासनकाले नाम्ना हरिस्वामी धर्माध्यक्षपदे वर्तमानः शतपथब्राह्मणस्य भाष्यं निर्ममे। तत्र लिखति–

श्रीमतोऽवन्तिनाथस्य विक्रमार्कस्य भूपतेः।
धर्माध्यक्षो हरिस्वामी व्याख्यच्छातपथीं श्रुतिम्॥
यदाब्दानां कलेर्जग्मुः सप्त त्रिंशच्छतानि च।
चत्वारिंशच्च समाश्चान्यास्तदा भाष्यमिदं कृतम्॥ इति॥

आभ्यां पद्याभ्यां कलेः ३०४७ संख्याकवर्षाणि व्यतीतानि ग्रन्थलेखनसमय इति स्पष्टं प्रतीयते। अयं स्वग्रन्थे प्रभाकरं नाम्ना निर्दिशति। प्रभाकरस्य गुरवो भट्टपादा इति लोकोक्तिरस्ति। तान् शङ्करभगवत्पादा ददृशुरिति सर्वप्रसिद्धम्। ततश्च हरि-स्वामिना निर्दिष्टेषु ३०४७ कलिवत्सरेषु काञ्चीकामकोटिपीठपरम्परासमागतकलि-

वत्सरेषु २५९३ न्यूनीकृतेषु ४५४ वर्षाणि निर्गच्छन्ति। तथा च विक्रमसंवत्सरेभ्यः ४५४ पूर्वं भगवत्पादानां काल इत्यवगम्यते। ततः पूर्वं शबरस्वामिन आसन्।

तत्र शाबर्याः शैल्याः पातञ्जल्याश्च शैल्या बहुषु स्थलेष्वेकरूपता त्वनुभूयते। यद्यनयोर्भाष्यकारयोः पौर्वापर्यनिर्णायकं प्रबलं प्रमाणं नोपलभ्येत तर्हि समकालिकाविमौ भाष्यकाराविति स्वीकारे न काचिद्धानिः। आपाततो विमृश्यमान इदमवगतं भवति—यच्छाबरभाष्यस्य दशमाष्टमपादस्य प्रथमे पर्युदासाधिकरणे 'यजतिषु येयजामहं करोति' 'नानूयाजेषु ये यजामहं करोति' इति विधिप्रतिषेधवाक्यविचारावसरे विकल्पप्रसक्त्या निषेधवाक्यस्य पर्युदासता व्यवस्थापिता—अनूयाजव्यतिरिक्तेषु येयजमहं कुर्यादिति। 'नानूयाजेषु' इत्यत्र नञो भावनया सहान्वयेऽनूयाजेषु ये यजामहो न कर्तव्य इति बोधो भवेत्, तथा सति 'यजतिषु' इति विधिवाक्येन विहितस्य येयजामहकरणस्य प्रतिषेधात् विधेः प्रतिषेधस्य च शास्त्रत्वेन तुल्यबलत्वाद्विकल्पः, विकल्पश्च दुष्ट इति नञोऽनूयाजपदेनान्वयमङ्गीकृत्य पर्युदास एव समीचीन इत्यधिकरणशरीरम्। अत्र भाष्यकारः 'आह-नन्वनूयाजसम्बन्धे नशब्दस्य समासः प्राप्नोति। नित्यो ह्यस्य नशब्दस्य सुबन्तसम्बन्धेन समास इति वार्तिककारो भगवान् कात्यायनो मन्यते स्म, वावचनानर्थक्यञ्च स्वभावसिद्धत्वादिति। नेति भगवान् पाणिनिः। स हि 'विभाषा' इति प्रकृत्येदृशं समासमुक्तवान्। सद्वादित्वाच्च पाणिनेर्वचनं प्रमाणम्, असद्वादित्वान्न कात्यायनस्य' इत्यादि लिखति।

सन्दर्भस्यायं भावः—नशब्दस्यानूयाजपदेन नित्यसमासेऽनूयाजातिरिक्तार्थंबोधकत्वात्तस्य विकल्पप्रसक्तेरवकाशो न स्यात्। तथा चाधिकरणविरोधः। यदि समासस्य विकल्पः तर्हि पक्षेऽसमासावसरे नञो विधिनान्वये कर्तव्ये विकल्पः, स च न समीचीन इति नञोऽनूयाजपदेनान्वयमङ्गीकृत्य पर्युदासस्सिध्येत्, अधिकरणञ्च निर्विरोधेन सङ्गतं स्यादिति। अत्रैव कात्यायनस्य पाणिनेश्च कीर्तनं भाष्यकारस्य शबरस्वामिनः। अस्मिन् सन्दर्भे केचनाशेरते-शबरस्वामिना पतञ्जलेर्नाम न गृहीतम्। अतः पतञ्जलेः समकालिको भाष्यकारस्स्यादिति। अन्ये चात्र विवदन्ते नञ्समासविषये पतञ्जलिः पाणिनिमतमेवानुसरति न कात्यायनमतमिति जानन् शबरस्वामी सूत्रभाष्ययोर्वैमत्याभावेन पतञ्जलिं न स्मरतीति पतञ्जलेरनन्तरकालिक एव मीमांसाभाष्यकार इति। अस्तु यथा तथा वा! सर्वथा निश्चितमिदम्—यत्पतञ्जलिशबरकुमारिलशङ्कराणां विक्रमाब्दतः पूर्वमेव पौर्वापर्येणावस्थितिरिति।

एवं मीमांसासम्प्रदायः जैमिनिपर्यन्तं विचारगोष्ठीसमारूढः। तदनन्तरं सूत्रतद्वृत्तितद्भाष्यतद्वार्तिकसमारूढोऽनवच्छिन्नस्समागत इत्यतिचिरन्तनोऽयं मीमांसासम्प्रदायः। अत्रार्थे भट्टपादानामुक्तौ प्रेक्षावतां दृष्टिमाकर्षयितुमिच्छामि—'मीमांसा

तु लोकादेव प्रत्यक्षानुमानादिभिरविच्छिन्नसम्प्रदायपण्डितव्यवहारैः प्रवृत्ता। न हि कश्चिदपि प्रथममेतावन्तं युक्तिकलापमुपसंहर्तुं क्षमः' इति। ( तं० वा० पृ० १६७ ) एतेनेदं निर्णेतव्यं भवति-यत्सम्प्रदाय इत्येव नेतिहासलेखकैस्तत्र हेयदृष्टिर्निक्षेप्तव्येति।

एवं सूत्रभाष्यारूढमीमांसाध्ययनाध्यापनसम्प्रदाये प्रचलति श्रीपार्थसारथिमिश्रो नूतनं पन्थानमाविश्चकार। पूर्वोत्तरपक्षसूत्रतद्भाष्यगतान् विषयान् सङ्गृह्याधिकरणशरीरं परिकल्प्य शास्त्रदीपिकां द्वादशाध्यायान्तां प्रणिनाय। एवंग्रन्थरचनाया अयं मार्गदर्शीति वक्तुं शक्यते। एनमेव मार्गमवलम्ब्य जैमिनीयन्यायमाला-भाट्टदीपिकादयो ग्रन्थाः प्रावर्तन्त।

भट्टकुमारिलपादेष्वयं नितरां श्रद्धत्ते। कुमारिलपादानन्तरं तच्छिष्यत्वेन लोकैरङ्गीक्रियमाणः प्रभाकरः स्वप्रतिभाया उत्कर्षतां लोके प्रख्यापयितुं भाष्यं व्याचक्षाणः भाष्यारूढतयैव कुमारिलसिद्धान्तविरुद्धानेव न्यायान् उपपादयामास। प्रभाकरशिष्यः शालिकनाथः स्वगुरोर्मतं विशदीकृत्य स्वग्रन्थेषु पोषयामास। तदिदमसहमानः पार्थसारथिमिश्रः—

'न्यायाभासतमश्छन्नशास्त्रतत्त्वार्थदर्शिकाम्।
कुमारिलमतेनाहं करिष्ये शास्त्रदीपिकाम्'॥

इति प्रतिजानानः शास्त्रदीपिकामारभते। तमः पदार्थमतिरिक्तं स्वीकुर्वाणः प्रभाकरः तमसा भट्टपादप्रवर्तितानपि न्यायांश्छादयति, तदिदं तमोऽपसारणीयमिति न दीपं किन्तु दीपिकामेव प्रज्ज्वालयतीव पार्थसारथिः। शास्त्रारम्भ एव कलहः—मीमांसाशास्त्रस्यारम्भणमुभाभ्यामपि साधनीयम्। तत्र साधकं प्रमाणं 'स्वाध्यायोऽध्येतव्यः' इति वाक्यमपि तुल्यमेव। उभयोर्विचारशैली परं भिन्ना। प्रभाकरः स्वविवक्षितस्य शास्त्रार्थस्य पन्थानं पृथगेव परिकल्प्य तेन जिगिमिषति। अयं विधेः कार्यमर्थ इति स्वीकुर्वन् यस्मिन् विधिवाक्ये नियोज्यश्रवणं तत्रैव तस्य कार्यत्वबुद्धिर्भवति, नियोज्याश्रवणे कार्यत्वबुद्धिर्न भवतीति प्रभाकरस्य पन्थाः। प्रकृतस्वाध्यायवाक्ये न कश्चन नियोज्यः श्रूयत इति नात्र कार्यत्वबुद्धिर्जायत इति नेदं विधायकम्, किन्त्विदमाचार्यकरणविधिप्रयुक्तम्। तथाहि—

'उपनीय तु यश्शिष्यं वेदमध्यापयेद्द्विजः।
सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते'॥

इति स्मृत्यनुमितेन 'उपनीयाध्यापनेनाचार्यकं भावयेत्' इति श्रुतिवाक्येनाध्यापनं विदधानेन प्रयुक्तोऽयं स्वाध्यायाध्ययनविधिः। आचार्यकरणविधिना हि अध्यापनं विधीयते। तच्च माणवककर्तृकाध्ययनं विनानुपपन्नमिति तदध्यापनविधिनाक्षिप्यते।

तच्चाध्ययनं स्वाध्यायवाक्येनोपात्तम् इति सिद्धवत्कृत्य विचार्यते-किमिदमाचार्यकरण-विधिप्रयुक्तमध्ययनमाचार्यत्वसिद्धये भवति ? किं वा माणवकस्यार्थज्ञानाय ? । यदि प्रथमः पक्षः नेदं शास्त्रमारम्भणीयम्, यदि वा द्वितीयः पक्षः तर्हि निष्कृष्टवेदवाक्यार्थावबोधाय शास्त्रस्यारम्भणोयत्वमिति । इयं विचारसरणिः प्रभाकरस्य ।

पार्थसारथेस्त्वियं सरणिः—लिङ् लोट् लेट् तव्यप्रत्ययानां सर्वत्रासति बाधके विधायकत्वम्, इष्टसाधनत्वेन प्रवर्तना च तेषामर्थः । एवं सति स्वाध्यायवाक्ये तव्य प्रत्ययस्य विधायकत्वमस्तीत्यध्ययनं स्वविधिप्रयुक्तमेव । तस्यास्य विधेः किं स्वर्गादिः फलम् ? अथवा दृष्टार्थज्ञानम् ? इति सन्देहे प्रथमपक्षे शास्त्रस्यानारभ्यत्वम्, द्वितोये चारभ्यत्वमिति फलफलिभावः । सिद्धान्त उभयोरैकमत्यम् । पूर्वपक्षेऽपि प्रभाकरमत आचार्यत्वमलौकिकम्, भाट्टमतेऽपि स्वर्गस्यालौकिकत्वमेव । अलौकिकत्वेनोभयोस्साम्यं सिध्यत्येव । प्रभाकरस्याचार्यकरणविधित्वेन स्वीकृते वाक्ये नियोज्यश्रवणमस्ति स्वाध्यायाध्ययनविधौ च तन्नास्तीत्यभिमानः । भाट्टमते च स्वर्गकामादेर्नियोज्यत्वेन विश्वजिन्नान्यायावलम्बनेन कल्पनम् । एवञ्चोभयत्र कल्पनव्यापारोऽपि तुल्य एव । केवलं स्वप्रतिभावैचित्र्यावद्योतनाय प्रभाकरो नारदकृतज्येष्ठालक्ष्मीसौन्दर्यनिर्णयन्यायेन प्रकारान्तरमुन्नयति । किन्तु तदोयचिन्तनाशक्तिर्नापलपितुं शक्यते । स्वमतसमुपपादनाय सूक्ष्मेक्षिकया पदार्थान्वेषणे प्रवर्तते । चतुर्थाध्यायारम्भे 'तृतीयेऽध्याये श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानैः शेषविनियोगलक्षणमुक्तम्' इति पूर्वोत्तराध्याययोस्सङ्गतिं प्रदर्शयितुं प्रवृत्तं भाष्यं प्रभाकरः स्वोन्नोतं पन्थानं परिष्कर्तुं व्याख्याति—चतुर्थाध्यायस्याप्यङ्गाङ्गिभावनिरूपणमेव तन्मते विषयः । श्रुत्यादिप्रमाणापेक्षयातिरिक्तमपि प्रमाणमवशिष्यते यस्य निरूपणं चतुर्थाध्याये भवति । किं तत्प्रमाणम् ? उपादानाख्यमिति स ब्रवीति । उपादानं नाम कार्यान्विताभिधानप्रयुक्त आक्षेपः । 'व्रीहीन् प्रोक्षति' इत्यत्र प्रभाकरसिद्धान्तानुसारेण विध्यर्थे कार्ये प्रोक्षणस्यान्वयः । प्रधानविध्यभिहिते कार्ये यागादेर्विषयत्वं करणत्वञ्च निश्चितम् । यागकरणके कार्ये प्रोक्षणस्य करणत्वेनान्वयो न सम्भवति इति यागाङ्गताद्वारा तत्पर्यवसानमिति कल्पनोयम् । तत्र च प्रमाणम्—उपादानम् । श्रुतिस्तावद्व्रोहिद्वारा प्रोक्षणस्य यागाङ्गत्वं बोधयति । अतो भाष्ये श्रुत्यादीनां नामतः कीर्तनं तदपेक्षयान्यदुपादानाख्यमस्तीति द्योतयतीत्येवं कथयन् प्रभाकरश्चतुर्थाध्यायविषयं व्यवस्थापयति । पार्थसारथिस्तु पूर्वोक्तभाष्यस्योक्तिवैचित्र्य एव तात्पर्यं मन्यते । एवमनेकेषु स्थलेषु प्रभाकरमतमनूद्य तदौचित्यानौचित्ये समालोचयति ।

पार्थसारथिरेकैकस्मिन्नप्यधिकरणे प्रायस्तदर्थंसंशयानुपक्षिप्य विषयशोधनं कुर्वन् स्वीयरचनाशैलीं सरलां विदधाति । मीमांसाग्रन्थलेखने तदध्ययने तदध्यापने च श्रौतपदार्थाभिज्ञतात्यावश्यिकी । श्रौतकर्मसम्बन्धीनि यानि वेदवाक्यानि

तेषामर्थनिर्णयायेवाधिकरणानि प्रवर्तितानि जैमिनिना। वेदवाक्यानां साधारणमर्थंपरिज्ञानन्तु गृहीतपदपदार्थसङ्गतिकस्य षडङ्गसहितवेदाध्यायिनः वेदभाष्याध्यायिनश्च भवत्येव, तावता न चारितार्थ्यमिति निष्कृष्टवेदवाक्यार्थपरिज्ञानाय मीमांसाया आरम्भः। वेदश्च संहिताब्राह्मणात्मकः। संहिताभाग एव वेदः, ब्राह्मणभागस्तु संहिताविवरणरूपो न वेद इति बहूनां भ्रमः। निश्चितमिदं वक्तुं शक्यते-यद् यदि ब्राह्मणभागो वेदो नाभविष्यत् तर्हि मीमांसाशास्त्रमेव नाविरभविष्यत्। प्रत्यधिकरणं विचाराय यानि विषयवाक्यान्युपाददते भाष्यकारादयः तानि प्रायो ब्राह्मणवाक्यान्येव। सूत्रकारस्यापीमान्येव वाक्यान्यभिमतानीत्यत्र सुलभान्युदाहरणानि। जैमिनिशबरकुमारिलप्रभृतीनां बृहच्छास्त्रप्रवर्तकानां भ्रममूलकं ब्राह्मणस्य वेदाभिधानमिति कल्पनं कूष्माण्डचोरन्यायेन महासाहसिकस्य स्यात्।

'पक्षो योऽङ्गीकृतो येन तमत्रस्यन्स निर्वहेत्'

(तं० वा० पृ० १७१ पू० सं)

इति न्यायेन ब्राह्मणभागस्य वेदत्वं निर्वोढुम् तत्र च सम्भाव्यमानानि संकटानि दूरी कर्तुं मीमांसकानां शरणमन्वेष्टव्यम्। प्रथमाध्यायस्य प्रथमद्वितीयपादयोर्विध्यर्थवादौ धर्मे प्रमाणमिति निरूप्य तृतीयपादे स्मृतीनां प्रामाण्यसाधनाय जैमिनिस्सूत्रयति–'अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात्' इति। पुरुषाणां भ्रमप्रमादादिदोषदूषितत्वात् तद्विरचितस्मृतीनां वेदमूलकत्वेनैव प्रामाण्यं प्रसाधनीयमिति मीमांसकोन्नीतः पन्थाः। तत्र वेदः संहितात्मक एवेत्यभ्युपगते सर्वोऽपि प्रथमाध्यायो गर्ते पतितस्स्यात्। एवं भावनाभेदः कर्मभेदः अङ्गाङ्गिभावः प्रयोज्यप्रयोजकभावः अधिकारश्चेत्यादयो विचार विषया दत्ततिलाञ्जलयस्स्युः। एवमुत्तरषट्कमपि निर्विषयं भवेत्। वेदञ्च विध्यर्थवादमन्त्रनामधेयनिषेधात्मना विभज्य तेषां विचाराः प्रवर्तिताः खलु जैमिनिप्रभृतिभिः।

अस्तु कोणे मीमांसाशास्त्रम्, बुध्या किञ्चिद्विमृशामः—ब्राह्मणस्य वेदत्वमनङ्गीकुर्वद्भिः संहिताभागस्य ब्राह्मणभागस्य च पौर्वापर्यमेष्टव्यम्—संहितायाः प्राथम्यम्, तदानन्तर्यञ्च ब्राह्मणस्येति। ब्राह्मणाविर्भावात्पूर्वमाविर्भूतेन मन्त्रात्मकेन संहिताभागेन किं प्रयोजनं लब्धवन्तस्स्युस्तदानीन्तनाः? किं कालिदासविरचितकाव्यनाटकादिसन्दर्भ इव संहितासन्दर्भस्योपयोगः? आहोस्विदन्यः कल्पः? नाद्यः, काव्यनाटकादीनि भाषाव्युत्पत्तिसिद्धये गुणालंकाररसादिपरिचयायाभ्यस्यन्ते स्म। तादृशं प्रयोजनं मन्त्रभागाल्लभ्यत इति कथनमुपहासाय स्यात्। महर्षीणां विशिष्टमननव्यापारप्रसूताः खलु मन्त्राः। काव्यनाटकप्रणयनायापि कवीनां मननमावश्यकमिति तु सत्यम्, किन्तु मन्त्रकाव्ययोराविष्काराय मननं तुल्यरूपं न भवितुमर्हति। एतादृशविशिष्टक्रिययाऽऽविर्भूतैर्मन्त्रैः चिरन्तनाः किमकुर्वन्? इति प्रश्नः स्वस्थान एव वर्तेत। यान् यांश्चार्थानाचक्षते मन्त्रास्तेषु तेषु कार्येषु तेषां सम्बन्धः

परिकल्पनीय इति शोभनः पन्थाः। मन्त्राश्च कार्याण्यपेक्षन्त इति स्वीकृते ब्राह्मणभागस्तानि समर्पयन् चरितार्थो भवति। तादृशेनैव विशिष्टमननव्यापारेण समुद्भूता ब्राह्मणभागाः कार्यसा धनान्य पेक्षमाणाः प्रकरणाधिकरणसिद्धन्यायेन संहिताभागेन सह सम्बद्धाः विभिन्नानि कर्माणि विदधानाः तेषु लोकान् प्ररोचनापूर्वकं प्रवर्तयन्तः मन्त्रांश्च विनियोजयन्तः सप्रयोजना भवन्तोति मीमांसकोन्नोते पथि स्वीकृते न पूर्वक्तस्य प्रश्नस्यावसरः। इदन्तु निश्चप्रचमङ्गीकर्तव्यम्–यत् कोऽपि कालस्तादृशो नासीत्, यत्र च भारतीयाश्चिरन्तनाः स्वस्वाधिकारानुसारेण स्वस्वगुरुपारम्पर्येण वेदान् नाधिजगुः, वेदोदितकर्माणि नान्वतिष्ठन्। एतादृशकालप्रसाधनमतिदुष्करमसाध्यमपि। अस्मिन्विषये मोमांसकाः परिष्कृतं राजमार्गमाविरकार्षुः। निष्कण्टकश्चायं पन्थाः। भारतभुवि जनिमास्थुषेकैकेनापि द्विजेन वेदोऽध्येयः तदर्थञ्च सुविज्ञाय तदुदितानि कर्माणि यथायथमनुष्ठेयानि, स्वस्वधर्मः परिपालनीयः, साधुचरिते वर्तितव्यम् इत्येवमादेः शिक्षाक्रमस्य भारते स्वभावत एव वर्तमानस्य न केनापि जन्मतिथिर्निर्णेतुं शक्यते। न हि धर्मसूत्राणां धर्मग्रन्थानाञ्च रचनातः पूर्वमत्राधर्म एवाचारपथेऽवर्ततेति कथनं समुचितं खलु। एतादृशशिक्षाक्रमात्पूर्वं भारतोया अशिक्षिता जन्तव इवासन्निति निरूपणमसङ्गतं खलु भवेत्। अस्मत्सन्ततिप्रभवा अशिक्षिता मृगा इवासन् वयञ्च शिक्षिता मानवास्स्म इत्यभिमानो लज्जाविषयः खलु। एवं निर्णेतुं यावत्प्रबलं प्रमाणं नोपलभेमहि तावत् मोमांसाशास्त्रसिद्धान्तरीतया बोजाङ्कुरन्यायेनानिदम्प्रथमताकात्कालाद्भारतेऽध्ययनपरम्परा शिक्षापद्धतिश्च प्रचलन्ती देशस्य गौरवं समवर्धयत्। अनयैव शिक्षापद्धत्या शिक्षितो दाक्षितश्च पार्थसारथिमिश्रः। न्यायरत्नमालाया अङ्गनिर्णयपरिच्छेदान्ते—

'भुवनत्रयविख्यात श्रीमद्याज्ञात्मनन्दनः।
तत एव श्रुतं प्राप्य विश्रुतः पार्थसारथिः'॥

इति निर्दिशन् स्वस्य श्रोयज्ञात्मनः सुतत्वम् सम्प्रदायतः प्राप्तविद्यावत्त्वञ्च ज्ञापयति। व्याकरणादिव्युत्पत्त्या ग्रन्थानां विलोकनेन दर्शनेषु प्राप्तज्ञानवतां सम्प्रदायतोऽधिगतविद्यानाञ्च भूयान् प्रभेदः। अयं सम्प्रदायतोऽधोत्य विद्यासु वैदुष्यमवापत्। सम्प्रदायश्चाविच्छेदेन प्राप्तगुरुशिष्यपारम्पर्यम्। अयं मिथिलाप्रान्तीय इत्यनुमीयते। अहमश्रृणवम्-यन्मिथिलाप्रान्ते त्रिशतं गृहिण आहिताग्नयः याज्ञिकमीमांसकाश्चासन्। तत्रान्तिमः पण्डितः श्रीचक्रधरमिश्र इति च। एतेषु गृहाश्रमिषु पार्थसारथिः प्रथितयशा अभवत्।

अनेन मीमांसायां ग्रन्थचतुष्टयं प्रणोतम्-ग्रन्थद्वयं व्याख्यारूपम्-न्यायरत्नाकर इति श्लोकवार्तिकस्य, तन्त्ररत्नमिति च टुप्टीकायाः। ग्रन्थद्वयञ्च स्वतन्त्ररूपम्—न्यायरत्नमाला शास्त्रदीपिका चेति। प्रभाकरमतपरीक्षणन्तु सर्वेषूपलभ्यते। सर्वत्र रचनाशैली

वैदुष्यपूर्णा सरला सारगर्भिता च। शास्त्रदीपिकायास्तर्कपादेऽनेन भाष्यवार्तिककाराभ्यां विवेचितास्सर्व एव विषया वैदुष्यपुरस्सरं साधु समुपपादिताः। अत एव पार्थसारथेः परवर्तिनः खण्डदेवादयस्तर्कपादं विहायोपरितनान्यधिकरणान्येव विवेचितवन्तः। पटनपाठने शास्त्रदीपिका सर्वत्र भारते प्रसिद्धिं गतः प्रामाणिको ग्रन्थः। अतएवास्य व्याख्यातारोऽनेके सर्वप्रान्तीया अभवन्। अतिविस्तृतस्य गभीरस्य स्याध्ययने क्लिश्यतोऽध्येतॄन् पश्यन्तो बहवो लघून् ग्रन्थान् प्राणैषुः। अस्यैवायं परिणामोऽजायत—यत् चिरन्तनाः सूत्रतद्भाष्य-तद्वार्तिकक्रमेणानुलोम्येनाधीत्य शास्त्रसम्प्रदायपरिरक्षणं कुर्वन्तो विविधग्रन्थानां विरचने प्रभवोऽभवन्, वयञ्चाद्यतनेषु प्रातिलोम्येन ग्रन्थानधीयाना अपि तदर्थावगमन एव क्लेशमवाप्नुवाना आर्षग्रन्थतत्त्ववेदनशक्तिविहीनाश्च स्मः। इदन्तु निश्चितम्-यदेकया दृष्ट्या लघुग्रन्थप्रणयने मीमांसासम्प्रदायपरिरक्षणश्रद्धानां ग्रन्थकृतां समुद्यमस्य परिणामो न समीचीनो जात इति। अपरया दृष्ट्या विचार्यमाणे प्रतिभाति-यन्मीमांसाशास्त्रसाहित्यगात्रोपबृंहणेन सह शास्त्रे सारल्य सम्पाद्य तत्र लोकानां भूयसी प्रवृत्तिर्भवत्विति। नूनमस्मिन् कार्ये ग्रन्थकृद्भिस्साफल्यमवापि, किन्त्वध्येतारोऽतिविरला जाताः। सम्प्रति तु मीमांसाध्ययनाध्यापनपद्धतिः परीक्षापिशाचिकया ग्रस्ता नितान्तं शोचनीयां दशां प्राप्तवतीति सखेदं वक्तव्यं भवति।

तत्र ग्रन्थानामनुपलम्भनमपि मुख्यं कारणम्। तमिमं दोषमपाकर्तुं केन्द्रशिक्षामन्त्रालयाधिकारिणः, राष्ट्रियसंस्कृतसंस्थानम्, संस्थया परिचाल्यमानविद्यापीठप्राचार्याः डा० स्वामिनाथार्याः विशेषतश्च विद्यापीठप्रकाशनविभागसम्बन्धिनोऽध्यापकाः पं० रुद्रदेवत्रिपाठिप्रभृतयः बद्धपरिकरास्सन्तीति सत्यं ते धन्यवादभाजनानि। शास्त्रदीपिकायाः अस्मिन् प्रथमभागे तत्सद्वैद्यनाथकृतप्रभासहिताः तर्कपादं विहाय पञ्चाध्यायाः प्रकाशिताः। अधिकरणसूचीमात्रं प्रकाशितम्। विशेषसूची परिशिष्टादिकं द्वितीयभागे प्रकाशयिष्यते। तर्कपादस्य प्रकाशनं पृथग्भागेनानुपदमेव कर्तुं विहितमतिरस्मि। अस्मिन् भागे मुद्रणजनिता दोषास्सन्त्येव, तान् संख्यावन्तो मर्षयेयुरिति विश्वसन् उपरमामि।

सं० २०३४
फाल्गुन शु० ५
( १४-३-७८ )

विद्वज्जनवशंवदः
पि० एन्० पट्टाभिरामशास्त्री

# अधिकरणसूची

## प्रथमाध्यायस्य द्वितीयः पादः



## तृतीयः पादः



## चतुर्थः पादः



## द्वितीयाध्यायस्य प्रथमः पादः

षष्ठः पादः



सप्तमः पादः

द्वितीयः पादः



तृतीयः पादः

**शास्त्रदीपिकायाः पंचमाध्यायान्तभागस्थाधिकरणसूची समाप्ता**



श्रीः

# पार्थसारथिमिश्रकृतशास्त्रदीपिका

## वैद्यनाथतत्सत्प्रणीतप्रभाव्याख्यासहिता

## शास्त्रदीपिकायां प्रथमाध्यायस्य द्वितीयः पादः

१

सू० आम्नायस्य० । 'अथातो धर्मजिज्ञासे'त्यत्र प्रमाणस्वरूपसाधनफलैः साभासैर्धर्मो जिज्ञास्यत्वेन प्रतिज्ञातः । तत्रास्मिन्नध्याये प्रमाणं निरूप्यते किं प्रमाणं

---

श्रीः

## प्रभा

सौजन्यसीमादृतराममुद्रमगाधगाम्भीर्यनभस्समुद्रम् ।
सदा सदाचारनिरस्ततन्द्रं श्रीरामचन्द्रं पितरं नमामि ॥
श्रीमन्महागणपतेश्चरणारविन्दमानम्य भक्तजनसिद्धिदमादरेण ।
श्रीवैद्यनाथकविरद्भुतभाट्टतन्त्रसिद्धान्ततत्त्वकमलं विशदीकरोति ॥
अधीत्य सकलं शास्त्रं परिशील्य यथामति ।
सद्गुरूणां प्रसादेन व्याख्यास्ये शास्त्रदीपिकाम् ॥

सू० आम्नायस्य० । तत्र तावद्,

**'विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः ।**
**प्रयोजनञ्च पञ्चाङ्गं शास्त्रेऽधिकरणं मतम्' ॥**

इत्युक्तलक्षणोदाहृत-विषय-संशय-पूर्वपक्ष-सिद्धान्त-प्रयोजनरूपपञ्चाङ्गविचारात्मकाधिकरण-घटिताध्यायस्तोमरूपेऽस्मिन् शास्त्रे प्रत्यधिकरणं चतुर्धा सङ्गतिमाहुः—शास्त्रसङ्गतिरध्यायसङ्गतिः प्रकृतसङ्गतिरनन्तरसङ्गतिश्चेति । तत्र शास्त्रप्रतिपाद्यार्थसम्बन्धित्वं शास्त्रसङ्गतिः । एवमध्याय-प्रतिपाद्यार्थसम्बन्धित्वमध्यायसङ्गतिः । पूर्वप्रकृतेन समं प्रसङ्गादिरूपा प्रकृतसङ्गतिः । पूर्वाधि-करणेन सममुत्तराधिकरणस्य सङ्गतिरनन्तरसङ्गतिरिति । तदेवमत्राधिकरणे सङ्गतिचतुष्टये वक्तव्ये प्रथमं तावच्छास्त्राध्यायसङ्गती दर्शयितुं पूर्वोक्तजिज्ञासासूत्रमनुवदति—अथात इत्यादि । इत्थंभूतलक्षणे तृतीया । तदुपलक्षितो धर्म इत्यर्थः । सूत्रार्थस्तु-अथ वेदाध्ययनानन्तरम्, अतः

धर्मे इति। तेन यदेव किंचिद्धर्मप्रमाणनिरूपणम् अर्थवादमन्त्रस्मृतिनामधेयादिगोचरं तत्सर्वमत्रैव संगतम्। न ह्यत्र चोदनाप्रामाण्यसाधनं लक्षणार्थः, येन स्मृत्यादेर्न संगतिः स्यात्। किं तर्हि? धर्मप्रमाणनिरूपणम्। तदुक्तं भाष्यकृता

---

अर्थज्ञानार्थादध्ययनाद्धेतोः धर्मस्य विचारः कर्तव्य इति शेषः। षष्ठचर्थश्च तादर्थ्यरूपः सम्बन्ध इति। शास्त्रस्य विषयप्रयोजनकथनं प्रेक्षावत्प्रवृत्त्यङ्गमनेन सूत्रेण क्रियते। तदुक्तम्—

'अथातो धर्मजिज्ञासा सूत्रमाद्यमिदं कृतम्।
धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम्'॥ इति॥

धर्मार्थिता च विचारस्य तन्निश्चयद्वारा भवति। स च न प्रामाण्यादिविचारमन्तरेणेत्यर्थात् तेषामपि जिज्ञास्यत्वेन प्रतिज्ञान्तर्गतिरिति ज्ञेयम्। एवं प्रमाणाद्याभासानामपि हानाय जिज्ञास्यत्वमिति। तत्र प्रमाणाभासाः शाक्यादिग्रन्थाः, स्वरूपाभासाः चैत्यवन्दनादयः, साधनाभासाः पश्वादेः फलस्यौदुम्बरत्वादयः, फलाभासाश्चोदुम्बरत्वस्य पश्वादय इति ज्ञेयम्। तत्र तेषु प्रमाणादिषु मध्ये। धर्म इतिविषयनिर्देशेनैतच्छास्त्रप्रतिपाद्यधर्मसम्बन्धितया शास्त्रसङ्गतिः सूचिता। तेन धर्मप्रमाणनिरूपणस्याध्यायार्थत्वेन। यदेवेति कात्स्न्यर्थिकम्। यावत्किञ्चिदित्यर्थः। नामधेयादिर्गोचरो विषयो यस्येति बहुव्रीहिः। आदिनाचारपरिग्रहः। अत्रैवेत्येवकारो भिन्नक्रमः। अस्मिन्नध्याये सङ्गतमेवेत्यर्थः। असङ्गतिशङ्काबीजमुद्भाव्य निरस्यति— न हीति। लक्षणेऽर्थ इति पाठे 'अत्र लक्षणे अध्याये' इति सामानाधिकरण्येनान्वयः। लक्षणार्थ इति पाठेऽपि 'नात्र पदेऽयं पदार्थः नात्र वाक्येऽयं वाक्यार्थः' इति च सामान्यानुवादेन विशेषनिषेधात्स एवार्थः। चोदना-विधिवाक्यम्। लक्ष्यते रूप्यतेऽर्थोऽनेनेति व्युत्पत्त्या लक्षणशब्देनाध्यायो मीमांसकैर्व्यवह्रियते। येनेति। चोदनाप्रामाण्यसाधनस्याध्यायार्थत्वेन हेतुनेत्यर्थः। स्मृत्यादेः स्मृत्यादिप्रामाण्यविचारस्य। यद्यपि प्रथमं निरूप्यत्वाच्चोदनाबहिर्भूतत्वाविशेषाच्चार्थवादादेरित्येव वक्तुमुचितम्, तथापि चोदनाशब्दस्य प्रवर्तकत्वपर्याप्त्यधिकरणमन्त्रार्थवादनामधेयोपेतविधिवाक्यवाचित्वेन सर्ववेदविषयत्वाच्चोदनासूत्रे सर्वस्यैव वेदस्य प्रामाण्यं प्रतिज्ञातम् इति नार्थवादादिप्रामाण्यविचारस्यासङ्गतिरिति मतनिरासाय स्मृत्यादेरित्युक्तम्। एवमपि स्मृतिविचारासङ्गतिस्तदवस्थैवेति। किं तर्हि लक्षणार्थ इति प्रश्नपूर्वकमाह– किं तर्हि इति च्छेदः। धर्मेति। अयमाशयः—यद्यपि प्रधानभूतायाश्चोदनायाः प्रामाण्यं प्रथमपाद एव कात्स्न्र्येन निरूपितमिति तद्बहिर्भूतार्थवादादिप्रामाण्यविचारो नोपयुज्यते, तथापि जिज्ञासासूत्रप्रतिज्ञातधर्मप्रमाणमात्रनिरूपणार्थे प्रथमाध्याये नामङ्गतः। न च चोदनैव धर्मे प्रमाणमिति चोदनासूत्रप्रदर्शितनियमविरोधः, नियमानां तुल्यकक्षव्यवच्छेदपरत्वेन चोदनावत्स्वतन्त्रप्रमाणत्वाभावेऽपि तच्छेषत्वेन तन्मूलत्वेन चार्थवादादिस्मृत्यादेः प्रमाणत्वोपगमात्। अत एव प्रधानभूतचोदनाप्रामाण्यप्रतिज्ञया तच्छेषभूतार्थवादादिप्रामाण्यस्यापि प्रतिज्ञामभिप्रेत्य समस्तस्य प्रथमाध्यायस्य चोदनासूत्रपरिकरत्वमुक्तमाचार्यैः। चोदनासूत्रनिर्दिष्टो यः प्रमाणपरिग्रहः सपरिकरस्स आद्येन लक्षणेन प्रपञ्चित इति॥। धर्मप्रमाणसामान्यस्य जिज्ञासितत्वे भाष्यस्वरसमाह तदुक्तमिति। कथंलक्षणकः

'को धर्मः ? कथंलक्षणकः ?' इति। सर्वस्मिंश्चाध्याये तदेव क्रियत इति समस्तमध्यायं प्रमाणलक्षणमाचक्षत इति। तेन लक्षणसंगतिस्तावत्सिद्धा। प्रकृतसंगतिरपि चोदनानां प्रामाण्ये पदपदार्थसम्बन्धस्यौत्पत्तिकत्वेन वाक्यार्थप्रतीतेर्मूलवत्तया चोपपादितेऽनन्तराधिकरणे वेदद्वारेण तासां पौरुषेयत्वमाशङ्कितम्। यथोक्तं भाष्यकारेण-'संनिकृष्टकाला वेदा इदानीन्तनास्ते च चोदनानां-

---

कीदृक्प्रकारकः। अत्र धर्म इत्यनुषङ्गदर्शनाय को धर्म इति स्वरूपजिज्ञासोपन्यासः। ननु जिज्ञासासूत्रप्रतिज्ञातधर्मस्वरूपविचारस्य सूत्रे निरूपणाच्चोदनैवेति नियमव्याख्यानात्तदतिरिक्तप्रमाणनिरूपणमसङ्गतमेवेति शङ्कामपाकरोति—सर्वस्मिश्चेति। तथा च सकलस्याध्यायस्य प्रमाणंलक्षणमिति समाख्योपपत्तिरिति भावः। तेन धर्मप्रमाणसामान्यस्याध्यायार्थत्वेन। लक्षणसङ्गतिः अध्यायसङ्गतिः। प्रकृतसङ्गतिः प्रकृतेन चोदनाप्रामाण्यनिरूपणेन सङ्गतिः। अस्य च तदिदमुक्तम् इत्यतः प्राक् क्वचित्पुस्तके विद्यमानत्वेनाध्याहृतेन वा इतिशब्देनान्वयः। सिद्धेति चानुषङ्गः। तथा च प्रकृतसङ्गतिरपि इति सिद्धेत्यन्वयः। कथं तत्राह—चोदनानामिति। प्रामाण्ये उपपादिते सतीत्यन्वयः। सम्बन्धस्य प्रतिपाद्यप्रतिपादकभावरूपस्य। औत्पत्तिकत्वेन अनादित्वेन। मूलवत्तया आकांक्षादिसहकृतपदाभिहितपदार्थमूलकतया। एतदनन्तरञ्च औत्पत्तिकसूत्रतद्भूताधिकरणयोरिति शेषः। 'औत्पत्तिकस्तु शब्दस्यार्थेन सह सम्बन्धः' इत्यादिसूत्रे तावत् पदपदार्थसम्बन्धस्य पुरुषाधीनत्वेन तद्गतभ्रमप्रमादादिदोषाद्वाक्यार्थबोधस्य मिथ्यात्वरूपमप्रामाण्यमित्याशङ्क्य 'पदपदार्थसम्बन्धं सर्वोऽन्यस्मात्प्रपद्यते, मद्वत्तद्व्यवहारित्वात्' इति न्यायेन प्रतिपाद्यप्रतिपादकभावसम्बन्धस्य स्वरूपतो ज्ञप्तितश्च प्रवाहानादित्वान्न पौरुषेयत्वमिति सिद्धान्तितम्। एवं तद्भूताधिकरणे पदानां प्रत्येकं मिलितानां वा न वाक्यार्थप्रतिपत्तिहेतुत्वम्, वाक्यार्थानामनन्तत्वेन सम्बन्धग्रहणायोगाद्वेदे त्वपूर्वत्वेन सुतरां तदयोगादगृहीतसम्बन्धस्य च शब्दस्य प्रत्यायकत्वासम्भवान्मूलाभावेन वाक्यार्थप्रतीतिर्व्यामोहरूपेति न चोदनाया धर्मप्रमाणत्वमित्याशङ्क्य पदोपस्थापितानां पदार्थानामाकाङ्क्षादिसहकारेण लक्षणया वाक्यार्थबोधकत्वसम्भवान्न निर्मूलत्वं वाक्यार्थप्रतीतेरिति सिद्धान्तितम्। अनन्तरेति। तद्भूताधिकरणाव्यवहितोत्तरवेदाधिकरणे, अर्थवादाधिकरणाव्यवहितपूर्वभाविनि वा तस्मिन्। तासां चोदनानाम्। ननु 'वेदांश्चैके सन्निकर्षं पुरुषाख्या' इति सूत्रे वेदशब्दमात्रश्रवणेन वाक्यत्वात्काठकादिसमाख्यावशाच्च पौरुषेयत्वमिति पूर्वपक्षस्य वेदसामान्यविषयत्वावगतौ कर्तृस्मरणाभावेन वाक्यत्वहेतोरप्रयोजकत्वाद् 'वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम्। वेदाध्ययनसामान्यादधुनाध्ययनं यथा' इति रीत्या सत्प्रतिपक्षत्वात् समाख्यायाश्च प्रवचननिमित्तत्वादपौरुषेयत्वमिति सिद्धान्तस्यापि सकलवेदविषयत्वावगमात्कथं वेदद्वारेण चोदनापर्यवसायित्वं तदधिकरणस्येत्याशङ्क्य तत्र भाष्यसम्मतिमाह—यथोक्तमिति। अस्य च 'इत्येवमाशङ्क्य' इत्यत्रत्येनेतिशब्देनान्वयः। 'सन्निकृष्ट' इत्यस्य व्याख्यानम् 'इदानीम्' इति। न च भाष्यकारस्यापि तथोक्तौ किं बीजमिति वाच्यम्, चोदनाशब्दस्य विधिवाक्य-

संघाताः तत्र पौरुषेयाश्चेद्भवदा असंशयं पौरुषेय्यश्चोदनाः' इत्येवमाशङ्क्य वेदापौरुषेयतया तदवयवानां चोदनानामप्यपौरुषेयतया प्रामाण्यं प्रतिपादितम्। एवं चोदनानां वेदावयवानां प्रामाण्ये साधिते तदवयवत्वेनोपस्थितानामर्थवादादिभागानामप्यपौरुषेयत्वसामान्याच्चोदनावत् प्रसक्तं प्रामाण्यमस्ति न वेति चिन्त्यत इति। तदिदमुक्तम्--

**'सिद्धप्रमाणभावस्य धर्मे वेदस्य सर्वशः।**
**विध्यर्थवादमन्त्राणामुपयोगोऽधुनोच्यते' ॥ इति।**

अस्यार्थः—सिद्धप्रमाणभावं चोदनांशे वेदं त्रिधा विभज्य किं तावन्मात्रस्यैव प्रामाण्यम्? उत सकलस्य? इति विचार्यते, न विधेरेव। किन्तर्हि विध्यर्थवादमन्त्राणां सर्वेषामेव सर्वशः सर्वप्रकारं विधिस्तुतिस्मृतिभिर्धर्मप्रतीतौ उपयोगः प्रतिपाद्यत इति। यद्वा चोदनार्थमप्युक्तेनापौरुषेयत्वेन समस्तस्य प्रामाण्यं सिद्धप्रायमपि बोधकशक्त्यभावमाशङ्क्य स्थिरीक्रियते विध्यर्थवादमन्त्राणामिति नायमर्थो

---

मात्रवाचितया तत्प्रामाण्यस्यैव प्रतिज्ञातत्वेन निरूपणौचित्यादिति। एवं पूर्वप्रकृतमभिधाय तेन सह सङ्गतिं दर्शयति–एवमिति। स्मृतस्योपेक्षानर्हत्वरूपे प्रसङ्गे उपेक्षानर्हत्वस्य सप्रयोजनत्वेन स्फुटत्वात्स्मृतत्वमात्रमर्थवादतत्प्रामाण्ययोर्दर्शितम्। 'अस्ति' इत्यादेः सम्भवति न वेत्यर्थः। स्वोक्ते सङ्गतिप्रकारे प्रमाणत्वेनोपन्यस्तं वार्तिकं सम्मुग्धरूपेण सर्ववेदप्रामाण्यं प्राङ्निरूपितम्, इदानीमर्थवादाद्यंशे द्वारासम्भवेनाक्षिप्य द्वारविशेषोक्त्या समर्थ्यत इति विरुद्धार्थमाभासमानं स्वोक्तार्थपरत्वेन व्याचष्टे— अस्यार्थ इत्यादिना। चोदनांश इत्यध्याहारे च मूलं पूर्वपादान्त्यवार्त्तिकम्—'इति प्रमाणत्वमिह प्रसिद्धं युक्त्येह धर्मं प्रति चोदनायाः' इति। त्रिधेति। नामधेयस्य विध्यन्तर्गतिमभिप्रेत्येदम्। तावन्मात्रस्यैव चोदनांशमात्रस्यैव। चोदनारूपविधिप्रामाण्यस्य प्रागेवोक्तत्वादर्थवादादितुल्यन्या 'अधुनोच्यत' इति निर्देशानुपपत्तेराह—न विधेरेवेति। सर्वेषामिति द्वन्द्वार्थस्य साहित्यस्य विवरणम्। तथा च विधेरप्यन्यसाहित्येनाधुनेति निर्देशभाक्त्वमिति भावः। सर्वेति। सर्वे प्रकारा यत्र तद्यथा स्यादिति प्रतिपादनक्रियाविशेषणम्। तस्यैवार्थतो विवरणम्—विधीत्यादिः। विधिर्विधानम्। तदित्थं श्लोकयोजना—चोदनांशे सिद्धप्रमाणभावस्य वेदस्यावयवत्वेन सम्बन्धिनां विध्यर्थवादमन्त्राणां समस्तानाम्, न तु विधिमात्रस्य। सर्वशः—सर्वैर्विधिस्तुतिस्मृतिरूपैः प्रकारैर्धर्मे धर्मप्रमितावुपयोगोऽधुनोच्यत इति। एवञ्च वेदस्येति वेदसम्बन्धित्वसामान्यात्स्मृतीनां प्रामाण्यविचारोक्त्या प्रसङ्गसङ्गत्यभिप्रायावगमात्सम्मतिप्रदर्शनोपपत्तिरिति। गत्यन्तरसम्भवेऽध्याहारस्यायुक्तत्वात्सर्वश इत्यस्योत्तरार्धेऽन्वयक्लेशादुक्तेत्यपहाय 'सिद्धे' त्यभिधानस्वारस्याच्चार्थसिद्धस्याक्षेपरूपसङ्गत्यभिप्रायकत्वेन व्याख्यान्तरमाह—यद्वेति। चोदनार्थम् चोदनाप्रमाण्यार्थम्। समस्तस्य सर्वावयवसहितस्य। इदञ्च 'सर्वश' इत्यस्यार्थकथनम्, सर्वशब्दस्य विध्याद्यवयवपरत्वात्। प्रामाण्यापवादभूतपौरुषेयत्वस्याभावसिद्धावपि धर्मप्र[मा]जनकत्वरूपप्रामाण्यस्य द्वारानिश्चयेनापर्यवसानात्प्रायशब्दः, अभावश्च विध्येकवाक्यतया स्वातन्त्र्येण वा धर्मप्रमित्यनुत्पादनात्। नन्वस्मिन्

विधेरप्युपयोगः प्रतिपाद्यत इति, किन्तर्हि विध्यादीनां सर्वेषामुपयोगोऽस्ति न विधेरेवेति प्रतिपाद्यत इति। नामधेयाभिप्रायं वा विधिग्रहणम्। यद्वा अर्थवादमन्त्रयोः स्तुतिस्मृतिभ्यामुपयोगे कथितेऽर्थाद्विधेरपि सामान्यसिद्धमुपयोगित्वं साक्षाद्विधानेन विशेषरूपेण साधितं भवतीत्यभिप्रायः। औदुम्बराधिकरणे विध्युपयोगः प्रतिपाद्यत इत्यभिप्रायो वा। तत्रास्मिन्नेव सूत्रे विध्यतिरिक्तानां सर्वेषामेवानर्थक्यं पूर्वपक्षीक्रियते। सिद्धान्तेऽपि स्वाध्यायविधिवशादेवार्थवत्तया भवितव्यमित्येतावत्साधारण्येनैवाभिधास्यते, पश्चात्तु

---

पादे विध्युपयोगस्यानभिधानादितरसाहित्येनापि तदुपयोगाभिधानोक्तिरयुक्तेत्याशङ्क्याह—विधीति। इति नायमर्थः इत्यस्य नायमर्थः। तथा च श्लोके 'उपयोग' इत्यनन्तरमस्तीत्यध्याहर्तव्यमिति भावः। एवञ्च विध्युपयोगस्य कण्ठतोऽनभिधानेऽप्यर्थवादाद्युपयोगकथने सत्यर्थाद्विध्यादीनां सर्वेषामुपयोग इत्युक्तं भवतीत्यभिप्रायः। नन्वेवमपि विधिग्रहणमनर्थकम् अत आह—नामधेयेति। विशेषेणेतरव्यावृत्तत्वेन धीर्यस्मादिति व्युत्पत्त्येति भावः। नन्वेतदप्ययुक्तम्, रूढेर्योगाद्बलीयस्त्वादन्ते वक्तव्यस्य नामधेयस्यादावुक्तौ व्युत्क्रमापत्तेर्विध्यर्थवादमन्त्रनामधेयात्मकस्येति श्लोकव्याख्यावार्तिके[1] नामधेयस्य पृथगुक्तेश्चेत्यत आह—यद्वेति। सामान्यसिद्धम् द्वारविशेषानालिङ्गितं सम्मुग्धरूपेण सिद्धमर्थात्परिशेषात्साक्षाद्विधानत्वरूपेण विशेषरूपेण साधितमित्यन्वयः। तथा च पूर्वपादे विधिप्रामाण्योक्तावप्यत्र परिशेषाद् विधानरूपद्वारविशेषस्य प्रतिपाद्यत्वाद्विधिग्रहणं नानर्थकमित्याशयः। नन्वार्थिक उच्यत इत्ययुक्तमित्यरुचेराह—औदुम्बरेति। विध्यभावेनौदुम्बरत्वस्येष्टसाधनत्वेनाप्रतीतेर्न पश्वादिफलसम्बन्धः, तत्सत्त्वे तु साधनत्वावगमात् फलाकाङ्क्षायां तत्सम्बन्धो युक्त इत्येवं प्रवर्तनारूपविध्युपयोगस्य तत्राभिधानादिति भावः। तदेवं विधिग्रहणस्य पञ्च व्याख्यानानि, समस्तस्य च वार्तिकस्य प्रसङ्गाक्षेपसङ्गतिभेदेन व्याख्याद्वयं कृतमिति बोध्यम्। ननु 'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः' 'अविशिष्टस्तु वाक्यार्थः' 'अपि वा नामधेयं स्यात्' इत्यर्थवादमन्त्रनामधेयाधिकरणसिद्धान्तसूत्रैः स्तुत्यादिरूपद्वारविशेषप्रतिपादनमयुक्तम्, सामान्यतो धर्मप्रमितिजनकत्वस्यासिद्धौ तदवसराभावात्। न चापौरुषेयत्वसामान्यात्तत्सिद्धिः, साधकाभावे बाधकाभावमात्रेण तदसिद्धेः। न च जिज्ञासासूत्र एवाध्ययनविधेर्दृष्टार्थत्वव्युत्पादनेन तत्सिद्धमिति वाच्यम्, 'दृष्टो हि तस्यार्थः कर्मावबोधनं नाम' (शा० भा०........) इति न्यायेन विधिनिषेधभागस्यैव तत्सिद्धेः। तावताप्यथशब्दोक्तस्य धर्मजिज्ञासाया अध्ययनानन्तर्यस्योपपत्तेरित्याशङ्कायामाह—तत्रेत्यादि। तत्र सङ्गतौ सिद्धायाम् इति दर्शयितव्यमित्यन्वयः। आनर्थक्यम् धर्माधर्मप्रमितिरूपप्रयोजनशून्यत्वम्। नन्वक्रियार्थत्वहेतुसाम्यादेतत्सूत्रस्य तन्त्रेण सर्वानर्थक्यपूर्वपक्षपरत्वेऽपि सिद्धान्तसूत्रस्य स्तुत्यर्थत्वरूपार्थवादमात्रविषयप्रामाण्यसाधकपरत्वात्कथं साधारण्यमत आह—सिद्धान्तेऽपीति। सिद्धान्तसूत्रेऽपीत्यर्थः। स्वाध्यायविधिवशात् 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिवशात्। य एवाध्ययन-

---

१. 'अवधृतप्रामाण्यस्य वा वेदस्येदानीं समस्तस्य विध्यर्थवादमन्त्रनामधेयात्मकस्य' इति व्याख्यावार्तिकम् ( तं० वा० पृ० १०५, पू० सं० )।

क्रमेण स्तुत्याद्युपयोग इति दर्शयितव्यम् । तत्र प्रथममर्थवादेष्वेव सिद्धान्तकथनात्तानेवोदाहृत्य चिन्त्यते । वायुर्वै क्षेपिष्ठा देवतेत्येवमादीनि यानि विधिभावनातदंशत्रयातिरिक्तार्थानि, तानि किं धर्मे प्रमाणमुत नेति ? संशयः । तदर्थमिदं विचारयितव्यम्, किं विध्युद्देशेनैषामेकवाक्यत्वम् ? उत भिन्नवाक्यतेति ? तत्सिध्यर्थमप्येतच्चिन्तनीयम्, किं विध्युद्देशार्थवादयोः परस्पराकाङ्क्षाप्यस्ति ? न वेति । तत्रैवं पूर्वः पक्षः—

---

विधिर्विध्युद्देशांशे प्रयोजनवदर्थपरत्वबोधकः, स एवार्थवादादेरपीत्येवकारार्थः । अर्थवत्तया प्रयोजनवदभिधेयपरतया । अभिधास्यत इति । 'विधिना त्वेकवाक्यत्वात्' इत्यंशेनेति भावः । तस्य चायमर्थः—तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । यदुक्तमानर्थक्यं तन्न, विधिना-अध्ययनविधिना । प्रयोजनवदर्थपरत्वावगमादिति शेषः । ननु विध्यंशे तदवगमेऽप्यर्थवादांशे यथाश्रुते तदसम्भवाददृष्टार्थतैव भवेदित्याशङ्क्योक्तमेकवाक्यत्वादिति । एकं हीदमध्ययनविधिवाक्यं किञ्चिदंशे दृष्टार्थम् किञ्चिदंशे चादृष्टार्थं न युज्यते वैरूप्यादिति । क्रमेणेति—अवसरेणेत्यर्थः । सामान्यनिरूपणानन्तरं विशेषनिरूपणावसरादिति भावः । स्तुत्यादिरूप उपयोगो द्वारविशेषः । अभिधास्यत इत्यनुषज्यते । एवञ्चावृत्या सामान्यविशेषविचारद्वये सूत्रतात्पर्यान्न सामान्यतः प्रामाण्यसिद्धिरिति भावः । ननु सामान्यविचारार्थं मन्त्रादयोऽप्युदाहार्याः, उपलक्षणत्वेनैकोदाहरणे च विनिगमकाभाव इत्याशङ्क्याह तत्रेति । तत्र विचारद्वये कर्तव्ये । सिद्धान्तकथनात् विशेषविचारसिद्धान्तकथनात् । अयं भावः—नात्र विचारद्वयं पृथक्कृत्य प्रदर्श्यते, किन्तु विशेषविचारपूर्वपक्षसिद्धान्तशेषत्वेन सामान्यविचारपूर्वपक्षसिद्धान्तौ सङ्कीर्णतयाभिधास्येते, लाघवात्प्रधानीभूतस्य विशेषविचारसिद्धान्तस्य 'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः' इति सूत्रेण प्रथममर्थवादविषय एवाभिधानात्तेषामवश्योदाहर्तव्यत्वेन सामान्यविचारेऽप्युपलक्षणत्वेन विषयत्वं तेषामेव युक्तमिति । सूत्रेऽप्यर्थवादविषयविशेषसिद्धान्तस्य प्रथममभिधाने पदैकवाक्यतया चोदनाप्रत्यासन्नत्वं बीजम् । पञ्चावयवेऽधिकरणे विषयसंशयौ तावद्दर्शयति – वायुरित्यादिना । काम्यपशुकाण्डे "वायव्यं श्वेतमालभेत भूतिकामः" इति विधिवाक्येन भूतिकामस्य वायुदेवताकः श्वेतपशुद्रव्यको यागो विहितः, तद्धितोक्तस्य द्रव्यदेवतासम्बन्धस्य यागं विनासम्भवात् । तस्येयं स्तुतिः—वायुर्वै क्षेपिष्ठा-शीघ्रगामिनी देवता, वायुमेव स्वेन-वायूचितेन श्वेतपशुरूपेण भागधेयेनोपधावति—अर्थाद्यजमानस्तोषयति । स च तुष्टो वायुरेनं यजमानमैश्वर्यं प्रापयतीति । आदिपदेन सामान्यविचारे मन्त्रादीनाम्, विशेषविचारे चार्थवादान्तराणां संग्रहः । विधिः-प्रवर्त्तना । भावना-आर्थीभावना । तस्या अनन्तरोक्ताया अर्थभावनाया अंशत्रयम् साध्यसाधनेतिकर्तव्यतारूपम्, न तु शब्दभावनाया अपि, तदतिरिक्तार्थस्योभयवादिसिद्धत्वाभावेन विषयतावच्छेदकत्वायोगात् । अत्र विधिपदं निषेधो [धस्यो]–पलक्षणम्, धर्म इति चाधर्मस्य । तत्प्रमाणस्य निषेधशास्त्रस्यापि विधितुल्यत्वात् । अत एव वक्ष्यति—न धर्माधर्माविति । एवं तन्त्रेण सामान्यविशेषविचारद्वयमुपन्यस्य विशेषविचारोपयोगिविचारद्वयं हेतुहेतुमद्भावापन्नं क्रमेण दर्शयति—तदर्थमित्यादिना । संशयकोटिभूतपूर्वपक्षसिद्धान्तसिध्यर्थमित्यर्थः । तत्सिध्यर्थमपि उक्तविचारविषयसिध्यर्थमपि ।

अर्थवादा निराकाङ्क्षा भूतार्थप्रतिपादनात् ।
विध्युद्देशाः समाप्यन्ते विशिष्टार्थविधानतः ॥

यथाश्रुतिगृहीतानि तावत्सन्तमसन्तं वा भूतमर्थमन्वाचक्षते न धर्माधर्मौ । न चाध्याहारादिभिस्तत्प्रतिपादनम् । अपरिपूर्णेषु खल्वध्याहारादयः, परिपूर्णानि चैतानि । 'स एवैनं भूतिं गमयती'ति विशिष्टार्थप्रतिपादनादर्थान्तराकाङ्क्षाभावात्, अनाकाङ्क्षत्वादेव च न संनिहितेनापि 'वायव्यं श्वेतमालभेत' इत्यनेनैकवाक्यता । विशिष्टार्थप्रतिपादनमेव हि पदानां लोके कार्यमवधारितं न प्रयोजनवदर्थप्रतिपादनम्, येन तल्लिप्सया विध्येकवाक्यता कल्प्येत, आख्यायिकारूपाणां बहुलमुपलब्धेर्लोके । स्वाध्यायविधिवशाद्वेदस्य कृत्स्नस्य प्रयोजनवदर्थपर्यवसानमिति चेत्–न; दृष्टोऽर्थस्तेनानुसर्त्तव्यो न तद्वशेनार्थकल्पना । तद्वरमदृष्टार्थता स्वाध्यायाध्ययनस्य । तन्न तावदर्थवादानामाकाङ्क्षा,

---

संशयानन्तरं पूर्वपक्षरूपं तृतीयमधिकरणावयवं दर्शयति–तत्रेत्यादिना । तत्र उक्तसंशये सति । पूर्वोक्तविचारेषूत्तरोत्तरस्य पूर्वपूर्वसाधकत्वात्तेनैव क्रमेण पूर्वपक्षमुपपादयति–अर्थवादा इति । भूतः–सिद्धः कर्तव्याकर्तव्यभिन्नः क्षेपिष्ठत्वादिः । समाप्यन्ते-निराकाङ्क्षा भवन्ति । विशिष्टार्थः अंशत्रयविशिष्टा भावना । ननु नैराकाङ्क्ष्यसिद्धौ भिन्नवाक्यत्वावश्यम्भावादप्रामाण्यसिद्धिमभिप्रेत्य पूर्वपक्षश्लोके निराकांक्षत्वमात्राभिधानं कृतम्, तदयुक्तम्; भिन्नवाक्यत्वेऽपि स्वतः प्रामाण्यसम्भवात् इत्याशङ्क्याह–यथाश्रुतीति । श्रुतिः शब्दश्रवणम् अनतिक्रम्येत्यर्थः । इत्येवमादीनीति पूर्वोक्तमिह सम्बध्यते । सन्तं क्षेपिष्ठत्वादिकम्; असन्तम् "सोऽरोदीत्" इत्यादौ रुद्ररोदनादिकम् । भूतम्-कर्तव्याकर्तव्यभिन्नम् । ननु वायुः क्षेपिष्ठोऽतो भूतिकामः क्षेपिष्ठो भूयादित्यध्याहारानुषङ्गादिना धर्मप्रतिपादकत्वं स्यादित्याशङ्क्य निराकरोति–न चेति । आदिनानुषङ्गावृत्तिव्यवहितान्वयानां संग्रहः । खलुर्हेत्वर्थः । एवञ्च भिन्नवाक्यतया धर्मे प्रामाण्यासम्भवादेकवाक्यतयैव तद्वाच्यम् । सा चार्थवादाकाङ्क्षया तावन्न सम्भवतीति श्लोकपूर्वार्धतात्पर्यार्थमाह–अनाकाङ्क्षत्वादेवेति । ननु सप्रयोजनार्थप्रतिपादने साकाङ्क्षत्वादेकवाक्यता स्यादित्याशङ्क्याह-विशिष्टेति । तत्तदर्थान्वितस्वार्थेत्यर्थः । प्रतिपादनमेव शाब्दबोधत्वावच्छिन्नमेव । न प्रयोजनेति । न प्रयोजनवदर्थशाब्दत्वावच्छिन्नमित्यर्थः । आख्यायिका कादम्बर्यादिरूपा कथा । तथा च निष्प्रयोजनार्थबोधकत्वात्तत्र व्यभिचार इति भावः । वैदिकशब्देषु तादृशनियममाशङ्कते–स्वाध्यायेति । "स्वाध्यायोऽध्येतव्यः" इत्यध्ययनविधिवशादित्यर्थः । पर्यवसानं तात्पर्यं । स्वाध्यायाध्ययनस्यार्थज्ञानफलकत्वान्निष्प्रयोजनार्थज्ञानस्य च फलत्वायोगात्सकलस्य स्वाध्यायस्य प्रयोजनवदर्थपरत्वावगतिरिति भावः । समाधत्ते-नेति । दृष्टः-लोके शब्दजन्यप्रतीतिविषयत्वेनावगतः । तेन-अध्ययनविधिना । अनुसर्तव्यः-भाविभूतज्ञानविषयत्वेन स्वीकर्तव्यः । तद्वशेन-विधिवशेन । अर्थकल्पना-प्राशस्त्यरूपादृष्टार्थकल्पना । ननु निष्प्रयोजनार्थज्ञानस्य फलत्वायोगात्तत्कल्पनेत्यत आह—तद्वरमिति । अर्थज्ञानरूपदृष्टप्रयोजनं परिकल्प्य तत्सिध्यर्थमदृष्टा-

नापि विध्युद्देशस्य, तस्यापि विशिष्टभावनाविधानेन निराकाङ्क्षत्वात्। न च प्रवर्त्तनाय प्राशस्त्यापेक्षा, विधित एवानपेक्षात्समीहितसाधनभावावगमेन प्रवृत्तिसिद्धेः। न चार्थवादैः प्राशस्त्यं प्रतिपाद्यते, भूतार्थमात्रप्रतिपादनात्। लक्षणया हि तेभ्यः प्राशस्त्यङ्गम्यते। न च श्रौतस्यार्थस्य संभवे सा युक्ता। एकवाक्यतया च लक्षणा स्यात्, न च तस्यां प्रमाणमस्ति। तस्मादानर्थक्यम्। एवं मन्त्रनामधेययोरपि दर्शयितव्यम्। ताभ्यामपि धर्मप्रमित्यनुदयात्। तस्मादेषामप्रामाण्यम्। तेन समस्तो वेदः प्रमाणमित्यवधारणा न सिद्ध्यति। सिद्धान्तस्तु—

**स्वाध्यायविधिना वेदः पुरुषार्थाय नीयते।**
**सर्वस्तेनार्थवादानां प्राशस्त्येन प्रमाणता॥**

---

र्थकल्पनापेक्षया प्रथमत एवादृष्टकल्पनं सम्यगित्यर्थः। पूर्वार्धव्याख्यानमुपसंहरति—तदिति। तस्मादित्यर्थः। विध्याकाङ्क्षयापि नैकवाक्यतेत्येवमुत्तरार्धं व्याचष्टे—नापीति। आकांक्षेत्यनुषज्यते। ननु विधिवाक्यस्य स्वार्थबोधने निरपेक्षत्वेऽपि तन्मात्रेण पुरुषप्रवृत्त्ययोगादर्थवादप्रतिपादितप्राशस्त्यमपेक्षणीयमित्याशङ्क्याह—न चेति। समीहितसाधनभावः-इष्टसाधनत्वम्। नन्विष्टसाधनत्वतात्पर्यकज्ञानमात्रेण द्रव्यव्ययसाध्यगोक्रयादौ न प्रवर्तते, बहुक्षीरेत्यादिस्तुतिवाक्यात्प्राशस्त्यबोधसहितेन शीघ्रं प्रवर्तत इति लोके दर्शनादिहापि प्राशस्त्यबोधोऽपेक्षित इत्यत आह—न चेति। एकवाक्यतया चेति। चस्त्वर्थः। प्राशस्त्यलक्षणां विनैकवाक्यत्वानुपपत्तेरिति भावः। तस्याम्-एकवाक्यतायाम्। लक्षणया तदवगतिस्वीकारे चान्योन्याश्रय इति भावः। विशेषपूर्वपक्षमुपसंहरति—तस्मादिति। आनर्थक्यम् धर्माधर्मप्रमितिरूपप्रयोजनशून्यत्वम्। मन्त्रनामधेययोरर्थवादपूर्वपक्षप्रकारातिदेशेन सामान्यपूर्वपक्षमुत्थापयति—एवमिति। दर्शयितव्यमित्यत्रानर्थक्यमित्यनुषज्यते। तस्मादिति सामान्यपूर्वपक्षोपसंहारः। तेनेति। एतच्चाक्षेपसङ्गतिपक्षे आक्षेपप्रदर्शनार्थम्। प्रसंगपक्षे तु स्वरूपकथनमात्रम्। अवधारणा-प्रतिज्ञा नियमो वा। सूत्रार्थस्तु—आम्नायस्य वेदस्य क्रियार्थत्वात् अंशत्रयविशिष्टभावनाप्रतिपादकत्वात्। तत्त्वेनैव प्रयोजनवत्त्वादिति यावत्। अतदर्थानाम् अक्रियार्थानामर्थवादादीनामानर्थक्यं धर्माधर्मप्रमितिप्रयोजनशून्यत्वम्, तस्मादानर्थक्यादेवञ्जातीयकमनित्यम् अनित्यलौकिकवाक्यतुल्यमुच्यत इति।

अर्थवादानां स्तुतिद्वारा धर्मप्रामाण्यरूपसिद्धान्तस्याध्ययनविधिबोधितसकलवेदपुरुषार्थपर्यवसानरूपसामान्यसिद्धान्तोपजीवित्वादादौ तमेवाह—स्वाध्यायेति। पुरुषेणार्थ्यत इति पुरुषार्थः प्रयोजनवदर्थज्ञानम् तस्मै नीयते विनियुज्यत इत्यर्थः। सर्व इति पूर्वार्धान्वयि। अयं भावः—'स्वाध्यायोऽध्येतव्यः' इत्यत्राप्राप्तार्थत्वाल्लक्षणया तव्यप्रत्ययेन विधियुक्ता भावना बोध्यते। तस्याश्च भाव्यापेक्षायां दृष्टं सप्रयोजनार्थज्ञानमेव भाव्यत्वेनावगम्यते। तत्र च करणाकाङ्क्षायां समानपदोत्तरत्वादध्ययनं करणम्। तत्त्वञ्च साक्षादसम्भवाद्योग्यतया स्वाध्यायावाप्तिद्वारेण भवति। इदमेव योग्यतालभ्यं द्वारतया स्वाध्यायस्य कर्मत्वं तव्यप्रत्ययेनानूद्यत इति स्वाध्यायं

स्वाध्यायाध्ययनविधिना दृष्टार्थत्वात्सकलस्य वेदस्य प्रयोजनवदर्थपर्यवसानं बोधितम् । अर्थवादानां च भूतार्थप्रतिपादनेन प्रयोजनानवाप्तेर्यस्ततो लक्ष्यमाणः क्षिप्रदेवतासाध्यं कर्म क्षिप्रमेव फलं दास्यतीति प्राशस्त्यरूपोऽर्थः सोऽनन्तरप्रवृत्तविध्युद्देशाकाङ्क्षितत्वादाकाङ्क्षां शक्नोति पूरयितुमिति गृह्यते। स्वाध्यायविधिरेव प्रयोजनवदर्थपर्यवसानं बोधयन् प्राशस्त्यपरतया विना तदनुपपत्तेस्तात्पर्यमेषाङ्गमयति, तात्पर्याच्च लक्षणासिद्धिः, ततश्चैकवाक्यत्वम् । यत्तु दृष्टोऽर्थः स्वाध्यायाध्ययनविधिनानुसर्त्तव्यो न

---

प्राप्नुयादिति अध्ययनकर्मत्वमेवाहत्य वाक्यार्थः, निष्प्रयोजनस्य च कर्मत्वानुपपत्तेर्दृष्टमर्थज्ञानं लिङ्गात्प्रयोजनमाश्रयणीयमिति । एवं सामान्यत उपयोगसिद्धौ द्वारविशेषापेक्षायां विशेषसिद्धान्तमाह—तेनेति । सर्ववेदस्य प्रयोजनवदर्थपर्यवसानरूपेण हेतुनेत्यर्थः । प्राशस्त्येन प्राशस्त्यबोधद्वारेण श्लोकं व्याचष्टे—स्वाध्यायेति । दृष्टार्थत्वादिति । ल्यब्लोपे पञ्चमी । दृष्टार्थत्वमाश्रित्येत्यर्थः । तत इति तृतीयार्थे तसिः । तेन भूतार्थेनेत्यर्थः । लक्ष्यमाणः उपस्थाप्यमानः । क्षिप्रदेवतासाध्यमिति भूतार्थानुवादः तस्य लक्ष्यसम्बन्धप्रदर्शनार्थः, कार्यस्य प्रायेण कारणानुरूपत्वदर्शनादिहापि क्षिप्रदेवतासाध्यस्य कर्मणः क्षिप्रकारित्वमिति क्षिप्रमेवेत्यादिलक्ष्यस्वरूपकथनम् । इति प्राशस्त्येति । क्षिप्रफलदातृत्वात्मकप्राशस्त्येत्यर्थः । अनन्तरप्रवृत्तेति । अव्यवहितोच्चरितेत्यर्थः । तथाच तन्त्रवार्त्तिकम् 'क्षिप्रदेवतासाध्यं कर्म क्षिप्रमेव फलं दास्यतीति प्राशस्त्यरूपोऽर्थः सोऽनन्तरप्रवृत्तविध्युद्देशाकाङ्क्षितत्वात्' (तं. वा. पृ. ११५) इत्यादि । एवञ्च तत्तदर्थवादप्रतिपाद्यानां गुणदोषाणामेव प्राशस्त्याप्राशस्त्यरूपत्वम् । गुणत्वञ्च प्रवृत्तिप्रतिबन्धकद्वेषभङ्गहेतुज्ञानविषयत्वम्, निवृत्तिप्रतिबन्धकरागभङ्गहेतुज्ञानविषयत्वञ्च दोषत्वम् । अस्ति हि बहुक्षीरादिवाक्यजन्यतत्तद्गुणदोषज्ञानात्प्रवृत्तिनिवृत्तिप्रतिबन्धकद्वेषरागनिवृत्तिः । अतस्तद्द्वारेण प्रवृत्तिनिवृत्तिजनकत्वं गुणदोषात्मकप्राशस्त्याप्राशस्त्यज्ञानस्य दुरपन्हवम् । यथार्थप्रवृत्तौ च यथार्थगुणदोषज्ञानस्य हेतुत्वादर्थवादैः श्रुत्या प्रतिपादितानाञ्चापापश्लोकश्रवणसंवत्सरपूर्वरोदनादीनां प्रमाणाभावेनावास्तवत्वाद्वास्तवगुणदोषान्तरप्रतीतये लक्षणाश्रयणम् । तत्रापापश्लोकश्रवणेन पवित्रत्वादि, रोदनेन चाहृद्यत्वेन ऋत्विक्खेदकारित्वादि तत्र तत्र लक्ष्यमवसेयम् । न चैवं प्रकृतार्थवादे भूतिगमकत्वस्य वास्तवत्वात्तज्ज्ञानादेव प्रवृत्तिसिद्धौ व्यर्था लक्षणेति वाच्यम्, वायुक्षेपिष्ठत्वोक्त्या क्षिप्रभूतिगमकत्वे कार्यस्य कारणानुरूपतया कर्मगते च तस्मिन् तात्पर्यविगमेन तत्प्रतीत्यर्थं लक्षणाया आवश्यकत्वात् । एवञ्च सर्वत्र प्राशस्त्याप्राशस्त्ययोर्लक्ष्यत्वमुपपन्नम् । यत्र तु श्रौतार्थबाधस्तत्र "यजमानः प्रस्तरः" इत्यादौ लक्षितेन यजमानकार्यकारित्वेनोपकारातिशयरूपप्राशस्त्यलक्षणा । अभ्यनुज्ञाविध्यर्थवादेन तु दोषाभावनिष्ठप्रतियोग्यसमानाधिकरणत्वरूपातिशयरूपं प्राशस्त्यं बोध्यते । षोडशिग्रहणनिषेधार्थवादेन च प्रयोगविलम्बा [पा] दकत्वरूपमप्राशस्त्यमिति दिक् । यत्तु बलवदनिष्टाजनकत्वं प्राशस्त्यम्, बलवदनिष्टजनकत्वञ्चाप्राशस्त्यं सर्वत्र विधिनिषेधार्थवादैर्बोध्यते, तज्ज्ञानस्य प्रवृत्तिनिवृत्तिजनकतायाः क्लृप्तत्वादिति; तदयुक्तम्; विधिनैव बलवदनिष्टाजनकत्वविशिष्टेष्टसाधनत्वस्याक्षेपादर्थवादवैयर्थ्यापत्तेः, अभ्यनुज्ञाविधिना निषेधावगतबलवदनिष्टजनकत्वाभावमात्रबोधनाच्च । निषेधेनैव बलवदनिष्टजनकत्वावगमात्तदर्थ-

तद्दर्शनार्थकल्पनेत्युक्तम्, तत्सत्यम्; लाक्षणिकोऽप्यर्थो दृष्ट एव। दृश्यत एव हि श्रौतार्थद्वारेण तत्संबन्ध्यर्थान्तरे प्रत्ययः। संभवति तु श्रौतपरत्वे तात्पर्याभावान्न लक्षणाङ्गीक्रियते। अतश्च स्वाध्यायविधिनार्थवादस्यापि पुरुषार्थपर्यवसानं बोधयता परम्परयापि दृष्टलाभे स्वर्गादिकल्पनानुपपत्तेर्भूतार्थमात्रस्याप्रयोजनत्वात् प्राशस्त्यपरत्वं लक्षणयाङ्गीक्रियते। तद्धि पुरुषप्रवर्त्तनाय विधिरपेक्षते।

यत्तु विधिः स्वयमेव समीहितसाधनतां बोधयन् अलमेवानपेक्षः प्रवर्त्तयितुमित्युक्तम्, तत्रोच्यते-सत्यं विधिरेव प्रधानं प्रवृत्तिकारणम्, तस्यैव त्वनुग्राहिका प्राशस्त्यावगतिः। फले हि निसर्गसुन्दरे स्वयमेव लिप्सा भवति, तत्साधने तु दुःखाकरे स्वतस्तावद् द्वेष एव, अवश्यं तु साधने प्रवर्त्तमानस्य तत्रैव रुच्या भवितव्यम्। हितसाधनतावगतिरपि तत्रैव रुचिं जनयन्ती प्रवृत्तिहेतुः स्यात् नान्यथा, सा च पुरुषेभ्यः प्रमादालस्या-

---

वादेन भवदुक्ताप्राशस्त्यबोधने पौनरुक्त्यप्रसंगाच्चेत्यलं विस्तरेण। नन्वन्वयानुपपत्तिरूपलक्षणाबीजविरहात्कथं प्राशस्त्यलक्षणेत्यत आह—स्वाध्यायेति। तथा च तात्पर्यानुपपत्त्या लक्षणेति भावः। लाक्षणिकार्थाङ्गीकारेऽदृष्टार्थकल्पनाप्रसंगं परिहरति—दृश्यत एवेति। प्राशस्त्यपरत्वमुपपादितं सोपपत्तिकमुपसंहरति—अतश्चेति। लक्षणया प्रयोजनभूतया। तात्पर्याल्लक्षणासिद्धेः, पदानुपस्थिते तात्पर्यग्रहासम्भवाच्छक्यादशक्योपस्थितिर्लक्षणाशब्देनाभिप्रेता। इत्थमर्थवादाकांक्षामुपपाद्याधुना विध्याकांक्षामुपपादयितुमाह—तद्धीति। प्रधानमित्यनेन तुल्यकक्षानपेक्षत्वमतुल्यकक्षानुग्राहकसापेक्षत्वञ्च सूचितम्। तदुक्तम्—

'न हि तत्करणं लोके वेदे वा किञ्चिदीदृशम्।
इतिकर्तव्यतासाध्यं यस्य नानुग्रहार्थिता'॥ इति॥

ननु प्राशस्त्यबोधं विनैव विधिना समीहितसाधनताबोधरूपकार्यजननात्कथं तस्य विध्यनुग्राहकतेत्याशङ्क्य समीहितसाधनताबोधद्वारेण साधने उत्कटचिकीर्षोत्पादने प्राशस्त्यबोधोपयोगात्तस्य विध्यनुग्राहकत्वमिति प्रतिपादयति—फले हीत्यादिना। स्वयमेव विध्यर्थवादाभ्यां विनैव। स्वतः स्वरूपतः। तावत् विध्यालोचनात्पूर्वम्। ननु मास्तु साधनगोचरोत्कटेच्छा, फलगोचरैव सा प्रवृत्तिं जनयिष्यतीत्यतो न प्राशस्त्यबोधोपयोग इत्यत आह—अवश्यन्त्विति। इच्छाप्रवृत्त्योस्समानविषयत्वेन कार्यकारणभावात्। तत्फलगोचरेच्छात्वापेक्षया तद्गोचरेच्छात्वस्य कारणतावच्छेदकत्वे लाघवादिति भावः। ननु फलेच्छाजन्यमिष्टसाधनताज्ञानमेव प्रवृत्तिहेतुरस्तु, किं साधनगोचरेच्छयेत्यत आह—हितेति। रुचिं जनयन्त्येवेत्येवकारान्वयः, नान्यथा रुचिमजनयन्ती एकफलसाधनेषु बहुष्वेकतरगोचरचिकीर्षोत्कर्षेण तद्गोचरप्रवृत्त्युपधानदर्शनादिति भावः। ननु केषाञ्चित्पुरुषाणां प्राशस्त्यज्ञानाभावेऽपि प्रवृत्तिदर्शनेन व्यभिचारान्न तदपेक्षा युक्तेत्यत आह—सा चेति। तथा च पुरुषविशेषाय प्रवृत्तौ तदपेक्षा दुर्निवारेति भावः। आदिपदेन नास्तिक्यादिपरिग्रहः। दुःखात्मकं दुःखानुबन्धि। प्राशस्त्यज्ञानस्य रुचिजनने विध्यनुग्राहकता सर्वानुभव-

दियुक्तेभ्यः कर्म दुःखात्मकं रोचयन्ती गुणकथनमपेक्षते। अवगतसमीहितसाधनभावमपि कर्मारुचिगोचरं सत् सतामसतां वा गुणानां कीर्त्तनादेव रोचतेतरामिति सार्वजनीनमेतत्। तदेवं विधीनामध्ययनविधिवशेनैव दृष्टे पुरुषप्रवर्त्तने प्रवर्त्तमानानां रुचिकरप्राशस्त्यापेक्षत्वादर्थवादानाञ्च तद्वशेनैव प्रयोजनमपेक्षमाणानां मिथो नियम इति विधिना

---

सिद्धेत्याह—अवगतेति। सतां क्षेपिष्ठत्वादीनाम्। असतां वपोत्खननादीनाम्। कीर्तनादित्यनन्तरं प्राशस्त्यावगत्येति शेषः। 'असत्यं नामैतत्किमप्यन्यदवाप्स्यामि'इति वार्तिकोक्तेः (तं०वा० १२५ पू० सं०) प्राशस्त्यलक्षणा। असत्यस्यापि च रज्जुसर्पादिज्ञानात्सत्यस्य भयादेर्दर्शनादिहापि वपोत्खननादेरसत्यत्वेऽपि न सत्यप्रवृत्त्यादिविरोधः। अरुचिगोचर इति पाठे रुचिरुत्कटेच्छा, तरप् वीर्यवत्तरमितिवत्स्वार्थे। रुचिगोचर इति पाठे तु रुचिरिच्छामात्रम्। तरप्चातिशयार्थ इति। उभयाकांक्षयोपपादितमेकवाक्यत्वमुपसंहरति—तदेवमिति। विधीनामर्थवादानाञ्च मिथो नियम इत्यन्वयः। नियमश्च विधयः प्रवर्त्तनेऽर्थवादावगतप्राशस्त्यानुगृहीता एव। अर्थवादाश्च प्राशस्त्यरूपदृष्टद्वारेण विध्यनुग्राहका एवेत्येवंरूपाः। तत्र विध्यंशे प्राशस्त्यापेक्षत्वादिति हेतुः, अर्थवादांशे प्रयोजनमपेक्षमाणानामिति हेतुगर्भविशेषणेन प्रयोजनापेक्षत्वम्। प्राशस्त्यापेक्षत्वरूपे च हेतौ अध्ययनस्य स्वाध्यायविधिवशेनैवेत्यादिना हेतुगर्भविशेषणेन प्रवर्तनार्थत्वं हेतुरुक्तः। तस्यायमर्थः—अध्ययनविधिनाध्ययनस्य स्वाध्यायावाप्तिद्वारा दृष्टप्रणाड्या पुरुषार्थपर्यवसानावगतौ विध्यादिरूपस्वाध्यायभागशक्त्यालोचनया विशेषतः पर्यवसानदशायां विध्यंशे तावदेवं पर्यवसानम्—अधीतविधयः पुरुषाः प्रवृत्तिं भावयेयुरिति। प्रवृत्तिफला च भावना प्रवर्तना। सैव च शब्दभावना विध्यादिपर्यायात्र विधीयते। तस्याश्च भाव्याकाङ्क्षायां योग्यतया पुरुषप्रवृत्तिरेव भाव्यतया सम्बध्यते। केनेति च करणाकाङ्क्षायामंशत्रयविशिष्टभावनाविषयप्रवर्तनाज्ञानं करणतया यागादिवत्, प्रवृत्तिरूपफलोद्देशप्रवृत्तशब्दरूपकर्तृव्यापारजन्यत्वात् समीहितसाधनताक्षेपश्च तस्यावान्तरव्यापारोऽपूर्ववत्। ततः कथमितीतिकर्तव्यताकाङ्क्षायां स्वरूपसम्पादिका पदपदार्थसम्बन्धज्ञानादिरूपा फलोपधानसम्पादिका प्राशस्त्यावगतिरिति कर्तव्यतात्वेनान्वेतीति। यजेतेत्यादिषु तु नार्थवादप्रतिपादितं प्राशस्त्यमितिकर्तव्यतात्वेनान्वीयते, तत्रार्थभावनावत्प्रवर्तनायाः कर्तव्यत्वेनाप्रतीतेः। कर्तव्यत्वसामान्यावगतौ हि तद्विशेषरूपेतिकर्तव्यताकाङ्क्षायां तत्त्वेन प्रयाजादिवदन्वयो भवेत्। न चासावस्ति। प्रवर्तनाविषयकप्रवर्तनान्तराप्रतीतेः। अध्ययनविधावेव त्वर्थात्प्रवर्तनायाः कर्तव्यताबोधः। प्रतिविधि त्वनुष्ठानावस्था। करणेतिकर्तव्यतासम्पादनमेव हि भावनानुष्ठानं नाम। तत्तद्विध्यर्थनिरूपणवेलायाञ्च विधिभिर्विशिष्टभावनाविषयकप्रवर्तनाज्ञानरूपं करणं जन्यते। अर्थवादैश्च प्राशस्त्यज्ञानमङ्गं जन्यते। यथा अर्थभावनाकरणं यागादि यजमानेन, अङ्गानि चाध्वर्य्वादिभिः। तस्मात् ज्ञानप्राशस्त्यस्यार्थभावनायां कारकहेतुत्वेन प्रशस्तत्वात्कर्तव्येत्येवान्वयो युक्त इति बोध्यम्। ननु 'विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्' इत्याद्यनुशासनात् निकृष्टप्रेरणादिरूपपुरुषाशयविशेषाणामेव लिङ्वाच्यप्रवर्तनारूपत्वमवगतम्। एवं चैत्र गामभ्याजेत्यादि प्रयोजकवृद्धवाक्येऽपि व्युत्पन्नैस्तद्गताशयविशेषस्यैव तथात्वमवधारितम्। एवमहमेनं प्रवर्तयामि

आचार्यो मां प्रवर्तयतीत्याद्यनुभवादपि तथा। तत्कथं वेदेऽपौरुषेये प्रवर्तनायास्सम्भव इति चेदुच्यते—अस्ति तावद्गामानयेत्यादिलौकिकवाक्यश्रवणानन्तरमिव 'यजेत स्वर्गकामः' इत्यादिलिङादियुक्तवैदिकवाक्यश्रवणोत्तरं व्युत्पन्नस्य प्रवृत्तिः, आचार्यो मां प्रवर्तयतीतिवत् वेदो मां प्रवर्तयतीत्यनुभवश्च। अतस्तादृशप्रवृत्तिं प्रति प्रवर्तनाज्ञानस्य हेतुता तावदनुमीयते—इयं प्रवृत्तिः प्रवर्तनाज्ञानजन्या परप्रेरणाजन्यप्रवृत्तित्वात् बालरोदनजन्यस्तनदानविषयकमातृप्रवृत्तिवदिति। प्रवर्तनाज्ञाने चावापोद्वापाभ्यां लिङादीनां शक्तिः कल्प्यते। सा च विध्यादिसकलसाधारणप्रवर्त्तनात्वेनैकैव, न तु प्रातिस्विकरूपेण नाना, गौरवात्। अनुशासनन्तु प्रवर्तनाविशेषाणां प्रपञ्चनमात्रार्थमिति न विरोधः। प्रवर्तनात्वञ्च प्रवृत्त्यनुकूलव्यापारत्वम्। स च व्यापारो वेदे पुरुषाशयादेरसम्भवाल्लिङ्निष्ठ एव कश्चिदित्यवधार्यते। तस्य प्रवर्तकनिष्ठनियमात् प्रवर्तकान्तरस्य च तत्रानुपस्थितेः। ततश्च कोऽसावित्यपेक्षायामक्लृप्तधर्म्यन्तरकल्पने तत्स्वरूपतद्गतप्रवृत्तिहेतुत्वलिङ्पदनिष्ठत्वाद्यनन्तकल्पनागौरवादंशत्रयविशिष्टभावनाप्रतिपादनात्मकस्याभिधारूपलिङ्व्यापारस्य स्वरूपतः प्रवृत्तिहेतुत्वादिना च क्लृप्तस्य वेदे प्रवर्तनारूपत्वं निश्चीयते। न च तस्यार्थप्रतीतिरूपकार्यगम्यस्य शब्दवाच्यत्वे तद्विषयस्याप्यभिधान्तरस्य कल्पनायामनवस्थेति वाच्यम्, यतो न वयं स्वरूपेण तत्प्रतिपत्त्यर्थं लिङादिवाच्यतामाचक्ष्महे, अपितु लिङादिना प्रवर्तनासामान्येऽभिहिते निर्विशेषसामान्याभिधानायोगादुपदर्शितकल्पनालाघवेनाभिधाया एव तद्विशेषतोचितेति। तथा चोक्तं वार्तिककारैः 'अभिधाभावनामाहुरन्यामेव लिङादयः' इति। युक्तञ्चैतत्; शब्दस्य स्वार्थबोधनद्वारेणैव प्रवर्तकतया तज्जनकव्यापाररूपाया अभिधाया एव शब्दभावनौचित्यात्, तदतिरिक्तव्यापारकल्पने मानाभावात्। स च व्यापारः शब्दज्ञानं तज्जन्यसंस्कारो वेति स्पष्टमाकरे। यत्तु न्यायसुधाकारानुयायिभिः[1] कैश्चिदुक्तम्—अभिधायाः प्रवर्तनात्वेन लिङ्वाच्यत्वम् आहोस्विदिच्छा, मां प्रवर्तयतीत्यनुभवात्फलेच्छयाः पापेच्छाया वा प्रवर्तकत्वोपपत्तेः तद्धर्मस्येच्छात्वस्य वेति विनिगमनाविरहादतिरिक्तप्रेरणाख्यधर्मकल्पनैवोचितेति, तदसारम्; वेदे आचार्यस्थानीयतया विधिशब्दस्यैव प्रवर्तकताया विधिनाहं प्रेरित इति व्यवहारेणावगमात्तस्याश्च स्वनिष्ठप्रवर्तनाज्ञापनेनैव व्यवस्थितेः, अन्यथा देवदत्तस्त्वां प्रवर्तयतीति वादिनि यज्ञदत्तेऽपि प्रवर्तकत्वव्यवहारापत्तेः। न चेच्छात्वं शब्दनिष्ठमिति कथं तज्ज्ञापनेन विधेः प्रवर्तकत्वसम्भवः? न च लोके शब्दस्य वक्तृपरतन्त्रतया मुख्यं प्रवर्तकत्वम्, येनाचार्यादिगतप्रेरणाज्ञापनेन प्रवर्तकत्वादुक्तव्यवस्थाभङ्ग आशङ्क्येत, स्वनिष्ठप्रवर्तनाबोधकस्यैव प्राधान्येन प्रवर्तकव्यवहारविषयत्वात्। अत एव लोके आचार्यप्रेरितोऽहमित्येव प्रचुरव्यवहारः, वेदे तु विधिना प्रेरितोऽहमित्येव, स लोके शब्दादौ वेदे चेच्छादौ स्वातन्त्र्यविवक्षयौपचारिकः क्वाचित्क एव। किञ्चेच्छात्वस्यातिप्रसक्ततया प्रवर्तनारूपत्वोक्तिरसङ्गतैव। न चाभिधायामपि तुल्योऽयं दोष इति शङ्क्यम्। लिङादिनिष्ठायास्तस्या अतिरिक्ततया लडादिष्वप्रसक्तेः। तदित्थम् 'अभिधा भावनामाहुः' इति वार्तिकस्वरसानुगुणं परोक्तदूषणाभासनिराकरणपूर्वकं मतमुपदर्शितम्। वक्ष्यते च ग्रन्थकृतापि षष्ठाद्याधिकरणे 'एतदपि न तथा क्षोदक्षमम्' इति। ग्रन्थकृतैव न्यायरत्नमालायाम्

१. अनुसारिभिः क०

'इष्टसाधनत्वेन प्रवर्तनात्वेन विधिवाच्यमि'ति मण्डनमतमेवाङ्गीकृतम्। तथाहि—अर्थभावनाभिधायाः प्रवर्तनात्वेनाभिधाने निषेधवाक्यार्थासङ्गतिः। निषेधेषु हि प्रतिषेधस्य विधिर्विधेर्वा प्रतिषेध इति प्रकारद्वयमाकरे दर्शितम्। तत्राद्ये 'न हन्यात्' इत्यादौ रागप्राप्तां हननभावनामनूद्य नञ्समभिव्याहारगम्या प्रवर्तनाविरुद्धा निवर्तना प्रतिषेधरूपा लिङा बोध्यते—या हननभावना सा निवर्तनाविषय इति। तत्राभिधारूपप्रवर्तनाविरुद्धमनभिधानं निवर्तना स्यात्। न च तदस्ति उद्देश्याप्रतीतिप्रसङ्गात्। एवं द्वितीयपक्षे हननभावनाविषयिणी या प्रवर्तना सा नेति विधिमनूद्य तत्प्रतिषेधोऽप्यभिधायाः प्रवर्तनात्वे दुर्घटः, हननभावनाविषयिण्या अभिधारूपप्रवर्तनाया असत्त्वेन तदनुवादायोगात्, सत्वे वा तन्निषेधायोगात्। तस्मादिष्टसाधनतैव प्रवर्तना, तद्विरुद्धानिष्टसाधनता विधीयते, प्रवर्तनारूपेष्टसाधनता प्रतिषिध्यते वेत्येव रमणीयम्। अथासौ न शब्दनिष्ठा, न वा तज्जन्येति कथं शब्दभावनेति चेत्, अत्रोक्तं न्यायरत्नमालायाम् 'परसमवेतापि शब्देन पुरुषं प्रवर्तयता तत्सिद्धयेऽभिधीयमाना शब्दव्यापारत्वेनोच्यते' इति। अयमाशयः—अभिधीयमानेष्टसाधनता हि शब्दव्यापारः, तत्र विशेषणांशे शब्दजन्यतया विशिष्टे तज्जन्यत्वव्यवहारः। शब्दगतत्वमपि शब्देनाभिधीयमानतया कथञ्चिदारोपितम् 'अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया' (का० प्र० २. ३०) इतिवत्। यथाहि शक्यादशक्योपस्थितिरूपा लक्षणा शक्यव्यवहितलक्ष्यार्थगतापि आरोपितशब्दव्यापार इत्युच्यते तथेष्टसाधनतापीति। न चैवं शब्दस्य प्रवर्तकत्वानुपपत्तिः, तस्य स्वनिष्ठप्रवर्तनाज्ञापकत्वनियतत्वादिति वाच्यम्, शब्दस्य परनिष्ठप्रवर्तनाज्ञापकतयैव प्रवर्तकताया लोके क्लृप्ततया पुरुषनिष्ठप्रवर्तकत्वस्यैवातिप्रसङ्गवारणार्थं स्वनिष्ठप्रवर्तनाज्ञापकत्वनियतताकल्पनात्। न चैवं सति स्वरूपेणैवेष्टसाधनत्वं लोकवेदसाधारण्येन विधिवाच्यमस्तु, तथा च तार्किकमतानुप्रवेश इति चेन्न; अनुभवानुसारि पूर्वोक्तानुशासनविरोधात्। न हि यजेतेत्यस्मात् यागभावनेष्टसाधनमित्यस्माच्च तुल्यावगतिः, याग इष्टसाधनमतो यजेतेति सह प्रयोगाच्च। किञ्चास्मन्मते प्रवर्तनात्वस्य प्रवृत्तिनिमित्तत्वे लाघवम्, इच्छातद्विषययोरनिवेशात्। तस्मादिष्टसाधनतैवावश्यकत्वात्प्रवर्तनेति स्थितम्। तदुक्तं मण्डनेन—

'पुंसां नेष्टाभ्युपायत्वात्क्रियास्वन्यः प्रवर्तकः।
प्रवृत्तिहेतुं धर्मञ्च प्रवदन्ति प्रवर्तनाम्'॥ इति॥

गुरवस्त्वपूर्वस्य विध्यर्थतामाचक्षते। तथाहि-यद्यपि बालेन स्वप्रवृत्तौ कार्यताज्ञानस्य हेतुत्वावधारणाल्लिङादिश्रवणोत्तरप्रयोज्यवृद्धप्रवृत्तावपि स्वप्रवृत्तिदृष्टान्तेन कार्यताज्ञानरूपहेतुकल्पने सति सत्कारणजिज्ञासायामन्वयव्यतिरेकाभ्यां लिङादेस्तज्जनकत्वमवधारयता गवानयनादिक्रियाया एव कार्यतया शक्यत्वं लोकेऽवगतम्, तथापि वेदे षष्ठाद्याधिकरणन्यायेन कार्यं प्रति नियोज्यतया स्वर्गकामादेरन्वयोपगमात्कामिनि कार्यनियोज्यत्वस्य च स्वसम्बन्धितया कार्यत्वोद्भूत्वरूपस्य कामसाधने कार्येऽसम्भवात् क्रियायाश्च नश्वरतया कामसाधनत्वायोगादगत्या तदन्वययोग्यं स्थायि कार्यं लिङ्वाच्यत्वेन कल्पनीयम्। तच्च प्रमाणान्तरागोचरतयापूर्वमिति स्वस्मिन् पुरुषं नियुञ्जानं नियोग इति वाख्यायते। एवञ्च प्रबलवेदप्रमाणवशेनापूर्वस्यावब-

सहैककार्यकरत्वात्तद्वदेवार्थवादानामपि सिद्धं प्रामाण्यम्। एवं मन्त्राणामपि स्वाध्याय-विधिवशादेव प्रयोजनवत्त्वावगमाद्विधिस्तुत्योश्च द्वितीयेऽध्याये निराकरणात् प्रकरणा-दिवशेन प्रधानाङ्गभूतानां दृष्टमदृष्टं वा प्रयोजनं कल्प्यत इति नाप्रामाण्यम्। नन्वेव-मप्यङ्गत्वे प्रयोजनं लभ्यते न तु प्रामाण्यम्। नैष दोषः; पदार्थानां वाक्यार्थे प्रामाण्या-

---

धारितायां लोके क्रियायां प्रयोगो गौणो न मुख्यः, 'अन्यायश्चानेकार्थत्वम्' इति न्यायात्। एवञ्च नैमित्तिकादावसत्यपि फलेऽपूर्वमेव वाक्यार्थ इति। तदेतदसारम्; लौकिकव्युत्पत्त्यनुसारेण कार्य-त्वेनावगतायाः क्रियाया एवापूर्वद्वारेण कामसाधनत्वोपपत्त्या तत्रैव नियोज्यत्वेन कामिनोऽन्वय-सम्भवेनापूर्वस्य लिङ्वाच्यतायां मानाभावात्। अन्यद्वारेणान्यस्य न साधनत्वमिति तु बाल-सम्मोहनम्, काष्ठादीनां पाकादिसाधनतायास्सर्वलोकप्रसिद्धाया अपन्होतुमशक्यत्वादित्यलं विस्तरेण। नन्वेवमर्थवादानां प्राशस्त्यज्ञापकत्वेऽपि कथं धर्मप्रमाकरणत्वमित्यत आह—विधिना सहेति। एकं कार्यं विशिष्टभावनारूपधर्मप्रमाख्यं यद्विधिना क्रियते तत्रैव प्राशस्त्यरूपविशेषण-प्रतिपादनद्वारा द्रव्यदेवतादिपदवदर्थवादानामपि करणतेत्यर्थः। एकेत्यस्य सावधारणतया एकमात्रकार्यकरत्वादित्यर्थादङ्गवाक्यवत्स्वार्थबोधपर्यवसानाभावेन पदैकवाक्यता दर्शिता। अत एवाह भाष्यकारः 'पदानां साकाङ्क्षत्वाद्विधेः स्तुतेश्चैकवाक्यत्वम्' (शा० भा० पृ० ३०) इति। 'स एष वाक्यैकदेशस्याक्षेपः' इति च। सिद्धान्तसूत्रञ्च विशेषविचार इत्थं योजितं भवति—स्तुतिरूपेणार्थेन प्रतिपाद्येन विधिना सहैकवाक्यत्वाद्विधीनां कार्यकारिणोऽर्थवादास्स्युरिति। विधिस्तुतिपदे चात्र निषेधनिन्दे उपलक्षयतः। मन्त्रेष्वपि सामान्यविचारसिद्धान्तलभ्यं वक्ष्यमाण-विशेषविचारसिद्धान्तं संक्षिप्य दर्शयति—एवमिति। विधिस्तुत्योश्चेत्यनन्तरं प्रयोजनयोरिति शेषः। 'विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात्' इत्यधिकरणे विधिशक्तिविघातकयच्छब्दाद्युपबन्धेन विध्येकवाक्यत्वाभावेन च तयोर्निराकरणम्। प्रकरणम्—उभयाकाङ्क्षा। आदिना विकृतौ सन्निधेः परिग्रहः। प्रधानाङ्गभूतानामिति। अर्थस्य मानान्तरलभ्यतया मन्त्रस्वरूपमेव पाठोपस्थितं प्रयोगविधिनाङ्गत्वेन विधीयत इति भावः। दृष्टमर्थप्रकाशनादि। अदृष्टन्तु स्तोभाधिरूढानां प्रजापतिहृदयाख्यसाममन्त्राणाम्। अथवोभयथापि प्रामाण्यसिद्धेरनास्थयैव-मुक्तिः। सिद्धं प्रामाण्यमिति वक्तव्येऽनधिगतार्थपरत्वाभावेनाप्रामाण्यशङ्कोत्कण्ठ्यात्तन्निरासाय नाप्रामाण्यमित्युपसंहृतम्। तामेव शङ्कां दर्शयति—नन्वेवमिति। पदार्थानामिति। अयमाशयः—पदज्ञानोत्तरं पदार्थप्रतीतावन्वयबोध इत्यविवादम्। ततश्चाव्यवधानाज्ज्ञायमानानां पदार्थानामेवान्वयबोधकरणता युक्ता, न तु व्यवहितानामर्थबोधोपक्षीणानां पदानाम्। न चैषां पुनरनुसन्धानकल्पने प्रमाणमस्ति। न च व्यवहितानामप्यर्थप्रतीतिरूपव्यापारद्वारेण करणतेति युक्तम्, प्रमाणेन करणत्वसिद्धौ व्यापारकल्पनात्। न चात्र तत्सिद्धिर्व्यवधानादित्युक्तम्। तस्माद् दृष्टानुगुण्यात्पदार्थानामेव करणत्वम्। नन्वेवं पदानामभिधायकत्वानापत्तिः, पदार्थावगतेः स्मृतिरूपत्वात्। अत एवोक्तं वार्तिककृता—'पदमभ्यधिकाभावात्स्मारकान्न विशिष्यते' इतीति चेत् मैवम्; सम्बन्धं विना स्मारकत्वासम्भवेन पदानां पदार्थाभिधायकत्वस्यैवाश्रयणीयत्वात्।

भ्युपगमात्। उक्तं हि 'पदार्थास्तत्स्मृतिर्वा स्या'दिति। तेन मन्त्रविशिष्टमर्थं बोधयतः प्रधानवाक्यस्यार्थे मन्त्राणामपि प्रामाण्यं संभवति। तेन मन्त्राणामपि प्रयोजनवत्त्वात्प्रामाण्यमस्तीत्येतावत्सिद्धम्। प्रयोजनविशेषस्तु प्रस्तुतमर्थवादाधिकरणं परिसमाप्य पश्चाद्वक्ष्यते। तथा नामधेयस्यापीति सिद्धं सकलस्य वेदस्य प्रामाण्यम्॥

इत्यर्थवादाधिकरणम्॥ १॥

●

---

न च वाचकत्वमेव सम्बन्ध इति वाच्यम्, तस्याभिधायकत्वानतिरिक्तत्वात्। न चाभिधायकत्वमपि कथं सम्बन्धं विनेति शङ्क्यम्, अनन्यगत्या तस्य स्वाभाविकशक्त्यधीनताकल्पनात्। अथाक्लृप्तकल्पनासाम्ये स्मारकत्वमपि स्वभावादेव कुतो नेष्यत इति चेन्न, स्मारकत्वकल्पने शब्दश्रवणानन्तरं संस्कारोद्बोधस्ततोऽर्थस्मृतिरिति प्रणाडीकल्पने गौरवात्। पदज्ञानानन्तरमेवार्थप्रत्ययदर्शनेनाभिधायकत्वस्यैव कल्पयितुमुचितत्वात्, अर्थप्रतीतौ पूर्वानुभूतत्वानुल्लेखाच्च। वार्तिकमपि न पदस्य स्मारकतामाह, अपितु स्मारकान्न विशिष्यत इत्युक्त्या गृहीतग्राहितया तत्सदृशतामिति न विरोधः। अत एव सूत्रकारोऽपि 'उत्पत्तौ वावचनास्स्युरर्थस्य तन्निमित्तत्वात्' (जै० सू० १-१-२४) इति सूत्रयन्नर्थस्यैवान्वयबोधनिमित्ततां दर्शयति। तस्मात्पदैः पदार्थाभिधानम्, अभिहितैश्च तैरन्वयबोध इति सुस्थम्। अत्र वर्तिकसम्मतिमाह - उक्तं हीति। 'प्रमाणञ्चाथशब्दो वा तज्ज्ञानं वा निरूप्यते' इति पूर्वार्धगतं प्रमाणमिति पदं 'तत्स्मृतिर्वा' इत्यनन्तरमनुषज्यते। सामान्यत उक्तमर्थं प्रकृते योजयति—तेनेति। उक्ताभ्युपगमेनेत्यर्थः। अर्थं प्रधानं भावनारूपम्। प्रधानवाक्यस्य साङ्गप्रधानभावनाकर्तव्यताबोधकप्रयोगविधिवाक्यस्य। नन्वेवं व्रीह्यादिवत्पदार्थत्वेन प्रामाण्येऽपि अभिधायकत्वेन शब्दविधया न मन्त्राणां तत्सिद्धमिति चेत्, किञ्चातः? न ह्यध्ययनविधिरेतावत्पर्यन्तं बोधयति विद्वद्वाक्यादिष्विव प्रयोजनवदर्थज्ञापकतामात्रेण तदुपपत्तेः। किमर्थं तर्हि पदार्थत्वेनापि प्रामाण्यसाधनमिति चेत्, समस्तो वेदो धर्मे प्रमाणमिति मीमांसकप्रसिद्धिसंरक्षणायेति गृहाण। इदञ्चानागतावेक्षणन्यायेन पर्यवसानगत्योक्तम्। इह तु सम्मुग्धाकारेण सामान्यतः प्रयोजनसम्भवमात्रेण सामान्यसिद्धान्तसिद्धिरित्युपसंहरति—तेनेति। स्वाध्यायविधिवशेनेत्यर्थः। नन्वर्थवादवद्विशेषविचारोऽनन्तरमेव कुतो न कृतस्तत्राह—प्रयोजनविशेषस्त्विति। अर्थवादा अधिक्रियन्ते विचार्यतयात्रेत्यधिकरणं प्रकरणम्। उक्तन्यायं नामधेयेऽप्यतिदिशति—तथेति। प्रयोजनवत्वात्प्रामाण्यमित्यर्थः। प्रयोजनन्त्वर्थवादप्रामाण्यसाधनस्य सन्दिग्धार्थनिर्णयप्रतिष्ठाफलादिसिद्धिरूपमनुसन्धेयम्। सूत्रन्तु ग्रन्थव्याख्यावसर एव व्याख्यातमिति शिवम्॥

इत्यर्थवादाधिकरणम्॥१॥

●

## २

**सू० विधिर्वा०** पूर्वोक्ताक्षेपेण त्विदमारभ्यते। यदुक्तमानर्थक्यमर्थवादानामिति तद् गृह्णीमः। स्तुत्यर्थत्वन्तु केषुचिन्न मृष्यामहे। यथा "औदुम्बरो यूपो भवत्यूर्ग्वा उदुम्बर ऊर्क् पशव ऊर्जैवास्मा ऊर्जं पशूनाप्नोत्यूर्जोऽवरुध्यै" इत्येवमादिषु विधिसंभवादित्येवमाक्षिप्यते। अत्रैवं विचार्यते-किमौदुम्बरो यूपो भवतीत्यौदुम्बरताया: "ऊर्जोऽवरुध्या" इति फलम् ? उत सर्वोऽयमर्थवादः ? तदर्थं च किमेवञ्जातीयकेन विधिविभक्तिरहितेन साधनत्वमौदुम्बरतादीनां शक्यते प्रतिपादयितुं न वेति। तत्र पूर्वः पक्षः—ऊर्जं पशूनाप्नोत्यूर्जोऽवरुध्या इत्यनेन पशूनां साध्यत्वं गम्यते श्रुत्या, लक्षणया हि प्राशस्त्यम्। फलविधौ चार्थवत्त्वम् आनर्थक्यमर्थवादत्वे। साध्यस्य च साधनापेक्षत्वात्तत्सन्निधावुच्चरितमौदुम्ब-

---

विधिर्वा०। पूर्वाधिकरणसूत्रसङ्गतिमाह—पूर्वोक्तेति। सामान्यविशेषरूपयोरर्थवत्वस्तावकत्वसिद्धान्तयोर्मध्ये कस्याक्षेपस्तत्राह—यदुक्तमिति। यथेत्युपन्यासार्थकम्। "सोमापौष्णं त्रैतमालभेत पशुकामः" इति वाक्येन सोमपूषोभयदैवत्यः त्रिषु स्थानेषु शुक्लवर्णपशुद्रव्यको यागो विहितः। तत्राग्नीषोमीयपशुरूपप्रकृतितः प्राप्तस्य खादिरत्वादेर्बाधेनौदुम्बरकाष्ठप्रकृतिकत्वं विशेषत· "औदुम्बरो यूपो भवति" इत्यनेन विधीयते। तच्छेषः "ऊर्ग्वा" इत्यादिरर्थवाद इहोदाहरणम्। विधिवाक्योपन्यासस्तु फलविधित्वार्थवादत्वयोः प्रतिसम्बन्धिसमर्पणार्थम्। अर्थवादस्य चायमर्थः—उदुम्बर ऊर्क् सारभूतोऽन्नरसोऽमृताख्यः फलद्वारेण। पशवोऽप्यूर्क् मांसक्षीरादिद्वारा। औदुम्बरे यूपे पशोर्नियोक्ताध्वर्युरुदुम्बररूपयोर्जा कृत्वा ऊर्ग्रूपान् पशूनस्मै यजमानाय तदर्थमाप्नोति। अतो यूपस्यौदुम्बरत्वं पशुरूपोर्क्सम्पादनाय भवतीति। आदिपदेन सम्भवद्विध्यन्तेनैकवाक्यताकः "यजमानः प्रस्तरः" "यो विदग्धस्स नैर्ऋतः" "इति ह स्माह वट्कुर्वार्ष्णिर्माषान्मे पचत" इत्यादयो द्रव्यगुणक्रियाविधिसरूपा गृह्यन्ते। तेषामेतदधिकरणनिरस्तविधिकत्वेन वार्तिककृताभिधानात्। तद्विषयाधिकणान्तरागाञ्च कृत्वाचिन्तात्वेन पौनरुक्त्यनिरासात्। विधिश्चेहाज्ञातज्ञापनम्, न तु प्रवर्तना, फले द्रव्ये च तदसम्भवात् तदनुपयोगेनैव पूर्वपक्षाभिधानाच्च। इत्यौदुम्बरताया अनेन ज्ञापिताया इति फलं प्रतिपादयतीति शेषः। "ऊर्ग्वा" इत्यादि तूपपादकतया तच्छेषभूतमित्याशयः। सर्वं इति। एतेन च विध्युन्नयनाय स्तुत्यपेक्षायामपि 'आप्नोति' इत्यन्तेन सा क्रियतामिति शङ्का निरस्ता। उपपाद्योपपादकभावेन सर्वस्यैकार्थत्वावगमेन वाक्यभेदायोगादिति। अत एवात्रैवाधिकरणे सूत्रम्—'विधौ च वाक्यभेदस्स्यात्' इति। तदर्थञ्चेति। एवञ्च विधिविचारात्मकतयैतदधिकरणं पूर्वपाद एव सङ्गतं न त्वत्रेति न शङ्कनीयम्। प्रयोजकाप्रयोजकविचारशेषतयाङ्गाङ्गिभावविचारस्य चतुर्थाध्यय इवात्राप्यर्थवादविचारशेषत्वेन विधिविचारस्य सङ्गतत्वादिति। एवञ्जातीयकेनेत्यस्य विवरणम् विधिविभक्तिरहितेनेति। तद्राहित्यञ्च-तत्त्वानिश्चयः। साधनत्वमित्यस्य समभिव्याहृतफलविशेषं प्रतीत्यादिः पूरणीयः। श्रुत्येति। द्वितीयाचतुर्थीरूपशक्तशब्देनेत्यर्थः। हिस्त्वर्थे। अर्थवत्वमिति। मतुप्प्राशस्त्ये।

रत्वमसत्यपि विधौ साधनत्वेनावगम्यते। साधनत्वावगमादेव च प्रवृत्तिसिद्धेर्नार्थो विधिनेति।

सिद्धान्तस्तु—विधावसति भावनाया औदुम्बरताभवनाक्षिप्तायाः सैव भाव्या स्यान्न फलम्। संनिहिता च सा, विप्रकृष्टं तु फलम्। अतो न फलसंबन्धः। तेन यद्यपि तावदूर्जं पशूनाप्नोत्यूर्जोऽवरुध्या इत्यनेन फलमभिधातुं शक्यते, तथाप्यविहितस्यौदुम्बरत्वस्य फलवचनमनर्थकमित्यर्थवादत एवात्र विधिरुन्नेतव्यः। न च स्तुतित्वेन विधिशक्तिमुपजनय्य पुनस्तेनैव फलकल्पना संभवति, वाक्यभेदप्रसङ्गात्। तस्मादर्थवादः। न चैवंविधेन कामशब्दरहितेन शक्यते फलं प्रतिपादयितुमिति पर्णमय्यधिकरणे वक्ष्यामः। अत्र तु साधनांशविचारमुखेनार्थवादत्वमुक्तम्, तत्र तु साध्यांशविचार इत्यपौ-

---

आनर्थक्यमित्यप्राशस्त्ये नञ्। औदुम्बरताभवनाक्षिप्ताया इति। साध्यसाधनरूपकारकसमन्वन्वस्य क्रियान्वयपूर्वकस्य तदश्रवणादसम्भवः। भवनाक्षिप्तभावनायान्त्वौदुम्बरत्वस्य कर्मत्वेनैवान्वयो न तु करणत्वेन, 'भवत्यर्थस्य कर्ता च करोतेः कर्म जायते' इति न्यायादिति भावः। सैवेत्येवकारेण फलसमुच्चयव्यावृत्तिः। विनिगमनाभावमाशङ्क्याह—सन्निहिता चेति। स्ववाक्योपात्तत्वादिति भावः। यद्यपि तावदित्यभ्युपगमवादत्वसूचनम्। औदुम्बरत्वस्य तद्भावनायाः। अनर्थकमिति। विध्यन्वितभावनाया हि पुरुषार्थभाव्यकत्वनियमात्सन्निहितत्यागेन विप्रकृष्टमपि पुरुषार्थरूपमेव भाव्यमाश्रित्य सन्निहिते करणांशे निवेश्यते। विध्यभावे तु सन्निहितभाव्यत्यागहेत्वभावाद्भाव्यस्य च भाव्यापेक्षाया अभावादनर्थकं तत्प्रतिपादनमित्याशयः। अर्थवादत इति। तस्याध्ययनविधिना विध्यपेक्षितस्तुतिपरत्वबोधनादिति भावः। उन्नयनञ्च प्रत्ययस्य पञ्चमलकारत्वकल्पनेन प्रथमान्तयोश्च द्वितीयान्ततया विपरिणामेन। भवतीत्यस्यैव भावयितव्य इति विपरिणामेन। वा। न चार्थवादत्वस्य विध्येकवाक्यतानिर्णयाधीनत्वादन्योन्याश्रयः, विधिसम्भावनामात्रेण सदसदाचारध्यानोपस्थितस्तुतिपरत्वग्रहसम्भवात्। ततो विधिकल्पनस्य निष्प्रत्यूहत्वात्। यद्यपि "कपिञ्जलानालभते" इत्यादावप्राप्तार्थकत्वेनैव विधिरुन्नीतः, तथाप्यर्थवादसत्त्वे तेनैवोन्नयनं युक्तम्। प्राप्त्यप्राप्तितद्धेतुविचारनिरपेक्षत्वेन शीघ्रत्वात्। अत एव प्रायशः सर्वत्रार्थवादेनैवविध्युन्नयनं व्यवह्रियत इति बोध्यम्। स्तुतित्वेनेति। करणव्युत्पत्त्यास्तावकत्वेनेत्यर्थः। विधिर्विधानम्, तच्छक्त्युपजननञ्च पञ्चमलकारत्वादिकल्पनमेव। फलकल्पना फलत्वेन पश्वादेर्बोधनम्। वाक्यभेदः वाक्यावृत्तिः, सकृदुच्चरित इत्यादि न्यायात्। आवृत्तिं विना स्तुतिफलत्वोभयबोधनायोगात्। पूर्वोदाहृतञ्च सूत्रं योज्यम्। सूचितमभ्युपेत्यवादत्वं प्रकटयति—न चैवंविधेनेति। विधिरहितेन क्रतूपकारनिराकाङ्क्षेण चेत्यर्थः। एवञ्च "पूत एव स तेजस्वी" इत्यादेर्जातेष्टिफलपरत्वोपपत्तिः। तत्र "वैश्वानरं द्वादशकपालं निर्वपेत्" इति विधिश्रवणादिति भावः। कथं तर्हि 'सर्वेभ्यो ज्योतिष्टमः'इत्यादेः फलपरत्वम्? तत्राह—कामशब्देति। तत्र तु "एकैकस्मै वा अन्ये यज्ञक्रतवः कामायाह्रियन्ते" इति पूर्ववाक्यस्थकामशब्दस्य बहुवचनान्ततया विपरिणतस्यानुषंगोऽस्तीति भावः। न च द्वितीया-

नरुक्त्यम् । अथवा साध्यांशेऽप्यत्रैव विचारिते रात्रिसत्रन्यायेन फलपरत्वमेवापापश्लोकश्रवणादीनामाशङ्क्य निराकरिष्यते चतुर्थे । न चौदुम्बरतायाः फले विधीयमानायाः प्रकरणादाश्रयो लभ्यते । तत्रास्मादेव वाक्यादाश्रयकल्पनायां वाक्यभेदः । पशुयागो हि प्रकृतः, स तावदयोग्यः । यत्र हि गुणः कारकतामापद्यते स आश्रयः, यथा होमो दध्नः । न चौदुम्बरता शक्नोति यागे कारकीभवितुम् । तदाश्रयत्वे च यूपग्रहणानर्थक्यम्, अनुवादासम्भवात् । यत्तु पशुनियोजनं यूपद्वारेण योग्यम्, तदपि सह यूपेनैवाप्रकृतम् । न च प्रकृतिवच्छब्देन तस्य संनिधिसम्भवः, स हि प्राकृतमित्थंभावं सामान्येन संनिधापयति ।

---

चतुर्थीभ्यां कुतो न फलप्रतीतिरिति वाच्यम्, तादर्थ्यचतुर्थ्या देवाय पुष्पमित्यादिवत्प्रकृत्यर्थस्य प्राधान्यावगमेऽपि फलत्वानवगमात् "यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्" इत्यादिवच्चागतिकत्वाभावात् । द्वितीयया कथञ्चित्तदवगमेऽपि "आप्नोति" इति वर्तमानबाधेन भविष्यदर्थकल्पनां विना तदयोगात्, तस्याश्च क्रत्वर्थतया नैराकाङ्क्ष्येणासम्भवात् । अत एव पर्णमय्यधिकरणे सूत्रम् 'द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादस्स्यात्' इति । नन्वेवं तर्हि तेन पौनरुक्त्यमत आह—अत्रेति । तथा च व्युत्पाद्यांशभेदादपौनरुक्त्यमिति भावः । न चैकनिराकरणमात्रेणेतरनिराकरणसिद्धिः, एकसिद्धौ तद्बलेनैवेतरसिद्धेरिति । नन्वेवं तर्हि उभयनिराकरणं विनार्थवादत्वासिद्धेरधिकरणभेदानुपपत्तेः 'विधौच वाक्यभेदस्स्यात्' इति सूत्रेणात्रापि फलविधिनिराकरणाच्च नायं समाधिरित्यत आह—अथवेति । अपापश्लोकश्रवणादीनामितिशब्दपरो निर्देशः । सत्रोक्तवाक्यभेदं प्रकारान्तरेण व्याख्यातुं दूषणान्तरमाह—न चेति । आश्रयः साध्यरूपस्सम्बन्धी । केवलौदुम्बरतायाः फलजनकत्वेऽनुष्ठेयाभावेन पुरुषं प्रत्युपदेशानर्थक्यापत्तेः । वाक्यभेद इति । यूपसम्बन्ध्यौदुम्बरत्वं फलसम्बन्धि चेति सम्बन्धद्वयस्यैकेन वाक्येन विधानायोगादिति भावः । ननु यथा "दध्नेन्द्रियकामस्य" इत्यादौ सन्निधिप्रमाणेन दधिहोमयोराश्रयाश्रयिभावो वाक्येन च फलसम्बन्धस्तथेहापीति न वाक्यभेद इत्यत आह—पशुयागो हीति । प्रकृतः सन्निहितः । अयोग्य इत्यस्याश्रयीभवितुमित्यदिः । कुतस्तत्राह—यत्र हीति । गुण इत्यस्य फले विधीयमान इत्यादिः । अन्यथा धात्वर्थमात्रस्य द्रव्यादिरूपसिद्धस्वभावगुणसाध्यतया तत्राश्रयत्वव्यवहारापत्तेः । कारकतामिति प्रायिकम्, सम्बन्धितामित्येव युक्तम् । अन्यथा "यः कामयेतोत्तरोत्तरं वसीयान्स्यामिति तस्याग्नये पवमानाय निरुप्य पावकशुचिभ्यामुत्तरे हविषी समानबर्हिषी निर्वपेत्" इति विहितस्य प्रयोगभेदरूपगुणस्य यागाकारकतया तस्याश्रयत्वानुपपत्तेः । उक्तयोग्यत्वं विवृणोति—न चेति । जातेरमूर्ततया यागसाधनकाष्ठपरिच्छेदद्वारा यागकारकत्वं वाच्यम् । न च पशुयागे तत्सम्भवतीत्याशयः । एतदभिप्रायेणैव पूर्वं पशुयागो हीत्युक्तम् ननु काम्यौदुम्बरता नित्यपशुबाधेन प्रदेयकाष्ठपरिच्छेदद्वारा यागे कारकीभवत्वत आह—तदाश्रयत्वेचेति । यूपेन सहैवेत्येवकारो भिन्नक्रमः । अप्रकृतम् उपदेशतोऽनुपस्थितम् । प्रकृतिवच्छब्देन अग्नीषोमीयपशुंवत्कुर्यादित्यतिदेशवाक्येन । इत्थम्भावम् इतिकर्तव्यताम् । सामान्येन प्रकृति-

तत्र न यूपस्य स्वरूपेण विपरिवृत्तिरस्ति, अविपरिवर्त्तमानं च न शक्नोत्याश्रयाकाङ्क्षां पूरयितुम्। तादृशी च विपरिवृत्तिर्जुह्वादीनामप्यस्तीति तेषामप्याश्रयत्वं स्यात्। तत्र तथैव यूपग्रहणानर्थक्यम्। तत्र वाक्येनैवाश्रयसम्बन्धे फलसम्बन्धे च विधीयमाने वाक्यभेदः।

एकदेशिनां तु वाक्येनैवाश्रयसंबन्धं फलसंबन्धं च गुणाधिकारेऽभ्युपगच्छतामिहापि तथैव संभवादेकेन वाक्येन संबन्धद्वयासंभवाद् अप्रामाण्यमाशङ्क्य तन्निरासाय स्तुत्यर्थत्वमापादितम्, तदनर्थकम्। कश्चित्त्वाह—यूपस्यादृष्टत्वात्तत्संबन्धो दधिहोमसंबन्धवन्न लोकतो लभ्यते। ततस्तस्य फलसंबन्धस्य च नैकस्माद्वाक्यात्सिद्धिरिति, तदसत्; यद्यपि यूपत्वमदृष्टम्, तेन तु निमित्तेन यस्मिन् काष्ठे यूपशब्दो वर्त्तते तस्य चौदुम्बरजातेश्च लौकिक एव संबन्धः। यदि चैवं न लभ्यते "खादिरं वीर्यकामस्य यूपं कुर्या"-

---

सादृश्यत्वेन। स्वरूपेण यूपत्वेन। विपरिवृत्तिः उपस्थितिः। एवंविधोपस्थित्याप्याश्रयत्वे दोषमाह—तादृशी चेति। इष्टापत्तिमाशङ्क्याह—तत्रेति तथासतीत्यर्थः। तथैवेत्यनन्तरं नित्यवच्छ्रुतेति शेषः। तत्र आनर्थक्यप्रसक्तौ। यदा तु प्रकारसामान्यस्योपदेशादेव सिद्धत्वाऽप्रवृत्त्यनुपयोगाच्च प्रकारविशेषावगतये तन्निरूपकपदार्थानां विशेषरूपेणातिदेशवाक्यादुपस्थितिरावश्यकीति विभाव्यते, तदा समान्येनेत्यस्य सर्वपदार्थविशेष्यत्वेनेत्यर्थः। पदार्थास्तु तद्विशेषणत्वेनेति भावः। स्वरूपेणेत्यस्य स्वातन्त्र्येणेत्यर्थः। तथोपस्थितेरेवान्वयप्रयोजकत्वादिति भाव इति योजना।

अत्र गुरुग्रन्थे निबन्धने तावदित्थमधिकरणं वर्णितम्—"ऊर्जा पशूनाप्नोति" इत्यत्र किं वाक्यभेदेन फलविधित्वम्? उतैकवाक्यतया स्तुतिपरत्वम्? इत्यनध्यवसायादप्रामाण्यमिति पूर्वपक्षः। प्रतीयमानैकवाक्यतानुरोधेन स्तुत्यर्थत्वाध्यवसायात्प्रामाण्यमिति सिद्धान्त इति। तदर्थतोऽनूद्य दूषयति—एकदेशिनामिति। मत इति शेषः। गुणाधिकारे गुणफलसम्बन्धविधौ। लोकसिद्धक्रियाकारकभावमाश्रित्य यद्धोमकरणं दधि तेनेन्द्रियं कुर्यादिति विहिते दधिहोमसम्बन्धानुष्ठानफलं कामिन इत्येकस्मादेव वाक्यात्सिध्यतीति तेषामभ्युपगमः प्रकृतेऽपि सम्भवतीत्यर्थः। सम्बन्धद्वयासम्भवादित्यनन्तरं फलविधित्वानध्यवसायादिति शेषः। आपादितं सिद्धान्तितम्। शालिकनाथोक्तं समाधानमनुवदति—कश्चिदिति। यद्यपीति। आकृत्यधिकरणन्यायेनाञ्जनादिजन्यसंस्काराणामेव यूपशब्दार्थत्वादिति भावः। अदृष्टमित्यनन्तरं तथापीति पूरणीयम्। निमित्तेन प्रवृत्तिनिमित्तेन। लौकिक एवेति। यूपशब्दस्य यूपत्वोपलक्षितकाष्ठपरत्वादिति भावः। उपलक्षणत्वे मानाभावमाशङ्क्याह—यदि चेति। एवमुपलक्षणत्वानङ्गीकारेण। न लभ्यते लौकिकस्सम्बन्ध इत्यनुषङ्गः। तथा च प्रतीयमानैकवाक्यत्वानुपपत्तिरेवोपलक्षणत्वे मानमिति भावः। नन्वगत्या

गौणं लाक्षणिकं वापि वाक्यभेदेन वा स्वयम्।
वेदोऽयमाश्रयत्यर्थं को नु तत्प्रतिकूलयेत्॥

दित्यत्राप्येकवाक्यता न स्यात् । अस्तु तत्र वाक्यभेद इति चेत्, वार्त्तमेतत्; एकवाक्यत्वावगमात् । यदि चात्रैकस्मिन्नाख्याते वाक्यभेदस्तथा सत्यौदुम्बरो यूपो भवत्यूर्जं पशुनाप्नोतीत्याख्यातद्वये सुतरां वाक्यभेदः प्रामाण्यं च संभवतीति दूरापेतमप्रामाण्यम् । अथ 'खादिरो यूपो भवती'त्येतद्वाक्यविहितयूपसंबन्धाश्रयणेन फलसंबन्धविधिः—यः खादिरो यूपः स वीर्यकामस्येति, तथा सति खादिरत्वं न क्रत्वर्थं स्यात् । उक्थ्यावद्व्यूढवच्च फलार्थमेव स्यात् । उभयार्थं चैतदिष्टं खादिरत्ववदुभयार्थतां दधिग्रहस्य वदतो निबन्धकारस्यापि । तस्माद्यूपाश्रितस्य खादिरत्वस्येवौदुम्बरत्वस्य फलार्थविधिसंभवान्नाप्रामाण्यशङ्केत्यास्तां तावत् । तस्मादौदुम्बरता यूपोद्देशेन विधीयते । ततस्तुतिरियमूर्जोऽवरुध्या इति सिद्धम् ॥

इत्यौदुम्बराधिकरणम् ॥२॥

---

इति न्यायेन वाक्यभेदे इष्टापत्तिमाशङ्कते—अस्त्विति । वार्त्तम् असारमित्यर्थः । एकेति । प्रतीयमानैकवाक्यत्वस्योक्तरीत्या त्वन्मते मन्मते च सन्निधानकल्पिताश्रयाश्रयिभावोपजीवनेनोपपत्तिसम्भवेन वाक्यभेदायोगादिति भावः । वाक्यभेदाङ्गीकारे दूषणान्तरमत्याह—यदि चेति । वाक्यभेदस्य दोषत्वाभावेन स्वाध्यवसानत्वादनध्यवसायप्रयुक्तमप्रामाण्यमनाशङ्क्यमेवेत्यर्थः । लोकतस्सिध्यभावेऽपि वाक्यन्तरेणाश्रयसम्बन्धसिद्धिं शङ्कते—अथेति । दूषयति—तथा सतीति । वाक्यान्तरस्याश्रयसन्धपरत्वे सतीत्यर्थः । प्रकरणानुवलात्क्रत्वर्थत्वं भविष्यतीति शङ्कानिरासाय दृष्टान्तमाह—उक्थ्यादिवदिति । यथा ज्योतिष्टोमप्रकरणे "यदुक्थ्यं गृह्यते" इत्यादिवाक्याम्नातानामुक्थ्यादिनामकग्रहाणां 'पशुकाम उक्थ्यं गृह्णीयात्" इत्यादिवाक्यैः फलार्थत्वमेव । उत्पत्तिवाक्यस्याज्ञातोक्थ्यादिस्वरूपज्ञापनेन गुणफलविधिशेषतया क्रत्वङ्गता, बोधकत्वाभावात् । यथा च द्वादशाहमाश्रित्य "यत्कामो व्यूढच्छन्दसा द्वादशाहेन यजते सोऽस्मै कामस्समृध्यते यं यं कामयते तं तमाप्नुयात्" इत्यनेन ग्रहाग्रताविशेषस्य व्यूढाख्यस्य फलविधानात्काम्यत्वमेव । "ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ अथेतरेषां दशानामन्हामैन्द्रवायवग्रं प्रथममहरथ शुक्राग्रमथ द्वे आग्रयणाग्रेऽथैन्द्रवायवाग्रमथ द्वे शुक्राग्रेऽथाग्रयणाग्रमथ द्वे ऐन्द्रवायवाग्रे" इति व्यूढोत्पत्तिविधेः स्वरूपज्ञापनोपक्षीणत्वेन क्रत्वङ्ताबोधकत्वाभावात्तथेहापीत्यर्थः । इष्टापत्तिमाशङ्क्याह—उभयेति । अन्यथा खादिरवदिति दृष्टान्तासङ्गतिरिति भावः । दधिग्रहस्य क्रत्वर्थत्वं "प्राजापत्यं दधिग्रहं गृह्णीयात्" इति वाक्येन । पुरुषार्थत्वन्तु "दधिग्रहं गृह्णीयात्पशुकामस्य" इत्यनेनेति ज्ञेयम् । अन्यतरपक्षानध्यवसायेऽपि समुच्चयेनैव रात्रिसत्रार्थवादवत्प्रामाण्यसम्भवादप्रामाण्यपूर्वपक्षोऽप्यसङ्गत इत्याशयेनाह—आस्तामिति । सिद्धान्तमुपसंहरति—तस्मादिति । 'ऊर्जोऽवरुध्या' इत्यस्य प्राधान्यादितरस्य तु तदुपपादकत्वात्तन्मात्रनिर्देशः । प्रयोजनन्तु पूर्वपक्षे फलकामनयानुष्ठानम्, सिद्धान्ते तु नेति व्यक्तमेव । सूत्रार्थस्तु—वाशब्दः स्तुत्यर्थत्वव्यावृत्यर्थः, फलस्यापूर्वत्वादज्ञातत्वात्तज्ज्ञापकस्सन्निधिस्स्यात् हि यतः स्तुतिः वादमात्रमनर्थकं प्रशस्तप्रयोजनशून्यमिति ।

इति द्वितीयमौदुम्बराधिकरणम् ॥२॥

३

सू०हेतुर्वा०। एवमानर्थक्यप्रतियोगिनो विधिप्रतियोगिनश्चार्थवादा विचारिताः। इदानीं हेतुप्रतियोगिनो विचार्यन्ते। एवं श्रूयते—"शूर्पेण जुहोति तेन ह्यन्नं क्रियते"। इति। तत्र संदेहः—किं शूर्पेण होमे कर्त्तव्येऽन्नकरणता हेतुः ? उतार्थवादः ? इति। तत्र हिशब्दश्रुत्या हेतुत्वं गम्यते, लक्षणया प्राशस्त्यम्। अनर्थकप्रायश्चार्थवादः, हेतुस्त्वर्थवान्। कः पुनरर्थो हेतोः ? येन येनान्नं क्रियते शूर्पादन्येनापि दर्विपिठरादिना, तेन तेनापि होमसिद्धिर्हेतोः प्रयोजनम्। कथमप्रसिद्धायां व्याप्तौ हेतुत्वव्यपदेशः, अत एव हेतुव्यपदेशाद्व्याप्तिमन्तरेणानुपपद्यमानात् व्याप्तिवचनं कल्प्यते—येन येनान्नं क्रियते तेन तेन होतव्यमिति। तेन वचनेन सर्वान्नकरणविधायिना शूर्पस्यापि होमसाधनत्वसिद्धेः शूर्पेण

---

३

सू० हेतुर्वा स्यात्। विषयं विवेचयति—पूर्वमिति। आनर्थक्यं प्रतियोगि सिद्धान्तविरुद्धं पूर्वपक्षरूपं येषु, तथा विधिः फलादिविधानं प्रतियोगि येषु ते। विशेषणप्राधान्यात्तथात्वं तेषु विचारितमित्यर्थः। अन्यथा सर्वेषामेवाद्याधिकरणविषयत्वादसङ्गतत्वापत्तेः। इदानीमित्यवसरसङ्गतिसूचनम्—भावनांशत्रयान्तर्गततया हि फलादिविधौ प्रथमतो जिज्ञासा, न त्वतदङ्गभूतहेतुत्वविधाविति। प्रत्युदाहरणरूपाण्यग्रे सूचयिष्यते। श्रूयत इति। चातुर्मास्येषु यवमयकरम्भपात्रहोम इति शेषः। हिशब्दश्रुत्येत्यनेन साधनत्वफलत्वयोरश्रुतत्वरूपस्य पूर्वाधिकरणसिद्धान्तहेतोः प्रत्युदाहरणरूपेण पूर्वपक्षोत्थानात्प्रत्युदाहरणसङ्गतिरपि सूच्यते। प्राशस्त्यस्य विधितोऽपि लाभात्प्राय इत्युक्तम् अथवा प्रवृत्तिविशेषकरत्वाभावात्तथोक्ति। यदाह भाष्यकारः—'स्तुतश्चास्तुतश्च तावानेव सोऽर्थः' इति। ननु सर्वथैव विध्यनपेक्षितत्वाद्धेतुविधिरर्थवादतोऽप्यनर्थक इत्याशङ्क्याह—हेतुस्त्विति। अन्नकरणत्वस्य हेतुत्वविधौ अन्नसाधनशूर्पव्यावृत्तिः प्रयोजनमनेनोक्तमित्याशयमजानानः पृच्छति—कः पुनरिति। न हि फलोपधानरूपान्नसाधनता सम्भवति, स्वरूपयोग्यता तु होमसमर्थे सर्वत्रेति न कश्चिदर्थो हेतुविधेरिति भावः। पूर्वपक्षी स्वाशयं विवृणोति—येन येनेति। न च तच्छब्दपरामृष्टशूर्पगतान्नकरणत्वस्यैव हेतुत्वप्रतीतेर्न दर्व्यादिलाभ इति वाच्यम्, शूर्पस्य पक्षत्वेन हेत्वन्तर्भावात् पर्वतो वन्हिमान् तस्य धूमवत्वादिति लौकिकवाक्य इवेत्याशयात्। हेतुत्वविधावन्नकरणत्वस्योद्देश्यत्वेन तद्विशेषणस्याविवक्षितत्वाच्च। हेतुत्वस्यैवानुपपत्तिं शङ्कते—कथमिति। लोके गृहीतव्याप्तिकस्यैव हेतुत्वेन व्यवहारादिति भावः। उत्तरमाह—अत एवेति। अस्मादेवेत्यर्थः। होमसाधनताया विध्यधीनत्वाद्धोतव्यमिति विधिगर्भव्याप्तिवचनकल्पनम्। एवं सति शूर्पेणेत्यनर्थकमत आह—तेनेति। अवयुत्य दर्व्यादिभ्यः पृथक्कृत्य। अनुवादः प्राप्तिपूर्वको वादः। तेन विना निर्विषयहेत्वभिधानायोगादिति भावः। वाक्यार्थं निष्कृष्य दर्शयन् पूर्वपक्षमुपसंहरति—तेनेति। श्रुतश्चानुमितश्च श्रुतानुमितौ यावेकदेशौ ताभ्यां निष्पन्नम्। कीदृशं तदाह—शूर्पस्येति। हेतोरित्यन्तः तदनुमितस्त्वत इत्यादिरेकदेशः। इति इत्यस्य मध्यमणिन्यायेनोभयान्वयादिति पूर्वपक्ष इति योजना। शूर्पस्येति। श्रौतानुमानिकयोरतुल्यबलत्वाद्विकल्पस्य च तुल्यबलयोरेव प्रसिद्धेरिति भावः। यद्यपि शूर्पेणेत्यस्य

जुहोतीत्यवयुत्याऽनुवादः। तेनेदृशमिदं वाक्यं श्रुतानुमितैकदेशनिष्पन्नं शूर्पस्य होमसाधनत्वमन्नकरणत्वाद्धेतोः। अतः शूर्पमन्यद्वा यदन्नकरणं तेन होतव्यमिति पूर्वः पक्षः।

सिद्धान्तस्तु-शूर्पस्य तृतीयाश्रुत्या करणत्वं गम्यते। न तदानुमानिकैर्दर्विपिठरादिभिर्विकल्पितुमर्हति। न च वेदेनोच्यमानं शूर्पस्य होमसाधनत्वं हेतुमपेक्षते, वेदस्यैव तत्र प्रमाणत्वात्। अर्थवादस्त्वपेक्षितः प्ररोचनार्थत्वेन, तस्मादर्थवादत्वम्। एवं चाप्रसिद्धव्याप्तिवचनकल्पनाक्लेशो न भविष्यति। क्रियत इति चावर्त्तमाने वर्त्तमाननिर्देशः प्ररोचनार्थत्वे युक्तो भवति। न हि भूते भाविनि वा तादृशी प्रीतिर्यादृशी वर्त्तमाने। तेन रुच्यर्थत्वेन लक्षणया अवर्तमाने वर्त्तमाननिर्देशो युक्तः। विध्यर्थत्वे तु निष्प्रमाणकं लक्षणाश्रयणम्। न च श्रौतेन वर्त्तमानान्नक्रियेण मुख्यान्नकरणेन च शक्यते होमः कर्तुम्। तस्मादर्थवादत्वम्॥

इति हेतुमन्निगदाधिकरणम्॥ ३॥

---

विधित्वमनिच्छन्तं वादिनं प्रति नेदं दूषणं लगति, तथापि प्रथमप्रवृत्ताप्राप्तशूर्पविधेर्गम्यमानस्य दुर्वारत्वात्तमादायेदमुच्यत इति ज्ञेयम्।

ननु शूर्पवाक्यस्य विधित्वेऽयं दोषस्स्यात्, मया तु तन्नेष्यत एव, किन्तु हेतुविधिविषयनिर्देशमात्रार्थमनुवादत्वमेवेति पूर्वोक्तकल्पं सोपहासं निरस्यति—न चेति। तथा च हिशब्दोक्तहेतुत्वस्यानर्थक्यतदङ्गन्यायेनावश्यापेक्षितस्तुतावुपचोणत्वाच्छूर्पेणेत्यस्य प्रतीयमानविधित्वाविवक्षाकारणं नास्तीति भावः। कल्पनाक्लेश इति। कल्पनैव क्लेशः। कल्पनायाञ्च क्लेशो दर्वीपिठरादिविकल्परूप इत्यर्थः। नन्वेवं सत्यातिथ्यायां "चतुर्गृहीतान्याज्यानि भवन्ति" इत्यनेन चतुर्गृहीतत्रित्वमात्रविधौ "न ह्यत्रानूयाजान् यक्ष्यन् भवति" इत्यनूयाजाभावस्य हेतुत्वमपि न सिध्येदत आह—क्रियत इति चेति। युक्तो भवतीत्यर्थमेव पुनरुपपत्तिपूर्वकमाह—नहीत्यादि। भूते भूतक्रिये। भाविनि भविष्यत्क्रिये। वर्तमाने वर्तमानक्रिये। रुच्यर्थेन रुचिरूपेण प्रयोजनेन हेतुना। लक्षणयेति। भूतभविष्यत्कालयोर्वर्तमानत्वेन लटः साध्यवसानलक्षणयेत्यर्थः तदाह—अवर्तमान इति। इदञ्च तेनेति करणत्वनिर्देशस्याप्युपलक्षणम्। अतएव मुख्यान्नकरणेन चेत्यग्रे वक्ष्यति। युक्त इति शैत्यपावनत्वादिद्योतनवत्प्राशस्त्यातिशयद्योतनस्य रुचिफलस्य प्रयोजनस्य सत्वादनुवादत्वेन च प्रमाणान्तरस्य तात्पर्यग्राहकस्यावतारादिति भावः। उक्तस्यार्थस्य व्यतिरेकं पूर्वपक्षे दर्शयति—विध्यर्थत्वे त्विति। अज्ञातहेतुज्ञापनार्थत्व इत्यर्थः। निष्प्रयोजनमिति। प्रवृत्त्यङ्गद्योत्यार्थशून्यं निष्प्रमाणकञ्चेत्यर्थः। ननु मुख्यार्थ एव हेतुत्वेनोच्यतामित्याशङ्कामपनुदति—न चेति। अन्नक्रिया उत्पादनम्। मुख्येति। पचिक्रियाया एव मुख्यत्वान्नकरणत्वादिति भावः। एवञ्च मुख्यार्थस्य हेतुत्वासम्भवाल्लक्षणायाञ्च प्रमाणाभावादिह न हेतुत्वम्। अनुयाजाभावस्य तु बाधकाभावाद्धेतुत्वाङ्गीकरणमित्याशयः। विचारप्रयोजनन्तु स्पष्टमेव। सूत्रार्थस्तु-हेतुः हेतुविधिरूपः कश्चिदर्थवादस्स्यात्। अर्थवत्वं दर्व्यादिप्रापणात्। उपपत्तिः हिशब्दश्रुतिः ताभ्यां हेतुम्यामिति।

इति हेतुमन्निगदाधिकरणम्॥३॥

४

**सू० तदर्थशास्त्रात्०** गतोऽर्थवादप्रसङ्गः। मन्त्रेष्विदानीं चिन्ता। तेषामप्याद्याधिकरणे अनार्थक्यमाशङ्क्य स्वाध्यायविधिबलेनार्थवत्तया भवितव्यमित्येतावदपर्यवसितं कथितम्, तत्पर्यवसानायेदानीमर्थविशेषश्चिन्त्यते। तेषां च क्रमप्रकरणाभ्यां क्रत्वङ्गत्वं भवत्किं दृष्टेनैवार्थप्रकाशनोपकारेण भवति? किंवोच्चारणमात्रेणादृष्टं कुर्वताम्? इति। तत्र—'यदि दृष्टार्थतैव स्यान्मन्त्राम्नानमनर्थकम्। प्रत्यायनाददृष्टं चेत्तदुच्चारणतो वरम्'॥ शक्यते ह्युपायान्तरेणापि प्रयोगवेलायामर्थप्रकाशनम्। तद्यदिं तावन्मात्रमेव कार्यं मन्त्राणां स्यात् नित्यवदाम्नानमनर्थकं स्यात्। अथ तु मन्त्रप्रत्यायनाददृष्टं कल्प्येत, ततो यद् दूरमपि गत्वा कल्प्यमदृष्टं तदुच्चारणादेव कल्पयितुं युक्तम्। तद्धि पुरुषव्यापारगोचरः। प्रत्यायनं तु तस्मिन्ननुष्ठिते स्वयमेव भवति। स्वव्यापारे च पुरुषो नियुज्यते, यत्र च नियुज्यते तत्र फलाकाङ्क्षा। तेन यत्रावश्यं भाविनी अदृष्टकल्पना सा तत्रैव युक्ता, न तु तस्य प्रत्यायनार्थत्वम्। प्रत्यायनं त्व दृष्टार्थमिति युक्तम्। तस्माददृष्टार्था मन्त्राः। तथा च तदर्थशास्त्राद्युपपत्तिः। इतरथा परिसंख्याद्याश्रयणे क्लेशः स्यादिति। **अत्राभिधीयते**—

---

४

**तदर्थशास्त्रात्।** विध्येकदेशार्थवादविचारोत्तरं मन्त्रविचारस्यावसरसङ्गतिं सूचयति—इदानीमिति। विध्यतिरिक्तवेदभागप्रामाण्यनिरूपणाच्च पादसङ्गतिर्बोध्या। तात्पर्यवसानमिति। तथा च प्रकृतप्रामाण्यपर्यवसानोपयोगित्वाद्विनियोगप्रकारविचारो नासङ्गत इत्याशयः। क्रमेति। लिङ्गस्य पूर्वपक्षिमते विनियोजकत्वासंभवात् श्रुत्यादीनाञ्चाल्पविषयत्वादनुक्तिः। तत्र प्रकरणं प्रकृतौ, क्रमस्तु विकृताविति प्रायेण विभागो ज्ञेयः। तदर्थशास्त्रादिसूत्रहेतूनां लिङ्गदर्शनरूपत्वात्प्रापकन्यायमाह—**यदीति**। एवकारेण मन्त्रनियमादृष्टव्यवच्छेदः। मन्त्राम्नानं नित्यवदिति शेषः। कल्पसूत्रादितोऽप्यनुष्ठेयार्थज्ञानसिद्धेरिति भावः। प्रत्यायनादित्यस्य मन्त्रकृतादित्यादिः पूरणीयः। **अदृष्टमिति**। यद्यपि सिद्धान्ते मन्त्ररूपोपायनियमादेवादृष्टं कल्प्यते, नत्वर्थज्ञानात् तस्यानुष्ठानरूपदृष्टार्थत्वात्, तथापि विशेषणीभूतोपायनियमाभिप्रायेणैवमभिधानं बोध्यम्। एवं मन्त्रप्रत्यायनात् इत्यग्रिमव्याख्याग्रन्थोऽपि व्याख्येयः। यद्वा-अनुष्ठानस्वरूपसिद्धेरन्यतोऽपि सम्भवेन मन्त्रजन्यप्रत्यायनफलत्वायोगात् प्रत्यायनस्यादृष्टद्वारैवानुष्ठानाङ्गत्वं स्यादित्यापाद्येत्थमभिधानम्। **नित्यवदिति** वतिः स्वार्थे इवार्थे वा नित्यानामिवेति। **उच्चारणादेवेति।** मन्त्राभिव्यञ्जकत्वेन याज्ञिकप्रसिध्या चावश्यं पूर्वभावित्वादिति भावः। ननूच्चारणस्य प्रत्यायनोपक्षीणत्वान्न फलाकांक्षा, मन्त्रकृतप्रत्यायनस्य त्वनुपक्षीणस्यानुष्ठानाङ्गत्वात्तत्रैवादृष्टकल्पना युक्तेत्याशङ्कायामाह **तद्धीति**। पुरुषकृतिसाध्यस्यैव विधेयत्वादुच्चारणमेवानुष्ठानाङ्गत्वेन विधेयमिति तत एवादृष्टकल्पना युक्तेत्याशयः। उक्तन्यायोपोद्बलकानि सौत्रलिङ्गदर्शनान्युपन्यस्यति—**तथा चेति**। तेषां मन्त्राणामर्थे प्रयोजनभूते शेषिणां शासकं विनियोजनम्। आदि-

यस्य दृष्टं न लभ्येत स्यात्तस्यादृष्टकल्पना।
अनुष्ठेयस्मृतेश्चेह मन्त्रोच्चारणमर्थवत्॥
स्मरणं च प्रयोगार्थं प्रयोगाच्च फलोदयः।
एवं दृष्टार्थतालाभान्नादृष्टपरिकल्पना॥

यस्तु मन्त्रेणैव स्मर्त्तव्यमिति नियमः, तस्य न किंचिद् दृष्टमस्तीत्यदृष्टं कल्प्यते। मन्त्रोच्चारणस्य तु दृष्टेनैवार्थवत्त्वात्तत्रानुपपत्त्येकशरणमदृष्टकल्पनमनवकाशम्। तदर्थशास्त्रादयोऽपि गुणार्थार्थवादपरिसंख्यादिभिः परिहृताः।

---

पदेन वाक्यनियमादिकं तस्योपपत्तिरित्यर्थः। तथाहि —अग्निचयने इष्टकानयनायाश्वगर्दभौ स्तः, तदीये रशने च। तत्र "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इति वचनं मन्त्रस्याश्वरशनादाने विधायकं तददृष्टमात्रार्थत्वे उपपद्यते। अर्थप्रकाशनस्याविवक्षितत्वेन तत्सामर्थ्यरूपलिङ्गेन विनियोगासम्भवाददृष्टद्वारकविनियोगस्य च वचनायत्तत्वात्। अर्थविवक्षायान्तु लिङ्गादेव विनियोगसिद्धेरनर्थकं वचनं स्यात् एवं "तां चतुर्भिरभ्रिमादत्ते" इतीष्टकामृत्खननार्थं काष्ठकुद्दालरूपाया अभ्रेरादाने तत्प्रकाशकानाम् "अभ्रिरसि" इत्यादीनां चतुर्णां मन्त्राणां विधानमपि तथा। एवम् 'उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति' इति वचनं पिष्टस्य पुरोडाशाकृतिरूपेण विस्तारणे मन्त्रविधायकमप्यदृष्टार्थत्व एवोपपद्यते। एवम् "अग्निर्मूर्धा" इति नियतपदक्रमवाक्यनियमोपपत्तिरपि बोध्या। अर्थपरत्वे 'मूर्धाग्नि' रित्यपि प्रयोगसम्भवादिति। ननु "इमामगृभ्णन्" इति मन्त्रस्य लिङ्गादश्वगर्दभरशनयोः प्राप्तिसम्भवेऽपि पुनरेकत्र विधानं गर्दभरशनातो निवृत्तिरूपपरिसङ्ख्यार्थं भविष्यति। "अभ्रिमादत्ते" इति वचनमपि मन्त्राणामेकार्थानां विकल्पप्रसक्तौ चतुस्सङ्ख्यारूपगुणविधानेन समुच्चयार्थं भवतु, समुच्चयं विना मन्त्रचतुष्टयानुपपत्तेः। तथा "पुरोडाशं प्रथयति" इति विधेः स्तुत्यर्थं मन्त्रप्रतीकग्रहणम्। एवं प्रशस्तं प्रथनम् अनेन मन्त्रेण यतः क्रियत इति स्तुतिप्रतीतेः वाक्यनियमादिकञ्चादृष्टार्थं भविष्यतीति सिद्धान्ताशङ्कायामाह— इतरथेति। इतरथा अर्थपरत्वसिद्धान्ते। परिसङ्ख्यादीत्यादिना गुणार्थवादादृष्टानां परिग्रहः। क्लेश इति। परिसङ्ख्यायास्तावत् श्रुतहानिरश्रुतकल्पना प्राप्तबाधश्चेति त्रैदोष्यं क्लेशः। तथाहि—आदत्त इति हि श्रुतम्, तस्य हानिः। अश्रुतकल्पना-अश्रुतस्य गर्दभरशनां नादत्त इत्यस्य कल्पना, गर्दभरशनायामपि लिङ्गसाम्यात्प्राप्तस्य मन्त्रस्य बाध इति। गुणार्थत्वेऽपि चतुस्सङ्ख्यायास्साक्षात्क्रियान्वयासम्भवात् मन्त्रद्वारकस्य च मन्त्रस्याविधीयमानत्वेनारुणैकहायनीन्यायाभावादर्थप्राप्तमन्त्रद्वारकतायाश्च क्वाप्यदर्शनात् क्लिष्टत्वेन तदवस्थः क्लेशः। अर्थवादार्थत्वेऽपि प्रायश एवमर्थवादस्या [प्यदृष्टार्थत्व] मेवेत्यूह्यम्। गुणार्थवादार्थत्वयोरसम्भवस्य तु क्लेशपदार्थत्वेन व्याख्यानं क्लिष्टमिति नादरणीयम्। एवं वाक्यनियमादावनेकादृष्टकल्पनादिकमेव क्लेशो बोध्यः।

यस्येत्यादिसिद्धान्तग्रन्थः स्पष्टार्थः। अवश्यकल्प्यस्यादृष्टस्योच्चारणादेव कल्पनं युक्तमित्याशङ्कां निरस्यति—मन्त्रोच्चारणस्य त्विति। अनुपपत्त्येकशरणमित्यनेन कल्पकप्रमाणाभाव उक्तः। लिङ्गदर्शनान्युपपादयति—तदर्थेति। क्लेशपरिहारस्तु स्फुटत्वान्नोक्तः।

तस्मात्प्रकाशनेनैव मन्त्राणामुपकारिता ।
उपायनियमादेव त्वदृष्टपरिकल्पनम् ॥
इति मन्त्राधिकरणम् ॥४॥

इति शास्त्रदीपिकायां प्रथमाध्यायस्य द्वितीयः पादः समाप्तः ॥

## अथ तृतीयः पादः

### १

सू० धर्मस्य० कथंलक्षणो धर्म इत्येतदिह लक्षणार्थ इत्युक्तम्। तत्र प्रथमे पादे

---

तथाहि — परिसङ्ख्याया अर्थसिद्धत्वान्न दोषत्रयावकाशः । गर्दभाभिधानीं नादत्त इति वाक्यार्थाश्रयणे हि तत्प्रसक्तिस्स्यात् । यावत्तु लिङ्गेन रशनाद्वये मन्त्रो विनियुज्यते तावत्ततः शीघ्रप्रवृत्तया श्रुत्या एकत्र विनियुक्ते मन्त्रे निराकांक्षे, लिङ्गस्य प्रवृत्तिरेव निरुद्धेति अर्थसिद्धा गर्दभरशनातो निवृत्तिर्न वाक्यार्थः । तथा एकविधिविधेयत्वं विनाप्येकक्रियान्वयमात्रस्यैव पार्ष्टिकान्वयप्रयोजकत्वोपपत्तेर्न गुणार्थत्वेऽपि क्लेशः । एवमध्वर्युकर्तृकत्वादिलाभाय प्रथनविधेरावश्यकत्वात्तदर्थवादस्य च "यज्ञपतिमेव तत्प्रजया पशुभिश्च प्रथयन्ति" इत्यस्योपपादकापेक्षत्वान्मन्त्रग्रहणेन तदुपपत्तेरक्लेशेनैव गम्यमानत्वान्न कोऽपि विरोधः । मन्त्रे हि "उरु प्रथा उरु प्रथस्वोरुते यज्ञपतिः प्रथताम्" इत्यस्मिन् यज्ञपतिप्रथनस्याशंसनाद्यज्ञपतिः प्रथित इव भवतीत्युपपद्यते स्तुतिः । वाक्यनियमाद्यदृष्टकल्पनन्तु पूर्वपक्षेऽप्यावश्यकम् क्रमान्तरेणाप्युच्चारणसम्भवात् इति न गौरवमपि क्लेशः । एवं बुद्धशास्त्रादिष्वप्यूह्यम् । उपसंहरति—तस्मादिति । प्रकाशनेनैवेत्यनेनेदं सूच्यते-यन्मन्त्राणां कर्माङ्गत्वाय व्यापारापेक्षायां पुरुषकृतिसाध्यमप्युच्चारणं न व्यापारः, तस्य पुंव्यापारत्वात् । मन्त्रव्यापारस्तु प्रत्यायनमिति तस्मादेव दृष्टोऽदृष्टो वोपकारः कल्पयितुमुचित इति ॥

इति मन्त्राधिकरणम् ॥४॥

इति श्रीमत्पदवाक्यप्रमाणज्ञतत्सद्रामभट्टात्मज-
वैद्यनाथभट्टोन्नीतायां शास्त्रदीपिका-
टीकायां प्रभाख्यायां
प्रथमाध्यायस्य द्वितीयचरणस्सम्पूर्णः ॥

## अथ तृतीयः पादः

### १

धर्मस्य० करिष्यमाणस्मृत्यादिप्रामाण्यनिरूपणस्य लक्षणसङ्गतिं पूर्वप्रकृतवेदप्रामाण्यनिरूपणेन चावसरसङ्गतिं दर्शयति—कथमित्यादिना चिन्तेत्यन्तेन । उक्तमिति । अर्थवादाधिकरणारम्भे उक्तमित्यर्थः । तथाच धर्मप्रमाणमात्रनिरूपणस्याध्यायार्थत्वात्तत्सङ्गतिरिति भावः ।

चोदनाप्रामाण्यं सिद्धम्, द्वितीये त्वर्थवादादेः। एवं सकलस्य वेदस्य प्रामाण्यमुक्तम्। इदानीं पौरुषेयीषु स्मृतिष्वाचारेषु च वैदिकपरिगृहीतेषु चिन्ता। यद्यपि चोदनाप्रामाण्यमप्रामाण्येऽपि स्मृतीनां न विहन्यते, तथापि विलक्षणो धर्म इति जिज्ञासाधिकारात् स्मृतिप्रामाण्यं लक्षणे सङ्गतम्। नन्वप्रामाण्ये स्मृतीनां वेदस्यापि तत्सापेक्षत्वादप्राण्यं स्यात्। "याञ्जनाः प्रतिनन्दन्ती"त्ययं मन्त्रो रात्रिदेवताककर्माङ्गत्वेन प्रतीयते,

---

प्रकृतसङ्गतिसिध्यर्थं प्रकृतं दर्शयति— तत्रेति। अर्थवादादेरित्यादिपदान्मन्त्रनामधेययोस्सङ्ग्रहः। अत एव सकलस्येत्युक्तम्। न च नामधेयप्रामाण्यस्याद्याप्यव्युत्पादनादसङ्गतमेतदिति शङ्क्यम्। विशेषतस्तदव्युत्पादनेऽपि विध्यन्तर्भावेण सामान्यतः प्रामाण्यस्य सामान्यविचारेणार्थवादाधिकरणे कथनात्। स्मृत्यादेर्विध्यर्थवादमन्त्रमूलकत्ववत् नामधेयमूलकत्वस्यासम्भवान्नामधेयविचारात्प्रागेवोपजीवकत्वसङ्गत्या स्मृतिप्रामाण्यविचारारम्भः। पौरुषेयीष्विति पूर्वपक्षबीजसूचनम्। वैदिकपरिगृहीतत्वञ्च 'पुमान् स्त्रिया' इत्येकशेषेण द्वयोरपि विशेषणं सिद्धान्तबीजसूचनाय। गुरुमतेन शङ्कते—यद्यपीति। 'चोदनालक्षणोऽर्थो धर्मः' इति सूत्रे चोदनाधर्मप्रामाण्यं प्रतिज्ञातम् अपौरुषेयत्वादिभिश्च तदेवोपपादितम्। अपौरुषेयत्वादिहेतवश्च सर्ववेदसाधारणा इति चोदनाशब्दः सर्ववेद एव। तथाचार्थवादादेरप्रामाण्ये तत्साम्याच्चोदनानामपि तदापत्तेरर्थवादादिप्रामाण्यनिरूपणं युक्तम्, प्रथमाध्यायस्य चोदनासूत्रपरिकरत्वोक्तेः। यदाहुः—

'चोदनासूत्रनिर्दिष्टो यः प्रमाणपरिग्रहः।
सप्रकारस्स आद्येन लक्षणेन प्रपञ्चितः' इति॥

स्मृत्यादिप्रामाण्यनिरूपणस्य तु कथं सङ्गतिरित्यर्थः। स्वमतेन समाधत्ते—तथापीति। कथं लक्षणः? किं प्रमाणकः? इति जिज्ञासाधिकारात् इत्याकारकधर्मप्रमाणजिज्ञासाया अनुवृत्तेः। अयमाशयः—धर्मप्रमाणमात्रस्य प्रथमसूत्रे जिज्ञासितत्वेनावगतस्यानिरूपणीयत्वाच्चोदनासूत्रे प्रधानभूतचोदनारूपधर्मप्रमाणनिरूपणेऽपि तन्मूलकप्रमाणान्तरस्यापि धर्मप्रमाणत्वाविशेषात्तस्यापि जिज्ञासासूत्रविषयत्वात्तन्निरूपणं विना न जिज्ञासानिवृत्तिरिति स्वातन्त्र्येणैव स्मृत्यादिप्रामाण्यनिरूपणस्य प्रथमलक्षणे सङ्गतिरिति। अत्रैव गुरूणां समाधानं दूषयितुमाशङ्कते—नन्विति। धर्मप्रमाणजिज्ञासायां चोदनासूत्रेण चोदनाया धर्मप्रमाणत्वप्रतिज्ञानात् तदुपपादनार्थे चौत्पत्तिकसूत्रे निरपेक्षत्वहेतुकथनेनापौरुषेय्या एव चोदनायाः प्रामाण्यव्यवस्थापनात्सर्वत्राक्षेपसमाधानाभ्यां तत्प्रामाण्यमेव निरूपणीयम्। एवं सतीहापि स्मृत्यप्रामाण्येन तदेवाक्षिप्य तत्प्रामाण्येन समाधीयत इत्येवोचितमित्येवाशयः। को वेदः स्मृतिसापेक्षस्तत्राह—याञ्जना इति।

"याञ्जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीम्।
संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली स्वाहा"॥

इति मन्त्रः। रात्रिदैवतेति। न तु रात्रिकालिकनिशीथ्यादिकमङ्गित्वेन, कालस्याननुष्ठेयतया मन्त्रप्रकाश्यत्वाभावादिति भावः। स्मार्ते अष्टकाश्राद्धाङ्गहोमे। 'रात्रिदेवतामेके'

स्मार्त्ते च कर्मणि रात्रिर्देवतेति तदपेक्षस्य मन्त्रस्य तदप्रामाण्यादप्रामाण्यं स्यात् तत्सामान्यादितरेषु तथात्वमिति सकलस्य वेदस्याप्रामाण्यम्। तेन वेदप्रामाण्यसिद्ध्यर्थमेव स्मृतिप्रामाण्यमिति सङ्गतिरिति। नैतदेवम्; यदा हि स्मृतेरप्रामाण्यं तदा मन्त्रस्य स्मार्त्तकर्माङ्गत्वे किं प्रमाणम्? न तावल्लिङ्गम्, तस्य सामान्यसंबन्धप्रमाणसापेक्षत्वात्। नापि स्मृतिवाक्यम् तस्याप्रामाण्यात्। यद्यपि च लिङ्गमात्रं विनियोजकं स्यात्, तथापि फलवदङ्गत्वेनाफलस्य विनियोगात् स्मृत्यप्रामाण्ये च स्मार्त्तस्य कर्मणः फलवत्त्वाभावान्न तादर्थ्यं मन्त्रस्य, येन सापेक्षता स्यात्। सत्यपि च मन्त्राप्रामाण्ये सकलस्याप्रामाण्यं कुतस्त्यम्? न हि मन्त्रस्य स्वारसिकमप्रामाण्यं येन शब्दमात्रे स्यात्, अपि तु सापेक्षैकवाक्यत्वकृतम्। न च कृत्स्नस्य तदस्तीति कथमप्रामाण्यम्? तस्मान्नैवं सङ्गतिः संभवतीति पूर्वोक्तैव सङ्गतिर्ज्यायसी। धर्मप्रमाणचिन्ताधिकारात् स्मृतीनामपि तत्र प्रामाण्यं प्रतिपाद्यत इति। न चैवं चोदनैवेति प्रतिज्ञाव्याकोपः, तन्मूलत्वेन

---

इत्याश्वलायनोक्तेरिति भावः। नच 'रात्रिर्वै कृष्णपिङ्गाचम्' इति विहिते श्रौत एव रात्रिदेवत्ये कुतो नाङ्गत्वमिति वाच्यम्, तत्र पर्यग्निकरणोत्तरमुत्सर्गविधानेन होमाभावात् स्वाहान्तमन्त्रस्याङ्गत्वानुपपत्तेः प्राकरणिकमन्त्रान्तरावरोधाच्च। नन्वेतन्मन्त्राप्रामाण्येऽपि सकलवेदस्य तत्कुतस्तत्राह—तत्सामान्यादिति। ओदुम्बरात्रिकरणगुणपूर्वैकदेशोऽयम्। एतन्मन्त्रसमानशब्दत्वेन सामान्यादितरेष्वपि वेदवाक्येषु तथात्वं प्रमाणत्वमिति प्रकृतेऽर्थः। उपसंहरति—तेनेति। दूषयति—नैतदिति। एतत्स्मृतिप्रामाण्यनिरूपणम् एवमुक्तप्रकारसङ्गत्या नेत्यर्थः। किं प्रमाणमिति। श्रुतिलिङ्गादिषु मध्ये किमित्यर्थः। लिङ्गम् अर्थप्रकाशनसामर्थ्यम्। सामान्येति। याञ्जना इति मन्त्रो रात्रिप्रकाशकत्वलिङ्गाद्रात्रिरूपमात्राङ्गं भवेत्। तच्च चानर्थक्यमिति तद्द्वारा अपूर्वसम्बन्धोऽवश्यमपेक्षणीयः। न चात्र तद्बोधकप्रकरणादिकमस्तीत्याशयः। स्मृतीति। 'अञ्जलिना उतप्यापूरं जुहोति' इत्यादिस्मृतिवाक्यमित्यर्थः। ननु दृष्टार्थत्वलाघवसहकृतान्वयविधिवशादेव रात्रिदैवत्याष्टकाकर्माङ्गता तदीयरात्रिदेवताप्रकाशनसामर्थ्यरूपलिङ्गेन स्यादत आह—यद्यपीति। वाक्यादिवत्पृथक्प्रमाणव्यवच्छेदार्थो मात्रशब्दः। फलवत्त्वाभावादिति। प्रमाणाभावादिति भावः। न च मन्त्रानर्थक्यानुपपत्त्यैव स्मार्त्तकर्मणः फलवत्त्वं कल्पनीयमिति वाच्यम्, तथा सति मन्त्रस्यैवोच्चारणमात्रेण फलकल्पनौचित्यात्। अभ्युपेत्याह—सत्यपीति। मन्त्राप्रामाण्ये मन्त्रविशेषस्याप्रामाण्ये। सकलस्य वेदस्य। ननु तत्सामान्यादितरेषु तथात्वमित्युक्तमेवात्र तत्समानत्वाभावमुपपादयति—न हीत्यादिना। स्वारसिकम् स्वाभाविकम्। सापेक्षैकेति। प्रमाणान्तरापेक्षं यत्स्मृतिवाक्यं तेन या एकवाक्यता तत्कृतमित्यर्थः। तथाच सापेक्षैकवाक्यतारूपसामग्र्यभावादसिद्धो हेतुरित्यर्थः। चोदनैवेत्यनन्तरं धर्मे प्रमाणमिति पूरणीयम्। चोदनाव्यतिरिक्तायाः स्मृतेः प्रामाण्येऽन्ययोगव्यवच्छेदकैवकारासङ्गतिरिति भावः। तन्मूलत्वेन चोदनामूलकत्वेन। एतच्चार्थवादाद्यभिप्रायम्। तदन्तर्भावेण चोदनैकवाक्यत्वेन। एतच्चार्थवादाद्यभिप्रायम्।

तदन्तर्भावेण वेतरेषां प्रामाण्यात्स्वातन्त्र्येण प्रामाण्याभावात् । तदिह किं स्मृत्याचाराणां धर्मे प्रामाण्यम् ? उत न ? इति विचार्यते । तदर्थं च श्रुतिमूलत्वमेषामुत भ्रान्त्यादि-मूलत्वमिति विचारयितव्यम् । तत्र,

प्रायेणानृतवादित्वात्पुंसां भ्रान्त्यादिसंभवात् ।
चोदनानुपलब्धेश्च श्रद्धामात्रात्प्रमाणता ॥

सम्भवद्भ्रमविप्रलम्भेषु पुरुषेषु न तावन्निर्विचिकित्समेव प्रामाण्यं स्वध्यवसानम् । अतश्चाननुष्ठानात्फलतोऽप्रामाण्यमेव । किंच नैषां प्रत्यक्षादिमूलत्वेन प्रामाण्यम्, तेषां धर्माधर्मयोरप्रवृत्तेः । न च स्वातन्त्र्येण वेदवत्, पौरुषेयत्वात् । न चोदनामूलत्वेन, तदनुपलम्भात् । न ह्यनुपलभ्यमानाश्चोदना मूलत्वेन स्वप्रमेयं प्रतिपादयन्ति । न चासां प्रत्यक्षेणोपलम्भसम्भवः, अनुच्चार्यमाणत्वात् । उच्चार्यमाणत्वे वा स्मृतिप्रणयनवैयर्थ्यम् । प्राक् पठिता अपि सम्प्रति पुरुषक्षयादुत्सन्ना इति चेत् —न; विकल्पासहत्वात् । यो

---

स्वातन्त्र्येणेति । प्रमाणान्तरनैरपेक्ष्येणेत्यर्थः । तथाच स्वातन्त्र्येण चोदनैव प्रमाणं नान्यदित्यर्थे न विरोधः, तुल्यकक्ष्यव्यवच्छेदस्यैव व्युत्पत्तिसिद्धत्वादिति भावः । तदिति । तस्मादेवं सङ्कटत्वा-दित्यर्थः । तत्रेति । एवं संशये सतीत्यर्थः । ननु शिष्टानां मन्वादीनां रागद्वेषयोरभावात्तन्मूल-विप्रलिप्सया न मिथ्यावदसम्भवः, अत आह—भ्रान्त्यादीति । आदिना प्रमादपरिग्रहः । ननु चोदनामूलत्वमपि वैदिकमन्त्रादिस्मृतेस्सम्भाव्यमेवेत्यत आह—चोदनेति । योग्यानुपलब्ध्या चोदना-भावनिश्चये तन्मूलत्वकल्पनाया असम्भवादिति भावः । श्रद्धेत्युपहासः । प्रमाणता तदभिमानः । नन्वेवमपि प्रामाण्यनिश्चयाभावमात्रं स्यान्न त्वप्रामाण्यनिश्चयः । तथा चाप्रामाण्यमिति पूर्वपक्ष-कोटिर्न सिद्धेत्यत आह—सम्भवदिति । पुरुषेष्विति सति सप्तमी । निर्विचिकित्सं निस्सन्दि-ग्धम् । अननुष्ठानादिति । प्रेक्षावत्प्रवृत्तेः प्रामाण्यनिश्चयं विनासम्भवादिति भावः । फलत इति । बाधितार्थकत्वरूपस्याप्रामाण्यस्यानिश्चयेऽपि तत्फलस्याननुष्ठानस्य निश्चयाभिप्राया पूर्वपक्षेऽप्रामाण्योक्तिरित्याशयः । अप्रामाण्यनिश्चयोऽपि परिशेषाद्भवतीत्याशयेनाह—किञ्चेति । एषां स्मृत्याचाराणाम् । तेषां प्रत्यक्षादीनाम् । अप्रवृत्तेः अप्रमापकत्वात् प्रकृतसिद्धान्तं निरा-करोति —न चोदनेति । तदनुपलम्भादिति । तासां चोदनानामनुपलम्भादश्रवणादित्यर्थः । न चास्माकमनुपलम्भेऽपि मन्वादीनामुपलम्भसम्भव इति वाच्यम् । कारणसाम्येन मन्वादेरिवास्म-दादीनामप्युपलम्भापत्त्यानुपलम्भानुपपत्तेः । अनुपलम्भेऽपि मूलत्वमाशङ्क्य परिहरति—न हीति । शब्दस्य तदर्थाभिधानशक्तत्वेन गृहीतस्यैव तदर्थाभिधायकत्वात् । चक्षुरादिवत्स्वरूपतः प्रमाप-कत्वेऽतिप्रसङ्गादिति भावः । अस्तु तर्हि फलबलादुपलम्भ एव मन्वादीनामित्याशङ्क्य कारणा-भावेन परिहरति—न चेति । अनुच्चार्यमाणत्वात् केनाप्यपठ्यमानत्वात् । स्मृतिः धर्मशास्त्रं मानवादि, तस्य प्रणयनं रचनम् । तस्य वैयर्थ्यविच्छेदकारणाभावादिदानीं यावदुच्चारणा-नुवृत्तिप्रसम्भवादिदानीन्तनानामपि तत एव धर्मज्ञानसम्भवादिति भावः । विच्छेदकारणं शङ्कते — प्रागिति । मन्वादिकाल इत्यर्थः । पुरुषाणामध्येतॄणां क्षयादुत्सन्नत्वम् । बुद्धिमान्द्यप्रमादालस्या-

हृत्यत्सादं चोदनानां वदति, स वक्तव्यः-किमेका काचिच्छाखा स्मार्त्तश्रुतिसंघातात्मिका पूर्वमासीत्सा चेदानीमध्येतृक्षयादुत्सन्नेति कल्प्यते ? किं वा बह्वीषु शाखास्वितस्ततः श्रुतयः स्मृतिमूलभूताः पठिताः संप्रत्युत्सन्नाः ? इति। तत्र 'सहस्रं सामशाखाः, एकशतमध्वर्युशाखाः एकविंशतिशाखं बाह्वृच्यम्' इत्यादिशाखापरिमाणस्य परम्परया सर्वलोकस्मरणान्नातोऽधिका शाखा संभावयितुं शक्यते, नापि पठ्यमानानामेवाक्षीणानामत्यवहिताध्येतृकाणां मध्ये कासांचिच्चोदनानामुत्सादसम्भवः। न च संप्रत्यपि पठ्यन्त एव विप्रकीर्णस्मृतिमूलभूताः श्रुतय इति युक्तम्, स्मृतिप्रणयनवैयर्थ्यादि ह्युक्तम्। तन्न तावदिदानीमतीतकाले वा पठिताः श्रुतयः स्मृतीनां मूलम्, नापि नित्यानुमेयाः, अन्धपरम्परान्यायात्। या हि चोदना न कदाचिदुच्चार्यते, तस्याः सर्वपुरुषप्रत्यक्षादिप्रसराभावाद् दुर्लभतरमस्तित्वम्।

ननु स्मृतिलिङ्गवशेनानुमानं प्रसरत्येव, सर्वेषां लिङ्गादिकल्प्यास्विव श्रुतिषु। विषम उपन्यासः; लिङ्गादयो हि सर्वपुरुषप्रत्यक्षविषया श्रुतिमन्तरेणानुपपद्यमाना युक्तं यत्तस्यां निश्चयमादधति, स्मृतिवाक्यरचना तु पौरुषेयी यदर्थविषयोपलभ्यते

---

दिकं च, विकल्पासहत्वात् वक्ष्यमाणविकल्पदोषदुष्टत्वात्। तमेव विकल्पं दर्शयति--किमिति। स्मार्तश्रुतीति। स्मृतिमूलभूतश्रुतीत्यर्थः। बह्वीषु शाखासु इदानीं पाठ्यमानास्वेवेतस्ततस्तत्र तत्र स्मृतिमूलभूताः श्रुतयः पूर्वकाले पठिताः पुरुषदोषादुच्छिन्नाः लेखकदोषाल्लिपिच्छिन्नेति द्वितीयविकल्पार्थः। एकशतमिति। एकाधिकं शतमित्यर्थः। बाह्वृच्यं ऋग्वेदः। अतः परिगणितशाखाभ्यः एवञ्च प्रथमकल्पो न युक्त इति भावः। द्वितीयं निरस्यति—नापीति। अक्षीणाः पूर्वोक्तक्षयरहिताः। अत्यन्तमवहिताः सावधाना अध्येतारो यासामिति हेतुगर्भविशेषणम्। सिद्धान्तिमतमाशङ्क्य निराकरोति —न चेति। उत्सन्नविप्रकीर्णश्रुतिमूलकत्वदूषणमुपसंहरति—तन्न तावदिति। इदानीमिति विप्रकीर्णश्रुतिमूलत्वदूषणोपसंहारः, अतीतेत्युत्सादपक्षदूषणोपसंहारः। प्राभाकरमतं दूषयति—नापीति। नित्यं सदानुमेया एव, न तु कदापि केनापि दृष्टा इत्यर्थः। अस्मदादिवन्मन्वादिभिरपि स्मृत्यानुमितत्वस्यैव स्वीकाराल्लिङ्गादिकल्प्यश्रुतिवदिति भावः। अन्धपरम्परेति। यथाहि कश्चिज्जात्यन्धः कथं तत्र रूपनिश्चय इति पृष्टो जात्यन्धान्तरवचनमेव यदि मूलं ब्रूयादन्योऽप्येवं तदा स्वतन्त्रमूलप्रमाणाभावान्न कथमपि रूपनिश्चयस्तथेहापीत्यर्थः। एतदेव विवृणोति - या हीति।

प्रत्यक्षादीत्यादिनोक्तं सर्वप्रमाणासम्भवमनुमानसम्भवेनाक्षिपति—नन्विति। विषम उपन्यास इति। लिङ्गादिदृष्टान्तो विषमः, दार्ष्टान्तिकविलक्षण इत्यर्थः। एतदेवोपपादयति—लिङ्गादयो हीति। आदिना वाक्यादिपरिग्रहः। प्रत्यक्षपदं दृढप्रमाणपरम्। श्रुतिमन्तरेणेति। "बर्हिर्देवसदनं दामि" इत्यादिमन्त्रेण क्रियमाणं बर्हिर्लवनप्रतिपादनं तदोपपद्यते यदि तद्द्वारेणापूर्वशेषता भवेत्। सा च न तद्बोधकश्रुतिं विनेति भावः। दार्ष्टान्तिके वैषम्यमाह—स्मृतीति। तद्विषयमेवेत्येवकारो ज्ञानमित्यनन्तरमपि योज्यः। न

तद्विषयमेव रचयितुर्ज्ञानं कल्पयति, अष्टकाकर्तव्यताविषयञ्च स्मृतिवाक्यमिति, नूनमयमष्टकाकर्तव्यतां वेदेत्येतावत्प्रथमं कल्प्यते न श्रुतिस्वरूपम्, नापि श्रुतिज्ञानम्। एवमर्थज्ञाने स्मृतिकारस्य कल्पिते पश्चाज् ज्ञानलिङ्गात् ज्ञेयभूतार्थानुमानम्, न श्रुतिकल्पनम्। एवं स्मृतिकारान्तरस्यापि स्मृत्यन्तरलिङ्गादर्थ एवानुमानमिति निष्प्रमाणिका श्रुतिकल्पना स्यात्। अथोच्येत—न खलु परकीयेण ज्ञानेन झटित्येवार्थनिर्णयः, मूलानुसन्धानसापेक्षत्वात्। तत्र यदि स्मृतिकारस्यार्थविषयज्ञानमूलमनुसन्दधानः स्मृत्यन्तरमेव सम्भावयेत्, तदपि च ज्ञानस्यैव लिङ्गं नार्थस्य। ततः पूर्वापरमपि स्मरणं ज्ञानस्यैव लिङ्गं नार्थस्येति न कदाचिदर्थनिश्चयो लैङ्गिको लभ्यत इति श्रुतिरेव कल्पयितव्या। यद्येवं श्रुतावपि तुल्यमेवैतत्, स्मृतिकारस्य मूलतया श्रुतिज्ञानमेव प्रथमं कल्प्यते न श्रुतिसद्भावः श्रुतिविषयेण तु ज्ञानेन ज्ञेयभूतश्रुतिनिर्णयः, परज्ञानेन च तद्विषयश्रुतिनिश्चयो मूलानुसन्धानसापेक्षः, मूलञ्च स्मृतिकारस्य स्मृत्यन्तरमेव। तदपि चार्थज्ञानद्वारेण श्रुतिज्ञानस्यैव लिङ्गं न श्रुतिसद्भावस्येति न कदाचित्कस्यचिदप्येवं श्रुतिसद्भावनिश्चयो लैङ्गिको लभ्यते। लिङ्गादीनि तु श्रुतिसद्भावमेव कल्पयन्तीत्युक्तो विशेषः। तेन यदि परकीयेण ज्ञानेन प्रागेवार्थनिश्चयः, ततोऽर्थस्मरणपरम्परयार्थस्यैव ज्ञानान्न श्रुतिसिद्धिः। अतः स्मृत्यन्तरमेव मूलं स्यात्। अन्धपरम्परया च रूपनिश्चयस्तदा स्यात्।

---

श्रुतिस्वरूपमित्यग्रे व्यतिरेकप्रदर्शनात्। कार्येण हि कारणमेव कल्पनीयं नान्यदिति भावः। उक्तमर्थं प्रकृते योजयति—अष्टकेति। नन्वर्थज्ञानेन पश्चाच्छ्रुत्यादिकल्पनमावश्यकमत आह—एवमिति। ज्ञानं हि ज्ञेयाविनाभूतत्वादर्थमेव कल्पयति न श्रुतिम्, तज्ज्ञानं वा अपेक्षत्वादित्यर्थः। अथेति। मूलम् अर्थज्ञानहेतुभूतं प्रमाणम् संसर्गाग्रहस्यापि मूलत्वसम्भवात् ज्ञाननिश्चयोऽपि न स्यात्किमुतार्थनिश्चय इति भावः। लैङ्गिकः अर्थज्ञानारूपलिङ्गप्रभवः। परिहरति—यद्येवमिति। ननु स्मृतिकर्तुरर्थज्ञानमूलत्वेन श्रुतिरेव कल्प्यते न तज्ज्ञानम्, येन दोषतौल्यं स्यादत आह—श्रुताविति। स्वरूपतः श्रुतेरर्थज्ञानमूलत्वे हि अस्मदादीनामपि तथैवार्थज्ञानसम्भवेन स्मृतिप्रणयनं कार्यमेव स्यादिति भावः। स्मृत्यन्तरमेवेति। श्रुतेर्नित्यानुमेयत्वेन प्रत्यक्षासम्भवाल्लिङ्गान्तराभावाच्चेत्यर्थः। लैङ्गिकः स्मृतिरूपलिङ्गहेतुकः। कथं तर्हि लिङ्गादिभिः श्रुतिनिश्चयस्तत्राह—लिङ्गादीति। आदिना वाक्यादीनां परिग्रहः। "बर्हिर्देवसदनं दामि" इति मन्त्रो बर्हिर्लवनद्वारा क्रतौ श्रुतिविनियुक्तः, बर्हिर्लवनप्रकाशनसमर्थत्वादित्यनुमाने तादृशश्रुतिरनुमीयते, न तु तज्ज्ञानमिति विशेष इत्यर्थः। यदि मूलानुसन्धानं विनैव परकीयश्रुतिज्ञानेन ज्ञेयनिश्चयमनङ्गीकुर्यात्तदा दोषमाह—तेनेति। प्रागेवेति। मूलानुसन्धानं विनैवेत्यर्थः। स्मरणपरम्परया स्मृतिपरम्परया। ननु मास्तु श्रुतिसिद्धिः, तथापि स्मृत्यन्तरमूलकार्थनिश्चयलाभात्स्मृतीनां प्रामाण्यमव्याहतमिति तटस्थः शङ्कते—अथेति। अनिष्टान्तरापत्त्या परिहरति—अन्धेति। अन्धवाक्येत्यर्थः। इष्टापत्तिश्चेत्तत्राह—चेत्येति। केषुचित्पुस्तकेष्वेतौ शङ्कापरिहारग्रन्थौ न स्तः। अथैतद्दोषपरिहारार्थं मूलानुसन्धानापेक्षायां

चैत्यवन्दनादीनामपि पुंवाक्यपरम्परया धर्मत्वानुमानं स्यात्। अथ मूलानुसन्धानसापेक्षम् ततो यथैव वयं मानवीयात्स्मरणान्मनोरर्थविषयं श्रुतिविषयं च ज्ञानमात्रं कल्पयित्वा श्रुतिसद्भावमनिश्चित्य तन्निश्चयाय मनोः श्रुतिसद्भावमूलं प्रमाणं मृगयामहे, तथा मनुरप्यन्यस्य सोऽप्यन्यस्येति न श्रुतिसद्भावसिद्धिः। एवमुभयथापि श्रुतिर्नित्यानुमेया न सिध्यतीति, न तन्मूलत्वेन प्रामाण्यं स्मृतीनाम्। अतः श्रद्धामात्रविजृम्भितं स्मृतिप्रामाण्यमिति प्राप्तेऽभिधीयते—

वैदिकैः स्मर्यमाणत्वात्तत्परिग्रहदार्ढ्यतः।
संभाव्यवेदमूलत्वात् स्मृतीनां वेदमूलता॥

य एव हि वेदस्यैव धर्ममूलता नान्यस्येत्यास्थिता मन्वादयस्तेषामष्टकादिधर्मत्वस्मरणं न कथञ्चिदुपपद्यते, न यदि वेदमूलता। तथा वैदिकानामेवाविगीतपरम्परया परिग्रहो वैदिकत्वस्मरणं चैषु शिष्टानां नासति वेदमूलत्वेऽत्रकल्पते। संभवति च त्रैवर्णि-

---

पूर्वोक्त एव दोष इत्याह – अथ मूलेति। मृगयामहे न तु प्राप्नुमः। स्मृतिरूपलिङ्गस्य श्रुतिज्ञा मात्रे प्रामाण्यादिति भावः। नित्यानुमेयत्वपक्षे श्रुत्यसिद्धिमुक्तामुपसंहरति – एवमिति। उभयथा अर्थनिश्चयार्थं परकीयज्ञानस्य मूलानुसन्धानसापेक्षत्वे तन्निरपेक्षत्वे च। सूत्रस्थधर्मस्य चोदनारूपशब्दमूलत्वात् अशब्दम् उपलभ्यमानशब्दरहितं स्मृत्यादि अनपेक्षम् मूलप्रमाणानपेक्षम् अप्रमाणमिति यावत्। अनपेक्ष्यमिति पाठे अनादरणीयमित्यर्थः।

सिद्धान्तयुक्तिसङ्ग्राहकं श्लोकमाह—वैदिकैरिति। वेद एव धर्मे प्रमाणं नान्यदित्यभ्युपगन्तृभिर्मन्वादिभिस्स्मर्यमाणत्वाद्धर्मप्रतिपादकतया क्रियमाणत्वादित्यर्थः। दानं ददातीतिवत् करोत्यर्थकत्वात्स्मृतेः। तथा तैर्वैदिकैः परिग्रहस्य धर्मबुद्ध्यानुष्ठानोपदेशादेर्दार्ढ्यादविगीतपरम्परयानुवृत्तेरित्यर्थः। यद्यप्ययमष्टकाद्यर्थनिष्ठो हेतुः न स्मृतिनिष्ठस्तथापि वैदिकदृढपरिगृहीतार्थप्रतिपादकत्वे हेतौ तात्पर्यमिति न दोषः। सम्भाव्यं वेदरूपं मूलं यासां तत्त्वादित्यर्थः। तेन बुद्धादिवाक्यवद्वेदमूलत्वासम्भवनिरासार्थमेतदुक्तम्, न तु वेदमूलत्वसाधकहेत्वनुप्रविष्टमिति विज्ञेयम्। श्लोकं व्याचष्टे—य एवेत्यादि। वेदस्यैवेत्यनन्तरं मुख्यतयेति शेषः। आस्थिताः अभ्युपगतवन्तः। 'वेदोऽखिलो धर्ममूलम्' इति तदुक्तेरिति भावः। न्यायाभासमूलकस्मृतीनां श्रुतिमूलत्वनिरासार्थं वैदिकपरिग्रहं प्रकारान्तरेण व्याचष्टे - वैदिकत्वेति। एषु अष्टकादिषु वैदिकत्वेन वेदमूलत्वेन स्मरणमित्यर्थः। एवं तत्परिग्रहपदेन वैदिकत्वेन वैदिकपरिग्रहो विवक्षितः। स च न न्यायाभासमूलकेष्विति भावः।

अथवा—

'यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः।
स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः'॥

इत्यादिवैदिकत्वस्मरणं श्लोकानुक्तमप्युक्तम्। सम्भाव्येत्युत्तरार्धं व्याचष्टे—सम्भवति चेति। त्रैवर्णिकानामपि वेदद्वेषिणां तदसम्भवान्मूलाविशिष्टानामित्यनुषङ्गो ज्ञेयः। वेदसंयोगः

कानां वेदसंयोग इति तन्मूलत्वमेवाध्यवसीयते। कथमनुच्चारितानां मूलत्वोपपत्तिः ? इति चेत्, उच्चार्यन्त एव स्मृतिमूलभूताः श्रुतयः संप्रत्यपि विप्रकीर्णाः काश्चित् क्वचित्कस्याञ्चिच्छाखायाम् । विप्रकीर्णत्वात्तु शाखान्तराध्यायिभिः शाखान्तरगतानामनुपलम्भात्तादर्थ्येनार्थवन्निबन्धनम्, तदुपलम्भे वा मन्दधीभिरनुपसंहरणीयानामुपसंहारफलं स्मृतिप्रणयनमिति न वैयर्थ्यम्, अतः स्मृतयः प्रमाणमिति सिद्धम् ॥

इति स्मृत्यधिकरणम् ॥ १ ।

२

सू०विरोधे० उत्सृष्टस्य स्मृतिप्रामाण्यस्यापवादः क्रियते। अत्र प्रत्यक्षश्रुतिविरुद्धाः

---

तदध्ययन-श्रवण-तदर्थज्ञानरूपः । अध्यवसीयत इति अनुमीयत इत्यर्थः । अनुमानप्रयोगस्तु—अष्टकादिस्मृतिः वेदमूला, वेदमूलकतया वैदिकैः परिगृहीतत्वात्, प्रत्यक्षश्रुतिमूलकस्मृतिवदिति । अत्र हेतौ वेदमूलकतयेति विशेषणादर्थकामानुसारिस्मृतौ न व्यभिचारः । न चाष्टकादिस्मृतौ वेदमूलकत्वेन वैदिकपरिग्रहस्य भ्रान्त्यापि सम्भवान्नैकान्ततो वेदमूलत्वसिद्धिरिति वाच्यम्, भ्रान्त्यादिकल्पनायां गौरवेण लाघवसहकारेणोक्तसाध्यस्यैव सिद्धेः । तथाहि—मन्वादेर्भ्रान्तिमूलदोषकल्पनम्, तस्याश्चाद्ययावदनुवृत्तिः, सकलशिष्टावगतस्मृतिप्रामाण्यबाधः । तथा विप्रलम्भेऽप्येते दोषाः —विप्रलिप्सा, तत्प्रयोजनम्, लोकानाञ्च भ्रान्तिः, तस्याश्चैतावत्कालमनुवृत्तिरिति कल्पनागौरवम् । श्रुतिमूलकत्वे तु तन्मात्रकल्पनमिति लाघवमिति । वार्तिककृतस्तूक्तहेत्वन्यथानुपपत्तिप्रसूतार्थापत्तिरेव सूत्रेऽनुमानपदेनोक्तेत्याहुः । अत्र सिद्धान्तसूत्रम्—'अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात्' इति । अपि वेति पूर्वपक्षव्यावृत्तिः । अनुमीयतेऽनेनेत्यनुमानं स्मृतिवाक्यं धर्मे प्रमाणं स्यात् । कुतः ? कर्तृसामान्यात् कर्त्रैक्यात् । ये खलु वेदो धर्ममूलम् इति स्मृतिकर्तारस्त एवाष्टकादिस्मृतिकर्तार इति । एवं य एव वैदिकपदार्थकर्तारस्त एवाष्टकादेरपीति । तथा ये वेदस्याध्ययनकर्तारस्त एव स्मृत्यध्ययनस्येति । एत एवार्था मूले दृढवैदिकपरिग्रहपदेनोक्ताः । कथमिति । अज्ञातानां श्रुतीनां मूलत्वासम्भवात्तज्ज्ञानं वाच्यम्, तच्च नित्यानुमेयत्वनिराकरणात्प्रत्यक्षमेव वक्तव्यम्, न चानुच्चारितानां तत्सम्भवतीत्यर्थः । समाधत्ते—उच्चार्यन्त एवेति । क्वचिद्देश इत्यर्थः । तर्हि स्मृतिप्रणयनवैयर्थ्यं स्यादत आह—विप्रकीर्णत्वादिति । एतच्च काश्चित्क्वचिदिति पूर्वमेव विवृतम् अनुपलम्भे हेतुः । तादर्थ्येन शाखान्तराध्याय्यर्थत्वेन । निबन्धनं स्मृतिप्रणयनम् । तच्छाखाध्यायिष्वप्यर्थवत्वमाह—उपलम्भे वेति । मन्दधीभिः मीमांसान्यायानभिज्ञैः । अनुपसंहरणीयानाम् अनिश्चेयार्थानाम् ॥

इति स्मृत्यधिकरणम् ॥१॥

२

विरोधे० आपवादिकीं पूर्वाधिकरणेन सङ्गतिमाह—उत्सृष्टस्येति । असति बाधके उक्तस्येत्यर्थः । प्रत्यक्षेति । "औदुम्बरीं स्पृष्ट्वोद्गायेत्" इति प्रत्यक्षा श्रुतिः । तद्विरुद्धा च "औदु-

स्मृतय उदाहृत्य विचार्यन्ते–किं प्रमाणमप्रमाणं वा ? इति। तदर्थं च पूर्ववदेव श्रुतिमूलत्वं भ्रान्त्यादिमूलत्वं वेति चिन्तनीयम्। तत्र पूर्वाधिकरणं समस्तमिह पूर्वपक्षः।

न च प्रत्यक्षश्रुतिविरोधात् स्मार्त्तश्रुतिकल्पनानवक्लृप्तिः, द्वयसम्भवात्, व्रीह्या-दिश्रुतिवत्। यत्र हि द्वयोरसम्भवस्तत्रैकविषयेण प्रत्यक्षेणेतरविषयमनुमानं प्रमेयापहारादनायासेन निराक्रियते वह्नाविव शैत्यानुमानम्। यत्र तु द्वयसम्भवस्तत्र शीघ्रप्रवृत्तमपीतरन्नेतरस्य विषयमपहरतीति तद्विषयमनुमानं न शक्नोति प्रतिषेद्धुम्। सम्भवति च युगपदनुपसंहरणीयार्थमपि श्रुतिद्वयं व्रीहियववद्बृहद्रथन्तरग्रहणादिविषयश्रुतिवदिति प्रत्यक्षेणापि स्पर्शविधिना सर्ववेष्टनश्रुतिविषयमनुमानं न शक्यं निराकर्त्तुम्। कथं तर्हि श्रुतिलिङ्गादिषु पूर्वपूर्वेणोत्तरोत्तरस्य बाधः ? तत्रापि हि श्रुतिद्वयसम्भवान्न क्लृप्तया कल्प्या निराकर्त्तुं शक्यते। उच्यते–नैव तत्र प्रमेयापहारनिबन्धनो बाधः, किन्तु कल्पनामूलोच्छे-

---

म्बरी सर्वा वेष्टयितव्या" इति स्मृतिः। सदोमण्डपे निखाता उदुम्बरकाष्ठस्थूणा औदुम्बरी, तां स्पृष्ट्वोद्गता ऋत्विग्विशेष उद्गानं कुर्यादित्यर्थः। सर्वा औदुम्बरी वस्त्रेणाच्छादनीयेति स्मृत्यर्थश्च मिथो विरुद्धौ। पूर्वाधिकरणं तत्सिद्धान्तस्समस्तं सकलोपपत्तियुक्तम्। सिद्धान्तयुक्तिमाशङ्कते–न चेति। सर्ववेष्टने प्रत्यक्षश्रुतिबोधितस्पर्शासम्भवेन तस्मिंश्च सति सर्ववेष्टनायोगेन विरोधात् स्पर्शनस्य च प्रत्यक्षश्रुत्या निश्चयाद्बाधितं सर्ववेष्टनं कल्पयितुमशक्यं वन्हाविव शैत्यमित्यर्थः। कथं तत्राह––व्रीह्यादीति। आदिना यवश्रुतिपरिग्रहः। यथा व्रीहियवयोरेकस्मिन् यागे विकल्पेन सम्भवात्तद्विधायकश्रुत्योस्सम्भवः, तथा स्पर्शवेष्टनश्रुत्योरपीत्यर्थः। कथं तर्हि औष्ण्यप्रत्यक्ष शैत्यानुमानुमानयोरसम्भवस्तत्राह––यत्र हीति। यत्र वन्ह्यादौ। द्वयोः शैत्यौष्ण्ययोः। असम्भवः वस्तुनि विकल्पासम्भवेन कदाचिदुष्णः कदाचिच्छीत इत्यसम्भव इत्यर्थः। प्रमेयापहारात् प्रमेयस्य शैत्यस्याभावनिश्चयात्। प्रकृते तु नैवमित्याह––यत्रेति। इतरत् प्रत्यक्षश्रुत्यादि। इतरस्य स्मृतिकल्प्यश्रुत्यादेः। अपहरति असत्त्वेन निश्चिनोति। द्वयसम्भवमुपपादयन् पूर्वपक्षदार्ढ्यार्थं दृष्टान्तान्तरमप्याह––सम्भवति चेति। युगपत् समुच्चयेन। अनुपसंहरणीयार्थम् अननुष्ठेयार्थम्। तथा च समुच्चायासम्भवेऽपि विकल्पेन सम्भवोपपत्तिरिति भावः। तत्र व्रीहियवयोस्तृतीयात्वलान्निरपेक्षसाधनत्ववशादसमुच्चयः, रथन्तरपृष्ठबृहत्पृष्ठाख्यस्तोत्रयोर्वचनादेव विकल्पबोधकात्, षोडशिसंज्ञकग्रहस्य तु सोमरसविशेषस्य तदभावस्य च विरोधादेवेत्यूह्यम्। कथमिति। 'श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इति सूत्रे श्रुत्यादिभिर्लिङ्गादीनां बाध उक्तः, सोऽनुपपन्नः। अग्निचयनप्रकरणपठितस्य "कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे" इतीन्द्रप्रकाशकमन्त्रस्य "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इति श्रुत्या गार्हपत्योपस्थाने लिङ्गादिन्द्रोपस्थाने च विनियोगे विरोधाभावेनोभयसम्भवादित्यर्थः। कल्प्या ऐन्द्र्या इन्द्रमुपतिष्ठेतेति लिङ्गकल्प्या श्रुतिः। वैषम्यमाह––नैवेति। सर्ववेष्टन श्रुत्यादिषु प्रमेयापहारः शङ्क्यमानो विकल्पेन द्वयसम्भवान्निराकृतः, इह तु तच्छङ्कापि नेत्येवकारार्थः। कल्पनेति। इन्द्रप्रकाशनलिङ्गनैन्द्रमन्त्रेणेन्द्र उपस्थातव्य इति श्रुतिकल्पनायां मूलमैन्द्रमन्त्रस्य प्रयोजनाकाङ्क्षा क्रतोश्च मन्त्रजन्योपकारापेक्षा तस्य प्रत्यक्षश्रुत्युक्तप्रयोजनलाभेनोच्छे-

दात्। यावद्धि मन्त्राम्नानमनवाप्तप्रयोजनं प्रकरणी चाकृतार्थस्तावदेव तत्सिद्धयर्थं श्रुतिकल्पनं प्रमाणवत्। यदा तु कल्पितया श्रुत्या द्वयोरपि नैराकाङ्क्ष्यम्, तदा मूलोच्छेदादाकाङ्क्षाधीना श्रुतिकल्पना नैवोन्मज्जति। अत्र तु प्रत्यक्षया श्रुत्या न स्मृतेर्मूलाकाङ्क्षा निवर्त्यते, यतो मूलोच्छेदादनुमानविरोधः स्यात्। यदि परं प्रमेयापहारादग्नाविव शैत्यानुमानं प्रत्यक्षेण बाध्येत, न चैवं संभवति, श्रुतिद्वयसंभवात्। अग्नेर्हि शैत्यौष्ण्ये न सम्भवतः, परस्परोपमर्दकत्वात्तयोः। अतः प्रत्यक्षेणौष्ण्येन शैत्यस्यापहृतत्वान्न तद्विषयमनुमानमुदेतुमुत्सहते। अत्र तु सम्भवति श्रुतिद्वयं व्रीहियवादिवदित्युक्तम्। अथवा श्रुतिस्मृतिप्रमेये न मिथो विरुद्धयेते, न हि व्रीहिशक्त्या यवशक्तिर्विरुध्यते, सा वा तया। स्पर्शशक्त्या वा वेष्टनशक्तिः, सा वा तया। शक्तिमात्रं हि विधेः प्रमेयम्। अतोऽत्रानुमानस्य प्रत्यक्षेणाविरोधात् विरुद्धानामपि प्रामाण्यमिति प्राप्तेऽभिधीयते—

अप्रामाण्यं विरुद्धानामशक्यार्थविधानतः।
औदुम्बरीं न शक्नोति सर्वां वेष्टयितुं स्पृशन्॥
वेष्टितां वापि संस्प्रष्टुमतोऽन्योन्यविरोधतः।
प्रमेयापहृतेरेव बाधः स्याद्वह्निशैत्यवत्॥

अशक्यार्थविषयता हि मूर्द्धाभिषिक्तमप्रामाण्यनिदानं विधीनाम्। सागरं तरेदित्यादिवत्। अशक्यञ्च स्पृशता वेष्टयितुम्, वेष्टयता वा स्प्रष्टुम्। अतो वेष्टयेत्स्पृशेदिति अशक्यार्थविधानान्न तावदुभयोरपि प्रामाण्यं सम्भवतीत्यवश्यमन्यतरद्बाधितव्यम्।

---

दादित्यर्थः। एतदेवोपपादयति—यावद्धीति। प्रकरणमस्यास्तीति प्रकरणी क्रतुः। अकृतार्थः अलब्धोपकारः। तत्सिध्यर्थं मन्त्रप्रयोजनक्रतूपकारयोः सिध्यर्थम्। वेष्टनस्मृतेरपि तर्हि मूलोच्छेदाद्बाध इत्याशङ्कामपाकरोति—अत्र त्विति। तस्मात्प्रमेयापहारादेव बाधः शङ्क्यः। स तु प्रागेव निरस्त इति सप्रपञ्चमाह—यदीति। सम्भावनायां यदिशब्दः। परस्परेति। परस्पराभावसामानाधिकरण्यनियतत्वादित्यर्थः। ननु स्पर्शनवेष्टनानुष्ठानयोर्विकल्पेन विरोधपरिहारो न युक्तः, विकल्पस्य वक्ष्यमाणाष्टदोषदुष्टत्वेन क्लृप्तकल्प्ययोरतुल्यबलत्वेन चासम्भवादत आह—अथवेति। न ह्यनुष्ठानं शास्त्रप्रमेयं येन विरोधस्स्यात्। किन्त्विष्टसाधनत्वाख्यशक्तिमात्रम्, तद्बोधस्यावश्यकत्वात्, अनुष्ठानन्त्वर्थात्। यथा लोके नदीतीरे फलानि सन्तीत्युक्ते फलार्थिनस्तीरगमनानुष्ठानम्। तथा च स्पर्शवेष्टनयोरपूर्वसाधनताबोधे न विरोध इत्यर्थः। पूर्वपक्षमुपसंहरति—अत इति। अनुमानस्य अनुमेयवेदवाक्यस्य। द्वितीयपक्षे विरुद्धानामित्यस्य तत्त्वेन भासमानानामित्यर्थः।

सिद्धान्तसंक्षेपमाह—अप्रामाण्यमित्यादि। अशक्यार्थः बाधितार्थः। तदेवाह—औदुम्बरीमिति। संस्प्रष्टुं न शक्नोतीत्यनुषङ्गः। स्पृशेस्त्वाचसाक्षात्कारवाचितया सर्ववेष्टने वस्त्रस्पर्श एव स्यान्नौदुम्बरीस्पर्श इति भावः। श्लोकं व्याचष्टे—अशक्यार्थेति। मूर्धाभिषिक्तं विधिशिरस्यापतितमित्यर्थः। प्रवृत्तिविषयस्यैव प्रवर्तनारूपविधिविषयत्वाद् अशक्यस्य च

ननु शक्तिमात्रं विधेः प्रमेयम्, संभवति चाननुष्ठीयमानयोरपि शक्तिरिति सत्यप्यनुष्ठानविरोधे प्रमेयभूतशक्त्यविरोधादुभयोः प्रामाण्यमुपपन्नमिति नैकस्यापि बाधो युज्यते। तत्किमिदानीं सागरं तरेदग्निना सिञ्चेदित्यादीनामपि प्रामाण्यम्? अननुष्ठीयमानस्यापि शक्तिसद्भवात्, तथा सामान्यविशेषशास्त्रयोरपि न विरोधः स्यात्, आहवनीयपदयोरुभयोरपि शक्तिसम्भवात्, आहवनीयस्य न पदेन बाधः स्यात्, अविरुद्धस्य दुर्बलस्यापि बाधायोगात्। न चात्र श्रुत्यादिभिरिव लिङ्गादीनां मूलोच्छेदेन श्रुतिकल्पनाविरोधाद्बाधसम्भवः, सामान्यशास्त्रस्यापि प्रत्यक्षत्वात्तन्मात्रेण होमान्तरेष्विव पदहोमेऽप्याहवनीयसिद्धेः। अतोऽत्र सामग्रीविरोधासंभवात्प्रमेयविरोधादेव बाधोऽङ्गीकर्त्तव्यः, शक्तिमात्रे च प्रमेये तद्विरोधाभावान्न बाधः सिध्येत्। एवमुत्पुत्पन्नशिष्टनित्यनैमित्ति-

---

प्रवृत्यविषयत्वात्प्रवर्तनापि तद्विषया मिथ्यैव स्यादिति भावः। वेष्टयेदिति। सर्वामिति शेषः। अन्यतरदित्यापाततः। श्लोके वन्हिशैत्यदृष्टान्तेन दुर्बलस्मृतिबाधस्यैव विवक्षितत्वादाद्यपूर्वपक्षखण्डनमसाप्यैव प्रसङ्गाद् द्वितीयपूर्वपक्षं तुच्छतया निराकर्तुं शङ्कते—नन्विति। अननुष्ठीयमानयोरित्यस्य युगपदित्यादिः। किं सर्वथैवानुष्ठानायोग्येऽपि शक्तिरङ्गीक्रियते? उत कदाचिदननुष्ठीयमानेऽपि तद्योग्ये? नाद्य इत्याह—सागरमिति। इष्टापत्तौ लोकप्रसिद्धिविरोध इति भावः। न द्वितीय इत्याशयेनाह—तथेति। "आहवनीये जुहोति" इति सामान्यशास्त्रम् "पदे जुहोति" इति विशेषशास्त्रम्। सोमक्रयार्थं नीयमानाया गोः पदे होमविशेषविधायकम्। शक्तिसम्भवात् होमाधिकरणत्वयोग्यताख्यशक्तिसम्भवात्। ननु विशेषशास्त्राद्दुर्बलत्वात्सामान्यशास्त्रस्य बाधस्स्यादत आह—अविरुद्धस्येति। विरोधप्रसञ्जितस्य बाधस्य व्यवस्थापकं दुर्बलत्वं न तु प्रसञ्जकमिति भावः। ननु तत्तद्विशेषरूपावच्छिन्नोद्देशेन प्रवृत्तौ तत्तद्रूपावच्छिन्ननिरूपितसाधनताज्ञानं हेतुः, तच्च न सामान्यशास्त्रादित्यवश्यं तत्तद्विशेषशास्त्राणि कल्पनीयानि। एवञ्च क्लृप्तविशेषशास्त्रविषये पदहोमादौ श्रुतेन पदादिना नैराकांक्ष्यान्न तत्कल्पना सम्भवतीति लिङ्गादिवदेव तत्र बाधः, न तु प्रमेयापहारादित्याशङ्क्य निराकरोति—न चेति। तन्मात्रेण सामान्यशास्त्रमात्रेण। मात्रपदेन कल्प्यविशेषशास्त्रव्यवच्छेदः। न हि विशेषे प्रवृत्तिस्तत्तद्विशेषरूपावच्छिन्ननिरूपितसाधनताज्ञानमपेक्षते, येन विशेषशास्त्राणि कल्प्येरन्। किन्तु सामान्यरूपेणैव तदालिङ्गितसकलविशेषसाधनताग्रहम्। स च सामान्यशास्त्राज्जात एवेति किं तत्कल्पनयेति भावः। सामग्री कल्पनाहेतुभूता आकांक्षा। एवमिति। "वैश्वदेव्यामिक्षा" इति यागोत्पत्तिविधौ शिष्टा विहितामिक्षा, तथा उत्पन्ने यागे पश्चात् "वाजिभ्यो वाजिनम्" इति विहितवाजिनस्य बाधः। तथा "सप्तदशानुब्रूयाद्वैश्यस्य" इति वैश्यकर्तृकत्वे निमित्ते विहितेन सामिधेनीमन्त्राणां साप्तदश्येन नित्यतत्पाञ्चदश्यबाधश्च न स्यादिति प्रसङ्ग इत्यर्थः। आदिना काम्यादिना नित्यादिबाधसंग्रहः। अनुष्ठानविरोध इति। अनुष्ठानेन विरोधो यस्मिन् तादृशेत्यर्थः। तथा चानुष्ठानस्य शास्त्रप्रमेयत्वमावश्यकमित्यर्थः। नन्वनुष्ठानस्य शास्त्राप्रमेयत्वेऽपि तत्फलत्वाच्छीघ्रप्रवृत्तेन च विशेषशास्त्रेण जनिते फले सामान्यशास्त्र-

कादिष प्रसङ्गो दर्शयितव्यः। तस्मादवश्यमनुष्ठानविरोधे शास्त्रविरोधोऽङ्गीकर्त्तव्यः। किञ्च न शक्तिमात्रं भूतार्थकथनवद् विधिना बोध्यते। प्रवर्त्तनारूपो हि विधिरर्थात्समीहितसाधनशक्तिं बोधयति, प्रवर्त्तना चाशक्यविषया न सम्भवतीति स्यादेवाप्रामाण्यम्। यद्यपि समीहितसाधनतैव विध्यर्थ इत्याश्रीयते, तथापि न तन्मात्रं विधिः, किन्तु कर्त्तुः समीहितसाधनता। न चाशक्यार्थे कर्त्तृत्वं सम्भवतीत्यप्रामाण्यम्। यथोक्तम् "आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी" इति। तेनाशक्यानुष्ठानमर्थद्वयं बोधयतोः प्रमाणयोः प्रमेयविरोधादवश्यमन्यतरद् बाधितव्यम्। तत्र प्रत्यक्षेणानुमानस्य बाधोऽग्नाविव शैत्यानुमानस्येति सिद्धमप्रामाण्यं स्मृतीनां श्रुतिविरुद्धानाम्। व्रीह्यादिषु तु द्वयोरपि प्रत्यक्षत्वेनागृह्यमाणविशेषत्वान्नैकेनेतरस्य बाधः सम्भवति, विरुद्धार्थत्वाच्च न द्वयोराञ्जस्येन प्रामाण्यम्। न चाप्रामाण्यमविद्यमानदोषयोः सम्भवतीति गत्यन्तराभावादुभयोरपि

---

फलाभावात्फलतस्तद्बाधो न तु प्रमेयविरोधादित्याशङ्कायामाह—किञ्चेति। भूतः सिद्धार्थः, कथ्यतेऽनेनेति कथनम् "स एवैनं भूतिं गमयति" इत्यादिरर्थवादः तद्वदिति वैधर्म्यदृष्टान्तः। विधिना तदर्थकेन लिङादिना। नन्विष्टसाधनताख्यशक्त्यवबोधने विधेः प्रवर्तकत्वं कुतस्तत्राह—प्रवर्तनेति। प्रवृत्त्यनुकूलव्यापाररूपो विधिः स्वरूपसिध्यर्थं प्रवृत्तिविषयस्य यागादेरिष्टसाधनत्वाख्यां शक्तिमनुमापयति, न तु शक्तिरभिधेयेत्यर्थः। अन्यथा इष्टसाधनमिदं कुरु इति प्रयोगस्य पौनरुक्त्येनासम्बद्धत्वापत्तेरिति भावः। एवं सति स्पष्ट एव विरोधः, प्रवृत्तिरूपस्यानुष्ठानस्य शास्त्रप्रमेयत्वादित्याह—प्रवर्तना चेति। अशक्यविषया अननुष्ठेयविषया। नन्विष्टसाधनतैवावश्यकत्वाद्विध्यर्थः, उदाहृते पौनरुक्त्यमादरार्थमिति मतेऽप्याह—यद्यपीति। कर्तुरिति। अन्यथाननुष्ठितस्यापि मेघच्छायादेः परानुष्ठितस्यापि छत्रधारणादेरन्येष्टसाधनतादर्शनात्फलार्थिनां नियमेन यागाद्यनुष्ठानं स्यादिति भावः। अनुष्ठानस्य शास्त्रप्रमेयत्वमुपपादितं भाष्यसम्मत्या द्रढयति—यथोक्तमिति। शक्तिः अनुष्ठाने योग्यता। सा च यद्याख्यातान्यनुष्ठानरूपमर्थं ब्रुवन्ति तदा सहकारिणी स्यादिति भावः। एवञ्च सति श्रुतिबाध एव किं न स्यादत आह—तत्रेति। यत्र त्वेकबाधे विनिगमकं नास्ति तत्र द्वयोरपि पाक्षिकबाधकल्पनया विकल्प इत्याह—व्रीह्यादीति। आञ्जस्येन सर्वप्रयोगव्यापित्वेन। अप्रामाण्यमेव तर्हि द्वयोरपि स्यात्तत्राह—न चेति। दोषः भ्रमादिर्वक्तृगतः, तस्य चापौरुषेयत्वादेवेति भावः। इदमुपलक्षणं स्वाध्यायविधिपरिगृहीतत्वादेः। ननु विकल्पो न युक्तः, अष्टदोषदुष्टत्वात्। तथाहि—समयारेकत्यागेनापरानुष्ठाने निमित्तम्, एकशास्त्रप्रामाण्यत्यागः अप्रामाण्यारोपश्चेति द्वयं निर्निमित्तकत्वाद्दोषः। पुनश्च कदाचित्तत्परित्यागेन पूर्वानुष्ठाने त्यक्तप्राण्यस्य पुनः स्वीकरणम्, कल्पिताप्रामाण्यत्यागश्चेति दोषद्वयमिति चत्वारो दोषा अनुष्ठानाननुष्ठानाभ्यामेकस्मिन्, व्रीह्यादिशास्त्रेऽप्यनुष्ठानाननुष्ठानाभ्यां दोषा द्रष्टव्याः। न च दोषाणां चतुष्ट्वादष्टत्वानुपपत्तिः, व्रीहिशास्त्रगताप्रामाण्यकल्पनातो यवशास्त्रगततत्कल्पनादेर्भेदादत आह—गत्यन्तराभावादिति. तदुक्तम्—

पाक्षिको बाधः कल्प्यते। न चैवं शास्त्रस्याप्रामाण्यम्, यथा सामान्यशास्त्रस्य विशेषशास्त्रबाधितस्यापि नाप्रामाण्यम्, तद्वदिहापि।

ननु बाधितं भवत्यप्रमाणं च न भवतीति व्याहतमेतत्। सत्यमेतत्; न त्वत्र पारमार्थिकः शास्त्रार्थो बाध्यते, येनाप्रामाण्यं शास्त्रस्य स्यात्, किंतु प्रतिपक्षमनालोचयतो यः शास्त्रस्य स्वरसतः सार्वत्रिकत्वप्रत्ययः, सोऽत्र बाध्यते, तद्बाधाच्च पाक्षिकानुष्ठानपरत्वं शास्त्रस्याध्यवसीयते, सामान्यशास्त्रस्येव विशेषशास्त्रानाक्रान्तविषयपरत्वमिति नाप्रामाण्यम्। न त्वेवं स्मृतिवशेन श्रुतिस्वरूपभङ्गेन स्पर्शनस्य पाक्षिकत्वं कल्पयितुं शक्यते, स्मृतेः स्वतोऽप्रमाणत्वेन श्रुतिबाधासामर्थ्यात्, श्रुतिकल्पनस्य च प्रत्यक्षश्रुतिविहितस्पर्शविरोधेन विरुद्धत्वात्।

ननु पाक्षिकत्वेनापि प्रत्यक्षश्रुतेरुपपत्तेर्यस्मिन् पक्षे सा नास्ति तत्र स्पर्शाभावेन वेष्टनस्यापि शक्यानुष्ठानत्वात्तद्विषये श्रुतिकल्पनमुपपन्नमिति चेत् न; इतरेतराश्रयात्। स्वरसतो हि श्रुतिवाक्यादपाक्षिकं स्पर्शनं गम्यते। तस्मिंश्चापाक्षिके न स्मार्तश्रुतिकल्पनम्, अशक्यत्वात्। न हि स्पृशता वेष्टयितुं शक्यते। तत्र स्पर्शनस्य पाक्षिकत्वे सति शक्यार्थतामापाद्य काल्पनिकी श्रुतिरात्मानं लभते। तस्यां च लब्धात्मिकायां तद्विरोधात्स्पर्शनस्य पाक्षिकत्वमितीतरेतराश्रयत्वं स्यात्। अतोऽत्र श्रुत्यसम्भवाद्भ्रान्त्यादिमूल-

---

'एवमेषोऽष्टदोषोऽपि यद्व्रीहियवशास्त्रयोः।
विकल्प आश्रितस्तत्र गतिरन्या न विद्यते'॥ इति।

न चैवमिति। एवं-द्वयोरपि पाक्षिकत्वकल्पने। शास्त्रस्येति जातावेकवचनम्।

ननु बाधितार्थकत्वमेवाप्रमाणत्वम्। एवञ्च दृष्टान्तोऽप्यसिद्ध इत्याशङ्कते—नन्विति। परमार्थिक इति। तात्पर्यविषय इत्यर्थः। प्रतिपक्षं विरुद्धशास्त्रम्। अनालोचयतः पुरुषस्य। शास्त्रस्य व्रीह्यादिशास्त्रस्य। स्वरसतः औत्सर्गिकः। सार्वत्रिकत्वप्रत्ययः सर्वप्रयोगविषयत्वप्रत्ययः। तथा चोद्देश्यतावच्छेदकावच्छेदेनान्वयो न तात्पर्यविषय इति तद्बाधेऽपि नाप्रामाण्यमित्यर्थः। तर्हि कुत्र तात्पर्यम्? तत्राह—पाक्षिकेति। कादाचित्कव्रीह्याद्यनुष्ठानपरत्वमित्यर्थः। सामान्येति। "यदाहवनीये जुहोति" इति सामान्यशास्त्रस्य पदहोमातिरिक्तहोमपरत्वं यथेत्यर्थः। एवं विनिगमकाभावे विकल्प उक्तः। स्मृतेस्तु मूलश्रुतिसापेक्षतया दुर्बलत्वात्प्रत्यक्षश्रुत्या विकल्प इत्याह—न त्वेवमिति। एवं व्रीह्यादिवत्। स्वरूपं स्वाभाविकं रूपं सार्वत्रिकत्वम्। ननु स्मृतिकल्पितश्रुतेस्तद्बाधकत्वमस्त्वित्यत आह—श्रुतीति। विरुद्धत्वात् बाधितत्वात्।

ननु व्रीह्यादिवत्पाक्षिकत्वेन स्पर्शवेष्टनोभयसम्भवाद्वेष्टनाभावनिश्चये श्रुत्यनुमानं स्यादिति शङ्कते—नन्विति। इतरेतराश्रयमुपपादयति—तत्रेति। अनुमितश्रुतिवशेन स्पर्शस्य पाक्षिकत्वं तस्मिंश्च सत्यविरोधाच्छ्रुत्यनुमानमित्यर्थः। ननु मन्वादीनां कथं भ्रान्त्यादिसम्भवोऽत

कृतत्वादप्रमाणमेवञ्जातीयकं स्मरणम्। न ह्यसंभवद्भ्रान्त्यादिकं स्मरणं कस्यचिदपि शक्यमध्यवसितुम्। संभाव्यमाने तु भ्रान्त्यादौ दृष्टानुगुणाऽदृष्टकल्पना। असति विरोधे कर्तृसामान्यात् वैदिकपरिग्रहदार्ढ्याच्च श्रुत्यनुमानमिति न सर्वत्रैकरूप्यमिति।

इति विरोधाधिकरणम् ॥ २ ॥

## ३

सू० हेतु०। अधिकरणान्तरं वा। अत्र गृह्यमाणकारणं श्रुत्यविरुद्धस्मरणमुदाहरणम्। "वैसर्जनहोमीयं वासोऽध्वर्युर्गृह्णाती"त्यादिकम्। तत्प्रमाणमप्रमाणं वेति विचारः। कर्तृसामान्यात्प्रत्यक्षश्रुतिविरोधाभावात् प्रामाण्यमिति प्राप्ते, उच्यते—न दृष्टे हेतौ हेत्वन्तरानुमानं प्रकल्पते। दृष्टश्चात्र लोभ एव हेतुरिति। तत एव स्मृत्युपपत्तेर्नात्यन्तापरिदृष्टवैदिकवचनकल्पनोपपत्तिः। अतः श्रुतिविरुद्धं दृष्टकारणं च स्मरणमप्रमाणम्, अतोऽन्यत्प्रमाणमिति।

यस्त्वाचार्यैरधिकरणभङ्गो दर्शितः, तत्रायमभिप्रायः—भवेदेवं स्मृतेर्बाधो यदि

---

आह—न हीति। कस्यचित् पुरुषस्य। अतएव वेदस्य प्रामाण्यसिद्ध्यर्थमपौरुषेयत्वं साधितम्। दृष्टेति। प्रत्यक्षश्रुत्यनुगुणा अदृष्टस्य भ्रान्तिमूलस्य कल्पना युक्तेति शेषः। एवं विरोधे पूर्वाधिकरणापवादे सति अविरोधविषयं पूर्वाधिकरणमित्याह—असतीति। सूत्रार्थस्तु-तुशब्दः पूर्वन्यायव्यावृत्त्यर्थः। प्रत्यक्षश्रुतिविरोधे स्मृतिवचनमनपेक्ष्यमनादरणीयमप्रमाणमिति हि यस्मादसति विरोधे स्मृतिमूलश्रुत्यनुमानमिति।

इति विरोधाधिकरणम् ॥२॥

## ३

हेतुदर्शनाच्च। एतत्सूत्रं पूर्वाधिकरणशेषत्वेनाभ्युच्चयहेतुः। यत्तु लोभादिदर्शनात्सर्ववेष्टनादिस्मृतीनामप्रामाण्यमिति भाष्ये व्याख्यातम्। तन्मन्दप्रयोजनत्वादुपेक्ष्य तत्रैवोक्तं विचारान्तरमाह—अधिकरणेति। गृह्यमाणं ज्ञायमानं कारणं मूलं लोभादि यस्य तत्। [अत्रान्तर] दीक्षाविसर्जनार्थो होमो वैसर्जनहोमः। स च यजमान-पत्नी-पुत्रादिषु वाससा प्रच्छादितेषु क्रियतेऽतस्तत्सम्बन्धि वासो वैसर्जनहोमीयम्। आदिना 'यूपहस्तिनो दानमाचरन्ति' इत्यादीनां संग्रहः। यूपवेष्टनवस्त्रं यूपहस्तिशब्दार्थः। कर्त्रिति साधकोपन्यासः। विरोधाभावादिति पूर्वाधिकरणोक्तबाधकस्याभाव उक्तः। अनेन प्रत्युदाहरणसङ्गतिसूचनम्। दृष्टे हेताविति। सम्भवतीति शेषः। न चैवं दानविषयकस्मृतिमात्रस्याप्रामाण्यापत्तिः, संप्रत्ययमन्वादिप्रणीतानामप्रामाण्यायोगात्। प्रकृते तु मुक्तकपठ्यमानस्मृतीनामुदाहरणात् उत्सर्गापवादविषयं सङ्कलयन्नुपसंहरति—अत इति।

अधिकरणेति। अधिकरणयोः श्रुतिविरुद्धाया गृह्यमाणलोभादिमूलायाश्च स्मृतेरप्रामाण्यसिद्धान्तयोर्भङ्गो दूषणमित्यर्थः। भवेदिति। स्मृतिमूलश्रुतेर्नित्यानुमेयत्वे

स्मृतिमूलं न कदाचिदपि कैश्चिदकस्यांश्चिदपि शाखायां पठ्यत इत्यध्यवसातुं शक्यते। तदा हि तत्र सर्वपुरुषाणामेव प्रत्यक्षप्रसराभावात् केवलं स्मृत्यनुमानसमधिगम्यं श्रुतिवाक्यमनुमानस्य च प्रत्यक्षविरोधेऽनुदयात्सकलजनसमस्तप्रमाणपथातिवर्त्तिगगनकुसुमायमानं स्यात्। न चैवमध्यवसातुं शक्यम्, अनन्तचरणाधाराणामनेकसहस्राणां वेदशाखानां कात्स्न्र्येनोपलम्भासम्भवात्। एवं चानध्यवसीयमाने सत्यपि विरोधे दुर्लभतरमप्रामाण्यम्, नित्यानुमेयश्रुतिमूलतानिराकरणात्। यदा हि शाखान्तरविप्रकीर्णानि पुरुषान्तरप्रत्यक्षाण्येव वेदवाक्यानि स्मृतीनां मूलम्, तदा वेष्टनवाक्यमपि पुरुषान्तरप्रत्यक्षतया सम्भाव्यमानं कथमिव शक्यं नास्तीति वक्तुम्। द्वेधा हि तस्यासत्त्वावधारणम्-बाधकप्रमाणसद्भावात्, साधकप्रमाणाभावाद्वा भवेत्। बाधकसद्भावोऽपि द्वेधा-दृश्यादर्शनाद्वा, तदभावनियतार्थान्तरदर्शनाद्वा। न तावद्दृश्यादर्शनं समस्तशाखोपलम्भाभावादित्युक्तम्। न च विरुद्धश्रुतिदर्शनं तदभावनियतम्, येन तद्दर्शनात्तदभावोऽवधार्येत। विरुद्धानामपि ग्रहणाग्रहणादिश्रुतीनां सहस्रं दर्शनात्। तेन न तावद्बाधकसद्भावः। नापि साधकाभावः, स खल्वात्मन सर्वेषां वा भवेत्। न तावत्स्वप्रमाणनिवृत्त्या वस्त्वभावनिश्चयः, अतिप्रसङ्गात्। न च समस्तपुरुषाणां तत्र प्रमाणं नास्तीति शक्यते निश्चेतुम्। संभवति हि तस्य शाखान्तरे समाम्नानं पुरुषान्तरेण च प्रत्यक्षीकरणम्। नित्यानुमेयत्वे हि सर्वेषामिहानुमानमेव प्रमाणं स्यात्। तच्च प्रत्यक्षश्रुतिविरोधे नोदेतीति सर्वपुरुषाणां साधकप्रमाणाभावादीषत्करमभावावधारणं स्यात्। न च तदस्तीत्युक्तम्, अन्धपरम्परादोषात्। अतः पुरुषान्तराणामिह प्रत्यक्षसम्भवात् तस्य चात्मप्रत्यक्षतुल्यत्वान्न स्मार्त्तश्रुतिनिराकरणम्। तदुक्तम्—

'आत्मीयात्परकीयस्य दौर्बल्यं न हि किंचन।
प्रत्यक्षत्वाविशेषेण स्वप्रत्यक्षसमं हि तत्'॥ इति।

---

हि विरोधिश्रुतिसत्त्वेऽनुमानानुदयाभावनिश्चयस्स्यात्। तत्तु निराकृतमेव प्राक्। प्रत्यक्षन्तु विरोधेऽपि सम्भवतीति न बाधनिश्चयः। न हि स्वप्रत्यक्षाभावमात्रेणाभावनिश्चयः, शाखान्तरे श्रुतिसत्त्वेऽपि तदनालोचनोपपत्तेः। तदाह—अनन्तेति। चरणाः अध्येतारः तदाश्रितानामित्यर्थः। सहस्रशब्दो बह्वर्थः। बाधसन्देहस्तु न कल्पनायां प्रतिकूल इत्याह—एवञ्चेति। विरोधे सत्यपि नाप्रामाण्यं किमुताविरोधे। वैसर्जनहोमीयवासोदानस्मृतेरित्यपिशब्दार्थः। अथवाभ्युपेत्यवादः। सर्ववेष्टनस्मृतेर्द्वित्राङ्गुलव्यतिरिक्तविषयत्वेनाविरोधस्य वार्तिकेऽभिधानात्। तस्येति। वेष्टनवाक्यस्येत्यर्थः। दृश्यस्य दर्शनयोग्यस्यादर्शनमनुपलब्धिरस्तीति। तदभावेति। तदभावव्याप्यवत्तानिश्चयादित्यर्थः। समस्तेति। तथा च दर्शनयोग्यत्वाभावान्न योग्यानुपलब्धिरस्तीति भावः। द्वितीयहेतुं दूषयति—न चेति। श्रुतिदर्शनं दृश्यमाना श्रुतिः। सहस्रं सहस्रश इत्यर्थः। अतिप्रसङ्गादिति सार्वज्ञ्याभावेन स्वाज्ञानसकलाभावप्रसङ्गादित्यर्थः। तस्य स्मृतिमूलवचनस्य। नित्येत्यादि व्याख्यातं प्राक्। स्मार्तेति। स्मृतिमूलेत्यर्थः। नन्वेतावता

यदा चैवं स्वशाखापठितश्रुतितुल्यप्रमाणतया स्मार्त्तमपि वेदवाक्यं सम्भाव्यते, तदा स्मृतिलिङ्गकमनुमानं न केनचित्प्रतिबध्यत इति न निर्मूलत्वं स्मृतेः शक्यते वक्तुम्। ततश्च वेष्टनस्पर्शनयोरात्मीयपरकीयप्रत्यक्षश्रुतिविहितयोस्तुल्यकक्षप्रमाणतया विकल्पो न्याय्यः। यदि परमात्मीयस्य प्रत्ययस्य विश्रम्भणीयतया तेनैव परप्रत्यक्षमनादृत्य व्यवहारः क्रियते, ततः क्रियताम्, अनादरश्च च सहस्रतमेऽप्यंशे परप्रत्ययस्यादृष्टमूलस्य न्यायाभासनिमित्तत्वसम्भवाद्भ्रान्त्यादिमूलसम्भवाद्वा ? 'अङ्गं वा समाभिव्याहारात् अविशेषादुभौ वे' तिवत्, न त्वप्रामाण्याध्यवसानम्। व्यवहारविशेषौचित्यप्रतिपादनार्थं चेदं सूत्रम्—'विरोधे त्वनपेक्षं स्या' दिति। श्रुतिस्मृत्योर्विरोधे यत्प्रमाणान्तरानपेक्ष श्रुतिवाक्यं तदेव ग्राह्यम् असति ह्यात्मप्रत्यये परप्रत्ययानुमानक्लेशाश्रयणमिति। यथाहुः—

**'यावदेकं श्रुतौ कर्म स्मृतौ चान्यत्प्रतीयते।**
**तावत्तयोर्विरुद्धत्वे श्रौतानुष्ठानमिष्यते' इति॥**

तेन फलतोऽप्रामाण्यं श्रुतिविरुद्धानां स्मृतीनामिति सिद्धम्। भाष्यमप्यननुष्ठानरूपाप्रामाण्यपरं व्याख्येयम्।

## वर्णकान्तरम्

यद्वा यान्येतानि त्रयीविद्भिर्न परिगृहीतानि शाक्यादिभिर्निर्मितानि धर्म-

---

मूलश्रुतिव्यतिरेकानिश्चयेऽपि कथं श्रुतिनिश्चयस्तत्राह—यदा चेति। निर्मूलत्वं प्रमाणमूलत्वाभावः। यदि स्वपरप्रत्यक्षयोस्तुल्यत्वं तर्हि कथं स्वप्रत्यक्षपक्षपातो लोकानामत आह—यदीति। परं केवलम्। विस्रम्भणीयतया निश्चितप्रामाण्यकतया। व्यवहारोऽनुष्ठानम्। क्रियतामित्यौचित्यमात्रं दर्शितम्। परप्रत्ययानादरे हेतुमाह—सहस्रेति। अनुत्कटकोटिकत्वेनेत्यर्थः। तथा च शङ्काकलङ्कितत्वमनादरहेतुरुक्तः। क्वचिद्दर्शनं विनान्यत्र शङ्काया अयोगात्तदुदाहरति—अङ्गं वेति। "अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति" इति कर्मवाचकाभावस्याशब्दस्य समभिव्याहाराद्दर्शेष्टचङ्गं पिण्डपितृयज्ञ इति कातीयसूत्रार्थः। कालवाच्यमावास्याशब्दस्य लक्षणया कर्मपरत्वमन्याय्यम् अपराह्णपदसमभिव्याहारादिति न्यायस्याभासरूपता। क्वचिद् 'अविशेषादुभौ वा' इत्यपि कातीयं सूत्रं पठ्यते। तत्र 'आग्नेयं चतुर्धा करोति' इति वचनादग्निसम्बन्धाविशेषादाग्नेयाग्नीषोमीयावुभावपि पुरोडाशौ चतुर्धाकार्यावित्यर्थः। अत्राग्नीषोमीयस्याग्नेयशब्देनाभिधाने सोमसापेक्षत्वेन सामर्थ्याभावात्तद्धितानुत्पत्तेरविशेषादिति न्यायस्याभासत्वं ज्ञेयम्। अध्यवसानं निश्चयः। उक्तौचित्यपरत्वेनैव सूत्रं योज्यमित्याह—व्यवहारेति। व्यवहारस्यानुष्ठानस्य विशेषः स्वप्रत्यक्षपक्षपातः। फलत इति। अनुष्ठानत इत्यर्थः।

वाक्यार्थनिर्णायकन्यायव्युत्पादनाभावादत्रापरितोषाद्वर्णकान्तरमाह—यद्वेति। त्रयी वेदत्रयम्। परिग्रहः अध्ययनार्थानुष्ठानरूपः। शाक्या बौद्धाः। तेन पूर्वोक्तस्य त्रिविधस्यापि कर्तृसामान्यस्याभावो दर्शितः। प्रत्युदाहरणेति। कर्तृसामान्ये सति प्रमाण्यं तदभावे तु नेत्येवं प्रकारेणेत्यर्थः। ननु तैः प्रत्यक्षमूलत्वेन प्रामाण्यमङ्गीक्रियते। तच्च तर्कपादे प्रत्यक्षसूत्र एव धर्मस्य प्रत्यक्षाविषय-

शास्त्राभासानि तेषामनेनाप्रामाण्यं पूर्वसूत्रोक्तकर्तृसामान्यप्रत्युदाहरणत्वेनोच्यते। तेषां हि प्रत्यक्षादिमूलत्वेन प्रामाण्यं प्रत्यक्षसूत्रे निराकृतम्। मन्वादिवद्वेदमूलत्वेन प्रामाण्यमिह निराक्रियते। तेषां ह्यसत्यपि प्रसिद्धवैदिकैरग्निहोत्रादिभिः कर्तृसामान्ये भिन्नप्रस्थाना वेदा मूलं भविष्यति। यथैवाथर्वणस्य त्रयीभिन्नप्रस्थानरूपता, तथा चतुर्भ्योऽपि वेदेभ्यो भिन्नरूपा वेदाः सम्भवेयुः। ते चेदानीं प्रलीनाः, मन्वादीनामपि हि केचित्प्रलीनशाखा-मूलतामनुमन्यन्ते, तद्वदत्रापि भविष्यति। इत्थञ्च सम्भवति प्रामाण्ये नाप्रामाण्यं युक्तमिति भवति केषाञ्चिदाशङ्का, साऽपि मन्दविषन्यायेन निराकर्त्तव्येत्येवमर्थमिद-मधिकरणम्। कृतः पूर्वपक्षः। सिद्धान्तस्तु—अविच्छिन्नवैदिकपरिग्रहानुपपत्त्या मन्वादि-ष्वनुपलभ्यमानोऽपि वेदः कल्पितः, शाक्यादिषु त्वत्यन्तं वैदिकविपरीतमवैदिकमप्रमाणं च तदित्येव शिष्टानां स्मरणम्। वेदवैदिकद्वेषिण एव तेषां प्रामाण्यमनुमन्यन्ते। दृष्टानु-सारिणी च कल्पना न तद्वैपरीत्येन। अतोऽत्र वेदकल्पना दवीयसीत्यप्रामाण्यमेव तेषामसन्मूलत्वादिति॥

इति हेतुदर्शनाधिकरणम्॥३॥

---

त्वसाधनान्निरस्तमित्याशङ्क्याह—तेषां हीति। आदिना प्रतिभादिपरिग्रहः। एतदधिकरणस्य त्वन्यो विषय इत्याह—मन्वादीति। मन्वादिस्मृतिवदित्यर्थः। ननु शाक्यादिस्मृत्यर्थानां चैत्य-वन्दनादीनां प्रसिद्धवेदार्थैः स्मर्तृकर्तृसामान्याभावेनानग्निसाध्यत्वेन चात्यन्तविलक्षणतया वेद-मूलत्वासम्भवाद् व्यर्थस्तन्निरासाय प्रयास इत्याह—तेषां हीति। प्रस्थानं रीतिः। तामुदा-हरति—यथेति। बाह्यस्मृतीमामपि शाक्यजैनार्हतादिरूपाणां परस्परमत्यवैलक्षण्यादेक-वेदमूलकत्वासम्भवाद्वेदा इति बहुवचनम्। प्रलीना इति। एतद्देशावच्छेदेनोत्सन्ना इत्यर्थः। सर्वदेशावच्छेदेन प्रलये सर्वदा पठ्यमानत्वरूपनित्यत्वायोगात्। मन्वदीनां मनुस्मृत्यादीनाम्। न च चत्वारो वेदा इति परिगणनानुपपत्तिः, त्रयो वेदा इतिवदवान्तरसाजात्येन तदुपपत्तेः। शाखासु तु नियतसंख्याश्रवणादुत्सादनिरास इति भेदः। ननु वेदाप्रामाण्यवादिनां स्मृतेर्वेदमूल-कत्वेन प्रामाण्यशङ्काया अतितुच्छत्वेन तन्निरासार्थमधिकरणं व्यर्थमत आह—केषाञ्चिदिति। वैदिकानामेवानिभिज्ञानामित्यर्थः। स्मरणमिति।

'या वेदबाह्याः स्मृतयो याश्च काश्चित्कुदृष्टयः।
सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि तास्स्मृताः'॥

इत्यादिस्मृतिरित्यर्थः। दृष्टेति। शाक्यादीनां वेदप्रामाण्यानभ्युपगमः। शिष्टानाञ्च तेष्ववैदिकत्वप्रसिद्धिरिति दृष्टमित्यर्थः। दवीयसीति। वेदमूलत्वाभावनिश्चये वेदमूलकत्वकल्पना दूरतरेत्यर्थः। वैदिकैर्विरोधे त्वनपेक्ष्यं शाक्यादिस्मरणम् असति तु विरोधे कर्तृसामान्याद्वेदमूल-त्वानुमानमित्यस्मिन् पक्षे सूत्रार्थः॥

इति हेतुदर्शनाधिकरम्॥३॥

४

सू० शिष्टाकोपे० 'आचान्तेन कर्त्तव्यम्' ''यज्ञोपवीतिना कर्त्तव्यम्' 'दक्षिणाचारेण कर्त्तव्यम्'' इत्येवमादीनि क्रत्वङ्गस्मरणान्युदाहरणम् । किं प्रमाणमप्रमाणं वेति विचारः । तदर्थं च प्रत्यक्षश्रुत्या विरुध्यन्ते न वेति । तदर्थमप्येभिः किं क्रतुमध्येऽनुष्ठीयमानैः कस्यचिच्छ्रुत्यर्थस्य क्रमादेर्भवति बाधो न वेति । अथवाऽभ्युपेत्यैव विरोधं प्रमाणमप्रमाणं वेति विचारः । तदर्थञ्च प्रमाणप्रमेयबलाबलविसंवादे किं ज्याय इति चिन्त्यते । तथा हि-श्रुतिस्मृत्योः प्रमाणयोः श्रुतिर्बलीयसीति स्थितम् । अतः श्रौतत्वात् क्रमादयः स्मार्तेभ्य आचमनादिभ्यो बलीयांसो विज्ञायन्ते । प्रमेयस्वरूपालोचने तु पदार्थगुणत्वात्क्रमादेराचमनादयः पदार्था बलीयांसोऽवगम्यन्त इति बलाबलद्वयविसंवादात्कतरेण निर्णय इति संदेहः ।

तत्र पूर्वः पक्षः—

श्रुत्युक्तानां क्रमादीनां स्मार्त्तैराचमनादिभिः ।
व्याकोपः स्यादतस्तावत् विस्पष्टैव विरोधिता ॥
ततः श्रुतिबलीयस्त्वात्स्मृतेः स्यादप्रमाणता ।
पूर्वभाविप्रमाणस्थं प्रमेयस्थाद् बलाबलम् ॥
ज्यायस्तेनैव निर्णीते न पश्चादितरादरः ।
नैराकांक्ष्यात्प्रमातृणामतः स्मृत्यर्थबाधनम् ॥

---

४

शिष्टाकोपे० यद्यपि चेदित्यन्तं नेत्यादिकञ्च पृथक्पृथक् सूत्रद्वयम्, तथापि चेदित्यस्योत्तरनिषेधापेक्षत्वात्तावता पूर्वपक्षापर्यवसानाच्च सूत्रद्वयपाठः । आचान्तेन कृताचमनेन । कर्म कर्तव्यमिति कर्माङ्गत्वेनाचमनरूपविशेषणपरो विधिः । एवम् 'उद्धृते दक्षिणे पाणावुपवीतीत्युच्यते बुधैः' इति वचनोक्तविन्यासविशेषविशिष्टकार्पाससूत्रविशेष उपवीतम्, तदेव यज्ञाङ्गत्वाद्यज्ञोपवीतम् । प्रारम्भे कृतमपि भ्रष्टञ्चेत्तदा प्रयोगमध्येऽपि विधीयते । दक्षिणेन हस्तेनाचारो यस्य तेनेत्यपि विशेषणीभूतदक्षिणहस्तविधायकम्, प्रादक्षिण्यप्रकारविधायकं वा । प्रयोगोपक्रमगतानामेषां क्रमादिविरोधासम्भवात् क्रतुमध्य इत्युक्तम् । क्रमादेरित्यादिपदेन कालपरिमाणपरिग्रहः । तथा चोत्सर्गापवादरूपपूर्वाधिकरणद्वयविषयविवेकार्थं विरोधाविरोधविचार एवात्रोपोद्घातसङ्गत्या मुख्यः । प्रामाण्याप्रामाण्यविचारोपन्यासस्तु पूर्वाधिकरणाभ्यामेव सिद्धः फलतयोपन्यस्त इति ज्ञेयम् । एवं पूर्वाधिकरणकोष्ठशोधनरूपत्वेनास्य विचारस्याप्राधान्यापत्तेः पक्षान्तरमाह—अथवेति । एवञ्च विरोधाधिकरणापवादिकी सङ्गतिरिह सूचिता । अभ्युपेत्यैवेति । तथा च विरोधाविरोधविचारपक्ष एव मुख्यः । अभ्युपेत्यवादमात्रेण तु द्वितीयोऽयं पक्ष इति भावः । विरोधे सत्यप्रामाण्यस्य निश्चितत्वात्तत्सन्देहोपपादकं सन्देहमाह—तदर्थञ्चेति । विसंवादे विरोधे । पदार्थगुणत्वात् पदार्थधर्मत्वात् । सिद्धान्तहेतुभूतं प्रमेयबलाबलस्य प्रबलत्वं निरस्यति—पूर्वभावीति । पूर्वोपस्थितमित्यर्थः । प्रमाणस्थं बलाबलमिति शेषः । नैराकाङ्क्ष्यात् किं

"वेदं कृत्वा वेदिं कुर्यादि" ति क्रमः, कालश्च यः प्रधानेनाङ्गानामविप्रकर्षः प्रयोगप्राशुभावश्च प्रयोगवचनावगतः, यश्च पूर्वाह्णादिः परिमाणं चाविस्मृतसर्वपदार्थानुष्ठानसिद्धयर्थं प्रयोगविधिनैवाकाङ्क्षितं पदार्थविधिप्रचयावगतम्, तदेतत् त्रयमपि क्रमकालपरिमाणात्मकमाचमनादिभिरन्यथात्वं प्रतिपद्यते। तेन विरोधस्तावदस्त्येव। विरोधे च श्रुतेर्बलीयस्त्वात् स्मृत्यर्थस्याचमनादेर्बाधः। न च श्रुत्यर्थत्वेऽपि पदार्थगुणभूतत्वात्क्रमादेर्दौर्बल्यमाचमनादेः स्मृत्यर्थस्यापि पदार्थत्वाद्बलीयस्त्वमिति वाच्यम् प्रमाणपूर्वको हि प्रमेयावगमः। तेन पूर्वंभाविप्रमाणस्थं बलाबलं पूर्वमवगम्यते, तेन चाचमनादिभ्यः क्रमादीनां बलीयस्त्वे निर्णीते निराकाङ्क्षत्वान्न पश्चादवगतं प्रमेयबलाबलमादर्त्तव्यम्। तस्मादाचमनादिस्मृतीनामप्रामाण्यम् इति।

सिद्धान्तस्तु—

**पदार्थप्राप्त्यपेक्षत्वात्क्रमादेरविरोधिता ।**
**विरोधेऽपि च दौर्बल्यं पदार्थेभ्यो गुणत्वतः ॥**

सर्वेषु हि पदार्थेषु प्राप्तेषु प्रयोगवेलायां तद्विशेषणतया क्रम आश्रीयत इति। तेन पदार्थप्राप्त्यपेक्षत्वात्क्रमस्यात्यन्तजघन्यप्रमाणकोऽपि पदार्थः पूर्वं प्राप्नोति पश्चात्क्रमः सर्वपदार्थप्रयोगाङ्गतयावतरन्नपि न पदार्थैर्विरुद्धयते। कालोऽप्येवमेव प्रयोगाङ्गत्वात्। यावन्तः पदार्था अवधारितास्तेषां सर्वेषामेव पूर्वाह्णादिकालत्वं प्रधानसंनिकर्षः प्रयोग-

---

बाध्यमित्याकाङ्क्षाभावात्। अयञ्चेतरानादरे हेतुः। वेदो दर्भमुष्टिविशेषः। इति क्रमः इत्यादि बोधितं पदार्थयोरानन्तर्यम्। प्रयोगस्य प्राशुभावः अविच्छेदेन शीघ्रता। तत्र प्रमाणमाह — प्रयोगेति। साङ्गप्रधानानुष्ठानबोधकेन प्रयोगविधिना एककालतारूपाङ्गसाहित्यसम्पत्तये यथासम्भवमविप्रकर्षः अविच्छेदश्चाक्षिप्यत इति भावः। पूर्वाह्णादिरित्यनेनाहर्भागान्तरमपि परिगृह्यते। एवं त्रिविधः कालः परिमाणं पदार्थेयत्तारूपं प्रचयस्समूहः। पञ्चानामुपन्यासात्, त्रयमित्यस्योपपादनायोपाधित्रयेण पुनस्तेषामुपादानम् क्रमेत्यादि। आचमनादिभिरनुष्ठीयमानैरिति शेषः। अन्यथात्वं बाधम्। तथाहि वेदकरणोत्तरं यत् क्षुतादिनिमित्तकमाचमनं क्रियते तदा वेदिकरणस्य तेन व्यवधानात् क्रमबाधः, प्रधानसन्निकर्षबाधः पूर्वाह्णादिबाधश्च। बहुभिराचमनादिभिः परिमाणबाधस्तु स्पष्ट एव। तत एव च वैकल्यात् प्रयोगप्राशुभावबाधोऽपि। एवं दैवाद्यज्ञोपवीतस्रंसने तत्सम्पादनव्यवधानेन क्रमादिबाधो ज्ञेयः। तथा दक्षिणहस्तनियमे तद्वैकल्येन प्राशुभावबाध ऊहनीय इति। द्वितीयपूर्वपक्षोत्थानाय सिद्धान्तयुक्तिं शङ्कते—न चेति। द्वितीयपूर्वपक्षवादी निराकरोति—प्रमाणेति। पूर्वभावि च तत् प्रमाणमित्यन्वयः। पूर्वभावित्वञ्च पूर्वोपस्थितत्वम्। शब्दस्य चक्षुरादिवदज्ञातस्य बोधकत्वाभावात् तज्ज्ञानमवश्यं वाच्यमित्याशयः।

क्रमेण सिद्धान्तद्वयं सङ्गृह्णाति—पदार्थेति। प्रयोगाकांक्षितस्य क्रमादेः प्रयोगविधिना विधानात्तस्य च सकलपदार्थप्राप्तिपूर्वकत्वादित्यर्थः। अविरोधितेति। स्मृतिप्राप्ताचमनाद्यनुरोधेन तद्व्यतिरिक्तव्यवधानाभावरूपस्यैवानन्तर्यस्य विवक्षणादिति भावः। न चैवमपि पूर्वाह्णादिकालविरोधो दुष्परिहर इति वाच्यम्, सामर्थ्यवशेन तत्तन्निमित्तवत्प्रयोगातिरिक्तप्रयोगविषयत्वस्य

प्राशुभावश्च। परिमाणं तु न कस्यचिवच्छास्त्रस्यार्थः, प्रयोगविधिरपि न तदाक्षिपति, अन्यथाप्यविस्मरणसिद्धेः। अथापि शास्त्रार्थस्तथापि प्रयोगौपयिकत्वात्प्रयोगस्य च प्रयोज्यपदार्थप्राप्त्यपेक्षत्वादविरोधित्वम्। यद्यपि क्रमादीनामाचमनादिभिर्विरोधः स्यात्तथापि सर्वपदार्थगुणत्वाद्दौर्बल्यम्। आचमनादयस्तु पदार्थत्वाद् बलवन्तः। न च प्रमाणबलाबलस्य पूर्वभावित्वम्। न हि प्रमाणयोः स्वरूपतो विरोधः, अपि तु प्रमेयविरोधनिमित्तः। प्रमेयगतं हि विरोधमालोच्य प्रमाणविरोधबुद्धिर्भवति। तद् यदैव प्रमेययोर्विरोधो गम्यते, तदैव तयोर्बलाबलमपीति तत एव निर्णये कृते नैराकाङ्क्ष्यात्प्रप्राणबलाबलमनादर्त्तव्यमिति न स्मृतेर्बाधः। यद्धि स्वभावादेवाप्रमाणं शाक्यवाक्यं तत्सर्वदैवानादर्त्तव्यम्। यत्तु बलवद्विरोधापेक्षमप्रमाणं तत्तदभावापेक्षया प्रमाणमेवेत्यवगन्तव्यम्। न चात्र बाधकमस्ति, प्रमाणबलाबलस्याबाधकत्वात्। तस्मादाचमनादेर्बलीयस्त्वात् तदनुरोधेनैव श्रुत्युक्तक्रमादयो बाध्यन्त इत्याचमनादिस्मृतीनामबाधात्प्रामाण्यमिति।

## वर्णकान्तरम्

न त्विदमेवाधिकरणम्। पूर्वपक्षस्यातिमन्दत्वाद् यज्ञोपवीतादेश्च प्रत्यक्षश्रुतिविहितत्वेनानुदाहरणत्वात्। तस्माद्यत् पूर्वं शाक्यादिशास्त्राभासानामप्रामाण्यमुक्तं तत्रैव

---

तत्राभ्युपगमात्, भिन्नस्कन्नादिहोमविधिवशेन तस्यावश्यकत्वात्। परिमाणमिति। इयत्तावधारणमित्यर्थः। अन्यथा उपद्रष्ट्रादिना। अथापीत्यभ्युपेत्य वादमात्रम्। विरोधेऽपि चेत्युत्तरार्द्धं व्याचष्टे--यद्यपीत्यादिना। सर्वपदार्थेति। सर्वेषां वेदवेद्यादीनां गुणभूतत्वादित्यर्थः। विततिरूपक्रमाङ्गीकारेणायं ग्रन्थ इति केचित्। ननु श्रुतिविरोधे सर्ववेष्टनस्मृतिवदाचमनादिस्मृतेर्बाध एव किं न स्यादत आह यद्धीति। शाक्यादिवचनादिकमित्यर्थः। बाध्यन्त इति। आचमनातिरिक्तव्यवधानाभावरूपतया सङ्कोच्यन्त इत्यर्थः। अत्र प्रथमसूत्रेण शिष्टस्य श्रौतक्रमादेरकोपे अबाधे सत्याचमनादिस्मरणमविरुद्धमिति सिद्धान्तोपक्रममाशङ्क्य द्वितीयसूत्रेण नेति तन्निरासः। अविरुद्धं न, किन्तु विरुद्धमेव। कुतः? प्रत्यक्षशास्त्रेणाचमनादिप्राप्तेः पूर्वमेव पदार्थानां क्रमकालपरिमाणैः परिमितत्वादिति पूर्वपक्षः।

सिद्धान्तसूत्रन्तु—'अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्' इति। तस्यार्थः—अपिवेति पूर्वपक्षव्यावृत्तिः। बाधकारणस्याग्रहणे-अनुपलम्भे सति शिष्टैः प्रयुक्तानि—आचमनादीनि प्रमाणत्वेन प्रतीयेरन्निति। एवं यथाभाष्यमधिकरणं प्रदर्श्य तत्र वार्तिककृदुक्तदूषणान्याह—न त्विदमिति। न तु युक्तमित्यध्याहृत्यान्वयः। मन्दत्वादिति। क्रमकालादेः प्रयोगविधावेवान्वयस्य तेन तन्नियममात्रविधेश्च तत्र तत्र व्युत्पादनादविरोधस्य स्पष्टत्वादाद्यपूर्वपक्षस्यातिमन्दत्वम्। द्वितीयपूर्वपक्षस्यापि विरोधमभ्युपेत्योक्तस्य वस्तुतो विरोधाभावादेव तदित्यर्थः। यज्ञोपवीतादेरिति। यज्ञोपवीतं तावद् "उपव्ययते" इति श्रुत्या दर्शपूर्णमासयोर्विहितम्। काठके तु "तस्माद्यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा यज्ञस्य प्रसृत्या" इति सर्वकर्माङ्गतया विहितम्।

चोद्योत्तरत्वेनाद्यं सूत्रद्वयं व्याख्येयम्। यत्तु तेष्वहिंसादिवचनं श्रुतिस्मृतिशिष्टं न कोपयति तत्प्रमाणं भवत्विति चेत्तत्रोत्तरम्—'न शास्त्रपरिमाणत्वात्' इति। न खलु येन केनचित्प्रमितो धर्मः फलं (साधयति तत्प्रमाणं भवति)। 'स्वाध्यायोऽध्येतव्यः' "वेदोऽखिलो धर्ममूलं तद्विदां च स्मृतिशीले धर्मज्ञसमयः प्रमाणं वेदाश्च" "पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः। वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश" इत्येवमादिभिरेव धर्मप्रमितेर्नियमनादन्यतः प्रमितस्य फलसाधनत्वाभावेन धर्मत्वाभावात्तेषामप्रामाण्यमिति॥

---

आचमनन्तु यद्यपि 'त्रिराचम्य' इत्यादि श्रुत्या विहितं प्रकरणाद्ब्रह्मयज्ञाङ्गमेव, तथापि 'न सोमेनोच्छिष्टा भवन्ति' इति श्रुत्युन्नीतविधिसिद्धत्वान्नात्यन्तं स्मार्तम्। एवं दक्षिणपाणिरपि प्रागुदक्प्रवणयज्ञभूमिरूपदेवयजनविध्यर्थवादे "यथा वै दक्षिणः पाणिरेवं देवयजनम्" इति देवयजनतुल्यत्वकीर्तनात्कर्माङ्गत्वेन द्योतित इति न स्मार्तोदाहरणत्वं तद्विधेरित्यर्थः। यद्यप्युपवीताधिकरणे "उपव्ययत" इति विधेर्वासोविन्यासविशेषविषयत्वं स्पष्टमुक्तमिति न तस्य त्रिसूत्रनवतन्तुकयज्ञोपवीतविषयता। काठकवाक्यमपि "अजिनं वासो वा दक्षिण उपवीय" इति वाक्यशेषवशेन वासोविन्यासविषयमेवेति न यज्ञोपवीतस्य श्रौतत्वम्। तथा "न सोमेनोच्छिष्टा भवन्ति" इत्याचमननिषेधोऽप्युच्छिष्टतानिमित्तकस्यैवाचमनस्य द्योतको न तु क्षुतादिनिमित्तस्यापि भाष्योदाहृतस्येति न तस्यापि श्रौतत्वम्। एवं "यथा वै दक्षिणः पाणिः" इत्यर्थवादोऽपि प्राङ्मुखावस्थितस्य स्वभावसिद्धं प्रागुदक्प्रवणं हस्ततलमुपमानीकृत्योपपन्नो न दक्षिणपाणेः कर्माङ्गत्वद्योतनक्षम इति न तस्यापि श्रौतत्वम्। तथाप्यभ्युच्चयवादमात्रमेतत्। पूर्वोक्तमेव तु पूर्वपपक्षमन्दत्वं मुख्यदूषणं बोध्यम्। अत एव तस्मान्नात्रैकमपि विरोधबाधशङ्कायोग्यमिति तदेवोपसंहृतं वार्तिककारैः। एवं सति किमर्थानि सूत्राणीत्यत आह तस्मादिति। पूर्ववार्तिककारकृते विरोधाधिकरणस्य द्वितीयवर्णके। चोद्येति। शङ्कातदुत्तरयोः प्रतिपादकतया यथाक्रममित्यर्थः। व्याख्याप्रकारं दर्शयति—यत्त्वित्यादि। धर्मबोधकशास्त्राणां परिमाणत्वात्परिच्छिन्नत्वान्नियमितत्वादित्युक्ते केनेत्याकांक्षायामादौ श्रुतिं दर्शयति स्वाध्याय इति। अधीतेन स्वाध्यायेनैवापूर्वसाधनकर्मानुष्ठानोपयोग्यनुष्ठेयादिज्ञानं भावयेदिति हि तदर्थः। तेनोपायान्तरप्रमितस्याग्निहोत्रादेर्न श्रेयस्साधनत्वरूपं धर्मत्वमिति सिद्धम्। (अपूर्वेत्यादिज्ञानविशेषणान्निषिद्धतद्वर्जनयोः प्रत्यवायतत्परिहारजनने न स्वाध्यायैकजनितज्ञाननियमः, किन्तु निषेधवाक्यस्य ब्रह्मयज्ञजपादिष्वेवेति न्यायरत्नमालायां व्यक्तम्। एवं सति अहिंसादीत्यत्रातद्गुणसंविज्ञानबहुव्रीहिणा तटाकादिविषयबाह्यवाक्यमुपलक्षणीयम्, तर्हि न हिंस्यादिति शाक्यवचनं कुतो न प्रमाणमिति चेत्, लौकिकवैदिकहिंसासामान्यनिषेधपरत्वादिति वदन्ति।) वेद इत्यादि शील इत्यन्तं गौतमवचनम्। शीलमाचारः। धर्मज्ञानां समयः–वेदादिप्रमित एव धर्म इति विजानतामाचारः। इदमापस्तम्बवचनम्। पुराणेत्यादि याज्ञवल्क्यवचनम्। विद्यानां धर्मेतरपुरुषार्थज्ञानानां धर्मस्य च तज्ज्ञानस्य च स्थानानि हेतव इत्यर्थः। नियमादिति। एतैः प्रमित एव धर्म इति नियमबोधनादित्यर्थः।

## वर्णकान्तरम्

यत्तु तृतीयं सूत्रम् 'अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्' इति तत्सदाचारप्रामाण्यप्रतिपादनार्थमधिकरणान्तरं व्याख्येयम्। अत्रानिबन्धनाः सदाचाराः वसन्तोत्सवादिविषया उदाहरणम्। प्रमाणमप्रमाणं वेति संदेहः। तदर्थं च श्रुतिमूलत्वं भ्रान्त्यादिमूलत्वं वेति चिन्तनीयम्। तत्र स्मृत्यधिकरणे कर्तृसामान्यादाचाराणामपि स्मृतिवत्प्रतिपादितमपि प्रामाण्यं निर्निबन्धनतया व्यतिक्रमसाहससङ्कराच्चाक्षिप्य समाधीयते। यदि वसन्तोत्सवादयोऽष्टकादिवद्वेदमूला भवेयुस्ततस्तद्वदेव मन्वादिभिरपि निबध्येरन्। अनिबन्धनात्तु नैषां मूलं केनचिद्दृष्टम्। आचारपरम्परामात्रमेव दृष्ट्वा मन्वादिभिरपि सदाचारः प्रमाणमित्येवं परोक्षरूपेणाभिधानात्प्रामाण्यमनुमीयत इति मन्यामहे। तत्र सैवान्धपरम्परा स्यात्। धर्मव्यतिक्रमसाहसदर्शनाच्च नाचारमात्राच्छक्यं धर्माध्यवसानमिति पूर्वः पक्षः।

सिद्धान्तस्तु—धर्मबुद्ध्या वैदिकैरनुष्ठानमसति वैदिकत्वेऽनुपपन्नम्, व्यतिक्रमसाहसदर्शनन्तु रागद्वेषादिनिबन्धनत्वान्न धर्मबुद्धिनिबन्धनम्, धर्मबुद्धिनिबन्धनस्य चाचरि-

---

यत्त्विति। 'तेष्वदर्शनाद्विरोधस्य' इत्यस्य वार्त्तिककृन्मतेऽस्मिन् व्याख्याने पूर्वसूत्रशेषत्वमेवेति तथैव पाठो दर्शितः। अग्रे तु यथाभाष्यमुत्तरसूत्रशेषत्वेन पाठ इति ज्ञेयम्। भाष्यकारव्याख्याने विरोधमभ्युपेत्य सिद्धान्तोक्त्या तत्रैतस्यान्वयासम्भवात्। अनिबन्धनाः विशेषतोऽक्षरैर्न निबद्धाः। कर्तृसामान्यं वैदिककर्तृकत्वम्। रागाद्धर्मानुष्ठानं धर्मव्यतिक्रमः। यथा प्रजापतेर्दुहितृगमनम्। बलदर्पाविष्टम्भेन तदेव साहसम्, यथा विश्वामित्रस्य चाण्डालयाजनम्। अत्र शाक्यादिवत्प्रसक्तस्याप्रामाण्यस्यापवादादनन्तरसङ्गतिः। चैत्रकृष्णप्रतिपदि परस्परं क्रियमाणो जलधूलिप्रक्षेपादिर्वसन्तोत्सवः। तद्वदेव अष्टकादिवदेव। सदाचारप्रामाण्यबोधिकायाः 'तद्विदाञ्च स्मृतिशीले' इत्युदाहृतायाः किं मूलं तत्राह—आचारेति। परोक्षरूपेण सामान्यरूपेण। प्रामाण्यं तत्प्रयोजकवेदवचनम्। तथा च श्रुतिगोचरनित्यानुमाना समूला सदाचारस्मृतिरिति भावः। एतेन तादृशस्मृतिप्रामाण्यमपि आक्षिप्यत इति दर्शितम्। ननु वसन्तोत्सवादिर्धर्मः, शिष्टाचारविषयत्वात् अष्टकादिवदित्यनुमानादेव मूलत्वसिद्धिः। न च निबद्धत्वमुपाधिः, वसन्तोत्सवादेरपि सदाचारः प्रमाणमिति सामान्यतो निबद्धत्वेन साधनव्यापकत्वात्, विशेषतो निबन्धनस्य मन्त्रकरणकप्रकाशने घृतकरणकाञ्जनादौ च साध्याव्यापकत्वादत आह—धर्मव्यतिक्रमेति। तथा च व्यभिचारान्नोक्तानुमानसम्भव इति भावः। धर्माध्यवसानं वेदमूलत्वकल्पनेन धर्मत्वनिश्चयः। यद्यपि भोजनादावेव व्यभिचाराद् व्यतिक्रमादिपर्यन्तानुधावनं व्यर्थम्, तथाप्यतिशयार्थं बोध्यम्। नाचारमात्रं हेतुर्येनोक्तदोषस्स्यात्, किन्तु तद्विशेष इति सिद्धान्तमाह—धर्मबुध्येति। एतद्विशेषणं व्यतिक्रमादावसिद्धमित्याह—व्यतिक्रमेति। दर्शनं दृश्यमानं व्यतिक्रमादीत्यर्थः। वैदिकैरिति तु चैत्यवन्दनादिव्यावृत्त्यर्थं बोध्यम्। यथोक्ताचारे सूत्रं योजयन् सिद्धान्तमुपसंहरति—धर्मबुद्धीति। अगृह्यमाणं कारणं रागद्वेषादि यस्य तत्वादित्यर्थः।

तस्यागृह्यमाणकारणत्वाच्छ्रुतिस्मृतिविरोधादर्शनाच्च धर्मलिङ्गत्वाव्यभिचारः। मन्वादिभिस्तु लाघवविकैर्यदि नाम स्वरूपेणानिबध्य सामान्यात्मना शिष्टाचारः प्रमाणमित्येवमुक्तम्, नैतावता कश्चिद्दोषः। तस्मात्स्मृतिवदाचाराणामपि धर्मे प्रामाण्यं सिद्धम्॥

**इति शिष्टाकोपाधिकरणम्॥ ४॥**

**५**

**सू० तेष्वदर्शनात्०** आचारप्रसङ्गाच्छब्दार्थप्रयोगरूपाचारविप्रतिपत्तौ बलाबलं चिन्त्यते। अत्र भाष्ये आर्यम्लेच्छविशेषानुपादानाद्वाक्यशेषेण सिद्धान्तकथनात् शिष्टाचारस्य पूर्वप्रकृतत्वात् यत्र शिष्टानामेव मिथोऽभिधानविप्रतिपत्तिः केषांचिद्वाक्यशेषानुगुणा केषांचिदननुगुणा, तत्र तुल्यबलतामाशङ्क्य वाक्यशेषानुगुणाया बलीयस्त्वं प्रतिपाद्यत इति लक्ष्यते, तत्तूदाहरणाभावाद् यवादिशब्दानां दीर्घशूकादिष्वेव सर्वशिष्टप्रयोगादन्यस्यापि शिष्टप्रयोगस्य विप्रतिपत्तिविषयस्योदाहरणस्यादर्शनान् 'सन्दिग्धेषु

---

धर्मलिङ्गत्वेति। धर्मत्वनिश्चायकत्वस्याव्यभिचारो नियम इत्यर्थः। विशिष्यानिबन्धनन्तु अन्यथा सिद्धत्वान्न बाधकमित्याह--मन्वादीति। स्वरूपेण वसन्तोत्सवत्वादिना अनिबध्येत्यन्वयः।

**इति शिष्टाकोपाधिकरणम्।**

**५**

तेष्वदर्शनात्० इह विचारविषयं सङ्गतिञ्च दर्शयति—आचारेति। धर्मप्रमाणतयोक्तेनाचारेणोपस्थापनादित्यर्थः। शब्दस्यार्थे प्रयोगः। यद्यपि भाष्यकारमते पूर्वाधिकरणे प्रमाणतया नाचार उक्तः तथापि स्मृत्यधिकरण एव तुल्यहेतुत्वेन प्रमाणतयोक्तत्वाद्विरोधाधिकरणे च तदपवादाच्छिष्टाकोपाधिकरणे च श्रौतक्रमादिविरोधेऽपि स्मृतिप्रामाण्यवद्धेतुसाम्येनाचारप्रामाण्यस्यापि प्रतिप्रसवात्तत्प्रसङ्गसङ्गतेर्न क्षतिः। न च शब्दप्रयोगरूपाचारस्य केवलदृष्टार्थत्वेन धर्मप्रमाणाभावान्नानन्तरसङ्गतिर्न वाध्यायसङ्गतिरिति वाच्यम्, व्याकरणाधिकरणे साधुशब्दप्रयोगस्य धर्मत्वाभिधानात्। पदार्थप्रतीतिद्वारा धर्मप्रमोपयोगस्यापि सम्भवाच्चातिशङ्कानुपपत्तेः। अत्रेति। अत्र एतदधिकरणस्थे भाष्ये। यत्रेत्यादि प्रतिपाद्यत इति लक्ष्यते इत्यन्वयः। आर्याः आर्यावर्तनिवासिनः शिष्टाः। म्लेच्छाः प्रत्यन्तवासिनः, तद्रूपप्रयोक्तृविशेषानुपादानात्। तथा "यथा वा अन्या ओषधयो म्लायन्तेऽथैते मोदमाना इवोत्तिष्ठन्ति" इति "यवयमश्चरुर्भवति" इति विधिवाक्यशेषभूतेनार्थवादेन दीर्घशूकाद्यर्थनिर्णयरूपसिद्धान्तकथनात् आर्यम्लेच्छविप्रतिपत्तौ चार्याणां स्वरूपतः प्रबलत्वेनैव सिद्धान्तोपपत्तेः वाक्यशेषोपन्यासवैयर्थ्यादित्यर्थः। नन्वार्यम्लेच्छवच्छिष्टानामप्यनुपादानात्कथं तद्विप्रतिपत्तिविषयत्वनिश्चयस्तत्राह—शिष्टाचारस्येति। पूर्वाधिकरणे प्रमाणत्वेन शिष्टाचारे उक्ते शब्दप्रयोगरूपाचारस्यापि शिष्टसम्बन्धिन एवोपस्थितेरित्यर्थः। अननुगुणा प्रियङ्गुषु यवशब्दप्रसिद्धिः। तत्त्विति। अयुक्तमिति मत्वा इत्यग्रिमेणान्वयः। तत्र चोदाहरणाभावादिति

वाक्यशेषादि' त्यनेन गतप्रायत्वाद्वाक्यशेषाच्चेन्निर्णयः, ततोऽसति वाक्यशेषेऽभियुक्तानभियुक्तप्रसिद्धयोश्च तुल्यबलत्वप्रसङ्गादयुक्तमिति मत्वा, आचार्यैरन्यथाऽधिकरणं व्याख्यातम् ।

**वर्णकान्तरम्**

यत्रार्यम्लेच्छयोरभिधानविप्रतिपत्तिः, यथा पीलुशब्दमार्या वृक्षविशेषे प्रयुञ्जते म्लेच्छास्तु हस्तिनि । तत्र चिन्त्यते--किं तुल्यबलत्वम् ? उतार्यप्रसिद्धिर्बलीयसीति ? तत्र

लोकप्रसिद्धिगम्यत्वाच्छब्दार्थस्योभयोरपि ।
समा विप्रतिपत्तिः स्याच्छास्त्रार्थे हि बलाबलम् ॥

यः शास्त्रप्रमाणको धर्मस्तत्र शास्त्राभियोगशून्येभ्यो म्लेच्छेभ्यस्तदभियोगशालिनामार्याणामस्ति बलीयस्त्वम् । व्यवहारगम्यस्तु शब्दार्थः, स च म्लेच्छानामप्यविशिष्ट इति प्रमाणाविशेषादविशिष्टो द्वयोरपि शब्दार्थः । यच्चार्येष्वनादित्वकारणमवध्यस्मरणम्, तदपि समानं म्लेच्छेष्वपि । तस्मात्समेयमभिधानविप्रतिपत्तिः स्यात् इति प्राप्ते ब्रूमः—

**प्रतिपादकतामात्रं म्लेच्छेष्वप्यवगम्यते ।**
**अविप्लतस्तु शब्दार्थः शिष्टेष्वेवावधार्यते ॥**

न तावदेवं न्याय्यमुभावपि शब्दार्थाविति, अनेकादृष्टशक्तिकल्पनाप्रसङ्गात्, शब्दप्रयोगेऽपि चान्यतरस्याप्यनवधारणात् व्यवहारानुपपत्तिप्रसङ्गात्, कदाचित्कस्यचिदु-

---

हेतुः । उदाहरणाभावे च यवादिशब्दानामित्यादि, अन्यस्यापीत्यादि च हेतुद्वयमिति बोध्यम् । अस्तु तर्हि क्त्वाचिन्तात्वेन विचारस्तत्राह—सन्दिग्धेष्विति । यद्यपि "अक्ताश्शर्कराः" इति विधावञ्जनसाधनं किं विवक्षितमिति सन्देहे "तेजो वै घृतम्" इत्यर्थवादात् घृतमिति निर्णीतम्, न तु शब्दार्थनिर्णयस्तत्रोक्तस्तथापि विधिस्तुत्योरेकविषयत्वनियमादवश्यं यवादिशब्दैर्दीर्घशूकाद्येवोपादेयमिति तदधिकरणेनैव सिद्धमिति भावः । नन्वेतावतापि अनेकार्थत्वं दीर्घशूकलक्षणकत्वं वा न निराकृतम् तत्राह--प्रायत्वादिति । अल्पावशिष्टमिदं स्पष्टैर्न्यायान्तरैः सुपरिहरमिति भावः । तुल्यबलत्वेति । अभियुक्तप्रसिद्धेः स्वतः प्राबल्यस्याधिकरणान्तरे क्वाप्यनुक्तेरिति भावः ।

तत्र संशये सति । शब्दार्थस्य शब्दशक्यत्वस्य । उभयोः आर्यम्लेच्छयोः विप्रतिपत्तिः पीलुपदार्थो वृक्षो गजो वेति मतिः, समा अभ्रान्तित्वेन तुल्या । आर्येषु आर्यप्रयोगेषु । अवधेरमुककालमारभ्यायं प्रयुक्त इत्यस्मरणम् । प्रतिपादकतामात्रमिति । न तु शक्तिपर्यन्तमित्यर्थः । म्लेच्छेषु तत्प्रयुक्तशब्देषु अविप्लुतः भ्रमसन्देहरहितः । शब्दार्थः शब्दशक्तिविषय इति विशेषणप्रधानम् । शिष्टेषु तत्प्रयोगेषु । ननु किं बलाबलविचारेण ? द्वयोरपि वाचकत्वे विरोधाभावादित्याशङ्क्याह—न तावदिति । तावत् बलाबलविवेकात्प्राक् । अनेकेति । तथा च गौरवं बाधकमिति भावः । ननु प्रामाणिकं गौरवं न दोष इत्यत आह—शब्दप्रयोग इति । सकृदुच्च-

पादानेऽष्टदोषविकल्पापत्तेरेवात्र मुख्यत्वेनान्यत्र गौणत्वेनापि प्रयोगोपपत्तेर्गौणेऽपि प्रयोगे पार्श्वस्थानां मुख्याभिमानसंभवात्तैरेव चान्येभ्यो मुख्यत्वस्य कथनान्मुख्याभिधानपरम्परानुवृत्तिसम्भवात्। तत्र यदि न कथंचिदपि विशेषोऽवधार्येत, तदा गत्यभावाद् द्वयोरप्यभिधेयता स्यात्। अस्ति त्वभियुक्तानभियुक्तयोर्विशेषः। शास्त्रस्था हि शब्दैकसमभिगम्यधर्माधर्मविप्लुतिलिप्सया शब्दार्थतत्त्वं विविच्य परिपालयन्ति, म्लेच्छास्तु दृष्टार्थव्यवहारस्य यथाकथंचित्सिद्धेः प्रयोजनाभावान्नाविप्लुतिसिद्धौ यतन्ते। अतो यद्यपि प्रतिपादकतामात्रं म्लेच्छेष्वपि सिद्धयति, तथापि विप्लुतिसम्भवान्न तेषु शब्दार्थतत्त्वसिद्धिरित्यार्यप्रसिद्धयैव निर्दोषया बलीयस्यार्थसिद्धिरिति पील्वादिशब्दा वृक्षाद्यर्थाभिधायिन इति स्थितम्। भाष्यमप्यार्यम्लेच्छविगानाभिप्रायं व्याख्येयम्। वाक्यशेषश्चाभ्युच्चयत्वेनोक्तः, न मूलहेतुतयेति ॥

इति आर्यम्लेच्छाधिकरणम् ॥५॥

वर्णकान्तरम्

स्मृत्याचारविरोधे वा यत्र मन्वादिनिबन्धनानामनिबन्धनानां चाचाराणां

---

रितन्यायेन समुच्चयासम्भवादिति भावः। अस्तु तर्हि व्रीहियववद् द्वयोरपि पाक्षिकत्वम् तत्राह—कदाचिदिति। दोषाष्टकमुपपादितं प्राक्। यद्यप्ययं विकल्पो वक्तृतात्पर्यव्यवस्थितो न त्वव्यवस्थित इति न दोषाष्टकप्रसक्तिः, ऐच्छिकविकल्प एव तदङ्गीकारात्तथापि तात्पर्यस्यापीच्छारूपतया अव्यवस्थितत्वादैच्छिकविकल्पतुल्य एवायमपीति दोषाष्टकापादनं नासङ्गतमिति ज्ञेयम्। ननूभयत्र प्रयोगप्रामाण्याच्छक्त्यवगतावगत्या दुष्टोऽपि विकल्प आश्रीयतां व्रीहियववदत आह—एकत्रेति। एकत्र वृक्षे, अन्यत्र हस्तिनि। ननु पीलुशब्दस्य गजो वाच्य इति व्यवहारः कथमुपपद्येतात आह—गौणेऽपीति। पार्श्वस्थानां समीपस्थानाम्। मुख्याभिमानः मुख्यत्वभ्रमः। अयमेवार्थविप्लव इत्युच्यते। नन्वेवमनेकार्थोच्छेदस्तत्राह—तत्रेति। विशेषः मुख्यत्वगौणत्वयोर्नियामकः। कोऽसावित्यपेक्षायामाह—अस्ति त्विति। तथाचाभियुक्तत्वानभियुक्तत्वमेव विशेष इत्यर्थः। अभियुक्तत्वमेव हेतुपूर्वकं दर्शयति—शास्त्रस्था हीति। शास्त्रे तिष्ठन्ति तत्प्रतिपादितकर्मानुष्ठातार इत्यर्थः। अविप्लुतः अभ्रंशः। विविच्य गौणाद्यर्थात् विवेकेन परिपालयन्ति उपदेशादिपरम्परया रक्षन्ति। अन्यथा हि 'बैल्वौदुम्बरौ वैश्यस्य दण्डौ' इति स्मृतेर्गजास्थिदण्डोऽपि कदाचिदुपादेयस्स्यादिति भवदेवोक्ता धर्मविप्लुतिरापद्येतेति भावः। भाष्यमपीति। सामान्यशब्दस्य विशेषपरत्वादित्यर्थः। तथा सति स्वरूपत एवार्यप्रसिद्धेर्बलवत्वाद्वाक्यशेषोपन्यासो न युक्तस्तत्राह—वाक्यशेषश्चेति। अभ्युच्चयः अमुख्यो हेतुः। इदमुपलक्षणम् यवादिशब्दोदाहरणमपि कृत्वाचिन्तया बोध्यमिति ॥

इत्यार्यम्लेच्छाधिकरणम् ॥५॥

वर्णकान्तरमाह—स्मृतीति। स्मृत्याचारविरोधविषयं वैतदधिकरणमित्यर्थः। वाशब्देन पूर्वत्रास्वरसः सूच्यते। आर्यम्लेच्छप्रसिद्ध्योर्बलाबलस्याभियोगतदभावाभ्यां स्पष्टतरत्वादिति।

विरोधो मातुलदुहितृपरिणयनादिषु, तत्र किं तुल्यकक्षत्वम् ? उत स्मृतीनां बलीयस्त्वम् ? इति चिन्त्यते । तत्र,

**बलाबलविशेषस्तु कक्षान्तरितकारितः ।**
**श्रुतिस्मृत्योरिह त्वेवं न द्वयोः श्रुतिमूलतः ॥**

श्रुत्या हि साक्षादर्थः प्रतीयते, स्मृत्या तु श्रुतिकल्पनयेत्येकान्तरितप्रामाण्यादव्यवहितप्रामाण्या श्रुतिर्बलीयसीति तेन तत्र युक्तं यत्स्मृतेरननुष्ठानलक्षणमप्रामाण्यम् । इह त्वेवं विशेषो नास्ति । द्वयोरपि श्रुतिमूलत्वेनैकान्तरितयोरविशेषात्तस्मात्समा विप्रतिपत्तिरिति ।

अत्रोच्यते—

**सप्रत्ययप्रणीता हि स्मृतिः सोपनिबन्धना ।**
**तस्यास्तेन बलीयस्त्वमाचारान्निर्निबन्धनात् ॥**

प्रत्ययिततरा हि मन्वादयः स्मर्त्तारः । तत्स्मरणं गुणवत्तरकर्तृकत्वादितरजनचारित्र्याद्विश्रम्भणीयतरमिति व्यक्तमेतत् । अपि चाचरितॄणां जनानां स्वयमितस्ततो विप्रकीर्णपरप्रकरणादिगतश्रुत्युद्धरणेनार्थं प्रतिपत्तुमसामर्थ्यादवश्यमेते महर्षिभिरेव ज्ञात्वा स्मृत्वा समर्पितमर्थमनुतिष्ठन्तीत्यङ्गीकार्यम् । अत आचारस्य स्मृतिकल्पनेन श्रुतिकल्पकत्वमिति

---

एतदेव विवृणोति—यत्रेत्यादिना । मन्वादीनां निबन्धनानि स्मृतयः । आचारस्तैलङ्गादीनाम् । विरोधः धर्मत्वाधर्मत्वबोधकतया । मनुना हि पितृष्वसृमातृष्वसृमातुलदुहितॄणां पूर्वोक्तानाम् 'एतास्तिस्रस्तु भार्यार्थे नोपयच्छेत बुद्धिमान्' इति परिणयनं निषिद्धम् । तेन तस्याधर्मत्वं स्पष्टमेव । तैलङ्गाचारस्तु तस्य शिष्टाचारविषयत्वेन धर्मत्वं बोधयतीति विरोधः । तुल्येति । तुल्याकक्ष्येव कक्ष्या श्रुतिकल्पना लक्षणरूपा ययोस्तत्त्वमित्यर्थः । बलाबलेति । बलाबलरूपो विशेष इत्यर्थः । अन्तरितेति भावे क्तः, भावप्रधाननिर्देशो वा । अन्तरायोक्त्या तदप्युपलक्ष्यते । तथा चान्तरायतदभावकारित इत्यर्थः । श्रुतिमूलतः श्रुतिमूलत्वादित्यर्थः । एकान्तरितप्रामाण्यात् स्मृतिवाक्यादिति शेषः । नन्विहापि स्मृतेरेकान्तरितमाचारस्य स्मृतिश्रुतिरूपद्वयान्तरितमित्यस्त्येव विशेष इत्यत आह—द्वयोरपीति । द्वयोरपि स्मृत्याचारयोर्मुख्यश्रुत्यपेक्षैव युक्ता, न त्वाचारस्य स्मृत्यपेक्षापि । 'न हि भिक्षुको भिक्षुकान्तरं याचत' इति न्यायादित्यर्थः ।

सप्रत्ययेति । प्रत्ययो विश्वासस्तत्तच्छ्रुतिनिश्चयश्च तत्सहिता मन्वादयस्तैः प्रणीता शिष्येभ्य कथितार्था । एवञ्चैतादृशस्मृतिमूलत्वात् शिष्टाचारयुक्तमित्यर्थः । ननु श्रुतिमूल एवाचारः किं न स्यादत आह—सोपनिबन्धनेति । मन्त्रार्थवादादिषु तिरोहितान् विधीनुपसंहृत्य यत्कर्तव्यत्वेन तत्तत्कर्मकथनरूपं निबन्धनं तद्युक्तेत्यर्थः । तथाचेदानीन्तनानामीदृशश्रुतिनिर्णयासम्भवान्न श्रुतिमूलत्वं साक्षात्सम्भवतीति भावः । नन्वाचरितॄणामप्युपसंहारेण श्रुत्यर्थज्ञानं केषाञ्चित्सम्भवत्येवेति शङ्कामपाकुर्वन् सोपनिबन्धनेत्युक्तशब्दार्थं प्रथमं विवृणोति—अपिचेति ।

द्व्यन्तरितप्रमाणत्वाद्दुर्बलत्वम् । अपि चाचारेषु कर्मस्वरूपमात्रमेव प्रत्यक्षम्, कर्तव्यता तु विमर्शपूर्वमर्थसुखहेत्वन्तरासंभवनिरूपणेन पारिशेष्यात्कल्पयितव्या। ताञ्च कल्पयित्वा पश्चान्मूलकल्पनमिति विप्रकर्षः । सन्निबन्धनासु तु स्मृतिषु द्रागेव ग्रन्थतः कर्तव्यतावगम्यते, मूलमात्रं तु कल्प्यमिति सन्निकर्षः । सर्वेषां च स्मृतिविरुद्धाचाराणां मातुलदुहितृपरिणयनादिविषयाणां कामादि हेत्वन्तरं विस्पष्टमेव दृश्यत इति न कथंचिदपि श्रुतिमूलत्वं सम्भावनीयम् । न चात्र विकल्पाभ्युपगमेनोभयोरपि प्रामाण्यं सम्भवति, वस्तुनि विकल्पासम्भवात् न हि मातुलदुहितृपरिणयनात्प्रत्यवायोत्पत्तिरनुत्पत्तिश्च संभवतीत्यवश्यमन्यतरस्याप्रामाण्यमाश्रयणीयम् । तत्र गृह्यमाणनिमित्तस्याचारस्याप्रामाण्यमिति सिद्धमेवञ्जातीयकानां दुराचारत्वम् ॥

वर्णकान्तरम्

अथवा – त्रिवृच्चर्वश्ववालादेः यत्र लोकवाक्यशेषयोरर्थविप्रतिपत्तिः, यथा "त्रिवृद्बहिष्पवमानम्" इति। अत्र त्रिवृच्छब्दस्य त्रैगुण्यं लोकादर्थोऽवगम्यते, वाक्यशेषात्तु

---

प्रत्यक्षश्रुतिविहितस्यापि कल्पसूत्राद्यनुसारेणैवेदानीन्तनानामनुष्ठानं न तु स्वयं वेदादवगत्येति दूरापास्तमर्थवादादितिरोहितस्य स्वयं बुध्यानुष्ठानमित्यर्थः । आचारेषु निबन्धनाभावकृतं दौर्बल्यमाह—अपिचेति । कर्तव्यता अदृष्टार्थानुष्ठेयत्वज्ञानम् । विमर्शः एतदनुष्ठाने किं प्रयोजकमिति विचारः । अर्थसुखञ्च यल्लौकिकं फलं तद्रूपं यद्धेत्वन्तरं प्रयोजकान्तरं तदसम्भवनिरूपणरूपात्परिशेषादित्यर्थः । तथा चानुष्ठानं दृष्ट्वा तद्धेतुभूतानुष्ठेयताज्ञानकल्पनम्, ततोऽर्थसुखादि परिशेषे सत्यदृष्टार्थानुष्ठेयताज्ञाननिश्चयः, ततस्तन्मूलत्वेन श्रुतिकल्पनमित्याचारे विप्रकर्षः । स्मृतिषु ग्रन्थात्प्रथमत एवादृष्टार्थानुष्ठेयत्वरूपकर्तव्यताज्ञानम्, ततस्तद्विषयमेव ववतृज्ञानं तन्मूलश्रुतिकल्पनञ्चेति सन्निकर्षो बोध्यः । उक्तपरिशेषस्याप्यसम्भवमाह—सर्वेषामिति । वस्तुनीति । न हि वस्तु कदाचिदीदृशम् कदाचिदन्यादृशमिति सम्भवति । अनुष्ठानन्तु कदाचित् कदाचिन्नेति युक्तमिति भावः । एतदेव विवृणोति—न हीति । निषेधेन हि प्रत्यवायरूपबलवदनिष्टजनकत्वं मातुलदुहितृपरिणयनस्योच्यते, विधिना तु बलवदनिष्टाजनकत्वमित्येकस्यैव वस्तुनो विरुद्धस्वभावतानुपपन्नेत्यर्थः । षोडशिग्रहणनिषेधेन तु न तस्य अनुपकारकत्वाभावो बोध्यते येन विरोधः स्यात्, किन्तु तदभावादपि क्रतूपकारसिद्धिरिति वैषम्यम् । न च 'इतरेतरस्मिन् कुर्वन् दुष्यति नेतरस्मिन्' इत्यापस्तम्बोक्तदेशभेदव्यवस्थया विरोधपरिहार इति वाच्यम् । इत्थं विरोधपरिहारे प्रामाण्यं तस्मिंश्च सति व्यवस्थया विरोधपरिहार इत्यन्योन्याश्रयात् । अत एव बौधायनेनापस्तम्बमतमुपन्यस्य 'मिथ्यैतदिति गौतमः शिष्टस्मृतिविरोधात्' इत्युक्तमिति । गृह्यमाणनिमित्तस्य ज्ञायमानलोभादिनिमित्तस्येति हेतुगर्भविशेषणम् । सूत्रे चास्मिन् पक्षे शास्त्रशब्देन स्मृतिर्व्याख्येया । स्पष्टमन्यत् ॥

अथवेति । विप्रतिपत्तिमेव विवृणोति—यथेत्यादिना । त्रिभिर्वर्त्यत इति त्रिवृदिति व्युत्पत्त्या त्रिवृद्रज्जुरित्यादिप्रयोगेषु त्रैगुण्यमर्थो गम्यत इत्यर्थः । बहिष्पवमानमिति स्तोत्रविशेष-

स्तोत्रीयानवकम्। 'आदित्यः प्रायणीयः पयसि चरुरि'ति चरुशब्दस्य स्थाली, वाक्यशेषादोदनः। 'अश्ववालः प्रस्तर' इति, अश्वस्य बालः, वाक्यशेषात्तु काशः। 'ऐक्षव्यौ विधृती' इति इक्ष्ववयवात्मिकेति लोकात्, वाक्यशेषात्काशमूलके। किं तत्र लोकवाक्यशेषयोस्तुल्यबलवत्त्वम्? उत वाक्यशेषस्था प्रतोतिर्बलीयसी? इति संशयः। तत्र —

**पदार्थपदसंबन्धे तुल्यत्वं लोकवेदयोः।**
**अदृष्टसाधनत्वे हि लोकाद्वेदोऽतिरिच्यते॥**

विध्युद्देशात्तावदेतावदवगम्यते—यदिह त्रिवृदादिशब्दाभिधेयं तद्वाक्यार्थान्वयीति। किं तस्याभिधेयमित्यन्यतोऽवगन्तव्यम्। तत्र किन्तु लोकस्याप्यभिधेयनिर्णये वेदवाक्यशेषतुल्यत्वम्, ततोऽधिकं वा सामर्थ्यमस्तीत्यर्थद्वयमपि तुल्यप्रमाणकत्वाद्विकल्पेन ग्रहीतव्यमिति पूर्वः पक्षः।

सिद्धान्तस्तु—

**वाक्यैकत्वं विधिस्तुत्योर्विषयैक्यादृते न हि।**
**तेनात्र वाक्यशेषस्था प्रतिपत्तिर्बलीयसी॥**

यदि लौकिकोऽर्थो विध्युद्देशेनाश्रीयतेऽन्यार्थो वाक्यशेषेऽन्यार्थश्च विध्युद्देश इति न कथंचन संबन्धः स्यात्। तस्माद्यत्र वाक्यशेषः त्रिवृद्बहिष्पवमानमित्यादिषु तत्र तावत्तद-

---

नाम। "त्रिवृद्बहिष्पवमानम्" इत्युपक्रम्य "उपास्मै गायत" इत्यदितृचत्रयानुक्रमणं तत्स्तुतिश्च वाक्यशेषः। चरौ वाक्यशेषश्च "अदितिमोदनेन" इति। अश्ववालशब्दे तु "ते वालाः काशतां प्राप्ताः" इति स्तुतिरूपः। आदिपदग्राह्यमाह—ऐक्षव्याविति। अत्र वाक्यशेषः कैरप्यनुदाहृतोऽन्वेषणीयः। तत्र संशये सति इति पूर्वपक्ष इत्यन्वयः। तुल्यत्वमिति। विध्यर्थवादयोरेकविषयत्वनियमान्यथानुपपत्त्या वाक्यशेषस्य शक्तिग्राहकत्ववदनादिलोकप्रयोगस्याप्यन्यथानुपपत्त्या शक्तिग्राहकत्वमिति साम्यमित्यर्थः। न च निर्दोषवेदवाक्यमेव शक्तिग्राहकम् लोकप्रयोगस्तु भ्रमप्रमादादिदोषाद्दुर्बल इति वाच्यम्, प्रामाणान्तरगम्यं सम्बन्धमुपजीव्य शास्त्राणां वाक्यार्थमात्रे तात्पर्यात्। तदाह—विध्युद्देशादिति। ततोऽधिकं वेत्यतिशयोक्तिः। लोकप्रयोगो हि शक्तिबोधनेऽन्यनिरपेक्षोऽनन्यपरश्च। वाक्यशेषस्तु तत्सापेक्षः स्तुतिपरश्चेत्यभिप्रायः। तुल्येति। वास्तवोक्तिः। त्रिवृदादिपदशक्तिग्रहांशे लोकानपेक्षत्वान्न विधौ परशब्दार्थ इति न्यायादिति भावः। विकल्पेनेति। प्रथमावगतलोकप्रसिद्धार्थस्यात्यन्तबाधानौचित्यात्सकृदुच्चरित इति शब्दव्युत्पत्तिमात्रबाधमङ्गीकृत्य कदाचित् त्रैगुण्यरूपार्थपरिग्रहेण बहिष्पवमानस्तोत्रं त्रिवारं कर्तव्यमिति ऋक्त्रयेण वा कर्तव्यमिति विध्यर्थः, कदाचित्स्तोत्रीयानवकेन कार्यमिति तदर्थो विकल्पेनाङ्गीकार्य इत्यर्थः। एवञ्च वाक्यशेषस्य द्वितीयपक्ष एव स्तावकत्वमिति ज्ञेयम्। एतच्चोपलक्षणम्। लोकप्रयोगस्य प्राबल्ये तदर्थस्यैव ग्रहणमित्यपि ज्ञेयम्। तस्मादिति। अयमाशयः- यद्यप्युपक्रमस्थविध्युद्देशावगतो लोकप्रसिद्धार्थ एव प्रथमावगतो बलवांस्तथापि वाक्यशेषस्य तदविषयस्यानर्थक्यात् 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायेन लौकिकार्थबाध-

नुगुण एवार्थः समाश्रयणीय इत्येतावदिहाधिकरणे स्थितम्। यदा चैवं वाक्यशेषवशात् स्तोत्रीयानवकमपि वाच्यमित्यवधारितम्, तदा यत्र वाक्यशेषो नास्ति 'त्रिवृदग्निष्टुदग्निष्टोम' इत्यादिषु, तत्राप्यनेनैवार्थेन भवितव्यम् रूढिवशादिति दशमे वक्ष्यते। चरुशब्दोऽप्योदनस्थाल्योः परस्परसंबन्धित्वाद्वाक्यशेषावधारितौदनवचनत्वेन स्थाल्यामन्याय्यश्चानेकार्थत्वमिति प्रतिबद्धशक्तित्वाल्लाक्षणिकः। तेनासत्यपि वाक्यशेषे "सौर्यं चरुं निर्वपेदि" त्यादावप्योदनवचनत्वमेवेति दशमे वक्ष्यते। आश्वबालैक्षवीशब्दावपि काशतन्मूलयो रूढत्वादन्यत्रापि तदर्थाविव भवतः। न चात्र 'सन्दिग्धेषु वाक्यशेषादि' त्यनेन गतत्वम्, असन्देहात्। इह हि वाक्यशेषात्प्रागर्थान्तरमेव गृहीतं वाक्यशेषेण बाध्यते, न तु प्रथमं सन्दिग्धन्तेन निर्णीयत इति॥

इति वर्णकान्तरम्॥

६

**सू० चोदितन्तु०** आर्यप्रसिद्धिविरोधे म्लेच्छप्रसिद्धेरप्रामाण्यमुक्तम्। इदानीं किं म्लेच्छप्रसिद्धिरित्येवाप्रमाणम्? उत बलवद्विरोधादेवाप्रमाणम्? अविरोधे तु तस्या अपि भवत्येवाभिधेयनिर्णये प्रामाण्यमिति चिन्त्यते। पिक-नेम-सत-तामरसादिशब्दा न क्वचिदार्याणां प्रसिद्धाः, म्लेच्छानां तु कोकिलादिषु प्रसिद्धाः। तत्र यद्यप्रमाणमेव म्लेच्छप्रसिद्धिः,

---

कत्वाद्वाक्यशेषावगतार्थस्यैव ग्रहणम्, विकल्पेऽपि नित्यवच्छ्रुतवाक्यशेषस्य पाक्षिकबाधापत्तेः। न चोपक्रमगतविध्युद्देशविरोधः, तस्य पदार्थपरत्वाभावादिति। दाशमिकस्य त्रिवृच्छन्दविषयस्याधिकरणस्य भिन्नविषयत्वादनेनागतार्थत्वं दर्शयति—यदा चेति। रूढिवशात् योगाद्रूढेः प्राबल्यवशात्। इह तु रूढेरात्मलाभ एव साध्यत इति भिन्नविषयत्वमित्यर्थः। तदाहुः—'रूढिर्लब्धात्मिका योगं बाधते न त्वलब्धिका' इति। चरुशब्दविषयस्याप्यधिकरणस्य पौनरुक्त्यं परिहरति—चरुशब्दोऽपीति। परस्परसम्बन्धित्वात् स्थाल्यां लाक्षणिक इत्यन्वयः। स्तोत्रीयानवके तु न त्रैगुण्यार्थेन कश्चित्सम्बन्धो योगसम्भवस्तत्रेति शेषः। वाक्यशेषेत्यनेन न विधौ परशब्दार्थ इति न्यायात् शक्तिलक्षणयोर्विनिगमनहेतुस्सूचितः। तेनेति। मुख्यजघन्ययोर्मुख्ये सम्प्रत्यय' इति न्यायेनेत्यर्थः। ओदनवचनत्वमित्यनन्तरं चरुशब्दस्येति शेषः। रूढत्वादिति। रूढेश्च योगाद्बलीयस्त्वादिति भावः। अर्थान्तरं त्रैगुण्यस्थाल्यादिपरम्। अस्मिन् विचारे सूत्रे शास्त्रशब्देन वाक्यशेषो ग्राह्य इति विशेषः॥

चोदितन्तु० इत्येवेति। इति हेतोरेवेत्यर्थः। अविरोधे त्विति। तथा च विप्रतिपत्तिप्रत्युदाहरणरूपेणात्र सिद्धान्तकरणात्प्रत्युदाहरणसङ्गतिरुक्ता। कोकिलादिष्विति। पिकशब्दः कोकिले, नेमशब्दोऽर्धे, सतशब्दः शतच्छिद्रवर्तुलदारुपात्रे, तामरसशब्दो रक्तोत्पले प्रसिद्धः। म्लेच्छप्रसिद्धिप्रामाण्याप्रामाण्यविचारप्रयोजनमाह—तत्रेति। तेषां "पिकमालभेत" इत्यादिविधिवाक्यगतपिकादिशब्दानाम्। निरुक्तादीत्यादिना निगमव्याकरणयोस्सङ्ग्रहः। ननु वार्तिके म्लेच्छप्रसिद्धिनिरुक्त्यादिप्रसिद्ध्योर्बलाबलविचारस्यापि दर्शनात्कथं म्लेच्छप्रसिद्धिप्रामाण्यमात्रपरत्वमेतदधि-

ततस्तेषां निरुक्तादिवशेनार्थकल्पनम्। अथ तु सा प्रमाणम्, ततः सैवाश्रयिष्यते। तदत्र म्लेच्छप्रसिद्धिः प्रामाण्ययोग्या न वेत्येतावदधिकरणशरीरम्। सत्यपि तु प्रामाण्ये किं म्लेच्छागतत्वाद्दुर्बला निरुक्तादिद्वारा शास्त्रस्थत्वाद्बलीयसी? उतेयमेव दुर्बला? कल्प्यत्वात् म्लेच्छप्रसिद्धिस्तु क्लृप्तत्वाद्बलीयसीत्येतत्प्रासङ्गिकम्। शिष्टाकोपे ह्येतदवस्थितम्—स्वरूपगतमेव बलाबलं प्रमाणद्वारकाज्ज्याय इति। तेनैव न्यायेनात्रापि प्रयोक्तृद्वारा बलाबलात् क्लृप्तकल्प्यत्वेन स्वरूपगतमेव ज्यायो भवति। तेन गतप्रायमिह प्रसङ्गाद् उक्तं भाष्यकारेण। प्रामाण्यसम्भवासम्भवमात्रं तु म्लेच्छप्रसिद्धेश्चिन्त्यते। तत्र पूर्वः पक्षः—

म्लेच्छेषु हि पदार्थानां विप्लुतिर्भूयसी यतः।
ततस्तेषु प्रसिद्धेऽर्थे न विस्रम्भः कथञ्चन॥

पदानि पदार्थाश्चापभ्रंशप्राया एव म्लेच्छेषु बाहुल्येन, तेषु कथमिवाविप्लुतपदार्थावधारणम्। अतोऽप्रमाणं म्लेच्छप्रसिद्धिः। न हि ते दृष्टार्थव्यवहारित्वाच्छब्दार्थाविप्लवे यत्नं कुर्वते। तस्माद्विप्लुतिसम्भवात्तेषु प्रसिद्धोऽर्थो न विस्रम्भणीयः। निरुक्तादिद्वारेण त्वर्थकल्पनं पिकादीनामिति।

सिद्धान्तस्तु—

पदानि तावदेतानि वेदादिष्वेव दर्शनात्।
अविप्लुतानि तेषां च भाव्यमर्थेन केनचित्॥
नित्येनार्येष्वसौ नास्ति यतो म्लेच्छेषु विप्लुतिः।
म्लेच्छप्रसिद्ध एवार्थस्तेषामिति हि निर्णयः॥

पिकादिपदानि तावद्वेदतदङ्गादिषु दृष्टत्वादविप्लुतानि नित्यानि। तदेषां नित्येनैव केनचिदर्थेन भवितव्यम्। न चामीषामार्येष्वर्थः कश्चिदस्ति, यत्र मुख्यानि भूत्वा म्लेच्छ-

---

करणस्येत्याशङ्क्याह—तदत्रेति। तत्तस्मादन्यत्रानिरूपणाद्धेतोरित्यर्थः। शरीरं प्राधान्येन प्रतिपाद्यम्। एतत् विचारस्वरूपम्। प्रासङ्गिकम् अन्यत्र सिद्धं प्रसङ्गादुपोद्बलनार्थमुक्तम्। एतदेव प्रपञ्चयति—शिष्टेति। नन्विह प्रयोक्तुर्म्लेच्छस्यानभियुक्तत्वाद्दुर्बलत्वम्, शास्त्रकर्तुश्चाभियुक्तत्वेन बलवत्त्वम्। न च तौ प्रमाणभूताविति कथं गतार्थत्वमित्याशङ्क्याह—तेनैवेति। ययोर्हि बाध्यबाधकभावस्तद्गतबलाबलं तदन्यगतबलाबलात् शीघ्रोपस्थितिकमिति न्यायसाम्यमेवेत्यर्थः। अतएव गतप्रायमिति प्रायशब्दः। पदार्थानामिति। पदानि अर्थाश्च तेषामित्यर्थः। विप्लुतिः अपभ्रंशः। स च पदानां गाव्यादिरूपः, पदार्थानां गौणलाक्षणिकानां शक्यत्वभ्रमरूपः। विस्रम्भो विश्वासः। तर्हि पिकादिपदानामानर्थक्ये तद्घटितविधिवाक्यस्याप्रामाण्यापत्तिरत आह—निरुक्तादीति। नित्येनेति पूर्वश्लोकान्वितम्। यतः यत्पूर्विका। म्लेच्छेषु। म्लेच्छ-

प्रसिद्धेऽर्थे गौणभ्रान्त्यादिनिमित्तप्रयोगभाञ्जि विप्लुतिं गच्छेयुः। न ह्यसति मुख्ये गौणादिसम्भवः। तस्मात् म्लेच्छप्रसिद्ध एवार्थोऽमीषामित्यध्यवसीयते। अतः सिद्धमविरुद्धेषु प्रसिद्धवाचकेषु म्लेच्छानामभिधेयनिर्णये प्रामाण्यम् ॥

**इति पिकनेमाधिकरणम् ॥६॥**

## ७

**सू० प्रयोगशास्त्र०** अत्र कल्पसूत्राण्युदाहृत्य किं प्रमाणमप्रमाणमिति भाष्ये विचारितम्। ननु स्मृत्यधिकरण एव सर्वेषां वेदातिरिक्तानां प्रामाण्याप्रामाण्यचिन्ता वृत्ता। तत्र केचिदाहुः। तत्राशब्दतया पूर्वपक्षमुक्त्वा शब्दानुमनेन सिद्धान्तितम्। एतानि च वैदिकार्थनिबन्धनत्वात्प्रत्यक्षशब्दानीति न तत्रोदाहरणम्। स्मृतयो हि प्रायेणेतस्ततो विप्रकीर्णपरप्रकरणपठितवाक्यशेषगतसिद्धवन्निर्देशानुपपत्तिकल्पिततिरोहितप्रायविधि-

---

प्रसिद्धार्थेषु। अविरुद्धेष्विति। म्लेच्छप्रयोगान्यथानुपपत्त्या तदर्थगोचरप्रतिपादकताया असम्भ्रवादिति भावः। म्लेच्छानामित्यनन्तरं प्रसिद्धेरिति शेषः। सूत्रार्थस्तु—म्लेच्छैः कोकिलादिषु चोदितं प्रयुक्तं यत्पिकादिपदं तद्यथार्थमेव प्रतीयेत। कुतः? प्रमाणेनार्यप्रयोगेणाविरोधादिति। अथवा यन्म्लेच्छेषु पिकादिपदवाच्यतया प्रसिद्धं कोकिलादि तदेव प्रमाणेन "पिकमालभेत" इत्यादिविधिवाक्येन चोदितं प्रतीयेत अविरोधादित्यर्थः ॥

इति पिकनेमाधिकरणम् ॥ ६ ॥

## ७

प्रयोगशास्त्रम्० क्रतुप्रयोगकल्पकत्वाद्बोधायनीयादिनिबन्धाः कल्पाः। 'एतत्तीर्थमित्यामित्याचक्षते' 'ऋचं पादग्रहणे' इत्यादिसंज्ञापरिभाषादिभिर्विशेषबोधकान्याश्वलायनीयादीनि सूत्राणि। नन्विति। वेदातिरिक्तानां शिष्टपरिगृहीतानां प्रामाण्यम् विरुद्धानामप्रामाण्यमित्युत्सर्गापवादाभ्यामुक्तत्वात्पौनरुक्त्यमिति भावः। अशब्दतया मूलभूतवेदशब्दशून्यतया। शब्दानुमानेन श्रुत्यनुमानेन। एतानि कल्पसूत्राणि। प्रत्यक्षशब्दानि प्रत्यक्षश्रुतिमूलानि। तत्र स्मृत्यधिकरणे। अयमाशयः स्मृत्यधिकरणे येषां श्रुतिमूलकत्वेन प्रमाण्यमुक्तं तेषामेव विरोधेऽप्रामाण्यं विरोधाधिकरणे दर्शितम्, कल्पसूत्राणान्तु नाधिकरणद्वयविषयत्वमित्यसिद्धमेव विरोधेऽप्रामाण्यमिह कथ्यमानं न गतार्थमिति। ननु स्मृतीनामपि नित्यानुमेयश्रुतिमूलत्वनिराकरणेन प्रत्यक्षशब्दत्वान्न तत्रोदाहरणता स्यादत आह—स्मृतयो हीति। इतस्ततो नाना शाखासु विप्रकीर्णाश्च परप्रकरणगताश्च परवाक्यशेषगतसिद्धवन्निर्देशानुपपत्तिकल्पिताश्च, अतएव तिरोहितप्राया ये विधयस्तन्मूला इति योजना। वाक्यशेषग्रहणं मन्त्रोपलक्षणम्। तुल्यन्यायत्वात् तत्र प्रायेण विप्रकीर्णविधिमूलत्वस्य स्मृत्यधिकरण एवोक्तत्वाद्दर्शपूर्णमासप्रकरणगतमलवद्वाससंवादादिविषयविधिमू-

मूलाः। तद् यथा "नयनं दक्षिणं दीक्षितः पूर्वमङ्क्ते सव्यं हि मनुष्याः पूर्वमञ्जते" इति प्रसिद्धवत्सव्यस्य पूर्वमञ्जनं निर्दिष्टम्। तच्च दृष्टप्रयोजनाभावात्प्रमाणान्तरेणाप्राप्तमित्यनुपपत्त्या विधिः कल्प्यते। तथा "तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्ति तस्माद्गर्भेणाविज्ञातेन ब्रह्महे" त्येवंविधं स्मृतीनां मूलम्। अत एव चैषु स्मार्त्तत्वप्रसिद्धिः, प्रत्यक्षश्रुतावविहितत्वात्। दर्शपूर्णमासादिषु तु प्रत्यक्षविधिसद्भावाच्छ्रौतत्वम्। इममेव

---

लत्वस्य तत्तदधिकरणेषूदाहृतत्वात्कल्प्यविधिमूलत्वप्रदर्शनायोदाहरति—तद्यथेति। सव्यमित्यादेर्वाक्यशेषत्वप्रदर्शनाय विधिवाक्योपन्यासः। अप्राप्तमित्यस्य नियमेनेत्यादिः। तस्मादपीति। अपिर्भिन्नक्रमः। वध्यमपि प्रपन्नं शरणागतं न प्रयच्छन्ति हन्तृभ्य इत्यर्थात्। अयञ्च "तस्माद्द्विदेवत्येभ्य आदित्यो निर्गृह्यते" इत्यादित्यग्रहस्य द्विदैवत्यग्रहेभ्यो ग्रहणस्य विधेरर्थवादः शेषः। "देवा वै यज्ञाद्रुद्रमन्तरायन् स आदित्यानन्वाक्रामत, ते द्विदैवत्यान् प्रापद्यन्त, ते तान्न प्रतिप्रायच्छन्" इत्यनन्तरमेतद्वाक्यं तस्मादपीति। अस्यार्थः—देवा यज्ञाद्रुद्रमन्तरितवन्तः यज्ञे रुद्रं विस्मृतवन्तः: स च रुद्र आदित्यान् ग्रहान् अनुप्राप्याबाधत, ते बाध्यमाना आदित्या द्विदैवत्यग्रहान् शरणं प्रपन्नाः ते च द्विदैवत्या ग्रहास्तानादित्यान् रुद्राय न प्रत्यर्पितवन्तः। तस्माद्धेतोरित्युदाहृतेन सम्बन्धः। तस्माद्गर्भेणेति। "अविज्ञातो वा एष गृह्यते यदाग्रयणः स्थाल्या गृह्णाति" इत्याग्रयणाख्यो ग्रहः, स्थालीतो ग्रहणसमये देवताविशेषविज्ञानाभावादविज्ञात इत्युक्त्वा तद्दोषनिरासाय "वायव्येन जुहोति" इति विधिना वायव्यग्रहग्रहणकाले सवित्रादिदेवतानां मन्त्रेण विज्ञानादविज्ञातत्वनिवृत्तिरित्यर्थः। अविज्ञातत्वस्य दोषत्वप्रतिपादनायार्थवादोऽयं "गर्भेणाविज्ञातेन" इति। गर्भिणीवधे ब्रह्महत्यादोष इत्यर्थः। अत्राद्ये सव्याञ्जनविधिः, द्वितीये शरणागतं हन्त्रे न प्रयच्छेदिति निषेधविधिः, तृतीये त्वविज्ञातगर्भवधे ब्रह्महत्यातुल्यप्रायश्चित्तविधिः सिद्धवन्निर्देशकल्पितस्तत्तत्स्मृतिमूलभूतो बोध्यः। एवंविधमित्यनेन "निवीतं मनुष्याणाम्" इत्यादिसंग्रहः। अत एवेति। तिरोहितविधिमूलत्वादेवेत्यर्थः। स्मार्तत्वेति। 'सर्वं वाक्यं सावधारणम्' इति न्यायेन स्मार्तत्वस्यैव प्रसिद्धिः न तु श्रौतत्वस्येत्यर्थः। श्रौतत्वप्रसिद्ध्यभावे हेतुमाह—प्रत्यक्षेति। अतिरोहितेत्यर्थः। तेन विप्रकीर्णपरप्रकरणगतश्रुतिमूलानां संग्रहः। प्रत्यक्षश्रुतावविधानञ्च केषाञ्चित्स्वरूपेणैवाष्टकादीनां केषाञ्चित्तूपनयनादीनां स्वरूपतः प्रत्यक्षश्रुत्या विहितानामपि समग्राङ्गविशिष्टतयेति तेषु स्मार्तत्वोपपत्तिरिति ज्ञेयम्। ननु तिरोहितातिरोहितश्रुतिविहितत्वाभ्यां स्मार्तत्वश्रौतत्वव्यवस्थेत्ययुक्तम्, गौतमस्मृतिविरोधात्। गौतमेन हि आश्रमाणां समुच्चयविकल्पपक्षानुक्त्वा गृहस्थाश्रमेण नैष्ठिकब्रह्मचर्यादीतराश्रमबाधपक्षम् 'ऐकाश्रम्यन्त्वाचार्याः' इत्युपन्यस्य तत्र हेतुत्वेन गृहस्थकर्मणां प्रत्यक्षश्रुतिविहितत्वेन प्राबल्यमुक्तम् 'प्रत्यक्षविधानाद्गार्हस्थ्यस्य' इति ग्रन्थेन। गार्हस्थ्येति कर्मणि ष्यञ्। एवञ्चेतराश्रमधर्माणां तुल्यन्यायतया चेतरेषामपि स्मार्तकर्मणां नित्यानुमेयश्रुतिमूलत्वमिति प्रतीयते लैङ्गिकादिविनियोगवदित्याशङ्क्याह—इममेव चेति। तिरोहितातिरोहितत्वरूपमेवेत्यर्थः। प्रत्यक्षश्रुतिविहितत्वन्तूभयत्रापि समानमेव। नित्यानुमेयश्रुतिमूलत्वस्य प्रागुक्तान्धपरम्परा-

च विशेषमभिप्रेत्य गौतमेनोक्तम्—'प्रत्यक्षश्रुतिविधानात् गार्हस्थ्यस्ये' ति, न तु स्मृतिपरम्परयैवानुमेयत्वम् अन्धपरम्परादोषात्। अत एव प्रत्यक्षश्रुतिविरोधे स्मृतेरनुष्ठानम्। स्मृतयो हि सिद्धवन्निर्देशानुपपत्तिकल्पितविधिमूलतयापि सम्भाव्यन्ते। कल्पना च प्रत्यक्षश्रुतिविरोधेऽनुपपन्ना। तेनाविरुद्धविषयवद्विरुद्धविषयेऽपि न्यायाभासेन विधिं कल्पयित्वा किमियं स्मृतिः प्रवर्तिता ? किं वा "अग्निहोत्रं जुहुयादाद्यन्ते द्युनिशोः सदे" त्यादिवत्प्रत्यक्षमेव विधिं दृष्ट्वेति विचिकित्सोदयाद्यावत्तद्विषयः प्रत्यक्षविधिर्नोपलभ्यते, तावत्तदनादरेण प्रत्यक्षोपलब्ध एवानुष्ठेय इति। तेन स्मृतय एव तत्रोदाहरणं न कल्पसूत्राणि। किञ्च नैषामिह प्रामाण्याप्रामाण्यचिन्ता, किंतु स्वतन्त्राणामेव वेदवत् प्रामाण्यम्? उत स्मृतिवत्परतन्त्राणाम् ? इति। यद्वा भवतु नामैषामपि तत्र विचारस्तेषामपि तु

---

दोषग्रस्तत्वादित्यर्थः। अत एवेति। तिरोहितश्रुतिमूलत्वादेवेत्यर्थः। सङ्गच्छत इति शेषः। नित्यानुमेयश्रुतिमूलत्वे त्वनुमानस्य प्रत्यक्षश्रुतिविरोधेनेदानीन्तनानामिव पूर्वेषामप्यप्रवृत्तेः प्रमाणान्तरस्य चाभावात् स्मृतिमूलश्रुतेरभावनिश्चयात् परिशेषाद् भ्रान्त्यादिमूलत्वेन यथाभाष्यं मुख्यमेवाप्रामाण्यं स्यादिति तद्भङ्गेनाननुष्ठानलक्षणाप्रामाण्यपरत्ववर्णनं वार्तिककारोक्तमनुपपन्नं स्यादिति भावः। ननु त्वन्मतेऽपि स्मृतिमूलभूततिरोहितश्रुतेः स्मृतिकारैः प्रत्यक्षोपलम्भसम्भवात्परप्रत्यक्षस्यापि च स्वप्रत्यक्षतुल्यत्वात्स्वप्रत्यक्षश्रुतिविरोधेऽपि कुतो नित्यमननुष्ठानमित्यत आह—स्मृतयो हीति। प्रत्यक्षश्रुतिविरुद्धा इति शेषः। सम्भाव्यन्त इति। सव्याक्षयञ्जनादिस्मृतीनां तथाविधानां प्रायेण दर्शनादिति भावः। ततः किं तत्राह—कल्पना चेति। सम्भावनाकारप्रदर्शनपूर्वकं तत्फलमननुष्ठानं दर्शयति—तेनेति। अविरुद्धविषये सव्याक्षयञ्जनादाविवेति सप्तमी समर्थाद्वतिः। न्यायाभासेन विकल्पकल्पनारूपेण। द्युशब्दो दिवसपर्यायः। दिव आदावन्ते च, निश आदावन्ते च, सायं प्रातश्चेत्यर्थः। तत्रोदितहोमिनां दिव आदौ, अनुदितहोमिनां निशान्ते। न च सायं होमोऽपि दिवसान्ते सूर्यास्तात्पूर्वमपि पक्षे स्यादिति शङ्क्यम्. स्मृतेः श्रुत्यर्थानुवादत्वेन तत्रोभाभ्यामेककालोपलक्षणात्। एवं तावत्स्मृत्यधिकरणविरोधाधिकरणयोः कल्पसूत्राणामनुदाहरणतयापौनरुक्त्यमुपसंहरति—तेनेति। ननु यदा प्रत्यक्षमूलश्रुतिशून्यानामपि स्मृतीनां प्रामाण्यं तदा सुतरां प्रत्यक्षश्रुतिमूलानां कल्पसूत्राणामिति तेषामप्रामाण्यसिद्धान्तविचारो विरुद्ध इत्यत आह—किञ्चेति। नन्वेवं सति पूर्वोक्तविषयभेदोपपादनं व्यर्थम्, स्मृतिष्वप्येवंविधविचारसम्भवादित्याशङ्क्येष्टापत्त्या पक्षान्तरमाह—यद्वेति। न च प्रत्यक्षवेदशब्दानामेतेषां कथं स्मृत्यधिकरणविषयत्वम्, पूर्वपक्षसिद्धान्तहेत्वसम्भवादिति वाच्यम्, कल्पसूत्रेष्वपि केनचिदंशेन शाखान्तरगतसिद्धवन्निर्देशानुपपत्तिकल्पितश्रुत्यर्थनिबन्धनाविशेषात्तदंशेन पूर्वपक्षसिद्धान्तरचनोपपत्तेः। बहुत्वाल्पत्वकृतः परं विशेषः। न हि स्मृतिष्वप्यग्निहोत्रञ्च जुहुयादित्याद्यंशे पूर्वपक्षसिद्धान्तरचनासम्भवतीत्याशयात् 'षडङ्गमेके' इति स्मृत्यवष्ट-

मन्वादीनामिह स्वातन्त्र्यनिराकरणम्। अथवाङ्गान्यत्रोदाहरणम्। तेषां हि "षडङ्गमेके" इति वेदत्वस्मरणात्स्वातन्त्र्यशङ्का जायते। अथवा शाक्यादिग्रन्थानां श्रुतिमूलत्वेन प्रामाण्ये निरस्ते संप्रति श्रुतिवदेव तत्प्रामाण्यमाशङ्क्य निराक्रियते। तदेतानि चत्वार्यपि विचारस्थानानि समानन्यायानि सह विचार्यन्ते—किमेषां स्वातन्त्र्येण प्रामाण्यं न वा ? इति। तदर्थं च किमेषां पौरुषेयत्वमपौरुषेयत्वं वेति चिन्तनीयम्। तत्रावगतिस्तावदेतेभ्यो धर्माधर्मविषया जायते, सा च स्वतःप्रमाणम्। तद्यदि पौरुषेयत्वं शाक्यादिग्रन्थानां ततः पुरुषदोषादप्रामाण्यापत्तेर्दृष्टप्रामाण्यहानिः स्यात्। अतो दृष्टानुगुण्यादपौरुषेयत्वम्। मन्वादीनां त्वविगीतमेव प्रामाण्यम्। तत् किमेषामेवापौरुषेयत्वं कल्प्यताम् ? उत वाक्यान्तरं कल्पयित्वा तस्य च नित्यत्वकल्पनम् ? इति।

दृष्टानुसारित्वान्नित्यत्वकल्पनं ज्यायः। अङ्गानां तु 'मन्त्रब्राह्मणयोर्वेदनामधेयं षडङ्गमेके' इति स्मरणाद् दृढमेवापौरुषेयत्वम्। कल्पसूत्राणान्तु पठितपाठप्रत्यक्षवेदार्थोपनिबन्धनाच्छाखान्तरतुल्यत्वादपौरुषेयत्वम्। न हि सकलजनप्रत्यक्षवेदवाक्यविषयमर्थं वदतामेषां पुरुषैः प्रणयनं संभवति। बुद्धबौधायनमनुमशकादिसमाख्यानं कठादिवत्प्रवचननिमित्तत्वेनाप्युपपन्नम्, तन्निमित्ता चैषा लौकिकानां कर्तृत्वस्मृतिः। भवति चात्र प्रयोगः—

बौद्धाद्यध्ययनं सर्वं गुर्वध्ययनपूर्वकम्।
बौद्धाध्ययनसामान्यादधुनाध्ययनं यथा ॥

---

म्भेन दृढपूर्वपक्षसम्भवलोभेन पक्षान्तरमाह—अथवेति। विषयाधिक्याय कल्पान्तरमाह—अथवेति। अन्यथा हि तेष्वियं शङ्कानिराकृतैव तिष्ठेदिति भावः। एवमेषां चतुर्णां विकल्पेनैतदधिकरणविषयत्वं वक्ष्यमाणतत्तदसाधारणहेत्वभिप्रायेणोक्तम्। इदानीं साधारणहेत्वभिप्रायेण समुचितानां विषयत्वं लाघवायाह—तदेतानीति। इत्थञ्च पिकादिविषये म्लेच्छप्रसिद्धेः स्वातन्त्र्येण प्रामाण्यवदमीषामपि तदाशङ्क्य निराक्रियत इत्यपवादसङ्गतिः। तत्र पूर्वपक्षहेतुमपौरुषेयत्वं प्रामाण्यानुपपत्त्या लाघवसहकृतया साधयन् शाक्यादीनां प्रामाण्यस्यैवासिद्धौ तदन्यथानुपपत्तेर्दुरुपपादत्वात् प्रथमं तेषां तदुपपादयति—तत्रेत्यादिना। अविगीतं निर्विवादम्। वैदिकपरिग्रहादिति भावः। दृष्टानुसारित्वादिति। लाघवस्योपलक्षणम् धर्मिकल्पनातो धर्ममात्रकल्पनाया लघुत्वात्। एवं साधारणं पूर्वपक्षन्यायमुक्त्वाङ्गेष्वसाधारणं तमाह—अङ्गानान्त्विति। कल्पसूत्रेषु तमाह—कल्पेति। आम्नाये पठितस्यैव पाठः कल्पसूत्रेषु यस्य तादृशः प्रत्यक्षो यो वेदस्तदर्थोपनिबन्धनादित्यर्थः। तुल्यत्वात् तथा प्रतिभानात्। तथापि पौरुषेयत्वे किं बाधकं तत्राह—न हीति। तथा च वैयर्थ्यमेव बाधकमिति भावः। तर्हि बौद्धादिसमाख्यानुपपत्तिरत आह—बुद्धेत्यादि। कठादिवत् कठादिभिरिव। तेन प्रोक्तमित्यर्थानुसारेण तदुपपत्तिरित्यर्थः। ननु बौद्धादिकर्तृकत्वेनानादिप्रसिद्धेः का गतिस्तत्राह—तन्निमित्ता चेति। अन्यथोपपन्नसमाख्यानिमित्तेत्यर्थः। प्रवचननिमित्तायां कर्तृत्वनिमित्तत्वभ्रमादिति भावः। एवमपौरुषेयत्वे दृष्टानुगुण्यलाघवप्रणयनवैयर्थ्यादिरूपं तर्कमुक्त्वा, तदनुग्राह्यमनुमानं दर्शयति—भवति चेति।

कल्पानां तु नित्यब्रह्मयज्ञविधिविषयत्वादपि नित्यता। श्रूयते हि 'यद्ब्राह्मणानीतिहास-पुराणानि कल्पान्' इति। कथं ह्यनित्यानां नित्यविधिविषयत्वम्? तस्मादेषां नित्यत्वम्। विधिविषयत्वात्स्वातन्त्र्यमिति प्राप्ते ब्रूमः—

नैतेषां पौरुषेयाणां स्वातन्त्र्यमुपपद्यते।
स्पष्टं च पौरुषेयत्वं दृढकर्तृस्मृतेर्बलात्॥

पुरुषपरम्परयैव ह्येषु कर्त्तारः स्मर्यन्ते, न काठकादिवत्प्रवचनेन परिहर्तुं शक्यन्ते। तत्र हि समाख्यानमात्रम्, अत्र तु पारम्पर्येणैव सर्वेषामविगीतस्मरणान्न नित्यत्वसम्भवः। षडङ्गमेक इति परमतोपन्यासात्पूर्वपक्षोक्तिमात्रम्। नानाशाखागतलिङ्गादिकल्पितश्रुत्यर्थोप-संहारस्य कल्पसूत्रानपेक्षैः कर्त्तुमशक्यत्वात्तादर्थ्येनार्थवन्निबन्धनं नानर्थकम्। एवंविधा-श्च ग्रन्थाः प्रतिमन्वन्तरं क्रियमाणा येन केनचित् सर्वकालमविच्छिन्नपारम्पर्येण प्रव-र्तन्ते। ते च वेदार्थकल्पनात्कल्पा इति नित्ययैव समाख्यया ब्रह्मयज्ञाङ्गतया विधीयन्त इत्यनित्यत्वेऽपि ग्रन्थव्यक्तीनां नित्यविधिविषयत्वोपपत्तिः। तस्मान्नैषां स्वातन्त्र्येण प्रामा-ण्यमिति शाक्यादिनिबन्धनानां सिद्धं धर्मे प्रमाणाभासत्वम्। कल्पादिषु तु यानि प्रत्यक्ष-श्रुतिन्यायविरुद्धानि वचनानि तेषाम् अप्रामाण्यम्। यथा 'अविशेषादुभौ' वेति सर्वपुरो-

---

सर्वं बुद्धाध्ययनमपि गुर्वध्ययनपूर्वकम्, बौद्धाध्ययनसामान्याद् बौद्धाध्ययनत्वादित्यर्थः। अधुनेति। इदानीन्तनतच्छिष्यक्रियमाणाध्ययनवदित्यर्थः। कल्पसूत्रेषु हेत्वन्तरमाह—कल्पानान्त्विति। अभ्युच्चयमात्रसूचनार्थञ्च न्यायप्रयोगानन्तरमेतदुक्तिः। श्रूयते हीति। गृह्यसूत्रादाविति शेषः। द्वितीयान्तस्याधीयीतेत्यनेनान्वयः। कथमिति। प्रवाहनित्यत्वकल्पनागौरवग्रस्तत्वादप्रमाणकत्वाच्चेति भावः। पुरुषेति। न हीयं कर्तृप्रसिद्धिः समाख्यामूला, येन समाख्यायां प्रवचननिमित्तायां कर्तृत्वनिमित्तत्वभ्रान्तिमूलत्वकल्पनया अप्रमाणं स्यात्, किन्त्वनेकपुरुषपारम्पर्येण साक्षादेवानुवर्तमानेति नाप्रमाणीकर्तुं शक्या, अतिप्रसङ्गा-दित्यर्थः। अविगीतं निर्विवादमिति श्लोकस्थदृढपदव्याख्यानम्। पूर्वपक्षेति। संज्ञासंज्ञिभावस्य प्रयोगमूलकत्वादङ्गेषु च केषामपि वेदशब्दप्रयोगाभावात् 'षडङ्गो वेदोऽध्येयः' इत्यादिविरोधाच्चेति भावः। कल्पसूत्राणां पुरुषनिर्मितत्वे वैय्यर्थ्यं परिहरति—नानेति। उपसंहारो ज्ञापनपूर्वकः प्रयोगः। तादर्थ्येन उपसंहारार्थत्वेन प्रवाहनित्यतया नित्यब्रह्मयज्ञविषयतामुपपादयति—एवंविधाश्चेति। कल्पनात् अनुष्ठान-समर्थीकरणात्। उपसंहरति—तस्मादिति। स्वातन्त्र्येण प्रामाण्याभावः सर्वधारणः। स च क्वचिद्विशेषणाभावमात्रात् क्वचिदुभयाभावात्। तत्र शाक्यादीनां स्वातन्त्र्याभावे श्रुतिमूलत्वरूप-पारतन्त्र्येण प्रामाण्यस्याप्यसम्भवादप्रामाण्यमेवेत्युभयाभावपर्यवसानमित्याह—शाक्येति। कल्पादिषु तु प्रायेण विशेषणाभावमात्रम्, श्रुतिमूलतया प्रामाण्यस्य सत्वात्। केषुचिदेव परमु-भयाभाव इत्याह—यानीति। केषाञ्चिदप्रामाण्योक्त्येतरेषां प्रामाण्यमर्थादुक्तम्। प्रत्यक्षेति। प्रत्यक्षश्रुतिश्च तदर्थनिर्णायको न्यायश्च ताभ्यां विरुद्धानीत्यर्थः। उदाहरति—यथेति। इदं

डाशचतुर्द्धाकरणवचनम्, सन्निहितं च शास्त्रम् ''आग्नेयं चतुर्द्धा करोती'' ति। तथा 'स कृताकृतः' इति सवनीये पुरोडाशे विकल्पवचनं पूर्वपक्षमूलम्, न वचनमूलम् 'अन्यत्र तदर्थवादवचना' दित्याश्वलायनवचनात्। तथा ''यावद्यूपं वेदिमुद्धन्ती'' ति वेदेर्यूपाङ्गत्ववचनम्। ''जाघनीभिश्च पत्नीः संयाजयन्ती'' ति जाघनीनां समुच्चयवचनं द्वादशाधिकरणपूर्वपक्षमूलम्, तत्रापि संनिहितं शास्त्रम् ''जाघन्या पत्नीः संयाजयन्ती'' ति। विवक्षितं

---

कात्यायनवचनम्। उभौ आग्नेयाग्नीषोमीयौ पुरोडाशौ चतुर्धा कार्यौ, अविशेषात् ''पुरोडाशं चतुर्धा करोति'' इति पुरोडाशत्वस्योद्देश्यतावच्छेदकस्याविशिष्टत्वात् एकत्वस्य च ग्रहैकत्ववदविवक्षितत्वादित्यर्थः। अत्रोभावित्युक्तेऽपि ऐन्द्राग्नाभिप्रायेण स्वयमाह—सर्वेति। अत्र विरुद्धश्रुतिमाह—सन्निहितमिति। शाखान्तरे प्रत्यक्षमित्यर्थः। एवञ्च विशेषशास्त्रेणोपसंहारादाग्नेयत्वस्य च ग्रहत्ववद्विवक्षितत्वादुक्तविरोध इति भावः। 'स कृताकृत' इत्यापस्तम्बवचनम्। सः सवनीयपुरोडाशः। अग्नीषोमीये हि पशौ तद्दैवत्य एव पुरोडाशोऽङ्गत्वेन विहितः। सोऽतिदेशेन सवनीये पशौ प्राप्त इत्यर्थः। कृताकृतो वैकल्पिकः। 'क्तेन नञ् विशिष्टेनानञ्' (पा० सू० २.१.६०) इति समासः। पूर्वपक्षेति। सवनीये 'छिद्रापिधानार्थत्वात् पशुपुरोडाशो न स्यादन्येषामेवमर्थत्वात्' इति द्वादशाध्यायाधिकरणसूत्रोक्तेत्यर्थः। सवनीये पशावतिदेशप्राप्तः पशुपुरोडाशो न स्यात्। कुतः ? तस्य छिद्रापिधानार्थत्वात् ''यद्व्रीहिमयः पुरोडाशो भवत्यपिधानायासुषिराय' इत्यर्थवादात्। ततः किं तत्राह—अन्येषामिति। अन्येषां प्रत्यक्षविहितानां सवनीयपुरोडाशानामेवमर्थत्वात्-छिद्रापिधानार्थत्वात्। तथा च तैरेव तत्कार्यसिद्धेरेतस्याकरणमित्यर्थः। करणे तु 'पुरोडाशेन माध्यन्दिने सवने' इति नित्यवदनुवादरूपवचनं मूलमतो विकल्पः। अन्यत्र सवनीयहविष्षु तदर्थवादस्य छिद्रापिधानार्थवादस्य वचनान्तरेणैव कार्यसिद्धेरित्यर्थः। स चायं न्यायो न युक्तः। पश्वङ्गभूतपुरोडाशस्य फलाकांक्षाविरहेणार्थवादिकतत्कल्पनाया असम्भवात्। तथेति। वचनमित्यनन्तरं पूर्वपक्षमूलमित्यनुषङ्गः। यूपशब्देन तन्मानं निखननमुच्यते। अत्र हि यूपैकादशिन्यां तावतां यूपानां रथाक्षमात्रान्तरालमानस्य प्राकृतवेदिदेशेऽसम्भवात्तदनुगुणं वेदिवर्धनमुच्यते। तच्च संस्कृतवेदिदेशस्य यूपमानाङ्गत्वे सतीत्यर्थाद्वेदिबन्धनवचनं वेदे यूपमानाङ्गत्वबोधकम्। तच्च पूर्वपक्षमूलम्। तृतीये ''अर्धमन्तर्वेदि मिनोति अर्धं बहिर्वेदि'' इति वचनस्य यूपार्धमानाङ्गत्वेन वेदिदेशविधायकत्वमिति पूर्वपक्षकरणात्। सिद्धान्ते तु सकलयूपमानाङ्गत्वेन अन्तर्बहिश्शब्दलक्षितलौकिकदेशविशेषस्य विधानादिति। जाघनीभिरिति। जघनसम्बन्धि मांसं जाघनीपदार्थः। पशुगणेऽनेकजाघनीसम्पाते बहुवचनेन सर्वजाघनीनां समुच्चयः सूत्रकारेणोक्तः, स चायुक्तः ''जाघन्या पत्नीस्संयाजयन्ति'' इति दर्शपूर्णमासप्रकरणगतवचने विधेयगतत्वेनैकत्वस्य विवक्षितत्वात्। जाघन्या अन्यतः प्राप्त्यभावेन संस्कार्यत्वासम्भवाच्च। पशुप्रकरणाधीतस्यापि ''जाघन्या पत्नीस्संयाजयन्ति'' इत्यस्य दर्शपूर्णमासयोरेवाज्यविकल्पेन विहिताया जाघन्या विकल्पेन प्राप्ताया नियमार्थत्वान्न जाघनीसंस्कारविधायकत्वमिति

चैकत्वमुपादेयगतत्वादिति द्वादशे वक्ष्यते। तथा "पुरोडाशं पर्यग्निकरोति" इति संनिहिते शास्त्रे "सर्वाणि हवींषी" ति वचनं च चमसाधिकरणपूर्वपक्षमूलं न वचनमूलम्। 'पशुः पुरोडाशविकारः स्यात्, पर्यग्निकरणदर्शनाद' त्यष्टमेऽभिधानात्। तदिदमुक्तम् "सर्वत्र च प्रयुक्तत्वात्संनिधानशास्त्राच्चेति"॥

॥ इति कल्पसूत्राधिकरणम्॥ ७॥

८

सू० अनुमान० स्मृतीनामाचाराणां च विरोधाविरोधयोः प्रामाण्याप्रामाण्ये प्रतिपादिते। स्वातन्त्र्यञ्च स्मृतीनां निरस्तम्। इदानीं केषांचिदाचाराणां स्मृतीनां च व्यवस्थाव्यवस्था वेति चिन्त्यते। होलाकादयो हि कैश्चिदेव प्राच्याद्यभिमानिभिरनुष्ठीयन्ते, न सर्वैः। गृह्याणि मानवातिरिक्तस्मृतयश्च कैश्चिदेव काश्चित्पठ्यन्ते, न सर्वैः। तदेतान् स्मृत्याचारानुदाहृत्य चिन्त्यते-किमेते तेषामेव धर्माः? किं वा सर्वेषामिति। तदर्थं च किमेतेषां मूलभूता श्रुतिर्व्यवस्थितविषया शक्यते कल्पयितुम्? उत सर्वसाधारण्येनैव? इति। तत्र—

---

द्वादशे वक्ष्यते। अत एव जाघन्या विधेयत्वात्तदेकत्वविवक्षापि सिद्धा। तथेति। पुरोडाशस्य परितो ज्वलदुल्मुकभ्रामणं पर्यग्निकरणम्। चमसेति। तत्र हि ग्रहैकत्ववद्ग्रहत्वस्याप्यविवक्षया सोमपात्रमात्रविवक्षया चमसेष्वपि संमार्ग इत्युक्तम्। तद्वदत्रापि पुरोडाशत्वाविवक्षया प्रकृतहविर्मात्रपरत्वाभिप्रायेण सर्वाणीति वचनमित्यर्थः। दशमेत्यपपाठः। न्यायसिद्धेऽप्युपोद्बलकं लिङ्गमाह—पशुरिति। 'पर्यग्निकरणाच्च' इत्यष्टमगतं सूत्रमर्थतः पठितम्। सर्वहविरङ्गत्वे पर्यग्निकरणदर्शनस्य पुरोडाशविकृतित्वरूपपूर्वपक्षसाधकता न स्यात्, सान्नाय्यविकृतित्वेऽपि तदुपपत्तेरिति भावः। एतदधिकरणगुणसूत्रेणैवायमर्थ उपक्षिप्त इत्याह—सर्वत्र चेति। अत्र चकारौ विरोधसूचकौ। कल्पसूत्रेषु चतुर्थाकरणादेस्सर्वत्र प्रयुक्तत्वाद् उक्तत्वात्, आग्नेयमित्यादिसन्निधानशास्त्राच्च। तथा च श्रुतिविरोधादप्रामाण्यमिति भावः। प्रयोगशास्त्रं कल्पसूत्रं स्वतः प्रमाणमिति चेत् इति सूत्रार्थः॥

॥ इति कल्पसूत्राधिकरणम्॥ ७॥

८

अनुमान० प्रामाण्याभावे स्वातन्त्र्येण प्रामाण्ये वा व्यवस्थाव्यवस्थाविचारानुपपत्तेर्हेतुहेतुमद्भावरूपां सङ्गतिं सूचयितुमाह—स्मृतीनामित्यादि। कीदृशी व्यवस्थेति दर्शयितुमुदाहरणप्रदर्शनपूर्वकं विचारस्वरूपमाह—होलाकादयो हीति। वसन्तोत्सवादय इत्यर्थः। गृह्यं स्मार्ताग्निसाध्यकर्मणां संस्काराणाञ्च बोधकमाश्वलायनीयादि। तेषामेवेति। यैरनुष्ठीयन्ते प्राच्यादिभिः

लिङ्गव्यवस्थया लिङ्गी व्यवस्थां प्रतिपद्यते ।
धूमो हि यत्र तत्रैव वह्निर्नान्यत्र मीयते ॥

स्मृत्याचारलिङ्गया श्रुतिर्न प्रत्यक्षा, तच्च लिङ्गं केषुचिदेवोपलभ्यते । अतस्तद्विषयतयैव श्रुतिरनुमातुं शक्यते । न हि तस्याः सर्वविषयत्वे प्रमाणमस्ति, व्यवस्थितविषयत्वेऽपि स्मृत्याचारयोरुपपत्तेः । यदि च साधारणी श्रुतिः स्यात्ततस्तन्मूलौ स्मृत्याचारावपि सर्वपुरुषगामिनौ स्याताम् । यदि ह्यालस्यादिनिमित्तमितरेषामनाचरणं तदा स्यादपि साधारणानुमानम् । यत्तु नियमेन प्राच्याद्यभिमानिनामचरणमितरेषां चानाचरणं न तत्साधारणानुमानेऽवकल्पते । तस्माद्व्यवस्थितमेषां धर्मत्वमिति प्राप्तेऽभिधीयते—

विशेषाभावमात्रेण प्रसिद्ध्येत् सर्वधर्मता ।
विशेषणाद्व्यवस्था स्यात्तच्च नेहोपपद्यते ॥

यदुक्तं सर्वधर्मत्वे प्रमाणं नास्तीति, तदयुक्तम्; न हि सर्वधर्मत्ववादिना प्रमाणमुपन्यसितव्यम्, उभयवादिसिद्धेन विधिनैवासति विशेषोपादाने सर्वधर्मत्वसिद्धेः । व्यवस्थावादिना तु वक्तव्यं प्रमाणम्, तच्च नास्ति । तथाहि-स्मृतयस्तावत्साधारण्येनैव विदधतीति न तेषु चरणविशेषोपादानमस्तीति स्मृत्यनुसार्येव श्रुतिकल्पनमिति, सापि साधारणी न्याय्या । पठनव्यवस्था तु कर्तुस्तच्चरणत्वात् । कर्त्ता हि छन्दोगः स्वशिष्यान् छन्दोगान् स्वग्रन्थमध्यापयामास, तेऽप्यन्यांश्छन्दोगानित्येवं गौतमीयस्य छन्दोगैः पाठः । तथापस्तम्बादिग्रन्थस्य तैत्तिरीयैः । एवं गृह्यग्रन्थानामपीति व्यवस्थितधर्मविषयत्वमप्रमाणकम् । आचाराणान्तु सर्वाचरितृष्वनुगतमनाचरितृभ्यश्च व्यावृत्तमाकृतिव्यक्तिगुणसंस्थानादिकं न किंचिद्विशेषणं संभवति, यदुपादाय होलाद्यधिकारं विशिंष्यात् ।

---

यैश्च यद्गृह्यं पठ्यते तेषामेवेत्यर्थः । सर्वसाधारण्येनेति । चिन्त्यत इत्यनुषङ्गेणान्वयः । लिङ्गं गमकम्, लिङ्गी गम्यः । हेतोः पक्षधर्मताबलात्साध्यविशेषसिद्धेरित्यर्थः । नन्वाचारेण कल्प्यमाना श्रुतिर्लाघवात्कर्तृविशेषानालिङ्गितैव कल्प्यत इत्यर्थात्सर्वविषयत्वसिद्धिरित्याशङ्क्य बाधकमाह—यदि चेति । तथाचाधिकारिविशेषघटितैव श्रुतिः कल्पनीयेति भावः । विशेषाभावेति । अधिकारिविशेषबोधकपदाभावेत्यर्थः । ननूक्तबाधकवशाद्विशेषकल्पनावश्यिकीत्यत आह— विशेषणादिति । अधिकारिविशेषबोधकप्राच्यादिविशेषणादित्यर्थः । तत्र स्मृतिषु पाठव्यवस्थाया अन्यथोपपत्तेर्न विशेषकल्पनेत्याह—स्मृतयस्तावदिति । चरणा अध्येतृविशेषाः । कर्तुः गौतमादेस्तच्चरणत्वात् सामशाखाध्येतृत्वात् । एतदेव विशदयति—कर्ता हीति । आचारेषु तु विशेषणकल्पनाया असम्भव एवेति विशेषमाह—आचाराणान्त्विति । कर्तुरिति शेषः । आकृतिर्ब्राह्मणत्वादिजातिः । व्यक्तिर्देशादिः । गुणो गौरपिङ्गाक्षत्वादिः । संस्थानं लम्बकर्णत्वादि । आदिना "यावतोऽश्वान् प्रतिगृह्णीयात्" इत्यादिष्विव क्रियायास्संग्रहः । व्यतिरेकव्यभिचारमाह—

प्राच्यादिसमाख्याऽपि व्यभिचारिणी, तद्देशगतानामपि केषांचिदनाचरणात्, चिरविनिर्गतपुत्रपौत्राणामपि चासत्यां समाख्यायां समाचरणात्। तस्मादसति विशेषणे सर्वधर्मत्वमाचाराणां स्मृतीनां चेति सिद्धम् ॥

॥ इति होलाकाधिकरणम् ॥८॥

९

सू० प्रयोगोत्पत्ति० स्मृत्याचारविरोधे स्मृतेर्बलीयस्त्वमाचारेष्वप्यभियुक्ताचारस्य बलीयस्त्वं स्थितम्। इदानीं शब्दापशब्दविभागेऽपि किं व्याकरणस्मृतेस्तदभियुक्तानामाचारस्य चेतरलोकव्यवहाराद्बलीयस्त्वं संभवति, नेति विचार्यते। तदिहैकस्मिन्नर्थे प्रयुज्यमानान्गोगाव्यादिशब्दान् व्याकरणानुगताननुगतांश्चोदाहृत्य चिन्त्यते-किमेते सर्वे एकस्मिन्नर्थे प्रयोक्तव्याः साधवः ? किं वा व्याकरणानुगता एव साधवः ? अन्ये त्वसाधवो न प्रयोक्तव्या इति। तदर्थं च किं सर्वेऽप्यविच्छिन्नपारम्पर्यप्रयोगजाः ? उत केचिदशक्तिजाः ? अपभ्रंशाः ? इति। तदर्थं च किं व्याकरणं प्रमाणमप्रमाणं वा? इति चिन्तनीयम्। तत्सिद्धये किं तस्य मूलं संभवति नेति। मूलसंभवे प्रमाणभूतव्याकरणबलीयस्त्वेन तदभियुक्तपुरुषाचारबलेन च पृथग्जनाचारबाधात् गाव्यादीनामसाधुत्वम्, निर्मूलत्वे तु तदप्रामाण्याल्लौकिकप्रयोगाविशेषात् सर्वेषां साधुत्वेन प्रयोज्यतेति। तेन व्याकरणे प्रामाण्याप्रामाण्यमेवात्र चिन्तयितव्यम्। तत्र—

---

चिरेति। चिरात् पुत्रादिगर्भसम्भवात् पूर्वमेव निर्गतानां ये पुत्रपौत्रादयस्तेषामित्यर्थः। तेन गर्भसम्भवलक्षणं तत्रभवत्वमपि पुत्रादीनां न सम्भवतीति भावः। अभिमानस्तु प्रमारूपो न सम्भवत्येव निमित्ताभावात्। भ्रमरूपस्तु न विशेषणं सम्भवत्यनवस्थितत्वादिति। अनुमीयते श्रुतिरनेनेत्यनुमानम् आचारगृह्यस्मृत्यादि तस्य व्यवस्थानात् व्यवस्थितत्वात् प्रमाणं मूलश्रुतिवचनमपि तत्कर्तृविशेषसंयुक्तमेव कल्प्यं स्यादिति सूत्रार्थः ॥

॥ इति होलाकाधिकरणम् ॥८॥

९

प्रयोगोत्पत्ति० सङ्गतिसूचनाय वृत्तमनुकीर्तयति—स्मृतीति। तथा च प्रसक्तस्य प्रामाण्यस्याक्षिप्य समाधानादाक्षेपिकी पादसङ्गतिः। अनन्तरसङ्गतिस्तु पूर्वाधिकरणोक्तकर्तृविशेषबोधकोपपदासम्भवादिहापि साधुत्वरूपशब्दविशेषणासम्भवेन पूर्वपक्षोत्थानात्प्रसङ्गरूपेति ज्ञेयम्। अयञ्च व्याकरणप्रामाण्याप्रामाण्यविचारो हेतुभूतसङ्गतिप्रदर्शनायोक्तः। इदानीं फलीभूतं मुख्यविचारमाह—तदिहेति। तदर्थमिति। उक्तविचारसिध्यर्थमित्यर्थः। अविच्छिन्नं पारम्पर्यं यस्य तस्मात्प्रयोगाज्जातास्तन्मूलप्रयोगा इत्यर्थः। व्याकरणं प्रमाणमप्रमाणमिति च चिन्त्यत इत्यन्वयः। तदर्थञ्चेति। चकारस्य स्थानविनिमयात् सम्भवति नेतीत्यत्रापि चिन्त्यत इत्यनुषङ्गः। पृथग्जनो नीचजनः। प्रामाण्याप्रामाण्यमिति समाहारः। दृष्टार्थमपीति। तुष्ट्यर्थं भोजनमाश्रित्य

निर्मूलत्वाद्विगीतत्वान्नैष्फल्याद्वेदबाधनात् ।
पूर्वापरविरोधाच्च नास्ति प्रामाण्यसंभवः ॥
तस्मादनेन शब्दानां प्रयोगो न नियम्यते ।
तेनार्थप्रत्ययात्सर्वे प्रयोज्या न व्यवस्थया ॥

नियमद्वयार्थं हि व्याकरणम्—साधूनेव प्रयुञ्जीत नासाधून् इत्येकः प्रयोगनियमः, गवादय एव साधवो, न गाव्यादय इति साधुत्वस्वरूपनियमोऽपरः। न चैतद्द्वयमप्यनेन नियन्तुं शक्यते । तथा हि—न तावत्साधूनेव प्रयुञ्जीतेति नियमसंभवः, अर्थावगमाय हि शब्दोच्चारणं न धर्माय, अर्थश्च यदा साधुभ्योऽपि गम्यते, तर्हि साधुनियमोऽनर्थकः। अथ न गम्यते,ततः सुतरां नियमशास्त्रानर्थक्यम्,अर्थवशादेव नियमद्वयसिद्धेः । अथ गम्यमानेऽप्यसाधुभ्योऽर्थे दृष्टार्थमपि शब्दप्रयोगमाश्रित्य धर्माय साधुनियमः शास्त्रेण क्रियत इत्युच्यते, तत्र मूलासंभवात् । न तावदत्र प्रत्यक्षादीनां मूलत्वम् तेषां धर्माधर्मयोरप्रवृत्तेः। न च वेदवाक्यानि गवादिशब्देषु प्रतिपदं कल्पयितुं शक्यन्ते, अनन्तवाक्यपाठासंभवात् अपठितानां च मूलत्वानुपपत्तेः। न च सुशब्दमेव प्रयुञ्जीत, नापशब्दमित्येकेनैवोपलक्षणेन सर्वेषामुपसंग्रहः, गाव्यादीनामपि श्रोत्रग्रहणत्वेन सुशब्दत्वाद्व्यवस्थानुपपत्तेः । न चावान्तरसामान्यं गवादिष्वनुगतं गाव्यादिभ्यश्च व्यावृत्तं किंचिदस्ति, येन व्यवस्था स्यात् । साधुत्वमिति चेत्, किं पुनरिदं साधुत्वम् ? यद्गवादिष्वेव व्यवस्थितमित्युच्यते । न हीदं प्रत्यक्षादिभिर्गम्यते। वाचकत्वमिति चेत्, तद्गाव्यादिष्वप्यविशिष्टम्। तेषामपि हि प्रयोगप्रत्ययानुपपत्त्या वाचकत्वं लोके गम्यते। न ह्यवाचकानां प्रयोगः प्रत्यायकत्वं वा घटते ।

न च गवादीनामिव प्रियङ्ग्वादिषु गुणात्प्रयोगसंभवः, मुख्याभावात् । मुख्यपूर्वको हि गौणः, नासावत्यन्तावाचकस्य गाव्यादेरवकल्पते । एतेन लक्षणा प्रत्यूढा । तेन गाव्यादीनामवाचकत्वं लोकविरुद्धमिति न साधुरूपमपि शास्त्रेण नियन्तुं शक्यते । अनादित्वं साधुत्वमिति चेत्, एतदपि गाव्यादिष्वविशिष्टम् । तत्रापि सम्बद्धुरस्मरणाद-

---

प्राङ्मुखत्वनियमवदित्यर्थः । एतच्छङ्कोत्तरत्वेन निर्मूलत्वादिति । श्लोकपदं व्याचष्टे—मूलेति । ननु प्रियङ्ग्वाद्यवाचकानां यवादिपदानां यथा प्रियङ्ग्वादिषु गौणः प्रयोगस्तथा गाव्यादीनामप्यवाचकानां प्रयोगः कुतो न स्यादित्याशङ्क्य किञ्चिदर्थवाचकस्य यवादिशब्दस्यान्यत्र गौणत्वं युक्तम्, न तु सर्वथैवावाचकस्य गाव्यादेरित्याह—मुख्याभावादिति । एतेन मुख्यार्थाभावेन । लोकविरुद्धं लोकप्रत्ययविरुद्धम् । प्रयोगनियामकत्वासम्भवकथनमध्य एव प्रसङ्गात्साधुस्वरूपनियामकत्वरूपद्वितीयपक्षासम्भवमपि दर्शयति—साधुरूपमपीति । सम्बद्धुः । डित्थादिसंज्ञाशब्दवत्सम्बन्धकर्तुः । अदृष्टसाधनत्वरूपसाधुत्वबोधिकाया व्याकरणस्मृतेः किं प्रत्यक्षादिकं मूलम् ? उत श्रुतिः ? नाद्य इत्याह—तस्येति । अदृष्टसाधनत्वस्येत्यर्थः । न द्वितीय इत्याह—वेदेति । आनन्त्यदोषादिति । ननु सकलं साधुशब्दगोचरमेकमेव वेदवाक्यं कल्प्यतामत आह—

दृष्टसाधनत्वमिति चेत्—न, तस्य प्रत्यक्षाद्यविषयत्वात् वेदवाक्यानाञ्च प्रतिपदमसंभवादुपलक्षणानुपपत्तेश्च। तत्र साधुत्वमेवोपलक्षणं तदेव च प्रमेयमित्यात्माश्रयदोषापत्तिः। तस्मान्मूलाभावादप्रमाणं व्याकरणम्। परस्परविगानाच्च, सूत्रकारो ह्यवश्यवक्तव्यं प्रयोजनमनभिदधानो निष्प्रयोजनतामेव शास्त्रस्य मन्यते, भाष्यवार्त्तिककारौ तु धर्मप्रयोजनतामिति विगीतत्वम्। तयोरपि मिथो ज्ञानतत्पूर्वप्रयोगधर्मत्ववचनाद्विगीतत्वम्। निष्फलं चेदं शास्त्रम्, न ह्यनेन धर्मार्थकाममोक्षाणां कश्चिदवाप्यते। धर्म इति चेत्, न; तत्रापि पूर्वोक्तनिर्मूलत्वेनाप्रमाणत्वात्। न च रक्षोहादीनामपि प्रयोजनत्वम्, तेषामन्यत एव शिष्याचार्यसंबन्धलोकमीमांसादिभ्यः सिद्धिरिति वार्त्तिक एव प्रपञ्चितम्। वेदविरुद्धं चेदं व्याकरणम्—"दृष्टं साम" इत्यविकृत्य "कलेढंक्"

---

उपलक्षणेति। सर्वसाधुशब्दानुगतधर्मेत्यर्थः। तत्र उपलक्षणान्तरासम्भवे सति। आत्माश्रयेति। अदृष्टसाधनभूताः शब्दा अदृष्टसाधनमिति वाक्ये उद्देश्यतावच्छेदकविधेययोरैक्येन बोधायोगादित्यर्थः। विगीतत्वादिति श्लोकोक्तद्वितीयहेतुं व्याचष्टे—परस्परेति। सूत्रभाष्यवार्तिककृतामन्योन्यविरोधादित्यर्थः। ज्ञानेति। 'अथवा पुनरस्तु ज्ञाने धर्मः' इति भाष्यकारेण ज्ञाने धर्मत्वमुक्तम्। वार्तिककृता तु शास्त्रपूर्वकप्रयोगेऽभ्युदय इति ज्ञानपूर्वकप्रयोग इति विरोध इत्यर्थः। नैष्फल्यादिति व्याचष्टे—निष्फलमिति। मोक्षाणामिति निर्धारणे षष्ठी। ननूत्तरोत्तरं मुनीनां प्रामाण्याद्भाष्यानुसारेण सुशब्दज्ञानाद्धर्म एव फलमस्त्विति शङ्कते—धर्म इतीति। नन्वेवमपि वेदरक्षादिदृष्टप्रयोजनमेवास्त्विति शङ्कते—न चेति। छान्दसलोपागमविकारादिज्ञानेन यथावस्थिताविप्लुतरूपोच्चारणं वेदरक्षणम्। "अग्नये जुष्टम्" इति मन्त्रस्य सौर्ययागे प्राप्तस्य सूर्याय जुष्टमित्यूहः। आदिनागमलाघवासन्देहादिग्रहणम्। 'षडङ्गो वेदोऽध्येयः" इत्यागमोक्तषडङ्गयुक्तवेदाध्ययनसिद्धिर्व्याकरणप्रयोजनम्। अन्यथा पञ्चैव स्युरिति। तथा लाघवमपि प्रकृतिप्रत्ययान्वाख्यानोपायेन साधुशब्दज्ञाने। अन्यथा प्रतिपदपाठेऽत्यन्तगौरवम्। एवं स्थूलपृषत्यादिपदार्थः कर्मधारेण बहुव्रीहिणा वा ग्राह्य इति सन्देहे पूर्वपदप्रकृतिस्वरेण बहुव्रीहिनिश्चयो व्याकरणादित्यर्थः। दूषयति—तेषामिति। अन्यतः व्याकरणातिरिक्तेभ्यः। शिष्याचार्यसम्बन्धोऽध्याप्याध्यापकभावः तेनाध्ययनमुलक्ष्यते। गुरुसहाध्यायिसम्बद्धाध्ययनेनैव स्वरपदवाक्यक्रमाणामिव प्रकृतिप्रत्ययात्मकपदस्वरूपाणामपि रक्षणं सिध्यति। एवमूह्यमानसूर्यायेतिपदं स्मृतिपुराणकाव्यलोकाद्यवगतमेव। ऊहविषयज्ञानन्तु मीमांसात एवेति न व्याकरणापेक्षम्। आगमोक्तषडङ्गपदेन श्रुतिलिङ्गादीनि ग्राह्याणि। 'यदकालयन्त' इत्यादि वैदिकनिरुक्तान्तर्गतव्याकरणाभिप्राया वा षट्संख्या। प्रातिशाख्याभिप्राया वा। लाघवन्त्वसिद्धम्। सूत्रधातुगणोणादिविषमानेकग्रन्थतस्तद्गतालौकिकसंज्ञापरिभाषादिसापेक्षशब्दज्ञाने गौरवेण सिद्धसुशब्दपाठस्यैव लघुत्वात्। पदार्थसन्देहस्यापि अनादिगुरुपरम्पराव्याख्यानेन निरासादिति भावः। ननु स्थूलपृषत्यादिपदार्थस्यानादिव्याख्यानतो निर्णयसम्भवेऽपि कदाचित्तन्मोषे व्याकरणान्निर्णयो भविष्यत्यत आह—वेदेति। अकालयत्-असुरान् देवलोकाद्भ्रंशितवत् तत्काले यस्य

"वामदेवाद् ड्यड्ड्यौ", इत्युक्तम् । वेदे च "यदकालयत्तत्कालेयस्य कालेयत्वं ततो" वामं वसु समभवत्" इत्युपन्यस्य "वामं वा इदं देवेभ्योऽजनि तस्माद्वामदेव्यम्" इति वेदबाधादप्रामाण्यम् । पूर्वापरविरोधाच्च—अर्थप्रयुक्तानां हि शब्दानां व्याकरणं प्रतिज्ञातम् । वाक्यमेव च तथेष्टं न पदानि, अनर्थकत्वात्, यथोक्तम्—

**"ब्राह्मणार्थो यथा नास्ति कश्चिद् ब्राह्मणकम्बले ।**
**देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः ।। इति**

ततश्च यथाप्रतिज्ञं वाक्यमेव व्याकरणेन संस्कर्त्तव्यं तदव्याकरणात्पदव्याकरणाच्च पूर्वापरविरोधः । पदद्वारेण वाक्यमेव व्याकरणेन संस्क्रियत इति चेन्न, अत्यन्तमविद्यमानत्वाद्वाक्ये पदानां तद्द्वारेण वाक्यस्य विषाणद्वारेणेव शशस्य संस्काराभावात् तस्मादप्रमाणं व्याकरणं सर्वैभाषितव्यम् इति प्राप्तेऽभिधीयते—

**प्रयोगप्रत्ययौ तावद्वाचकत्वादृतेऽपि हि ।**
**युक्तावेकस्य चार्थस्य न्याय्या नानेकशब्दता ।।**

---

एकस्य चेति । एतच्चाग्रे प्रपञ्चयिष्यते । ननु विनिगमकाभावादगत्यान्याय्यमप्यङ्गीकार्यमत साम्नः कालेयत्वमित्यर्थः । तथा च कलिना ऋषिविशेषेण दृष्टं कालेयमिति शेषः । व्याकरणं वेदविरुद्धमित्यर्थः । तत इति । "आपो वा ऋत्वियमार्च्छंत् तासां वायुः पृष्ठे व्यवर्तत" इति पूर्ववाक्योक्तात् रजोधर्मं प्राप्तानामपां पृष्ठे वायोर्व्यवर्तनाख्यमैथुनादित्यर्थः । वामं सुन्दरम् । वसु धनरूपम् । उपन्यस्य उपक्रम्य वामदेव्यमित्युक्तमिति शेषः । विरोधफलमाह-वेदबाधादिति । प्रबलेन वेदेन दुर्बलव्याकरणबाधादित्यर्थः । नन्वयमर्थवाद इति नास्य निरुक्तिपरत्वमत आह—पूर्वापरेति । अर्थप्रयुक्तानाम् अर्थप्रतीतिप्रयुक्तानाम् । व्याकरणम् अनुशासनम् । प्रतिज्ञातं वार्तिककृतेति शेषः । अर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियम इत्युक्तत्वात् । वाक्यमेव चेति । अखण्डं स्फोटरूपमित्यर्थः । अनर्थकत्वात् । अर्थप्रत्यायकत्वासम्भवात् । वर्णसङ्घाताभिमतानां तेषां स्वरूपतोऽभिव्यक्तितो वा योगपद्याभावात् संघातानुपपत्तेः । उक्तार्थे वाक्यपदीयकारिकासम्मतिमाह—यथोक्तमिति । यथा ब्राह्मणकम्बलशब्देऽश्वकर्णादिवत्कम्बलजातिविशेषे रूढे ब्राह्मणशब्दार्थो विशेषणत्वेन नास्ति, तथा वाक्ये देवदत्तादयः शब्दा अवयवरूपाः सखण्डवाक्यार्थावयवभूतैर्विशेष्यविशेषणभूतैरर्थैरर्थवन्तो न भवन्ति, किन्तु वाक्यतदर्थश्चाखण्ड एवेत्यर्थः । तदुक्तमेतत्पूर्वंकारिकायाम्—शब्दस्य न विभागोऽस्ति कुतोऽर्थस्य भविष्यति ।
विभागैः प्रक्रियाभेदमविद्वान् प्रतिपद्यते' ।। इति ।

सखण्डं वाक्यमिति मन्वानश्शङ्कते—वाक्यमेवेति । अखण्डत्वाद्वाक्यस्य नैतत्सम्भव इत्याह—अत्यन्तेति । वस्तुतोऽविद्यमानत्वेऽपि कल्पितत्वेन तच्छङ्कानिरासायात्यन्तेत्युक्तम् । न हि कल्पितं सत्यसंस्कारे द्वारीभवितुं योग्यम्, येन कल्पनार्थवती भवेदिति भावः । तदाह—विषाणेति । हेतुहेतुमद्भावापन्नौ पूर्वपक्षावुपसंहरति—तस्मादिति ।

साधुत्वासाधुत्वव्यवस्थासिद्धौ तत्प्रयोगनियमादिसिद्धिरतः प्रथमं तां साधयति—प्रयोगेति । युक्ताविति । शक्तिभ्रमादिति भावः बाधकाभावात्कुतो भ्रमत्वनिर्णयस्तत्राह—

अभियुक्तस्मृतेश्चात्र स्याद्विशेषावधारणम् ।
स्मृतेः स्मृत्यन्तरं मूलं साधुरूपनिरूपणे ॥
प्रत्यक्षव्यवधानाच्च नान्धवाक्यसमानता ।
प्रयोगनियमे मूलं वेदस्तस्मात्प्रमाणता ॥

गवादय एव साधवो न गाव्यादय इति साधुस्वरूपनियमः । साधव एव प्रयोज्या नासाधव इति धर्माय प्रयोगनियम इति द्वौ नियमौ व्याकरणेन प्रतिपाद्येते । द्वयोरपि च मूलसंभवादुपपन्नं प्रामाण्यम् । तथा हि—प्रयोगनियमे मन्वादिवत्सप्रत्ययप्रणीतत्वाद्वेदमूलत्वम् । न हि पाणिनिकात्यायनपतञ्जलिभ्योऽन्ये प्रणयितारो विद्यन्ते । तेन च तत्प्रत्ययात्स्वनुमानं वेदवाक्यम् । प्रत्यक्षमेव च वाजसनेयादिषु वचनम्—"तस्माद् ब्राह्मणेन न म्लेच्छितवै म्लेच्छो ह वा एष यदपशब्दः" इति । "आहिताग्निरपशब्दं प्रयुज्य सारस्वतीमिष्टिं निर्वपेत्" इत्यादिषु च प्रायश्चित्तविधानम् । 'उत त्वः पश्यन्नित्यादयश्च

---

आह—अभियुक्तेति । निरूपणे । नियमप्रतिपादने । न ह्यत्रान्धपरम्परादोषः, शब्दस्य विविक्ततया प्रत्यक्षत्वादित्याह—प्रत्यक्षेति । पूर्वापरस्मृत्योर्जायमानेन प्रत्यक्षेण व्यवधानादित्यर्थः । एवं साधूनेव प्रयुञ्जीतेति नियमसम्भवेऽपि निर्मूलत्वेनानादर्तव्यतामाशङ्क्याह—मूलं वेद इति । एकवचनेनैकमेव वाक्यं कल्प्यमिति सूचितम् । तस्माद् ब्राह्मणेनेति । म्लेच्छः अनृता वाक् कृत्यप्रत्ययार्थे छन्दसि तवैप्रत्ययः । न म्लेच्छितव्यमित्यर्थः । यद्यपीदं वचनमपशब्दनिषेधकम्, न तु सुशब्दनियमं साक्षाद्बोधयति, तथाप्यर्थादपि सुशब्दनियमबोधकतया भवत्येव मूलमिति भावः । "तस्मादेषा व्याकृता वागुद्यते" इति तु साक्षात्सुशब्दनियमबोधकमुदाहृतम् । इदञ्च व्याकृताख्यसुशब्दनियमविधानमनारभ्याधीतमपि फलकल्पनागौरवापत्तेरेषेति च सर्वनाम्नो बुद्धिस्थपरामर्शकत्वाद्वैदिकस्यैव क्रतूपयोगिनो वाग्वदनस्य वैदिकत्वसामान्येन बुद्धिस्थत्वात्तदाश्रितमेवेति वारुणेष्टिवत् क्रत्वङ्गमेव भवतीति ज्ञेयम् । प्रायश्चित्तविधावाहिताग्निग्रहणं स्पष्टार्थम् । क्रत्वर्थनियमातिक्रमनिमित्तप्रायश्चित्तस्य क्रत्वर्थत्वादेवाहिताग्निकर्तृकत्वसिद्धेः । उपोद्बलकान्तरमाह—उतत्व इति ।

"उत त्वः पश्यन्न ददर्श वाचं उत त्वः श्रृणवन्न श्रृणोत्येनाम् ।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्ये उशती सुवासाः" ॥

इति मन्त्रः । अत्र उतेत्यप्यर्थे । त्व इति कश्चिदर्थे । कश्चित् साध्वसाधुविभागानभिज्ञो वाचं पश्यन्नपि न पश्यति । दर्शनञ्च शब्दस्यानुसन्धानरूपमानसज्ञानम् । कश्चित्स एवैनां श्रृण्वन्नपि न श्रृणोति, विवेकाभावादित्यनभिज्ञनिन्दा । त्वस्मै कस्मैचिद्विवेकशीलाय वाक् तनुं स्वरूपं विसस्रे विवृणुतेऽपि । कस्मै केव ? पत्ये उशती कामुकी सुवस्त्रा जायेवेति विभागस्तुतिः । तथा च निन्दया निषेधोन्नयनं स्तुत्या च सुशब्दज्ञानपूर्वकप्रयोगनियमविधिकल्पनमावश्यकमित्याशयः । ननु शब्दप्रयोगस्य केवलदृष्टार्थत्वात्तत्र सुशब्दनियमानर्थक्यमत आह—दृष्टार्थेऽपि चेति ।

बह्वो मन्त्रवर्णाः शब्दापशब्दविभागाभिज्ञतदनभिज्ञस्तुतिनिन्दारूपाः दृष्टाऽर्थेऽपि च शब्दप्रयोगे तदाश्रितः साधुनियमो भोजनाश्रित इव दिङ्नियमः शास्त्रेण क्रियत इति न प्रयोगोत्पत्त्यशास्त्रत्वादव्यवस्था । सत्यानृतवदनवर्जनयोश्चावगीतमेव शास्त्रार्थत्वम् । तच्च शब्दार्थभेदेन द्विविधम्-तत्र यथैवार्थसत्यं यथावस्थितार्थकथनं धर्माय, तथा शब्दसत्यत्वमपि यथावस्थिताविप्लुतशब्दोच्चारणमित्यर्थः । यथा चार्थानृतमन्यथावस्थितस्यान्यथावचनं प्रत्यवायाय, तथा शब्दानृतमप्यन्यरूपे वाचके सत्यन्यरूपोच्चारणमिति यावत् । तेन प्रयोगोत्पत्त्यशास्त्रत्वम् । द्वाभ्यामेव च वाक्याभ्यां साधूनेव शब्दान् सत्पर्यायान् प्रयुञ्जीत नासाधूनपशब्दाननृतपर्यायानिति समस्तशब्दापशब्दविधिप्रतिषेधसिद्धेर्नानन्तवाक्यकल्पनापत्तिः । साधुत्वासाधुत्वे एव च शब्दापशब्दसत्यानृतपर्याये उपलक्षणे । अनादिवाचकत्वमेव साधुत्वम् तद्विपर्ययश्चासाधुत्वम् ।

यत्तु प्रयोगप्रत्ययान्यथानुपपत्त्या गाव्यादीनामपि वाचकत्वादव्यवस्थानुपपत्तिरित्युक्तम्, तत्रोच्यते—यद्यप्यमीषामवाचकत्वम्, यद्यपि च मुख्याभावे गौणलाक्षणिकयोरसंभवस्तथाऽपि वाचकाशक्तिजतया मूलशब्दोपस्थापनेन प्रत्यायकत्वं भविष्यति । अशक्तिजत्वापरिज्ञानाच्चोपशृण्वन्तोऽपि बालास्तत्रैव संज्ञासं-

---

अपभ्रंशमूलभूतगोशब्दाद्युपस्थापनेनेत्यर्थः । अशक्तिजत्वमजानानां बोधप्रकारमाह—अशक्तीति । तथा 'आयुष्यं प्राङ्मुखो भुङ्क्ते' इतिवत् स्वतन्त्रफलार्थ एवायं नियम इत्यर्थः । प्रकारान्तरेण सुशब्दप्रयोगनियमे मूलमाह—सत्येति । अविगीतं निर्विवादम् । तच्च सत्यानृतत्वञ्च । शब्दार्थेति । शब्दसत्यत्वमर्थसत्यत्वञ्चेति द्विप्रकारमित्यर्थः । शब्दे हि स्वरूपतः सत्यत्वं साधुत्वमेव । अर्थतस्त्वबाधिततात्पर्यविषयबोधकत्वम् । एतद्विपर्ययोऽनृतत्वमिति । एवञ्चोभयसाधारण्येनैव सत्यानृतवदनविधिनिषेधवाक्यार्थः पर्यवस्यति—अबाधिततात्पर्यविषयार्थकं वदेन्नान्यादृशमिति । तदर्थकत्वञ्च तदर्थविषयवृत्तिमत्वम् । तच्च नापभ्रंशे, किन्तु साधुशब्द एवेति । एतेन विधिगतसत्यानृतशब्दयोस्सकृदुच्चरितयोः शब्दार्थभेदभिन्नसत्यानृतत्वपरत्वा—योगादर्थगततत्परत्वमेव तयोरिति प्रौढिवादमात्रेणायं पक्ष इति प्रत्युक्तम्, उभयसाधारणरूपाश्रयणेन वाक्यार्थसम्भवस्य दर्शितत्वात् । न चैवमकर्मकालेऽपि मिथ्याभाषणादिना साधुप्रयोगादपि प्रत्यवायापत्तिरिति वाच्यम्, इष्टापत्तेरिति । पूर्वपक्ष्युक्तामनन्तमूलवाक्यकल्पनापत्तिं परिहरति—द्वाभ्यामिति । न च विधिनिषेधयोरेकेनैवापरसिद्धावुभयकल्पनानर्थक्यमिति वाच्यम्, नियमस्य काम्यतया फलेच्छाविरहदशायां निषेधासिद्धेर्निषेधकवाक्यस्यावश्यकत्वात्, नियमस्य फलार्थताया विधिं विना ज्ञातुमशक्यत्वेन विधेरावश्यकत्वाच्च । ननु साधुत्वासाधुत्वे निर्वक्तुं न शक्येते इत्युक्तम् तत्राह—अनादीति । वाचकत्वम् अर्थबोधकत्वं गाव्यादेरपीत्यतस्तद्वारणायानादीति । वृत्तिसहकृतमित्यर्थः । तेन वृत्त्या पदार्थप्रत्यायकं यत्तदर्थे साध्विति फलितम् । तेनार्थान्तरविषयवृत्तिमतोऽपि नार्थान्तरे साधुत्वमिति ज्ञेयम् । तद्विपर्यय इति । वृत्तिं विनार्थबोधकत्वमित्यर्थः । वाचकेति । वाचके गोशब्दादौ या अशक्तिः करणापाटवेनासामर्थ्यम् तज्जन्यज्ञानेनेत्यर्थः । मूलेति

ज्ञिसंबन्धं शिक्षित्वा तथैव स्वयं व्यवहरन्ति। तेभ्यश्च शिक्षित्वान्येऽपीत्येवं प्रयोगप्रत्यययोरुपपत्तौ नैकान्ततः सर्वेषामप्यविच्छिन्नपारम्पर्यवाचकत्वम् अध्यवसातुं शक्यते। संभवति चैवं नानेकशब्दत्वमेकस्यार्थस्याभ्युपगन्तुं न्याय्यम्, अनेकशक्तिकल्पनाप्रसङ्गात्। प्रयोगवेलायां चाष्टविधदोषनिदानविकल्पापत्तेः, वाच्यवाचकयोश्चैकैकधावधारितस्य नियमस्यानेकत्वे बाधप्रसङ्गात्। सास्नादिमानेव हि यस्याभिधानक्रियायां कर्म तस्यां गोशब्दः करणमित्ययमनयोः शब्दार्थयोः सम्बन्धः। तद्यदि गाव्यादिभिरपि सास्नादिमानभिधीयते ततस्तस्यां बेलातां सास्नादिमत्कर्मिकायामप्यभिधानक्रियायां गोशब्दस्य करणत्वाभावात्प्रतीतबाधः। तस्मादेकैकस्यैव वाचकत्वमितरे तदशक्तिजा इति न्याय्यम्। करहस्तादिषु तु विशेषानवधारणादन्यायाप्यनेकशब्दता गत्यन्तराभावादङ्गीक्रियते। गवादिगाव्यादिषु त्वभियुक्तस्मरणास्मरणाद्विशेषोस्तीति न तावत्सर्वेषां वाचकत्वम्। वाचकरूपनियमेपि स्मृतेः स्मृत्यन्तरमेव मूलं तस्याप्यन्यदित्येवमनादिरेवैषा स्मृतिपरम्परा। नचान्धपरम्परान्यायः, शब्दस्वरू-

---

उपशृण्वन्त इत्युपलक्षणम्। प्रयोज्यवृद्धप्रवृत्तिं गवानयनञ्च पश्यन्त इत्यपि बोध्यम्। एवञ्च शक्तिभ्रमरूपं प्रकारान्तरमुक्तं भवति। सर्वेषामिति। अनेकदेशभिन्नानेकापभ्रंशानामित्यर्थः। अविच्छिन्नवाचकत्वं। अनादिवाचकत्वम्। शक्यत इति। अन्यथानुपपत्तेश्च परिक्षीणत्वादिति भावः। नन्वशक्तिजत्वकल्पनायामेव को हेतुरत आह—सम्भवतीति। दृष्टत्वादशक्तिजत्वकल्पने लाघवमित्यर्थः। परपक्षे गौरवं स्पष्टयति—अनेकेति। प्रयोगेति। प्रयोगवेलायां येऽष्टविधा दोषास्तन्निदानविकल्पापत्तेरित्यर्थः। यथा हि व्रीहीणामननुष्ठाने "व्रीहिभिर्यजेत" इति शास्त्रजन्यजाने गृहीतप्रामाण्यस्य त्यागोऽप्रामाण्यारोपश्चेति दोषद्वयम्, पुनश्च कदाचित्तदनुष्ठाने उक्तप्रामाण्योज्जीवनं कल्पिताप्रामाण्यत्याग इत्येवमननुष्ठानानुष्ठानाभ्यां व्रीहिशास्त्रे दोषचतुष्टयम्। एवं यवशास्त्रेऽपि दोषचतुष्टयमित्यष्टौ दोषा दर्शिताः, तथेहापि एकार्थाभिधायकानेकशब्दाङ्गीकारेऽनेन शब्देनायमर्थोऽभिधातव्य इति ज्ञानेऽपि तच्छब्दत्यागेन शब्दान्तरप्रयोगे पुनः कदाचित्तस्य प्रयोगे च दोषचतुष्टयम्। एवं शब्दान्तरेणायमर्थोऽभिधातव्य इति ज्ञानेऽपीत्यष्टदोषदुष्टतेत्यर्थः। दोषान्तरमाह—वाच्येति। ऐकध्येन। एकरूपावच्छिन्नत्वेनावधारितस्य नियमस्य व्यापकत्वसंसर्गस्येत्यर्थः। गवाभिधानत्वावच्छेदेन हि उत्सर्गतो गोशब्दकरणकत्वं गृह्यते तच्छब्दान्तरस्य करणत्वे बाध्येतेत्यर्थः। एतदेवोपपादयति—सास्नादिमानिति। अभियुक्तस्मृतेरिति श्लोकार्धं व्याचष्टे—करहस्तादिष्विति। प्रयोगनियमे मूलमुक्त्वा साधुस्वरूपनियमे तदाह—वाचकेति। सर्वकालेति। सर्वकालेऽर्थवाचकतया वर्तत इत्यर्थः, 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इति न्यायात्। अभियुक्तेति। पाणिन्यादीनामनुशासनरूपेणेत्यर्थः। यत्तु शास्त्रफलत्वे भाष्यकृता साधुशब्दज्ञानमभ्युदयकारित्वेनोक्तम्, वार्तिककृता तु ज्ञानपूर्वकप्रयोगस्तथेति विरोध इत्युक्तं तत्परिहरति—न चेति। एवञ्च षोडशिग्रहणाग्रहणयोरिव

पस्य शब्दान्तराद्विविक्तस्य प्रत्यक्षत्वात्। सर्वे हि स्वे स्वे काले गवादिशब्दान्प्रत्यक्षत एवोपलभन्ते। अतीतकाले च सत्तां पूर्वेभ्यः श्रुत्यावधारयन्ति। सर्वकालवर्तित्वमेव चानादित्वं साधुत्वं तच्चाविच्छिन्नपारम्पर्याभियुक्तस्मरणेन सुलभमिति न निर्मूलत्वम्। नच विगानादप्रमाण्यं श्रुतीनामपि ग्रहणाग्रहणादिविगानदर्शनात्। फलं चास्य शब्दापशब्दविभागज्ञानमुपादानपरित्यागीपयोगिधर्माधर्मप्राप्तिपरिहारार्थम्। रक्षोहादि च वेदविरुद्धं कामं भवत्वप्रमाणं सर्ववेष्टनादिस्मरणवत् न तावता सर्वाप्रामाण्यम्। एवं पदानर्थक्यपदस्फोटवाक्यस्फोटाद्यभ्युपगमोऽपि न न्यायमूल इति न्यायाभावादप्रमाणम्। धर्माधर्मसिध्यर्थं तु शब्दापशब्दविभागकथनमभियुक्तप्रणीतत्वात्प्रमाणमेवेति प्रमाणं व्याकरणं तदनुगता एव गवादयो वाचका इति स्थितम्॥

**॥ इति व्याकरणाधिकरणम्॥ ९॥**

## १०

**प्रयोग०**—इदानीं वाचकप्रसङ्गाद्वाच्यविशेषश्चिन्त्यते, किमाकृतिरुत व्यक्तिरिति। तत्र यदि लोकवेदयोः शब्दार्थानामन्यत्वं भवेत्तत इदमनारम्भरणीयम्। तथाहि लौकिकशब्दविषयं तावदिदमधिकरणमनर्थकं, वैदिकविषयं तु भवत्यर्थवत्। ननु तत्र व्यवहाराननुपातिनां शब्दानामर्थनिर्णयः शक्यते, कर्तुमुपायाभावात्। तेनोभयस्मिन्नपि

---

विकल्प इति भावः अयञ्च प्रौढिवादः। "एकशब्दस्सम्यग् ज्ञातः सुप्रयुक्त" इत्यनेन ज्ञानपूर्वकप्रयोगस्यैव धर्मत्वप्रतिपादनाद् ज्ञानस्य विशेषणत्वेनान्यथासिद्धत्वात्। अत एवाह—फलञ्चेति। उपादानं प्रयोगः। परित्यागोऽप्रयोगः। तदुपयोगि सदिति शेषः। एवञ्च प्रयोगोपयोगितयान्यसिद्धिः ज्ञानस्योक्तेति मुख्यफलमुक्त्वा अमुख्यमत्याह—रक्षेति। वेदविरुद्धं "यदकालयत्" इत्याद्यर्थवादविरुद्धम्। 'दृष्टं साम' इत्यधिकृत्य 'कलेर्ढक्' इत्यादि। काममित्यनेनैतत्सूचितम्-यदर्थवादस्यान्वाख्यानपरत्वाद्वस्तुतो विरोध एव नास्तीति। न्यायाभावादिति। स्फोटवादनिराकरणादिति भावः॥

**॥ इति व्याकरणाधिकरणम्॥ ९॥**

## १०

प्रयोग० अनन्तरसङ्गतिं दर्शयितुमाह—प्रमाणमिति। एवञ्चाकृत्यधिकरणस्य व्याकरणाधिकरणेन प्रसङ्गसङ्गतिमुक्त्वा प्रकृतक्रियमाणविचारस्याकृत्यधिकरणोपोद्घातत्वेन सङ्गतिं दर्शयितुं भूमिकामारचयति - तत्रेति। इदम् आकृत्यधिकरणम्। आकृतिशब्देन मीमांसकैर्जातिरुच्यते। अनर्थकमिति। सामान्यस्य शब्दार्थत्वे हि सामान्यशास्त्रं व्यक्तिविशेषे विलम्बितप्रवृत्तिकं विशेषशास्त्रेण विशेषे शीघ्रप्रवृत्तिकेन बाधनीयमिति प्रयोजनं वैदिकशब्दविषयत्वे एव सम्भवति। लोके तु तद्विचारं विनापि तात्पर्यनिर्णयादावावश्यकधर्मोपयोगाभावाच्च न प्रयोजनमित्यर्थः। उपायेति। व्यवहाराविषयत्वेन तदसम्भवात्तक्षतीत्यादिप्रसिद्धार्थशब्दसमभिव्याहारस्य यूपादि-

विषयेऽनारम्भणमेवाधिकरणस्यान्यत्वपक्षे स्यात् । एकत्वपक्षे तु लोके वृद्ध-व्यवहारानुसारेण शब्दार्थनिर्णयः कृतस्तत्रानुपयुक्तोऽपि वेदे फलिष्यति। तेनाकृत्यधिकरणोपोद्घाततया लोकवेदयोः पदपदार्थानामान्यानन्यत्वे विचार्येते। तत्र सत्यपि वर्णाभेदे केषांचित्स्वरच्छान्दसवर्णागमलोपविकारविपर्ययाध्यायानध्यायादि-धर्मभेदेन जराराजादिपदयोरिव क्रमभेदेन व्यपदेशभेदात्स्पष्टो भेदः, स्वरूपादिशब्द-साहचर्याच्च लोकवेदयोः पदानामन्यत्वं, अर्थोऽपि च पदान्यत्वादेव । 'उत्ताना वै देव-गवा वहन्ती'ति दर्शनाच्च। अश्वावालादिशब्दानां च स्पष्टार्थान्तरदर्शनादन्य इति प्राप्तेऽभिधीयते—'प्रत्यक्षप्रत्यभिज्ञानाद्वर्णैकत्वं प्रतिष्ठितम् । वर्णात्मकं पदं तच्च तदभे-दान्न भिद्यते ॥' ननु वर्णाभेदेऽपि स्वरादिभेदात्पदभेदो वाक्याधिकरणे दर्शितः-- 'पदावधारणोपायान्बहूनिच्छन्ति सूरयः। क्रमन्यूनातिरिक्तत्वस्वरवाक्यश्रुतिस्मृती'रिति। सत्यम् । योऽर्थप्रतीत्यौपयिको धर्मस्तद्भेदे भिद्यत एव पदम् । यथा पूर्वपदप्रकृतिस्वरत्वे बहुव्रीह्यर्थत्वं अन्तोदात्तत्वे स्वार्थवृत्तितास्मरणादवगम्यते । ब्रह्मब्राह्मणादिषु तु न्यूना-

---

शब्दार्थनिर्णायकस्य च सर्वेषां लोकवेदशब्दानामन्यत्वेऽसम्भवादित्यर्थः । तेन । उक्तहेतुना । स्वरेत्यादि । स्वरः प्रसिद्ध उदात्तादिः । छान्दसत्वं छन्दोऽधिकारविहितत्वम् विपर्ययान्तानां विशेषणम् । तत्र वर्णागमो देवास इत्यादावसुगादिः । तल्लोपः 'त्मने' इत्यादावाकारस्य । विकारः उद्ग्राभमिति हकारस्थाने भकारादिः । विपर्ययो 'व्यत्ययो बहुलम्' इत्यादिः । अध्या-योऽध्ययनं द्वितीयादिषु, अष्टम्यादिष्वनध्यायः । आदिना शिक्षाप्रतिशाख्योक्तानामुच्चारणधर्माणां संग्रहः । जरा राजपदयोः क्रमभेदेनैवेति दृष्टान्तः । धर्मभेदेन लोकवेदयोः पदान्यत्वमित्यन्वयः । हेत्वन्तरमाह —व्यपदेशेति । लौकिकत्ववैदिकत्वरूपव्यवहारेत्यर्थः । यूपकाष्ठे छिद्यमाने यः प्रथमश्शकलः परापतेत्स स्वरूः । पदान्यत्वादिति । संज्ञाधिकरणन्यायादिति भावः । ननु घटकलशादिशब्दभेदेऽप्यर्थभेदो न दृष्ट इत्यत आह—उत्ताना इति । न तावदत्र लोकप्रसिद्ध-गोशब्दार्थानुवादेनोत्तानवहनविधिः, बाधात् । किन्तु देवसम्बन्धिगोपदार्थेऽपूर्वे वैदिक एवेत्या-शयः । अस्यार्थवादस्य स्तुतिमात्रपरत्वादित्याह—अश्ववालेति । लोकप्रसिद्धाश्वकेशाभिन्न-काशार्थकत्वदर्शनादित्यर्थः । नन्विति । स्वरस्य लौकिकवैदिकशब्दभेदोत्थापकहेतुत्वात्स्वरा-दित्युक्तम् वाक्याधिकरणे तर्कपादगते । पदेति । पदभेदेत्यर्थः । स्वरादिधर्मभेदेन लौकिक-शब्दोत्थापकपदयोर्घोत्तारटत्वादिना भेदो दुर्घटः, प्रतीतिबाधितत्वात् । घटाद्यर्थगमकत्वेन तु भेदस्तदर्थगमकतावच्छेदकधर्मभेदात्पदादिष्ट एवेति परिहरति—सत्यमित्यादिना । बहुव्रीह्य-र्थत्वमिति । स्थूलपृषतीपदस्येति शेषः । 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इत्यनुशासनात् । स्वार्थवृत्तिता । कर्मधारयत्वम्, स्मरणात् । अन्तोदात्त इत्यनुवृत्तौ 'समासस्य' इत्यनुशासनात् । तथा च स्थूलानि पृषन्ति यस्या इत्यर्थगमकौपयिकः पूर्वपदप्रकृतिस्वरः, स्थूला चासौ पृषतीत्यर्थ-गमकतौपयिकश्चान्तोदात्त इति । स्वरभेदाद्युक्तः पदभेद इत्यर्थः । एवं प्रकृतोपयुक्तं व्यापकहेतुं स्वरं व्याख्याय श्लोकक्रमप्रातिलोम्येन हेतुत्रयं व्याचष्टे—ब्रह्मेत्यादि । वाक्यादेस्तु भेदकधर्म-भेदप्रत्यायनद्वारा पदभेदज्ञापकत्वं, न तु साक्षादिति तव्द्याख्यानमुपेक्षितम् । अत्र व्यधिकरणपद-

तिरेकवशादर्थभेदो लोकत एवागतः। जराराजादिषु क्रमभेदादर्थान्यत्वाध्यवसायः। नैवं लोकवेदयोरर्थौपयिकधर्मभेदोऽस्ति। यदि ह्यनियतस्वराणामन्यो ऽर्थो नियतस्वराणामन्योऽर्थ इति स्मृतितो लोकतो वा ऽवगतं स्यात्ततो नियतानियतस्वरतया लोकवेदयोः पदभेदो भवेत्। नैवमतो नास्ति पदभेदः। पद्यते गम्यते ऽनेनेति हि पदम्। अतो गमकस्वरूपस्य कियतापि रूपेण सति भेदे भिन्नं पदम्। तदभावे तु धर्ममात्रभेदान्न तद् भिद्यते। एवं देवासः, त्मनेत्यादिषु लौकिकेभ्यो न्यूनातिरेककृतस्वरूपभेदे सत्यपि तद्रूपस्यार्थान्तरानवगमात्किंचिद्रूपभेदेऽपि लौकिकपदप्रत्यभिज्ञानात्। सत्यपि च केषांचिद्भेदे सर्वेषां भेदस्याप्रामाणिकत्वात्, पदैक्ये च तदर्थावगमात् उत्तानादिवचनस्यान्यपरत्वादश्ववालाद्यर्थभेदेऽपि सर्वेषां तदभावात्सिद्धमेकत्वं लोकवेदयोः पदपदार्थानाम्॥

॥ इति लोकवेदाधिकरणम्॥ १०॥

एवं सिद्धे विचार्यते किमाकृतिः शब्दार्थः? उत व्यक्तिः? अथाकृतिविशिष्टव्यक्तिः? इति त्रयः पक्षाः प्राधान्येन चिन्त्यन्ते। अन्ये तु विकल्पसमुच्चयसम्बन्धसमुदायादयः सर्वे पक्षा आकृतिविशिष्टव्यक्तिपक्षनिराकरणेन निराकृता एव भवन्तीति न पृथग् विचार्यन्ते। तत्र—

---

समभिव्याहारो वाक्यम्। तेन 'पचते देहि' इत्यत्र शत्रन्तनामत्वेन तिङन्तपदाद्भेदः। समानाधिकरणं पदान्तरश्रुतिर्यथा 'पचते भोक्तुकामः' इत्यत्र तिङन्तत्वेन नामपदाद्भेदः। एवं स्मृतिः व्याकरणरूपा तथा 'अश्वस्त्वं चैत्र' इत्यत्र प्रसिद्धाश्वपदान्नामरूपाद्भेदः। उच्छूनतावाचिश्वयतेर्भूतेलुङ् 'चिललुङि' 'जृस्तम्भु' इत्यादिना च्लेरङादेशः। श्वयतेर इत्यादिव्याकरणाभिज्ञेनावधार्यत इति। तदेवं निरुक्तधर्मभेदेन विवक्षितः पदभेदो लौकिकवैदिकयोर्नास्तीति दर्शयति—नैवमित्यादिना। भेदकधर्मस्य गमकतोपयिकत्वेन विशेषणे बीजमाह—पद्यतेऽनेनेति। कियतापि। स्वरादिना। अर्थान्तरेति। आगमलोपयोरर्थविशेषपुरस्कारेणाननुशासनादिति भावः। सर्वेषां हेतूनां सिद्धमेकत्वमिति साध्येनान्वयः। भेदे प्रमाणाभावमुक्त्वा प्रत्युताभेदे प्रमाणमस्तीत्याह—प्रत्यभिज्ञानादिति। केषञ्चित्। स्वरुयूपादिशब्दानाम्। आकृत्यधिकरणपूर्वपक्षसूत्रमप्येतदत्रापि विचारे सिद्धान्तप्रतिपादकतयैवं व्याख्येयम्—अर्थग्रहणं प्राधान्यात् तेन शब्दस्याप्युपलक्षणम्। एवञ्च लोकवेदयोः शब्दार्थैकत्वम्। कुतः? अविभागात् प्रत्यभिज्ञानात् इत्यर्थः। अन्यथा वैदिकप्रयोगचोदनानामगृहीतसङ्गतित्वेनाभावप्रसङ्गादिति।

॥ इति लोकवेदाधिकरणम्॥ १०॥

त्रय इत्यादिः पृथग् ग्रन्थः। अत्रापि मध्यगतत्वादितिकरणस्सम्बन्धनीयः। विकल्पेति। व्यवस्थित विकल्प इत्यर्थः। यत्र व्यक्तेरन्वययोग्यता तत्र व्यक्तिः, यत्राकृतेस्तत्राकृतिरर्थ इत्येवंरूपः, समुच्चयः सहितं द्वयम्, सम्बन्धः आकृतिव्यक्त्योः, तयोरेव च समुदायः। आदिना

प्रयोगचोदनाभावाद्व्यक्तेरेवाभिधेयता ।
न ह्याकृतिरमूर्त्तत्वाद्व्यवहारोपयोगिनो ॥
लिङ्गकारकसंख्याभिः संबन्धोऽस्या न कल्पते ।
सामानाधिकरण्यं च न जातिगुणशब्दयोः ॥
व्यक्तिवाचित्वपक्षे तु सर्वमेतत्समञ्जसम् ।
तेन शुद्धा विशिष्टा वा व्यक्तिः शब्दस्य गोचरः ॥

'व्रीहीनवहन्ति' 'पशुमालभेत' 'गामानय' 'ब्राह्मणो न हन्तव्यः' इति यावन्त एवमादयो विनाशिमूर्त्तिमद्द्रव्यगोचराः प्रयोगविधयः प्रतिषेधा वा, ते सर्वे व्यक्तावेव संभवन्ति, नाकृतौ। न ह्याकृतिरवहन्तुमालब्धुमानेतुं वा शक्यते, नित्यत्वादमूर्त्तत्वाच्च। तेनानर्थकं तद्विधानं प्रतिषेधश्च, प्राप्त्यभावाद्व्यक्तिपक्षे तूपपद्यते। तस्माद्व्यक्तिः शब्दार्थः। एवं च वृक्षौ वृक्षाभ्यामिति व्यक्तौ प्रातिपदिकार्थे प्रत्ययाभिहितानि लिङ्गसंख्याकारकाणि तया संबद्ध्यन्ते। जातेरलिङ्गत्वादनङ्गसंख्यत्वादमूर्त्तत्वेन चाकारकत्वादसंबन्धः स्यात्। सामानाधिकरण्यञ्च गौः शुक्ल इति शुद्धव्यक्तिवचनयोरेकार्थत्वादुपपद्यते। जातिगुणविशिष्टद्रव्यवचनत्वेऽपि विशेषणभेदे सत्यपि विशेष्याभेदादुपपन्नम्। त्वत्पक्षे तु जातिगुणमात्रवृत्तित्वादर्थभेदे दुर्लभं सामानाधिकरण्यम्। एवं पुरुषो देवदत्त इति जातिद्रव्यवचनयोर्दर्शयितव्यम्। तम्माद्व्यक्तिरेवार्थः। कथं तर्हि व्यक्त्यन्तरे प्रयोगो यत्र न दृष्टः शब्दः? सामान्यस्योपलक्षणत्वाददोषः। यैवमाकृतिका सा गौरिति सामान्यमुपलक्षणीकृत्य शब्दार्थशिक्षा-योऽयं शुक्लवासाः स देवदत्त इतिवत्। यथा च तत्रोपलक्षणभूतं वासोऽनभिधाय देवदत्त एवाभिधीयते, तथेहाप्युपलक्षणमात्रत्वात् सामान्यस्यानभिधाने व्यक्तय एव शुद्धा अभिधीयन्ते। एकोपलक्षणलाभादेव नानेकशक्तिकल्पनापत्तिः। आकृतिविशिष्टव्यक्त्यभिधाने तु न कश्चिद्दोषः। तस्माद्व्यक्तिरेव शुद्धा विशिष्टा वा शब्दार्थ इति। नैतद्युक्तम्। कुतः?

आनन्त्यव्यभिचाराभ्यां शक्त्यनेकत्वदोषतः ।
संदेहाच्चरमज्ञानाच्चिरबुद्धेरभावतः ॥
अन्वयव्यतिरेकाभ्यामेकरूपप्रतीतितः ।
आकृतेः प्रथमज्ञानात्तस्या एवभिधेयता ॥

---

व्यक्तिविशिष्टा आकृतिरित्यादयो वार्तिकोक्ता गृह्यन्ते। प्रयोगेति। प्रयोगचोदनानां विधीनां तदुपलक्षितानाञ्च निषेधानां व्यक्तावेव भावात् सम्भवादित्यर्थः। अमूर्तत्वादित्युपलक्षणम्। नित्यत्वादित्यपि द्रष्टव्यम्। कारकं कर्मत्वादि। सामानाधिकरण्यं भिन्नाभ्यां रूपाभ्यामेकधर्मिबोधकत्वरूपं जातिगुणशब्दयोः गौः शुक्ल इत्यनयोः। यत्र न दृष्ट इति। प्रयुज्यमान इति शेषः। अद्य जातायां व्यक्तौ वाच्यत्वाग्रहादिति भावः। उपलक्षणत्वमेव विवृणोति—यैवमिति। शब्दार्थशिक्षा शब्दार्थसम्बन्धव्युत्पत्तिः। नन्वाकृत्युपलक्षिते शक्तिग्रहे तस्या अशक्यत्वात् कथं शब्दात्प्रतीतिनियम इत्यत आह—आकृतीति। सिद्धान्तमाह—नैतदिति। व्यवहारोपयोगितेस्यादावाकृतेरित्यन्वेति।

व्यक्त्याकृत्योरभेदाच्च व्यवहारोपयोगिता ।
लिङ्गसंख्यादिसंबन्धः सामानाधिकरण्यधीः ॥
सर्वं समञ्जसं ह्येतद्वस्त्वनेकान्तवादिनः ।
लक्षणा वाऽभ्युपेतव्या जातेस्तेनाभिधेयता ॥

न ह्यनन्तासु व्यक्तिषु संज्ञित्वं शक्यतेऽवगन्तुम्, व्यभिचाराच्च व्यक्तीनामशब्दार्थत्वं नियमलक्षणत्वात्संबन्धस्यानियमे तदयोगात्, अनन्ताश्च शब्दव्यक्तयोऽनन्तासु व्यक्तिषु कल्प्याः। जात्युपलक्षणत्वेऽप्यभिधेयानामनन्तत्वाच्छक्त्यानन्त्यमस्त्येव। व्युत्पत्तिकाले हि जातिरुपलक्षणं, न त्वभिधानसमये। अभिधानं हि प्रातिस्विकेनैव रूपेण व्यक्तीनाम्। तद्यथाऽक्षत्रयमेकापवरकस्थमेकापवरकस्थित्यैवोपलक्ष्य कश्चित्कंचिदाह य एतस्मिन्नपवरकेऽधुना आसते, ते त्रयोऽक्षशब्दाभिधेया इति। तत्र यद्यपि व्युत्पत्तिसमयेऽपवरकस्थितिर्नामैकमुपलक्षणं लभ्यते, तथाऽपि शब्दस्तदनादरेण व्यक्तित्रयमेव स्वरूपेणाभिधत्त इति भवति शक्तित्रयम्, एवमिहापि। यद्यपि व्युत्पत्तिसमये जातिरेवोपलक्षणमासीत्तथाऽपि शब्दस्तामस्पृशन्नेव नानारूपा व्यक्तीः स्वेन रूपेणाभिधत्त इति स्यादेव शक्त्यानन्त्यम्। अपि च यद्यव्यपदेश्यं धर्मिरूपमभिधेयं ततो गोशब्दोच्चारणाद् गोव्यक्तिः प्रतीयमानाऽपि नाश्वादिव्यक्तिभ्यो व्यवच्छिन्ना प्रतीता स्यात्। न ह्यसाधारणमाकारमन्तरेण द्रव्यं द्रव्यान्तरव्यवच्छिन्नं प्रतीयते। तत्र गौरित्युक्ते सर्वत्राविशिष्टा प्रतीतिः स्यात्। यथाऽऽह—"अव्यपदेश्यत्वेन सर्वत्राविशेषणप्रसङ्गा" दिति। अथाभिधानसमय एव जातिरुपलक्षणमित्यधिदधदेव हि व्यक्ति शब्दो जातिमुपलक्षणमादाय

---

वस्त्वनेकान्तेति। वस्तुनोराकृतिव्यक्त्योरेकान्तो भेद एव अभेद एव वेति नियमः तदभाववादिनो भेदाभेदवादिन इति यावत्। पराभिमतात्यन्तभेदपक्षेऽप्याह—लक्षणा वेति। आनन्त्येत्यादि व्याचष्टे—न हीत्यादिना। संज्ञित्वं शब्दवाच्यत्वम्। व्यवहारकाले एकस्या एव व्यक्तेरुपस्थितेः सन्निकर्षाद्यभावेन सर्वोपस्थितेरसम्भवाच्च। सामान्यस्य सन्निकर्षत्वे मानाभावादिति भावः। व्यभिचाराच्चेति। एकैकव्यक्तिव्यतिरेकेऽपि गोशब्देन तदितरव्यक्त्य (नः) भिधानात्। या या गोशब्दकरणकाभिधानक्रिया सा सर्वगोव्यक्तिकर्मिकेति नियमे व्यभिचारादिति भावः। तदाह—नियमेति। नियमेन लक्ष्यते ज्ञायत इति, न त्वनियमेनाभिधायकत्वं गृह्यत इति भावः। अनन्ताश्चेति। सामान्यविशेषरूपव्द्याकारं वस्त्वेव, न तु वस्तुनोऽत्यन्तभिन्न आकारः। तथा च व्यक्तिर्वाच्येत्ययमर्थः विशेषाकारेण वस्तु वाच्यमिति। एवञ्च विशेषाकाराणामनन्तत्वाच्छक्त्यानन्त्यमित्यर्थः। सामान्यरूपेणाभिधानान्नानन्त्यमित्याशङ्क्याह—व्युत्पत्तीति। प्रातिस्विकेन तत्तद्व्यक्तित्वादिना। अत्र दृष्टान्तमाह—तद्यथेति। अक्षत्रयम्। इन्द्रियपाशविभीतकरूपम्। अपवरको गृहप्रकोष्ठः। दूषणान्तरमाह—अपि चेति। अव्यपदेश्यं धर्मविशेषानालिङ्गिततया विशेषव्यवहारायोग्यम्। तत्र तथासति। सर्वत्र गवाश्वादिसाधारणी। अव्यपदेश्यत्वेनेति। वार्तिकम्। वाक्यपदीयेऽप्युक्तम्—'गौः स्वरूपेण न गौः नाप्यगौः, गोत्वाभिसम्बन्धात्तु गौः' इति। अथेति।

तज्जातीयरूपेणाभिधत्ते-गोजातीयमिति। ततः प्रथमं जातिरभिधातव्या। न ह्यनभिधाय जातिं तज्जातीयत्वेन रूपेण व्यक्तिरभिधातुं शक्यते। ततश्च विशिष्टाभिधानमेव वाचोयुक्त्यन्तरेणापन्नं न शुद्धाभिधानम्। तदाह "सामान्याकारेण निरूपणे विकल्पादि" ति विशेषणादित्यर्थः। विशिष्टाभिधाने च पूर्वतरं विशेषणमभिधातव्यम्। तदभिधाने च तत एवात्यन्ताविनाभूतव्यक्तिप्रतिपत्तिसिद्धेर्न तत्राभिधानशक्तिकल्पनावसरः।

किंच गोशब्द उच्चरिते व्यक्तिषु संशयो भवति, न कस्यांचिन्निर्णयः। यत्र च संशयो न तस्यामभिधेयता, शब्दस्य निश्चायकत्वात् सामान्यं तु निर्णीयत इति भवत्यभिधेयम्। ननु असत्यपि व्यक्तिविशेषनिर्णये व्यक्तिमात्रं निर्णीयत एव। किमिदं व्यक्तिमात्रम् सामान्यं? विशेषो वा। द्व्याकारैव हि वस्तुषु बुद्धिर्व्यावृत्त्यनुगतरूपा। तत्र विलक्षणबुद्ध्यालम्बनं व्यक्तिः, समानबुद्ध्यालम्बनञ्च सामान्यम्। न तदुभयातिरिक्तं व्यक्तिमात्रं नाम किंचिदस्ति वस्तुनो रूपम्। सामान्यमेव त्वनेन मात्रशब्देनाभिधीयत इति तदेवाभिधेयम्। प्रथमं च सामान्यमेव शब्दाद् गम्यते, पश्चाच्च व्यक्तिष्वाकाङ्क्षामात्रं जायते। ततस्तदेवाभिधेयं, न व्यक्तिविशेषः। विचित्राश्च खण्डमुण्डादिरूपा व्यक्तय इति विचित्रा गोशब्दोच्चारणे बुद्धिः स्यात्। एकाकारा तूत्पद्यते। अतोऽभिधेया जातिः। अन्वयव्यतिरेकाभ्यां चैवमेव युक्तम्। व्यवहाराङ्गता च जातेर्व्यक्त्यनतिरेकादुपपद्यते। अतोऽभिधेया जातिः। न हि जातिर्नाम व्यक्तेरर्थान्तरभूतं किमपि तत्त्वम्, अपि तु वस्त्वेव ह्येकमुभयात्मकं व्यावृत्त्यनुगतरूपतया बुध्यते। तत्र सामान्यं शब्दार्थं इति। अयमर्थः—सामान्यात्मना वस्तुशब्दाद् गम्यते, न विशेषात्मनेति। यच्च सामान्यात्मना शब्देन बोधितं तस्य क्रियासंबन्धश्चोद्यते। शक्नोति च तत्क्रियां साधयितुम्। अतस्तदेव क्रियाश्रयविशेषरूपमपि लिङ्गसंख्याकारकसंबन्धः सामानाधिकाण्यंच सर्व-

---

उच्यत इति शेषः। उपलक्षणं व्यावर्तिका। गोजातीयमिति। जातित्वकथनं वस्तुगत्या, न तु तस्यापि भानम्। गोत्ववदित्येव विवक्षितम्। जातीयप्रत्ययो वा। वाचोयुक्त्यन्तरम्। उक्तिप्रकारान्तरम्। 'वाग्दिश्यद्भ्यो युक्तिदण्डहरेषु' इत्यलुक्। अस्तु तर्हि तदेवेत्याशङ्क्य शुद्धव्यक्त्यभिधानपूर्वपक्षनिराकरणमध्य एव प्रसङ्गाद्विशिष्टाभिधानपूर्वपक्षमपि निराकरोति—विशिष्टेति। पूर्वतरमिति तरप् स्वार्थे। पूर्वमित्यावश्यकमित्यर्थः, न तु पूर्वापरकालत्वं विरम्य व्यापाराभावात्। जातिगुणशक्तौ तु अन्यलभ्यत्वान्न विशेष्यमभिधातव्यमित्याह—तदभिधाने चेति। यद्यपि गमकस्य जात्यादेरेव धूमादेरिवाविनाभूतता वक्तव्या, न तु गम्याया व्यक्तेः, अनुपयोगात्, तथापि तेन जात्यादिना विशेषणेन विना अत्यन्तं कदापि न भूता ज्ञायमाना वा व्यक्तिः, तत्प्रतीतिसिद्धेरित्यर्थः। तेन जातिं विना व्यक्तेरबोधात् जात्यभिधानमावश्यकमिति, तेनैव व्यक्तिप्रतीतिसिद्धिरित्यर्थः। स्वरूपतो जातिशक्तिज्ञानस्य जातिविशिष्टशाब्दबोधहेतुत्वाभ्युपगमेन तदुपपत्तेरित्याशयः। व्यक्तिषु खण्डमुण्डादिविशेषेषु, व्यावृत्तिरूपा अयमेव खण्ड इति। अनुगतरूपा अयमपि गौरिति। खण्डितशृङ्गदन्तान्यतरः खण्डः, सर्वथा शृङ्गरहितो मुण्डः। अन्वयेति। गोत्वजातौ सत्यां गोशब्दप्रयोगः, तद्व्यतिरेकेऽश्वादिषु नेत्येवमित्यर्थः।

मनेकान्ताश्रयेणैव सुपरिहारम् । यदा तु भेद एव जातिव्यक्त्योस्तदा सर्वमिदं लाक्षणिकव्यक्त्याश्रयणेनोपपद्यते । यत्र तु 'पशुना यजेत' 'अरुणया क्रीणाती' त्येवमादौ करणत्वश्रवणम्, तत्र जातिगुणयोश्चामूर्त्तयोरपि द्रव्यपरिच्छेदेन मुख्यमेव करणत्वमुपपन्नम् । अधिकरणसंप्रदानादिरूपत्वं मूर्त्तस्यासंभवादभेदं लक्षणां वाश्रित्य समर्थनीयम् । आह च—

तेन तल्लक्षितव्यक्तौ क्रियासंबन्धचोदना ।
जातिव्यक्त्योरभेदो वा वाक्यार्थेषु विवक्षितः ॥ इति

तस्मात्सामान्यमेवाभिधेयं न व्यक्तिरिति सिद्धम् ।

॥ इति आकृत्यधिकरणम् ॥ १० ॥

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां
प्रथमस्याध्यायस्य तृतीयः पादः ॥

## अथ चतुर्थः पादः

१

**सू० उक्तं समाम्नायैदमर्थ्यम्०** उद्भिदादिशब्दानुदाहृत्य गुणविधिर्नामधेयमिति भाष्ये विचार्य "उक्तं समाम्नायैदमर्थ्यम्" इत्यनेन सूत्रेण पूर्वपक्षमभिधाय "अपि वा

---

अनेकान्तेति । भेदाभेदरूपतादात्म्याङ्गीकारेणेत्यर्थः । अत्यन्तभेदपक्षेऽप्याह—यदा त्विति । गुणशब्देष्वपीदमेव गतिद्वयं बोध्यम् । मुख्यमेवेति । क्रियानुकूलव्यापारवत्वस्यैव करणत्वादिति भावः । असम्भवादिति । यूपे पशुं नियुञ्जीतेति नियोजनस्य बन्धनस्याधिकरणत्वं यूपत्वजातौ बाधितमेव । तथा 'ऋत्विग्भ्यो दक्षिणां ददाति' इत्यादौ सम्प्रदानत्वमप्यचेतनाया जातौ बाधितमित्यर्थः । आह चेति । वार्तिककृदिति शेषः । तेन—जातेरभिधेयत्वेन । पूर्वपक्षसूत्रार्थस्तु—अवहननादिप्रयोगचोदनाया भावात्सम्भवाच्छब्दार्थस्यैकत्वम् एकरूपं सर्वत्र प्रयोगे व्यतिरेकैव वाच्य इत्यर्थः । कथं तर्हि जातिलाभस्तत्राह—अविभागादभेदादिति ।

॥ इत्याकृत्यधिकरणम् ॥ १० ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारीणतत्सद्राम-
चन्द्रात्मजवैद्यनाथभट्टकृतायां शास्त्रदीपिका-
टीकायां प्रभाख्यायां प्रथमाध्यायस्य
तृतीयः पादः ।

## अथ चतुर्थः पादः

१

सू० उक्तं समा० नामधेयमित्यनन्तरं वेत्यध्याहार्यम् । विचार्य संशय्य । भाष्ये उद्भिदा-

नामधेयं स्यात्'' इत्यनेन सिद्धान्तितम्। तत्तु प्रमाणलक्षणासङ्गतमिति वार्त्तिककारेणाधिकरणभेदमाश्रित्य प्रथममुद्भिदादिशब्दादीनां धर्मे प्रामाण्यमस्ति न वेति विचार्य पश्चाद् गुणविधिनामधेयविचारो दर्शितः। तदनेन ये शास्त्रारम्भप्रयोजनसमर्थनावसरे 'पूर्वं प्रमाणरूपाभ्यां पादेनाद्यस्य निर्णय' इति वार्त्तिकं दृष्ट्वा प्रथमपाद एव प्रामाण्याप्रामाण्यचिन्ता समाप्ता, त्रिपाद्यां तु कथंलक्षणो धर्म इति थमुना प्रतिज्ञातप्रामाण्यप्रकारो निरूप्यते विध्यर्थवादमन्त्रनामधेयस्वरूपैर्धर्मे प्रामाण्यं वेदस्येति प्रकारतद्वतोरनतिभेदात्समस्तोऽध्यायः प्रमालक्षणमाख्यायत इति मन्यन्ते, ते निराकृताः। तथा सति हि नामधेयस्वरूपप्रकारचिन्तनाद् यथाभाष्यमेवाधिकरणं सङ्गतं स्यात्, तस्मान्न तावदयं पक्षो वार्त्तिककारस्य संमतः। न च युक्तः, स्मृतिपादस्य त्रिपाद्यामसङ्गतिप्रसङ्गात्। न हि तत्र वेदप्रामाण्यप्रकारनिरूपणम्। तस्मात्सर्वस्मिन्नध्याये धर्मे प्रमाणतदाभासनिरूपण-

---

दिशब्दानुदाहृत्य इति विचारानात्मकत्वादिति भावः। अधिकरणभेदमिति। सूत्रद्वयेनोत्सूत्रपूर्वपक्षद्वयमिति भावः। अस्ति न वेति। सम्भवति न वेत्यर्थः। अध्ययनविधिवशेन प्रयोजनवत्वसिद्धावपि द्वारविशेषानवगमेनाक्षेपसमाधानरूपविचारं कृत्वेत्यर्थः। पश्चादिति। गुणविधिनामधेयत्वान्यतरप्रकारेणोक्तस्य प्रामाण्यस्य पर्यवसानायेति भावः। तदित्युपन्यासार्थकं शास्त्रारम्भप्रयोजनसमर्थनावसरगतवार्तिकं दृष्ट्वा ये इति मन्यन्ते, तेऽनेन भाष्यदूषकवार्तिकेन निराकृता इत्यन्वयः। शास्त्रारम्भस्य प्रयोजनं धर्मनिर्णयः। सोऽस्ति चेत्किं विचारेण, नास्तिचेत् कथमज्ञानविषये विचार इत्याक्षेपस्य समाधानार्थं वार्तिकम्—

'स्वरूपादिषु धर्मस्य द्विधा विप्रतिपद्यते।
पूर्वं प्रमाणरूपाभ्यां पादेनाद्यस्य निर्णयः॥ इति।'

अस्यार्थः—धर्मो न निर्णीतः, नाप्यज्ञातः, किन्तु सन्दिग्धः, तेन विचारो युक्त इत्याह—स्वरूपादिष्विति। धर्मस्वरूपादिषु मध्ये पूर्वं तावत्प्रमाणरूपाभ्यां द्विधा विप्रतिपद्यते—किं योगिप्रत्यक्षादि? किं वा चोदना? इति प्रमाणे। एवं किं चैत्यवन्दनादिधर्मः? उत यागहोमादिरिति स्वरूपे विप्रतिपद्यते—सन्देहवान् भवति। तत्राद्यस्य प्रमाणरूपविषयविप्रपत्तिद्वयस्य पादेन निर्णयः। तत्र हि 'चोदनालक्षणोऽर्थो धर्मः' इति सूत्रेण चोदनाप्रमाणकत्वे निर्णीतेऽर्थात्तत्प्रमेयस्य धर्मत्वं, न तु चैत्यवन्दनादेरिति स्वरूपनिर्णयोऽपि ज्ञात इति। अस्माच्च वार्तिकाच्चोदनासूत्रप्रतिज्ञातं धर्मप्रमाणनिरूपणं प्रथमपाद एव समाप्तमिति प्रतीयते। थमुनेति। कथं लक्षणक इति भाष्यगतेन थमुल्प्रत्ययेन जिज्ञास्यतयोक्त इत्यर्थः। रूपैः—प्रकारैः। तद्वत्—प्रकारवत् प्रामाण्यम्। कथं निराकृतेत्यपेक्षायामाह—तथासतीति। युक्तिसिद्धस्य वार्तिकासम्मतिर्न दोष इत्यत आह—न चेति। न च वेदस्य प्रामाण्ये प्रत्यक्षावगतत्वमिव स्मृत्यादिलिङ्गानुमेयत्वमपि प्रकार इति स्मृतिपादे निरूपणान्नासङ्गतिरिति शङ्कनीयम्, वाक्यार्थप्रमायामविषयस्य प्रकारत्वाभावात्। किञ्च तत्र कर्तृसामान्यादिरूपः सूत्रोक्तो हेतुः स्मृतिप्रामाण्यस्यैव साधको न वेदप्रामाण्यस्येति यत्किञ्चिदेतत्। तदाह—न हीति। निरूपणमेवेति। मुख्यतयेति शेषः। कथं तर्हि

मेव क्रियत इति वक्तव्यम्। तत्र च चोदनैव साक्षात्प्रमाणम्, अर्थवादमन्त्रस्मृतिनामधेयानि तच्छेषत्वेन तन्मूलत्वेन च प्रमाणं भवन्तीति धर्मप्रमितेरितिकर्त्तव्यतास्थाने नियतं निपतन्ति। चोदना तु प्रधानं प्रमाणम्। तस्याश्च प्रथमपाद एव समाप्तं प्रामाण्यमित्यभिप्रायेणोक्तं 'पादेनाद्यस्य निर्णयः, इति चोदनैव हि साक्षात्प्रमाणम्, तच्च प्रथमपादेनैव निर्णीतमित्यभिप्रायः। त्रिपाद्यां त्वप्रधानप्रमाणनिरूपणमित्येतावान् भेदः। प्रमाणचिन्तात्मकत्वं तु सकलस्याविशिष्टमिति स एवैकोऽध्यायार्थः।

तदिह संभवदाख्यातसामानाधिकरण्यानुद्भिदभिजिच्चित्राज्यपृष्ठबहिष्पवमानाग्निहोत्राऽऽघारश्येनादिशब्दानुदाहृत्य चिन्त्यते किमेते धर्मे प्रमाणम्? न वेति।

तत्र विध्यर्थवादमन्त्रांशैर्वेदाद् धर्मः प्रतीयते।
न चोद्भिदादिशब्दानां तेष्वन्तर्भावसंभवः॥
न तावदर्थवादत्वं स्तुतिबुद्धेरभावतः।
उत्तमामन्त्रणास्यन्तत्वान्तरूपाद्यभावतः॥
मन्त्रप्रसिद्ध्यभावाच्च मन्त्रतैषां न युज्यते।
न च विध्यन्तपातित्वं साध्याद्यनभिधानतः॥

न तावदेते साध्यमभिदधत्यफलवचनत्वात् न साधनम् समानपदोपात्तधात्वर्थसाधनाऽवरोधात् भावनायाः। न च गुणविधानेऽनेतिकर्त्तव्यतान्तर्भावः, उद्भिदादिरूपस्य

---

पादेनाद्यस्य निर्णय इति वार्तिकसम्मतिस्तत्राह—तत्रेति। तेषु—धर्मप्रमाणेषु मध्ये, साक्षादिति प्राधान्ये हेतुरतो न पौनरुक्त्यं प्राशस्त्यादिरूपविशेषणोपस्थापकतयार्थवादादेः शेषत्वम्, स्मृतिस्तु तन्मूलकत्वमिति भेदः। इतिकर्तव्यतेति। धर्मप्रमाफलभूतानुष्ठानहेतुस्तुतिस्मृतिकरत्वेनार्थवादमन्त्रयोः फलोपकार्यङ्गत्वम्। नाम्नोऽप्यनुष्ठानसौकर्यहेतुत्वात्तदेव। स्मृतीनान्तु चोदनाज्ञानरूपकरणस्वरूपसम्पादकतयेति पुरुषकृतिसाध्यत्वाभावात्तु स्थानशब्दः। भेदः वैलक्षण्यम्। तदिहेति। तत्तस्मात्प्रामाण्याप्रामाण्यविचारस्यैव प्रथमं युक्तत्वादित्यर्थः। सम्भवत् आख्यातेन तिङन्तेन धातुना सामानाधिकरण्यमेकार्थवृत्तित्वरूपं येषां तान्। तच्च केषाञ्चिद्योगेन, यथोद्भिदादीनाम्, केषाञ्चिद्गुणयोगेन यथा चित्रादीनाम्, केषाञ्चिदर्थवादप्रदर्शितार्थयोगेन, यथाज्यपृष्ठबहिष्पवमानश्येनादीनामिति। सूचीकटाहन्यायेनादावर्थवादमन्त्रान्तर्भावं निरस्यति—न तावदिति। उत्तमेति। केचिन्मन्त्रा उत्तमपुरुषान्ताः 'बर्हिर्देवसदनं दामि' इति। केचिदामन्त्रणान्ताः 'अग्नीदग्नीन् विहर' इति। केचिदस्यन्ताः 'वस्यसि रुद्रासि' इति। केचित्त्वान्ताः 'इषे त्वे' ति। नन्वेतदन्यतमाभावेऽपि 'वसन्ताय कपिञ्जलानालभते' इत्यादौ मन्त्रत्वमस्तीत्यत आह—मन्त्रप्रसिद्धीति। अध्येतॄणामिति शेषः। विध्यंशेति। अंशत्रयविशिष्टभावनाविषयप्रवर्तनाप्रतिपादकपदसमुदायरूपेत्यर्थः। साध्यं फलम्। आदिना साधनेतिकर्तव्यतयोस्सङ्ग्रहः। एते उद्भिदादिशब्दाः। धात्वर्थरूपेण साधनेनावरोधः पूर्वसम्बन्धः। तत्र हेतुः—समानेति। न चेति। गुणशब्देनात्र शास्त्रे आख्यातार्थभिन्नं सिद्धरूपं द्रव्याद्युच्यते। तस्य धात्वर्थविधानेन व्रीह्यादिवदितिकर्तव्यतात्वं धात्वर्थसाध्यकभावनादिव्यापारावेशेन द्रष्टव्यम्।

लोके गुणत्वेनाप्रसिद्धत्वात् मत्वर्थलक्षणादोषाच्च। चित्रादिषु वाक्यभेदप्रसङ्गात्, अग्निहोत्रादिषु तत्प्रख्यशास्त्रान्तरसद्भावात् श्येनादिषु उपमानानुपपत्तेः। न च नाम्न इतिकर्त्तव्यतान्तर्भावः, नाम्नोऽनितिकर्त्तव्यतारूपत्वात्। अप्रवृत्तिविशेषकरत्वेन च नाम्नोऽनर्थकत्वादप्रसिद्धत्वाच्च। तस्मादप्रमाणमेवंजातीयकं धर्मं इति पूर्वपक्षः। सिद्धान्तस्तु—

सकलस्यैव वेदस्य स्वाध्यायविधिवाक्यतः।
विज्ञातं पुरुषार्थत्वमुद्भिदादेरपि ध्रुवम्॥

तत्र त्वदुक्तेनैव मार्गेण मन्त्रार्थवादत्वासंभवाद्विध्युद्देशान्तर्भावस्य च प्रत्यक्षत्वात् तत्रैव गुणत्वेन नामधेयत्वेन वा प्रामाण्यं स्वाध्यायविध्यध्यापितस्यानर्थक्यासंभवात्सर्वानुपपत्तिपरिहारेणाध्यवसातव्यम्। एतावदिहाधिकरणे स्थितं भाव्यं तावत्प्रामाण्येनेति तदेतदर्थवादप्रस्तावेऽभिहितमप्यनेकविचारान्तर्हितमिति कृत्वा विशेषविचारायानेन सूत्रेणोपस्थाप्यते।

॥ इति नाम्नां प्रामाण्याधिकरणम्॥ १॥

२

सू० अपि वा नामधेय० विधित्वेन प्रामाण्यमित्येतावदवस्थितम्। तच्च द्वेधा

---

उद्भेदनसाधनत्वरूपयोगेन खनित्रादिप्रसिद्धिमाशङ्क्य दोषान्तरमाह - मत्वर्थेति। सा चाग्रिमाधिकरण उपपादयिष्यते। एवं वाक्यभेदादयोऽपि। तस्य विधित्सितगुणस्याग्नेः प्रख्या विधानं येन, तादृशशास्त्रान्तरम् 'यदग्नये च प्रजापतये च सायं जुहोति' इत्यादिकम्। उद्भिदादीनां यागनामत्वपक्षेऽपि प्रामाण्यं न सम्भवतीत्याह—न चेति। इतिकर्तव्यतान्तर्भावः। तद्वाचिशब्दान्तर्भावः। तेन न हेतुसाध्याविशेषः। तत्र नामधेयार्थस्य धात्वर्थस्य करणत्वेनेतिकर्तव्यतात्वासम्भवान्मन्त्रवत्स्वरूपस्यैवेतिकर्तव्यतात्वं वाच्यम्। न च तत्सम्भवति, तस्यानुष्ठेयत्वादित्याह—नाम्न इतिः। नन्वेतन्नामकत्वेन यागोपस्थापकतया प्रामाण्यं स्यादत आह—अप्रवृत्तीति। धातुतः प्रवृत्तिविशेषोपयोगाभावादित्यर्थः। अप्रसिद्धत्वादिति। प्रकृतकर्मण्येतद्वाक्यं विना प्रसिध्यभावादित्यर्थः।

स्वाध्यायेति। अध्ययनविधिवशादित्यर्थः। सर्वेति। गुणविधित्वेऽभक्ष्येण खनित्रादिना यागानुपपत्तिर्मत्वर्थलक्षणाविशिष्टविधिगौरवादिकञ्च। नामधेयत्वे प्रसिध्यभावाविधेयत्वाप्रवृत्तिविशेषकरत्वादिकानुपपत्तिरित्यर्थः। पौनरुक्त्यं परिहरति—तदेतदिति। सूत्रार्थस्तु समाम्नायस्य वेदस्य ऐदमर्थ्यम्-प्रयोजनवदर्थपरत्वमुक्तम्, अध्ययनविधिबलादिति शेषः। तस्मात्सर्वमुद्भिदाद्यपि तदर्थं—प्रयोजनवदर्थपरमेव स्यादिति।

॥ इति नाम्नां प्रामाण्याधिकरणम्॥ १॥

२

सू० अपि वा० उपोद्घातरूपमनन्तरसङ्गतिं तद्द्वारिकाञ्च लक्षणसङ्गतिं गुणविधिनामधेयविचारस्याह—विधित्वेनेति। त्र्यंशभावनाविषयविधिबोधकत्वेनेत्यर्थः। उद्भिन्नत्तीति

संभवति गुणविधानेन नामधेयत्वेन वा। यावदन्यतरन्नोपपाद्यते तावत्पूर्वावगतमपि प्रामाण्यं न प्रतितिष्ठतीति तत्प्रतितिष्ठापयिषया गुणविधिनामधेयचिन्ता प्रस्तूयते। तत्र प्रथमं तावदुद्भिदादिषु यौगिकेषु चिन्त्यते—किं गुणविधिः? कर्मनामधेयमिति। तदर्थं किमेषां वैयधिकरण्येनाख्यातसंबन्धः? उत सामानाधिकरण्येनेति।

तत्रावयवयोगेन खनित्रादौ प्रसिद्धितः।
प्रवृत्त्यौपयिकत्वाच्च गुणो यागे विधीयते॥

यद्यपि व्रीह्यादिवदेते न क्वचित्समुदायरूपेण निरूढास्तथाप्यवयवद्वारेण उद्भेदनसाधनेषु प्रसिद्धिसंभवात्कर्मणि कथंचिदप्यप्रसिद्धेर्नामधेयत्वेऽपि च यजितः प्रवृत्त्यन्तरानुपदेशादानर्थक्यापत्तेः। गुणविधिपक्षे तु गुणे प्रवृत्त्यौपयिकत्वेन प्रयोजनवत्त्वाद् गुणविधानमेव युक्तम्‌ न च मत्वर्थलक्षणा, यागानुवादात्। यदि ह्यत्र यागो विधीयेत, ततस्तस्य करणत्वादुद्भिदाद्यपि करणमिति करणस्य करणान्तरेण संबन्धायोगाद्भिन्नार्थयोश्च श्रुत्या सामानाधिकरण्याभावादुद्भिच्छब्देन तद्वन्तं यागं लक्षयित्वोद्भिद्वता यागेनेति सामानाधिकरण्येन गुणो विधातव्य इति भवेन्मत्वर्थलक्षणा। यदा तु प्रकृतज्योतिष्टोमयागानुवादेन गुणमात्रमनेन विधीयते, तदा विधिवाक्ये करणत्वेनोपदिष्टस्यापि योगस्यासाधितस्य करणत्वानुपपत्तेर्यदर्थाक्षिप्तं साध्यत्वं तदनुवादेन तदर्थतया तदाश्रित्य वा वाक्यान्तरेण फलाय गुणे विधीयमाने नाऽस्ति मत्वर्थलक्षणा। उद्भिदा यागः कर्त्तव्य इति यागसाधनेनोद्भिदा पशून् भावयेदिति वा। नन्वेवं ज्योतिष्टोमवाक्येऽपि ज्योतिष्टोमगुणविधानान्न यागविधिरस्ति। तथान्यत्रापि सर्वत्रोपपदश्रवणात्तद्विधिरेवेति

---

योगस्य कर्मण्यपि स्वफलोद्भेदके सत्वान्नामत्वसिद्धान्तसौकर्यात्तद्विचारस्य प्राथम्यमिति सूचनार्थं यौगिकेष्विति। वैयधिकरण्येन—उद्भिदा यागं कुर्यादिति। सामानाधिकरण्येन उद्भिदा यागेन भावयेदिति। अवयवेत। उच्छब्दस्योर्ध्वत्वे भिदेर्विदारणे क्विप्प्रत्ययस्य कर्तृत्वे च शक्तेरूर्ध्वविदारणकर्तरि खनित्रादौ प्रसिद्धिः। कथञ्चित् रूढियोगान्यतरेणापि। यजितः—यज्यपेक्षया। प्रवृत्यन्तरेति। यागविषयप्रवृत्तितोऽन्यस्याः प्रवृत्तेरित्यर्थः। न चेत्यादिनोक्तयोः शङ्कासमाधानयोरभिप्रायं विवृणोति—यदा हीति। श्रुत्या—उद्भिच्छब्दशक्त्या। प्रकृतेति। ताण्ड्यशाखायां ज्योतिष्टोमं प्रकृत्य 'उद्भिदा यजेत' इत्याम्नानादिति भावः। ननु यजेतेति यागकरणकभावनानुवादेन कथं गुणः करणत्वेन विधातुं शक्यत इत्याशङ्क्याह—तदेत्यादि। उत्पत्तिशिष्टसोमावरुद्धे यागे नोत्पन्नशिष्टस्योद्भिद्द्रव्यस्य निवेश इत्यतः कल्पान्तरमाह—तदाश्रित्य वेति। पक्षद्वयमपि वचनव्यक्तिद्वयेन स्पष्टयति—उद्भिदेति। आद्यपक्षे पशुकाम इति सार्वकाम्यप्रासानुवादः। उक्तप्रकाराक्षेपपूर्वकं गुरुमतमुत्थापयति—नन्विति। ज्योतिष्टोमेति। ज्योतिषां स्तोमरूपस्य गुणस्येत्यर्थः। न यागेति। विशिष्टविधौ मत्वर्थलक्षणादोषादिति भावः। सर्वत्रेति। यद्यपि 'उपव्ययते' इत्यादिनिरुपपदमव्याख्यातमस्ति, तथापि

क्वचिदपि कर्मविध्यभावाल्लौकिककर्माश्रयणेन गुणविधीनां सापेक्षत्वेनाप्रामाण्यप्रसङ्गः, नैष दोषः, प्रकृतकर्माभावेन गत्यभावाज्ज्योतिष्टोमवाक्ये कर्मविधानम्, तस्मिश्च विधीयमानेऽनेकविधिदोषान्मत्वर्थलक्षणादोषाच्च ज्योतिष्टोमपदमेकं कर्मनामधेयं भविष्यति। यद्वा तदेकं मत्वर्थलक्षणामाश्रित्य गुणविशिष्टकर्मविधानम्। उद्भिदादयस्तु तत्प्रकृते कर्मणि गुणविधयः। वरं हि लक्षणाश्रयणमप्रामाण्यात्। न च लक्षणायाः प्रमाणान्तरापेक्षणेनाप्रामाण्यम्, पदसमभिव्याहारादेव लक्षणासिद्धेः। इतिकर्त्तव्यतासन्निधिविशेषाच्च 'भूयस्त्वेनोभयश्रुती' त्यनेन न्यायेन ज्योतिष्टोमवाक्य एव कर्मविधानम् नेतरेषु। भवतु वा ज्योतिष्टोमवाक्येऽपि गुणविधानम्, एवमपि नाप्रामाण्यम्। 'यदाऽग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाश्रुतो भवति' 'विश्वजित्सर्वपृष्ठोऽतिरात्रो भवतीत्येवमादिष्वनेकगुणोपादानेन कर्मणोऽवश्यविधातव्यत्वात्तत्रैव ज्योतिष्टोमोद्भिदादिगुणविधिसंभवान्न लौकिककर्माश्रयणादप्रामाण्यम्। कथमप्रकृतेषु गुणविधिरिति चेत्, लौकिकं वा किं प्रकृतम्, येन तत्र गुणो विधीयेत। तेन यदि तावदप्रकृतेऽपि विधिः स्यात्ततोविश्वजिदादिष्वेव विधानाप्रामाण्यम्। अथ तु न ततो लौकिकेऽप्यविधानाद्विशिष्टविधिरित्युभयथापि नाप्रामाण्यम्।

---

यज्यादिसमभिव्याहृतो गुणविधिस्तत्र न सम्भवतीति भावः। लौकिकेति। दृष्टार्थदानादिकर्मेत्यर्थः। सापेक्षत्वेनेति। लौकिककर्मबोधकमानान्तरापेक्षत्वेनेत्यर्थः। न च लौकिकभोजनाश्रितप्राङ्मुखत्वविधेरप्यप्रामाण्यापत्तिरिति वाच्यम्, तत्र प्राङ्मुखत्वनियमस्य भोजनाश्रितस्यापि पुरुषार्थतया तत्कर्तव्यताया लोकानवगम्यतया तदंशे शास्त्रस्य प्रमाणान्तरानपेक्षत्वात्। प्रकृते तु लौकिककर्मार्थगुणस्य कर्तव्यताप्रधानीभूतकर्मप्रमाणाधीनैवेति तदंशे सापेक्षत्वमेव। निरपेक्षञ्च प्रमाणमित्युक्तं तर्कपादे 'तत्प्रमाणं बादरायणस्यानपेक्षत्वात्' इति सूत्रे। एवमाक्षेपव्याजेनाप्रामाण्ये च पूर्वपक्षं गुरुमतमुपदर्श्य, दूषयति—नैष इति। अनेकविधौ दोषो वाक्यभेदः, विशिष्टविधौ न वाक्यभेद इत्यत आह—मत्वर्थेति। नन्वनर्थकनामत्वापेक्षया वरं लक्षणेत्यत आह—यद्वेति। लक्षणायास्तात्पर्याधीनत्वात्तस्य मानान्तरगम्यत्वेन सापेक्षत्वं तुल्यमित्याशङ्कते—न चेति। धातूपपदयोर्वैयधिकरण्यासम्भवेन सामानाधिकरण्यावश्यम्भावस्य समभिव्याहारादेव लक्षणावगमात्सिद्धिरिति परिहरति—यदेति। ज्योतिष्टोमवाक्य एव कर्मविधौ विनिगमकमाह—इतीति। इतिकर्तव्यता—अङ्गकलापः, तत्सन्निधौ विशेषो-बाहुल्यम्। उभयत्र वेदद्वये श्रुतिः। श्रवणं यस्य तत्कर्म भूयस्त्वेनाङ्गबाहुल्येनामुकवेदविहितमिति निर्णयमिति तार्तीयसूत्रार्थः। उभयवादिसिद्धं कर्मोत्पत्तिविधिस्थलमुदाहरति—भवतु वेति। अनेकेति। अग्निदेवताष्टाकपालामावास्यादिरेकत्र, बृहद्रथन्तरे वैरूपवैराजशाक्वररैवताख्यसकलपृष्ठाख्यस्तोत्राणि अतिरात्रसंस्था चेत्यपरत्रानेकगुणस्य कर्मानुवादेन विधौ वाक्यभेदाद्विशिष्टविधिरावश्यक इत्यर्थः। अप्रकृतेऽपीति। 'यदाहवनीये जुहोति' इतिवदिति भावः। अथ त्विति। आहवनीयवाक्ये दर्विहोमत्वेनातिदेशनेऽपि द्रव्यदेवतालाभासम्भवात् कर्मविध्यसम्भवेनागत्या यच्छब्दवशेन दूरस्थेऽपि

न चौत्पत्तिकज्योतिष्टोमादिगुणावरोधादुद्भिदादिगुणानामविधानम्, काम्यत्वेन तेषां नित्यगुणबाधकत्वात्। "उद्भिदा यजेत पशुकाम" इति हि प्रकृतं ज्योतिष्टोममाश्रित्य उद्भिद्गुणः पश्वर्थेन विधीयते। तस्माद् गुणविधिरिति प्राप्तेऽभिधीयते

**"धातोरत्यन्तपारार्थ्याद्विप्रकृष्टविधेस्तथा ।**
**फले कर्मणि वा नेह गुणो वाक्ये विधीयते ॥"**

फले तावद् विधीयमाने गुणे परपदसंबन्धविधानाद्धातोरत्यन्तपारार्थ्यं विप्रकृष्टार्थविधिश्चापद्यते। अथ तु कर्मण्येव गुणो विधीयते। तथापि विप्रकृष्टार्थविधानम्, धातोश्च किंचित्पारार्थ्यमस्त्येव, फलपदं चानर्थकं स्यात्।

**दध्यादौ गत्यभावेन सर्वमेतत्समञ्जसम् ।**
**उद्भिदादिषु तन्नैवं नामधेयत्वसंभवात् ॥**

"दध्नेन्द्रियकामस्य जुहुयात्" "व्रीहिभिर्यजेते" त्येवमादिषु दधिव्रीह्यादिपदानामर्थान्तरेऽत्यन्तनिरूढत्वान्न सामानाधिकरण्येन यजिनामत्वं शक्यते कल्पयितुम्। अप्रसिद्धार्थं हि प्रसिद्धपदसामानाधिकरण्येन निर्णीयते। दध्यादयस्तु निरूढत्वान्न कथंचिदपि धातुसामानाधिकरण्यं प्रतिपद्यन्त इति गत्यभावात्तत्र धातुपारार्थ्यम्। विप्रकृष्टार्थविधा-

---

कर्मणि गुणविधावप्युद्भिदादिष्वतिदेशतो द्रव्यदेवतालाभसम्भवात्कर्मविधिरेव युक्त इत्याशयः। एवं गुरुमतदूषणमुपसंहृत्य प्रकृतमनुसृत्य शङ्कते—न चेति। आदिनाग्नेयवाक्यगतपुरोडाशसङ्ग्रहः। परपदेति। पदतदर्थयोरभेदोपचारात्परपदार्थेत्यर्थः। धातुभिन्नोद्भित्पशुपदार्थयोर्गुणफलयोरङ्गाङ्गित्वसम्बन्धविधानाद्धातोरुच्चारणं न स्वार्थस्य विधेयत्वार्थमुद्देश्यत्वार्थं वा, किन्तु प्रत्ययोच्चारणार्थमाश्रयानुवादरूपमित्यत्यन्तपरार्थत्वम्। विधेः स्वपदानुपात्तेन (त्वेन ?) विप्रकृष्टेन गुणेनान्वयोऽदोष इत्यर्थः। किञ्चिदिति। स्वार्थस्याविधेयत्वेऽपि विधेयगुणं प्रत्युद्देश्यसमर्पकत्वादित्यर्थः। अनर्थकं—निष्प्रयोजनम्। ज्योतिष्टोमस्य सर्वकामार्थतया पाक्षिकानुवादत्वात्। पशुकामत्वे निमित्ते उद्भिद्गुण विधावपि स्वारसिकार्थत्यागादनर्थकत्वं बोध्यम्। विश्वजिदादिषु गुणाविधायित्वे तु व्यक्तमेवानर्थक्यमिति। ननु 'दध्नेन्द्रियकामस्य जुहुयात्' 'दध्ना जुहोति' इत्यादिषु फले कर्मणि च गुणविधानं कथमङ्गीकृतमित्याशङ्क्याह– दधीति। इन्द्रियकामवाक्ये कर्मणस्तत्र च गुणस्य प्राप्तत्वात्फले कर्मविधौ च दध्नेत्यस्य कर्मनामसम्भवे नागतिकत्वात्फले गुणविध्यङ्गीकारः। द्वितीयवाक्येऽपि नामत्वासम्भवादेव कर्मणि गुणविधिरिति भावः। इह तु नैवमित्याह—उद्भिदादीति। एतदेव विवृणोति—दध्नेन्द्रियेति। सामानाधिकरण्येनैकार्थबोधकत्वरूपेण हेतुना यद्यजिनामत्वं तत्कल्पयितुं न शक्यमित्यर्थः। अप्रसिद्धार्थं। अनिश्चितार्थम्। तच्च द्विविधम्-अज्ञातार्थं सन्दिग्धार्थञ्च। तदुक्तं वार्तिके—

पदमज्ञातसन्दिग्धं प्रसिद्धैरपृथक् श्रुति ।
निर्णीयते निरूढन्तु न स्वार्थादपनीयते ॥ इति ॥

नमाश्रितम्। उद्भिदादयस्तु यथैवावयवद्वारेण खनित्रादौ वर्त्तन्ते, तथैव स्वफलोद्भेदनकारित्वाद्यागेऽपीति नात्र धात्वर्थविधानं बाधितव्यम् ॥

"विशिष्टविधिपक्षे तु भवेन्मत्वर्थलक्षणा।
सोमादौ गत्यभावात्सा न त्वत्र गतिसंभवात् ॥

उद्भिदादयो हि करणत्वेन श्रूयन्ते। करणञ्च कारकत्वात्क्रिययैव संबध्यते, नान्येन। क्रिया चात्र प्रत्ययवाच्या फलभावनैव। न च तस्यामुद्भिदादीनां करणत्वं संभवति, समानपदोपात्तधात्वर्थावरोधादिति भावाधिकरणे वक्ष्यामः। न च धात्वर्थेनोद्भिदादीनां संबन्धः संभवति, तस्य धातुना प्रत्ययार्थं प्रति करणत्वेनोपादानात् क्रियारूपतयानवगमात्क्रियारूपत्वे वा धात्वर्थस्य प्रत्ययार्थं प्रति करणत्वानुपपत्तेः। न च सत्यपि प्रत्ययवाच्यायाः फलभावनाया धात्वर्थावरोधेऽर्थाक्षिप्तया धात्वर्थभावनयोद्भिदादीनां संबन्ध इति वक्तव्यम्। तस्या इहाश्रुतत्वात्। अश्रुतया च तया शब्दान्तरस्यान्वयायोगात्। फलभावना ह्यत्र श्रुता, न च धात्वर्थभावना। न चाध्याहृत्य धात्वर्थभावनां तया सम्बन्धः। उद्भिदा भाव्यमानेन यागेन पशून् भावयेदिति विनाप्यध्याहारेण वाक्यसमन्वयोपपत्तेः। तदवश्यं यदत्र प्रत्ययार्थे करणं यागः, तत्रैव तृतीयान्तैरुद्भिदादिपदैर्वर्तितव्यं, नान्या गतिरस्ति। तत्र गुणविधिपरत्वेऽर्थान्तरवाचिनामुद्भिदादिपदानामर्थान्तरे यागे वृत्तिर्मत्त्वर्थलक्षणया स्यात् उद्भिद्वता यागेनेति। नामत्वे तु श्रुत्या। सोमेन यजेतेत्येवमादिषु तु सोमादिशब्दानामर्थान्तरेऽत्यन्तनिरूढत्वाद्यागे च कथंचिदप्यप्रसिद्धेरप्रसिद्धकल्पनातो वरं प्रसिद्धार्थद्वारेण लक्षणाश्रयणमेवेति मत्वर्थलक्षणया गुणविशिष्टयागविधानमङ्गीकृतम्—सोमवता यागेन समीहितं कुर्यादिति। उद्भिदादीनां त्ववयवद्वारेण कर्मण्यपि प्रसिद्धिरस्तीति श्रुत्या नामधेयत्वं युक्तम्। प्रयोजनं च

---

स्वफलेति। उत्तरार्धस्य भिदेः प्रकाशनार्थे त्वस्यापि सत्वादिति भावः। पारार्थ्यादिदोषपरिहारेण विशिष्टविधिमाशङ्क्याह—विशिष्टेति। 'सोमेन यजेत' इत्यादौ तदङ्गीकारमाशङ्क्याह—सोमेति। गत्यभावात्। नामधेयत्वरूपगत्यसम्भवान्मत्वर्थलक्षणाहेतुमन्वयानुपपत्तिं दर्शयितुं भूमिकामारचयति—उद्भिदादयो हीति। फलभावना फलकर्मिका भावना। एवकारेण यागकर्मकभावनाव्यवच्छेदः। भावार्थेति। 'भावार्थाः कर्मशब्दाः' इति द्वितीयाध्यायप्रथमाधिकरण इत्यर्थः। अर्थाक्षिप्तेति। अप्रसिद्धस्य करणत्वानुपपत्त्या आक्षिप्तेत्यर्थः। इह वाक्ये। अयोगादिति। शाब्दी ह्याकाङ्क्षा शब्देनैव पूर्यत इति न्यायादिति भावः। शब्दाध्याहारं शङ्कते—न चेति। धात्वर्थभावनां। धात्वर्थकर्मकभावनाशब्दम्। अथाध्याहारस्याश्रुतत्वेन पूर्वमेव निरासात् अध्याहारस्वरूपं दर्शयति—उद्भिदेति। दूषयति—विनापीति। शब्दकल्पनाद्वरं श्रुत एव मत्वर्थलक्षणेति भावः। ततोऽपि नामत्वं वरमित्याह—नामत्वे इति। श्रुत्या-शक्त्या। यागे वृत्तिरित्यनुषङ्गः। अवयवेति। फलोद्भेदनकर्तृत्वरूपयोगार्थेत्यर्थः। न च सर्वकर्मणामेतन्नामकत्वापत्तिरिति वाच्यम्, सामानाधिकरण्यावगतनामत्वं प्रत्युपायमात्रत्वेन योगार्थस्य कथना-

नाम्ना सर्वत्र व्यवहार एव। न ह्यन्तरेण नामधेयमृत्विग्वरणादिष्वनेनाहं यक्ष्य इति लघुराख्यानोपायः स्यात्। क्वचिच्च गुणफलोपबन्धेनार्थवत्ता, 'दर्शपूर्णमासावारप्स्यमाणोऽन्वारम्भणीयामिष्टिं निर्वपेदेदिति गुणोपबन्धः। "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते" ति फलोपबन्धः। क्वचिच्च भेदकतयार्थवत्त्वम्। यथा 'अथैष ज्योतिरित्यादिषु वक्ष्यते। यथा चात्रैव "उद्भिदा यजेत पशुकाम" इति। नामधेयत्वाभावे हि प्रकृतस्यैव ज्योतिष्टोमस्य फलविधिरयं स्यात्, नामधेयत्वे तु यागान्तरविधानात्सिद्धमर्थवत्त्वम्॥

॥ इत्युद्भिदधिकरणम्॥ २॥

---

दन्यत्र च सामानाधिकरण्यादर्शनात् नामत्वाप्रसक्तेः। अत्र च फलोद्भेदनकारिणा यागेन पशून् भावयेदित्याकारो बोधः। पशुकामपदावगतस्याप्यर्थस्य नामधेयेनानुवादस्याग्निहोत्रादिष्विव गुणफलोपबन्धादिवक्ष्यमाणप्रयोजनवत्त्वादिति केचित्। साम्प्रदायिकास्तु देवदत्तडित्थादिसंज्ञाशब्देष्विवात्रापि नामधेयपदेभ्योऽमुकसंज्ञक इति। संज्ञात्वेन—तत्तन्नामप्रकारकोद्भित्संज्ञकेन यागेन पशून् भावयेदित्येव बोधोऽनुभवसिद्धः। तदुक्तं वार्तिके 'आत्म ·· पव्यवच्छिन्नमेवार्थं संज्ञा गमयति' इति। न च शब्दानुपस्थितस्य संज्ञास्वरूपस्य कथं शाब्दबोधप्रकारतेति वाच्यम्, एकपदार्थेऽपरपदार्थस्य शब्दोपस्थितस्यैव प्रकारतेति वाक्यार्थबोध एव तथा नियमात्। पदजन्यविशिष्टबोधे तु शब्दानुपस्थितस्यापि विशेषणत्वमिष्यत एव, कर्तुरिव भावनायाम्। तत्रैव चोक्तं वार्तिककारैः—

'विशिष्टग्रहणं नेष्टमगृहीतविशेषणम्।
अभिधानाभिधाने तु न केनचिदिहाश्रिता॥' इति।

एवञ्च संज्ञास्वरूपस्य नियमतः प्रत्यक्षोपस्थितत्वात्सामानाधिकरण्यावयवप्रसिद्धिभ्यान्तु संज्ञात्वग्रहादेतत्संज्ञकोऽयमिति बोधोपपत्तिः। उक्तञ्च वार्तिके—'सामानाधिकरण्यावयवप्रसिद्धिभ्यां तत्सिद्धेरिति। इत्थञ्चावयवार्थप्रदर्शनं संज्ञात्वनिश्चयार्थं, न तु पाचकादिष्विव तद्रूपेण बोधार्थम्, शक्यतावच्छेदकरूपेण बोधकत्वस्य संज्ञाशब्दातिरिक्तविषयत्वात् संज्ञाशब्देष्वनुभवबलेन संज्ञाप्रकारकबोधस्यैव व्युत्पत्तिवैचित्र्येणाभ्युपगमादिति प्राहुः। ननु नामधेयं विनाप्यमुकदैवत्यामुकद्रव्यकामुकफलकयाग इति व्यवहारसम्भवात्किं नामधेयेनेत्यत आह—लघुरिति। व्यवहारसौकर्यंनामप्रयोजनमित्यर्थः। सर्वसाधारणं प्रयोजनमुक्त्वा तत्र तत्र प्रयोजनविशेषमाह—क्वचिच्चेति। गुणेति। यागविशेषस्य स्वार्थस्य गुणफलान्वयकरणतेत्यर्थः। अन्यथा प्रकृतयागमात्रस्यैव स स्यादिति भावः। भेदकतया ज्योतिष्टोमादितो भिन्नत्वज्ञापकताया नामान्तरावरुद्धे नामान्तरस्य निवेशाभावात्स्वभावत एवार्थान्तरप्रतीतेश्चेति भावः। प्रकृतेऽप्याह—यथा चेति। प्रकृतस्यैवेति ताण्ड्यशास्त्राभिप्रायम्। सूत्रार्थस्तुअपि वेति पूर्वपक्षव्यावृत्तिः। यदुत्पत्तौ प्रथमतः अपूर्वमनिश्रितार्थं तत्सामानाधिकरण्यज्ञानोत्तरं नामधेयं स्यात्। कुतः ? अविधायकत्वात्, गुणविधायकत्वस्य मत्वर्थलक्षणादिदोषेणासम्भवादिति।

॥ इत्युद्भिदधिकरणम्॥ २॥

१

सू० यस्मिन् गुणोपदेशः० इह लोके जातिगुणवचनतया निरूढा गुणफलोपबद्धेषु वाक्येषु श्रुताः कर्मण्यपि योगवशेन संभवद्वृत्तय उत्पत्तिवाक्ये फलवाक्ये गुणवाक्ये वा तृतीयानिर्देशेन कर्मसमभिव्याहृताः शब्दाः। ते सर्वे उदाहरणम् यथा—'चित्रया यजेत पशुकामः' 'पञ्चदशान्याज्यानि' 'सप्तदशानि पृष्ठानि' 'त्रिवृद्बहिष्पवमानमिति' चित्राज्यपृष्ठबहिष्पवमानशब्दाः, ते गुणविधयः कर्मनामधेयानि वेति संशयः। तदर्थं च किं गुणविधौ वाक्यभेदो न वेति चिन्तयितव्यम्। कस्मात्पुनरुत्पत्तिवाक्यमेवाज्यैः स्तुवत इत्यादिकं नोदाह्रियते। पक्षद्वयेऽपि निर्णयकारणाभावात् गुणवाक्याधीन एव निर्णय इति

---

२

सू० यस्मि० पूर्वाधिकरणाद्विषयभेदं सङ्गतिञ्च दर्शयन्नुदाहरणं दर्शयति—इहेति। आद्यविशेषणेन यौगिकोद्भिदादिवैलक्षण्यम्। तेन च पूर्वाधिकरणेन प्रत्युदाहरणसङ्गतिश्च सूचिता। तत्राज्यशब्दो घृतत्वजातौ रूढः। पृष्ठशब्दश्शरीरावयवविशेषजातौ। चित्राशब्दो गुणे। द्रव्यस्याप्युपलक्षणात् बहिष्पवमानशब्दो द्रव्ये। यद्यप्ययं यौगिकः, तथापि तस्य कर्मण्यसम्भवात् द्रव्य एव रूढप्रायत्वेनोद्भिदादिन्यायाविषयत्वादुदाहरणत्वम्। गुणेति। गुणः फलं वोपबद्धं श्रुतं येषु तेष्वित्यर्थः। अनेन गुणविधित्वनिराकरणहेतुवाक्यभेदाप्रसङ्गो दर्शितः। नामधेयत्वासम्भावनानिराकरणायाह—कर्मण्यपीति। उत्पत्तीति। तत्र चित्राशब्दे योगो गौणीवृत्तिः। आज्यपृष्ठशब्दयोरर्थवाददर्शितो यागो वक्ष्यते। बहिष्पवमानशब्देतु सदोमण्डपबहिर्देशसम्बन्धः, पवमानेन सोमेन प्रकाश्यप्रकाशकभावसम्बन्ध इति। एवमुत्पन्ने वाक्ये तृतीयानिर्दिष्टावाज्यबहिष्पवमानशब्दौ 'आज्यैस्स्तुवते' 'बहिष्पवमानेन स्तुवते' इति। फलवाक्ये तृतीयानिर्दिष्टश्चित्राशब्दः 'चित्रया यजेत पशुकामः' इति। पृष्ठशब्दो गुणवाक्ये तृतीयानिर्दिष्टः–पृष्ठैस्स्तुवते' इति। यद्यप्येतन्न गुणवाक्यम् माहेन्द्रवामदेव्यनौधसश्यैताख्यस्तोत्रचतुष्टयानुवादत्वात्, तथापि एतदनुवादवशात्पृष्ठशब्दस्य स्तोत्रचतुष्टयपरत्वावगमे सति 'सप्तदशानि पृष्ठानि' इति गुणवाक्ये चतुर्ष्वपि सप्तदशस्तोमकत्वगुणविधानसिद्धिरिति गुणविध्यौपयिकतया गुणवाक्यत्वगुणविधानसिद्धिरिति गुणविध्यौपयिकतया गुणवाक्यत्वमभिप्रेतं बोद्धव्यम्। अन्यथा गुणवाक्यग्रहणं निर्विषयमेव स्यादिति। उत्पत्तिवाक्यमेवेति। प्रथमप्रवृत्तत्वादिति भावः। तदुक्तं वार्तिके—

उत्पत्तौ नामधेयं वा गुणो वाप्यवधारितः।
व्यवहाराङ्गतां याति सैवोदाहरणक्षमा'॥ इति।

चित्राशब्दस्योत्पत्तिवाक्येऽश्रवणादाज्यादिष्वेवायमाक्षेप इत्याज्यैरित्याद्युक्तम्। समाधत्ते— पक्षद्वयेऽपीति। पूर्वपक्षे सिद्धान्ते चेत्यर्थः। निर्णयकारणाभावादित्यनन्तरं नोदाहृत इत्यनुषङ्गः एवञ्चोत्पत्तिवाक्यगतस्यैवाज्यादिपदस्य गुणनामधेयत्वान्यतरनिश्चयो गुणवाक्याधीन इति लाघवात्तस्योपन्यास इति भावः। एतदेवोपपादयति-तथा हीत्यादिना। तत्र-तथासति। नवेति। घृतसम्बन्धो हि प्रकाश्यप्रकाशकभावरूपः प्रसिद्धो घृतप्रकाशकमन्त्रेषु। ननु तेषामत्र विधिः शक्यो वक्तुम्,

तदेवोदाहृतम्। तथा हि-न तावदाज्यः स्तुवत इति गुणविधिरध्यवसातुं शक्यते, घृतस्य स्तुतौ करणत्वासंभवात्। तत्र लक्षणया घृतसंबन्धिभिर्मन्त्रैरिति वक्तव्यम्। न च घृतसम्बन्धिनः केचिन्मन्त्राः प्रसिद्धाः, ये लक्ष्येरन्। तत्रानेनैव वाक्येन लक्षणया घृतसम्बन्धं मन्त्राणां विधाय, तैश्च स्तोत्रे विधीयमाने अत्यन्तगौरवम्। विधौ च लक्षणाऽत्यन्तक्लिष्टा समाश्रिता स्यात्। तद्वरं 'यदाजिमीयुस्तदाज्यानामाज्यत्वम्' इत्यादिवाक्यशेषावगतयोगाश्रयणेन नामधेयत्वमङ्गीकृतमिति न गुणविधित्वाध्यवसानम्, रूढत्वाच्च नामधेयत्वमपि न स्वध्यवसानम्। यदा तु पञ्चदशान्याज्यानीति संख्याविशिष्टान्याज्यान्यवान्तरप्रकरणेन स्तोत्रगुणतया विधीयन्ते, तदा तेनैव प्राप्तमाज्यसंबन्धं लक्षणया मन्त्राणामनूद्य स्तुतिमात्रमुत्पत्तिवाक्ये विधीयते। अनुवादत्वाच्च लक्षणा न दोषः। स्तुतिमात्रविधानाच्च लाघवं विधेर्विनैव नामत्वेन लभ्यत इति प्रसिद्धादिभिर्गुणवचनतैवाध्यवसीयते। यदा तु नात्र संख्याविशिष्टाज्यविधानं

---

तथा सत्याज्यस्य स्वरूपेण स्तोत्रप्रयोगासम्बन्धित्वेन तदनुवादेन पञ्चदशत्वसंख्याविधानानुपपत्तेः। न च 'पञ्चदशान्याज्यानि' इत्यत्राप्याज्यपदेन लक्षणया तत्प्रकाशकमन्त्रानुवादेनैव पञ्चदशत्वविधानमस्त्विति वाच्यम्, एवमपि तादृशमन्त्रविधौ क्रमप्रकरणप्राप्तानाम् 'अग्न आयाहि' इत्यादिमन्त्राणामानर्थक्यापत्तेः। तस्मात्प्रकृतमन्त्राबाधाय त एवाज्यपदेन लक्षणीयास्तेषु चाज्यसम्बन्धो न प्रसिद्ध इत्याशयः। ननु मन्त्रसमीपदेशस्थापनमेव सम्बन्धोऽस्त्वत आह—तत्रेति। लक्षणयाऽऽज्यसम्बन्धिभिरिति मत्वर्थलक्षणया। तैश्चेति। उपलक्षणे तृतीया। आज्यसम्बन्धिमन्त्रैर्विशिष्ट इत्यर्थः। न च मन्त्राणां सन्निधिप्राप्त्वान्नात्र विधिरिति शङ्क्यम्, प्राप्तमन्त्रानुवादेनाज्यसम्बन्धविधिः स्तोत्रविधिश्चेति वाक्यभेदापत्त्या विशिष्टविधिसन्दृष्टन्यायेन प्राप्तानामपि पुनर्विधेरावश्यकत्वादिति भावः। विधाविति। न विधौ परशब्दार्थ इति न्यायादपूर्वार्थे तात्पर्यग्राहकाभावाल्लक्षणा न युक्ता। अनुवादे तु पूर्वप्रापकप्रमाणस्य तात्पर्यग्राहकस्य सत्वादत्रैव सा युक्तेत्यर्थः। अत्यन्तेति। आज्यपदेन मन्त्रान् लक्षयित्वा तद्विशिष्टस्तोत्रप्रतीतिरिति लक्षितलक्षणारूपतयेत्यर्थः। तद्वरमिति। तस्मान्नामधेयत्वमङ्गीकृतं वरमित्यन्वयः। 'यदाजिमीयुस्तदाज्यानामाज्यत्वम्' इत्यर्थवादादेवासुरसंग्रामगमनेन देवसाहाय्यकारित्वकीर्तनादाजिशब्दात् 'तत्र साधुः' इत्यर्थे ···र्थे वा यत्प्रत्ययात्स्तोत्रनामत्वमित्यर्थः। अस्तु तर्हि नामत्वाध्यवसानमेव, तत्राह—रूढत्वाच्चेति। अर्थवादस्तु घृतस्तावक एव भविष्यतीति भावः। अधुनान्यतरपक्षाध्यवसानस्य गुणवाक्याधीनत्वं दर्शयति—यदा त्विति। 'अस्तिर्भवन्तीपरः' इति न्यायादध्याहृतेन भवतिना स्तोत्रदेशे सत्तायां अप्राप्ताया विधेयत्वात्पुंव्यापारान्तर्भावं विना च विधानायोगात्तदाज्यस्तोत्रसमीपस्थापनरूपपुरुषव्यापाराविष्टतयावान्तरप्रकरणेन स्तोत्राङ्गतया विनियोगोपपत्तिरिति भावः। सिद्धान्ताध्यवसानं दर्शयति—यदा तु नात्रेति। समासं विना नामार्थयोः परस्परान्वयस्याव्युत्पन्नत्वात्प्रत्येकविधौ च वाक्यभेदापत्तेरिति भावः। स्तोत्रानुवादेनैवेति। तदवान्तरप्रकरणात्स्तोमवाचिडप्रत्ययान्तत्वाच्चेति भावः। संक्षिप्य दर्शितमेव विचारं विविच्य दर्शयति—पञ्चदशेति। सङ्ख्यायोगश्च घृतानां पात्रोपाधिक इति पञ्चदशाज्यपात्राणि स्तोत्रदेशे निधाय

संभवति, किन्तु आज्यानुवादेन संख्यामात्रविधानम्, तदा स्तोत्रे घृतस्याप्राप्तत्वात्तदनुवादासंभवात्स्तोत्रानुवादेनैव संख्या विधातव्या, तच्चाज्यशब्दस्य स्तोत्रवाचित्वेऽविकल्पते, नान्यथेति गुणवाक्यालोचनेनैवाज्यादिपदमुत्पत्तिवाक्यगतं नामधेयत्वेनाध्यवसीयत इति पक्षद्वयेऽपि गुणवाक्याधीनत्वान्निर्णयस्य तत्रैव कथा प्रवर्त्तते। पञ्चदशान्याज्यानीति किं संख्यायुक्तम् घृतं स्तोत्राङ्गतया विधीयते ?' किं वाज्यशब्देन स्तोत्रमुद्दिश्य संख्यामात्रं विधीयत ? इति। एवं 'सप्तदशानि पृष्ठानी' त्यादिषु द्रष्टव्यम्। एवं चित्रयेत्यग्नीषोमीययागानुवादेन चित्राशब्देन चित्रत्वस्त्रीत्वे विधीयेते ? उत 'दधि मधु घृतं पयो धाना उदकं तण्डुलास्तत्संसृष्टिं प्राजापत्य'मिति प्रकृतो याग फले विधीयते ? चित्राशब्दस्य चित्रद्रव्यवाचकत्वात्तत्रैव नामधेयत्वमिति।

तत्र प्रसिद्धादिभिर्गुणविधिः, रूढत्वाच्च नोद्भिदादिन्यायः उत्पत्तिवाक्यावगतकरणेनार्थाक्षिप्तं यद् यागस्य यत्साधनत्वं तदनुवादेन वैयधिकरण्येन गुणविधानान्नमत्वर्थलक्षणेत्यलम्। न च वाक्यभेदः, एकपदोपात्तत्व।च्चित्वस्त्रीत्वयोरुभयविशिष्टैककारकविधानात्पशुकामपदमपि पशुसाधनकत्वादग्नीषोमीयस्य यागस्यार्ज्जनाङ्गतया प्राप्तसाधनकामनाऽनुवादः। अस्ति हि पशुयागं कुर्वतः पशौ कामना, 'पञ्चदशान्याज्यानी' त्यत्रापि संख्याविशिष्टाज्यविधानाद् न वाक्यभेदः, तस्माद् गुणविधिः। एवं 'आज्यैः स्तुवते' इत्यादावुत्पत्तिवाक्येऽप्याज्यादिपदं गुणवाक्यप्राप्तगुणानुवादकं, न नामधेयमिति प्राप्तेऽभिधीयते—

---

स्तोतव्यमिति पूर्वपक्षेऽनुष्ठानम्। एवमिति। अत्र सप्तदशन्युब्जप्राणिस्थापनं स्तोत्रदेशे कार्यमिति फलितं भवति। आदिना 'त्रिवृद्बहिष्पवमानम्' इत्यादिसंग्रहः। अत्र हि त्रिवृच्छब्दवाच्यं [1]त्रिधारापरनामकं द्रव्यं स्तोत्रदेशाद्बहिश्चूर्णीकृतं वस्त्रान्तरितं पवमानस्तोत्राङ्गतया कर्तव्यत्वेन विधीयते ? किंवा बहिष्पवमाननामकं स्तोत्रं तत्र त्रिवृत्त्वं नवर्क्साध्यत्वं विधीयत इति संशयो बोध्यः। अग्नीषोमीयेति। स्त्रीत्वस्य प्राणिधर्मत्वात् 'प्रकृतौ वाद्विरुक्तत्वात्' इतिन्यायेनाग्नीषोमीययागाङ्गत्वेन विधिरिति तत्साहचर्याच्चित्रत्वस्यापि तथेति भावः। पूर्वपक्षमाह—तत्रेति। आदिनार्थवत्वप्रवृत्तिविशेषकरत्वादिसंग्रहः। उद्भिन्न्यायः कर्मसामानाधिकरण्यरूपः। मत्वर्थलक्षणामाशङ्क्याह—उत्पत्तीति। आज्याद्युदाहरणेषु तु स्तोत्ररूपकर्मणोऽनुपादानादेव तद्विधेरसम्भवान्मत्वर्थलक्षणायाः प्रसक्तिरेव नास्तीति तदनुक्तिः। एकपदोपात्तत्वादित्येककारकविधाने हेतुः। यद्यपि चित्रत्वस्त्रीत्वयोः करणता भिन्ना, तथापि तन्त्रेणैकपदोपात्तत्वान्न वाक्यभेद इत्यर्थः। ननु प्राप्ते यागे गुणः पशुरूपफलसम्बन्धश्चेति वाक्यभेदस्तादवस्थ्यमत आह—पशुकामेति। अर्जनाङ्गतया-पशुसम्पादनहेतुतया। इत्यत्रापि-अत्रादिना 'सप्तदशानि पृष्ठानि' इत्यादिसमुच्चयः। सङ्ख्याविशिष्टेति। कारकाणामेव क्रियासाकाङ्क्षतया मिथोऽनन्वयः। न चात्रकारकविभक्तिरस्तीति भावः। गुणविधिरिति। उदाहृतशब्देष्विति शेषः। न च 'स्तोमे डविधिः' इत्याद्यनुशासनात् पञ्चदशानीत्यादिशब्देन स्तोत्रसाधनऋक्सङ्ख्याया एवाभिधानात्पूर्वपक्षानुपपत्तिरिति

'वाक्यभेदप्रसङ्गेन सामानाधिकरण्यतः ।
अन्वाख्यानार्थवादाच्च नामतैवोपपद्यते ॥

चित्रत्वं स्त्रीत्वं च नैकेन विधातुं शक्यम्, वाक्यभेदप्रसङ्गात् । उभयविशिष्टकारकविधानेऽपि गौरवम् । कामपदं च फले मुख्यं, साधने गौणम् । प्रकृतफलाकाङ्क्षदध्यादियागादिक्रमश्च न न्याय्यः, तस्मात्तस्यैव फलमात्रविधानम् । चित्रापदश्च सामानाधिकरण्येन नामधेयम् । पञ्चदशान्याज्यानीत्यत्रापि समासाभावावन्न संख्याविशिष्टद्रव्यप्रतिपत्तिरस्ति । तत्रोभयोर्द्रव्यसंख्ययोर्विधानाद्वाक्यभेदः । तस्मादाज्यानुवादेन संख्यामात्रं विधेयम् । तच्च यद्युत्पत्तावाज्यपदं नामधेयम्, ततो घटते, नान्यथेति गुणवाक्यवशादेवोत्पत्तौ नामत्वं विज्ञायते । सामानाधिकरण्याच्चाज्यैः स्तुवत इति । वाक्यशेषाच्च 'यदाजिमीयुरि' त्यादेर्नामत्वमेव युक्तम् । यत्तु वार्तिके 'पृष्ठैः स्तुवते' इत्युत्पत्तिवाक्यमुदाहृतम्, तत्र चोदयन्ति–यद्येतदुत्पत्तिवाक्यं, तथा सति उत्पत्तौ बहुत्वयोगाद्बहूनि मुख्यानि पृष्ठानि भवेयुः । तत्र यत्सप्तमे वक्ष्यते–ज्योतिष्टोमे पृष्ठबहुत्वाभावाद्वैकल्पिके द्वे पृष्ठे, न बहूनीति मैत्रावरुणसामादिषु पृष्ठशब्दो गौणः । तेन विश्वजिति

---

शङ्क्यम्, स्तोत्रसाधनसङ्ख्याया एव तदर्थतयाज्यगतत्वेनाप्युपपत्तेरिति । अर्थान्तरनिरूढस्य चित्रादिपदस्य मुख्यार्थासम्भवं विना सामानाधिकरण्येन नामत्वायोगादादौ मुख्यार्थासम्भवहेतुं वाक्यभेदमाह — वाक्येति । गुणविधित्वासम्भवेऽपि यागनामता कथं निश्चीयते ? तत्राह— सामानाधिकरण्यत इति । एवमपि गौण्या कर्मणः स्तुतिमात्रं भवेत्, न तु नामेत्यत उक्तम्— अन्वाख्या नेति । तस्य नामत्वोपपादनार्थत्वादित्यर्थः । आज्यविषये बहिष्पवमानविषये च स प्राग्दर्शितः । पृष्ठशब्दे तु रथन्तरादिषु षट्सु 'आपो वा ऋत्वियमार्च्छंत् तासां वायुः पृष्ठे व्यवर्तत' इत्यर्थवादेनोक्तम् ऋतुमतीनामपां पृष्ठे वायोर्विवर्तनपदाभिधेयमैथुनरूपस्पर्शनप्रभवत्वम्, स्पृशेर्धातोः स्थक्प्रत्यये सकारलोपे चौणादिसूत्रे पृष्ठशब्दनिपातनात् । वाक्यभेदमुपपादयति—चित्रत्वमित्यादि । गौरवं विधितात्पर्यविषयानेकत्वप्रयुक्तम् । कामेति । तथा च मुख्यार्थत्यागो दोष इति भावः । अन्यथा तु प्राप्ते कर्मणि चित्रत्वस्त्रीत्वोभयविशिष्टकारकविधिः फलसम्बन्धविधिश्चेति वाक्यभेदः स्यात् । प्रकृतेति । प्रकृतश्चासौ फलाकाङ्क्षश्चेत्यर्थः । समासाभावादिति । कारकविभक्त्यभावेऽपि क्रियायाः शाब्दप्राधान्यात् सर्वेषां तत्सम्बन्ध एव न्याय्यः । पृथक्पदानां षष्ठ्यन्तयौगिकव्यतिरिक्तानाम् । षष्ठ्यन्तयौगिकयोस्तु 'व्रीहीणां चरुम्', 'इन्द्राय प्रदात्रे' इत्यादावविष्ट एव नामर्थेनाप्यन्वयः । उत्पत्तिवाक्यमुदाहृतम्–उत्पत्तिवाक्यत्वेनोदाहृतम् । मुख्यानीति । उत्पत्तौ गौणत्वहेत्वभावादिति भावः । तत्र यत्सप्तम इति वक्ष्यते तद्विरुध्यत इत्यन्वयः तेन मुख्यपृष्ठबहुत्वाभावेन । सप्तमे हि 'विश्वजित्सर्वपृष्ठः' इत्यत्र सर्वपृष्ठशब्दो ज्योतिष्टोमादतिदेशप्राप्तसर्वपृष्ठस्तोत्रानुवाद इति पूर्वपक्षः, ज्योतिष्टोमे मुख्यानि बहूनि पृष्ठानि न सन्तीति निराकृत्य षाडहिकमुख्यपृष्ठबहु [त्व] विधिरिति सिद्धान्तो वक्ष्यते । स च 'पृष्ठैस्स्तुवते' इत्यस्योत्पत्तिवाक्यत्वे न सङ्गच्छते । अनेनैव वाक्येन ज्योतिष्टोमे

सर्वपृष्ठशब्दो बहुत्वापेक्षत्वान्न चोदकप्राप्तानुवाद इति तद्विरुध्यते। तेन 'रथन्तरं पृष्ठं भवति' 'बृहत्पृष्ठं भवती'त्युत्पत्तिवाक्यम् वक्तव्यम्। तथा च स्वयमेव वार्त्तिककारो नवमे वक्ष्यतीति। सत्यमेवम्; अनादरादिदमुक्तम्। एतदुक्तं भवति-सर्वथा सप्तदशानि पृष्ठानीत्येतदत्रोदाहरणम्, यदेव तूत्पत्तिवाक्यं 'पृष्ठैः स्तुवते' इति वा 'रथन्तरं पृष्ठं भवति' इति वा न तदेवोदाहर्त्तव्यमित्यभिप्रायः॥

॥ इति चित्राधिकरणम्॥ ३॥

४

सू० तत्प्रख्यं चान्यशास्त्रम्०—'आघारमाघारयति' 'अग्निहोत्रं जुहोती' त्याघारशब्दोऽग्निहोत्रशब्दश्च गुणविधिः कर्मनामधेयं वेति विचारः। प्रसिद्धादिभिर्गुणविधिः। न च मत्वर्थलक्षणा, अग्निहोत्रे बहुव्रीहिणैवाग्नये होत्रमस्मिन्नि'त मत्वर्थस्यो-

---

बहुपृष्ठविधानादित्यर्थः। तेन साप्तमिकाधिकरणविरोधेन, न त्वधिकरणविरोधमात्रेण। [ननु] 'पृष्ठैः स्तुवते' इत्यस्या [नन्याक्षिप्त] विधिक्रमप्राप्तमुत्पत्तिविधित्वं कथं नाङ्गीक्रियत इति चेत्, [1]अत्राहुस्साम्प्रदायिकाः—एवं सति 'रथन्तरं पृष्ठं भवति' 'बृहत्पृष्ठं भवति' इत्येताभ्यां पृष्ठसामान्यानुवादेन ग्रहवदेकत्वाविवक्षया रथन्तरबृहत्साम्नोर्विधानात्तयोश्चैकार्थ्याद्विकल्पस्स्यात्। एवञ्च व्रीहिधर्माणां यवसाधारण्यमिव रथन्तरधर्माणां बृहत्साधारण्यं प्रसज्येत, एकापूर्वसाधनत्वात्। न चेष्टापत्तिः, तथासति केषुचिद्धर्मविधिषु रथन्तरस्य, केषुचिद् बृहतो निर्देश इति निर्देशभेदानुपपत्तेः। तेन व्यवस्थां विनानुपपत्तेर्निर्देशभेद एव तत्सिद्धमेकार्थभेदं गमयन् पृष्ठवाक्यस्योत्पत्तिविधित्वे तदनुपपत्तेर्बृहद्रथन्तरवाक्ययोरुत्पत्तिविधित्वे तात्पर्यग्राहकः। तथाच सति भिन्नापूर्वसाधनपृष्ठभेदाद्धर्मव्यवस्था युज्यते निर्देशभेदश्चेति 'पृष्ठैः स्तुवते' इत्यपि पृष्ठशब्दस्य गौण्या माहेन्द्रव्यतिरिक्तेष्वपि वामदेव्यादिषु वृत्तिप्रदर्शनार्थं समुदायानुवादः। तत्प्रयोजनञ्च सप्तदशानीति गुणविधौ तावतां ग्रहणमिति वेदवाक्यस्वारस्यादेवायमभ्युपगमः, नाधिकरणविरोधमात्रादिति। सूत्रार्थस्तु—यस्मिन् चित्रादिवाक्ये गुणोपदेशो भातीति शेषः। तत्र प्रधानतः प्रधानभूतेन कर्मणाभिसम्बन्धो नामधेयत्वम्, अन्यथा वाक्यभेदादित्यर्थाद्बोध्यम्। प्रयोजनं स्पष्टम्॥

॥ इति चित्राधिकरणम्॥ ३॥

४

सू० तत्प्रख्यं० इह पूर्वाधिकरणेन प्रत्युदाहरणसङ्गतिः। गुणविहितत्वनिरासद्वारेण सिद्धान्तहेतुवाक्यभेदाभावेन पूर्वपक्षोत्थानात्। प्रसिध्यादीत्यादिपदेन प्रयोजनत्वप्रवृत्तिविशेष-

---

१. अत्रायं विषयविवेकः—

क्तत्वात्। उपसर्जनार्थोऽग्निर्देवता विधीयते, नामधेयत्वे चारूपत्वं स्यात्। यद्यपि च दध्यादिवाक्यैर्द्रव्यं लभ्यते, तथापि देवताभावादरूपत्वम् 'यदग्नये च प्रजापतये च सायं जुहोति' यन्मर्याय च प्रजापतये च प्रात' रित्यनयोरनेकगुणोपपादनेन विशिष्टकर्मविधित्वात् देवताविधौ वाक्यभेदादसामर्थ्यम्। न चैककारकविधानादवाक्यभेदः, विभक्तिपृथक्त्वेन कारकनानात्वात्। यदि त्वग्नीषोमीयवदग्निप्रजापतिभ्यां समस्ताभ्यामेका विभक्तिरश्रौष्यत, तत उभयविशिष्टैकदेवताकारकविधान्न वाक्यं भेत्स्यते। अथापि क्रीणातिवत्पृथक्पदं विभक्तिः स्यात्, तथापि तथा वाक्येनारुणैकहायनीवदग्निप्रजापत्योर्युगपत्संबन्धात्स्यादुभयविशिष्टमेकं कारकम्। यदा तु यजतिददातिजुहोतिभ्य इव भावनाविभक्तिः प्रत्येकमग्निप्रजापतिभ्यामुच्चरन्ती देवताविभक्तिः प्रकृत्यर्थभेदभिन्नामेव देवतां भावनामिव प्रतिपादयति, तदा कुतो देवतैक्यम्? देवतासामान्येन त्वेकत्वं भावनासामान्येन तुल्यमिति समस्तो वेद एकं वाक्यं स्यात्। अतो नामत्वे देवताविधानासंभवादरूपत्वमिति गुणविधित्वमेव युक्तम्। अविहितदेवताकेषु वा दर्विहोमेषु गुणविधानाच्च तत्प्रख्यत्वम्। आधारशब्देनापि क्षरणसमर्थद्रव्यमाज्यपयःप्रभृत्यभिधीयते। तच्च द्वितीयानिर्देशादाघरणसंस्कार्यत्वेन गम्यते, निष्प्रयोजनस्य संस्कारा-

---

करत्वयोः सङ्ग्रहः। उद्भिदधिकरणेन गतार्थतां वारयति—न चेति। उक्तत्वात् इत्यन्तः पृथग्ग्रन्थः। न च व्यधिकरणबहुव्रीहेरसम्भवः, सिद्धान्तिनापि तस्याङ्गीकार्यत्वात्। अन्यथा प्रवृत्तिनिमित्ताभावेन नामत्वानुपपत्तेरिति भावः। अरूपत्वं द्रव्यदेवतालक्षणरूपशून्यत्वम्। दोष इति शेषः। दध्यादीति। 'दध्ना जुहोति' 'पयसा जुहोति' इत्यादीत्यर्थः। देवताविधायकमाशङ्क्य निषेधति—यदग्नये चेति। अनेकेति। अग्निप्रजापतिसायङ्कालादिरूपेत्यर्थः। विधित्वादि त्यन्तः पृथग्ग्रन्थः। यत इत्यध्याहारेणोत्तरग्रन्थो योज्यः। एककारकेति। अग्निप्रजापतिविशिष्टैकदेवतारूपेत्यर्थः। विभक्तीति। प्रजापतेर्मन्त्रार्थवादादिषु दात्रादिवदग्निगुणत्वप्रसिद्धेरभावादिति भावः। कारकनानात्वमेवोपपादयति—यदि हीत्यादिना। नन्वग्निहोत्रपदेन प्रकृतकर्मणि विधित्सितस्याग्नेः 'अग्निर्ज्योतिः' इति मन्त्रवर्णः प्रख्यापकं शास्त्रमस्तीति वैयर्थ्यान्न गुणविधित्वम्। अथ विशिष्टविधौ गौरवाद् 'यदग्नये च' इत्यादिविहिते कर्मणि गुणविधित्वं तर्हि सूर्यवाक्ये उत्पत्तिशिष्टसूर्येण बाधात्परिशेषादग्निवाक्यविहिते तथात्वं वाच्यम्। तत्र चाग्नेः प्राप्तिस्तेनैवेति तत्प्रख्यत्वं दुर्वारमित्यत आह—अविहितेति। दर्विसाधनका होमाः यदेकया जुहुयाद्दर्विहोमं कुर्यात्' इत्यादिप्रसिद्धाः। आधारवाक्ये पूर्वपक्षं दर्शयति—आघारेति। प्रकृतश्चासौ द्रव्यापेक्षश्चेति विग्रहः। न च संस्कारान्यथानुपपत्त्या विनियोगकल्पनायां सक्तुष्वपि तदापत्तिः, भस्मसाद्भूतानां तदसम्भवात्। संस्कारश्चात्रदेशक्षारणम्। न चाघारणसंस्कारस्य 'चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्य' इत्येतत्प्रख्यापकम्, आज्यस्योपांशुयागाङ्गत्वस्य च सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्'इति वाक्यमिति वाच्यम्, 'चतुर्गृहीतं वा' इत्यस्य पूर्वपक्षे प्रयाजाज्ये आघारणान्तरविधायकत्वात्, 'सर्वस्मै वा' इत्यस्य चाज्ये ध्रौवत्वमात्रविधि-

संभवात्प्रयोजनापेक्षायां प्रकृतद्रव्यापेक्षा। उपांशुनार्थंतो विज्ञायते। प्रकरणेन च गुणे विधीयमाने नास्ति मत्वर्थलक्षणा, मतुप्प्रत्यययुक्तस्यैव वाक्यस्य प्रकरणेन कल्पनात्। न चात्र यागो विधीयते, संस्कारमात्रश्रवणात्। न च संस्कारकर्माणि क्वचिच्चामनन्ति, तस्माद्गुणविधिः। एवञ्च द्वितीयानिर्देशो युक्तो भवति, आघारस्य संस्कार्यत्वात् अग्निहोत्रे चार्थाक्षिप्तसाध्यत्वानुवादेनोपसर्ज्जनार्थविधानात्। नामधेयत्वे तु तस्याविधेयत्वात्कर्मैव विधेयम्। तच्च कारणमिति नामधेयं तृतीयान्तं स्यादनुपपन्ना द्वितीया स्यात्। न च फलवाक्य एव कर्मणः करणत्वम्। उत्पत्तिवाक्ये तु फलवाक्यापेक्षितकर्मस्वरूपकर्त्तव्यतैव प्रतिपाद्यत इति वाच्यम्। विधेः करणत्वावगमात्। कर्मत्वासंभवात्साध्यत्वे च तस्य साध्यान्तरानपेक्षत्वान्न फलवाक्येनापि फले विधातुं शक्यत इति कर्मान्तरमेव फलवाक्ये स्यात्। तथा चाघाराग्निहोत्राधिकरणे वक्ष्यतेन ह्यकरणभूतोऽसौ साध्यान्तरानपेक्षत्वाद्वाक्यान्तरेणापि फले विधातुं शक्यत' इति। तस्मादुत्पत्तावपि कर्मणः करणत्वात् द्वितीयानुपपत्तिरतो गुणविधिः। अत्रोच्यते—

**वाक्यार्थो न विधातव्यो धात्वर्थविधिसंभवे।**
**पदान्तरं न चानन्यगतिनामत्वसंभवात्॥**

श्रुत्या हि धात्वर्थविधानं वाक्येनोपपदार्थस्य। तत्र यद्युपपदमनन्यगति स्यात् स्याद्वाक्यार्थविधानम्। तत्तु शास्त्रान्तरप्रख्यापितं गुणं निमित्तीकृत्य नामधेयत्वेन संभवतीति न धात्वर्थविधानं बाधितव्यम्। किं पुनः शास्त्रान्तरं यदस्य गुणस्य प्रख्यापकम्? अग्नेस्तावद् 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति, सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः' इति वाचनिकमन्त्रवर्णात्प्राप्तिः। 'यदग्नये च प्रजापतये च सायं जुहोती' त्येतत्तु मन्त्रवर्णप्राप्ताग्निसूर्यानुवादेन प्रजापतिसमुच्चयविधानमतो न वाक्यभेदः।

---

परत्वादिति। मतुबिति। आघारवतोपांशुयाजेनेष्टं भावयेदित्यर्थः। नामत्वासम्भवमप्याह—न चात्रेति। ततः किमत आह—न चेति। संस्कार्यविशेषादेव स्वरूपनिर्धारणसिद्धेरिति भावः। आघारस्य क्षरणसमर्थद्रवद्रव्यस्य। अग्निहोत्रे अग्निहोत्रशब्दे। विधेरिति। विधिवशादित्यर्थः। इष्टसाधनत्वस्य विधिप्रमेयत्वात्। अन्यथा विश्वजिदादौ फलसाधनत्वं न स्यादिति भावः। वाक्यार्थ इति। विधिपदातिरिक्तपदार्था इत्यर्थः। स च विधेस्स्वपदोपात्तधात्वर्थापेक्षया विप्रकृष्ट इति, सति सम्भवे धात्वर्थस्यैव विधिरुचित इत्यर्थः। श्रुत्या पदरूपया। वाक्येन। पदान्तरसमभिव्याहाररूपेण। अग्निदेवताप्रापकशास्त्रविषये भाष्यवार्तिकयोर्विप्रतिपत्तेः प्रश्नपूर्वकं स्वाभिमतं तदाह—किं पुनरिति। अत्र सूर्यवाक्यं साहचर्यात्पठितम्, इतिकरणस्य वचनेनैकदेशभूतेनान्वयः। एवञ्चाग्निसूर्ययोः प्राप्तत्वाद्यदग्नये चेत्यादिवाक्ययोरपि न विशिष्टकर्मान्तरविधिः, किन्तु प्रजापतिमात्रविधिरिति न वाक्यभेद इत्याह—यदग्नये चेति। ननु वाचनिकप्रजापतिदेवतया निराकाङ्क्षे होमे तदाकाङ्क्षाकल्प्यो मान्त्रवर्णिको विनियोगो न स्यात्, मन्त्रस्यैन्द्रीन्यायेन गौण्या प्रजापतिप्रकाशकत्वेनैवोपपत्तेः, एकेनैव वाक्येन प्रजापतिविधानोपपत्तौ वाक्यद्वयानर्थक्याच्चेत्यत आह—अग्निसूर्यानुवादेनेति। अयमाशयः—नात्र

आघारवाक्येऽप्याघारसंज्ञके कर्ममात्रे विहिते चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्येत्यनेनैवाज्यप्राप्तेः क्षरणात्मकत्वं प्राप्तमिति, तन्निमित्तनामधेयत्वसंभवात्कर्मविधानमेव युक्तम्। दृष्टञ्च संस्काराणामपि नामधेयम्। 'उपांशुं गृह्णातीत्यन्तर्यामं गृह्णाती'ति। न चास्य संस्कारत्वम् "इन्द्र ऊर्ध्वो ऽध्वर इत्याघारमाघारयती" ति मान्त्रवर्णिकेन्द्रदेवतावत्त्वाद्यागत्वसिद्धेः। अतो नामत्वम्। अर्थाक्षिप्तसाध्यांशाभिप्रायकश्च द्वितीयानिर्देशः। कथं पुनरशाब्देनानध्याहृतेन च शाब्दस्यान्वयः। न हि श्रुत्या लक्षणया वा विधिवाक्ये साध्यत्वं शाब्दम्। नाप्यध्याहृतम्, वाक्यभेदप्रसङ्गादग्निहोत्रहोमं कुर्याद्धोमेन च फलमिति अर्थाक्षिप्तेनापि यद्यन्वयः स्यात्, तथा सति गुणोऽप्युद्भिदादिरर्थाक्षिप्तसाध्यांशाभिप्रायेण करणभूतेऽपि कर्मणि विधीयमानः श्रुत्यैव शक्यो विधातुमिति मत्वर्थलक्षणा दत्तजलाञ्जलिः स्यात्। एतेन ये धात्वर्थस्य विषयतया करणत्वेन चान्वयं मन्यन्ते,

---

होमानुवादेन प्रजापतिर्विधीयते, येनैते दोषास्स्युः, किन्तु देवताभूताग्निसूर्यानुवादेन। तत्प्रासिश्च मन्त्रवर्णादित्यनुमत एव मन्त्रविनियोगः, न तु तद्बाधः। एकेन चोभयानुवादेन तद्विध्यसम्भवाद्वाक्यद्वयमपि सार्थकम्। सायं प्रातश्शब्दौ चाग्निसूर्ययोस्तत्रैव प्राप्तत्वादनुवादाविति। संस्कारकर्मणां नामधेयं नास्तीति यदुक्तं तद्दूषयति—दृष्टञ्चेति। सोमरसस्य पात्रे ग्रहणं संस्कारः, तस्य अंशुमन्तर्याममिति नामनी। प्रकृते तु संस्कारत्वमपि नेत्याह—न चेति। यागत्वेति। होमत्वेत्यर्थः। द्वितीयोपपत्तिमाह—अर्थाक्षिप्तेति। असाधितस्य करणत्वानुपपत्त्याक्षिप्तः साध्यांशः साध्यत्वमित्यर्थः। अशब्देन श्रुतशब्दानभिहितेन। अनध्याहृतेन—अध्याहृतशब्दानुक्तेन। शब्दस्य—द्वितीयाभिहितस्य। लक्षणया ( शाब्दत्वे हेतुः विधिवाक्य इत्युक्तः ? ) इष्टसाधनतया बोधनं हि विधानम्। अस्तु तर्हि अर्थाक्षिप्तेनैवान्वयस्तत्राह—अर्थाक्षिप्तेति। एतेन अशब्दान्वयदूषणेन। विषयतयेति। एवं तावद्गुरुमते प्रक्रिया—कार्यता ज्ञानस्य प्रवर्तकत्वात्सैव लिङ्वाच्या। तत्र लोके गवानयनादिक्रियैव तत्त्वेनावगम्यते। कार्यस्य च सम्बन्ध्यपेक्षायां लोके मानान्तरवशेनामुककामस्येदं कार्यमिति गम्यते। स च फलकामः स्वसम्बन्धित्वेन कार्यबोद्धृत्वान्नियोज्य इत्युच्यते। वेदे तु स्वर्गकामादिपदोपात्त एव नियोज्यः, अदृष्टार्थे मानान्तराभावात्। स्वर्गकामश्च न स्वर्गासाधने कार्ये नियोज्यः सम्भवतीति तत्साधनं कार्यं वाच्यम्। तच्च न यागादिक्रियारूपम्, तस्या भङ्गुरत्वात्। अतो वैदिकस्य लिङः कार्यताविशिष्टं धर्म्यन्तरमपूर्वपदवाच्यं शक्यमुपेयते। कार्यञ्च कृत्युद्देश्यम्। कृतिरेव च यत्नरूपा भावना। अत एव कार्याभिधायिनामेव भावनाभिधायित्वम्, तेन विना कार्याभिधानायोगात्। न त्वन्येषां, मानाभावात्। एवञ्च शुद्धकृत्युद्देश्यस्यादर्शनात्कृतेर्विषयभूतधात्वर्थापेक्षायां यागादेर्विषयत्वेनान्वयः। एवं कार्यप्रतीतौ पर्यवसितायां पुनः केन कार्यं कथञ्चेति कृतिद्वारिकायामेव करणेतिकर्तव्यताकाङ्क्षायां धात्वर्थ एव करणत्वेनापि सम्बध्यते, फलोद्देशप्रवृत्तकृतिरूपकर्तृव्यापारव्याप्तत्वात्। यद्यपि कृतिस्वरूपे न करणता बोध्या। एवञ्च यागादिनामधेयानां तृतीयान्तत्वसङ्गतिः। तदेवं गुरुमते धात्वर्थस्य कार्येण द्वेधान्वयः। प्रथमं विषयत्वेन कार्यप्रतीतिनिर्वाहकतया,

ते निरस्ता वेदितव्याः। विषयभूतेन हि कथं करणवाचिनां नामधेयानां सामानाधिकरण्यम्? आर्थिकेन करणत्वेन सामानाधिकरण्यमिति चेत्, साध्यत्वमपि तर्ह्यार्थिकमस्तीति गुणविधिरपि विनैव मत्वर्थलक्षणया विना च वैरूप्येण स्यादिति समस्तमेव नामधेयप्रतिपादनमनुपपन्नं स्यात्। अथ विषयत्वद्वारेण करणत्वपर एव शब्दः, ततोऽन्यपरेण शास्त्रेणोपायमात्रत्वेनोपात्तं विषयत्वं न शास्त्रार्थः स्यात्, अतत्परत्वात्। अथ शब्द एव प्रथमं विषयतयाभिधाय पुनः करणतयाप्यभिधत्ते, कथं सकृदुच्चरितो द्विरभिदध्यादभिदधानो वा साध्यत्वमपि पुनरभिदधीत। न हि नियामकमस्ति द्विरेवाभिधत्ते, न त्रिरिति। 'सकृत्प्रवृत्तायाः किमवगुण्ठनेने' ति न्यायात्। अतश्च गुणविधिरपि स्यादित्युक्तम्। अतः करणत्वेनैवान्वयो वाच्यः, न विषयत्वेनेत्यास्तां तावत्। अतः कथं द्वितीयाश्रुतिनिर्देश इति वक्तव्यम्। तदुच्यते—अस्ति तावदार्थिकं धात्वर्थस्य साध्यत्वम्, असाधितस्य करणत्वानुपपत्तेः। असाध्यसाधनयोरेकार्थसमवायात् साध्याभिधायिनी द्वितीया साधनत्वमेव लक्षयन्ती धातुसामानाधिकरण्यं प्रतिपद्यत इत्यविरोधः॥

॥ इति तत्प्रख्याधिकरणम्॥ ४॥

५

**सू० तद्व्यपदेशं च०** इह रूढिशब्दा एव वाक्यभेदरहितास्तद्व्यपदेशवन्त उदा-

---

पश्चात्तु करणत्वेन कार्योत्पत्तिनिर्वाहकतयेति। एतेनेत्युक्तं दोषं विवृणोति—विषयभूतेनेति। विषयत्वस्यानीप्सितकर्मत्वरूपत्वादग्निहोत्रमित्यादिवत्सर्वनामधेयानां द्वितीयान्तत्वमेवोचितमिति भावः। साध्यत्वमपीति। यथैव कार्यानुपपत्त्या करणत्वं, तथासाधितस्य करणतानुपपत्तेः साध्यत्वमप्यर्थाक्षिप्तमस्तीत्यर्थः। न शास्त्रार्थ इति। न चेष्टापत्तिः, विषयत्वस्य शास्त्रार्थत्वसिद्धान्तविरोधादिति भावः। कथमिति। सकृदुच्चरित इति व्युत्पत्तिविरोधादित्यर्थः। प्रवृत्ताया इति। परपुंसि प्रवृत्ताया व्यभिचारिण्या इत्यर्थः। प्रनृत्ताया इति पाठे नर्तनप्रवृत्ताया इत्यर्थः। एकार्थसमवायात्—एकार्थवृत्तित्वात्। एवञ्च शक्यसम्बन्धप्रदर्शनार्थम्।

सूत्रार्थस्तु—चशब्दोऽनुक्तसमुच्चयार्थः। तस्य विधित्सितगुणस्य प्रख्यापकमन्यत् शास्त्रञ्चेत्तदापूर्वत्रानुक्तमपि नामधेयं स्यादिति॥

॥ इति तत्प्रख्याधिकरणम्॥४॥

५

सू० तद्व्यप०—अनन्तरसङ्गतिं सूचयन्नेवाधिकरणविषयं दर्शयति—इहेति। अत्राद्यविशेषणेनोद्भिदधिकरणाविषयत्वम्, द्वितीयेन च चित्राधिकरणाविषयत्वञ्च दर्शितम्। एतच्चोपलक्षणम्, तत्प्रख्यशास्त्ररहिता इत्यपि बोद्धव्यम्। न चाद्येनैव तद्व्यावृत्तिः, रूढानामपि समिदादीनां तदुदाहरणत्वात्। एवञ्च प्रत्युदाहरणसङ्गतिः सूचिता। तद्व्यपदेशवन्त इति सिद्धान्तोपपत्तिः

हरणम्। यथा "श्येनेनाभिचरन् यजेते" त्यादिषु श्येनादिशब्दाः, तेषु गुणविधिः कर्मनामधेयं वेति संशयः। अत्यन्तनिरूढत्वाद् गुणविधिः। ज्योतिष्टोमादिषु काम्यत्वाच्च नित्यमुत्पत्तिशिष्टमपि सोमं बाधते। यद्वा गुणविशिष्टकर्मविधानम्, अप्रसिद्धार्थकल्पनातो वरं मत्वर्थलक्षणा सोमादिवत्। न च 'यथा वै श्येन' इत्यादिवाक्यशेषदर्शितक्रियासामान्येन कर्मणि गौणत्वेन कर्मवचनत्वं युक्तम्, अत्यन्तविप्रकृष्टत्वात्। गौणत्वस्य लक्ष्यमाणगुणैर्योगाद्वृत्तिर्गौणीति वक्ष्यते। तद्वरं लक्षणैवाश्रिता, गौणत्वे चार्थान्तरपरत्वाच्छ्रुतिबाधः। लक्षणया तु तद्वत्यपि वर्तमानः श्येनशब्दो लोहितोष्णीषादिवदुपसर्जनार्थश्येनविधिपर एव। करणीभूतेन तु यागेन करणीभूतस्यैकवाक्यता नान्तरेण मत्वर्थलक्षणां लभ्यत इत्येकवाक्यत्वार्थं लक्षणाश्रयणम्। तात्पर्यं तु श्रुत्यर्थ एवेति न श्रुतिबाधः।

उच्यते—गुणविधौ तावत्स एव स्तोतव्यः। तस्य चात्मनैवोपमानमनुपपन्नमिति तद्व्यपदेशात्मकवाक्यशेषानुपपत्तिः, विशिष्टविधिस्तु गौरवादेवायुक्तः। न च सोमादिवत्पदान्तरस्यान्यगतित्वम्, यथा वै श्येन इति वाक्यशेषानुसाराद् गौणत्वेन नामत्वसंभ-

---

कथनम्। तेन विधित्सितेन गुणेन सह व्यपदेश उपमानोपमेयभावेनार्थवादस्तद्वन्त इत्यर्थः। अभिचारो नाम वैरिमरणानुकूलो व्यापारः। आदिना 'सन्दंशेन यजेत' इत्यादिसंग्रहः। ज्योतिष्टोमादिषु गुणविधिरित्यन्वयः। आज्यादिवैलक्षण्याय अत्यन्तेति। आज्यपदन्तु स्तोत्रेऽप्याजियोग्यत्वाद्योगेनापि वर्तते, नैवं श्येनादिपदमिति। काम्यत्वादिति। ज्योतिष्टोमाश्रितं श्येनाख्यपक्षिद्रव्यं फलाय विधीयत इत्यर्थः। नन्वेवं सति विधेयस्य श्येनस्य श्येनसाध्येन स्तुतिः 'यथा वैश्येनः' इत्यर्थवादकृतानुपपन्ना स्यादत आह—यद्वेति। तथाच श्येनसदृशत्वेन कर्मणः स्तुतिरुपपन्नेति भावः। मत्वर्थलक्षणादोषमाशङ्कयाह—अप्रसिद्धेति। श्येनपदस्याप्रसिद्धकर्मविशेषाभिधायकत्वकल्पनापेक्षयेत्यर्थः। ननु नाप्रसिद्धा शक्तिः कर्मणि कल्प्यते, किन्तु वाक्यशेषदर्शितसादृश्याद्गौण्यैतन्नामत्वमत आह—नचेति। क्रियेति। निपत्यादानरूपक्रियात्मकसादृश्येनेत्यर्थः। अत्यन्तेति। स्वार्थत्यागेन तद्गतगुणं लक्षयित्वा पुनस्तद्विशिष्टतया परार्थाभिधानस्य लक्षितलक्षणारूपत्वेनात्यन्तक्लिष्टत्वादित्यर्थः। वक्ष्यति-तत्सिध्यधिकरणे वार्तिककार इत्यर्थः। श्रुतिबाधः—शक्यार्थान्वयबाधः। मत्वर्थलक्षणायामेतदभावमाह—लक्षणायान्त्विति। किं तर्हि लक्षणाकारणं तत्राह—करणीभूतेनेति। एकवाक्यत्वादिति। एकवाक्यत्वार्थमित्यर्थः। आत्मनैवेति। सादृश्यभेदगर्भत्वादिति भावः। न च 'रामरावणयोर्युद्धं रामरावणयोरिव' इति वदनन्वयालङ्कारोऽस्त्विति वाच्यम्। अयमित्यतो वैशब्दसमभिव्याहृतश्येनपदार्थादन्यस्यैव बोधेन तदसम्भवात्। गौरवादिति। विशेषणेऽपि विधितात्पर्यकल्पनागौरवादित्यर्थः। इदमुपलक्षणं मत्वर्थलक्षणाया अपि। ननु विधिलाघवात् कथञ्चिच्छ्येनपदस्य नामत्वाङ्गीकारे सोमादिपदानामपि नामत्वापत्तिरत आह—न चेति। सोमादिपदस्य लक्षणयापि यागनामत्वे तात्पर्यग्राहकाभावादनन्यगतित्वाद् गौरवाश्रयणम्, इह तु वाक्यशेषस्य तात्पर्यग्राहकस्य सत्वाद् गौणवृत्या निरूढ्या नामत्वस-

वात्। अस्य हि वाक्यशेषस्यैतदेव प्रयोजनम् —कथं नाम श्येनशब्दस्य यागनामता विज्ञायेतेति। तस्मान्नामधेयम्। एवं यौगिकवाक्यभेदतत्प्रख्यतद्व्यपदेशैश्चतुर्भिर्नामत्वं साधितम्। एतैरेव च सर्वत्र नामधेयत्वमिति द्रष्टव्यम्॥

॥ इति तद्व्यपदेशाधिकरणम्॥ ५॥

६

सू० नामधेये गुणश्रुतेः० "वाजपेयेन स्वाराज्यकामो यजेते" ति वाजपेयशब्दः किं गुणविधिः? उत कर्मनामधेयम्? इति चिन्त्यते। तदर्थमिदं विचार्यते किं यजेतेत्याख्यातं गुणफलाभ्यां तन्त्रेण संबद्धुं क्षमते, न वेति। सर्वाणि चोद्भिदादीनि अत्रोदाहर्त्तव्यानि।

सर्वेष्वाख्यातशब्देषु तन्त्रसंबन्धसंभवात्।
मत्वर्थलक्षणा दोषो नास्तीत्याक्षिप्यतेऽधुना॥

---

म्भवान्न विधिगौरवाश्रयणमित्यर्थः। ननु वाक्यशेषस्य स्तावकत्वमात्रेणान्यथासिद्धत्वात्कथं विधिवाक्यगतश्येनपदगौणवृत्तितात्पर्यग्राहकत्वमित्याशङ्क्याह—अस्य हीति। विधिवाक्यापेक्षितनामत्वगमकत्वस्य स्तुत्यपेक्षयाप्यावश्यकत्वादिति भावः। अत एव क्वचित् अवश्यं हीति पाठः। नामता विज्ञायेत इत्यनेनैतत्सूचितम्—नेयं गौणी वाक्यार्थबोधे व्याप्रियते, श्येनसदृशेन योगेनेति बोधाङ्गीकारात्। किन्तु संज्ञात्वज्ञाने केवलं तद्व्यापारः। ततश्च श्येनसंज्ञकेनेत्येव वाक्यार्थबोध इति मत्वर्थलक्षणा मास्तु, वाक्यार्थबोध एव व्यापारात् सैवात्र दुर्बलेति यौगिकेति भावप्रधानम् तत्प्रख्यं तद्व्यपदेशञ्च शास्त्रम्। एतदुपसंहारफलमाह—एतैरेव चेति। तस्य विधित्सितगुणस्योपमानव्यपदेशयुक्तं श्येनादिपदं नामधेयं स्यादिति सूत्रार्थः।

॥ इति तद्व्यपदेशाधिकरणम् ॥५॥

६

सू० नामधेये० गुणेति—पानार्हवाजमन्नं यवागूरित्यर्थः। नन्वत्र कर्मणि गुणविधौ फलपदानर्थक्यापत्तेः फलगुणविधेश्च सन्निहिताश्रयालाभेनासम्भवाद्विशिष्टविधिर्वाच्यः। आख्यातम्—आख्यातान्तम्। तन्त्रेण युगपद्यागस्य स्वरूपेणान्वये तन्त्रत्वसम्भवः, कर्मत्वकरणत्वान्यतररूपेणान्वये तदभावः। कर्मत्वेन गुणान्वयसम्भवेऽपि फलान्वयासम्भवात्। करणत्वेन च फलान्वयसम्भवेऽपि गुणान्वयासम्भवादिति। अनुपदमेवैतत्प्रपञ्चयिष्यते। ननु पूर्वोक्तेषूद्भिदादिष्वेवैतद्विचारसम्भवात्किमपूर्वोदाहरणेनेत्याशङ्क्याह—सर्वाणि चेति। भाष्ये वाजपेयोदाहरणन्तु वाजपेयशब्दस्य गुणविधित्वे सत्यैष्टिकविध्यन्तप्राप्तेः 'सप्तदशदीक्षो वाजपेयः' इति लिङ्गदर्शनानुपपत्तिं सूत्रोक्तां दर्शयितुमिति ज्ञेयम्। एवञ्च श्येनादिष्वपि सौत्रचशब्देन पूर्वपक्षे मत्वर्थलक्षणादोषोक्तेस्तदाक्षेपादनन्तरसङ्गतिर्ज्ञेया। एतदेव प्रपञ्चयन् पूर्वपक्षमुपक्रमते—सर्वेष्विति। सर्वशब्द-

कर्मत्वं करणत्वं वा नाख्यातेनाभिधीयते ।
यागादेः किं तु संबन्धमात्रं साधारणं च तत् ॥

यदि हि यजेतेति यागस्य कर्मत्वमुच्येत, ततः साध्यद्वयासमवाया फलं संबध्येत, गुण एव तु साधनतया संबध्येत । अथ तु करणत्वमेव यागस्य, ततोऽपि करणद्वयासमवायान्न गुणः संबध्येत फलमेव संबध्येतेति न स्यात्तन्त्रत्वम् । न त्वेतदन्यतरदाख्यातेनोच्यते, तद्वाचकशब्दाभावात् । प्रकृत्या हि यागमात्रमुक्तं प्रत्ययेन तु भावना, तयोस्तु समभिव्याहारात्संबन्धमात्रं गम्यते । तच्च कर्मत्वकरणत्वयोः साधारणम् । अतश्चोभयरूपसाधारणत्वाद्यागस्य तद्विषयाऽपि भावना यागकर्मिका यागकरणिका चेति द्विरूपा भवति । तत्र यागकर्मिकांशेन गुणसंबन्धं, तत्करणिकांशेन फलसंबन्धं भावना लभते, तन्त्रेणेति विनैव मत्वर्थलक्षणया यागे गुणविधानमुपपन्नम्, वाजपेयेन यागं कुर्याद्यागेन च स्वाराज्यमिति । अत्रोच्यते—

संबन्धमात्रतात्पर्ये नैकस्याप्यन्वयो भवेत् ।
तद्विशेषपरत्वे तु स्यादन्यतरसङ्गतिः ॥
रूपद्वयपरत्वं तु विना वृत्त्या न लभ्यते ।
तस्मान्नाख्यातशब्दस्य तन्त्रसंबन्धसंभवः ॥

श्रुत्या लक्षणया वा यत्परः शब्दः स एव शब्दान्तरार्थेन संबध्यते । तद्याख्यातात्संबन्धमात्रं धात्वर्थभावनयोरवगतम्, ततो नैकस्यापि फलगुणयोस्तदन्वयः स्यात् । फलस्य साधनापेक्षत्वाद्यागकरणिकैव भावना फलसंबन्धमर्हति । तथा गुणस्य साध्यापेक्षत्वाद्यागकर्मिकयैव भावनया संबन्धः । अनिर्द्धारितोभयरूपा तु नैकेवाप्यन्वीयते, अयोग्यत्वात्तत्रावश्यं विशेषपरताऽभ्युपगन्तव्या । कथमसत्योः कर्मकरणविभक्त्योस्तत्परता शब्दस्येति चेत् ? सामान्यवाचिनी वा षष्ठी किमत्रास्ति, येन संबन्धमात्रमवगम्येत । समभिव्याहारादेव लक्षणया संबन्धावगतिरिति चेत्, तत एव समभिव्याहारात्पदान्तरान्वयपर्यालोचनया संबन्धविशेषस्यैव लक्षणया सिद्धेः । न ह्यसति विशेषपरत्वे पदान्तरान्वयो घटत इत्युक्तम् । तस्माद्विशेषपरता । तत्र कर्मपरत्वे गुणस्यैव संबन्धो न फलस्य, करणपरत्वे तु फलस्यैव न गुणस्येत्यन्यतरविशेषपरत्वेऽन्यतरस्यैव संबन्धात् न

---

स्सम्भवन्मत्वर्थलक्षणाभिप्रायः । तत्र सम्बन्धमुपपादयति—कर्मत्वमित्यादिना । सम्बन्धमात्रं अभिधीयत इत्यनुषङ्गः । समभिव्याहारलभ्यत्वादभिधेयत्वोक्तिर्ज्ञेया । तत्सम्बन्धमात्रसाधारणं गुणफलोभयान्वयानुकूलम् । तत इत्यनन्तरं भावनायामिति शेषः । एवमग्रेऽपि । फलगुणयोरिति । फलगुणयोर्मध्ये नैकस्यापीति योजना । साधनापेक्षत्वात् । साध्यान्वितभावनासाकाङ्क्षत्वात् । अयोग्यत्वादिति । आकाङ्क्षादिविरहेणान्वयानर्हत्वादित्यर्थः । पदान्तरेति । गुणफलादिपदेत्यर्थः । ननु कर्मत्वकरणत्वयोः कालभेदेन प्रतियोगिभेदेन चैकस्मिन्नेव यागादौ प्रतीयमानयोर्वस्तु-

तन्त्रेणोभयसंबन्धः। उभयपरत्वन्तु नावृत्तिमन्तरेण लभ्यते। न खलु यस्मिन्नेव क्षणे यागं करणात्मनावबुद्ध्यामहे, तस्मिन्नेव कर्मात्मनावबोद्धुमीश्महे इति स्वानुभवसिद्धमेतत्। एवं गुणप्रधानतोद्देशोपादानविध्यनुवादत्वकृतमपि वैरूप्यम्। अतो न तन्त्रत्वम्। भावनावदिति चेत्, यथा खलु भावना कर्मकरणत्वोद्देश्योपादेयत्वादिरूपभेदमन्तरेणैवाख्याताभिधेयेनैवात्मना साध्यादिभिः संबध्यते-इदमनेनेत्थं कुर्यादिति, तथा यागोऽपि कर्मकरणत्वरूपमनादृत्य धात्वभिहितेनैव यागरूपेण गुणफलाभ्यां संबद्ध्यत इति न वैरूप्यमिति। न, अक्रियात्वात्। भावना हि क्रियारूपा सर्वकारकसाधारणरूपैवेति युक्तं पदवैरूप्येणानेकसंबन्धं लभते। यागस्त्वक्रियारूपः कथमिव कारकरूपैर्गुणादिभिः संबध्यते। तदसौ भावनाद्वारेणैवारुणैकहायनीवत् गुणफलाभ्यां संबध्यत इति युक्तम्। भावनासंबन्धोऽपि चास्य न स्वरूपेण संभवति। कारकं हि क्रियया संबध्यते, न वस्तुरूपमतोऽवश्यं कर्म्मात्मना करणात्मना वा धातुना यागः प्रतिपादनीयः। तत्रान्यतररूपप्रतिपादने ऽन्यतरेणैव गुणेन फलेन वा संबन्धान्नोभयसंबन्धसिद्धिः। उभयरूपप्रतिपादने वा द्विरुच्चारणे वाक्यभेदः। तस्मान्न तन्त्रसंबन्धः। तेन गुणविधिपक्षे सैव मत्वर्थलक्षणा सोमेन यजेत अरुणया क्रीणातीत्यादिवदाश्रयितव्या। तद् वरं वाजपेयं सुराद्रव्यमस्मिन्निति सुराग्रहविधानात् तत्प्रख्यतया नामधेयत्वम्।

ये तु कार्याभिधायिनामेव भावनाभिधेया, न सर्वाख्यातानामित्याहुः, तेषां काष्ठैः

---

सतोः को विरोधोऽत आह—न खल्विति। नानयोर्वस्तुगत्या विरोधं ब्रूमः, किन्तु सकृदुच्चरितादेकशब्दाद् बोध इति भावः। कर्मत्वकरत्वयोरिव तदाक्षिगुणत्वे प्रधानत्वादेरप्येकक्षणे बोधविरोधमाह—एवमिति। साधनत्वेन परार्थरूपं गुणत्वं, तेन च परोद्देशप्रवृत्तकृतिव्याप्यत्वरूपमुपादेयत्वमाक्षिप्यते। तस्य च विधिं विनानुपपत्तेर्विधेयत्वमित्येकं त्रिकम्। तथा साध्यत्वेन प्राधान्यं शेषित्वरूपं गम्यते। तेन च कृत्युद्देश्यत्वम्। अप्राप्तस्य चोद्देष्टुमयोगात्प्राप्तानुकीर्तनरूपानुवादत्वमित्यपरं त्रिकं न युगपदेकत्र बोद्धुं शक्यमित्यर्थः। कर्मत्वकरणत्वरूपानादरेण भावनाया यथा गुणफलाभ्यामन्वयस्तथा धात्वर्थस्यापि स्यादिति शङ्कते—भावनावदिति। शङ्कामेव विवृणोति—यथेति। समाधत्ते—नेति। अक्रियात्वञ्च धात्वर्थस्यैकस्मिन् वाक्ये क्रियाद्वयसमावेशायोगात् पाकं पाकेन वा करोतीति कारकत्वेनैव विवरणाच्च ज्ञेयम्। तस्मात्साक्षात्कारकसंबन्धायोगात् भावनाद्वारक एव सम्बन्धो वाच्य इत्याह—तदिति। 'अरुणयैकहायन्या' इत्यत्र यथारुणस्यैकहायन्याश्च भावनाद्वारकस्सम्बन्धस्तद्वदित्यर्थः। तर्हि स्वरूपतो भावनासम्बन्धद्वारकस्तदन्वयोऽस्त्वित्याशङ्क्यां पूर्वोक्तानुपपत्त्या निराकर्तुमाह भावनेति। कारकं हीत्यादिरभ्युच्चयवादः 'मातुस्स्मरति' इत्यादावकारकस्यापि क्रियान्वयदर्शनात्। अतः पूर्वोक्ते गुणफलान्वयहेत्वाकाङ्क्षाविरहे कर्मत्वकरणत्वाभ्यां विवरणे च तात्पर्यम्। प्रतिपादनीय इति। लक्षणयेति शेषः। ये त्विति। प्राभाकरा इत्यर्थः। कार्येति। लिङादीनामित्यर्थः। अयमाशयः—चेतनव्यापार एव यत्नकृत्यपरपर्यायो भावना, तदभिधानञ्च प्रवर्तकत्वाच्चेतनमात्रविषयेषु कार्याभिधायित्वे[न] क्लृप्तेषु लिङादिष्वेव कार्यघटकत्वेन प्रमाणवत् कार्यत्वस्य कृतिसाध्यतारूपत्वात् न तु सर्वाख्यातेषु। तेषां कार्यानभिधायित्वात्, अचेतनेष्वपि प्रयोगाच्चेति। तेषमिति। मत इति

पचतीत्यादिषु भावनाभावाद्धात्वर्थेनैव कारकाणां संबन्धात् क्रियारूपत्वं धात्वर्थस्याभ्युपगन्तव्यम्। अतश्च स्वरूपेणैव धात्वर्थः कारकसंबन्धमर्हतीति विनैवावृत्त्या यज्यभिहितेनैव रूपेण साध्यसाधनाभ्यां संबध्यत इत्यधिकरणमिदमनुपपन्नं स्यात्। न चोद्देश्योपादानादिकृतमपि वैरूप्यम्, गुणविशिष्टयागविधानात्। न च मत्वर्थलक्षणा, कारकविभक्त्यैव श्रुत्या क्रियारूपधात्वर्थसंबन्धसिद्धेः। अतोऽक्रियारूप एव धात्वर्थ इत्याश्रयणीयम्। युक्तम् चैतत्, अन्यथा हि काष्ठैः पचतीतिवत्काष्ठैः पाक इत्यपि संबन्धः स्यात्। तेन यद्यपि धात्वर्थानामेवान्योत्पादानुकूलतया क्रियारूपत्वमस्ति, तथापि धातुभिः स्वरूपमभिधीयते, प्रतीत्यभावादिति, न तत्संबन्धः कारकाणाम्। यथा हि वस्त्वादिशब्दाभिहिताऽपि क्रिया न कारकैः संबध्यते, तथा न धात्वभिहितापि। भावनादिशब्दा अपि न तद्रूपस्याभिधायकाः, अदूरविप्रकर्षमात्रेण तेषामाख्यातपर्यायत्वम्। आख्यातमेव तद्रूपाभिधायीति, तेनैव कारकाणामन्वयः। तेन लडादिष्वपि कारकसंबन्धसिद्ध्यर्थमाख्यातस्य भावनावाचित्वमङ्गीकर्त्तव्यम्। अन्यथा धात्वर्थस्य क्रियात्वापत्तेरधिकरणमिदमनुपपन्नं स्यात्, भवन्मते। चासत्यपि प्रत्ययार्थस्य क्रियात्वे धात्वर्थसंबन्धित्वाभ्युपगमात् कारकाणां सुतरां गुणविधित्वमेव स्यात्। अपि च लडादिभिरपि कर्मनामधेयानां करणार्थतया समभिव्याहारोऽनुवादवाक्ये दृश्यते "वाजं वा एषो चरुरुत्सते यो वाजपेयेन यजेत यद्दर्भमयं परिधापयति वाजस्यावरुध्या" इति। तदादि-

---

शेषः। भावनाभावादिति। वस्तुतस्सत्वेऽपि वाच्यत्वाभावेना [ ना ] सतुल्यत्वात् इत्यर्थः। सम्बन्धात्—सम्बन्धस्याङ्गीकार्यत्वात्। क्रियारूपत्वं। तेन रूपेण धातुवाच्यत्वम् अभ्युपगतञ्च 'तद्धातूनामेव क्रियावाचित्वादिति' वदता शालिकनाथेन। अक्रियारूप इति। तेन रूपेण धात्वनभिधेय इत्यर्थः। ननु तन्मते धात्वर्थस्य क्रियारूपतया स्वरूपतः कारकान्वययोग्यत्वेऽपि प्रकृते फलं प्रति करणत्वाङ्गीकारेण कारणावस्थस्य च स्वकरणान्वयायोग्यत्वाद्वैयधिकरण्येन गुणान्वयासम्भवान्मत्वर्थलक्षणा स्यादेव। अत एव 'सोमेन यजेत' इत्युत्पत्तिवाक्ये फलाश्रवणाकारणावस्थत्वाभावेन धात्वर्थस्य स्वकरणान्वययोग्यत्वान्न मत्वर्थलक्षणेति। तन्मतमर्यादेति चेत्—न; धात्वर्थस्य क्रियारूपत्वे फलवाक्येऽपि वाजपेयकरणिका फलकर्मिका यागक्रियेत्येव बोधात्। साध्यत्वरूपक्रियात्वविरुद्धस्य करणत्वस्य तदानीं बोद्धुमशक्यत्वात्। धात्वर्थस्य क्रियात्वे दूषणान्तरमाह—अन्यथेति। नन्वत्रेष्टापत्तिः, ओदनं भुक्त्वा व्रजतीत्यादौ आख्याताभावेन कारकान्वयानापत्तेरिति चेन्न, भुक्त्वेत्यादौ क्त्वाप्रत्ययेन ( लक्षणया ? ) स्वविरुद्धक्रियात्वोपस्थितेरयोगात्। अत एव घना सिद्धत्वाभिधानेऽपि प्रकृत्या साधत्वरूपक्रियात्वाभिधानात्कारकान्वयो ? पपत्तिरिति निरस्तम्। ननु कार्यविशेषणत्वेन विधीयमानया कृतिरूपभावनयैव कारकान्वयः, न तु धात्वर्थेन। तथाच वाजपेयवाक्येऽपि गुणस्य धात्वर्थान्वयाप्रसक्तेर्नैतदधिकरणविरोधोऽस्मन्मत इत्यत आह—भवन्मते चेति। कार्यत्वघटकतया प्रत्ययार्थस्य कृतेः क्रियात्वे सत्यपीत्यर्थः। क्वचिदसत्यपीति पाठस्तु प्रामादिक एव। धात्वर्थेति। लडादावुत्पत्तिवाक्ये

लडादिषु धात्वर्थं एव क्रिया स्यात्, कथं तृतीयान्तनामधेयसंबन्धः, न ह्यात्मैवात्मनः करणं भवति, तथा यो राजसूयेन यजते योऽश्वमेधेन यजत इति। तथा तमालभत तेनायजत इति लङन्तप्रयोगेऽपि दर्शयितव्यम्, अतो यथा वैदिकवाक्यालोचनेनापूर्वं शब्दार्थं भवन्तोऽनुमन्यन्ते, तथा सर्वाख्यातानां करोत्यर्थवचनत्वं विमुक्तलज्जैरनुमन्तव्यम्। तथा हि तत्रैव तृतीयान्तानां नामधेयानां करणसमर्पकतयान्वयो घटते। अन्यथा दुर्घटं स्यादित्यास्तां तावत्। तस्मात्सिद्धं नामधेयत्वम्॥

॥ इति वाजपेयाधिकरणम्॥ ६॥

७

सू० तद्गुणास्तु०—'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवती"त्यत्राग्नेयशब्दो गुणविधिः कर्मनामधेयमिति विचारः। तदर्थं च किमत्र तत्प्रख्यन्यायोऽस्ति, न वेति। तत्रानेकगुणविधाने वाक्यभेदादष्टाकपालद्रव्यकं कर्ममात्रं विधीयते। तस्य तु स्थानक्रमादग्निदैवत्यं याज्यानुवाक्यायुगलमङ्गं संभवति। अतो मान्त्रवर्णिकोऽग्निरग्निहोत्रवत्प्राप्त इति तद्वदेव नामधेयत्वम्। उच्यते—

---

चेत्यर्थः। लिङ्गादावप्युपसर्जनीभूतकृतावन्वयानौचित्याद्धात्वर्थक्रियान्वयस्यैवौचित्यात्। सुतरामिति। प्रवृत्तिविशेषकरत्वादिहेतुभिर्गुणविधित्वस्य ज्यायस्त्वादित्यर्थः। धात्वर्थस्याक्रियात्वे युक्त्यन्तरमाह—अपि चेति। लडादिभिः—लडन्तादिभिः। वाजम्—अन्नम्। अवरुरुत्सते प्राप्तुमिच्छति। तं तेनेति। तच्छब्दौ नामधेयपरामर्शकौ। यथेति। परमतेन परबोधनम्। तथा हि सतीत्येकमेव वाक्यम्। तत्रैव—करोत्यर्थ एव। तृतीयान्तं नामधेयं येषां तेषां धातूनामित्यर्थः। नामधेयत्वेनोक्ते उद्भिदादौ गुणस्य श्रुतेः विधिसम्भवात्तन्त्रसम्बन्धाङ्गीरेण मत्वर्थलक्षणाया अभावाद् गुणविधानमेव स्यादिति सूत्रार्थः॥

॥ इति वाजपेयाधिकरणम्॥६॥

७

सू० तद्गुणास्तु विधीयेरन्नविशेषाद्विधानार्थे न चेदन्येन शिष्टाः—तन्त्रसम्बन्धाङ्गीकारेणाक्षिप्ते नामत्वे समाहिते इदानीं तदपवादेन गुणविधित्वकथनादपवादसङ्गतिः। वाक्यभेदादिति। सकृच्छ्रुतस्य विधेरावृत्तिप्रसङ्गादित्यर्थः। विशिष्टस्य श्रुतेन विधानम् विशेषणानान्त्वार्थिकेन विधिनेत्यङ्गीकारे तु कल्पनागौरवमेव दोषो बोध्यः। कर्ममात्रमिति। अनिर्धारितधात्वर्थविशेषं भावनामात्रमित्यर्थः। तावतापि कथमाग्नेयनामत्वम्? तत्राह—तस्य त्विति। यद्यपि तैत्तिरीयशाखायामग्नीषोमीयस्य प्रथमं विधानं पश्चादाग्नेयस्य। मन्त्रकाण्डे च प्रथममाग्नेयमन्त्रपाठः पश्चादग्नीषोमीयमन्त्रपाठ इति नास्ति यथासङ्ख्यक्रमः। तथापि माध्यन्दिनीयशाखायां यथासङ्ख्यक्रमसत्वात्तदभिप्रायेणेदमुक्तम्। एवञ्च देवताया यागं विनासम्भवाद्यागसिद्धौ तन्नामत्वसिद्धिः। न चाग्नेयपदस्य द्रव्यसामानाधिकरण्यात्तन्नामत्वमेव, अत एव आग्नेयं

**मन्त्राकाङ्क्षा न चात्रास्ति सत्यामपि न योग्यता ।**
**मन्त्रस्य नास्ति वचनमग्निहोत्रेऽस्ति तत् त्रयम् ॥**

न ह्यष्टाकपालो भवतीत्येतावता पुरुषव्यापारः कश्चिदुक्तः, योऽनुष्ठानाय स्मारकं मन्त्रमपेक्षेत । सत्यामपि तु मन्त्राकाङ्क्षायां पुरोडाशमात्रविषयस्य व्यापारस्य देवतावाचिमन्त्रसंबन्धायोग्यत्वाच्च संबन्धः । यदि यागत्वं मन्त्रसंबन्धात्प्रागेवावगतं स्यात्, ततो भवेद् देवतावाचिमन्त्राभिधायिना मन्त्रेण संबन्धः, न तु तदस्ति, देवतासंबन्धात्प्राक् प्रत्यक्षयागाश्रवणात् । न च वाचनिको मन्त्रो नाघारवद्बलान्मान्त्रवर्णिकी देवता स्यात् । अग्निहोत्रे तु होमस्य पुरुषव्यापारस्य श्रवणादस्ति मन्त्राकाङ्क्षा योग्यश्च होमो देवताभिधायिना मन्त्रेण संबद्धुम् । वाचनिकश्च तत्र मन्त्रः । तेन युक्तं मान्त्रवर्णिकदेवताकल्पनम् । इह तु मन्त्रसंबंधस्याकाङ्क्षायोग्यत्ववशेन कल्प्यत्वात् न प्राग्यागात्सिद्धिरस्तीति देवतासंबन्धेनैव यागो लब्धव्य इत्याग्नेयशब्देन देवता विधातव्या । विशिष्टकर्मविधानाच्चार्थादनेकेषामपि गुणानां विधिः सिद्ध्यतीति न वाक्यभेदः ॥

॥ इत्याग्नेयाधिकरणम् ॥ ७ ॥

---

चतुर्धा करोति' इति तद्विषय एव व्यवहारोऽपीति वाच्यम्, मत्वर्थलक्षणया अष्टाकपालद्रव्यक आग्नेयसंज्ञको यागः कार्य इति वाक्यार्थपर्यवसानात् । 'शिरो वा एतद्यज्ञस्य यदाग्नेयः' इति कर्मविषयवैदिकव्यवहारस्य सङ्कल्पादेश्च प्रयोजनस्य सत्वेन कर्मनामत्वसम्भवात् अग्निहोत्रवत्तत्प्रख्यन्यायेन नामत्वमित्युक्तम् ।

तत्र दृष्टान्तवैषम्यमुपदर्शयन् सिद्धान्तमाह—मन्त्रेति । अनुष्ठेयधात्वर्थविशेषानुपस्थितावनुष्ठेयार्थस्मारकमन्त्राकाङ्क्षाविरह इत्यर्थः । सामान्यतो यत्किञ्चिद्धात्वर्थावच्छिन्नभावनोपस्थितौ तत्स्मारकमन्त्राकाङ्क्षा स्यादत आह—सत्यामपीति । यागरूपत्वानिश्चये देवतावाचिमन्त्रस्य योग्यता न ज्ञायत इत्यर्थः । एवमपि वाचनिकमन्त्रविनियोगे तद्बलादेव सर्वं कल्प्येत, तत्तु नास्तीत्याह—मन्त्रस्येति । एतदेवोपपादयति—नहीति । आघारवदिति । 'इन्द्र ऊर्ध्वोऽध्वर इत्याघारमाघारयति' इति वाचनिकमन्त्रविनियोगो यथाघारस्य तद्वदित्यर्थः । अग्निहोत्रेऽस्ति तत्त्रयम् इति व्याचष्टे—अग्निहोत्रे त्विति । वाचनिकश्चेति । अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति' इति वचनविहित इत्यर्थः । अनेकविधिप्रयुक्तं वाक्यभेदं परिहरति—विशिष्टेति । अग्निदेवताष्टाकपालद्रव्यामावास्यादिकालविशिष्टयागभावनारूपस्यैकस्य श्रुतेन विधिना विधानात्तदर्थापत्त्या विशेषणविधीनां कल्पनागौरवस्य च प्रामाणिकत्वेनादोषादिति भावः । प्रयोजनन्तु 'आग्नेयं पयो भवति' इत्यत्र नामातिदेशप्राबल्यात्पुरोडाशधर्मप्राप्तिः पूर्वपक्षे । सिद्धान्ते नेति । सूत्रार्थस्तु—तुशब्दश्चार्थः । तत् कर्म गुणाश्च द्रव्यदेवतादयो विधीयेरन् । अथवा तुशब्द एवकारार्थः विधीयेरन्नेव । न च वाक्यभेदः, प्रत्यये अविभागात् अनावृत्तेः विशिष्टस्यैकस्य विधानादित्यर्थः । अन्येन शास्त्रेण शिष्टा विहिता न चेद्भवेयुरिति ॥

॥ इत्याग्नेयाधिकरणम् ॥७॥

८

**सू० बर्हिराज्य०—**कर्मनामप्रसङ्गात् द्रव्यनाम्नां बर्हिराज्यपुरोडाशशब्दानां संस्कृतेषु शास्त्रस्थैः सर्वैः प्रयुज्यमानानामसंस्कृतेऽपि जातिमात्रे कैश्चिदशास्त्रस्थैः प्रयुक्तानां किं संस्कारनिमित्तिता यूपादिवत्? उत जातिवाचिता? इति चिन्त्यते। तत्र पील्वादिवदश्ववालादिवच्च शास्त्रस्थयाज्ञिकप्रसिद्धिः सार्वत्रिकी अशास्त्रस्थम्लेच्छकतिपयप्रसिद्धेर्बलीयसीति संस्कारनिमित्ततेति प्राप्ते ब्रूमः—

**अन्वयव्यतिरेकाभ्यामेतेषां जातिवाचिता।**
**व्यभिचारान्न संस्कारनिमित्तत्वं प्रकल्प्यते॥**

न हि शास्त्रस्थाः सर्वलोकस्थाश्च जातिमपहाय प्रयुञ्जते। संस्कारत्वमपहाय जातिमात्रे केचित्प्रयुञ्जते, तेन जातिमेते न व्यभिचरन्ति, व्यभिचरन्ति तु संस्कारम्, अतो जातिवाचिता। न च शास्त्रस्थसर्वलोकविरोधः, तत्रापि जातेरनपगमादित्युक्तम्। न जातिमात्रे शास्त्रस्थानामप्रयोगादतद्वचनत्वम्। न हि, यो यत्र शक्तः, स तत्र सर्वैः प्रयोक्तव्यः, तस्माज् जातिवचनाः॥

**॥ इति बर्हिराज्याधिकरणम्॥ ८॥**

---

८

सू० बर्हि० स० :—नामधेयप्रकरणसङ्गतिमाह—प्रसङ्गादिति। तुल्यन्यायत्वात्पुरोडाशग्रहणम्। अनन्तरसङ्गतिस्तु आग्नेयादिशब्दानां यागाख्यक्रियासम्बन्धनिमित्तत्ववत् बर्हिरादिशब्दानामपि लवनादिसंस्काररूपक्रियानिमित्तत्वस्य प्रसक्तस्यापवादादापवादिकी स्पष्टत्वान्नोक्ता। शास्त्रस्थैः—'बर्हिर्लुनाति' इत्यादिशास्त्रार्थविज्ञैः। संस्कृतेष्विति। सावधारणम्। याज्ञिकानां शास्त्रनिरपेक्षेऽर्थे बर्हिःशब्दाप्रसिद्धेः यद्बर्हिस्तल्लुनातीत्यर्थसम्भवात् यद्दर्भं लुनाति तद्बर्हिरिति शास्त्रार्थोऽभिमतः। यथा यच्छिनत्ति खादिरादि तद्यूप इति 'यूपं छिनत्ति' इति शास्त्रार्थः। एवं क्लिष्टकल्पनायां बीजं दर्शयन् पूर्वपक्षमाह—तत्रेति। याज्ञिकसम्बन्धित्वेन सार्वत्रिकत्वेन संस्कारप्रसिद्धेर्बलवत्वम्, पामरसम्बन्धित्वेनासार्वत्रिकत्वेन च जातिमात्रप्रसिद्धेर्दुर्बलत्वमित्यर्थः। पीलुशब्दस्य वृक्षभेदे शास्त्रस्थानां 'पैलवौदुम्बरो वैश्यस्य' इति शास्त्रज्ञानां प्रसिद्धिर्म्लेच्छादीनां हस्तिविषयप्रसिद्धेः बलीयसीति हि प्रागुक्तम्—'शास्त्रस्था वा तन्निमित्तत्वात्' इति। तथा काशादिविषयता अश्ववालशब्दप्रसिद्धिः शास्त्रस्थानाम् अश्वपुच्छकेशादिविषयपामारप्रसिद्धितो यथा बलीयसीत्युक्तं तथेहापीत्यर्थः। व्यभिचारादिति। संस्काराभावेऽपि प्रयोग इति व्यतिरेकव्यभिचारादित्यर्थः। न हीति। एककारणसत्वेऽपि कारणान्तरविरहेण कार्याभावसम्भवादिति भावः। अत्र पूर्वपक्षे 'बर्हिषा यूपावटमवस्तृणाति' इति यूपगर्तास्तरणबर्हिषि समन्त्रकलवनादयः। 'आज्येन यूपमनक्ति' इति यूपाञ्जनार्थे आज्यऽवेचणादयः कार्याः। सिद्धान्ते तु नेति प्रयोजनं ज्ञेयम्। सूत्रार्थस्तु-बर्हिराज्यशब्दयोरसंस्कारे जातिमात्रे

९

**सू॰ प्रोक्षणीष्वर्थसंयोगात्॰**—प्रोक्षणीशब्दस्यापि पूर्ववत्सर्वलोकशास्त्रस्थप्रयोगात्संस्कारनिमित्तत्वं प्राप्तमपोद्यासंस्कृतेऽपि क्वचित्प्रयोगादव्यभिचाराज् जातिनिमित्तता प्राप्ता न चावयवार्थता युक्ता, समुदायप्रसिद्धेर्बलीयस्त्वात्। अवयवद्वारेण हि विशिष्टार्थप्रतीतिर्वाक्यादिव वाक्यार्थप्रतीतिः पदार्थनिमित्ता लाक्षणिकी, समुदायप्रसिद्धौ तु श्रुत्या प्रतीतिरिति सैव बलीयसी। उच्यते—

**रूढिर्लब्धात्मिका योगं बाधते न त्वलब्धिका।**
**तत्रैव चात्मलाभोऽस्या यत्र नावयवार्थता॥**

यथा वृक्षेऽश्वकर्णस्य सत्सु त्ववयवार्थेषु तत एवोपपन्नत्वादर्थापत्तिः परिक्षीणा, नादृष्टां समुदायस्य शक्तिं कल्पयितुं क्षमा, सन्ति त्ववयवार्थाः, प्रकृष्टोक्षणहेतुत्वात् स्त्रीलिङ्गत्वाच्च। तेनात्र नात्मानं लभते रूढिर्वाक्यार्थे वाक्यवत्। तस्माद्यौगिकः प्रोक्षणीशब्दः।

**॥ इति प्रोक्षण्यधिकरणम् ॥ ९ ॥**

१०

**तथा निर्मन्थ्ये॰**—'निर्मन्थ्येनेष्टकाः पचन्तीति विषयवाक्यान्निर्मन्थ्यशब्दस्यापि शास्त्रस्य सार्वलौकिकप्रयोगात्संस्कारवाचित्वमव्यभिचाराद्वा जातिनिमित्तत्वमुद्भाव्य

---

शब्दलाभात् प्रयोगलाभात्, याज्ञिकप्रयोगेऽपि जात्यनुगमात् 'बर्हिर्लुनाति' इत्यत्र च यद्बर्हिस्तल्लुनातीति वाक्यार्थानुगुण्यात् अन्यथातिक्लिष्टकल्पनापत्तेः अतच्छब्दः—संस्कारनिमित्तकः शब्दो नेति॥

॥ इति बर्हिराज्याधिकरणम् ॥८॥

९

सू॰ प्रोक्षणी॰ क्वचिदिति। 'प्रोक्षणीभिरुद्वेजितास्स्मः' इति लोक इत्यर्थः। लाक्षणिकीति।

पाकं हि पचिरेवाह कर्तारं प्रत्ययोऽप्यकः।
पाकयुक्तः पुनः कर्ता वाच्यो नैकस्य कस्यचित्॥

इति न्यायादिति भावः। प्रसिद्धिशब्दः शक्तिपरः। प्रयोजनम्—संस्कारवाचित्वपक्षे यत्र 'घृतं प्रोक्षणम्' इति विधिस्तत्र प्रोक्षणीष्ववयवार्थसंयोगादतच्छब्दः अजाति, इति॥

॥ इति प्रोक्षण्यधिकरणम् ॥९॥

१०

सू॰ तथा निर्म॰ अग्निचयने 'निर्मन्थ्येनेष्टकाः पचन्ति' इति वाक्यस्थो निर्मन्थ्यशब्द उदाहरणम्। सार्वलौकिकेति। शास्त्रस्थसर्वलोकप्रयोगादित्यर्थः। अव्यभिचारादिति—

प्रसिद्धावयवार्थत्वात्पूर्ववद्यौगिकत्वं साधनीयम्। विशेषस्त्वेतावान् प्रोक्षणीशब्दो हि सेचनसाधनत्वनिमित्तः। अस्ति चापां सेचनसाधनत्वं सर्वदैवेति युक्तं यौगिकत्वम्। 'निर्मन्थ्यमानय यक्ष्यामह' इति। न च भूतपर्वेण योगेन प्रवृत्तिः, प्रतिक्षणमग्निभेदात्। अन्यो ह्यग्निर्मन्थननिष्पन्नः, स तदैव नष्टः, अन्यश्चायं पाकाय नीयते। सोऽयमसत्यवयवार्थे प्रयुज्यमानं संस्कारमिव योगमपि व्यभिचरतीति न तन्निमित्तः। जातिन्तु न व्यभिचरतीति तद्वाचित्वमेव युक्तमिति। इमां विशेषशङ्कां निवर्त्तयितुमतिदेशः क्रियते। भूतपूर्वमपि योगं निमित्तीकृत्य संतानाभिप्रायेण प्रयोगोपपत्तेर्न रूढिरत्यन्तापरिदृष्टा कल्पयितुं शक्यते। तस्माद्यौगिकः॥

॥ इति निर्मन्थ्याधिकरणम् ॥१०।

११

सू० वैश्वदेवविकल्प इति चेत्० —चातुर्मास्येषु प्रथमे पर्वण्यष्टौ यागाः समाम्नाताः 'आग्नेयमष्टाकपालं निर्वपति,' सौम्यं चरुम्, सावित्रं द्वादशकपालम्, सारस्वतं चरुम्, पौष्णं चरुम्, मारुतं सप्तकपालम्, वैश्वदेयीमामिक्षाम्, द्यावापृथिव्यमेककपालमिति। तत्संनिधाविदमाम्नायते—"वैश्वदेवेन यजेते"ति। तत्र संशयः—किं यजेतेत्यनूदितानां यागानां वैश्वदेवशब्देन गुणविधिः विश्वेदेवा देवता विधीयन्ते, किं वा तेषामेव नामधेयम्? इति।

तत्र नामत्वपक्षे स्याद्वाक्यमेतदनर्थकम्।
देवतातो विधेया स्याद् गत्यभावाद्विकल्पते॥

---

'निर्मन्थ्यमानय पक्ष्यामः' इति जातिमात्रे प्रयोगादित्यर्थः। अवयवेति। निर्मथनकर्मत्वरूपेत्यर्थः। किमर्थं तर्हि पुनरधिकरणान्तरारम्भः? तत्राह - विशेषस्त्विति। सर्वदेति। योग्यतयेति भावः। प्रतिक्षणमिति। उपचयापचयाभ्यां परिमाणभेदादिति भावः। सन्तानाभिप्रायेण भूतपूर्वमिति योजना। संसर्गिषु तेजोजलादिषु सर्वस्यापि भेदाभेदनिबन्धनस्य व्यवहारस्य सन्तानभेदाभेदनिबन्धनत्वादिति भावः। प्रयोजनम्—संस्कारनिमित्तत्वे पशुप्रकरणोत्पन्नमन्त्रादिनियवन्मथनजन्येनाग्निनेष्टकापाकः। जातिनिमित्तत्वे लौकिकेन। यौगिकत्वे [त्व] चिरनिर्मथितेन पाकाच्चिन्तवाग्न्यनुवादेन विशेषणभूतमथनमात्रस्य 'निर्मन्थ्येनेष्टकाः पचन्ति' इति विधानात्तस्य चाङ्गत्वेन पाकरूपप्रधानैकदेशकालकर्तृकत्वेनाचिरत्वलाभादिति। सूत्रं स्पष्टार्थम्॥

॥ इति निर्मन्थ्याधिकरणम् ॥१०॥

११

सू० वैश्वदेवे० अत्राग्नेयाधिकरणोक्तगुणविधित्वापवादसङ्गतिः। बर्हिराद्यधिकरणत्रयस्याग्नेयाधिकरणोक्ताग्नेयशब्दनिमित्तयागक्रियाप्रसङ्गेन बर्हिरादिष्वपि किं लवनादिक्रियानिमित्तमित्येवं प्रस्तुतत्वात् यत्प्रस्तुतं तत्समाप्तौ तद्बुद्धिस्थं भवतीति न्यायेनाग्नेया-

नामत्वपक्षे हि तस्याविधेयत्वाद्यागस्य चारूपत्वेनाविधेयत्वात्समस्तवाक्यप्रसङ्गः। तस्माद् गुणविधिः। अग्न्याद्यवरुद्धेषु यागेषु देवतान्तरमनवकाशमिति चेत्—न, विकल्पसंभवात्। न ह्यद्यापि सूत्रभाष्यकाराभ्यामुत्पत्तिशिष्टप्राबल्यं कथितमिति तुल्यबलतां मन्यते। ननु च गुणाधिकरणे बलाबलं वक्ष्यते, तेन गतार्थमिति चेत्—न, आनर्थक्याधिक्यात्। वक्ष्यति हि श्रुतिलिङ्गाधिकरणे दुर्बलस्यापि प्रमाणस्य बाधे यदि किंचिदनर्थकं भवति, ततो विपरीतो बाधो भवतीति। तदिहाप्यविधीयमाने गुणे समस्तस्यैव वाक्यस्यानर्थक्यप्रसङ्गाद् देवतैव विधातव्या। सा च गत्यभावादुत्पन्नशिष्टाप्युत्पत्तिशिष्टैरग्न्यादिभिर्विकल्पयिष्यते।

स्यादेतदेवं यदि वाक्यानर्थक्यं स्यात्, तत्त्वनुवादत्वेऽपि समुदायीकरणेनार्थवत्। न हि नानावाक्यचोदितानाम् आग्नेयादीनामेकशब्दोपादानादृते समुदायभावापत्तिरेकसंबन्धो वा लभ्यते। सति त्वनुवादे तेनैव निमित्तेनैकप्रतीत्या रूढानामेकसमुदायत्वमेकनामधेयत्वं च लभ्यते। ततश्च 'प्राचीनप्रवणे वैश्वदेवेन यजेते'त्येवमादिषु वैश्वदेवनामकस्याग्नेयादिसमुदायस्य ग्रहणं सिद्धं भवति। इतरथा ह्यामिक्षायागस्यैव वैश्वदेवत्वप्रत्यक्षप्रत्यभिज्ञानात्प्राचीनप्रवणादिसंबन्धः स्यात्। नन्वनुवादोऽपि श्रुत्यर्थबलादामिक्षायोगस्यैव स्यात्। इतरथा हि वैश्वदेवावैश्वदेवेषु वैश्वदेवशब्दः छत्रियायेन कल्प्यः स्यात्। न, आनर्थक्यात्। आमिक्षायागस्यैव देशादिसंबन्धोऽसत्यप्यनुवादे लभ्यते, ततश्च तदवस्थमानर्थक्यं स्यात्। वरं चानर्थक्याल्लक्षणाश्रयणम्। न चावश्यं लक्षणा। वाक्यशेषदर्शितयोगवशेन श्रुत्यैवाष्टानामपि यागानां नामत्वसंभवात्। एवं हि श्रूयते "यद्विश्वेदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम्" इति। तदनेन योगेनाष्टानां नामात्वव्युत्पादनार्थोऽयमनुवादः, सति चानुवादत्वेनाप्यर्थवत्त्वे न देवताविशिष्टयागान्तरमपि शङ्कनीयम्, गौरवात् प्रकृतप्रत्ययबाधाच्च। अष्टौ हवींषी'ति। चात्यन्तानन्यगतिलिङ्ग-

---

धिकरणस्य बद्धिस्थत्वात्। गत्यभावादिति। द्रव्यालाभेन गौरवेण 'अष्टौ हवींषि' इति लिङ्गविरोधेन च कर्मान्तरविध्यसम्भवाद्देवतैव विधेया। सा चामिक्षायागे प्राप्तत्वात्तदितरेष्वेवेत्यगत्या विकल्प इत्यर्थः। अनवकाशमिति। तद्धितावगतनैरपेक्ष्यविरोधेन समुच्चयासम्भवादिति भावः। स्यादेतदिति। अग्न्यादिदेवतारूपविशेषणविशिष्टतया प्राप्तानामपि यागानां 'पुरोडाशकपालेन' इतिवत्कथञ्चिच्छुद्धयागानुवादेन विधानं विकल्पश्चेत्यर्थः। ननु तुल्यबलयोरेव विकल्पः, इह तूत्पत्तिशिष्टत्वोत्पन्नशिष्टत्वरूपवैषम्यात्स न युक्त इत्याशङ्क्याह—न हीति। एतत्समाधानमाशङ्काव्याजेन दूषयित्वा समाधानान्तरमाह—आनर्थक्येति। अत्र सम्मतिमाह—वक्ष्यति हीति। वार्तिककार इति शेषः। व्रीहिश्रुतिबलेन क्रत्वङ्गतावोधकदुर्बलप्रकरणबाधेन प्रोक्षणादेर्व्रीहिमात्राङ्गत्वे, स्वरूपे कार्ये चानुपयोगादानार्थक्यमिति प्रकरणेन श्रुतिरेव बाध्यत इत्यर्थः। सिद्धान्तमाह—यागान्तरमपीति। अव्यक्तत्वात्सादृश्येन सोमयागातिदेशात्सोमद्रव्यलाभेनारूप-

विरोधात्। तस्मात्समुदायानुवादः। तत्र च यष्टृत्वयोगेन वैकदेशदेवतात्वेन वा विश्वेषां देवानां समवायात्तत्प्रख्यन्यायेन नामधेयं वैश्वदेवशब्दः।

॥ इति वैश्वदेवाधिकरणम् ॥ ११ ॥

१२

सू० पूर्ववन्तोऽविधानार्थात्—वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते इत्युक्त्वा 'यदष्टाकपालो भवति गायत्र्यैवैनं ब्रह्मवर्चसेन पुनाति, यन्नवकपालस्त्रिवृतैवास्मि' इत्येवमादि श्रूयते, तत्र विचारः—किमष्टाकपालादिशब्दाः प्रकृतवैश्वानरयागस्य नामधेयम्, उत तत्रैव गुणविधिः, अथ फले गुणविधिः ? किं वाऽर्थवादः ? इति। तदर्थं च गुणविधिपक्षे सर्वेषामष्टाकपालादीनामुत्पत्तिशिष्टता संभवति ? किं वा सर्वेषामुत्पन्नशिष्टता ? अथ वा द्वादशकपाल उत्पत्तिशिष्टः ? अन्ये तूत्पन्नशिष्टाः ? इति। तत्र वैश्वानरसामानाधिकरण्यादष्टत्वादीनां द्वादशसु प्राप्तेः, तत्प्रख्यन्यायेन नामधेयत्वमाशङ्क्य द्रव्यवचनत्वाद्यागसामानाधिकरण्याभावात्तत्प्रख्यत्वाभावाच्च गुणविधिः। तथापि न द्वादशकपालेऽष्टाकपालः समस्ति। यो ह्यष्टसु कपालेषु संस्कृतः पुरोडाशः सोऽ-

---

त्वासम्भवादिति भावः दृष्टयोगेनेति। वाक्यशेषदृष्टविश्वेदेवकर्तृकत्वयोगेनेत्यर्थः। प्रयोजनं स्पष्टम्। वैश्वदेवशब्दे गुणविधानाद्विकल्प इति सूत्रार्थः॥

॥ इति वैश्वदेवाधिकरणम् ॥११॥

१२

सू० पूर्व०आदिना 'तेजो दधाति यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति, यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रियं दधाति, यद्द्वादशकपालो जगत्यैवास्मिन् पशून् दधाति, यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' इत्यन्तं वाक्यं गृह्यते। गायत्र्या कृतेन ब्रह्मवर्चसेन पुण्यविशेषेणेत्यर्थः। त्रिवृता स्तोमेन। कपालनवकस्य ऋङ्नवकस्थानीयत्वात्। विराजा छन्दसा, तस्य दशाक्षरपादत्वात्। एवं त्रिष्टुप्छन्दस एकादशाक्षरपादत्वात्कपालानां साम्येन तत्त्वोपचारः। एवं जगतीच्छन्दसोऽपि द्वादशाक्षरपादत्वात्तदुपचारः। अत्र चानन्तरसङ्गतिर्नामत्वापवादरूपा। पूर्वाधिकरणोक्तोत्पत्तिशिष्टबलवत्वहेतुप्रत्युदाहरणेन द्वितीयतृतीयपूर्वपक्षोत्थानात्प्रत्युदाहरणरूपा च। नामधेयमित्याद्येकवचनं जात्यभिप्रायम्। अष्टाकपालादिशब्द इति पाठस्तु पारमार्थिको गुणविधिपक्षे कर्मार्थतया गुणविधिपक्षे, पक्षान्तर एतद्विचारानुपयोगात्। वैश्वानरेति। यागकल्पकदेवतासम्बन्धिहविर्वाचिनस्तस्येहानुषक्तस्य लक्षणया यागपरत्वादष्टाकपालशब्दस्य च लक्षणया तथा (?) यागपरत्वादिति भावः। आशङ्क्येत्यनेनास्य पक्षस्य तुच्छत्वं द्योतितम्, गुणविधिर्वक्तव्य इत्यध्याहृतक्रियया समानकर्तृकत्वात् ल्यप् उपपत्तिः। द्रव्यवचनत्वादिति। यागलक्षकत्वे मानाभावादिति भावः। सामानाधिकरण्याभावे हेतुरयम्। तत्प्रख्यत्वेति। द्वादशकपालसाध्ययागस्य लक्षणयाप्यष्टाकपालादिशब्दव्यपदेश्यत्वायोगादिति

ष्टाकपालः। न च पुरोडाशेषु पुरोडाशान्तरमस्ति। न च द्वादशकपाल एवाष्टसु संस्कृत इति शक्यते वक्तुम्। अष्टानां तत्र सापेक्षत्वात्। अष्टभिश्चतुर्भिश्चासौ संस्कृतो न केवलैरष्टभिः। ततश्चासामर्थ्यात्तद्धितानुपपत्तिः। तस्मात्प्राप्त्यभावान्न तत्प्रख्यत्वम्। अत एव नार्थवादत्वम्। न ह्यविहितस्याष्टाकपालस्य स्तुतिः संभवति। तस्माद् गुणविधिः। अष्टाकपालद्रव्यमष्टत्वसंख्या वा विधीयते वैश्वानरयागे। न चोत्पत्तिशिष्टद्वादशकपालावरोधादविधानम्, सर्वेषामुत्पत्तिशिष्टत्वात्। एकं हीदं वाक्यं वैश्वानरं द्वादशकपालमित्यादि 'यस्मिञ्जात' इत्येवमन्तम्। एकोपक्रमावसानत्वात्तन्मध्ये चाष्टत्वादयः श्रुताः, सर्वे एवोत्पत्तिशिष्टा संभवन्ति। यद्वा सर्वे एवोत्पन्नशिष्टाः, 'वैश्वानरं द्वादशकपालमि'ति देवताविशिष्टयागविधानात्। तत्र यदष्टाकपाल इत्यादिभिर्वाक्यान्तरैर्वैकल्पिकद्रव्यविधानम्। उपक्रमे तु द्वादशकपालशब्दो गुणवाक्यप्राप्तद्रव्योपलक्षणार्थो न विवक्षितः। विवक्षितत्वेऽष्टाकपालादीनामानर्थक्यं स्यात्। तस्माद् गुणविधिः। उच्यते—

"उत्पत्तिवाक्यशिष्टत्वं न तावदुपपद्यते।
सर्वेषामर्थभेदेन वाक्यं तत्र हि विद्यते" ॥

अर्थवादत्वे ह्येकवाक्यत्वं सिद्ध्यति। त्वत्पक्षे तु नानागुणविधानेनार्थभेदाद्वाक्यभेदः स्यात्। किंच निर्वपतिनात्र कर्मविधानम्, स च द्वितीयान्तेन द्वादशकपालेनैव सम्बद्ध्यते। न च प्रथमान्तैरष्टाकपालादिभिः, ततश्च द्वादशत्वमुत्पत्तिवाक्यगतत्वादितरेभ्यो वाक्यान्तरविहितेभ्यो बलवत्स्यात्, न चाप्युत्पन्नशिष्टत्वं सर्वेषामुपपत्तिमत्। न द्वादश-

---

भावः। एतदेव प्रपञ्चयति—तथाहीत्यादिना। तद्धितेति। सत्यपि समासस्यापि सामर्थ्यपेक्षत्वेऽत्र तस्य तद्धितोपजीवित्वात्तद्धितस्यैव ग्रहणम्। अतएव प्राप्त्यभावादेव। प्राप्तो ह्यर्थस्स्तूयते। तदाह— नहीति। विधीयत इति तात्पर्यगत्या। ननु शब्दत एकस्मिन् पदे एकदेशानुवादेनैकदेशान्तरविधेरेकप्रसरताभङ्गेनासम्भवात्। अत एवाह—वैश्वानरयागे। इति। न च प्रथमान्तानामष्टकपालादिपदानां निर्वपेदित्यनेनान्वयायोगात्कथं सर्वेषामेकवाक्यता? द्वितीयान्तत्वेन विपरिणम्य तेषां तदन्वये तु भवतीत्याद्यनन्वितं स्यादिति वाच्यम्, विधिं विना यदष्टाकपाल इत्यादिस्तुत्ययोगेन द्वादशकपालमित्युपलक्षणीकृत्याष्टाकपालं नवकपालं दशकपालमेकादशकपालं द्वादशकपालं वैश्वानरं निर्वपेत्पुत्रे जात इति वाक्यार्थपर्यवसानात्। अस्मिन् कल्पे सिद्धान्तरीत्या स्तुतिसम्भवे न निष्प्रमाणकोपलक्षणत्वासम्भवरूपास्वसरसात्कल्पान्तरमाह— यद्वेति। देवतेति देवतामात्रेत्यर्थः। अष्टाकपालादीनां यदष्टाकपाल इत्यादिवाक्यानाम्। स्तावकत्वासम्भवस्य प्रागेवोक्तत्वादित्याशयः। सर्वैकवाक्यता पक्षमनूद्य दूषयति —उत्पत्तीति। तत्र किं भवतिनाष्टाकपालादिविधिः? निर्वपतिना वा? आद्ये भवतेः प्रत्येकान्विततया वाक्यभेदमुक्त्वा द्वितीये दोषमाह—किञ्चेति। द्वादशकपालमित्यस्याष्टाकपालाद्युपलक्षकत्वे मानाभावात् स्तुतेरन्यथोपपत्तेश्चेति भावः। यद्वेति पक्षं दूषयति —न चापीति। द्वादशकपालस्योपक्रमस्थविधिगतस्येति शेषः। एवं सति यदष्टाकपाल इत्यदीनामानर्थक्यमिति यदुक्तं तत्राह—

कपालस्य ह्यविवक्षोपद्यते, वैश्वानरसमानाधिकरणं द्वितीयान्तं द्वादशकपालपदं निर्वपति-संयुक्तम् नाविवक्षितं विना कारणं कल्पयितव्यम्। अष्टत्वादीनामन्यथाप्युपपत्तेः। तस्मादुत्पत्तिशिष्टं द्वादशत्वमितीतरेषां कर्मणि विधानासंभवात् ब्रह्मवर्चसादिफलार्थेन वैश्वानरयागमाश्रित्याष्टत्वादिविधानम्। काम्यो हि गुण उत्पत्तिशिष्टबाधेनापि शक्यते विधातुमिति प्राप्तेऽभिधीयते—

"फलार्थेषु गुणेषु स्याद्वाक्यभेदोऽर्थभेदतः।
उपक्रमोपसंहारसाम्याच्चात्रैकवाक्यता"॥

'वैश्वानरं द्वादशकपाल' मिति यैवेष्टिरुपक्रान्ता, तामेव 'यस्मिन् जात एतामिष्टिं निर्वपतीत्युपसंह्रियमाणामन्तं पश्यन्तो न तन्मध्ये वाक्यान्तरमवगन्तुमीश्महे। फलेभ्यश्च गुणेषु विधीयमानेषु स्फुट एव वाक्यभेदोऽर्थभेदात्। तस्मादर्थवादत्वम्। अवयवद्वारेणावयविस्तुतिः—द्वादशकपालावयवो हि योऽष्टसु कपालेषु श्रुतः, सोऽष्टाकपालपुरोडाशसादृश्याद् गौण्या वृत्त्याऽष्टाकपाल इत्युच्यते स्तोतुम्। तस्मादर्थवादः॥

॥ इति वैश्वानराधिकरणम्॥ १२॥

## १३

### तत्सिद्धिपेटिका

सू० १ त्सिद्धिः०—"यजमानः प्रस्तरः" "यजमान एकपाल" इत्यत्र गुणविधिनामधेयार्थवादसंदेहे सामानाधिकरण्यादेकमितरस्य नामधेयम् प्रस्तर-शब्दो वा यजमानस्य यजमानशब्दो वा प्रस्तरस्येति शङ्का, भिन्नार्थत्वेन तु प्रसिद्धत्वाच्चैकमपीतरस्य नामधेयम्। न चार्थान्तरवचनेनार्थान्तरस्य स्तुतिर्भवति, अष्टाकपाला-

---

अष्टात्वादीनामिति। वक्ष्यमाणरीत्या स्तावकत्वेनोपपत्तेरित्यर्थः फले गुणविधिपक्षमुत्थापयति—ब्रह्मवर्चसादीति। नन्वष्टाकपालादिस्तुत्या कथं द्वादशकपालस्तुतिरत आह—अवयवेति। श्रुतः पक्वः। तथा चाष्टाकपालादिपदैर्गौण्या द्वादशकपाल पुरोडाशावयवास्तादृशा उच्यन्त इत्यर्थः। सूत्रार्थस्तु—पूर्ववन्तः प्राप्तार्था वैश्वदेवादिशब्दा अविधानार्थाः, अस्मिंस्तु समाम्नायेऽष्टाकपलादिशब्दानां तत्सामर्थ्यं विधानसामर्थ्यम् अप्राप्तत्वादिति॥

॥ इति वैश्वानराधिकरणम्॥१२॥

१३

सू० तत्सि० पूर्वाधिकरणोक्ताया गौण्या निमित्तासम्भवेनाक्षेपपूर्वकं निमित्तप्रदर्शनेन समाधानमत्र क्रियत इति आक्षेपसङ्गतिः। तत्र निमित्तप्रदर्शनार्थञ्च तत्तदुदाहरणम्। तत्र गुणविध्यादिविचारप्रदर्शनायौदुम्बराधिकरणेन गतार्थमपि व्यसनितया? न मुख्यतयेति द्रष्टव्यम्। नामधेयपक्षस्यातिमन्दत्वं शङ्कापदेन सूचितं विवृणोति—भिन्नार्थत्वेनेति। अत एव नार्थवादमित्याह—न चेति। यजमानस्य यजमानशब्दस्य। मुख्यत्वात् आद्यत्वात्। श्रुतिवृत्तः-शक्तिरूपवृत्तिविषयः। स्तुतीति। 'प्रस्तरे जुहूमासादयति सर्वा वा स्रुचः' इति विधानाद् स्रुग्धारणं

दिभिस्त्ववयवद्वारेण स्तुतिरुक्ता द्वादशकपालस्य। न च प्रस्तरावयववचनो यजमानशब्दः, येन स्तुतिः स्यात्। तस्मादन्यतरकार्येऽन्यतरविधानाद् गुणविधिः, तत्रापि यजमानस्य मुख्यत्वाच्छ्रुतिवृत्तो यजमानः प्रस्तरशब्दलक्षिते स्रुग्धारणादौ कार्ये विधीयते, तस्माद् गुणविधिः।

नैतदेवम् यजमानस्य स्रुग्धारणादौ विनियुक्तस्य स्वपदार्थकरणविरोधात्प्रस्तरवच्च सूक्तवाकेन प्रहरणादेककपालवच्च सर्वहुतकरणात्सर्वतन्त्रपरिलोपः स्यात्। तस्मादर्थवादः। कथं परशब्देन परस्य स्तवनं सामानाधिकरण्यं वा ? गुणादिति ब्रूमः। कथमगुणवचनो गुणमभिदध्यात्। नाभिदधाति, किन्तु स्वार्थसम्बन्धेन बोधयति। यजमानशब्दे हि स्वार्थमभिधत्ते, स चाभिहितः स्वसमवेतं स्वकार्यकरत्वं संबन्धाद् बोधयति। तच्च प्रस्तरेऽप्यस्तीति प्रस्तरबोधः। एवं स्वार्थसदृशे तद्गुणशालिनि तात्पर्यम्भजमानो यजमानशब्दो गौणः संपद्यते-यथा लोके सिंहो देवदत्त इति। न चान्यारोपितार्थत्वं लोके गौणत्वम्, तत्संबन्धिन्यर्थान्तरे तदभावात्। न सिंहो देवदत्त इति प्रयुञ्जानस्य सिंहत्वाद्यारोपोऽस्ति। शौर्यादिगुणविवक्षयैव प्रयुङ्क्ते। प्रतिपत्तारोऽपि सादृश्यमेव प्रतिपद्यन्ते, नाध्यारोपम्। तस्मादभिधेयसदृशे वृत्तिगौणत्वं नाध्यारोपितवचनत्वम्। कथं तर्हि खपुष्पशशविषाणादिशब्दानां गौणत्वम् ? खपुष्पं भवत्सिद्धान्त इत्यादिषु। न हि तेषां मुख्यमभिधेयमस्ति, येन सादृश्यात् गौणत्वं स्यात्। उच्यते—यदेषामभिधेयं नास्ति कथं तस्यान्यत्र तद्रूपारोपः। न हि स्वरूपेणाविद्यमानमन्यत्रारोपयितुं शक्यते। तेन तद्रूपमेवारोपितमङ्गीकर्त्तव्यम्। ततश्चारोपितस्यापि तस्य मुख्यत्वाद्युक्तमन्यत्र

---

प्रस्तरकार्यम्। स्वपरार्थेति। विहाराद्दक्षिणतोऽवस्थित्या त्यागादित्यर्थः। ननु यजमानकार्यं पत्नी अध्वर्युर्वा करिष्यति, यजमानसमाख्यापि प्रस्तरे स्रुगासादनपक्षे उपपन्ना भविष्यतीत्यस्वरसादाह—प्रस्तरवच्चेति। 'सूक्तवाकेन प्रस्तरं प्रहरति' इति प्रस्तरकार्यं प्रहरणम्, 'तं सर्वहुतं जुहोति' इतिवचनादेककपालकार्यं सर्वहोमः। सर्वतन्त्रेति। आधानाङ्गपवमानेष्टावेव यजमानसर्वहोमेनोत्तरसकलक्रतुलोपः स्यादित्यर्थः। स्वसमवेतं स्वसम्बद्धम्। प्रस्तरेऽपीति। यजमानकार्यस्य क्रत्वपूर्वस्य प्रस्तरेणापि करणादिति भावः। सदृश इत्यस्यार्थकथनं तद्गुणशालिनीति। गौण इति। गुणादागत इत्यर्थे तद्धिताङ्गीकारादिति भावः। परमतं दूषयति—न चेति। अधिको विशेषदर्शनाप्रतिषेध्यो य आरोपस्तद्विषयः अर्थो यस्य तत्त्वमित्यर्थः। आरोपिते स्वार्थे वर्तमानत्वमिति यावत्। तदभावात्—आरोपाभावात्, वक्तुस्तदनुभवाभावादिति भावः। स्वोक्तलक्षणेऽव्याप्तिमाशङ्कते—कथं तर्हीति। आरोपितार्थवृत्तित्वं तु तत्रापि सम्भवति। खपुष्पं नास्तीति निषेधोपपत्त्यर्थमसतोऽप्यारोपावश्यकत्वेनारोपितस्य तस्यात्मादौ तादात्म्यारोपादिति भावः। परपक्षेऽपि दोषसाम्यं वदन् समाधातुमाह—उच्यत इति। तेन अप्रसिद्धस्यारोपासम्भवेन। तद्रूपं खपुष्पस्वरूपम्। मुख्यत्वादिति। गौणमुख्यव्यवहारे मुखवत्प्रथमं प्रतीयमानस्यैव मुख्यत्वादिति भावः। युक्तमिति। अयमर्थः—खरोपितं पुष्पं खपुष्पसमासार्थः। तद्वन्निर्गुणश्चा-

गौणत्वम्। त्वत्पक्षे तु खपुष्प एव, खपुष्पशब्दो गौणः स्यात्, आरोपितवचनत्वात् भवत्विति चेत्, न, सर्वलौकिकविरोधात्। तन्नाध्यारोपो गौणलक्षणम्, स्वार्थसादृश्यन्तु भवति, खपुष्पादीनामपि मुख्यसादृश्यविवक्षयैव लौकिका गौणं प्रयोगं प्रयुञ्जते। यथाकाशस्य पुष्पात्मना शशमूर्ध्नि वर्त्तिनां चावयवानां च विषाणात्मना विकारोऽत्यन्ताप्रसिद्धो निष्प्रमाणकः, तथा भवतिसिद्धान्त इति। तस्माद्यजमानवत्कार्यसिद्धावभ्यर्हितत्वात्प्रस्तरस्य प्रशंसेयमित्यर्थवादत्वम्॥

॥ तत्सिध्यधिकरणम्॥१३॥

१४

सू० जाति०—"अग्निर्वै ब्राह्मणः" इत्यादिष्वपि पूर्ववद् गुणविधित्वं नामधेयत्वं चोद्भाव्यार्थवादत्वं साधनीयम्। निमित्तान्तरकथनार्थन्तु सूत्रान्तरम्। एवमुत्तरसूत्राण्यपि द्रष्टव्यानि। पूर्वत्र हि परशब्दस्य परत्र वृत्तौ तत्सिद्धिकरत्वं निमित्तमिह तु जातिर्जननमित्यर्थः। द्वावपि ह्यग्निब्राह्मणौ सृष्टिकाले ब्रह्मणो मुखाज्जातावित्यर्थवादे संकीर्त्तितौ। अनेन निमित्तेनाग्निशब्दो ब्रह्मणो मुखाज्जातावित्यर्थवादे संकीर्त्तितौ। अनेन निमित्तेनाग्निशब्दो ब्राह्मणे प्रवर्त्तते स्तोतुम्॥

॥ इति जात्यधिकरणम्॥

---

रोपितत्वम्। तच्चापरसिद्धान्तादिषु विद्यत इति गौणत्वोपपत्तिः। प्रधानादिषु जगत्कारणत्वस्य श्रुतियुक्तिबाधितत्वेनारोपितत्वादिति। तर्हि खारोपितपुष्पस्य सिद्धान्तादावारोपादाक्षेपवादिमतेऽपि न दोष इत्याशङ्क्यातिव्याप्तिदोष इत्याह—त्वत्पक्षे त्विति। यदि त्वारोपितं स्वार्थं निमित्तीकृत्य यश्शब्दो यत्र प्रयुज्यते, स तत्र गौण इति निष्कृष्यते तदा पूर्वोक्तं सर्वत्रारोपस्याननुभवरूपं दूषणं द्रष्टव्यम्। विकारः—पुष्पतादात्म्यरूपो विषाणतादात्म्यरूपश्च। अत्यन्तेति। आकाशादावत्यन्ताविद्यमान इत्यर्थः। आरोपितस्य सत्वादाह—निष्प्रमाणक इति। भ्रान्तिगोचरत्वेऽपि प्रमाणागोचर इत्यर्थः। अभ्यर्हितत्वात्—अभ्यर्हितवहिर्धारणादिकार्यकारित्वात्। सूत्रार्थस्तु—तस्य मुख्यस्य सिद्धिः कार्यं गौणवृत्तिनिमित्तमिति।

॥ इति तत्सिद्ध्यधिकरणम्॥ १३॥

१४

सू० जातिः। पूर्ववदित्यतिदेशात्मकसङ्गतिसूचनम्। गुणविधित्वम्—अन्यतरकार्येऽन्यतरविधायित्वम्। उद्भाव्येत्यनेनातितुच्छत्वद्योतनम्। मुख्यं प्रयोजनमाह—निमित्तान्तरेति। अर्थवाद इति। 'प्रजापतिरकामयत प्रजास्सृजेयेति, स मुखतस्त्रिवृतं निरमिमीत, तमग्निर्देवता अन्वसृज्यत, गायत्री छन्दो रथन्तरं साम ब्राह्मणो मनुष्याणाम्' इत्यस्मिन्नित्यर्थः। तंत्रिवृतम् स्तोत्राय त्र्यङ्गनवकरूपं स्तोममनु पश्चादित्यर्थः। तथा च प्रजापतिप्रभवत्वरूपसाधारणगुणयोगादिह गौणत्वमित्यर्थः। यद्यप्यर्थवादस्यैवंविधेऽर्थे प्रामाण्याभावः, तथाप्यर्थवादसङ्कीर्तितप्रजापतिजन्यत्वमेव तादृशो गुण इति सूचयितुं सङ्कीर्तितावित्युक्तम्।

॥ इति जात्यधिकरणम्॥ १४॥

१५

**सू० सारूप्यात्**।—'आदित्यो यूपो 'यजयानो यूप' इत्यत्रापि त एव पक्षाः। सारूप्यं त्वत्र प्रवृत्तिनिमित्तम्। ननु सर्वत्र सारूप्यं गौणत्वनिमित्तम्। कोऽत्र विशेषः? सत्यम्, इह तु चक्षुर्ग्राह्यत्वं सारूप्यं विवक्षितं चाक्षुषं हि यूपस्य यजमानसारूप्यमूर्ध्वत्वम्। आदित्यसारूप्यमञ्जननिमित्तं तेजस्वित्वम्। अतस्तद्द्वारेण यजमानादित्यशब्दाभ्यां यूपः स्तूयते॥

**॥ इति सारूप्याधिकरणम्॥१५॥**

१६

**सू० प्रशंसा०**—'अपशवो वा अन्ये गोअश्वेभ्यः, पशवो गो अश्वाः' इत्यत्र नामधेयत्वमनाशङ्क्यमिति गुणविधित्वेन पर्वः पक्षः। पशुकार्ये गवाश्वव्यतिरिक्तानां प्रतिषेधः प्रतीयते। तस्मादर्थवादः। प्रशंसानिमित्तास्तु परशब्दस्य पशुव्यतिरिक्तघटादिवचनस्य अपशुशब्दस्य परत्राजादिषु पशुषु प्रयोगः। ननु सर्व एव प्रशंसानिमित्तोऽर्थवादः। किमत्र विशेषेणोपन्यस्यते? सत्यम्; फलमन्यत्र गुणवादस्य प्रशंसा तत्सिद्ध्यादिना गुणेन शब्दः प्रवृत्तः प्रशंसाफलो भवति, इह तु शब्दप्रवृनिमित्तमपि गुणः प्रशंसैव। तथा हि—अयमत्रावयवार्थः, "अपशवो वा अन्ये गोअश्वेभ्य" इत्यत्रापशव इति नञ्समासगतेन प्रथमं गवाश्वगतं प्राशस्त्यमुपादाय पश्चात्तदभावो नञा पश्वन्तरेषु कथ्यते, न हि पशुत्वं शक्यं प्रतिषेद्धुम्। अवश्यं च पशुशब्दोपात्तोऽर्थो नञा पश्वन्तरेषु पर्युदसितव्यः।

---

१५

सू० सारू०। चक्षुर्ग्राह्यमिति। रूपशब्दो हि चक्षुर्मात्रग्राह्यशुक्लादिगुणवाची। तथाभूत एव धर्मान्तिरेऽपि प्रयुज्यत इति भावः।

॥ इति सारूप्याधिकरणम्॥ १५॥

१६

सू० प्रशं०। अनाशङ्क्यमिति। पशुभिन्नत्ववचनस्यापशुशब्दस्याजादिनामधेयत्वासम्भवादिति भावः। प्रतिषेधे विधित्वोक्तिरज्ञातज्ञापनाभिप्राया। नाम्ना समस्तस्यापि च नञो निषेधकत्वम् अप्रशानित्यादौ, न तु प्रशान् शब्दस्येत्यादिव्याख्यानान्निष्कृष्य क्रियान्वयेन? दृष्टमसमस्तस्य पर्युदासकत्ववत्, अघटना इत्यादिवदकार एवायं निषेधार्थोऽसमस्तः 'अमानो नाः प्रतिषेधः' इति स्मरणात्। तत्र तत्रेति। अग्नीषोमीयादावित्यर्थः। प्रशंसा। निमित्त इति। यद्यपि प्राशस्त्याभावो निमित्तं तथाप्यर्थाभावस्य स्वरूपतो विशेषाभावात्प्रतियोगिनिरूप्यतया चे....? त्यमभिधानम्। सर्व एवेति। आरामस्य चेतनदान इव प्रयोजनत्वे निमित्तत्वं बोध्यम्। शब्दप्रवृत्तिनिमित्तमिह प्रशंसेति। परिहरति—इह त्विति। उपादाय लक्षयित्वा। नञा इति करणे तृतीया। तेन समानकर्तृकत्वोपपत्तिः। लक्षणायां बीजमाह—न हीति। नन्वेवं पशुशब्दो

शक्नोति च पशुशब्दोऽयं गवाश्वशब्दाभ्यामेकवाक्यतया संबद्धस्तद्गतं प्राशस्त्यं लक्षयितुम्। तच्च नञा पर्युदस्यते, एतदुक्तं भवति-गवाश्वेषु यत्प्राशस्त्यं न तदन्येष्वस्ति। तस्मादप्रशस्तास्ते, गवाश्वमेव प्रशस्तमिति। सोऽयं गवाश्वगतप्राशस्त्याभावः पश्वन्तराणाम् अपशूनां च तुल्य इत्यनेनाभिप्रायेण पश्वन्तराण्यपशव इत्युच्यन्ते ॥

॥ इति प्रशंसाधिकरणम् ॥१६॥

## १७

सू० भूमा—"सृष्टीरुपदधातो" ति सृष्टिशब्दो गुणविधिरर्थवाद इति संशयः। तत्राख्यातसंबन्धाद्विध्यन्तरशेषत्वाभावादर्थवत्त्वाच्च विधिः। सृष्टिलिङ्गा मन्त्रा उपाधानाथन विधीयन्ते। नैवम्, लिङ्गप्रकरणाभ्यामेव मन्त्राणां प्राप्तत्वाच्च विधिः संभवति। तथा सति परिसंख्या स्यात्, बहुषु मन्त्रेषु प्रकरणप्राप्तेषु सृष्टिविधानादन्ये परिसंख्यायेरन्। सा च त्रिदोषा। परिसंख्यातानाञ्च मन्त्रान्तराणाम् आनर्थक्यं स्यात्।

---

नञन्वयार्थं लाक्षणिको न गौणः, गवाश्वान्यसामानाधिकरण्याभावात्। नञपि पशुशब्दलक्षितप्रास्त्यस्याभावबाधं शक्त्यैव करोतीति कुत्र गौणतेत्यत आह—सोऽयमिति। अपशुशब्दस्य गवाश्वान्यसामानाधिकरण्यानुपपत्तेः लक्ष्यमाणगुणयोगेन यदुपपादनीयम्। तत्राभावांशस्य श्रुतत्वादेकदेशमात्रलक्षणया प्राशस्त्याभावरूपगुणोपस्थित्या समस्तस्यापशुशब्दस्य गौणतायामपि नानुपपत्तिः। न हि समस्तो गुणो लक्षणयैवोपस्थापनीय इति नियमः, प्रमाणाभावादिति भावः। अत एव प्रशंसेत्येव सूत्रम्। तावन्मात्रस्य लक्ष्यत्वाभिप्रायं बोध्यम्। पश्वन्तराणीति। अन्यशब्दस्य सदृशवाचितयाजादीनामेव तस्मात्प्रतीतेरिति भावः।

॥ इति प्रशंसाधिकारणम् ॥ १६ ॥

## १७

सू० भूमा। चयनप्रकरणे 'सृष्टीः' इत्यादिवाक्ये सृष्टिशब्दस्योपधाननामत्वासम्भवात्तत्पच्चानुपन्यासः। भाष्यानुसारेण विचारं दर्शयति—तत्रेति। आद्यहेतुभ्यां 'यजमानः प्रस्तरः' इत्यादिवैलक्षण्यप्रदर्शनेनौदुम्बराधिकरणन्यायासम्भवप्रदर्शनम्। तृतीयेनार्थवादान्तरस्य 'यथा सृष्टमेवावरून्धे' इत्यस्य सत्वात्सिद्धान्ते दोषप्रदर्शनम्। कस्य विधिरित्यपेक्षायामाह—सृष्टीति। 'तद्वानासामुपधाने मन्त्र इतीष्टकासु लुक्चमतोः' इति सूत्रेण सृष्टिमानासामिष्टकानामुपधान-उपधानसाधनं मन्त्र इत्येवमिष्टकासु गम्यमानासु मतुब्लोपेन सृष्टिशब्दस्वाख्यानात्सृष्टिमन्त्रोपधेयेष्टका उपदधातीति वाक्यार्थावगमात्। इष्टकाभिरग्निं चिनुते' इत्यनेनेष्टकाप्राप्तेस्तदुपधानस्य चार्थादेव प्राप्तेर्विशेषणभूतमन्त्रमात्रं सृष्टिपदेन विधीयत इत्यर्थः। लिङ्गेति। इष्टकाप्रकाशकानां मन्त्राणामिष्टकोपधानेऽपि सामर्थ्यात्प्राप्तिसम्भवादिति भावः। 'इमामगृभ्णन्' इत्यादिवदार्थपरिसंख्यायां दोषत्रयाप्रसक्तेराह—परिसंख्यातानाञ्चेति। न च मन्त्रान्तराणामपि 'चित्रिणीरुपदधाति' इत्यादिवचनविहितत्वाद्विकल्पोपपत्तेः कथमानर्थक्यमिति शङ्क्यम्, लिङ्गप्रकरणमात्र-

तस्मादुपधानमेव विधेयम् । सृष्टीरिति तु लिङ्गप्राप्तमन्त्रानुवादमात्रम् । 'यथासृष्टमेवावरुद्धे' इत्यस्यार्थवादस्योपपत्त्यर्थमिति भाष्याभिप्रायः ।

केचित्त्वयं मन्त्रविधिरेवेति समर्थयन्ते । न ह्येकया स्तुवत इत्यादीनामुपधानैकान्तिकं लिङ्गमस्ति, येन प्राप्तिः स्यात् । साधारणलिङ्गत्वाद्धि ग्रहणासादनादिष्वपि इष्टकानां प्राप्नुयुः, तत्रास्ति विधेरवकाशः । सत्यामप्युपधानप्राप्तौ मध्यमचितिसंबन्धार्थमपि प्रत्यक्षविधानमर्थवद् भविष्यति । वक्ष्यति हि मध्यमायान्तु वचनाद्ब्राह्मणवत्य इति । न चास्मिन्सत्रेऽवश्यं सृष्टिनामविधानमादर्त्तव्यम् । गुणवृत्तिनिमित्तकथनमात्रपरत्वात् । कः पुनरत्र गुणः ? सृष्टिसमुदाये हि भूमाऽस्ति । सृष्टयसृष्टिसमुदाये हि सृष्टिभूमाऽस्ति सृष्टयसृष्टिसमुदाये कया स्तुवतेत्यनुवाके सृष्टिभूमाऽस्तीत्यनेन सादृश्येन सृष्टिशब्दः ॥

**॥ इति भूमाधिकरणम् ॥ १७ ॥**

---

विनियोज्यमन्त्राणामेव तदापादनात् । आनर्थक्यमपीदं दृष्टप्रयोजनाभावरूपं द्रष्टव्यम्, जपादिनादृष्टार्थतयापि सार्थक्यसम्भवात् । वस्तुतस्तु विधेः परिसंख्याफलत्वे गौरवमेव दोषः, न त्वानर्थक्यमपि, ग्रहणासादनादिषु विनियोगसम्भवादिति ज्ञेयम् । उपधानमेवेति । समुदितेष्टकोपधानेनापि चयनोपपत्तेर्नार्थात् रचनाविशेषेण स्थापनाख्यस्योपधानस्य प्राप्तिनियमः । अतो नियमविधिरयम् । इष्टकोद्देशेन तद्विधौ च प्रतीष्टकमावृत्तिसिद्धिरिति । उपपत्त्यर्थमिति । इत्थं प्रशस्तमुपधानं यत्सृष्टिप्रकाशकमन्त्रैः क्रियते, तथा सति च यथा सृष्टं ब्रह्मसृष्टवस्त्वनतिक्रमेण निर्विघ्नं सर्वमवरुन्धे प्राप्नोतीति प्रशंसासम्पादनार्थमित्यर्थः । मन्त्रविधिरेवेत्येवकारोऽयोगव्यवच्छेदार्थः, न तूपधानविधिव्यापृत्यर्थः । अर्थाक्षेपात्पूर्वमेव प्रवृत्तेन विधिना मन्त्रविशिष्टस्य तस्य विधानात् । तत्प्रयोजनञ्चोपधानस्य प्रतीष्टकमावृत्तिः तत्समानकर्तृकत्वञ्च, मन्त्रांशे तु ग्रहणासादनादिशेषिपरिसंख्या, इमामगृभ्णन्निितिवत् मध्यमाचितिसम्बन्धश्चेति । वचनादिति । 'यां वै काञ्चन ब्राह्मणवतीमिष्टकामभिजानीयात्तां मध्यमायां चितावुपूनिदध्यात्' इति वचनेनाभिपूर्वकस्य जानातेः प्रत्यक्षार्थकतया प्रत्यक्षविधिविहितेष्टकानां मध्यमचिति सम्बन्धविधानादित्यर्थः । यद्यप्येवमपि नेष्टकानां प्रत्यक्षो विधिः, किन्तु विशिष्टोपधानस्यैव, तथापीष्टकासु मन्त्रं विना प्रातिस्विकविशेषाभावादिष्टकागोचरप्रत्यक्षविध्यसिद्धेः प्रत्यक्षविधिविहितमन्त्रकत्वमेव तासां प्रत्यक्षविधिविहितत्वमिति वानुपपत्तिः । इति वचनादिति । सूत्रकारस्येति शेषः । ननु सर्वत्रार्थवादगतायां एवं गौण्या निमित्ताभिधानात्कथं सृष्टिशब्दस्य विधायकत्वाङ्गीकारस्तत्राह—न चेति । सृष्टीनां—सृष्टिलिङ्गकमन्त्राणाम् । कः पुनरिति । 'सृष्टीरुपदधाति' इत्यभिधाय 'एकया स्तुवते' इत्यादिसप्तदशमन्त्राम्नात्तेषां सर्वेषां सृष्टिपदेन ग्रहणमावश्यकम् । तच्च शक्त्या न संभवति, आद्यन्त्यचतुर्दशानामसृष्टिलिङ्गकत्वात् । अतो गौणी वाच्या । तत्र को गुणः प्रवृत्तिनिमित्तंभूत इत्यर्थः । भूमेति बाहुल्यमित्यर्थः । समुदाये हीति । यद्यपि वनादिशब्दवत्सृष्टिशब्दस्य समुदायो न वाच्यः, किन्तु प्रत्येकं मन्त्राः समुदायिन एव । गौण्यपि न समुदाये, किन्तु समुदायिष्वेव । तथापि भूम्नसृष्टिघटितसमुदायसम्बन्धित्वरूप एव समुदायिगतो गुणः ? प्रवृत्तिनिमित्तं, तद्वार-

सू॰ लिङ्गसमवायात्। 'प्राणभृत उपदधाती' त्यत्रापि पूर्ववदेव मन्त्रोपादानमर्थवादार्थं विध्यर्थं वेति वक्तव्यम्। निमित्तान्तरकथनार्थन्तु सूत्रान्तरम्। तत्र हि भूम्ना शब्दप्रवृत्तिः, इह तल्लिङ्गवतामल्पत्वात्तत्समवायामात्रादेव शब्दप्रवृत्तिः। प्राणभृद्ग्रहणे हि प्राणभृत्समवायोऽस्ति। प्राणभृदप्राणभृद्गणेपीत्यनेन सादृश्येन प्राणभृच्छब्दः।

तत्सिद्धिजातिसारूप्यप्रशंसालिङ्गभूमभिः।
षड्भिः सर्वत्र शब्दानां गौणी वृत्तिः प्रकल्पिता॥
इति लिङ्गसमवायाधिकरणम्॥ १७॥
( इति तत्सिद्धिपेटिका )

१८

सू॰ सन्दिग्धेषु—'अक्ताः शर्करा उपदधाति' 'तेजो वै घृतम्' इत्यत्र संशयः। घृततैलवसानामन्यतमेनैवाञ्जनं कर्त्तव्यम्? उत घृतेनैव ? इति। तदर्थं किं विध्युद्देशार्थवादयोर्विरोधोऽस्ति न वा ? इति। स्तावकत्वेन प्रामाण्यमर्थवादस्योक्तमिह संदिग्धनिर्णयेऽपि क्वचित्प्रामाण्यं प्रतिपाद्यत इति सङ्गतिः। तत्राक्ता इति शब्देन येन केनचिदञ्जनं प्रतीयते। विधिश्चायं बलवानर्थवादतः।

---

कस्तु समुदाय इति तत्प्रदर्शनम्, न स्वातन्त्र्येणेति बोध्यम्। एवं भूम्नोऽप्युक्तगुणान्तर्गततया निमित्तत्वं, न केवलस्येति।

॥ इति भूमाधिकरणम्॥ १७॥

सू॰ लिङ्ग॰। तल्लिङ्गानामिति। प्राणलिङ्गानामित्यर्थः। प्राणभृच्छब्देन—प्राणं बिभ्रति प्रकाशकतया धारयन्तीति प्राणभृतो यन्त्रास्तत्सम्बन्धाच्चेष्टकाः तथोच्यते, न तु प्राणभृच्छब्दो मन्त्रेस्ति। तत्समवायेति। तस्य लिङ्गस्य चिह्नस्य प्राणशब्दरूपस्य समवायादित्यर्थः। एतदेवोपपादयति—प्रणभृद्गुणे हीति। प्राणलिङ्गकमन्त्रसमुदाय इत्यर्थः। एवाञ्चात्र प्राणशब्दवन्मन्त्रसमुदायसदृशप्राणशब्दवदप्राणशब्दवन्मन्त्रसमुदायाश्रयत्वरूपगुणयोगो दर्शितः। यद्यपि प्राणशब्दवन्मन्त्रगतप्राणभृदप्राणभृत्समुदायरूपगुणयोगादेव गौणत्वं वक्तुं शक्यम्, तथापि गुणस्य सादृश्यरूपतासिध्यर्थं समुदायद्वयकथनमिति ज्ञेयम्। प्राणशब्दरूपलिङ्गसमवायस्य चोक्तगुणान्तर्गत्या निमित्तत्वमिति।

॥ इति लिङ्गसमवायाधिकरणम्॥ १७॥

१८

सू॰ सन्दि॰ अक्ताः—अभ्यक्ताः। शर्कराः—बालुकाः। चयनप्रकरणगतमेतत्। अत्र पूर्वपक्षे घृतशब्दस्य घृताघृतसमुदाये लिङ्गसमवायेन गौणत्वोपजीवनादुपजीवकत्वसङ्गतिः। सिद्धान्ते तदपवादादापवादिकी वा। प्रमाणाध्यायेनासङ्गतिमाशङ्क्याह—स्तावकत्वेनेति। इह—अस्मि-

प्राधान्यात्प्रक्रमस्थत्वादप्राप्तविषयत्वतः ।
तद्बाधाद् घृतशब्दोऽयं लक्षणार्थो भविष्यति ॥

प्रधानं विधिरङ्गं स्तुतिः। न चाङ्गेन प्रधानं बाधितुं शक्यम्, उपक्रमस्थत्वाच्चासंजातविरोधो विधिर्निर्विघ्नमेव स्वार्थं बोधयन्नुपसंहारस्थं स्वविरुद्धमर्थवादं लक्षणां नयति। विधिश्चाप्राप्तविषयत्वाद्यथाश्रुत एव नेतव्यः। अर्थवादस्त्वनुवादत्वाल्लक्षणयापि नीयमानो नातीव दुष्यति, विधेश्च यत्किंचिदञ्जनसाधनं गम्यत इति तेन बाधितो घृतशब्दोऽर्थवादस्थोऽञ्जनसमर्थद्रव्यमात्रलक्षणार्थो भविष्यति। तस्माद् येन केनचिदञ्जनमिति सिद्धे ब्रूमः—

"विधेर्यदि विरोधः स्याद्भवेदेवं न चास्त्यसौ।
न हि सामान्यशब्दोऽयं विशेषेण विरुध्यते॥

सामान्यं हि विधिना बोधितम्। तच्च सर्वविशेषेषु कृत्स्नमस्तीति न विशेषोपादाने तस्य बाधः। अवश्यं च यः कश्चिद्विशेष उपादातव्यो निर्विशेषसामन्येन व्यवहाराभावात्। तत्रासति विशेषप्रमाणे यः कश्चित् स्यात्। अस्ति त्वत्र घृतस्य प्रमाणमर्थवादः। सहि घृतं स्तुवन्नविधेयस्य स्तुत्ययोगाद्विधेयत्वं गमयति। तस्मात् घृतेनैवाञ्जनम्॥

॥ इति वाक्यशेषाधिकरणम्॥ १८॥

---

त्रधिकरणे। पूर्वपक्षमाह तत्रेत्यादि। तद्बाधात् तेन विधिना बाधात्। यथाश्रुतस्य घृतशब्दस्य बाधात्। लक्षणार्थं इति। लिङ्गसमवायेन घृताघृतसमुदायिषु गौण इत्यर्थः। श्लोकं व्याचष्टे—प्रधानमित्यादि। बाधितुं घृतविषयत्वेन सङ्कोचयितुम्। स्वार्थम्। यत्किञ्चिदञ्जनसाधनेनाञ्जनरूपम्। स्वविरूद्धमिति। घृतमात्रविषयतयेति भावः। लक्षणामिति लक्षणाशब्दोऽपि गौणीपर एव वाच्यः। एवमग्रेऽपि। न हि सामान्येति। यद्यक्ता इत्यनेन तैलत्ववसात्वादिना विशेषा उच्चेरन्, तदा घृतपदेन विरोधः स्यात्, न तु तथास्तीत्यर्थः। एवमप्यञ्जनसाधनत्वं यदि प्रत्येकपर्याप्तं न भवेत्। किन्तु व्यासज्यवृत्तितयापि केवलघृतोपादाने विरोधस्स्यात् तं त्वेवमित्याह—कृत्स्नमिति। प्रत्येकमिति शेषः। कृत्स्नं पर्याप्तम्। सामान्येनैवोपपत्तौ किमिति विशेषेण सङ्कोच इत्यत आह—अवश्यञ्चेति। अनुष्ठानस्य सामान्येनासम्भवादिति भावः। अस्तु तर्हि सामान्याक्षिप्तो यः कश्चिद्विशेष इत्याशङ्क्याह—तत्रेति। अर्थवादोपस्थित घृतरूपविशेषेणानुष्ठानोपपत्तौ क्षीणार्थापत्तिर्नान्यदाक्षिपतीति भावः। अविधेयस्येति। तदुक्तं वार्तिके—

विधिस्तुत्योः सदा वृत्तिः समानविषयेष्यते।
तस्मादेकत्र सन्दिग्धमितरत्रावधार्यते॥

इति। प्रयोजनं स्पष्टम्। सूत्रार्थस्तु—सन्दिग्धेषु विषयेषु वाक्यशेषादर्थवादरूपात् कल्पना निर्णय इति। उत्तरत्र सूत्रगतकल्पनानुषङ्गेण बोध्यः।

॥ इति वाक्यशेषाधिकरणम्॥ १८॥

१६

सू० अर्थाद्वा०--विधेरिदानीं प्रतिपादितप्रामाण्यस्य संदिग्धार्थनिर्णयेऽपि सामर्थ्यसनाथस्य प्रामाण्यं प्रतिपाद्यते 'स्रुवेणावद्यति स्वधितिनाऽवद्यति हस्तेनावद्यती' त्यवदानसाधनत्वेन स्रुवादीनि विहितानि। अवदानं च द्रवाणामाज्यादीनां मांसादीनां चास्ति। तत्र किमविशेषेण स्तुवादीनि भवेयुः, ? यथासामर्थ्यं वेति। तथाञ्जलिना सक्तून् प्रदाव्ये जुहुयादिति किं देवताप्रसादादिप्रार्थनायामिव हस्तसंयोगमात्रमञ्जलिहोमे ? यथासामार्थ्यं व्याकोश एव वा ? तत्र विशेषाश्रवणादनियम इति प्रतिभायामुत्तरमुच्यते—अशक्यार्थविध्यसंभवादवश्यं विधायकस्य शक्तिः सहकारिणीत्यङ्गीकर्त्तव्यम्। तस्माच्छक्तिसहायो विधिरेव यथासामर्थ्यं विधेयं व्यवस्थापयति। द्रवादिषु स्रुवादीनाम्, व्याकोशस्य च सक्तुषु अर्थापत्तिवशात्तस्माद् व्यवस्थेति व्यवस्थितम्।

---

१६

सू० अर्था०। अध्यायसङ्गतिमाह—विधेरिति। अनन्तरसङ्गतिस्तु पूर्वोक्तवाक्यशेषरूपहेत्वभावादनियम इति पूर्वपक्षोत्थानात्प्रत्युदाहरणरूपा। स्वधितिश्छुरिका। संहतत्वं हस्तावखण्डनयोग्यकठिनावयवसंयोगवत्वम्। यथासामर्थ्यमिति। हस्तस्य पुरोडाशावदाने स्रुवस्य द्रवावदाने स्वधितेर्मांसावदाने चेत्यर्थः। उद्देश्यसङ्कोच इव सामर्थ्याद्विधेयस्यापि सङ्कोच इति दर्शयति—तथेति। व्याकोश इत्याङीषदर्थे। ईषत्कोशः इषद्विकसितमुकुलसदृश इत्यर्थः। विशेषेति। व्यवस्थापकस्य पूर्वोक्तस्य वाक्यशेषस्येत्यर्थः। वस्तुसामर्थ्यस्य च प्रमाणान्तरगम्यत्वाद्विधेस्तदपेक्षणे सापेक्षत्वादप्रामाण्यं स्यादित्याशयः। न चाशक्यार्थविधानानुपपत्तिः, समानविषयश्रुत्यनुसारेण मुख्यसामर्थ्याभावेऽपि हस्तादेर्मांसाद्यवदाने आयसादिसाहाय्येन गौणसामर्थ्याश्रयणेनोपपत्तेः। यथा 'ऐन्द्रया गार्हपत्यमुपतिष्ठते' इति श्रुतिवशादैन्द्रया गार्हपत्योपस्थाने गौणं सामर्थ्यं कल्प्यते तद्वदिति प्रतिभेति मन्दत्वद्योतनम्। अशक्येति। न चैतावता विधेः सापेक्षत्वम्, स्वविषये श्रेयस्साधनताबोधे निरपेक्षत्वात्। न वा गौणसामर्थ्याश्रयणं युक्तम्, तस्य श्रुत्यन्यथानुपपत्तावेवाश्रयणात्। अत्र च सङ्कोचमात्रेण तदुपपत्तौ हस्तादेर्निरपेक्षसाधनतायाः प्रतीताया बाधेन तत्कल्पनाया अनुचितत्वादिति भावः। अर्थापत्तिवशादिति। स्रुवादिना पुरोडाशाद्यवदानरूपस्यार्थस्यानुपपत्तिवशादिति भावः। सूत्रार्थस्तु—अर्थात् सामर्थ्यात्कल्पना व्यवस्थाया इति शेषः। द्रवं संहतमित्यादिशब्दस्य सामर्थ्यकल्पितस्य एकदेशत्वात् विधिवाक्यघटकत्वादिति।

नामार्थवादविधिमन्त्रयुतश्च वेदस्तद्वत्स्मृतेश्च चरितं च निरस्तदोषम् ।
धर्मप्रमाणमिह सिद्धमतः परं तद्भेदप्रकारविनियोगफलादिचिन्ता ॥

इति सामर्थ्याधिकरणम् ॥

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां ।

प्रथमस्याध्यायस्य चतुर्थः पादः ॥

समाप्तश्च प्रथमोऽध्यायः ॥

---

इदानीं शिष्यबुद्धिसौकर्यायाध्यायार्थं सङ्गृह्णाति—नामेति । चरितम्—आचारः । निरस्तदोषम्—अविगीतम् । तद्भेदेति—धर्मभेदेत्यर्थः । प्रकारः—प्रमाणादिरूपः । विनियोगोऽङ्गत्वम् । आदिना क्रमप्रयुक्त्यतिदेशादिग्रहणं क्रियत इति ज्ञेयम् ।

॥ इति सामर्थ्याधिकरणम् ॥ १९ ॥

इति श्रीमत्पदवाक्यप्रमाणाभिज्ञतत्सद्रामचन्द्रा-
त्मजवैद्यनाथकृतायां शास्त्रदीपिकाटीकायां
प्रभाख्यायां प्रथमोऽध्यायस्सम्पूर्णः ।



❀ श्रीः ❀

# प्रभासहिता शास्त्रदीपिका

## अथ द्वितीयाध्यायस्य प्रथमः पादः

### १

सू. भावार्थाः—प्रथमेऽध्याये धर्मस्य प्रमाणं निरूपितम्। प्रथमे पादे चोदनायाः, अनन्तरं त्वर्थवादमन्त्रनामधेयस्मृत्याचाराणाम्, वाक्यशेषसामर्थ्ययोश्च सन्दिग्धार्थनिर्णये प्रामाण्यमुक्तम्। एवं समस्तेनाध्यायेन धर्मप्रमाणनिरूपणात्कथंलक्षणको धर्म इत्ययमंशो[1] निरूपितः। तद्विचारादेव तत्प्रमेयस्य ज्योतिष्टोमाष्टकादेर्धर्मत्वावधारणात्कोऽयं धर्म इत्ययमंशो विचारितो भवति। वेदादिप्रमेयो धर्म इत्येतावत्यवबोधितेऽपि न कात्स्न्येन धर्मस्वरूपमवगतं भवति। भेदलक्षणेन त्वियन्ति धर्मस्वरूपाणीत्यवधारणान्निरवशेषस्वरूपावगतिसिद्धिः। अतो भेदलक्षणमपि को धर्म इत्यस्मिन्नंशेऽन्तर्गतं भवति। कान्यस्य साधनानीति तु शेषलक्षणे विचारयिष्यते। सर्वञ्च भेदाभेदशेष-

---

भावार्था :—पूर्वाध्यायेन सहास्याध्यायस्य हेतुहेतुमद्भावरूपां सङ्गतिं दर्शयितुं पूर्ववृत्तमनुवदति—प्रथम इत्यादिना। प्रथमपाद एव धर्मप्रमाणनिरूपणसमाप्तिः, त्रिपाद्यान्तु प्रकारासम्भवेन तदाक्षिप्य प्रामाण्यप्रकारमात्रनिरूपमिति मतव्यावर्तनायाह—प्रथमे पाद इति। षष्ठ्यन्तानां प्रामाण्यमुक्तमित्यनेनान्वयः। अर्थवादाधिकरणसामान्यविचारे नामधेयस्यापि प्रमाण्योक्तेः स्मृत्याचारापेक्षया पूर्वभावो न विरुध्यते। कथंलक्षणक[2] इति। कीदृक् लक्षणं प्रमाणमस्येत्यर्थः। अंश इति। धर्मस्वरूपप्रमाणसाधनफलानां जिज्ञासाविषयाणामेकदेश इत्यर्थः। तद्विचारादेवेति। धर्मप्रमाणरूपांशविचारादेवेत्यर्थः। धर्मे एतानि प्रमाणानीत्युक्ते तत्प्रमेयो धर्म इत्यर्थादवगम्यत इत्यर्थः। तर्हि धर्मप्रमाणतत्स्वरूपनिरूपणस्य प्रथमाध्याय एव कृतत्वादवशिष्टः साधनाद्यंश एव निरूपणीयो न तु कर्मभेद इत्याशङ्क्य सामान्येन धर्मावगमे तद्विशेषजिज्ञासायां धर्मस्वरूपविशेषज्ञापको भेद एव निरूपणीयः, न तु साधनादिरित्याह—वेदादीति। कात्स्न्येन अशेषविशेषरूपेण। एवञ्च सति भेदनिरूपणस्य धर्मस्वरूपजिज्ञासान्तर्गतत्वात् शास्त्रसङ्गतिरपीत्याह—अत इति। धर्मस्वरूपविशेषनिर्णायकत्वादित्यर्थः। कान्यस्येति।

---

१. विचारित इति क.

२. 'कथं लक्षण' इति भाष्ये थमुप्रत्ययप्रयोगेण प्रकारस्यापि व्युत्पाद्यत्वप्रतीतेः कथं समस्तेन प्रथमाध्यायेन प्रमाणं निरूप्यत इति चेत्—भाष्यस्यास्य प्राधान्येन न प्रकारव्युत्पादने तात्पर्यम्, किन्तु समस्तेनाध्यायेन प्रमाणे व्युत्पाद्यमाने आनुषङ्गिकतया प्रकारव्युत्पादने तात्पर्यमिति न दोषः।

शेष्यादिप्रमाणबलेन[1] निरूपणीयमिति प्रमाणलक्षणात्पश्चात्प्रारम्भः।

ननु वेदार्थस्यैवेह भेदाभेदादिशास्त्रे चिन्त्यते। तत्र तु वेदप्रामाण्यमेवोपयुज्यते, स्मृत्यादिप्रामाण्यस्य तु न तत्रोपयोगं पश्यामः। नैवम्; धर्मस्यैवेह भेदाभेदादिविचारः शास्त्रे करिष्यते[2] श्रौतस्य स्मार्त्तस्य वा, न श्रौतस्यैव, अष्टाकादिष्वपि शब्दान्तरादिलक्षणस्य भेदस्य श्रुत्यादिलक्षणस्य च शेषिशेषभावस्य प्रयुक्त्यादेश्च तुल्यत्वात्। अपि चाहत्यैव शास्त्रे स्मृत्याचारगम्यधर्मविचारः प्रदेशेषु करिष्यते— द्रव्यार्जननियमः क्रत्वर्थः, उत पुरुषार्थं इति, तथा प्रजापतिव्रतानि, तथा 'तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्तेरन्' 'अपि वा वेदतुल्यत्वादुपायेन प्रवर्तेरन्' अचाराद्गृह्यमाणेषु तथा स्यात्' इत्यादिभिः। तस्माद्धर्म इत्येव शास्त्रविषयो न वेदार्थ

धर्मस्वरूपविशेषनिरूपणं विना तत्साधनाकाङ्क्षानुदयादिति भावः। ननु धर्नजिज्ञासेति सूत्रात्को धर्मः? कथं लक्षणकः? इति भाष्याच्च प्रधानभूतधर्मस्वरूपजिज्ञासाया एव प्राथम्याद्धर्मस्वरूपनिरूपणार्थं भेदविचारस्यैव प्राथम्यापत्तिरित्याशङ्कायामाह—सर्वञ्चेति। स्वरूपजिज्ञासायाः प्राथम्येऽपि 'मानाधीना मेयसिद्धिः' इति न्यायेन प्रमाणनिरूपणस्यैव प्राथम्यमुचितमित्याशयः।

---

गुरुमतेन शङ्कते—नन्विति। अथात इत्याद्यगताथशब्दस्य वेदाध्ययनानन्तर्यार्थत्वात्तदुपक्रमानुरोधेन चोपसंहारगतधर्मपदस्य वेदार्थपरत्वावसायादिति भावः। फलितमाह—स्मृत्यादीति। आदिनाचारपरिग्रहः। स्वमतेन समाधत्ते—नैवमिति। धर्मजिज्ञासेति सूत्रस्वारस्यात्। अथशब्दस्यानन्तर्यमात्रार्थत्वेन वेदस्मृत्युभयाध्ययनानन्तर्यस्य योग्यतयोपादानादिति भावः। स्मार्तवाक्यानुदाहरणात् श्रौतस्यैव विचार्यतेत्याशङ्क्याह—अष्टकेति। न्यायतौल्यात्स्मार्तस्यापि विचार्यत्वावगतेः। किञ्चिदुदाहरणमात्रेणाप्युपपत्तौ पृथगनुदाहरणं न बाधकमिति भावः। लक्षण—शब्दः प्रमाणपरः। सर्वथा स्मार्त्तानुदाहरणमप्यसिद्धमित्याह—आहत्यैवेति। विशेषत उदाहृत्यैवेत्यर्थः। प्रदेशेषु—तत्तदधिकरणस्थानेषु। द्रव्येति। 'प्रतिग्रहादिनैव ब्राह्मणो धनमर्जयेत्' इत्येवंरूप इत्यर्थः। स किं क्रत्वर्थः! उत पुरुषार्थ इति विचारः करिष्यत इति योजना। तथेति। 'नेक्षेतोद्यन्तमादित्यम्' इत्यादीनां प्रजापतिव्रतसमाख्या। तान्यपि किं क्रत्वर्थान्युत पुरुषार्थानीति लिङ्गवचनविपरिणामेन योजना। नन्वेतानि भाष्यकृतोदाहृतानि। न तु सूत्रकृतेत्यत आह—तस्मिंस्त्विति। तस्मिन् पुरुषे शिष्यमाणनि विधीयमानानि स्मार्तानि 'प्राङ्मुखो भुञ्जीत' 'उदङ्मुखो मूत्रं कुर्यात्' इति नियमादीनि जननेन उत्पत्तिमारभ्यैव प्रवर्तेरन्निति पूर्वपक्षसूत्रम्। अपिवेति सिद्धान्तसूत्रम्। अपिवेति पूर्वपक्षव्यावृत्तिः। उपायेन उपनयनप्रभृति प्रवर्तेरन्। कुतः! वेदतुल्यत्वात् वेदाध्ययनतुल्यत्वात्। यथा वेदाध्ययनं उपनयनानन्तरं तथा उपनयनादिर्नियम इति स्मृत्या तान्यपीत्यर्थः। आचारोदाहरणमाह—आचारादिति। आचाराद्गृह्यमाणेषु ज्ञायामानेषु गुर्वनुगमनादिषु, तथा आचारानुसारेणावृत्तिरित्यर्थः। अत्राद्यविचारद्वयं चतुर्थेऽध्याये, अन्त्यविचारद्वयं

---

१. शेषिभावदि इति क. २. चिन्त्यत इति ख.

इति । तथा च दर्शितम्—'धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम्' इति । तथा चाथातो धर्मजिज्ञासा, 'चोदनालक्षणोऽर्थो धर्मः' इति सूत्रम् 'को धर्मः कथंलक्षण' इत्यादि भाष्यञ्च न कुकविकृतिरिव वेदार्थपरं व्याख्येयम् । अतो धर्मप्रमाणत्वेन स्मृत्यादिनिरूपणं नानुपयोगीति सिद्धम् । तत्र भेदपूर्वकत्वाच्छेषलक्षणादेः प्रथमं तावद्भेदलक्षणमारभ्यते शब्दान्तरादिभिः । तत्र शब्दान्तराभ्यासनामधेयगुणप्रकरणान्युत्पत्तिपरतां विधेर्बोधयन्ति सन्ति, उत्पन्नस्य चोत्पत्त्यन्तराभावाद्वाक्यान्तरविहितात्कर्मणः स्ववाक्यविषयस्य[1] भेदं बोधयन्ति । संख्या त्वेषामेवान्यतमेनोत्पत्तिपरत्वे विधेरवगते सत्यनेकोत्पत्तिपरतां विधेर्बोधयन्ती स्ववाक्यविधेयानामेव कर्मणां मिथो भेदमावहतीति वेदितव्यम् । तदिह धात्वर्थभावनापूर्वाणां त्रयाणामपि भेदः प्रतिपादयिष्यते । तत्रापूर्वस्याशब्दार्थत्वात् स्वरूपेण भेदनिरूपणाशक्तेर्भावनाभेदानुनिष्पादी भेदस्तद्भेदश्च करणीभूतधात्वर्थभेदद्वारेण वक्ष्यते । तच्च धात्वर्थस्य करणत्वे सति वक्तुं

---

षष्ठ इति ज्ञेयम् । स्वोक्तार्थे वार्तिकसम्मतिमाह—तथाचेति । कुत्सितस्य कवेः कृतिरसत्काव्यमिवेत्यर्थः आशङ्कानिरासमुपसंहरति—अत इति । भेदलक्षणस्य प्राथम्ये हेत्वन्तरमाह—तत्र भेदेति । शेषलक्षणादेरिति मध्यमणिन्यायेनोभयान्वयि । परन्तु पूर्वत्र षष्ठ्यन्तम्, प्रथममित्यत्र तु पञ्चम्यन्तं बोध्यम् । भेदस्य लक्षणं व्युत्पादनम् । शब्दान्तरादीनां षण्णां मध्ये संख्याया भेदकत्वमितरेभ्यो विलक्षणमित्याह—तत्रेति । तत्र तेषु मध्ये । प्रकरणं-प्रकरणान्तरम्, उत्पत्तिः अज्ञातज्ञापनम् । संख्या त्विति । द्व्यादिकेत्यर्थः।एषां शब्दान्तरादीनाम् । तथा चोत्पत्तिबोधने नास्या व्यापारः, किन्तु तद्गतानेकत्वमात्रबोधने । अत एव पशुप्रकरणे "एकादश प्रयाजान्यजति" इत्यत्रैकादशसंख्या, न पञ्चाधिकप्रयाजबोधिका, एतद्वाक्यस्योत्पत्तिविधित्वाभावात् । अतस्तत्रावृत्तिरेव । न भेदः । अत्र च गुणसंख्याशब्दान्तराणां भेदं तदवसरे वक्ष्यामः । ननु कर्मभेद इत्यत्र कर्मशब्देन किमुच्यते ? न तावद्धात्वर्थः, शब्दान्तरेण धात्वर्थभेदस्य स्पष्टतया भावनामात्रभेदस्य साधनीयत्वात् । नापि भावना, गुणकामेषु भावनाभेदेऽप्यकर्मान्तरत्वसिद्धान्तात् । नाप्यपूर्वम्, शब्दान्तरादीनां तत्र व्यापाराभावादत आह—तदिहेति । कथमित्याकाङ्क्षायामाह—तत्रेति । अयं भावः—भावनैवात्र कर्मशब्देनोच्यते । सा च धात्वर्थावच्छिन्ना सकर्मिका च शब्दात्प्रतीयते—यागाद्यवच्छिन्ना स्वर्गादिभावनेति । एवंविधभावनाभेद एवैकोऽध्यायार्थः । तत्र क्वचित्प्रसिद्धं धात्वर्थभेदमुपजीव्य भावनाभेदसाधनम्, क्वचित्तु धात्वर्थभेदसाधनपूर्वकभावनाभेदसाधनम्, क्रियारूपभावनाभेदे चावश्यं फलभूतापूर्वभेदः, फलापवर्गित्वात्क्रियायाः । गुणकामेषु सत्यपि भावनाभेदे न कर्मान्तरत्वव्यवहारः, तस्योपरञ्जकधात्वर्थभेद एव प्रायशो दृष्टत्वादिति । स्वरूपेणेति । साक्षादित्यर्थः । तद्भेदश्चेति । भावनाभेदश्चेत्यर्थः । भेदद्वारेण भेदरूपेण द्वारेणोपायेनेति यावत् । भावार्थाधिकरणस्य भेदाध्याये का सङ्गतिरित्याशङ्कायामाह—तच्चेति । धात्वर्थभेदहेतुकापूर्वभेदफलकभावनाभेदकथनञ्चेत्यर्थः । करणत्वे सति-

---

१. उत्पत्त्यप्रयोगादिति क.

शक्यते, नान्यथेति प्रस्तुतधात्वर्थभेदानुनिष्पाद्यपूर्वभेदानुसारसिध्यर्थमाद्यमधिकरण-मुपोद्घातत्वेनाध्यायस्यारभ्यते ।

किमिहोदाहरणम् ? 'श्येनेनाभिचरन्यजेत' 'चित्रया यजेत पशुकामः' 'सोमेन यजेत' 'हिरण्यमात्रेयाय ददाति' 'हिरण्यं भार्यम्' 'समिधो यजति' 'दशापवित्रेण ग्रहं संमार्ष्टि' 'यद्येनमार्त्विज्यात् वृत्तं सन्तं निर्हरेरन्नाग्नीध्रे जुहुयाद्दशहोतारं चतुर्गृहोतेनाज्येन' 'यः कामयेत वीरो म आजायेतेति स चतुर्होतारं जुहुयात्' इत्यादि यावत्किञ्चिददृष्टार्थं विधानं क्रत्वर्थं पुरुषार्थं काम्यं नैमित्तिकं वा द्रव्योपपदं वा नामोपपदं वा गुणोपपदं वा तत्सर्वमुदाहरणम् । केचित्त्वधिकारचोदना एवोदा-

---

भावनाकरणत्वे सति । प्रस्तुतेति । प्रस्तुतो भावनाभेदौपयिकत्वेन प्रतिपाद्यो यो धात्वर्थभेदस्त-दनुनिष्पादी तत्साध्यभावनाभेदानुनिष्पादिनः सुतरां तदनुनिष्पादित्वात् तादृशो योऽपूर्वभेदस्त-दनुसारस्तत्साधनमित्यर्थः । धात्वर्थस्यैवापूर्वसाधनत्वेन धर्मत्वस्याभ्युपगमाद्धात्वर्थमात्रग्रहणेन चार्थाद्द्वारभूतभावनाभेदलाभात्पृथक्तदनुक्तिः । अध्यायस्याद्यमधिकरणमित्यन्वयः । उपोद्घातत्वेनेति । 'चिन्तां प्रकृतसिध्यर्थामुपोद्घातं प्रचक्षत' इत्युक्तेरित्यर्थः ।

इदानीं प्रस्तुतमधिकरणं विषयासम्भवेनाक्षिपति—किमिहेति । न तावद् 'व्रीहीनवहन्ति' इत्यादि दृष्टार्थं विषयः । तत्र किं भावशब्देभ्योऽपूर्वम् उत द्रव्यगुणशब्देभ्य इति संशयायोगात् । नाप्यदृष्टार्थं 'श्येनेनाभिचरन् यजेत' इत्यादि । तत्र द्रव्यादिपदाश्रवणेनोक्तसंशयायोगात् श्येनपदस्य नामधेतायाः प्रागेव साधनादित्याशयः । उत्तरमाह—श्येनेनेत्यादि । अभिचरन् वैरिवधकामः । दशापवित्रं[1] कम्बलदशारूपं पवित्रम् । एनम् ऋत्विजं सन्तमार्त्विज्यान्निर्हरेरन् ऋत्विक्कार्याद्भ्रंशयेरन् । आग्नीध्रे तत्सम्बन्धिन्यग्नौ दशहोतारं तृतीयार्थे द्वितीया, दशहोतृसंज्ञकेन मन्त्रेण 'चित्तिः स्रुक्' इत्यादिना चतुर्वारं गृहीतेनाज्येन जुहुयादित्यर्थः । एवं 'पृथिवी होता' इत्यादिश्चतुर्होतृमन्त्रः । द्वितीया तृतीयार्थे । अदृष्टार्थमिति । अवहन्तीत्यादावपूर्वभेदरूपफलाभावात्तद्व्यावृत्त्यर्थमिदम्, नियमादृष्टस्य क्रियाजन्यत्वाभावात् । दशापवित्रेणेति । नित्यवदाम्नातस्तु सम्मार्गो न कादाचित्कसोमरसावसेकनिर्हरणार्थसम्भवतीत्यदृष्टार्थ एवेत्यभिप्रायेण तदुहारणं बोध्यम् । तत्र क्रत्वर्थे 'समिधो यजती' त्यादि । पुरुषार्थे 'हिरण्यं भार्यम्' इत्यादि । काम्यं चित्रादि । नैमित्तिकं 'यद्येनम्' इत्यादि । द्रव्योपपदं 'सोमेने' त्यादि । नामोपपदं श्येनेने' त्यादि । गुणोपपदं 'श्वेतमालभेते' त्यादि । यद्यपि नामोपपदे किं भावशब्देभ्योऽपूर्वम् उत द्रव्यादिभ्य इति संशयायोगः, तथाप्येतदधिकरणोत्तरमेव नामत्वसिद्धान्तप्रवृत्तेस्तस्याप्युदाहरणत्वमविरुद्धम् । तदुक्तं भाष्ये—'स्थित एतस्मिन्नधिकरणे गुणविधिनामधेयविचार' इति । गुरुमतानुसारिणां मतमाह—केचित्त्विति । अधिकारचोदनाः फलसम्बन्धबोधका विधयः । तेषु हि स्वर्गकामादेः पुरुषस्य कार्यं फलपर्यन्तस्थाय्यपूर्वाख्यं लिङाभिधीयमानं कृतिमुखेन विषयमपेक्षमाणं धात्वर्थ-विषयमुपपदार्थविषयं वेति विचारयितुं शक्यते । उत्पत्तिवाक्यादिषु त्वधिकारापूर्वानुवादत्वावग-

---

१. 'शुक्लं वलक्ष्याः पवित्रमोतं भवति' इत्यापस्तम्बोक्तं लक्षणमनुसन्धेयम् ।

हरन्ति। तासु च सर्वासु विरुद्धत्रिकद्वयापत्त्या नामैवोपपदम्। अतो नामोपपदान्येवोदाहरणमित्याहुः। तदयुक्तम्; तथाहि—यद्यपि तावदधिकारचोदना एवोदाहरणम्, तथाऽपि न तासु सर्वासु नामैवोपपदम्। यदेव हि यौगिकवाक्यभेदतत्प्रख्यतद्व्यपदेशयुक्तं तदेव नामधेयम्, इतरत्त्वधिकारावगतमपि गुणार्थमेव। यथा 'यः कामयेत वीरो म आजायेतेति स चतुर्होतारं जुहुयात्' इति चतुर्होतृशब्दो मन्त्रवचनो न नामधेयम्। तथा 'यद्येनमार्त्विज्याद्वृतं सन्तं निर्हरेरन्नाग्नीध्रे जुहुयाच्चतुर्गृहीतेनाज्येन' इति नैमित्तिकाधिकारगतमाज्यपदं न नामधेयम्। न च विरुद्धत्रिकद्वयापत्तिः, मत्वर्थलक्षणया विशिष्टविधानसंभवात्। वरञ्च लक्षणाऽप्रसिद्धार्थकल्पनातः, इतरथा हि 'सोमेन यजेत' इत्यपि सोमपदं नामधेयं स्यात्। उत्पत्तिवाक्येऽपि गुणपक्षे लक्षणाऽस्तीत्यभ्यासाधिकरणे स्वयमेव निबन्धनकारेणोक्तं 'यागविधानेने' त्यादिना। युक्तं चैतत्। तथाहि-तत्रापि हि यद्यपि प्रथममपूर्वान्तरमप्रतिपन्नम्, तथाऽपि प्रत्ययेन तावत्तदेवाभिधीयते, तत्करणञ्च याग इति दोषसाम्यान्नामत्वं स्यात्।

---

मान्न कार्यान्तरं प्रतीयते, येनायं विचारः स्यादिति भावः। तासु चेति। नामातिरिक्तद्रव्यगुणाद्युपपदसत्वे हि वाजपेयाधिकरणोक्तं कर्मणः फलं प्रति विधेयत्वम्, गुणं प्रत्यनुवाद्यत्वम्, फलं प्रत्युपादेयत्वम्; गुणं प्रत्युद्देश्यत्वम्, फलं प्रति गुणत्वम्, गुणं प्रति प्रधानत्वञ्चेति विरुद्धत्रिकद्वयमापद्येतेत्यगत्या नामैवोपपदं वाच्यमित्यर्थः। अत इति। नामोपपदान्येवाधिकारवाक्यानीत्यर्थः। आद्यं नियमं तावदभ्युपेत्य द्वितीयनियमं दूषयति—यद्यपीति। यौगिकेति भावप्रधानम्। गुणार्थमेव गुणविध्यर्थमेव। नैमित्तिकेति। आर्त्विज्यभ्रंशने निमित्ते ऋत्विज एवायं विधिरिति न क्रत्वर्थः, किन्तु स्वतन्त्राधिकार इति भावः। अस्तु मत्वर्थलक्षणादोषादेव नामत्वमित्याशङ्क्याह—वरञ्चेति। ननूत्पत्तिवाक्ये कर्मत्वेनैव धात्वर्थावगतेस्तत्र च सोमादेः करणत्वेनैवान्वयसम्भवान्न मत्वर्थलक्षणाप्रसङ्ग इत्याशङ्क्याह—उत्पत्तीति। गुणपक्षे गुणविधिपक्षे। ननु 'समिधो यजति' इत्यादौ समिदादिपदस्य द्वितीयान्तत्वेन साध्यार्थकत्वात्साध्यस्य च तस्य साध्यभूतधात्वर्थान्वयायोगात्समिद्वन्तं यागं कुर्यादिति मत्वर्थलक्षणा युक्ता। 'सोमेन' इत्यत्र तु सोमस्य करणत्वेन यागान्वयसम्भवेन न लक्षणेत्यत आह—युक्तञ्चैतदिति। एतत् सोमादिपदानां नामत्वापादनम्। उपपत्तिमाह—तथाहीत्यादिना। तत्रापि सोमेनेत्यादावपि। इति दोषसाम्यान्नामत्वं स्यादित्यन्वयः। प्रथमं अधिकारापूर्वानुवादशङ्कायाम्। प्रत्ययेन उत्पत्तिवाक्यगतेन लिङ्गादिना। तदेव अपूर्वान्तरमेव। अयमभिसन्धिः—अधिकारवाक्यगतेन लिङा कार्यत्वेनापूर्वमभिधीयते। कार्यत्वञ्च कृतिसाध्यत्वम्। कृतिश्च सविषयेति विषयाकाङ्क्षायां यागस्सम्बध्यते—यागकृतिसाध्यमिति। कृतेश्च साक्षादपूर्वसाधनत्वासम्भवाद्याग एव तद्घटकतयाऽपि सम्बध्यते यागद्वारा कृतिसाध्यमिति। इदञ्च कार्यताघटकरूपं साधनत्वं करणत्वाद्भिन्नमेव। ततः केन कार्यमिति कृतिरूपभावनाद्वारा करणकाङ्क्षायां ग्राहकसंज्ञेन प्रधानापूर्वेण करणत्वेनोत्पत्तिवाक्यावगतो यागो गृह्यते। तदेतद्ग्राहकग्रहणमित्युच्यते। तदुक्तं भवनाथेन—

न चैवं युक्तम्[1]। किञ्च 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' 'वायव्यं श्वेतमालभेत' इत्यधिकारचोदनेयम् । अत्र चरुं श्वेतमिति द्रव्यगुणशब्दौ सौर्यादिपदं भावार्थं नियोगविषय इति निबन्धनकारः शब्दानुबन्धवादी मन्यते। तेन तदप्यत्रोदाहरणम्, भावार्थयुक्तार्थचोदनात्वाच्च[2]। तथा हिरण्यं भार्यमित्यक्रत्वर्थत्वाद्विश्वजिदादिवदुदाहरणम् । अत्र चरुश्वेतहिरण्यसौर्यशब्दा द्रव्यगुणवचना न नामधेयम् । अतो नामोपपादान्येवोदाहरणमित्ययुक्तमेतत्, भाष्यविरुद्धञ्च । भाष्यकारो हि भावार्थाधिकरणस्य प्रयोजनमभिदधानः सिद्धान्ते श्रुतद्रव्यापचारे प्रतिनिध्युपादानं प्रयोजनमाह । नामधेयत्वे हि कस्य प्रतिनिधिः स्यात्?

---

कृतितत्साध्यमध्यस्थो यागादिर्विषयो यतः।
कार्ये सङ्कुटिताकारे करणत्वेन सम्मता ।। इति ।

करणत्वञ्च प्रधानापूर्वं प्रति यागस्य समस्ताङ्गोपकृतस्यैव । तदुपकारश्च न क्षणिकस्य सम्भवतीत्यवान्तरापूर्वमवश्यं कल्प्यम् । तदेव चोत्पत्तिवाक्यगतलिङ्प्रत्ययवाच्यं पश्चादवगम्यते । तत्रापि च यागस्य न साध्यतयान्वयः, किन्तूक्तरीत्या करणत्वेनैव । तथाच तत्र सोमादेः करणत्वेनान्वये विरुद्धत्रिकद्वयं मत्वर्थलक्षणा वेति नामधेयत्वापत्तिरिति । इष्टापत्तिमाशङ्क्य निराकरोति—न चैवमिति । पशुसोमाधिकरणे गुरुणा सोमलताविधानस्योक्तेरिति भावः । क्वचित्तु कर्माश्रवणान्नामत्वशङ्कापि नेत्याह—किञ्चेति । नन्वत्रोदाहरणीभूतानामधिकारचोदनानां नामोपपदत्वनियमः, उक्तविध्योश्च नेहोदाहरणत्वम्, 'भावार्थाः' इति सूत्रवशेन धात्वर्थयुक्तानामेवोदाहरणत्वात् । उक्तस्थले च निर्वापालम्भयोरनुवाद्यत्वेन तथात्वाभावादित्याशङ्क्याह-सौर्येति । भावः साध्यरूप धात्वर्थ एवार्थो द्रव्यदेवतासम्बन्धो यस्य तत्तथा । देवतासम्बन्धस्यापि यागसाध्यत्वात् श्रुतत्वाच्च नियोगविषयत्वमित्यर्थः । पदस्य नियोगविषयत्वोक्तिरर्थद्वारिका भावशब्देभ्योऽपूर्वमित्यादिवत् ज्ञेया । ननु सम्बन्धस्याक्रियारूपस्य साक्षात्कृतिविषयत्वायोगात्तदाक्षिप्तयागस्यैव विषयत्वं विवरणे गुरुणोक्तमत आह–शब्देति । शब्दमेव स्वार्थद्वारा अनुबन्धम् अपूर्वविषयं वदतीति तथा शब्दबलवादितया निबन्धनाख्यभाष्यटीकायां प्रवृत्तो गुरुरेव तथोक्तवानित्यर्थः । तथा च सम्बन्धस्य साक्षात्कृत्यविषयत्वेऽपि यागद्वारा तथात्वमित्यर्थः । तेन तन्मतानुसारेण । कल्प्याधिकारविधिष्वपि व्यभिचारमाह–तथेति । अक्रत्वर्थत्वात् अनारभ्याधीतत्वेन क्रत्वनङ्गत्वात् । त्रिष्वप्युदाहरणेषु नामोपपदत्वाभावमाह–अत्रेति । एष्वित्यर्थः । द्वितीयनियमखण्डनमुपसंहरति–अत इति । मूलविरोधमप्याह–भाष्येति । पूर्वपक्षे सोमादीनामपि फलापूर्वजनकत्वाददृष्टार्थस्य च प्रतिनिध्यभावान्न प्रतिनिध्युपादानम्, सिद्धान्ते तु यागस्यैव फलापूर्वसाधनत्वम्, सोमादेस्तु दृष्टविधयैव यागार्थत्वमिति सोमाभावे तत्सदृशलतारूपप्रतिनिध्युपादानं प्रयोजनमुक्तम् । सोमपदस्य नामत्वे तु तदसङ्गतमित्यर्थः । पूर्वमभ्युपगतं

---

१. न चैवमिष्टम् इति क.   २. युक्ताधिकारेति क.

न चावश्यमधिकारचोदना एवोदाहरणम् 'सोमेन यजेत' 'हिरण्यं ददाति' इत्यादिष्वपि कुतोऽपूर्वमिति विचारसंभवात् । यद्यपि तेषु प्रधानापूर्वानुवादशङ्कायां न प्रथममपूर्वान्तरं प्रतीयते, तथापि पश्चादपि तावत्प्रतीयमानं किं विषयं प्रत्येतुं न्याय्यमिति सम्भवति चिन्ता । ननु पश्चात्कारकविशिष्टस्य[1] कर्मणो ग्राहकगृहीतस्यावान्तरव्यापारत्वेन कल्प्यमानं भावार्थविषयत्वेनैव निर्णीतमिति न विचारावसरः । स्यादेवं यदि कर्मैव ग्राहकेण गृह्यत इति प्रागस्मादधिकरणात्सिद्धं[2] स्यात्, न तु तत्सिद्धम् । अत्रैव ह्येतद्विचार्यते–किं सर्वाणि पदानि क्रियाकारकसंबन्धानादरेणापूर्वस्य विषयीभवन्ति ? उत क्रियाकारकसंबन्धापरित्यागेनेतरपदविशेषितमेकमेव पदम् ? यदाप्येकं तदाऽपि द्रव्यादिपदं भावार्थविशेषितं विपरीतं वेति ? तत्र क्रियाकारकसम्बन्धावगमात्प्रागपि द्रव्यगुणयोर्भावार्थकारकत्वेन श्रवणादन्योत्पादकस्वभावाच्च[3] भावार्थादेवापूर्वमिति स्थिते चास्मिन् क्रियाकारकसम्बन्धापरित्यागन्याये ग्राहकग्रहणमपि भावार्थस्यैव भवति । तस्यान्योत्पादकस्वभावत्वात्कारकत्वाच्च द्रव्य-

---

नियममपि दूषयति–न चेति । पश्चात् ग्राहकग्रहणोत्तरम् । अवान्तरव्यापारत्वेन कल्प्यमानमित्यन्वयः । ग्राहकेण फलापूर्वेण विषयतया गृहीतस्य तदन्वितस्येति यावत् । अवान्तरेति । अङ्गोपकृतस्यैव फलापूर्वजनकतया क्षणिकस्य तदयोगादुत्पत्त्यपूर्वं परिकल्प्य तदात्मनाङ्गोपकारसाहित्य' सम्पादनादिति भावः । भावार्थो धात्वर्थः ग्राहकेण कर्मण एव ग्रहणमिति निश्चयस्यैतदधिकरणाधीनत्वात्ततः पूर्वञ्च ग्राहकेणोपपदार्थं विशिष्टं कर्म गृह्यते, कर्मविशिष्टोपपदार्थो वेति सन्देहात्किं ग्राहकगृहीतं कर्मावान्तरापूर्वविषयः उत उपपदार्थ इति संशयसम्भवादस्ति विचारावसर इत्याह–स्यादेवमिति । ग्राहकेण कर्मग्रहणस्यैतदधिकरणाधीनत्वप्रदर्शनाय प्रतिपदाधिकरणविचारं भावार्थाधिकरणविचारञ्च गुरुमतानुसारिणां दर्शयति–किमित्यदि । विषयीभवन्ति विषयसमर्पकाणि भवन्ति । यदापीति भावार्थाधिकरणप्रदर्शनम् । द्रव्यादिपदमिति । होमाश्रितदधिवदित्यर्थः । प्रतिपदाधिकरणसंशयसिद्धन्तस्योत्सूत्रत्वाद्भावार्थाधिकरणसिद्धान्तमेव तात्पर्यवसानरूपमाह–तत्रेति । एवं संशये सतीत्यर्थः । क्रियाकारकयोरिव कारकापूर्वयोरपि समभिव्याहाराविशेषात्कुतो नान्वय इति शङ्कानिरासायाह—कारकत्वेनेति । तृतीयाश्रुत्येत्यर्थः । कारकत्वस्य च क्रियासाधनत्वरूपत्वात्क्रियानन्वये तद्विरोध इति भावः । ननु "दध्नेन्द्रियकामस्य जुहुयात्" इत्यादिवत्क्रियासाधनत्वेऽपि तदाश्रितस्यापूर्वसाधनता स्यादत आह—"अन्येति । कृतिसाध्यरूपकार्यस्य हि कृत्यंशे विषयापेक्षायां साध्यरूपधात्वर्थस्यैव तत्त्वेनान्वयो घटते, न तु सिद्धरूपद्रव्यादेरित्यर्थः । "दध्नेन्द्रियकामस्य" इत्यादौ तु होमस्य प्राप्तत्वाद्दध्यादेरेव कथञ्चित्क्रियानुप्रवेशे न साध्यावस्थतया कार्यान्वय इति भावः । प्रतिपदाधिकरणस्य प्रयोजनमाह—स्थिते चेति । गम्यमानः क्रियाकारकसम्बन्धो न त्याज्य इति प्रतिपदाधिकरणन्याये स्थिते निरूपिते सति ग्राहकेणापूर्वेण विषयतया ग्रहणं भावार्थस्यैव भवतीति भावार्थाधिकरणसिद्धान्तः

---

१. तत्पश्चादिति क. २. प्रागस्मादधिकारादिति ख. ३. स्वभावत्वाच्चेति क.

गुणयोः। अतश्चापूर्वमपि तत एव स्यात्। असति तु तस्मिन् न्याये हिरण्यं ददातिश्च मिथस्सम्बन्धानादरेण ग्राहकेण गृह्येयाताम्। दानोपसर्जनं वा हिरण्यम्। ततश्चापूर्वमपि पश्चात्कल्प्यमानमुभयविषयं हिरण्यविषयं वा स्यात्। तस्मात्तत्रापि भावार्थविषयत्वमपूर्वस्यैतदधिकरणाधीनमिति युक्तमुदाहरणत्वम्। तस्माददृष्टार्थं सर्वमत्रोदाहरणम्।

**तत्र संशयः**—किं सर्वाणि पदानि प्रत्येकमपूर्वं प्रतिपादयन्ति? उतैकमिति? तदर्थमिदं विचार्यते—किं सर्वेषामर्थाः फलभावनायां करणम्। उतैकस्यैव करणत्वम् इतरे च तदर्था इति। यच्च फलसाधनं ततोऽपूर्वं कल्प्यते। अतो यस्तस्य वाचकस्तेनापूर्वं[1] प्रतिपादितं भवतीति। ततश्च सर्वेषां फलसाधनत्वे सर्वेभ्योऽपूर्वमेकस्य तु साधनत्वे तत एवापूर्वमिति।

तत्र प्रधानसम्बन्धलाभादवैरूप्याच्च सर्वेषां फलेन सम्बन्धः। अन्यथा हि यत्फलसाधनं तस्य फलं प्रत्युपादानविधानगुणभावात्, इतरत्तु प्रत्युद्देशानुवादप्रधानत्वाद्वैरूप्यं, मत्वर्थलक्षणा वा स्यात्। तस्मात्सर्वेषां फलसम्बन्ध इति प्राप्तेऽभीधीयते—

अपूर्वस्य तावददृष्टत्वादेककल्पनयैवोपन्ने वाक्ये नानेककल्पनमुपपत्ति-

---

सिध्यतीत्यर्थः। अतश्च ग्राहकग्रहणाच्च। अपूर्वमपि अवान्तरापूर्वमपि। ततश्च संशयायोगादुदाहरणता न स्यादिति शेषो बोध्यः। एतन्न्यायासिद्धौ तु युक्ता सर्वेषामदृष्टार्थानामुदाहरणतेत्याह—असति त्विति। असिद्धे इत्यर्थः। "हिरण्यं ददाति" इति क्रत्वङ्गबोधकवाक्ये प्रतिपदाधिकरणभावार्थाधिकरणपूर्वपक्षयोः क्रमेण कथनम्। पश्चात् ग्राहकग्रहणोत्तरम्। तदर्थतोपपत्यर्थं कल्प्यमानमवान्तरापूर्वमित्यर्थः। उपसंहरति—तस्मादिति। तत्रापि 'हिरण्यं ददाति" इत्यादावपि। तस्मादिति। सर्वसाधारणोपसंहारः।

इदानीं स्वमतेन भावार्थाधिकरणाङ्गतया प्रतिपदाधिकरणविचारं दर्शयितुं संशयमाह—तत्रेति। उक्तोदाहरणेष्वित्यर्थः। अनन्तरसंशयस्य पूर्वसंशयार्थतां दर्शयति—यच्चेति। तस्य फलसाधनस्य। तथा च यस्यार्थोऽपूर्वकल्पकस्तत्पदमपूर्वप्रतिपादकत्वेनाद्यसंशये विवक्षितमित्यर्थः।

पूर्वपक्षमाह—तत्रेति। अन्यथा सर्वेषां फलसम्बन्धाभावे। गौरवन्तु फलसम्बन्धोत्तरकालत्वात्फलमुखतया न दोष इत्याशयः। वैरूप्यपरिहाराय मत्वर्थलक्षणाङ्गीकारे तु सैव दोष इत्याह—मत्वर्थेति। सर्वेषां फलसम्बन्धे तु क्रियाकारकसम्बन्धस्यारुणैकहायन्यादिवत्पार्ष्टिकत्वान्न मत्वर्थलक्षणेति भावः। अत्र च सर्वेषां भेदेन साधनत्वश्रवणान्न समुच्चितानामग्नीषोमादिवत्साधनत्वम्, किन्तु साधनानां समुच्चयः। परस्परापेक्षत्वादरुणैकहायन्यादिवदेकवाक्योपादानादिति बोध्यम्।

: अदृष्टत्वात् मानान्तरेणानवगमात्। नानेकेति। समुच्चयवशेन परमापूर्वकत्वेऽप्युत्पत्त्य-

---

1. यस्तस्य वाचकत्वेनेति ख.

मत् । तस्मादेकमेव फलसाधनमितरत्तु तदर्थमिति । न च वैरूप्यं, श्येनादीनां नामत्वसम्भवात्, सोमादिषु मत्वर्थलक्षणाश्रयणात् । वरञ्चादृष्टकल्पनातो लक्षणा । तस्मादेकमपूर्वम् ।

**यदैकं सदा संदेहः**—किं भावशब्देभ्यः ? उत द्रव्यगुणशब्देभ्यः ? इति । तदर्थं च किं भावार्थाः फलेन सम्बध्यन्ते ? किं वा द्रव्यगुणशब्दार्थाः ? इति नन्वनियमेन यत्किञ्चिद्भवतु न त्ववश्यं नियन्तव्यम् । उच्यते-नानियमो वाक्येन बोधयितुं शक्यते, तस्यैकरूप एवार्थः ।न हि तत्कदाचिद्यागस्य फलवत्त्वमितरस्य च तादर्थ्यं प्रतिपादयति, कदाचिच्च विपर्ययम्, वचनव्यक्तिभेदात् । तस्मादेकरूप एव वाक्यार्थः । स किंरूप इति चिन्तयितव्यम् । तत्रानध्यवसायमेव कचित्पूर्वपक्षमाहुः । तदयुक्तम्; तथा ह्यप्रमाणमेव स्यात्, तच्चायुक्तम् । तथा सति हि प्रमाणलक्षण एवायं विचारः स्यात् न त्विह, सिद्धत्वात्प्रामाण्यस्य । ननु पक्षद्वयेऽप्यनुष्ठानस्यैकरूपत्वेनाध्यव्यवसितत्वान्नाप्रामाण्यं, मूर्खप्रलपितमेतत् । यदि पक्षद्वयेऽपि न कश्चिदनुष्ठाने विशेषः किमर्थमधिकरणम् ? अपि च पूर्वपक्षे श्येनादीनां गुणविधित्वात् श्येनद्रव्येण

---

पूर्वानेकत्वप्रसङ्गो बोध्यः । न च गौरवस्य फलमुखत्वम्, अपूर्वकल्पनां विना फलसम्बन्धस्यापर्यवसानादिति भावः । मत्वर्थलक्षणेव दोष इत्याशङ्क्याह—वरञ्चेति ।

एवमुत्सूत्रमार्थिकं विचारं प्रदर्श्य प्राप्तावसरं भावार्थाधिकरणसंशयमाह—यदैकमिति निष्प्रयोजनतया भावार्थाधिकरणारम्भमाक्षिपति—नन्विति । बह्वदृष्टकल्पना हि समुच्चयपक्ष एव। कस्यचित्कदाचित्फलसम्बन्धे तु न सापि । न चानुष्ठानाय विचारः, तद्भेदाभादित्याशयः । एकस्माद्वाक्यादनेकविधार्थबोधे वाक्यभेदप्रसाङ्गादेकविधवाक्यार्थबोधस्य च तात्पर्यनिश्रयाधीनत्वात्तद्धेतुन्यायनिरूपणमावश्यकमित्याह—उच्यत इति । न विद्यते नियमो यस्य स तथा । अनियतोऽर्थ इत्यर्थः । विपर्ययम् उपपदार्थस्य फलार्थत्वम्, यागस्य तदर्थत्वम् ननु "य इष्टचा पशुना सोमेन वा" इत्यादावमावास्यापूर्णमास्योरव्यवस्थाबोधनं दृष्टमित्याशङ्क्याह—वचनेति । वचनस्य वाक्यस्य व्यक्तिः स्वरूपं तद्भेदादित्यर्थः । स च द्रव्यविशिष्टयागेन फलं भावयेत्, यागविशिष्टद्रव्येण वा फलं भावयेदित्येवं बोध्यः । "य इष्टचा" इत्यादौ तु वाशब्देन विकल्पस्यैकस्यैव बोधनान्न वाक्यभेद इति भावः । इत्थमधिकरणाक्षेपो न्यायेन स्वयं समाहितः । प्राभाकरास्तु अयमेव पूर्वपक्षो भावार्थाधिकरणेन निरस्यत इति वदन्तीत्याह—तत्रेति । दूषयति—तदिति । अप्रमाणमेवेत्यनन्तरं वाक्यमिति शेषः । इष्टापत्तिमाशङ्क्याह—तच्चेति । तथा तथाहि सतीत्यर्थः । प्रमाणलक्षणे प्रमाणाध्याये प्रथमे । इह भेदलक्षणे । वाक्यार्थानध्यवसानेऽप्यनुष्ठानस्यासन्दिग्धत्वेनाननुष्ठापकत्वरूपमप्रामाण्यं नेति शङ्कते—नन्विति । पक्षद्वयेऽपि द्रव्यादेर्यागाद्यर्थत्वं यागादेर्वा द्रव्याद्यर्थत्वमिति पक्षद्वयेऽपि । एकरूपत्वेन द्रव्यनिष्पाद्यक्रियारूपत्वेन । किमर्थमिति । काकदन्तपरीक्षावन्निष्प्रयोजनत्वादित्यर्थः । अनुष्ठानैकरूप्यमप्यसिद्धमित्याह—अपिचेति । श्येनादीनां श्येनादिपदानाम् । गुणविधित्वात् फलोद्देशेन द्रव्यविधायकत्वात् ।

यष्टव्यम्। सिद्धान्ते तु नामधेयत्वात्सोमेन यष्टव्यमित्यस्ति विशेषः। यथाऽऽह भाष्यकारः—'स्थित एतस्मिन्नधिकरणे गुणविधिर्नामधेयमिति विचारः, इति। यत्तु न सिद्धान्तेऽपि नामधेयं यथा 'सोमेन यजेत' इति, तत्र प्रतिनिधिसद्भावः प्रयोजनम्। तदप्याह भाष्कारः–'यदि द्रव्यगुणशब्दा अपूर्वं बोधयन्ति द्रव्यगुणापचारे न प्रतिनिधिरुपादातव्यो यथा पूर्वपक्षः, यथा तर्हि सिद्धान्तः—द्रव्यं गुणं वा प्रतिनिधाय प्रयोगोऽनुष्ठातव्य' इति। तस्मात्प्रसज्यत एवाप्रामाण्यमिति नैवं पूर्वः पक्षः, किन्तु द्रव्यादिभ्योऽपूर्वं त एव फलसाधनमिति। कुतः?

**फलं हि साध्यमानत्वात्सिद्धं साधनमिच्छति।**
**द्रव्यादि च तथा यागः स्वयं साध्यो न साधनम्॥**

'श्येनेनाभिचरन् यजेत' इत्यादौ फलं, 'समिधो यजती' त्यादौ च फलवदुपकारः, साध्यरूपत्वात्सिद्धरूपं साधनमपेक्षते, न साध्यान्तरम्। द्रव्यगुणौ च सिद्धरूपत्वात्तदाकाङ्क्षां पूरयितुं समर्थौ। यागादयस्तु स्वयमेव साध्यत्वान्न साधनत्वयोग्याः। तस्मात् द्रव्यादिभ्यः फलम्। यत्तु भाष्यकारेण 'अविशेषेण' इत्युक्तं तत् शब्दतो विशेषानवगमाद्वस्तुस्वभावेन द्रव्यादिभ्य एव फलं युक्तमित्येतदभिप्रायम्। तस्माद्द्रव्याद्येव फलभावनायाः करणमिति प्राप्तेऽभिधीयते—

---

सोमेनेति। ज्योतिष्टोमातिदेशेन सोमद्रव्यकत्वावगमादिति भावः। ननु तद्व्यपदेशाधिकरणे श्येनपदस्य नामत्वस्थानापनात्कथं पूर्वपक्षे द्रव्यविधायकत्वमिति शङ्कानिरासाय भाष्यसम्मतिमाह-यथाहेति। धात्वर्थस्यैव फलकरणत्वे भावार्थाधिकरणेन सिद्धे हि तत्सामानाधिकरण्यान्नामत्वं सिध्येत्। पूर्वपक्षे तु–उपपदार्थस्य द्रव्यादेः फलकरणतया न तत्सिद्धिरित्यर्थः। नामातिरिक्तोपपदे प्रयोजनभेदमाह—यत्त्विति। अपूर्वं बोधयन्ति कल्पयन्ति। अपूर्वकरणीभूतार्थका भवन्तीति यावत्। यथायं पूर्वपक्षो यदि तदेति शेषः। न प्रतिनिधिरिति। अदृष्टार्थत्वादिति भावः। तर्हीति त्वर्थे। यथा तु सिद्धान्तस्तत्र द्रव्यगुणयोर्दृष्टद्वारेण क्रियार्थत्वात्प्रनिधिरिति। तर्हि कथं पूर्वपक्ष इत्याशङ्कायां स्वमतेन तमाह—किन्त्विति। पूर्वपक्षयुक्तिं सङ्गृह्णाति—फलं हीति। इच्छति आकाङ्क्षति। तथा सिद्धस्वरूपम्। फलपदेनेष्टमात्रं श्लोके विवक्षितमिति सूचयितुमाह—समिध इति। न साध्यान्तरमिति। तस्यासिद्धत्वेन स्वनिष्पादनाक्षमत्वादिति भावः। नन्वविशेषेणेति पूर्वपक्षभाष्यं त्वन्मतेऽसङ्गतमित्याशङ्कयानध्यवसानं पूर्वपक्षस्योक्तरीत्यासम्भवादन्यथा व्याख्येयमित्याह—यत्त्विति। शब्दतः शब्दमर्यादया। विशेषेति। धात्वर्थे हि सन्निकृष्टत्वमात्रम्। कारकत्वन्तु न श्रुतं किन्तु कल्प्यम्। सोमादेस्तु तृतीयया कारकत्वं श्रुतम्, न तु सन्निकृष्टत्वमिति फलभावनान्वये न कस्यापि विशेष इत्यर्थः। वस्तुस्वभावेन सिद्धत्वरूपेण। तथा च कारकश्रुतिसन्निधानयोर्द्वयोरेकत्राप्यसत्वादन्यतरस्य चोभयत्रापि सत्वादविशेषेऽपि द्रव्यादेः सिद्धत्वेन योग्यताया आधिक्यात्तेषामेव फलभावनायां करणत्वमिति भावः।

धात्वर्थस्य करणत्वसाधिकां समानपदोपात्तत्वश्रुतिमुपपादयितुं फलकरणयोस्साक्षादन्वयं

भावनैव हि भाव्येन फलेनान्वेतुमर्हति ।
धात्वर्थः करणं तस्यां लाघवात्सन्निकर्षतः ॥

फलमपि कारकं करणमपि । न हि कारकाणि मिथस्सम्बध्यन्ते, किन्तु क्रियया । सा चेह प्रत्ययवाच्या फलभावना । तेन तयैव फलं सम्बध्यते तद्द्वारेणैव करणस्य फलसम्बन्धः, तस्यां च धात्वर्थस्यैव करणत्वं युक्तम्, कल्पनालाघवात् । तस्मिन् हि फलवत्यपूर्वसाधने कल्पिते द्रव्यादेस्तन्निर्वृत्तिर्दृष्टमेव प्रयोजनम्, द्रव्यादिभ्यस्त्वपूर्वे कल्प्यमाने धात्वर्थोऽसिद्धरूपः; सिद्धरूपस्य द्रव्यादेर्न दृष्टमुपकारं शक्नोति कर्त्तुमिति ततोऽप्यपरमदृष्टं कल्पनीयम् । सन्निकृष्टश्च प्रकृत्युपात्तो धात्वर्थः प्रत्ययवाच्यया भावनया पदश्रुत्या सम्बध्यते । द्रव्यादि तु पदान्तरेणोपात्तं वाक्येन । श्रुतिश्च वाक्याद्बलीयसी । साध्यरूपोऽपि धात्वर्थः स्वसाधननिष्पादितः सन् शक्नोति फलं साधयितुम् । तस्मात्स एव भावनायाः करणम् ।

---

निरस्यति—भावनैव हीति । एवकारेण करणव्यवच्छेदः । भावनानुकूलव्यापाररूपा हि भावना भवनाश्रयकर्म नियमेनापेक्षते भावयेत्किमिति । तस्यां फलकर्मिकायां भावनायां केनेत्याकाङ्क्षायां धात्वर्थः करणं, वक्ष्यमाणलाघवात् । एकपदोपात्तत्वेन सन्निकर्षाच्चेत्यर्थः । श्लोकं व्याचष्टे—फलमपीति । क्रियां कुर्वद्धि कारकमिति स्मरणाद्दण्डं घटेनेत्येतावतान्वयादर्शनात्क्रियामन्तर्भाव्यैव शब्दशक्तिस्वाभाव्यादन्वयव्युत्पत्तेरिति भावः । तस्मिन् धात्वर्थे । तन्निर्वृत्तिः धात्वर्थस्य निष्पत्तिः । पूर्वपक्षे तु कल्पनागौरवमित्याह—द्रव्यादिभ्यस्त्विति । सिद्धेन ह्यसिद्धस्य निष्पत्तिरूपदृष्टोपकारसम्भवः, न त्वसिद्धेन सिद्धस्य । यदि त्वसिद्धस्यापि यागादेस्तेनैव सोमादिना सिद्धस्य तमेव प्रत्यङ्गत्वं, तदा आवश्यकत्वाद्द्रव्यमेव तदर्थं न्याय्यम् । उपकारश्च यागादिना न दृष्टरूपो द्रव्यस्य सम्भवति । न च द्रव्यस्य सिद्धस्य फलजनकत्वासम्भवात्तद्व्यापारत्वेन यागादेर्दृष्टोपकारजनकत्वम् । द्रव्यसाध्यत्वस्य यागेऽत्रश्याङ्गीकरणे पुनर्द्रव्यार्थतायां मानाभावात् प्रकरणप्राप्त्यभावेन यागतदाश्रयत्वादिबोधनेऽतीव गौरवाच्चेत्याशयः । यद्यप्यसिद्धस्याप्यवघातादेः सिद्धव्रीहिषु दृष्टोपकारजनकत्वमस्ति, तथापि 'सोमेन यजेत' इत्यादिवद्बहुतरवाक्येषु तदभावादुत्सर्गत इदमुक्तम् । ननु सोमेनेति कारकश्रुत्या सोमादेः करणत्वावगमाद्धात्वर्थाददृष्टकल्पनमपि प्रामाणिकत्वान्न दोष इत्यत आह—सन्निकृष्टश्चेति । पदश्रुत्या पदश्रवणमात्रेण पदान्तरसमभिव्याहारनिरपेक्षेण । केवलप्रत्ययप्रयोगाभावात्प्रकृत्यर्थविशिष्टस्यैव स्वार्थस्याभिधानात् । वाक्येन साकाङ्क्षपदसमभिव्याहाररूपेण । तथाच कारकश्रुतिः प्रकृत्यर्थविशिष्टकरणत्वांश एव । तस्य क्रियासम्बन्धांशं तु वाक्यमेव लक्षणया प्रतिपादयति । वाक्यार्थे वाक्यस्य लक्षणाभ्युपगमादिति भावः । ननु सिद्धस्यैव साधनत्वं न साध्यस्येत्युक्तमत आह—साध्यरूपोऽपीति । फलाव्यवहितपूर्वकाले सिद्धत्वसम्भवान्न साधनत्वविरोध इति भावः ।

धात्वर्थातिरिक्तभावनाया आख्यातवाच्यत्वे सति तस्यां धात्वर्थः करणम्, तदेवासिद्धमिति

का पुनरियं धात्वर्थातिरेकिणी भावना नाम, यस्यां धात्वर्थः करणम्? कर्तृव्यापार इति चेत्, नन्वसौ पचावधिश्रयणादिर्यजौ च मानसस्त्यागस्तद्धेतुर्वा प्रयत्नः सङ्कल्पो वा, गतौ चलनम्, ते चाधिश्रयणत्यागप्रयत्नसङ्कल्पचलनादयो धात्वर्था एवेति न धात्वर्थातिरेकिणीं भावनामुपलभामहे। प्रयत्नो भावनेति चेत्, रथो गच्छतीत्यादौ तदभावे व्यभिचारः। स्पन्द इति चेत्, यजेतेत्येवमादिष्वात्मकर्तृकेषु व्यभिचारः। उभयसाधारणमुदासीनत्वविच्छेदसामान्यं भावनेति चेत्, शब्दादिष्वभावप्रसङ्गः। न हि शब्दस्य विभोरचेतनस्य प्रयत्नः परिस्पन्दो[1] वाऽस्ति। तत्र

अभिधाभावनामाहुरन्यामेव लिङादयः
अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यते ॥

इत्यादिविरोधः। तस्माद्वक्तव्यं भावनारूपम्। किमत्रोच्यते? उक्तं ह्येतदाचार्यैः—

---

शाब्दिकमतेन शङ्कते—का पुनरिति। विक्लृत्यादिरूपं फलमेव धात्वर्थस्तदनुकूलः कर्तृव्यापारस्त्वाख्यातार्थः। तदसत्वे पाक इत्यादौ तदप्रतीतेरिति शङ्कते—कर्त्रिति। कर्तृव्यापारोऽप्यधिश्रयणादिः पच्यादिधातुवाच्य एव न फलमात्रम्। ग्रामो गमनवानिति प्रयोगापत्तेः, फलोत्पत्तितः प्राक् तदनुकूलाधिश्रयणादिव्यापारारम्भे पाको भवतीति प्रयोगानापत्तेश्चेति न धात्वर्थातिरिक्ता भावनास्तीत्याह—नन्विति। तर्हीत्यर्थे। असौ कर्तृव्यापारः। पचौ पचिधातुप्रयोगे। त्यागः—इदं न ममेति बुद्धिरूपः स हेतुर्यस्य तादृशः प्रयत्नः प्रक्षेपादिजनक इत्यर्थः। स्वकीयद्रव्ये 'न मम' इति ज्ञानासम्भवात्तदाकारा सङ्कल्पाख्या मनोवृत्तिरेव स्वत्वध्वंसानुकूला याग इत्याह—सङ्कल्पो वेति। धात्वर्था एवेत्येव पाठः। धात्वन्तरार्था एवेति पाठस्तु प्रामादिक एव। धात्वन्तरार्थत्वेऽपि प्रकृते प्रत्ययवाच्ये तस्मिन् धात्वर्थस्य करणत्वसम्भवेनासङ्गतेः, प्रयत्न इत्यग्रिमशङ्काग्रन्थानुपपत्तेश्चेति। तदभाव इति। भावनाभाव इत्यर्थः। स्पन्द इति। तार्किकाभिमतक्रियेत्यर्थः। गमेरुत्तरसंयोग एवार्थ इति तदतिरेकसिद्धिः। यत्नपक्षे सर्वेष्वचेतनकर्तृकेष्वसम्भवः, एतत्पक्षे तु चेतनकर्तृकेष्वपि बहुषु जुहोति गच्छति प्रोक्षत्यवहन्ति इत्यादिषु धात्वर्थानुकूलशरीरस्पन्दात्मकभावनासम्भव इति विशेषः। आत्मकर्तृकेषु आख्यातेष्विति शेषः। व्यभिचारः यद्यदाख्यातं तत्तद्भावनाभिधायीति नियमे व्यभिचारः उभयेति। प्रयत्नस्पन्दोभयानुगतमित्यर्थः। उदासीनत्वस्य विच्छेदोऽभावः कुर्वद्रूपत्वम्: सहकारिनिरपेक्षकार्यजनकत्वमिति यावत्। प्रयत्नस्पन्दाभ्यां हि चेष्टासंयोगादिजननेन किञ्चिदपेक्ष्यत इति भावः। शब्दादीति। तथा च शब्दोऽभिदधाति। इति प्रयोगानुपपत्तिरिति भावः। इष्टापत्तौ वार्तिकविरोध इत्याह—तत्रेति। तत्र मत इत्यर्थः। अभिधायाः शब्दस्य भावनां शाब्दभावनामित्यर्थः। लिङादय आहुरित्याख्यातेन शब्दभावनाभिधानानुकूलव्यापाररूपाया

---

१. परीति नास्ति ग.

'धात्वर्थव्यतिरेकेण यद्यप्येषा न लक्ष्यते।
तथाऽपि सर्वसामान्यरूपेणान्यावगम्यते' ॥

विवृतं चैतन्मण्डनेन—

'कथ्यमानाद्रूपभेदाद्द्विधा धात्वर्थसङ्गतिः।
अन्योत्पादानुकूलात्मा भावना किं प्रदुष्यतीति' ॥

एददुक्तं भवति--सत्यं न धात्वर्थातिरेकिणो भावना। धात्वर्थानामेव तु द्वे रूपे, पाको यागः प्रयत्नः संकल्पश्चलनं क्लेदनमभिधानं छेदनमिति प्रातिस्विकं धात्वभिधेयम् एकमक्रियात्मकं सिद्धस्वभावम्। अपरं तु सर्वधात्वर्थानुयायि करोतिप्रत्ययवेद्यं क्रियात्मकं साध्यस्वभावमन्योत्पादानुकूलात्मकमाख्याताभिधेयम्। तथाहि—यः स्पन्दते यो यजते प्रयतते चलति अभिदधाति, ते सर्वे करोतिप्रत्ययमनुभवन्ति भिन्नेष्वपि धात्वर्थेषु। तच्च रूपमुत्पाद्यवस्त्वन्तरकर्मकमेव सर्वदा प्रतीयते। तदेव च भवितुः प्रयोजकव्यापारो भावनेत्युच्यते। तच्चाख्यातेष्ववगम्यमानत्वात्तदभावे पाकादावनवगमादाख्याताभिधेयमाश्रीयते। येऽपि प्रयत्नं भावनामाहुः, ये च स्पन्दं, ये चोभयं, तेऽपि न स्वरूपेण, तेषां भावनात्वमाहुः, किन्त्वन्योत्पादानुकूलत्वरूपम्। तच्च सर्वधात्वर्थानामस्तीति सर्वव्याप्येव भावनारूपमङ्गीकर्त्तव्यम्। तस्मिश्च क्रियारूपे प्रकृत्युपात्तो यागादिः कदाचित्कर्मत्वेन संबध्यते पाकं करोति यागं करोतीति, कदाचित्करणत्वेन यागेन स्वर्गं करोति पाकेनौदनमिति यथाविवक्षितम्। तद्यदा

---

अर्थभावनाया लिङादिषु प्रतिपादनाद्विरोध इत्याशयः। रूपं स्वरूपम्। धात्वर्थेति। पाकाद्यनुकूलव्यापाररूपाधिश्रयणादेर्धात्वार्थाद्भेदेनैषा भावना यद्यपि न लक्ष्यते, तेषामपि भावनात्वात्, तथापि सर्वधात्वर्थसामान्यरूपेणान्या तेभ्यो भिन्नावगम्यते। सर्वधात्वर्थानुयायिकरोतिना पचति पाकं करोतीत्याख्यानविवरणात्। करोतिभावयत्योश्च पर्यायत्वात्तदर्थ एव भावनेत्यर्थः। विवृतमिति। कथ्यमानात् प्रकृतिप्रत्ययाभ्यां बोध्यमानात्। रूपभेदात् यागत्वान्योत्पादानुकूलत्वधर्मभेदात्। धात्वर्थे सङ्गतिः शक्तिर्द्विधा द्विरूपा यागत्वावच्छिन्ना धातोरन्योत्पत्त्यनुकूलत्वावच्छिन्ना प्रत्ययस्येत्यर्थः। तथाचान्योत्पादानुकूलात्मा भावना किं कुतः प्रदुष्यति धात्वर्थ एव भावनेति कथं भावनायां धात्वर्थस्य करणत्वमिति दोषो नेत्यर्थः। मतदोषस्य विषयभूतभावनायामारोपेणेत्थमुक्तिः।

एतदेव विवृणोति—एतदिति। अक्रियात्मकत्वे हेतुः--सिद्धेति। अन्योत्पादानुकूलव्यापारत्वेनाप्रतीयमानमित्यर्थः। सर्वधात्वर्थानुयायित्वेऽनुभवं प्रमाणयति—तथाहीति। प्रत्ययमनुभवन्ति प्रत्ययस्य विषयीभवन्तीत्यर्थः। धात्वर्थाद्वैलक्षण्यमाह—तच्चेति पाकादौ पाक इत्यादौ। न स्वरूपेणेति। न प्रयत्नत्वादिनेत्यर्थः। नियमेन कर्मसाकाङ्क्षत्वानुपपत्तेरित्याशयः। किन्त्वन्योत्पादानुकूलं रूपं भावनामाहुरिति व्यवहितेन सम्बन्धः। ननु पचति पाकं करोति इति विवरणत्कर्मत्वेनैव धात्वर्थान्वयो दृश्यते तत्कथमत्र धात्वर्थस्य करणत्वं व्युत्पाद्यत इत्याशङ्क्याह—तस्मिश्चेति। तत्राद्यान्वये भावनास्वरूपं दर्शयति—तद्यदेति।

यागादेः कर्मत्वेन सङ्गतिस्तदा तद्धेतुभूतः प्रयत्नः सङ्कल्पादिर्वा धात्वन्तरार्थोऽपि यजेतेत्यत्र पदे यागकृतिरित्येवंरूपेणाख्याताभिधेयतां भजते। सङ्कल्पादिकं तु विशेषरूपं धात्वन्तराभिधेयं प्रमाणान्तरवेद्यं नाख्यातेन स्पृश्यते। यदा तु विधिवशात् करणत्वेन यागस्य सङ्गतिः, कर्मत्वं तु स्वर्गादेर्दर्शपूर्णमासयागेन स्वर्गं कुर्यादिति, तदा न यागस्य हेतुभूतैव कृतिराख्यातेनोच्यते, यागस्य कर्मत्वाभावात्, फलस्यैव कर्मत्वात्तत्कर्मिका कृतिराख्यातेनोच्यते, यागस्तु करणम्। अतो यदवस्थो यागः स्वर्गं सम्पादयति तदवस्थो यागो येन व्यापारेण सम्पद्यते स व्यापारः स्वर्गकृतिरित्येवंरूपेणाख्याताभिधेयो भवति। तस्यापि व्यापारस्य विशेषरूपं प्रमाणान्तरवेद्यं नाख्यातेन स्पृश्यते। यागेन स्वर्गं कुर्यादित्यनेन ह्येतावदवगम्यते यथा यागात्स्वर्गो भवति तथा व्याप्रियेतेति। तत्र कथं व्यापरितव्यम्? कोऽसौ व्यापारः? इति व्यापारविशेषात्मककथंभावापेक्षायामग्न्यन्वाधानप्रयाजावघातादिभिरुपकारसम्पादनं शास्त्रान्तरैरवगम्यते, यागस्वरूपस्य च सम्पादनमर्थापत्त्या। न ह्यनिष्पादितस्य करणत्वमुपपद्यते। तेन स्वरूपसंपादनं प्रयाजादिभिश्चोपकारसम्पादनमिति सकलोऽयं व्यापारः स्वर्गकृतिरित्यनेनाकारेणाख्यातेनाभिधीयते। विशेषरूपञ्च प्रयाजादिशास्त्रान्तरावगम्यम्। तेन सकलोऽयं प्रयाजादिव्यापारः फलभावनाया एव प्रपञ्चः। तेन च व्यापारेण फलसाधनात्मना सम्पद्यमानो यागः करणम्। एतदेव हि करणानां करणत्वं यत्तु फलोद्देशप्रवृत्तकर्तृव्यापारेण फलसाधनात्मना सम्पत्तिः, परशोरिवोद्यमननिपतनाभ्यां द्वैधीभाव-

---

यागानुवादेन गुणविधाविति भावः। तद्धेतुभूतः यागहेतुभूतः। एतच्च फलमेव धात्वर्थ इति मण्डनमतानुसारेण बोध्यम्। अतएव धात्वन्तरार्थोऽपीत्युक्तम्। यत्नादिधात्वर्थोऽपीत्यर्थः। प्रमाणान्तरेति। त्यागान्वयव्यतिरेकग्राहिप्रमाणेत्यर्थः। स्पृश्यते उच्यते। विधितशात् प्रवर्तनान्वयबलात्। पुरुषार्थसाधन एव प्रवर्तनान्वयात् यागस्य चापुरुषार्थत्वात्तत्कर्मकभावनायां तदन्वयायोगात्पुरुषार्थभूतस्वर्गादेरेव भावनायां कर्मत्वम्, यागस्य तु करणत्वमित्यर्थः। यदवस्थ इति। स्वसाधननिष्पादितः स्वाङ्गजन्योपकारयुक्त इत्यर्थः। येनेति। स्वरूपनिष्पादकफलोपकार्यङ्गसमूहरूपेणेत्यर्थः। प्रमाणन्तरेति। श्रुतिप्रकरणादिसहितावघातादिशास्त्रवेद्याङ्गजन्यदृष्टोपकारसम्पादनात्मकमित्यर्थः। यथा यागादिति। करणं हि कुठारादिकम् उद्यमननिपातनादिरूपकर्तृव्यापारविषयं सत् फलं छिदादि जनयति। एवं यागोऽपि करणत्वात्पुरुषव्यापारविषयोऽवगम्यत इत्यर्थः। तत्र व्यापारसामान्यावगतौ। तथाच व्यापारसामान्यस्याख्यातवाच्यत्वे विशेषाकाङ्क्षाया अभावात्प्रयाजादीनां प्रधानाङ्गत्वेनान्वयो न स्यादिति भावः। कथं व्यापरितव्यम् इत्यस्यैव विवरणं कोऽसो व्यापार इति। प्रपञ्चः सामान्यतः प्रतीताया विशेषविस्तारः। ननु प्रयाजादिव्यापारस्य न साक्षात्फलसाधनत्वं, यागस्यैव तथात्वात्। नापि यागसाधनता, द्रव्यदेवतादेरेव तथात्वादत आह—तेन चेति! फलसाधनात्मना—फलोत्पादनयोग्यत्वात्मना। एवञ्च करणनिष्ठयोग्यताजनने तदुपयोग इत्यर्थः। न चैतदिहैव कल्प्यते, किन्तु सर्वत्र कर्तृव्यापारोपकृतस्यैव करणत्वं दृष्टमित्याह—एतदेवेति। द्वैधीभावसाधनतया

साधनतया। तत्सिद्धा धात्वर्थातिरिक्ता भावना। नन्वेवं धात्वर्थसामान्यमेव भावना स्यात्, नेति ब्रूम ; विलक्षणत्वात्प्रतिधात्वर्थम् अन्यद्धि पाकस्यौदनं प्रत्यानुकूल्यम् अन्यच्च चलनादेः संयोगादि प्रति, फलभेदात्। एकात्मकत्वे हि तद्रूपस्य फलभेदो न स्यात्। भिन्नेषु रूपेषु भावनात्वसामान्यमनुवर्तते, यागादिष्विव करणत्वसामान्यम्। अयञ्चापरो विशेषः—यतो धातोर्यज्यादिकात्प्रत्यय उत्पन्नस्ततो धात्वर्थान्तरं सङ्कल्पादिकं तत्कृतिरूपेण प्रत्ययेनोच्यते, न यजिरेव। तत्तु कामं धात्वन्तरेणोच्यताम्। इह तावदेकान्ततः प्रत्ययार्थः, यजिस्तु तत्र कर्म करणं वा। तथा सङ्कल्पयतीत्यत्रापि सङ्कल्पादर्थान्तरमेव भावना, सङ्कल्पस्तु कर्म कारणं वा। तेन यतो धातोः प्रत्यय उत्पन्नस्तदर्थव्यतिरिक्तैव भावना तत्कर्मिका तत्करणिका वा तद्गतेन प्रत्ययेनोच्यते, न तु तस्यैव रूपान्तरमिति न धात्वर्थसामान्यं भावनेत्युच्यते। धात्वन्तरेण तस्याभिधानं नानिष्टम्। यथा स्पन्दनस्य प्रयत्नस्य वा द्वयोर्वा भावनात्वे स्पन्दादिधातुवाच्यत्वम्। तस्मात्सिद्धं धात्वर्थातिरिक्तं भावनारूपम्। तत्र च धात्वर्थः करणम्। ततोऽपूर्वं कल्प्यत इति भावशब्देभ्योऽपूर्वम्॥ इति भावार्थाधिकरणम्॥ १॥

---

इत्यनन्तरं सम्पत्तिः करणत्वमित्यनुषङ्गः। धात्वर्थातिरिक्ता प्रकृतिभूतधात्वर्थातिरिक्ता। ननूक्तरीत्या सर्वधात्वर्थानुगतमन्योत्पत्त्यनुकूलव्यापारसामान्यं भावनेति पर्यवसितम्। तथाच प्रकृतिभूतधात्वर्थस्यापि तदन्तर्गतत्वात् कथं तदतिरिक्तभावनासिद्धिः, कथञ्च धात्वर्थभेदात्तद्भेदस्य वक्ष्यमाणस्य सिद्धिः, कथञ्च तस्यां धात्वर्थस्य कर्मत्वं करणत्वं वेत्याशयेन शङ्कते—नन्विति। आख्यातेनानुकूलव्यापारसामान्याभिधानेऽपि तत्तत्फलवाचिधातुसमभिव्याहारात्तत्तदनुकूलव्यापारावगमादानुकूल्यस्य च फलभेदेन भेदान्न सर्वधात्वर्थसाधारण्यमित्याह—नेतीति। नन्वेवं सत्याख्यातनानात्वापत्तिरत आह—भिन्नेष्विति। तेषु रूपेषु तत्तदनुकूलत्वेषु। भावनात्वेति। अनुकूलत्वत्वरूपानुगतधर्मेणैक्यान्नानेकार्थतेति भावः। करणत्वसामान्यम् करणत्वत्वावच्छिन्नं करणत्वम्। नन्वेवमप्यस्तु धातुफलभेदाद्भिन्ना भावना। 'यजेत स्वर्गकाम' इत्यत्र तु स्वर्गानुकूलव्यापारो यथा प्रयाजादिस्तथा यागोऽपीति न तदतिरिक्तभावनासिद्धिरत आह—अयञ्चेति। सकलधात्वर्थानुगतैका भावना नास्तीत्येको विशेषः प्रागुक्तः। प्रकृतिभूतधात्वर्थसाधारणी भावना न भवतीत्यपर इत्यर्थः। तत्कृतिरूपेण यज्याद्यर्थसम्बन्धिव्यापाररूपेण। न यजिरेव नैव यागः। स तु सङ्कल्पादिस्तु। कुतो यागस्याख्यातेन भावनात्वेन नाभिधानमत आह—यजिस्त्विति। यागानुवादेन गुणविधौ यागस्य कर्मतायाः फले यागविधौ च करणतायाः तथा सत्युनुपपत्तेः! न हि याग एव यागकर्मस्तत्करणको वा सम्भवतीति भावः। नन्वेवता प्रकृतिभूतधात्वर्थातिरेकेऽपि तदतिरिक्तसङ्कल्पयत्यादिधात्वर्थातिरेको न सिद्ध इत्याशङ्क्याह—धात्वन्तरेणेति। तस्य भावनारूपसङ्कल्पादेः धात्वन्तराभिधेयत्वेऽपि प्रकृतिभूतधात्वर्थस्य तत्र कर्मकरणत्वयोरविरोधादिष्टापत्तिरिति भावः। मतान्तरेऽप्येवमेवेत्याह—यथेति। प्रकृताधिकरणमुपसंहरति—तत्र चेति। सत्रार्थस्तु—

२

सू० चोदना—"दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" "श्येनेनाभिचरन् यजेत" इत्येवमादिष्वपूर्वं सिद्धं कृत्वा तत्प्रतिपादकशब्दविशेषो विचारितः। तस्य त्वस्तित्वमेवासिद्धमिति। तत्प्रतिपादनार्थमारभ्यते–किमेतेष्वपूर्वं नाम यागस्वर्गातिरिक्तमस्ति ? न ? इति विचारः। तदर्थञ्च किं वाक्यावगतः स्वर्गयागादिसाध्यसाधनभावोऽपूर्वमन्तरेणापि घटते ? न ? इति। तत्र—

**साध्यसाधनभावो हि श्रूयते स्वर्गयागयोः।**
**वस्त्वन्तरस्य सद्भावे श्रुतिरेव विरुध्यते॥**

वस्त्वन्तरं हि कल्प्यमानं यागसाध्यं स्वर्गसाधनं च कल्प्येत, तच्चोभयमपि श्रुतिविरुद्धम्, स्वर्गयागयोरेव साध्यसाधनभावश्रवणात्। कथं पुनः क्षणिकयागस्य विनाऽपूर्वेण कालान्तरभाविफलसाधनत्वमिति यदि ब्रूयात्, प्रतिब्रूयादेनम् अपूर्वेऽपि कल्पिते कथं यागस्य फलसाधनत्वम् ? तदा ह्यपूर्वमेव साधनं स्यान्न यागः। यागस्यैव शक्तिरवान्तरव्यापारो वाऽपूर्वमिति चेन्न, शक्तिमति व्यापारवति चातीते शक्तिव्यापारयोरवस्थानायोगात्। तस्माद्याग एव विनष्टोऽपि फलं साधयति, स एव वा फलं यावदवतिष्ठत इति शास्त्रप्रामाण्यादवगन्तव्यं, नापूर्वमिति प्राप्ते ब्रूमः—

**विनष्टस्यासतस्तावन्न कार्यारम्भसम्भवः।**
**क्षणिकत्वेन सिद्धस्य नावस्थानं च युक्तिमत्॥**

तदेव हि श्रुतार्थानुपपत्त्या कल्पयितव्यम्, न यत्प्रमाणान्तरेण विरुध्यते। विरुद्धञ्च सर्वप्रमाणैर्विनष्टस्यासतोऽनारब्धवस्त्वन्तरस्य कार्यारम्भकत्वम्। अवस्थानञ्च

---

कर्मशब्दा धातवः तदर्था इति यावत्। भावार्था भावनार्थास्तदवच्छेदकास्तेभ्य एस क्रिया अपूर्वोत्पत्तिः प्रतीयेत, हि यस्मादेषोऽर्थः धात्वर्थो विधीयते पदश्रुतिरूपसन्निकर्षादिति। प्रयोजनन्तु—प्रतिनिविसदसद्भावः सिद्धान्तपूर्वपक्षौ प्रागेव दर्शितौ॥ इति भावार्थाधिकरणम्॥ १॥

चोदना—तस्य त्विति। अपूर्वस्येत्यर्थः। तेनाक्षेपरूपानन्तरसङ्गतिरुक्ता। वस्त्वन्तरम् अपूर्वाख्यम्। श्रुत्यन्यथानुपपत्त्यैवापूर्वं कल्प्यमिति शङ्कते—कथं पुनरिति। श्रुतोपपादकस्यैव श्रुतान्यथानुपपत्त्या सिद्धिः, न चापूर्वं तथेत्याह—अपूर्वेऽपीति। न याग इति। अव्यवहितपूर्ववृत्तित्वाभावादन्यथासिद्धत्वाच्चेति भावः। शक्तिरिति। शक्तिशक्तिमतोरभेदादव्यवहितपूर्वत्त्वोपपादनम्। अवान्तरेत्यन्यथासिद्धिनिरासः। व्यापारेण व्यापारिणस्तदभावात्। कथं तर्हि यागस्य फलसाधनतोपपत्तिरित्याशङ्क्याह—तस्मादिति। फलसाधनम् फलोत्पादनम्। नापूर्वमिति। कल्पनागौरवादिति भावः।

प्रमाणविरोधस्य पक्षद्वयेऽपि तुल्यत्वात् प्रमाणविरोधपरिहाराय हि कल्पना कथं प्रमाणविरोधे तदवस्थे भवेदित्याह—विनष्टस्येति। सिद्धान्ते प्रमाणविरोधपरिहाराय अनारब्धेति। व्यवधिः व्यवधानम्। काष्ठादीनामित्यादिपदेन संस्काराख्यशक्तिद्वारा स्मृतिज-

क्षणमात्रवर्त्तिनः प्रमाणविरुद्धमेव। अतोऽपूर्वमेव कल्पनीयम्। न च श्रुतिविरोधः, तस्य यागस्य शक्तित्वात्, अवान्तरव्यापारत्वाद्वा। न हि शक्त्याऽवान्तरव्यापारेण वा व्यधिकरणतामापादयति[1] काष्ठादीनामिव ज्वालया। न चावश्यं शक्तिमत्येवावतिष्ठते[2], कार्यानुमेया हि शक्तिः, यत्रैव कार्यायालं तत्रैव कल्प्यते। अतो यागशक्तिरात्मनि[3] तिष्ठतीत्यविरोधः। एतदेवावान्तरव्यापाराणां तत्त्वं यत्समीहितोद्देशप्रवृत्तेन साधनेन तत्सिध्यर्थमन्तरा साध्यमानत्वम्, काष्ठैरिव ज्वालायाः। तस्मादस्त्यपूर्वं फलसाधनस्य कर्मणोऽवान्तरव्यापाररूपम्। अङ्गानाञ्च फलवदुपकारसाधनानामेषाऽत्र प्रक्रिया। प्रथमं तावत्फलवाक्येन कर्मणः फलसाधनत्वं बोध्यते—यागेन स्वर्गं कुर्यादिति। कथं विनश्वरेण फलं कर्त्तव्यमित्यपेक्षायामपूर्वं कृत्वेत्युच्यते। कथमपूर्वं क्रियत इत्यपेक्षायामङ्गानुष्ठानप्रकारेणेति। ततः पूर्वापरकालवर्तिभिरङ्गव्यापारैर्विषयीकृतस्य यागस्यापूर्वसाधनत्वं न स्वरूपेण सम्भवतीत्यपूर्वान्तरमपि कल्प्यते। दर्शपूर्णमासयोस्तु पक्षद्वयवर्तिभ्यां समुदायाभ्यां युगपत्फलापूर्वारम्भायोगादेकैकं प्रतिसमुदायमपूर्वं कल्प्यते। तत्कथम्भायापेक्षायामग्न्यन्वाधानाद्यङ्गोपदेशः। ततः पूर्ववदेव पूर्वोक्तराङ्गसहितेभ्यस्त-

नकस्य पूर्वानुभवस्य ग्रहणम्। ज्वालयेति शक्त्युपलक्षणम्। यत्रैवेति। आत्मादावनुभवशक्तिरूपस्संस्कारो यथेति भावः। ननु व्यापारिणि नष्टे कथमपूर्वादिरवान्तरव्यापारता, व्यापारिसापेक्षत्वाद्व्यापारताया इत्यत आह—एतदेवेति। साधनेन साध्यमानत्वे सति तत्फलसाधनत्वमेवावान्तरव्यापारत्वं। न तु साधनाश्रितत्वमपीत्येवकारार्थः। यद्यपि ज्वालायां काष्ठाश्रितत्वमप्यस्ति, तथापि तदंशस्य नोपयोग इति तात्पर्यम्। प्रक्रियेति। अपूर्वकल्पनाप्रकार इत्यर्थः। उच्यते—अध्याह्रियते। कथमपूर्वं क्रियत इतीत्यनन्तरापेक्षायामिति शेषः। अपूर्वकरणप्रकारस्याज्ञातत्वेनेतिकर्तव्यताकाङ्क्षायामित्यर्थः। तत इति। एतच्चापूर्वान्तरं कल्प्यत इत्यनेन सम्बध्यते। विषयीकृतस्य उपकृतस्य। न स्वरूपेणेति। क्षणिकत्वादिति भावः। तथा चोत्पत्त्यपूर्वेऽङ्गजनितोपकारसम्पत्तिरिति बोध्यम्। न चैवं सति किं परमापूर्वेणेति वाच्यम्; फलसाधनताबोधपर्यवसानोत्तरं कथंभावाकाङ्क्षायामङ्गान्वयात्तत्पर्यवसानस्य च फलापूर्वकल्पनां विनानुपपत्तेः प्रथमं तत्कल्पनात्। पश्चात्त्वङ्गोपकारसाहित्यमितिकर्तव्यताकाङ्क्षया प्रतीयत इति तत्सिध्यर्थमुत्पत्त्यपूर्वं कल्प्यत इत्यपूर्वद्वयसिद्धेः। अत एव सर्वेषां धर्माणामपूर्वार्थत्वं सप्तमाद्ये सिद्धान्तयिष्यते। एवं सर्वसाधारण्येनोक्त्वा क्वचिद्विशेषमाह—दर्शेति। पक्षद्वयवर्त्तिभ्याम् कृष्णशुक्लपक्षान्तर्गतदर्शपूर्णिमागताभ्याम्। समुदायाभ्याम्—आग्नेयादियागत्रिकसमुदायावच्छिन्नाभ्यां दर्शपूर्णमासपदवाच्याभ्याम्। युगपदिति। एकैकत्रिकस्यापि क्षणिकतया यौगपद्यस्यासम्भवः, किमु तत्त्रिकद्वयस्येत्यर्थः। अयमर्थः—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति वाक्येन दर्शपूर्णमासपदावगतसमुदायद्वयावच्छिन्ने द्वन्द्वावगतसाहित्यावच्छिन्ने फलापूर्वजनक-

१. अकारणतामिति क. २. न चावश्यं शक्तिमत्येवावस्थातव्यं शक्त्येति क.
३. यागशक्तिरप्यात्मन्येवावतिष्ठते इति क.

दुत्पत्तिर्न स्वरूपेण सम्भवतीति प्रतित्रिकं त्रीणि त्रीण्यपूर्वाणि कल्प्यन्ते। यदि पुनः षड्भ्यागेभ्यः प्रथममेव षडपूर्वाणि कल्प्येरन् ततोऽपूर्वार्थत्वादङ्गानामङ्गोपकृतेभ्योऽपूर्वं सिद्धौ पुनरपि षडपूर्वाणि कल्प्यानि स्युरिति गौरवं स्यात्। तस्मादेकमेव फलापूर्वम्। उत्पत्त्यपूर्वाणि तु प्रतिप्रधानं भिद्यन्ते। तथाऽङ्गान्यपि क्रतूपकारकत्वेन स्वीकृतानि क्षणिकत्वान्न स्वरूपेण संहत्योपकर्तुं शक्नुवन्तीत्यवान्तरव्यापाररूपाण्यपूर्वाणि तावदारभन्ते। ततः सर्वाणि संहत्य प्रधानस्य सामर्थ्योद्बोधनं फलारम्भोन्मुखत्वरूपमनुग्रहं परमोपकारं जनयन्ति। तत्र त्वयं विभागः—सन्निपत्योपकारकाणि द्रव्यदेवतासंस्कारद्वारेण यागस्वरूपस्यैव शक्त्यतिशयमादधानानि तदुत्पत्त्यपूर्वनिष्पत्तौ व्याप्रियन्ते, तद्द्वारेण फलापूर्वे। आरादुपकारकाणि तु साक्षादेवोत्पत्त्यपूर्वेभ्यः फलापूर्वनिष्पत्तौ।

---

तायाः प्रतीतेः, साहित्यस्य चापूर्वं विनानुपपत्तेः समुदायापूर्वद्वयकल्पनेति। पौर्णमास्यधिकरणे तु समुदायस्य फलसाधनत्वं वार्तिककारैर्निराकृतं, न तु समुदायावच्छिन्नत्वेन त्रिकद्वयस्येति न तद्विरोधः। न चोत्पत्त्यपूर्वैरेव साहित्योपपत्तिः, तत्कल्पनाया एतत्कल्पनोत्तरभावित्वादित्याह—तदिति। वस्तुतस्तु—"पूर्णमास्यां पूर्णमास्या यजेत, अमावास्यायामावास्यया यजेत" इति तत्तत्समुदायावच्छिन्नसाधनतयाः किञ्चित्कार्यनिरूपितत्वलिङ्गदर्शनबलाद्दर्शपूर्णमासाभ्यामित्यत्र समुदायापूर्वमेव फलापूर्वारम्भौपयिकतया कल्प्यत इति नोत्पत्त्यपूर्वैरन्यथासिद्धिरिति। एवं यथाश्रुतग्रन्थसामञ्जस्ये सति यदेतद्ग्रन्थस्य क्लिष्टगतया "पूर्णमास्यां पूर्णमास्या यजेत" इति वाक्यपरतया सोमनाथीयं व्याख्यानं, तदनादेयम्। उत्पत्त्यपूर्वैः परमापूर्वस्यान्यथासिद्धिनिराकर्तुमाह—यदि पुनरिति। अङ्गानां प्रयाजादीनां फलापूर्वार्थत्वात्तदुपकृतेभ्यो यागेभ्यः फलापूर्वाणीति वाच्यम्। न चास्थिराणां यागानां तदुपकार्यत्वं सम्भवतीत्यन्यान्युत्पत्त्यापूर्वाणि षडिति गौरवं स्यादित्यर्थः। अङ्गेष्वपूर्वकल्पनाप्रकारमाह—तथेति। संहत्य मिलित्वा। प्रयोगवचनेन सहितानां प्रधानोपकारकत्वावगमात्साहित्यस्य च स्वरूपतः क्षणिकत्वेनासम्भवात्तत्सिद्ध्यर्थं प्रत्येकमुत्पत्त्यपूर्वाणि कल्प्यन्त इत्यर्थः। एवं सहितैरङ्गैः किं क्रियते? तदाह - तत इति। अत्र सामर्थ्योद्बोधनादिशब्दैर्योग्यतोच्यते। सा च प्रधानापूर्ववृत्तिभिः प्रोक्षणादिभिः सन्निपत्योपकारिभिरङ्गैः प्रधाने उत्पत्त्यपूर्वजननानुकूला, तत्समकालैस्तदुत्तरकालैश्च प्रक्षेपस्विष्टकृदादिभिः सान्निपातिकैरारादुपकारकैश्चोत्पत्त्यपूर्वे परमापूर्वजननानुकूला जन्यत इति ज्ञेयम्। न च प्रधानस्य फलजननार्थं परमापूर्वमिवाङ्गानां योग्यताजननार्थमादौ समुदितेभ्य एकमपूर्वं कल्पनीयम्। कल्पितञ्च तन्न्यायसुधाकारादिभिरिति कथमत्र तदनुक्तिरिति वाच्यम्। कालान्तरभाविफलसाधनत्वेन श्रुतस्य प्रधानस्य तदुपपत्त्यर्थं फलापूर्वकल्पनेऽप्यङ्गानां तदश्रवणेन कल्पनीयप्रयोगविध्यवगम्यमानसाहित्यसम्पादनाय कल्पितैरुत्पत्त्यपूर्वैरेवोपकारस्यापि सिद्धेः। तथा चाङ्गजन्यदृष्टादृष्टोपकारवत्त्वैव योग्यताजनिका, न तु सर्वाङ्गजन्यमेकमपूर्वान्तरमिति मिश्राणामाशयः। सामवायिकारादुपकारकाङ्गभेदेन योग्यताविभागमाह—अत्र त्विति। शक्त्यतिशयम्—उत्पत्त्यपूर्वजनानुकूलयोग्यताम्। कथं तर्हि सर्वेषामेकरूपेतिकर्तव्यताकाङ्क्षया

एवं प्रकारभेदे सत्यपि सर्वाण्यङ्गानि यागापूर्वनिष्पत्तावनुग्राहकाणि भवन्तीत्येवमेकरूपेणेत्थम्भावेन स्वीक्रियन्ते। तस्मादस्त्यपूर्वम् ॥ इति अपूर्वाधिकरणम् ॥ २ ॥

## ३

**सू० तानि०**—एवं तावदस्त्य[1]पूर्वम्। तच्चाख्यातेभ्यः, तदर्थञ्च द्रव्यादिपदम्। आख्यातन्तु प्रव्याद्यतेक्षया।प्रधानस्य कर्मणो वाचकमित्याख्यातभेदानुसार्यपूर्वभेदानुसरणं कर्त्तव्यमिति स्थितम्।।तस्यापवादः क्रियते-सत्यपि धात्वर्थभावनयोर्भेदे कैषुचिदाख्यातेषु नापूर्वं भिद्यत इति। दर्शपूर्णमासयोः 'व्रीहीनवहन्ति' 'तण्डुलान् पिनष्टि' इति श्रूयते। तत्र संशयः-किमवघातादिभ्योऽपूर्वमस्ति ? न वेति ? तदर्थञ्च किमवघातार्था व्रीहयः ? उत व्रीह्यर्थोऽवघातः ? इति। तत्र वाक्यसाफल्यायावश्यं कल्प्यमदृष्टम्। तच्च धात्वर्थादेव साध्यभूतान्न्याय्यम्। तथा हि भूतस्य द्रव्यस्य तन्निर्वृत्त्या दृष्टार्थता स्यात्। अन्यथा त्वदृष्टद्वयं कल्प्यमित्युक्तं पूर्वाधिकरणे। तस्माद्व्रीह्यपेक्षयाऽवघातः

---

ग्रहणं तत्राह—एवमिति। साक्षात्परम्परारूपप्रकारभेदेऽपीत्यर्थः। करणानुग्राहकत्वस्योभयत्र सत्वादेकरूपया आकाङ्क्षया ग्रहणं युक्तमित्यर्थः। अधिकरणमुपसंहरति—तस्मादिति।

प्रयोजनमपूर्वानङ्गीकारे विकृतावङ्गानुष्ठानं न स्यात्प्रकृतौ कृतानामेवाङ्गानां ध्वंसस्य सत्वात्। अपूर्वसत्वे तस्य फलनाश्यतया पुनरनुष्ठानमिद्धिः। सूत्रार्थस्तु—चोदना अपूर्वं पुनरस्ति यत आरम्भः फलस्येति ॥ इत्यपूर्वाधिकरणम् ॥ इत्यपूर्वाधिकरणम् ॥ २ ॥

अपूर्वाधिकरणस्य भावार्थाधिकरणशेषत्वाद्भावार्थाधिकरणेनैवास्याधिकरणस्य सङ्गतिमाह—एवमिति। सर्वमाख्यातजं नामेतिवदिहाख्यातशब्दो धातुपरः। तस्येति। धात्वर्थभावनाभेदानुनिष्पाद्यपूर्वभेदस्येत्यर्थः। यद्यपि भावार्थाधिकरणप्रतिपाद्यस्य धात्वर्थगतापूर्वभावनाकरणत्वस्यापवादः क्रियत इति वक्तुं युक्तम्, तथापि तत्फलीभूतापूर्वभेदस्याध्यायार्थत्वेन प्राधान्यादध्यायसङ्गत्यर्थमेवमुक्तिः। नन्ववघातादेर्वितुषीभावादिदृष्टप्रयोजनद्वारेण व्रीह्याद्यर्थत्वस्य द्वितीयाश्रुत्या स्फुटं प्रतीतेः कथमयं संशयस्तत्राह—तत्रेति। वैतुष्यादिदृष्टार्थत्वस्य लोकसिद्धत्वेन तत्र विधिवैयर्थ्याददृष्टार्थत्वेनैव विधिर्वक्तव्य इत्यर्थः। तच्च अदृष्टञ्च। साध्यभूतात् कृतिसाध्यस्वरूपात्। सिद्धरूपद्रव्यस्य तज्जनकत्वासम्भवादिति भावः। नन्ववघातरूपव्यापारविशिष्टात् द्रव्यादष्टमङ्गीकार्यमत आह—तथाहीति। सतीति शेषः। भूतस्य सिद्धस्य। तन्निवृत्त्या अवघातादिधात्वर्थनिष्पत्त्या। अन्यथा द्रव्यस्यादृष्टार्थत्वे। अदृष्टद्वयमिति। द्रव्यविशेषणीभूतावघातादेर्व्रीह्याद्यर्थत्वेन विधिवशादवघातस्यापि द्रव्यगतादृष्टोपकारजनकत्वस्यावश्यकत्वादिति भावः। पूर्वपक्षमुपसंहरति—तस्मादिति। "व्रीहिभिर्यजेत" इति यागसाधनत्वेन विहितव्रीह्युद्देशेनावघातस्यापेक्षिततुषविमोपकारार्थत्वेन त्रिधानान्नादृष्टकल्पनाप्रसक्तिरिति न

---

१. एतावदस्त्यपूर्वमिति क.

प्रधानमेव, ततश्चापूर्वमिति। स्यादेवं यद्यदृष्टं कल्प्येत। अत्र पुनः क्लृप्तमेव यागनिर्वृत्तिः प्रयोजनं, तादर्थ्ये चावघातस्य कर्मौपयिकं तुषविमोकादि दृष्टमेव प्रयोजनं लभ्यत इति न कस्यचिददृष्टं कल्प्यम्। नियमादृष्टन्तु कल्पनीयम्। तच्चावघातस्या, दृष्टार्थत्वेऽपि द्रव्यनियमादवश्यं कल्प्यमित्यदृष्टद्वयम्। तद्वरमेकमेव दृष्टार्थावघातनियमादमृष्टं कल्पितम्॥ इति तानि द्वैधाधिकरणम्॥ ३॥

४

**सू धर्ममात्रे०**—यत्र न किञ्चिददृष्टमस्ति, कर्मौपयिकन्तु[२] द्रव्यं द्वितीयया संयुज्य निर्दिश्यते "स्रुचः संमार्ष्टी"[३]त्यादि, तत्र विचार्यते–किं प्रधानकर्मोत गुणकर्मेति? तदर्थञ्च साध्यवाचिनी द्वितीया? अथवा साधनवाचिनीति? यद्यपि चात्र [१]सिद्धान्तेऽपि द्रव्यगतादृष्टसंस्काररूपापूर्वसद्भावान्नापूर्वभेदाभेदयोरुपयोगः, स्तथापि[४] पूर्वोक्तगुणकर्मलक्षणस्याव्यापकत्वं प्रधानकर्मलक्षस्यातिव्याप्तिं चाशङ्क्य समाधीयत इति सङ्गतिः। तथा हि 'यैस्तु द्रव्यं चिकीर्ष्यंत' इति दृष्टोपकारित्वं गुणकर्मलक्षणमुक्तं, तच्चाव्यापकं, संमार्जनादिष्वभावात्। तथा'यैर्द्रव्यं न

---

द्वितीयाश्रुतिभङ्गेन व्रीहिविशिष्टावघातविधिरिति सिद्धान्तमाह–स्यादेवमिति। अत्र व्रीहिषु। तादर्थ्ये व्रीह्यर्थत्वे। कर्मौपयिकं परोडाशहविष्कयागोपकारकम्। नन्ववश्यापेक्षिततुषविमोकार्थतया लोकत एवावघातप्राप्तेः किं विधिनेत्यत आह—नियमेति। अवघातवन्नखविदलनादेरपि कदाचित्प्राप्त्यावघातसिद्धेस्तदर्थो विधिः, विधीयमानस्य च नियमस्योपकारो न दृष्टस्सम्भवतीत्यदृष्टं कल्प्यमिति भावः। पूर्वपक्षे त्ववघाताददृष्टमेकम्। यत्किञ्चिद्द्रव्यादप्यवघातसिद्धेस्तत्र व्रीहिनियमादपरमित्यदृष्टद्वयापत्तिरित्याह—तच्चेति। नन्वेवमवघातादपूर्वसत्वाकथं सिद्धान्तकोटिसिद्धिस्तत्राह—दृष्टार्थावघातेति। अवघातो दृष्टार्थ एव। तन्नियमः परमदृष्टार्थ इति न विरोध इति भावः। यदाप्यशाब्दनियमान्नादृष्टं किन्त्ववघातादेवेति मतम्,तदापि न तस्य मुख्यत्वं किन्तु दृष्टवितुषीभावस्येत्युपगमान्न दोषः। स्वतन्त्रप्रयोजनीभूतादृष्टाभावस्यैवात्र प्रतिपादनादिति ध्येयम्।

प्रयोजनन्तु पूर्वपक्षे यवसाध्यप्रयोगेऽपि व्रीह्यवघातस्य प्रयाजादिवदनुष्ठानम्, सिद्धान्ते नेति। सूत्रार्थस्तु—तान्याख्यातानि गुणप्रधानभूतानीति द्वैधं द्विधेत्यर्थ इति॥ ३॥

दृष्टोपकारित्वस्य पूर्वाधिकरणसिद्धान्तहेतोः प्रत्युदाहरणरूपसङ्गतिमाह—यत्रेति। ननु द्वितीयया द्रव्यसंस्कारत्वावगमात्कथं प्रधानकर्मत्वसन्देहस्तत्राह–तदर्थञ्चेति। फलीभूताध्यायार्थापूर्वभेदाभेदानुपयोगिनोऽस्य विचारस्याध्यायासङ्गतिमाशङ्कते—यद्यपीति। आशङ्क्येति। सिद्धान्तिमत इति शेषः। पूर्वपक्षिणा गुणकर्मत्वस्यानङ्गीकारात्प्रधानकर्मत्वस्येष्टत्वाच्चाव्याप्त्यतिव्याप्त्योरसम्भवात्। 'यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत' इत्यस्य सूत्रस्य यैः कर्मभिः

---

१. तत्रेति ग. २. कार्येति च. ३. इत्यादिषु इति क, ख. ४. अदृष्टरूपेति ग.

चिकीर्ष्यंत' इति दृष्टोपकाराभावः प्रधानलक्षणमुक्तं[1], तच्च संमार्जनादिष्वतिव्यापकम्, तेषामपि प्राधान्यप्रसङ्गादिति। तदिदमाशङ्काद्वयं निराकर्त्तुमिदमुच्यते-द्वितीयाश्रुत्या संमार्जनादीनामपि द्रव्यगुणत्वं, पूर्वोक्तन्तु लक्षणद्वयं न गुणप्रधानविषयम्, अपि त्वपूर्वसदसद्भावविषयं, तावन्मात्रस्यैव[2] भावार्थाधिकरणापवादत्वेन प्रतिपिपित्सितत्वात्। तेनापूर्वसदसद्भावाय तानि द्वैधमिति गुणप्रधानकर्मणी उपक्षिप्ते। कीदृशं तद्गुणकर्म यत्रापूर्वं नास्ति? कीदृशं वा प्रधानकर्म यत्रापूर्वं विद्यते?[3] इत्यपेक्षायामुक्तं दृष्टोपकारिष्वपूर्वं नास्ति तदभावे त्वस्तीति। संमार्गादिषु चास्त्येवापूर्वं द्रव्यगतमित्यनवद्यं लक्षणम्। अत्र पुर्वपक्षाभिप्रायः--दृष्टप्रयोजनत्वमेव गुणकर्मलक्षणं, न द्वितीयेति। कुतः?

व्यभिचारान्न साध्यत्वमुच्यते लोकवेदयोः।
साधनत्वं द्वितीयार्थः सर्वत्राव्यभिचारतः॥

बल्बजान् शिखण्डकान् कुर्विति लोके, वेदे च "सक्तून् जुहोती" ति व्यभिचारान्न साध्यत्वं द्वितीययोच्यते। साधनत्वन्तु घटं करोतीत्यादावपि घटादीनां बुद्धि-

---

द्रव्यं चिकीर्ष्यते दृष्टोपकारविशिष्टं कर्तुमिष्यते तत्र गुणकर्मत्वमित्यर्थः। तथा 'यैस्तु द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि' इति प्रधानकर्मलक्षणसूत्रं स्पष्टम्। तदिदमिति। पूर्वपक्षिणा सिद्धान्तिनं प्रत्यापादितमाशङ्काद्वयं निराकर्तुमित्यर्थः। तथाच पूर्वाधिकरणगतलक्षसूत्रादापातः प्रतीयमानार्थव्युदासेन तात्पर्यार्थकथनार्थमयमारम्भ इति भावः। द्रव्यगुणत्वमिति। द्रव्याङ्गत्वमित्यर्थः। तथाच द्रव्यदेवतान्यतरसंस्कारकत्वमेव गुणकर्मलक्षणमिति भावः। लक्षणद्वयमिति। दृष्टोपकात्वतदभावरूपमित्यर्थः। न गुणेति। न गुणकर्मत्वप्रधानकर्मत्वव्यवस्थापकमित्यर्थः। तेन अपूर्वसदसद्भावप्रतिपित्सितत्वेन। उपक्षिप्ते कथिते। तथाचापूर्वाप्रतिपादकगुणकर्मलक्षणं दृष्टोपकारित्वं तत्र विवक्षितमिति भावः। लक्षणमिति। द्रव्यसंस्कारकत्वं गुणकर्मसामान्यलक्षणमित्यर्थः। ननु द्वितीयाश्रुतिसत्वे कथं पूर्वपक्षसम्भव इत्याशङ्कायामाह–अत्रेति। न द्वितीयेति। गुणकर्मत्वलक्षणमित्यनुषङ्गः। लक्षणं बोधिका। प्रकृत्यर्थस्य साध्यत्वं बोधयन्ती हि द्वितीया समभिव्याहृतक्रियानिरूपितं तद्बोधयन्ती क्रियायास्तद्गुणत्वं बोधयेत्। न त्वेवम्, तस्यास्साधनत्वबोधकत्वादित्याह–व्यभिचारादिति। सर्वत्र लोके वेदे च। बल्बजाः तृणविशेषाः। शिखण्डकान् मयूराकारान्। बल्बजानां सिद्धतया न साध्यत्वमिति भावः। सक्तूनिति। सक्तूनां होमेन नाशान्न होमसंस्कार्यत्वं निष्फलत्वादिति भावः। ननु घटं करोतीत्यादावसिद्धस्य घटादेर्न साधनत्वमिति तुल्यो व्यभिचारस्तत्राह–साधनत्वन्त्विति। ज्ञानद्वारा घटादेर्हेतुत्वमिति भावः। अवघातादिव्यावृत्यर्थमाह–दृष्टेति। तथाच दृष्टार्थत्वमेव गुणकर्मत्वलक्षणमिति भावः।

---

१ प्राधान्येति ख. २ तन्मात्रेति ख. ३ अस्तीति ख.

स्थत्वेन क्रियाहेतुत्वादस्त्यव्यभिचारात्स एव हि द्वितीयार्थः। अतः स्रुगादिसाधनसंमार्गविधानात् दृष्टोपकाराभावाच्च प्रधानकर्मैव संमार्गादीनीति प्राप्ते ब्रूमः—

**स्मृत्या साध्याभिधायित्वं द्वितीयायाः प्रतीयते।**
**कर्तुर्यदीप्सितं यच्च तथा युक्तमनीप्सितम्॥**
**तत्कर्म तद्द्वितीयार्थं इत्येवं पाणिनेः स्मृतिः।**
**बलीयसी च साचारात्प्रयोगश्चास्ति तादृशः॥**

स्मृतिस्तावदाचाराद्बलीयसीति स्थितम्। स्मरति च पाणिनिः 'कर्मणि द्वितीया', 'कर्तुरीप्सिततमं कर्म' 'तथा युक्तं चानीप्सितम्' इति च। यथेप्सितं क्रियया युज्यते साध्यात्मना, तथा साध्यात्मनैव क्रियया युक्तमनीप्सितमपि कर्मसंज्ञमितीप्सितानीप्सितानुवर्त्ति साध्यरूपं कर्मेत्यर्थः कर्म च द्वितीयार्थ इति साध्यत्वमेव द्वितीयार्थः। न च निर्मूलं स्मरणं, घटं करोति व्रीहीनवहन्तीति लोकवेदयोः प्रयोगसद्भावात्। यदि च साधनत्वमर्थः स्यात् तर्हि परशुना छिनत्तीति परशौ द्वितीया स्यात्। साधनविशेषवचनत्वादयमदोष इति चेत्, कः पुनरसौ? यस्य साध्यत्वमिति चेत्, तदेव तर्हि वाच्यमस्तु किं साधनत्वोपलक्षणत्वेन? नन्वेवमपि कथं स्रुगादीनां शेषित्वम्, ईप्सितं हि शेषि भवति। न चेप्सितं द्वितीयार्थः, किन्त्वीप्सितानीप्सितानुवर्त्तिसाध्यत्वमात्रम्[1]। सत्यम् शेषित्वं द्वितीयार्थः, तत्तु विधेर्लभ्यते। विधिवशेन हि समीहितमेव भावनाया भाव्यमवगतं, तद्विशेषश्च पदान्तरात्प्रार्थ्यते। तत्र च स्रुगादीनां द्वितीयया भाव्यत्वमुच्यते। समीहितभाव्यापेक्षिण्याञ्च भावनायां नासमीहितस्य भाव्यत्वं सम्भवतीति स्रुगादीनां समीहितत्वसिद्धिः। ननु यत्समीहितं तस्य साधनं

---

आचारात् प्रयोगरूपात्। सोऽप्यनुकूल एवेत्याह—प्रयोगश्चेति। तादृशः तदनुसारी। तथायुक्तमित्यस्यार्थमाह—यथेति। अनेकार्थत्वशङ्कामपाकरोति—ईप्सितानीप्सितेति। उभयानुगतं साध्यत्वसामान्यमेव कर्मत्वमित्यर्थः। ननु तर्हि 'साध्यं कर्म' इत्येवानुशासनं स्यान्न पृथगिति चेत्, अत्राहुः—'वारणार्थानामीप्सितः' इति सूत्रेण 'अग्नेर्माणवकं वारयति' इत्यत्रेप्सितस्याग्नेरपादानसंज्ञाया बाधो वाच्यः। साध्यत्वमात्रस्य कर्मत्वे माणवकस्याप्यग्निसम्बन्धाभावविशिष्टत्वेन साध्यत्वात्तस्याप्यपादानत्वं स्यादतः 'कर्तुरीप्सिततमं कर्म' इति पृथगवश्यं वाच्यम्। एवञ्च माणवकस्येप्सिततमत्वात् कर्मसंज्ञैव। ईप्सितमात्रस्याग्नेरपादानसंज्ञेति। द्वेष्योपेक्ष्यसङ्ग्राहकं 'तथायुक्तमि'ति सूत्रमावश्यकमिति। निर्मूलमिति। प्रयोगमूलत्वाद्व्याकरणस्मृतेर्मूलभूतप्रयोगशून्यमित्यर्थ। यस्येति। सामानाधिकरण्येन साध्यत्वोपलक्षितं साधनत्वमित्यर्थः। तदेव साधनत्वमेव। ईप्सितं हीति। अङ्गविषयकक्रत्युद्देश्यत्वस्य शेषित्वादुद्देश्यताया इच्छेप्सितत्वमन्तरेणासम्भवादिति भावः। प्रमाणान्तरेण समीहितत्वेनावगतं प्रत्यप्राप्तं साधनत्वमेव विधिबोध्यं, न तु समीहितत्वमपीति शङ्कते—नन्विति। न स्वरूपतः समीहितत्वं विधि-

---

१. वृत्तेति ख.

विधिना बोध्यते, न तु तद्वशेन समीहितत्वम्। को नामाह समीहितत्वं विधिगम्यमिति ? किन्तु विधिविषयीभूतया[1] क्रिययेप्सितत्वम् स्रुगादीनां द्वितीयया प्रतिपादितसाध्यभावानां विधिवशाद्गम्यत इत्युच्यते। स्वरूपेण तु तेषां समीहितत्वं क्रतुसाधनत्वादेव सिद्धम्। सक्तूनान्तु भूतभाव्युपयुक्तत्वाभावान्न[2] समीहितत्वमस्तीति समीहितसाध्यापेक्षिण्यां भावनायां भाव्यत्वेनान्वयस्यायोग्यत्वात् साधनत्वमेव लक्षणयाभिधत्ते। स्रुगादीनि तु क्रतुसाधनत्वरूपेणेप्सितत्वाद्योग्यान्येव समीहितभाव्यापेक्षिण्या संमार्गभावनयान्वेतुमिति साध्यत्वमेव श्रुतिबलेन गृह्यते। तत्र दृष्टोपकाराभावेऽप्यदृष्टकल्पनात्सिद्धं[3] गुणकर्मत्वम्॥ इति स्तुतशस्त्राधिकरणम्॥ ४॥

५

सू० स्तुत०—इह स्तोत्रशस्त्राण्युदाहरणम् "आज्यैः स्तुवत" इत्यादिप्रगीतमन्त्रसाध्यगुणेन गुणिनः सम्बन्धाभिधानं स्तवनं स्तोत्रम्, शस्त्रमपि स्तवनमेवाप्रगीतमन्त्रसाध्यम् "प्रउगं शंसतो" त्यादिगुणकर्माणि प्रधानकर्माणि वेति विचारः। तदर्थञ्च किं देवतां प्रति गुणभूतानि तत्प्रकाशनार्थानि ? किं वा देवतां प्रति प्रधानभूतान्यदृष्टार्थानीति ? तत्र—

देवतास्मरणं दृष्टमुज्झित्वाऽदृष्टकल्पनम्।
न युक्तं तेन तादर्थ्यात्स्तोत्रादेर्गुणकर्मता॥

गुणगुणिसम्बन्धे हि कीर्त्यमाने गुणिनी देवता कीर्त्यते। तत्कीर्तनाच्च तत्स्मरणं क्रतूपयोगि दृष्टमेव प्रयोजनं लब्धमिति नादृष्टकल्पनावसरः। तस्माद्देवताप्रकाशनार्थत्वाद्गुणकर्मैवेति। उच्यते—

---

गम्यं, किन्तु स्वविषयक्रियया साधयितुमिष्टत्वम्। तत्र साध्यत्वांशो द्वितीयागम्यः, उद्देश्यत्वं कृतिनिरूपितं विधिगम्यम्। अनीप्सितभाव्यायां क्रियायां विध्यसम्भवादिति परिहरति—को नामेत्यादिना। सक्तूनित्यत्र साधनवाचित्वं पूर्वपक्षयुक्तं परिहरति—सक्तूनान्त्विति। विधिविरोधात्तत्र लक्षणा, न तु शक्तिरित्यर्थः। श्रुतिबलेन द्वितीयारूपवाचकबलेन।

प्रयोजनं पूर्वपक्षे—चातुर्मास्यादौ स्रुग्विवृद्धावपि कपिञ्जलाधिकरणन्यायेन तिसृभिरेव सम्मार्गः। यवप्रयोगेऽपि व्रीहिप्रोक्षणमेवेत्यादि। सिद्धान्ते तु-सकलस्रुक्संमार्गः, यवानामेव च प्रोक्षणमिति। सूत्रार्थस्तु—धर्ममात्रे दृष्टोपकाररहिते श्रुते प्रयाजवत्प्रधानकर्मैव स्यात् दृष्टोपकारस्यानिर्वृत्तेरिति पूर्वपक्षः॥ इति सम्मार्गाधिकरणम्॥ ४॥

प्रगीतेति। सामगानविशिष्टेत्यर्थः। गुणेनेति सहार्थे। तृतीया। अभिधानात्मकं स्तवनमित्यर्थः। आज्यशब्दः प्रउगशब्दश्च नामधेयम्। पूर्वाधिकरणोक्तगुणकर्मत्वापवादात्सङ्गतिः। तत्प्रकाशनार्थानीति गुणकर्मत्वोपपत्तिकथनम्। तादर्थ्यात् देवतास्मरणार्थत्वात्।

---

१. विशेषणीभूतयेति ख. २. भाव्युपयोगेति ख. ३. अदृष्टसंकारेति ख.

सत्यं दृष्टार्थता युक्ता श्रुतिश्चेन्न विरुध्यते ।
देवतास्मरणर्थत्वे स्तुतिरूपं[1] विहन्यते ॥

यथाश्रुतस्यार्थस्य प्रयोजनकल्पनं न श्रुतरूपहानेन। स्तुतिश्चात्र कर्त्तव्यतया श्रूयते स्तौति शंसती। यदा च मन्त्रवाक्यं गुणसम्बन्धाभिधानपरमेव भवति, तदा स्तुतिर्भवति। यदा तु गुणद्वारेण गुणिप्रकाशनार्थं तदा स्तुतिर्नभवति। यथा लोके वक्रकेशान्तो देवदत्त इति गुणसम्बन्धपरत्वे स्तुतिं मन्यते। यदा त्वेवमुच्यते-योऽयं वक्रकेशान्तस्तमानयेति न तदा स्तुतिबुद्धिर्भवति। तेन प्रकाशनार्थत्वे स्तौति शंसत्योस्स्वार्थहानेन प्रकाशनलक्षणा स्यात्। न च तत्र लक्षणार्थत्वे प्रमाणमस्ति, श्रुत्यैव वाक्यार्थोपपत्तेः। तेन श्रुतिबलाददृष्टार्थत्वमेव। एवञ्च माहेन्द्रग्रहयजिसन्निधावैन्द्री स्तुतिरुपपन्ना भवति। इतरथा हि श्रुतिसमवायिनी देवता विधिशब्देनैव निगमेषु वक्तव्येति माहेन्द्रग्रहदेवता नेन्द्रशब्देन शक्यते प्रकाशगितुमिति यत्रेन्द्रस्तत्रैन्द्री स्तुतिरुत्कृष्येत, मनोतास्थाग्निशब्दवद्वाग्नीषोमाविन्द्रशब्द एव लक्षणया महेन्द्रं प्रकाशयेत्। तच्च द्वयमप्यन्याय्यम्। तस्मात्प्रधानकर्मणी स्तोत्रशस्त्रे।

॥ इति स्तुतशस्त्राधिकरणम् ॥ ५ ॥

६

सू० विधि०—प्रासङ्गिकमिदमधिकरणम्। द्विविधमाख्यातमुक्तम्—प्रधानकर्मणां विधायकं गुणकर्मणाञ्चेति। किमेतदेव प्रकारद्वयम्? नेत्युच्यते। अस्ति तृतीयोऽपि प्रकारोऽभिधायकत्वमिति प्रतिपाद्यते। तत्र "देवांश्च याभिर्यजते ददाति च"

स्तुतिरूपं स्तुतित्वम्। तेनेति। न चैवं "प्रयाजशेषेण हवींष्यभिघारयति" इत्यत्रापि तृतीयाश्रुतिबलाच्छेषस्य गुणत्वमेव स्यान्न प्रधानत्वमिति वाच्यम्। तत्र शेषशब्दबलेन प्रतिपत्तिकर्मत्वे तात्पर्यविगमात्। इह दृष्टार्थतत्रमात्रेण प्रकाशनार्थत्वे लिङ्गादेव प्राप्तिसम्भवेन विधिवैयर्थ्यात्। लिङ्गदर्शनमप्याह—एवञ्चेति। महेन्द्रदेवत्यो ग्रहः पात्रविशेषस्थितस्सोमरसः। श्रुतिसमवायिनी शब्दाश्रिता। विधिशब्देनैव विधिवाक्यगतशब्देनैव निगमेषु इन्द्रायेदमित्याद्यभिलापेषु। यत्र क्रतुविशेषे। ननु क्रतुसम्बन्धबोधकप्रमाणाभावे लिङ्गमात्रेण विनियोगात्कथमुत्कर्षः स्यादत आह—मनोतेति। अग्नीषोमदेवत्ये पशौ "त्वं ह्यग्ने प्रथमो मनोता" इति मन्त्रो यथा लक्षणयाग्नीषोमौ प्रकाशयति तथेत्यर्थः।

प्रयोजनन्तु—पूर्वपक्षे उत्कर्षः सिद्धान्ते नेति स्पष्टमेव। सूत्रार्थस्तु स्तोत्रशस्त्रयोः संस्कारत्वं देवताभिधायकत्वात् याज्यावत् "अग्निर्मूर्धा" इत्यादियाज्यामन्त्रवदिति पूर्वपक्षः ॥५॥

अभिदायकत्वम्—अनुवादकत्वम्। "न ता नशन्ति न दभाति तस्करो नासामामित्रो व्यथिरादधर्षति। देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिः सचते गोपतिस्सह"

१. श्रुतरूपमिति ख.

"अग्नीदग्नीन्विहर" "बर्हिर्देवसदनं दामी" त्येवमादीनि यच्छब्दामन्त्रणोत्तमपुरुषादिसंयुक्तान्याख्यातानि। यानि च "यस्योभयं हविरार्त्तिमार्छेत्" इत्यादीनि यावन्ति निमित्तादिप्रतिपादनेनाख्यातान्तरैरेकवाक्यतां गतानि तान्युदाहरणम्। तानि च प्रायेण मन्त्रेष्वेवेति मन्त्रोपन्यासः। न तु मन्त्रत्वस्य कश्चिन्न्यायोपयोगः। तानि विधायकानि न वेति संशयः। तत्र—

विधायकत्वमेतेषामाख्यातत्वाविशेषतः।
सत्यपि प्रकृते कर्मण्यभ्यासात्कर्मवेदधीः॥ अत्रोच्यते—
यच्छब्दादिभिरेतेषां विधिशक्तिर्विहन्यते।
न हि याभिर्यजेतेति कथञ्चिद्विधिसम्भवः॥

तथा दामि गृह्णामीति नात्मनात्मा शक्यो विधातुम्। आमन्त्रणविभक्तेश्चाग्नीदग्नीन्विहरेति वक्त्रभिमुखश्रोतृविषयत्वात्, वेदे च वक्तुरभावात् विधेश्चाभिमुखानभिमुखपुरुषसाधारणत्वाद्विरुद्धस्वभावेनामन्त्रणेन विधिशक्त्यवलोपः। तस्मादेवमादीनां प्रयोगमध्ये पुरुषान्तरेण पुरुषे स्मारयितव्यं सामर्थ्यं, न बहिःप्रयोगभाविनि विधाविति सिद्धमभिधायकत्वम्[1]॥ इति स्तुतशस्त्राधिकरणम्॥ ६॥

---

इति मन्त्रः। अस्यार्थः—याभिर्गोभिर्देवान् यजते याश्च ददाति ताः गावो न नशन्ति न नश्यन्ति न तस्करो दभाति दभ्नोति हिनस्तीत्यर्थः। न चासां किञ्चिदङ्ग अमित्रकृतो व्यथिर्व्यथा आदधर्षति अभिभवति। गवां पतिस्ताभिः सह ज्योक् चिरं इदिति निश्चितं सचते संयुज्यत इति। तथा हे अग्नीत् इति आग्नीध्रस्य ऋत्विजः सम्बोधनम्। अग्नीन् विहर प्रकाशयेत्यर्थः। देवानां सदनं स्थानं बर्हिर्दामि छिनद्मि इति मन्त्रार्थः। आमन्त्रणं सम्बोधनम्। न्यायसाम्यात्सूत्रे मन्त्रग्रहणमुपलक्षणमित्याशयेनाह—यस्येति। उभयं दधि दुग्धञ्च। आर्त्तिं नाशन्। आर्च्छेत् प्राप्नुयादित्यर्थः। आख्यातान्तरैः "ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्" इत्याद्यैः। ननु प्रकृते अनुबन्ध्यारूपगोद्रव्यकयागे द्रव्ययागयोः प्राप्तत्वात्तदनुनिर्वाप्य चरुयागे चास्य मन्त्रस्य विनियोगात्कथं विधायकत्वमत आह—अभ्यासादिति। पुनःश्रवणरूपादित्यर्थः। यच्छब्दादिभिरिति। आदिना आमन्त्रणादिसङ्ग्रहः। कथं विधिशक्तिप्रतिबन्धकत्वं तत्राह—नहीति। यच्छब्दस्य समभिव्याहृतगतिसिद्धताबोधकत्वादिति भावः। विधातुं प्रेरयितुम्। ननु वक्तुरभावेऽप्युपचारेणामन्त्रणसम्भवाद्विधिवशेन च प्रेरणाबोधसम्भवान्न दोष इत्यत आह—विधेश्चेति। एवं निमित्तत्वबोधकयदिशब्दादावपि निमित्तनैमित्तिकभावेनैकवाक्यता, न तु भेदेन विधिः, प्राप्तस्यैव निमित्तत्वप्रसिद्धेरित्यूह्यम्। प्रयोजनं स्पष्टम्। सूत्रार्थस्तु— विधिमन्त्रयोरैकार्थ्यं विधानरूपार्थैक्यम्, विधिप्रत्ययरूपैकशब्दवत्वादिति॥ इति स्तुतशस्त्राधिकरणम्॥ ६॥

---

१ अविधायकत्वमिति घ.

७

**सू० तच्चोदकेषु**—न्यायानौपयिकेनापि मन्त्रशब्देन पूर्वं व्यवहृतमिति तत्प्रसङ्गाद् 'अहे बुध्निय मन्त्रं मे गोपाये'त्यादिवेदप्रयुक्तस्य मन्त्रशब्दस्यार्थनिरूपणार्थं मन्त्रलक्षणं क्रियते। यानि प्रयोगकालेऽनुष्ठानौपयिकार्थाभिधानस्वरूपाणि वाक्यानि तानि मन्त्रशब्देनोच्यन्ते। प्रायिकमिदमभियुक्तप्रसिध्युपलक्षणार्थम्। तत्राभियुक्तानां मन्त्रप्रसिद्धिः स मन्त्र इत्यर्थः॥ इति मन्त्रलक्षणाधिकरणम्॥ ७॥

८

**सू० शेषे**—द्विविभागस्य वेदस्यैकस्य भागस्य मन्त्रात्मकस्य लक्षणमुक्तम्। तत्प्रसङ्गाद् "एतद्ब्राह्मणान्येव पञ्च हवींषी" ति वेदप्रयुक्तब्राह्मणशब्दार्थपरिज्ञानार्थं ब्राह्मणलक्षणकथनम्—अवशिष्टं ब्राह्मणमिति।

॥ इति ब्राह्मणलक्षणाधिकरणम्॥ ८॥

९

**सू० अनाम्नाते**—ऊहप्रवरनामधेयानां मन्त्रत्वम्? उत नेति? संदेहे मन्त्र-

---

प्रसङ्गसङ्गतिं दर्शयितुमाह—न्यायेति। "अहे बुध्निय" इत्यावसथ्याग्नेस्सम्बोधनम्। शास्त्रसङ्गत्यर्थं वेदप्रयुक्तस्येति। वेदवाक्यार्थविचारात्मकशास्त्रे तदुपयोगितया पदार्थकथनस्यापि सङ्गतिरिति भावः। प्रयोगकाल इत्यनेन प्रयोगविधिविहितत्वमुक्तम्, तेन विधिवाक्यव्यावृत्तिः। वाक्यपदेन रथघोषादिव्यावृत्तिः। मन्त्रकाण्डसमाम्नातेषु "वसन्ताय कपिञ्जलानालभेत" इत्यादिविधिवाक्येष्वपि वैदिकप्रसिध्या मन्त्रत्वसत्वादव्याप्तिमाशङ्क्याह—प्रायिकमिति। अभियुक्ताः वैदिकाः। लघ्यज्ञानमेवात्र प्रयोजनम्। सूत्रन्तु—तेषामनुष्ठेयानां चोदकेषु अभिधायकेषु मन्त्राख्येति यथाश्रुतं प्रथमलक्षणे, द्वितीये तु तेषां मन्त्राणां चोदकेषु अध्यापकेषु या मन्त्राख्या मन्त्रप्रसिद्धिः सैव मन्त्रलक्षणमिति व्याख्येयम्।

॥ इति मन्त्रलक्षणाधिकरणम्॥ ७॥

"एतद्ब्राह्मणानि" इति। "यद्ब्राह्मणानीतराणि" इति शेष इतिशब्देन गृह्यते। यद्ब्राह्मणानि यद्विधायकानि इतराणि वैश्वदेविकपर्वगतानि आग्नेयादिपञ्चहवींषि भवन्ति। एतद्विधायकान्येव वारुणप्रघासिकानीति वाचनिकातिदेशे सप्तमे उदाहरिष्यते। स्पष्टमन्यत्।

॥ इति ब्राह्मणलक्षणाधिकरणम्॥ ८॥

तच्चोदकेति सूत्रसूचितलक्षणद्वये द्वितीयस्यैव मुख्यत्वमिति प्रतिपादनार्थमिदमधिकरणम्। "अग्नये जुष्टम्" इति मन्त्रे सूर्यदेवताके हविषि सूर्यपदोच्चारणम् ऊहः। "आर्षेयं प्रवृणीत" इति विधिवशादुच्चार्यमाणः काश्यपादिः प्रवरः। "यजमानस्य नाम गृह्णाति" इति

वाक्यैकवाक्यत्वेन तन्मध्ये निवेशान्मन्त्रकार्यकरत्वेन च मन्त्रत्वे प्राप्तेऽभिधीयते—मन्त्रकार्यकरत्वं तावद्रथघोषादिष्वनैकान्तिकं, मन्त्रैकवाक्यताऽपि न तत्कारणम्। किन्तु—

अभियुक्तप्रसिध्या हि मन्त्रत्वमवकल्पते।
स्वाध्यायकाले तेषाञ्च समाम्नातेषु मन्त्रधीः॥
मन्त्रानध्यापयामोऽद्य तथा मन्त्रानधीमहे।
समाम्नायबहिर्भूत ऊहादौ नास्ति मन्त्रधीः॥

तस्मादभियुक्तप्रसिध्यभावादेवामन्त्रत्वम्।

॥ इति ऊहाद्यमन्त्रताधिकरणम्॥ ९॥

१०

सू० तेषां—वेदभागयोर्मन्त्रब्राह्मणयोर्लक्षणमुक्तम्। तत्र मन्त्रभागस्यापरोऽवान्तरविभागः ऋगादिरूपो लोके वेदे च प्रसिद्धः। "अहे बुध्निय मन्त्रं मे गोपाय, यमृषयस्त्रयीविदा विदुः, ऋचः सामानि यजूंषी" ति। तत्र को भाग ऋक्शब्देनोच्यते? को वा सामवेदशब्देन? को वा यजुःशब्देनेति? तत्परिज्ञानाय ऋगादिलक्षणमुच्यते। यत्रार्थवशेन पादव्यवस्था सा ऋक् इति।

॥ इति ऋक्सामयजुर्लक्षणाधिकरणम्॥ ६॥

११

सू० गीतिषु—यद्यपि प्रगीते मन्त्रे सामशब्दप्रयोगोऽभियुक्तानां, तथाऽपि नागृहीतविशेषणेति न्यायेन "कवतीषु रथन्तरङ्गायति" इत्याद्यतिदेशोपपत्तेश्च गीति-

---

विधीयमानं देवदत्तादि नाम। मन्त्रकार्येति मन्त्रस्थाग्निपदकार्यदेवताप्रकाशनकरतयेत्यर्थः। मन्त्रकार्येति। "रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति" इति वचनाद्रथघोषस्यापि स्तोत्रोपाकरणप्रकाशकतया तत्रातिव्यापकं लक्षणमित्यर्थः। आद्यहेतुं दूषयति—मन्त्रेति। "इषे त्वा" इत्यादौ "छिनद्मि" इत्यध्याहारात्तस्यापि वेदत्वप्रसङ्गादिति भावः। तेषाम् अभियुक्तानाम्। प्रसिद्धयाकारमाह—मन्त्रानिति। मन्त्रधीः मन्त्रत्वप्रसिद्धिः। सूत्रं स्पष्टम्।

॥ इति ऊहाद्यमन्त्रताधिकरणम्॥ १०॥

प्रसङ्गसङ्गतिमाह—वेदेत्यादिना। अर्थवशेनेति। समस्ताया ऋचो विशिष्टैकार्थप्रतिपादकत्वेऽपि "अग्निमीले पुरोहितम्" इत्यवान्तरवाक्यार्थवशेनैतावानेव पाद इति व्यवस्था। एतच्च वृत्तवशत्वाद्युपलक्षणम्। तस्यैव मुख्यतया व्यवस्थापकत्वात्। एतचच न लक्षणान्तर्गतं, पादव्यवस्थावन्मन्त्रस्यैवानतिप्रसक्तत्वादिति बोध्यम्॥ १०॥

नागृहीतेति। 'नागृहीतविशेषणा बुद्धिर्विशिष्टे खलु जायते' इति न्यायादाकृत्यधिकरणोक्तादित्यर्थः। विशेषतोऽत्र हेतुमाह—कवतीष्विति। ककारवत्यो ऋचः "कया नश्चित्र"

रेव सामेति सप्तमे सूत्रकारः स्वयमेव वक्ष्यति। इह तु मन्त्रविभागमात्रं विवक्षितम्। यद्यपि प्रगीतो मन्त्रः साम, यदि वा गीतिमात्रम्, उभयथाऽपि ऋग्यजुषाभ्यामन्यत्सामेति विभागसिद्धेर्न विभागाय प्रयत्यते। सप्तमे तु "रथन्तरमुत्तरयोर्गायति" इत्याद्यतिदेशौपयिकत्वाद्विभागेन प्रयोजनमस्तीति तत्रैव वक्ष्यमाणावष्टम्भेन गीतिः सामेत्युक्तम्। यत्त्वत्र भाष्यवार्त्तिकयोर्गीतिवाचित्वं साधितं तद्वक्ष्यमाणमेव प्रसङ्गादिति द्रष्टव्यं न सूत्रार्थतया, मा भूत्साप्तमिकस्य पौनरुक्त्यम्॥ ११॥

१२

**सू० शेषे**—ऋक्सामाभ्यां यदन्यत्प्रश्लिष्टपठितं मन्त्रजातं तद्यजुः॥ १२॥

१३

**सू० निगदो वा**—वा शेषे यजुःशब्दः इत्येतदाक्षेपेणेदमारभ्यते। सन्ति निगदा नाम परसम्बोधनरूपा मन्त्राः "प्रोक्षणीरासादये" त्यादयस्ते किं यजूंष्येव? उत यजुर्भ्योऽन्ये? इति विचारः। संज्ञाभेदादिमे निगदा इमानि यजूंषीति, यथा "उपांशु यजुषा" "उच्चैर्निगदेने"ति विप्रतिषिद्धधर्मयोगाच्च भेदप्राप्तावुच्यते-संज्ञा तावन्नितराङ्ग्द्यत इति व्युत्पत्त्या यजुःष्त्वेवोच्चैर्धयोगाच्छक्नोति वर्त्तितुम् ब्राह्मणेष्विव परिव्राजकसंज्ञेति न तया भेदः। न च धर्मभेदाद्भेदः, सत्यपि यजुष्ट्वे परप्रत्यायनकार्यविरोधेन निगदेषूपांशुत्वाप्राप्तेरर्थवशादुच्चैस्त्वसिद्धेः।[1]

ननु याचनिकमुपांशुत्वं लैङ्गिकं परसम्बोधनं कार्यम्, तत्कथं लिङ्गेन वचनस्य बाधः? उच्यते—अत्राङ्गमुपांशुत्वं मन्त्रस्य। प्रधानं परप्रत्यायनकार्यं, तद्यद्यपि दुर्बलप्रमाणकं, तथापि स्वरूपतो बलवत्त्वात् बलवत्प्रमाणकमपि स्वरूपदुर्बलमुपांशुत्वं बाधते।

---

इत्याद्यः। तासु रथन्तरं नाम साम "अभि त्वा शूर नोनुम" इत्यस्यामुत्पन्नमतिदिश्यते। ऋचस्तु वाच्यत्वे ऋगन्तरे पाठो बाधितस्स्यादिति। तर्हि साप्तमिकेन पौनरुक्त्यमत आह—इह त्विति। मात्रपदेन सामशब्दवाच्यविवेकनिरासः। तथाच तदंशेऽनुवाद इति भावः। न सूत्रार्थतया न सूत्रतात्पर्यार्थतया॥ ११॥

प्रश्लिष्टेति। मध्येऽवसानसहितमित्यर्थः। एतच्च स्वरूपकथनमात्रम्। मन्त्रजातमिति ब्राह्मणस्यावृत्यर्थम्॥ इति ऋक्सामयजुर्लक्षणाधिकरणम्॥ १०-१२॥

सङ्गतिमाह—शेष इति। संज्ञेति। इति संज्ञाभेदादित्यन्वयः। विप्रतिषिद्धेति। विरुद्धेत्यर्थः। परप्रत्यायनम् परबोधनम्। कार्यं मन्त्रप्रयोजनम्। अर्थवशात् प्रयोजनवशात्। लैङ्गिकं मन्त्रसामर्थ्यरूपलिङ्गगम्यम्। यद्यपि वाक्यं लिङ्गाद्दुर्बलम् "उपांशु यजुषा क्रियत" इति वाक्येनैव विधिर्न तु श्रुत्या, द्वितीयादिरूपायास्तस्य अभावात्, तथापि मन्त्रगतवाक्यस्य मन्त्रलिङ्गाद्दुर्बलत्वं, न तु ब्राह्मणवाक्यस्येत्यभिप्रायो बोध्यः। स्वरूपदुर्बलम्—स्वरूपतो दुर्बलम्

---

१ उपांशुत्वस्येति क.

प्रमाणबलाबलाद्धि प्रमेयबलाबलं ज्याय[1] इति वर्णितमेतत्। न च वचनस्याप्रामाण्यं, यजुरन्तरे सावकाशत्वात्। अपि चाप्राप्तविधानान्नियमविधानं लघीयः। तेन यत्रानियममात्रमुपांशु यजुषेत्यनेन क्रियते। निगदव्यतिरिक्तेषु च यजुःषु येन केनचित्स्वरेणकार्यसिद्धेरुपांशुत्वस्यानियमप्राप्तिरिति तद्विषयमेवेदं वचनम्। निगदेषु तु [2]कार्यवशेनोच्चैस्त्वमेव प्राप्तं, न पक्षेऽप्युपांशुत्वमिति न तत्रास्य वचनस्य व्यापारः। एवञ्चार्थतः[3] प्राप्तेः उच्चैर्निगदेनेत्यनुवादः। तस्माद्यजूंष्येव निगदा न मन्त्रान्तरम्। तथाच वेदे "अहे बुध्निय मन्त्रं मे गोपाय ऋचः सामानि यजूंषी"ति तन्त्रशब्दसामानाधिकरण्यम् ऋगादीनामेव त्रयाणां दृश्यते। जात्यन्तरत्वे हि निगदशब्दोऽपि तत्र श्रूयेत। तस्मात् त्रिधैव[4] मन्त्राः ॥१३॥

## १४

**सू० अर्थैकत्वात्**—ऋग्यजुस्सामरूपे मन्त्रविभागेऽभिहितेऽधुना तदवान्तरभेदं कथयितुं प्रस्तावः। तत्र ऋक्सामानामध्येतृसिद्धो भेदो न वक्तव्यः। यजुषान्तु प्रश्लिष्टपठितानां भेदो न सुज्ञान इति तत्परिज्ञानाय [5]यजुःपरिमाणलक्षणमुच्यते। यावदेकप्रयो-

---

भङ्गत्वात्वर्णितं शिष्टाकोपाधिकरणे। वचनस्य "उपांशु यजुषा" इत्यस्य। तेन "आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्" इत्यस्यापि न विषय इति भावः। एवं तावदुपांशुत्वविधेर्निगदेषु बाध उक्तः, इदानीं लाघवसहकृतस्योपांशुत्वविधेर्निगदेषु प्रसक्तिरेव नास्तीत्याह—अपि चेति। लघीय इति। नियतप्राप्तिरूपधर्मिणि तात्पर्यपेक्षया नियमरूपधर्ममात्रे तात्पर्यस्य कल्पने लाघवादित्यर्थः। दृष्टोद्देश्यकत्वलाघवादित्यपरे। अनुवाद इति। उपांशुत्वविधिस्तुत्यर्थ इति भावः ॥ १३ ॥

सङ्गतिमाह—ऋगिति। यजुःपरिमाणं एतावदेकं यजुरिति। यावदिति। यावत्पदजातं पदसमूहः, एकप्रयोजनं प्रयोजनभूतैकार्थप्रतिपादकमित्यर्थः। तथाच यावतां पदानां सम्भूय प्रयोजनीभूतैकार्थप्रतिपादकत्वं तावतामेकवाक्यतेति पर्यवसन्नम्। यथाश्रुते एकस्मिन्नपि वाक्येऽर्थानेकत्वेनासम्भवात्। प्रयोजनभूतस्त्वर्थो निर्वापादिर्देवतादिश्चैकस्मिन्मन्त्रे एक एव विशेषणविशिष्टः प्रतिपाद्य इति नासम्भवः। विभागे विच्छेदे साकाङ्क्षमिति तु अर्थैकत्वगमकयोच्यते न लक्षणघटकतया। "भगो वां विभजतु पूषा वां विभजतु" इति मन्त्रयोः परस्पराकाङ्क्षाविरहेणैकार्थप्रतिपादकत्वाभावेन तद्व्यावृत्तिप्रयोजनासम्भवादिति ध्येयम्। 'स्योनं त' इत्यादौ तु न सदनार्थकसादनार्थकभागयोः प्रयोजनीभूतैकार्थप्रतिपादकता, किन्तु लिङ्गवशेनैकैकस्यैकैकप्रकाशकत्वमेव तात्पर्यवशादिति न तत्रातिव्याप्तिः। भाष्ये तु यावतां पदानां प्रतिपाद्यार्थैकत्वं तावदेकं वाक्यमिति यथाश्रुते विभागमन्त्रयोरतिप्रसक्तमतस्तद्व्यावृत्त्यर्थं बिभज्यमानसाकाङ्क्षत्वविशेषणमित्युक्तम्। तन्मात्रञ्च "स्योनं त" इत्यादावतिव्याप्तमित्यर्थैकत्वमिति। प्रकृतस-

---

१. बलीय इति ख. २. कार्यबलेनेति क. ३. अर्थप्राप्त इति ग.
४. त्रैधमेव मन्त्राणामिति ख, ग. ५. यजुष इति ख, ग.

जनं विभागे च साकाङ्क्षं पदजातं तावद्यागसाधनत्वाद्यजुः, वक्तव्यत्वाच्च वाक्यम्। एतस्माच्च कारणादेकवाक्यत्वं तत्ततोऽन्यत्तद्वाक्यान्तरं यजुरन्तरं चेत्युक्तं भवति। उदाहरणञ्च "देवस्य त्वा सवितुः प्रसव" इति। अत्र हि सर्वाणि पदानि निर्वापप्रकाशनार्थानि विभागे च साकाङ्क्षाणि। तस्मादेषामेकयजुष्ट्वम् ॥१४॥

१५

**सू० समेषु**—एकप्रयोजनं सर्वं विभज्यमानं साकाङ्क्षं पदजातमेकं यजुरित्युक्तम्। एतेन लक्षणेन यत्र कर्मसमवेतार्थप्रकाशकं निर्वपामीत्यादि पदमस्ति, तत्रैतत्सुगमं परिमाणम्। अथ यत्र समवेतार्थप्रकाशकपदाभावेन लैङ्गिकविनियोगाभावे वाचनिको विनियोगः परस्परनैराकाङ्क्ष्यञ्च[1] स्वरूपतोऽवगम्यते यथा 'इषे त्वोर्जे त्वे' ति, यथा 'वायुर्यज्ञेन कल्पतां' 'प्राणो यज्ञेन कल्पतामि'ति, तत्र कियदेकं यजुरिति चिन्त्यते—किं प्रागदृष्टार्थमन्त्रावधेरेकमन्त्रत्वम्, उत यावदेव मिथः सम्बद्धमिषे त्वेति तावदेकं यजुरन्यच्च यजुरन्तरमिति। तदर्थं च किं सर्वमेकार्थमुत भिन्नार्थमिति विचारः[2]। तत्र तावत्—

अदृष्टार्थत्वमेतेषामनुष्ठेयाप्रकाशनात् ।
तच्चैकं तत्र साकाङ्क्षाः सर्वं इत्येकवाक्यता ॥

अदृष्टं हि कल्प्यमानमेकमेव युक्तं तावतैवोपपत्तेः। अतः सर्वे तावदेकार्थाः। तच्च सर्वेषां सह कल्पितमिति संभूयकारित्वाद्विभज्यमानाः साकाङ्क्षा भवन्तीत्येकवाक्य-

---

ङ्गत्यर्थे सूत्रे वाक्यशब्दः प्रकृतयजुःपर इति सूचयितुमाह—यजुरिति। कथं तर्हि तत्र वाक्यशब्दस्तत्राह –वक्तव्यत्वादिति। तत्किं यजुर्लक्षणमेवैतदित्याशङ्क्याह—एतस्मादिति। वाक्यसामान्यलक्षणमेवैतद्यजुःपरिमाणस्यापि गमकत्वादुक्तमिति भावः। "प्रसव" इत्यनन्तरं "अश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि" इति शेष इतिना गृह्यते. सर्वाणीति। निर्वापविशेषणप्रकाशनमुखेनेत्यर्थः ॥१४॥

साकाङ्क्षं चेदिति पूर्वाधिकरणोक्तविशेषणाभावस्य यजुर्भेदकत्वमाक्षिप्य समाधीयत इति सङ्गतिः। प्रागदृष्टार्थेति। "वायवस्थ" इत्यग्रे पठितो मन्त्रो वत्सापाकरणे विनियुक्तो दृष्टार्थः। वायव इव शीघ्रगामिनो भवथेत्यर्थात्। ततःप्राक् "इषे त्वोर्जे त्वा" इत्यस्यैकमन्त्रत्वमित्यर्थः। अदृष्टार्थत्वमिति। "इषे त्वोर्जे त्वा" इत्यस्यानुष्ठेयाप्रकाशकतया तत्प्रकाशनस्यादृष्टार्थता वाच्या। तत्रादृष्टद्वयकल्पने गौरवादेकमेव तत्कल्प्यते। तज्जनकञ्च प्रकाशनमेकमेव "इषे त्वोर्जे त्वा" इत्येताभ्यां क्रियते। अदृष्टरूपफलैक्ये द्वारभूतार्थप्रकाशनस्यापि तदौचित्यात्। त्वामिति च शाखाया एकस्या एवोभयत्र बोधनात्। एवञ्चार्थैक्ये चका-

---

१ निराकांक्षमिति क, ख. २ चिन्तेति ग.

ता। निश्चिते च मन्त्रैकत्वे यद्यपि प्रतीकभेदेनानेकत्र[1] विनियोगः–इषे त्वेति छिनत्ति, ऊर्जे त्वेति अनुमार्ष्टीति, तथाऽपि यावद्विनियोगं सकल आवर्त्तिष्यते। उच्यते—

**यद्यप्येषामदृष्टोऽर्थस्तथाऽपि न तदेकता।**
**रूपतो हि निराकाङ्क्षा भिन्नत्वेनावधारिताः॥**
**अन्योन्यानादरेणैव प्रार्थयन्ते प्रयोजनम्।**
**यथाऽपेक्षमतस्तेषां [2]भिन्नादृष्टप्रकल्पनम्॥**
**यथा विश्वजिदादीनां भेदेन फलकल्पना।**
**यथा च समिदादीनामपूर्वं भिन्नमिष्यते॥**
**तद्वदत्र न चात्रैषामदृष्टार्थत्वसम्भवः।**
**शाखाच्छेदप्रकाशेन दृष्टार्था हि विधेरमी।**

इषे त्वेति छिनत्तीति शाखाच्छेदने करणत्वेन मन्त्रो विधीयते। क्रियानिर्वर्त्तकञ्च करणं भवति। न च मन्त्राणां क्रियानिवर्तकत्वम्,अन्यतः प्रकाशनात्। तेन त्रिधिवशादेषां[3] प्रकाशनार्थत्वम्। तत्र यावता विना चोदितस्य प्रकाशनं न भवति, तावदध्याहर्त्तव्ययं छिनद्मीत्यादि। तत्रैकेन छेदनं प्रकाश्यते अन्येन त्वनुमार्जनमित्यर्थभेदान्मन्त्रभेदः। तथा "आयुर्यज्ञेन कल्पतामि" त्यादीनामपि स्वरूपतो निराकाङ्क्षत्वात् क्लृप्तीर्वाचयतीति च क्लृप्तिबहुत्ववचनस्य चोदितत्वात्तत्सम्पत्त्यर्थमायुरादिविशिष्टक्लृप्तिभेदप्रकाशनपरत्वादर्थभेदेन मन्त्रभेदः॥ १५॥

---

राद्यध्याहारेण साकाङ्क्षत्वमपि कल्पनीयमिति भावः। निश्चिते चेति। अदृष्टकल्पनालाघवादिति भावः। आद्यन्तप्रतीकाभ्यामेकस्यैव मन्त्रस्योभयत्र विनियोगसम्भवात्प्रकाशनावृत्तावप्यर्थैक्यानपायात्। एवमावृत्तिवशाददृष्टावृत्तावपि व्यक्तिभेदमात्रं, न तु वैजात्यमपीति ज्ञेयम्। अदृष्टार्थत्वमभ्युपेत्य तावदाह—यद्यपीति। न चादृष्टयोरेकजातीयत्वं शक्यं वक्तुम्, तथा सत्यावृत्तिनैष्फल्यात्। एकेनैवादृष्टेनोभयोपकारसम्भवादिति भावः। तद्वदत्रेति पूर्वान्वितम्। विधेरिति पञ्चमी। विधिवशादित्यर्थः। तदेवोपपादयति–इषे त्वेतीति। इतिशब्देन काणत्वोक्तेरिति भावः। प्रकाशनादन्यतः प्रकाशनद्वारं विनेत्यर्थः। ननु छेदनाद्यभिधायिपदाभावात्कथं प्रकाशकत्वमत आह-तत्रेति। क्लृप्तिमन्त्रेऽप्यर्थैक्यं नास्तीत्याह-तथेति। स्वरूपतः स्वभावतः। ननु सर्वेषां क्लृप्तिरूपार्थैकत्वेनाकांक्षापि कल्पनीयेत्यत आह—क्लृप्तीति। बहुत्वचनस्य बहुत्वप्रकाशनस्य। क्लृप्तेरेकत्वे तदनुपपत्तेरित्यर्थः। "भगो वाम्" इत्यत्र तु विभागमात्रे तात्पर्यम्, न तु विभागानेकत्वे तात्पर्यग्राहकमस्ति, येन भगार्यमादिकर्तृकविभागभेदः स्यादिति भावः।

प्रयोजनम्–इषे त्वेत्यादौ एकस्यैवाप्रयोगः, किन्तु छेदनेऽनुमार्जने चेषे त्वोर्जे त्वेत्येतावतः पूर्वपक्षे। सिद्धान्ते तु विभागेन। क्लृप्तिमन्त्रे तु "प्राणो यज्ञेन" इत्यन्तभागे शेषे सकलावृत्तिः पूर्वपक्षे। सिद्धान्ते तन्मात्रस्येति। सूत्रे–समेषु परस्परानपेक्षतया तुल्येष्वित्यर्थः॥१५॥

---

१ प्रत्येकेति ग. २ कल्पनेति ग. ३ बलादिति क, ख.

१६

सू॰ अनुषङ्गो—अत्रापि यजुःपरिमाणमेव चिन्त्यते। यत्र बहूनां वाक्यशेषापेक्षिणां[1] वाक्यानां सन्निधावेकस्यानन्तरदेशे परिपूरणसमर्थो वाक्यशेषः श्रूयते, यथा—" या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीत्त्वेषं वचो अपावधीत्स्वाहा, या ते अग्ने रजाशया या ते अग्ने हराशये " ति अत्रौत्तरौ मन्त्रावुदाहरणम्। किं तयोर्लौकिकः शेषोऽध्याहर्त्तव्यः[2] ? उत योऽसौ पूर्वमन्त्रानन्तरं पठितः " तनूर्वर्षिष्ठे " त्यादिः स एव सर्वेषामर्थेनाम्नातः पूर्वस्येवोत्तरयोरप्यनुषङ्गेण शेषः ? इति। अध्याहारे "या ते अग्ने रजाशया[3]" इत्येतावानेव मन्त्रः, अध्याहृतस्य लौकिकस्योहादिवदमन्त्रत्वात्। अनुषङ्गे तु तत्सहित एव मन्त्र इत्यस्ति परिमाण विशेषः। तत्र—

एकत्रैव निबद्धो हि समाम्नायेन वैदिकः।
शेषोऽन्यत्र न नेतव्यो लौकिकस्त्वनिबन्धनः॥

लौकिको हि शब्दः सर्वार्थो न क्वचिदेव विशेषेण निबद्धः। स यत्र यत्र कार्यं तत्र सर्वत्र यथेष्टं विनियुज्यमानो न विरुध्यते। वैदिकस्तु यदर्थमाम्नातस्तेनैव निबद्धो नान्यत्र नेतुं शक्यते। नीयमानो वा समाम्नायबहिर्भावाल्लौकिक एव स्यात्। न च सर्वार्थमाम्नात इति वाच्यम्। सकृदाम्नातस्यानेकार्थताऽनुपपत्तेः। न चागृह्यमाणविशेषत्वम्, आनन्तर्येण देशभेदेन च विशेषग्रहणात्। प्रथमस्य ह्यसावनन्तरो न तृतीयस्य। द्वितीयस्य तु यद्यप्यनन्तरः तथाऽपि परस्ताद्भावित्वेन वाक्यशेषस्याका-

---

सङ्गतिमाह—अत्रापीति। मन्त्रार्थस्तु—हे अग्ने या ते तव तनुः अयाशया लोहाश्रिता, रजाशया रजताश्रिता, हराशया हिरण्याश्रिता वर्षिष्ठा वृद्धतया गह्वरेष्ठा तीक्ष्णद्रव्यवस्था, तया तन्वा अहं उग्रं वचः क्षुत्पिपासे, त्वेषं वचः उपपातकं वीरहत्यादि महापातकञ्च हतवानस्मीति। तथा च ब्राह्मणम् "अशनायापिपासे ह वा उग्रं वचः एनश्च वैरहत्यं च त्वेषं वच" इति। लौकिक इति। प्रभा प्रवृद्धतरा सास्मान् पात्वित्येवमादिरूप इत्यर्थः। नन्वाग्नेयीन्यायेन प्रकृतस्यैव वैदिकस्योपस्थितत्वादध्याहारः स्यादिति न परिमाणे विशेष इत्याशङ्क्याह-अध्याहार इति। समाम्नायेन पाठेन। न नेतव्यः नेतव्यतया नाभिप्रेतः। अनिबन्धनः स्थानविशेषानियतः। तेनैव निबद्धः तेनैवान्वितः। ननु पाठस्य सर्वार्थत्वाभावेऽप्याकाङ्क्षया प्रकृतस्यैव वैदिकतयाध्याहार उचितस्तत्राह—नीयमानो वेति। आनन्तर्यं हि व्यवधानशून्यत्वम्। पूर्वापरयोरविशिष्टमित्याशङ्क्याह—देशेति। उत्तरपूर्वरूपेत्यर्थः। एतदेवोपपादयति—द्वितीयस्य त्विति।

---

१ पेक्षाणामिति क, ख. २ अध्याहार्य इति क, ख, ३ याते अग्ने हराशया इत्यधिकं क पुस्तके.

ङ्क्षितत्वान्न[1] पुरस्ताद्भाविना सम्बन्धः। प्रथमस्य त्वपेक्षित एव देशे पठितस्तस्मात्तस्यैवायं[2] शेष इति प्राप्तेऽभिधीयते—

**यथापेक्षितरूपे हि वाक्यशेषे समर्पिते।**
**वेदेन लौकिकः शेषो न मृग्यो निष्प्रमाणकः॥**

सर्वानन्तरं सकृत्पठितुमशक्यो बुद्धिविपरिवृत्तिमात्रेण साकाङ्क्षैस्सर्वैः सम्बन्धसिद्धेः। पुनःपुनरसमाम्नातोऽप्ययं शेषः सर्वार्थेनैवाम्नात इति युक्तमङ्गीकर्तुम्। एतावतैव[3] वेदसमर्पितेन शेषेण सर्वेषां नैराकाङ्क्षयसिद्धेः, निष्प्रमाणको लौकिकोऽध्याहारः। शक्नोति चायं सर्वैः सम्बद्धुम्। प्रथमेन हि सम्बद्धो द्वितीयस्याप्याकाङ्क्षावेलायां बुद्धौ विपरिवर्त्तमानस्तेनापि सम्बध्यते। तत्सम्बन्धाच्च विपरिवृत्त्यभङ्गात् तृतीयेनापि सम्बन्धसिद्धिः। तुल्यो ह्यस्य सर्वैर्योगः, कारणाविशेषात्। एतावच्च शब्दानामन्वये कारणमाकाङ्क्षा सन्निधिर्योग्यत्वं च, न त्वनन्तरसमाम्नानम्। व्यवहितस्याप्यसम्बन्धिव्यवधानाभावे[4] बुद्धिविपरिवृत्तिरूपं सन्निधानं सर्वत्र क्रमेण लभ्यते। तस्मादाम्नानमेवास्य सर्वार्थमिति सर्वशेषता। एवं तावत्साकाङ्क्षेष्वनुषङ्ग उक्तः। यत्र तु निराकाङ्क्षाणामेकार्थानां सन्निधावेकस्यानन्तरं[5] वाक्यशेषः श्रूयते, यथा—"चित्पतिस्त्वा पुनातु, वाक्पतिस्त्वा पुनातु, देवस्त्वा सविता पुनात्वि" ति सर्वे निराकाङ्क्षा यजमानपावनार्थाः सत्यप्येकार्थत्वे वचनात्समुच्चीयन्ते। तेषामन्ते 'अच्छिद्रेण पवित्रेण' इति शेषः समाम्नातः। स किं पूर्वयोरप्यनुषज्यते? किं वा परस्यैव मन्त्रस्य शेषः? इति। तत्र शेषस्तावदेकेनैवानन्तरेण सम्बध्य निराकाङ्क्षः सम्पद्यते, शेषिणस्तु प्रागेव निरपेक्षाः,[6] तेनाप्रामाणिकोऽनुषङ्ग इति। अत्रोच्यते—पुनातुशब्दे-

---

सिद्धान्तमाह—यथेति। वेदेनेति पूर्वान्वयि। सर्वेषामनन्तरदेशेऽनाम्नानात्कथं सर्वार्थत्वमित्याशङ्क्याह—सर्वेति। तर्हि पुनः पुनराम्नानं कुतो न कृतं तत्राह—बुद्धीति। बुद्धौ विपरिवृत्तिर्विषयता। सकृत्कृतप्रयाजादेराग्नेयादित्रिकोपकारकत्ववदिहापि तन्त्रेणोपकारकत्वसम्भवान्न पुनः पुनराम्नानमित्यर्थः। एतावतैवेति। सर्वार्थताङ्गीकारेणैवेत्यर्थः। निष्प्रमाणकः नियामकप्रमाणशून्यः। बुद्धिविषयत्वरूपामासत्तिं सर्वान्वये उपपादयति—शक्नोतीति। विपरिवृत्त्यभङ्गात् उपस्थित्यभङ्गात्। व्यवहितेति। दण्डेन गामानयेत्यादौ दण्डादीनामानयनाद्यन्वयप्रतीतेरसम्बन्धिपदेनाव्यवधानं वाच्यम्। एवञ्च गामित्यस्यानयनासम्बन्धित्वाभावाद्व्यवधायकत्वाभाववदिहापि न व्यवधायकत्वमिति भावः। साकाङ्क्षेषु परस्परसाकाङ्क्षेषु। भाष्ये—अथवेत्यादिना उदाहरणान्तरे विचारो दर्शितः, तमाह—यत्रेति। वचनादिति। "त्रिभिः पावयति" इति वचनादित्यर्थः। पवित्रेणेतीति शब्देन "वसोस्सूर्यस्य रश्मिभिः" इति पदानि

---

१ अपेक्षितत्वादिति क, ख. २ अयमिति नास्ति ग. ३. एवमिति ख, ग. ४ व्यवहितसमाम्नातस्यापीति क, ख. ५ अनन्तरं इति क. ६ निराकांक्षास्तेन निष्प्रमाण इति क, ख.

नैकवाक्यतामुपगतोऽयमच्छिद्रादिः करणद्वारेण पावनक्रियाप्रकाशनार्थः, सैव च क्रिया पूर्वाभ्यामपि मन्त्राभ्यां प्रकाश्यते। तदर्थश्च[1] वाक्यशेषः प्रधानवशात्तत्राकृष्यत इत्यनुषङ्गसिद्धिः—

॥ इति अनुषङ्गाधिकरणम् ॥१६॥

१७

सू० व्यवायात्—"सन्ते वायुर्वातेन गच्छतां संयजत्रैरङ्गानि संयज्ञपतिराशिषा" इति गच्छतामित्ययं शब्दः संयजत्रैरङ्गानीत्यनेन बहुवचनान्तेनायोग्यत्वान्न सम्बध्यते, संयज्ञपतिना तु योग्यत्वादनुषङ्गेण सम्बध्यत इत्याशङ्कायामुच्यते–पूर्वत्रासम्बद्धत्वेन बुद्धिविपरिवृत्तिभङ्गान्नानुषङ्गः[2]।

सर्वत्र तुल्ययोगित्वादनुषङ्गो हि वर्णितः।
असम्बन्धितिरोधाने व्यवधानान्न तुल्यता॥

॥ इति व्यवायाधिकरणम् ॥१७॥

इति शास्त्रदीपिकायां द्वितीयाध्यायस्य प्रथमः पादः



सङ्गृह्यन्ते। सैवेति। "क्लृप्तीर्वाचयति" इतिवत्पावनक्रियाबहुत्वाश्रवणादिति भावः। तदर्थश्चेति। पावनक्रियासम्बन्धिकरणप्रकाशनद्वारेणेत्यर्थः। प्रधानवशादिति। 'प्रतिप्रधानं गुणावृत्तिः' इति न्यायादिति भावः। वाक्यस्य परिसमाप्तिः पर्यवसानं येन सोऽनुषङ्गो भवति। सर्वेषु तुल्ययोगित्वात् अन्वयकारणसाम्यादिति सूत्रार्थः॥ इति अनुषङ्गाधिकरणम्॥ १६॥

अनुषङ्गस्यापवादात्सङ्गतिः। संत इति। पशोः शिरोऽसद्वयदक्षिणश्रोणिष्वाज्येनाञ्जने मन्त्रत्रयमिदम्। तस्यार्थः—हे पशो ते वायुः प्राणो बाह्यवातेन सङ्गच्छताम्। 'छन्दसि व्यवहिताश्चे' त्यनुशासनात्साधुत्वम्। अङ्गानि हृदयादीनि यजत्रैर्यागैः सङ्गच्छताम्। यज्ञपतिः यजमान आशिषा फलेन सङ्गच्छतामिति। सं यज्ञपतिनेति। सं यज्ञपतिराशिषेति मन्त्रेणेत्यर्थः। पूर्वत्र सं यजत्रैरिति मन्त्रे। तुल्ययोगित्वादिति पूर्वोक्तहेतुप्रत्युदाहरणकथनात्सङ्गतिं सूचयन् सूत्रार्थमाह–सर्वत्रेति। प्रयोजनम्–सर्वत्र मन्त्रत्वे सति मन्त्रभ्रेषनिमित्तप्रायश्चित्तम्, अमन्त्रत्वे त्वन्यदिति ज्ञेयम्॥ इति व्यवामाध्यिकरणम्॥ १७॥

इति श्रीमद्रामचन्द्रात्मजतत्सद्वैद्यनाथकृतायां शास्त्रदीपिकाटीकायां प्रभाख्यायां द्वितीयाध्यायस्य प्रथमः पादस्सम्पूर्णः



१ तदर्थञ्चेति क. २. असम्बद्धेन तु इति क.

## द्वितीयाध्यायस्य द्वितीयः पादः

१

सू॰ शब्दान्तरे--गतमुपोद्घातप्रसक्तानुप्रसक्तम्। इदानीं लक्षणार्थः कर्मभेदः शब्दान्तरादिभिरभिधीयते। तत्र प्रथमं शब्दान्तराद्भेदोऽभिधीयते। इहैकप्रकरणगतान्यपर्यायधातुभ्यो निष्पन्नान्याख्यातानि यजतिददातिजुहोतीत्यादीन्युदाहरणम्। अत्र हि सत्यपि प्रत्ययांशस्यैकत्वे धातुभेदादाख्यातपदानि मिथः शब्दान्तरं भवन्ति। तत्र संशयः-किमत्रैका भावना नानाधात्वर्थानुरक्ता[1] विधीयते? उत प्रतिधात्वर्थं भावना[2]-भेदः? इति। तत्र--

भिन्नासु भावनासु स्यादनेकापूर्वकल्पनम्।
एकक्लृप्त्युपपन्नेऽर्थे नानेकं[3] तत्र कल्प्यते॥

फलापवर्गित्वात्क्रियाणां न फलभेदमन्तरेण क्रियाभेदसम्भवः[4]। तद्यदि प्रतिधात्वर्थं भावनाभेदस्स्यात्ततस्सा भाव्यरूपापूर्वभेदादृते न भिद्यत इत्यनेकापूर्वकल्पना स्यात्। न चैकेनोपपन्ने वाक्यार्थेऽनेककल्पनं[5] न्याय्यम्। तस्मादेका भावना।

### द्वितीयाध्यायस्य द्वितीयः पादः

१

अवसरसंगतिमाह—गतमित्यादि। धात्वर्थभेदानुनिष्पाद्यपूर्वभेदसिद्ध्यर्थं भावार्थाधिकरणमपूर्वाधिकरणञ्चोपोद्घातः। तेन प्रसक्तम्-क्वापूर्वमस्ति क्व नेति विवेचनम्। तदनुप्रसक्तं मन्त्रगताख्यातनिरूपणादीत्यर्थः। कर्मभेदो भावनाभेदः। प्रथममिति। धात्वर्थभेदस्य मानान्तरसिद्धतया भावनाभेदमात्रे शब्दान्तरस्य व्यापारात्सूचीकटाहन्यायेन निरूपणमिति भावः। एकेति। ज्योतिष्टोमप्रकरणेत्यर्थः। एतच्च प्रकरणान्तरे सति तस्मादेव भेदसिद्धिरिति शङ्काव्यावृत्यर्थम्। जानाति बुध्यत इत्यादीनामर्थैक्येऽपि शब्दान्तरत्वात्तद्व्यावर्त्तनाय अपर्ययेति। धातुभ्यो निष्पन्नानि प्रयुज्यमानानि। शब्दान्तरमित्येकवचनं शब्दान्तराख्यप्रमाणाभिप्रायम्। श्लोकं व्याचष्टे—फलेति। फलनाश्यत्वादित्यर्थः। तस्मादिति। कल्पनालाघवादित्यर्थः। अयमाशयः—यद्यप्युत्पत्तिशिष्टैकधात्वर्थविशिष्टभावनायां वाक्यान्तरेण धात्वर्थान्तरं न विधातुं शक्यम्, तथाप्यनेकादृष्टकल्पनागौरवपरिहारायैकवाक्यतैवाङ्गीकार्या। आख्यातभेदे यच्छब्दाद्यभावेऽपि च "अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि मिनोति" इत्यादौ तथाङ्गीका-

१. नानेति नास्ति क. २. भिद्यते भावनेति क. ३. तच्च लभ्यत इति क. ४. क्रियेति नास्ति ग. ५. कल्पना न्याय्येति क, ख.

किञ्च,

भावना प्रत्ययार्थत्वात्तदेकत्वान्न भिद्यते ।
गुणभूता हि धात्वर्था न तां भिन्द्युः कथञ्चन ॥

यद्यपि धातुभेदादाख्यातपदानि मिथः शब्दान्तरं, तथाऽपि प्रत्ययांशः सर्वत्रैकरूपस्तदर्थश्च[1] भावना तदभेदादभिन्ना भवितुमर्हति । यदि हि धात्वर्थान् प्रति गुणभूता भावना स्यात्, ततस्तेषां धातुभेदेन भिन्नत्वाद्भावनाऽपि तान्प्रत्युपादीयमाना प्रतिधात्वर्थं भिद्येत । भावनाप्रधानत्वादाख्यातस्य[2] तां प्रत्युपादीयमाना धात्वर्थाः संहत्यैव तां विशिषन्ति क्रयमिवारुणिमादयः । तस्मान्न भावनाभेदमावहेदिति[3] प्राप्तेऽभिधीयते—

प्रत्ययांशः समानोऽपि प्रतिधातु प्रयोगत ।
तत्तदर्थानुसारेण भावनाभेदमावहेत् ॥
निष्पद्येत समस्तेभ्यो धातुभ्यः प्रत्ययो यदि ।
ततः सर्वविशिष्टा स्याद् द्वन्द्वोत्पन्नसुवर्थवत् ॥
यदि वा प्रत्ययः शुद्धः सर्वधातुपृथक्कृतः ।
श्रूयेत क्रयवत्सर्वैर्विशेष्येत च धातुभिः ॥

न हि समुदितेभ्यो धातुभ्यः प्रत्ययः श्रूयते, अग्नीषोमादिभ्य इव सुप्प्रत्ययः । नापि पृथक् क्रीणातिरिवारुणादिभ्यो विविक्तः,[4] येन सर्वैर्धात्वर्थैः प्रातिपदिकार्थैरिव

रात् । एवञ्च सर्वेषामुत्पत्तिशिष्टत्वान्न दोषः । यद्वा "ज्योतिष्टोमेन स्वर्गकामो यजेत" इति फलवाक्ये स्वर्गोद्देशेन शुद्धा भावना विधीयते । न तु धात्वर्थोऽपि । तस्य वाक्यान्तरात्प्राप्तिसम्भवेन विशिष्टविधिगौरवानङ्गीकारात् । ताञ्च भावनामाख्यातांशेनानूद्य यजत्यादिपदैर्यागादयो विधीयन्ते । फलवाक्ये यजतिरवयुत्यानुवादः सर्वोपलक्षणं वेति न भावनाभेद इति । वाचकशब्दैक्यादपि न भावनाभेद इत्याह—किञ्चेति । भावनायाः प्रत्ययवाच्यत्वाभावे तदेकत्वस्य न भावनैक्यप्रयोजकत्वं स्यादतः प्रत्ययार्थत्वोक्तिः । पुनरुच्चारणन्तु केवलायाः प्रकृतेः प्रयोगासम्भवादिति भावः । उत्तरार्धं व्याचष्टे यदि हीति । तेषां धात्वर्थानाम् । धातुभेदेन अपर्यायधातुभेदेन । उपादीयमाना विधीयमाना । भिद्येतेति । विहिताया विधानायोगादिति भावः । तत्तदर्थेति । तत्तद्धात्वर्थभेदानुसारेणेत्यर्थः । कृतिरूपाया भावनायाः सविषयतया विषयभूततत्तद्धात्वर्थनिरूप्यतया तद्भेदादवश्यं भावनाभेदः सिद्ध्यतीति भावः । युगपदनेकविषयज्ञानादिवदनेकधात्वर्थावच्छिन्नैकभावनास्त्वित्याशङ्क्याह—निष्पद्येतेति । श्रूयेतेति पूर्वान्वितम् । क्रयवदिति । यथा क्रयः सर्वैररुणादिभिर्विशेष्यते तद्वदित्यर्थः । धातुभिः धात्वर्थैः । तथाचानेकधात्वर्थविशिष्टैकभावनाबोधकशब्दाभावान्न भावनैक्यमित्यर्थः द्वन्द्वोत्पन्नसुवर्थे त्वेकपदोपात्तत्वं क्रीणातौ चैकवाक्योपात्तत्वमेकस्यानेकवैशिष्ट्यं हेतुरिति दृष्टान्तवैषम्यमुक्तम् । वाक्या-

१ तु इति क. २ वाख्यातस्येति क. ३ भेद इति क. ४ विभक्त इति क, ख.

सुबर्थः पदेन क्रय इवारुणिमादिभिर्वाक्येन[1] युगपद्भावना विशेष्येत[2]। प्रत्येकं तु धातुभ्यः प्रत्ययः श्रूयत इति नैकभावनासम्भवः। तथा हि-प्रत्ययो हि यजतिपरः[3] श्रूयमाणः केवलां यागकरणिकां भावनां श्रुत्या विधत्ते। दानहोमौ तस्यां निविशमानौ पदान्तरगतत्वाद्वाक्येन प्रकरणेन वा निविशेयाताम्। ते च श्रुतितो दुर्बले, करणांशोपनिपाताच्चास्ति विरोधः। समुच्चये नैरपेक्ष्यबाधः। तेन दानहोमयोस्तदनुवादेन विधानासम्भवात् तदनुरक्ते भावने एव तद्गतेन प्रत्ययेन विधातव्ये। विहितायाश्च विध्यसम्भवात् भावनान्तरत्वम्। उच्चार्यमाण एव प्रत्ययः प्रकृत्यर्थभेदभिन्नामेव स्वाभिधेयां भावनामवगमयति। तस्मात्सिद्धो धात्वर्थभेदेन भावनाभेदः—

॥ इति शब्दान्तराधिकरणम् ॥१॥

२

सू० एकस्यैवम्—अभ्यासादिदानीं भेदोऽभिधीयते। विधेरविशेषेण पुनःश्रवणमभ्यासः। यथा "समिधो यजति तनूनपातं यजति" इत्यादिपञ्चकृत्वो यजतिपदमभ्यस्तम्। तत्किमेकां भावनां प्रतिपादयत्युत प्रत्यभ्यासं भावनाभेदः? इति। तदर्थञ्च किमेक एव यागः। उत[4] पञ्च यागाः? इति। यागैकत्वे भावनैकत्वं, तद्भेदे तु पूर्वाधिकरणन्यायात्[5] धात्वर्थभेदाद्भावनाभेद इति। तत्र—

---

न्तरोपात्तस्यापि वाक्यान्तरे निवेशमाशङ्क्याह—तथाहीत्यादि। भिन्नवाक्यतायाः स्पष्टत्वादाह प्रकरणेन वेति। श्रुतितः एकपदरूपश्रुत्यपेक्षया। विरोधाभावे दुर्बलस्यापि बाधायोगादाह—करणांशेति। नैरपेक्ष्येति। यजतीतिपदेन दानहोमादिनिरपेक्षस्यैव यागस्य भावनाकरणत्वस्य प्रतीयमानस्य बाधापत्तेरित्यर्थः। फलवाक्ये शुद्धभावनाविधानपक्षस्यासम्भवं दर्शयति—उच्चार्यमाण एवेति। भावनायाः सविषयत्वादित्याशयः। प्रयोजनम्-पूर्वेषां प्राधान्यम्, सिद्धान्ते तु सोमयागाङ्गतेति। सूत्रन्तु-शब्दान्तरे कर्मभेदः, भावनाभेदः, कृतानुबन्धत्वात् धातुना कृतव्यवच्छेदत्वादिति व्याख्येयम् —

॥ इति शब्दान्तराधिकरणम् ॥१॥

२

एकस्यैवम्-धातुभेदे भावनाभेदः, तदभेदे तु नेति प्रत्युदाहरणसङ्गतिः। विधेरिति। अविशेषेण कार्यविशेषं विना। एतच्च "दध्ना जुहोति" इत्यादौ दध्यादिगुणादिविधिपरे विधावतिप्रसङ्गनिवृत्त्यर्थम्। तथेति। आदिना "तनूनपातं यजति, इडो यजति, बर्हिर्यजति,

---

१ अरुणादिभिरिति कः २ विशेष्येतेति क, ख. ३ यजिधात्विति क, ख.
४ किं वेति क, ख. ५ न्यायेनेति क, ख.

प्रत्यक्षप्रत्यभिज्ञानाच्छब्दैकत्वं प्रतिष्ठितम् ।
तदेकत्वात्तदर्थोऽपि न भेदं प्रतिपद्यते ॥

प्रत्ययांशस्य सर्वत्र समानत्वात्तदर्थस्यापि भावनाया एकत्वं प्राप्तमपि करणीभूतधात्वर्थभेदादपोदितम् । इह तु तस्यैव धातोः पुनः पुनः श्रवणादसति च शब्दभेदेऽर्थभेदस्य निष्प्रमाणकत्वात् । स एव यागः सैव च भावना । ननु समिदादिसंज्ञाभेदाद् 'अथैष ज्योतिरथैष विश्वज्ज्योतिः' इतिवद्यागभेदः स्यात्, न; शब्दैकत्वेनार्थैकत्वस्य दृढतरप्रत्यभिज्ञानात् स्पष्टे च यागैकत्वे, तस्य समित्संज्ञावरुद्धस्य संज्ञान्तरमन्याय्यमिति तनूनपादादिशब्दाः समिद्यागे देवतां विधास्यन्ति । न संज्ञाः, येन संज्ञातो भेदः स्यात् । यदि हि "तनूनपातं यजती" त्यादयो यागविधयो भवेयुस्ततो विहितस्य विधानायोगाद्विधिपुनः[1] श्रुत्या यागभेदो भवेत् । सति च यागभेदे संज्ञान्तरं युक्तमेवेति स्यात्तनूनपादादिशब्दानां[2] संज्ञात्वम्, तेनाभ्याससनिमित्तभेदाधीनमेषां संज्ञात्वमिति न संज्ञावशाद् भेदसिद्धिः ।[3] यत्र तु प्राग्यागावगमात्[4] संज्ञावत्वं प्रसिद्धम्, तत्र संज्ञया[5] भेदः स्यात् । यथा—"अथैष ज्योतिः" "उद्भिदा यजेत" इति । इह तूपपदान्यपोद्धृत्य यजतीत्येतावन्मात्रं पञ्चकृत्वोऽभ्यस्तं भेदं बोधयति । न वेत्येतदेव चिन्त्यम्[6] । तत्र चाभेदावगमात् गुणविधिरेव तनूनपादादिशब्दैः[7] । न च गुणाद् भेदः । सर्वेषां तनूनपादादिशब्दानामुत्पन्नशिष्टत्वेन दध्यादिवदभेदकत्वात् ।[8] "समिधो यजती"ति चोत्पत्तौ समिच्छब्दस्य नामधेयत्वेन गुणत्वात् । न चागृह्यमाणविशेषत्वम्, प्रथमोच्चारितत्वेन समिद्वाक्ये यागविधिः, इतरेषु तत्प्रत्यभिज्ञानात्तदनुवादेन

---

स्वाहाकारं यजति" इति वाक्यानि गृह्यन्ते । एत एव पञ्च प्रयाजाः । प्रत्यभिज्ञानात्—स एवायं यजतिरिति अभेदग्रहात् । उक्तां सङ्गतिं दर्शयन् पूर्वपक्षमाह—प्रत्ययांशेति । अथैष इति । ज्योतिष्टोमसंज्ञकाद्यागाज्ज्योतिस्संज्ञकस्य यथा भेदः, एकस्यैव संज्ञाद्वयानुपपत्तेस्तद्वदित्यर्थः । समित्संज्ञावरुद्धस्येति । प्राथमिकत्वेन समिद्वाक्ये कर्मविधिः समित्पदञ्च तन्नामधेयम् । तनूनपादादयस्तु तत्रैव देवतारूपगुणविधायका इत्यर्थः । कथं तर्हि सिद्धान्तेऽपि तेषां नामत्वसिद्धिरित्याशङ्कयाह—यदि हीति । तर्हि नाम्ना भेदसिद्धिः क्वापि न स्यात् । अत आह-यत्र त्विति । अधिकारार्थशब्दवशेन ज्योतिश्शब्दस्यानुष्ठेयकर्मवाचित्वं प्रसिद्धमिति, भावः । ननु मन्त्रवर्णप्राप्तदेवतारूपगुणयोगेन नामधेयत्वं समिच्छब्दस्य नोपपद्यते । 'वसन्तमृतूनाम्' इत्यादिमन्त्रवशेन वसन्तादिदेवतानामपि प्राप्त्या समिद्देवताया नित्यमप्राप्तेस्ततन्नियमविधायकत्वमेव समित्पदस्य वाच्यम् । एवञ्चोत्पत्तिशिष्टदेवतावरोधे तनूनपादादिदेवताविध्यसम्भवात्कथं गुणविधित्वेन

---

1 विधेः इति ख. 2 शब्दानामिति नास्ति क. 3 वशेनेति क. 4 यागभेदेति ग. 5 संज्ञात इति क. ख. 6 चिन्त्यत इति क. 7 शब्द इति क. 8 कल्पकत्वादिति ग.

गुणविधिः, चरमश्रुतत्वात्। एवं गुणविधानार्थत्वादेव पुनःश्रुतेर्नानर्थक्यम्। सत्यपि चानर्थक्ये न दोषः। न हि प्रयोजनवशेन प्रमाणं नेतुं शक्यम्[1]। तस्मादेको यागः। तदेकत्वाच्च भावनापूर्वयोरप्येकत्वमिति प्राप्ते ब्रूमः—

**विधेस्तावत्स्वभावोऽयमप्रवृत्तप्रवर्त्तनम्।**
**धात्वर्थभावयोरेव तच्च श्रुत्याऽवगम्यते॥**

यत्तावदुक्तं भवत्वानर्थक्यमिति, तदयुक्तम्; विधिश्रुतिविरोधात्। तया[2] हि स्वतोऽप्रवृत्तप्रवर्त्तनं गम्यते। तच्च बलवता कारणान्तरेणान्यथात्वं प्रतिपद्यते। न चात्र तदस्ति। तद्ध्येकमेव कर्म स्यात् तस्य पूर्वविहितत्वादप्रवृत्तप्रवर्त्तनात्मा विधिरुपरुध्येत। तेन विधिवशात्कर्मान्तरत्वम्। यत्तु दृढप्रत्यभिज्ञानात्कर्मैकत्वमिति[3], तन्न; सन्निधिकृता[4] हि प्रत्यभिज्ञा, विधिश्रुत्या तु भेदज्ञानम्। सन्निधेश्च श्रुतिर्बलीयसी। ननु यजिश्रुतिकृतैवेयं प्रत्यभिज्ञा, न; यागोऽयमिति श्रुत्याऽवगम्यते, न पुनः स इति वा अन्य इति वा, साधारण्येनैव तदभिधायिन्यां श्रुतौ सन्निधिकृतामभेदबुद्धिं मनसि जानन्तः श्रुतिकृतां मन्यन्ते। तस्माद्विधिश्रुत्या कर्मभेदः। यदप्युक्तम्-सन्निधिकृतप्रत्यभिज्ञाबाधाय[5] गुणविधानार्था पुनःश्रुतिर्भवत्विति, तदप्ययुक्तम्; श्रुतिविरोधादेव। पदलक्षणया हि[6] श्रुत्या धात्वर्थभावनयोरेव विधेयत्वं गम्यते, न तत्सन्निधिमात्रेणैव[7] बाधितुं शक्यते। यदि हि तनूपादादि दध्यादिवदविधीयमानमनर्थकं स्यात्। ततस्तस्यावश्यं विधीयमानत्वादनेकार्थविध्यशक्त्या कर्मानुवादाकाङ्क्षायां सन्निधिकृतमभेदज्ञानं विधिरनुमन्येत। यदा तु मन्त्रवर्णप्राप्तत्वात्तनूनपादादिदेवतानां तत्प्रख्यन्या-

---

पुनःश्रुतेः सार्थक्यमत आह-सत्यपीति। आनर्थक्ये विधायकतया सार्थक्याभावे। दोषः नाप्रामाण्यम्। प्रयोजनवशेन विधायकत्वरूपमुख्यप्रयोजनवशेन। अयमाशयः—शब्दैकत्वेनाभेदनिर्णये एकमेव विधायकम्। वाक्यचतुष्टयन्तु 'एकं वृणीते द्वौ वृणीते' इत्यादिस्तावकतयार्थवाद इति।

सिद्धान्तमाह—विधेरिति। स्वभावः स्वरूपम्। अप्रवृत्तस्य पुरुषस्य प्रवर्तनम्। प्रवृत्तस्य प्रवर्तनासम्भवादिति भावः। प्रवर्त्तनविषयमाह—धात्वर्थेति। भावो भावना। श्रुत्या समानपदश्रुत्या। एवकारेणोन्पदार्थव्यवच्छेदः। गत्यन्तराभाव एव तत्र विध्यङ्गीकारात् विधिश्रुत्यनुरोधवलेनैवानर्थक्याभेदप्रत्यभिज्ञागुणविधानार्थत्वरूपस्य विधेः प्राप्तविषयाद्भेदबोधकत्वमिति भावः। "दध्ना जुहोति" इत्यादौ सन्निहिते दध्यादिविधिवत्तनूनपादादिविधिः कुतो नेत्याशङ्क्याह—यदि हीति। 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायेन दध्यादेरवश्यविधेयत्वे स्वलाघवार्थमेव विधिर्दुर्बलमपि सन्निधिं कर्मानुवादायानुमन्यत इत्यर्थः। प्रकृते तु नैवमित्याह—यदा त्विति। मन्त्रवर्णाः मन्त्राक्षराणि "तनूनपादग्न आज्यस्य" इत्यादीनि।

---

१ युवतमिति क, ख. २ तथाहीति ख, ग. ३ ज्ञयेति क. ४ बलादिति क, ख. ५ प्रत्यभिज्ञामनभीति ख, ग. ६ हीति नास्ति क. ७ एवेति नास्ति क.

येन नामधयत्वेनानुवादत्वेन वा सम्भवान्नार्थक्यं, तदा श्रुत्यवगतकर्मविधानं न बाधितव्यम्। तस्माद्यागभेदाद्भावनाभेदः, तद्भेदाच्चापूर्वभेदः

॥ इति अभ्यासाधिकरणम् ॥२॥

३

स प्रकरणन्तु—इदानीमभ्यासस्यापवादः क्रियते। 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्याञ्चाच्युतो भवति' "तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्याञ्चाच्युतो भवति" ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्" "ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायाम्" इति कालसंयुक्तानि वचनानि श्रूयन्ते। तथा "समिधो यजति" "तनूनपातं यजति" "आज्यभागौ यजति" इत्यकालसंयुक्तानि। तेषां सन्निधौ "य एवं विद्वान् पौर्णमासीं यजते" "य एवं विद्वानमावास्यां यजते" इति वाक्यद्वयं[1] श्रूयते। तथा "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इति फलं श्रुतम्। तत्र विचार्यते—किमनेन फलवचनगतेन यजिना सन्निहितास्सर्वे यागा राजसूयवत् फलं प्रति विधीयमानाः समप्रधानाः ? किं वा य एव कालसंयुक्ता यागाः, तेषामेव फलसम्बन्धेन प्राधान्यमन्येषां तदङ्गता ? इति। तत्सिध्यर्थमिदं विचारयितव्यम्—य एवं विद्वानित्येवंसंयुक्तौ यजती प्रकृतानामाग्नेयादीनां पौर्णमास्यमावास्याकालसंयुक्तानां तन्निमित्तप्रसिद्धनामधेयत्वाभ्यां पौर्णमास्यमावास्यापदाभ्यां विशेष्यमाणावनुवदितारौ ? उतापूर्वयोः कर्मणोरेवंसंज्ञकयोर्विधातारौ ? इति। तत्सिद्ध्यर्थमप्येतच्चिन्तनीयम्—किमपूर्वकर्मविधौ रूपं लभ्यते ? न वा ? इति। ततोऽप्येतद्विचार्यते—किं "वार्त्रघ्नी पौर्णमा-

---

अनुवादत्वेन वेत्यनास्थावादो नामधेयत्वनिरपेक्षस्याभ्यासस्य भेदकत्वसूचनार्थः। प्रयोजनन्तु सकृदसकृदनुष्ठानरूपं स्पष्टमेव। एकस्य पुनःश्रुतिरप्येवं शब्दान्तरवत्कर्मभेदिकेत्यर्थः। कुतः ? अविशेषात् गुणफलादिरूपविशेषार्थत्वाभावादनर्थकं वाक्यं हि स्यादिति सूत्रार्थः ।।२।।

॥ इति अभ्यासाधिकरणम् ॥ २॥

प्रकरणन्तु— सङ्गतिमाह—इदानीमिति। अष्टसु कपालेषु भर्जनसंस्कृतः पुरोडाशः अष्टाकपालः। अच्युतः अलुप्तः। आज्यस्यैकदेशेन नौ आवां यजन् यजन्त्वित्यर्थः। ताभ्याम् अग्नीषोमाभ्यां प्रायच्छत् दत्तवान् इन्द्रः। एवञ्च पौर्णमास्यां आग्नेयोपांशुयाजाग्नीषोमयागत्रयं, अमावस्यायां दधिपयोयागौ पूर्वोक्त आग्नेयश्चेति षट् प्रधानयागाः। समप्रधाना इति। समं प्रधानं फलं येषां त इत्यर्थः। इति संयुक्तौ एतत्पदसभिव्याहृतौ। तन्निमित्तेति। कालसंयोगेन निमित्तेन प्रसिद्धं नामधेयत्वं ययोस्ताभ्यामित्यर्थः। रूपं द्रव्यदेवतात्मकम्। वार्त्रघ्नी वृत्रहगुणकाग्निसोमप्रकाशिके ऋचौ। "अग्निर्वृत्राणि जङ्घनत्" इत्याग्नेयी।

---

१. श्रुतमिति क.

स्यामनूच्येते वृधन्वती अमावस्यायामि" त्येताभ्यां "यदाग्नेयोऽष्टाकपाल" इत्मादिभिर्वाक्यैर्वा कर्मणोरनयो रूपं विधातुं शक्यते[1] न वेति। ततोऽपि पुनर्विचारणीयम्[2]-किं प्राप्तकर्मानुवादेनानेकगुणविधानमेकेन विधिना संभवति? उत न? इति। अत्र चाभ्यासापवादार्थत्वादधिकरणस्य य एवं विद्वानित्येवं संयुक्तमेव वाक्यद्वयमधिकरणस्य विषयः। तच्च कर्यान्तरस्य विधायकं समुदायानुवादकं वेत्येतदेवाधिकरणशरीरम्[3]। एतस्य तु फलं समप्रधानाङ्गाङ्गिभावविचारः। फलविचारविषयत्वेन चाग्नेयादिवाक्यानामुपन्यासो नाधिकरणशरीरविषयत्वेन।

तत्र पूर्वाधिकरणन्यायेन विधेः पुनःश्रुत्या कर्मान्तरत्वं पौर्णमास्यमावास्यासंयुक्तयोः[4]। किं पुनरनयोर्द्रव्यदेवतम्? उच्यते, द्रव्यं तावत्–"चतुर्ध्रुवायां गृह्णाती" त्यसंयुक्तोत्पन्नं ध्रौवमाज्यं प्रयोजनापेक्षम्, द्रव्यापेक्षिणां[5] प्रकरणगतानां सर्वकर्मणामविशेषेण लिङ्गप्रकरणाभ्यामङ्गं भवदुपांशुयाजादीनामिवानयोरपि कर्मणोर्लभ्यते। वचनाद्वा "सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यमि" ति। देवतापि च "वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती आमवास्याया" मिति वाक्याभ्यां पौर्णमास्यमावास्यासंज्ञयोरनयोर्मन्त्रविधानान्मान्त्रवर्णिकीति रूपलाभात्कर्मान्तरत्वम्। अन्यथा समस्तस्यानुवादस्यानर्थक्यम्। न केवलं "य एवं विद्वानि"त्येतयोरेवानर्थक्यं, "पौर्णमास्यां पौर्णमास्या यजेत" "अमावास्यायाममावास्यया यजेत" इत्येतदपि वाक्यद्वयमनर्थकं स्यात्। न ह्यनेनाग्नेयादीनां कालो विधीयते, तेषामुत्पत्तिवाक्यैरेव कालस्य विहितत्वात्। यदा तु "य एवं विद्वानि" त्येताभ्यां पौर्णमास्यामावास्यासंज्ञके कर्मान्तरे विधीयेते, तदा तयोः कालविधानात् पौर्णमास्यां पौर्णमास्या यजेतेत्येतदपि[6] वाक्यद्वयमर्थवद्भवति। तस्मात्कर्मान्तरविधानम्। यदा त्वेवं तदा सर्वे यागाः फलसम्बन्धात्समप्रधानभूताः। न हि तदा फलवाक्यगतं दर्शपूर्णमासपदमलमाख्यातमवच्छेत्तुम्, अप्रसिद्धत्वात्। कालनिमित्तं ह्येतद् द्विवचनान्तं च, तद्येषामुत्पत्तौ द्वित्वमाज्याभागादीनां

---

"त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा" इति सौमी। वृधन्वती वृधन्वद्गुणकाग्निसोमप्रकाशिके। "अग्निः प्रत्नेन मन्मना" इत्याग्नेयी। "सोम गीर्भिष्ट्वा वयम्" इति सौमी। एवमुदाहृतेषु वाक्येषु मुख्यं विचारविषयं दर्शयति—अत्र चेति। असंयुक्तोत्पन्नम् कार्यविशेषेणासम्बद्धं सदुत्पन्नं चतुर्वारग्रहणसंस्कृतत्वेनावगतम्। ध्रुवा पात्रविशेषस्तद्गतम्। मान्त्रवर्णिकीति। मन्त्रप्रकाश्याग्निसोमरूपेत्यर्थः। एवं प्रकृताधिकरणपूर्वपक्षमुक्त्वा तत्फलीभूतं विचारमाह—यदेति। आख्यातं यजिपदम्। अवच्छेत्तुम् यागान्तरेभ्यो व्यावर्तयितुम्। अलं समर्थमित्यर्थः। अप्रसिद्धत्वात् अप्रसिद्धार्थत्वात्। एतदेव दर्शयति—कालेति। दर्शपूर्णमा-

---

१. शक्यमिति क. २. विचारयितव्यमिति क, ख ३. एतवादिति ग. ४. संयुक्तयोरिति नास्ति क. ५. द्रव्याकाङ्क्षिणामिति क. ६. इत्यपीति ग.

न तेषु प्रातिपदिकं समर्थं, कालयोगाभावात् । एषां त्वाग्नेयादीनां कालयोगः, तेषां बहुत्वात् द्विवचनानुपपत्तेरसमर्थं पदम् । न च समुदायद्वयापेक्षया द्वित्वसम्भवः, समुदायोऽपि पूर्वप्रसिद्ध एव वा गृह्येत, अत्रैव वा राजसूयवत्सम्पाद्येत । न तावत्पूर्वसिद्धमस्ति समुदायद्वयम्, एकावगत्यनुप्रवेशेन हि कर्मणामेकसमुदायापत्तिः, एकाभिधानेन चैकावगतिः । न चाग्नेयादीनां[1] त्रिकस्य त्रिकस्यैकमभिधानमस्ति[2] प्राक् सिद्धम् । य एवं विद्वानित्येतयोस्तदनुवादकत्वानङ्गीकरणात् उत्पत्तिवाक्येषु चैकैककर्मविधानेन समुदायाभावात् । तत्र तु फलवाक्यगतेन यजिना तन्त्रेण सर्वेषामुपादानात्समुदायापत्तिः स्यात् । तथा चैकसमुदायनिष्पत्तौ[3] राजसूयवद् द्विवचनानुपपत्तिः । न च दशशब्देन पौर्णमासशब्देन च त्रिकस्य त्रिकस्य पृथक् पृथक् तन्त्रोपादानात्समुदायद्वयसिद्धिरिति वाच्यम्, तयोराख्यातपरतन्त्रत्वात् । तद्यत्राख्यातं वर्तते, तत्राभ्यामपि[4] वर्तितव्यम् । न चाख्यातं तन्त्रेण त्रीन् यागान् प्रथममुपादाय पुनरन्यानुपादातुमर्हति, सकृदुच्चरितत्वात । न च समुदायद्वयं तन्त्रेण शक्यमुपादातुं समुदायद्वयस्य प्रागसिद्धत्वात् । तदिदमाख्यात् बहून् यागान् सन्निहितान् फलमेकं प्रति तन्त्रेणोपादत्ते । तेषाञ्च तदुपादानादेवैकः समुदायोऽत्रैव निष्पद्यते । ततश्च नामधेयमपि समुदाय्यभिप्रायं बहुवचनम् समुदायाभिप्रायञ्चैकवचनं लभ्यते, न कथञ्चिद्द्विवचनम् । द्विवचनान्तञ्चेदम् । अतोऽप्रसिद्धार्थत्वान्नानेनाख्यातं विशेषे स्थापयितुं शक्यमित्यविशेषात्सर्वेषां फलसम्बन्धात्प्राधान्यम् । नामधेयमपि तत्परतन्त्रत्वात्सर्वेषामेवाव्युत्पन्नं द्विवचनप्रतिरूपकमिति

---

सरूपेत्यर्थः । उत्पत्तौ उत्पत्तिवाक्ये आज्यभागौ यजतीति । समुदायद्वयेति । दर्शत्रिकपूर्णमासीत्रिकरूपेत्यर्थः । एकपदबोध्यतया हि बहूनां समुदायव्यवहारः, सः किं पूर्ववाक्येषु क्वचिदुतास्मिन्नेव फलवाक्ये एकेन यजिनोपादानादिति विकल्प्य, दूषयति—समुदायोऽपीत्यादिना । अस्मत्पक्षे त्वेक एव समुदाय इति द्विवचनानुपपत्तिरित्याह – राजसूयवदिति । इष्टिपशुसोमयागान् बहूनधिकृत्य "राजा राजसूयेन स्वाराज्यकामो यजेत" इत्येकेन यजिना समुदायाभिधानाद्यथा राजसूयेनेत्येकवचनं न तु बहुवचनं तद्वदिहाप्येकवचनमेव स्यान्न द्विवचनमित्यर्थः । ननु दर्शपूर्णमासेति नामद्वयोपात्तत्रिकसमुदायद्वयसिद्धे द्विवचनोपपत्तिरिति शङ्कते—न चेति । यजिसामानाधिकरण्येन तन्मात्रनामत्वस्यैवावगत्या त्रिकनामत्वस्यैवासिद्धिरित्याह—तयोरिति । आख्यातन्तु न समुदायद्वयस्य क्रमेण युगपदा प्रतिपादने समर्थमित्याह—न चेत्यादि । बहूनिति । अविशेषेण प्रकृतसर्वयागानित्यर्थः । पूर्वपक्षमुपसंहरति – अत इति । यथाऽप्रसिद्धार्थेन राजसूयनाम्ना न यजेर्व्यवच्छेदः, तथात्रापीत्यर्थः । कथं तर्हि नामधेयस्य द्विवचनान्तस्य सर्वयागपरत्वम् ? तत्राह—नामधेयमपीति ।

---

१. आग्नेयादिकर्मणामिति क. २. अस्तीति नास्ति क. ३. कर्मसमुदायेति ग. ४. ताभ्यामिति क.

प्राप्तेऽभिधीयते—

कर्मान्तरविधायित्वे स्यात्सर्वेषां प्रधानता।
समुदायानुवादौ तु रूपाभावादिमौ मतौ॥
द्रव्यं कथञ्चिल्लभ्येत देवता तु न लभ्यते।
लभ्यते मन्त्रवर्णाच्चेन्नाज्यभागाङ्गता यतः॥
लिङ्गक्रमाभ्यां मन्त्राणामाज्यभागाङ्गता स्थिता।
वचनन्तु व्यवस्थार्थमल्पार्थत्वादबाधतः॥

वार्त्रघ्नीवृधन्वतीनां हि लिङ्गक्रमाभ्यामाज्यभागाङ्गत्वेनाव्यवस्थया प्राप्तानां तादर्थ्याबाधेन व्यवस्थामात्रं 'वार्त्रघ्नी पौर्णमास्यां' 'वृधन्वती अमावास्यायामि' त्येताभ्यां विधीयते, लाघवादिति। नैतेषां मन्त्राणां य एवं विद्वानिति विहितकर्मान्तर-सम्बन्धः, येन मान्त्रवर्णिकी देवता स्यात्। न च कल्पयितुं देवता शक्यते, विधिग-म्यत्वाद्देवतात्वस्य। न चासत्यां देवतायां यागानुष्ठानं सम्भवतीति गत्यभावात्समुदा-यानुवादत्वम्। तत्र पौर्णमासीसंयुक्तेन वाक्येनोपपदवशात्पौर्णमासीकालयुक्तानां त्रयाणां तन्त्रेणानुवादः। तेनैवैकानुवादेन त्रयाणामपि तेषामेकसमुदायापत्तिः। तदेक-त्वात्पौर्णमासोमित्येकवचनम्,[1] एवममावास्यासंयुक्तेऽपि। ततश्च समुदायद्वयसिद्धिः। कालयोगाच्चाग्नेयादीनां प्रसिद्धार्थदर्शपूर्णमासाभ्यामिति द्विवचनान्तं कालयोग्यु-पपदं शक्नोत्य.ख्यातं विशेषे व्यवस्थापयितुमिति। तेषामेव प्राधान्यमितीयमेव द्विवच-नापेक्षितसमुदायद्वयसिद्धिः समुदायानुवादप्रयोजनमिति नानर्थक्यम्। यत्तूक्तं 'पौर्ण-मास्यां पौर्णमास्या' इत्येतदपि वाक्यद्वयमनर्थकं स्यादिति, नानर्थकम्; आग्नेयादीनामेव त्रिकस्य त्रिकस्य सहप्रयोगार्थत्वात्। उत्पत्तिवाक्येषु हि तेषां प्रत्येकमेव कालयोगान्नै-

---

सिद्धान्तमाह—कर्मान्तरेति। पौर्णमास्यमावास्या (पूर्णमावास्या) संयुक्त-योरिति शेषः। इमौ विद्वद्वाक्यगतौ यजती। कथञ्चिदिति। "सर्वस्मै वा" इति वाक्येन कल्पितविधिकेनेत्यर्थः। मन्त्रवर्णात् अग्निर्मित्राणीत्यादिमन्त्रवशात्। आज्य-भागाङ्गत्वे किं प्रमाणं तत्राह—लिङ्गेति। आज्यभागयोरग्ने' सोमस्य च देवतात्वात्तत्प्रकाशसा-मर्थ्यरूपेणेत्यर्थः। क्रमः सन्निधिः। कथं तर्हि "वार्त्रघ्नी पूर्णमास्याम्" इत्यादिवचनं तत्राह—वचनन्त्विति। वार्त्रघ्नीवृधन्वत्योर्मध्ये एकेनैव युगलेन देवताप्रकाशनसिद्धेरव्यवस्थितो विकल्पः प्राप्तः, तत्र पूर्णमासीकालिकयोर्वार्त्रघ्नी अमावास्याकालिकयोर्वृधन्वतीति व्यवस्थार्थम्, न तु पूर्णमासीसंज्ञके कर्मणि अमावास्यासंज्ञके च। त्वदुक्तो मन्त्राणामपूर्वविधिर्गौरबादित्यर्थः। तादर्थ्याबाधेन आज्यभागाङ्गत्वाबाधेन। त्वत्पक्षे तु तद्बाधो दोष इति भावः। ननु यागस्य देवतां विनानुपपत्तेर्या काचिद्देवता कल्पनीयेत्याशङ्क्याह—न चेति। अव्यवस्थितानुष्ठानुपपत्ते-

---

१. एकत्वाच्चेति ग.

कप्रयोगता सिध्येत्। अनेन तु वचनेन यथैकप्रयोगतासिद्धिस्तथैकादशे वक्ष्यामः। तस्मादरूपत्वात्प्रयोजनवत्त्वाच्च समुदायानुवादत्वम्। इदानीं पूर्वपक्षवादी प्रकारान्तरेण प्रत्यवतिष्ठते—

**भवेदेवमरूपत्वे समुदायानुवादता।**
**यदाग्नेयादिवाक्यैस्तु तयो रूपं विधीयते॥**

य एवं विद्वानित्येताभ्यां पौर्णमास्यमावास्यासंज्ञकौ यागौ विधीयेते। यदाग्नेयोऽष्टाकपाल इत्यादिभिस्तु पौर्णमास्यमावास्यासंज्ञाभ्यां तावेव यागावनूद्याष्टाकपालादिद्रव्यमग्न्यादयश्च देवता विधीयन्त इति नारूपत्वम्। एवं सर्ववाक्यानि विधायकानि भवन्ति। न कश्चित्समुदायानुवादः। यागश्च प्रत्यक्षश्रुतो न द्रव्यदेवतासंयोगादनुमातव्यो भवतीति श्रेयानयं पक्षः।

**अत्रोच्यते गुणोऽनेकः प्राप्तकर्मानुवादतः।**
**नैकेन विधिना शक्यो विधातुमसकृच्छ्रुतेः॥**

भावनास्थोऽपि विधिस्तावदर्थभेदेन[1] तत्र तत्र सङ्क्रामति, यत्परश्च विधिः स एव विधेयो[2] नान्यस्तद्देशोऽपि। तद्यदाऽपूर्वकर्मपरो विधिर्भवति, तदा तस्यैकस्यानेकगुणविशिष्टस्य विधानाद्विशेषणानां चार्थापत्त्या विधिसिद्धेर्नासकृच्छ्रवणदोषः प्रसज्यते। यदा त्वन्यतः प्राप्तं कर्म भवति, तदा तस्याविधेयत्वाद्विशेषणपरो विधिर्भवति। तत्रानेकेषु विशेषणेष्वेकेन विहितेनेतरास्यानाक्षेपात्तत्रापि श्रुत्यैव विधानं

---

विधिप्रमाणिकैव देवता भवतीति भावः। अनेन त्विति। पूर्णमास्येति तृतीयया करणत्वेनानुवादात्; तस्य च साहित्येनैव फलवाक्यादवगतेः सहितेष्वेव कालोऽङ्गतया विधीयत इति वक्ष्यत इत्यर्थः। प्रकारान्तरेणेति—रूपलाभमाशङ्क्येति शेषः। द्रव्यदेवतासंयोगादिति। आग्नेयवाक्यस्य हि यागविधायकत्वेऽश्रुत एव सः अग्निदेवताया अष्टाकपालद्रव्यसम्बन्धस्यान्यथानुपपत्त्या कल्पनीयः स्यात्। न च श्रुतसम्भवेऽश्रुतकल्पना युक्तेत्यर्थः। असकृच्छ्रुतेरिति। आवृत्तिप्रसङ्गादित्यर्थः। ननु सर्वत्र विशिष्टभावनाविधेराघाराग्निहोत्राधिकरणे वक्ष्यमाणत्वान्न वाक्यभेद इत्याशङ्क्याह—भावनेति। प्रतीतितस्तथात्वेऽपि तात्पर्यतोऽप्राप्तविषयत्वात्प्राप्तोद्देशेनाप्राप्तमेकमेव सकृदुच्चरितेन विधातव्यमित्यर्थः। तादर्थ्यमङ्गाङ्गिभावस्तद्भेदेनेत्यर्थः। तद्देशः तत्समीपवर्त्ती तत्समानाधिकरणो वा। तस्यैकस्येति। अप्राप्तस्य कर्मण एकस्येत्यर्थः। अनेकेति। यथात्रैवाग्निदेवताष्टाकपालद्रव्यपौर्णमास्यादिकालरूपानेकगुणविशिष्टपूर्वयागस्यैकस्य श्रुतेन विधिना विधाने तदर्थापत्त्यैव विशेषणानां विधिकल्पना, न तु श्रुतस्यावृत्तिरित्यर्थः। विशेषणपर इति विधिरिति शेषः। इतरस्यानाक्षेपादिति। 'गुणानाञ्च परार्थत्वादसम्बन्धस्समत्वात्स्यात्' इति न्यायेन विशेषणानां परस्परवैशिष्ट्याभावेनैकविधिनेतरविध्यनाक्षेपादित्यर्थः। तत्रापि विशे-

---

१. तावर्थ्यभेदेनेति ग. २. विधातव्य इति क.

कर्त्तव्यमित्यावृत्तिप्रसङ्गः। विशेषणान्यपि यानि प्रागेव क्रियाकारकसम्बन्धान्मिथः[1] सम्बन्धितया शब्देन प्रतिपादितानि विनैव विधिना प्रसिद्धसम्बन्धानि भवन्ति, यथा पशुनेत्येकपदोपात्तानि जातिलिङ्गसङ्ख्याकारकाणि, तत्र हि प्रत्ययाविधेयमेकं प्रधानभूतं करणकारकमुपसर्जनीभूतजात्यादिविशिष्टं पदेन प्रतिपादितम् । प्रसिद्धा च कारकशक्तिर्जात्यादीनां प्रमाणान्तरेण विनैव विधिनेति शक्यं प्राप्तकर्मानुवादेनापि तदनेकं विधातुम् । भिन्नपदोपात्तान्यपि यानि सामानाधिकरण्येन षष्ठ्या वा क्रियान्वयात्प्रागेव मिथः सम्बन्धं शब्दतो वस्तुतश्च विधिमनादृत्यैव लभन्ते, यथाऽभ्युदितेष्टौ 'ये क्षोदिष्ठास्तान्विष्णवे शिपिविष्टाय शृते चरुम्'' इति। तत्र हि शिपिविष्टशब्दो यौगिकः शक्नोति सन्निहितेन विष्णुशब्देन श्रुत्यैव सामानाधिकरण्यं प्रतिपत्तुम् । प्रसिद्धश्च विष्णुः शिपिविष्टो मन्त्रार्थवादादिभिरिति । तत्र केवलं तस्य शृतसहितक्षोदिष्ठशम्बन्धो विधिना बोधयितव्यः—यो विष्णुः शिपिविष्टः स शृतस्य क्षोदिष्ठानां च देवतेति । तेनैकार्थविधानाद्विधिप्रत्ययस्य नासकृदुच्चारणापत्तिः । अत्र त्वाग्नेयोऽष्टाकपालः पौर्णमास्यामिति, यद्यपि तद्धितस्य सन्निहितद्रव्यवचनत्वात्सामानाधिकरण्यलक्षः शाब्दः सम्बन्धः, प्रागेव पौर्णमासीसम्बन्धादाग्नेयस्याष्टाकपालयोर्लभ्यते। तथाप्यसौ सम्बन्ध प्रमाणान्तरेणासिद्धत्वाद् अत्रैव विधातव्यः, तं च विधाय, पुनः पौर्णमासीसम्बन्धविधिरित्यावृत्तिप्रसङ्गः । न ह्येवं संभवति य आग्नेयोऽष्टाकपालः, स पौर्णमास्यामित्यसिद्धत्वादाग्नेयस्याष्टाकपालस्य । अत एव वक्तव्यम्—अस्टाकपाल आग्नेयः कर्तव्यः, स च पौर्णमास्यामिति । ततश्चावृत्तिः प्रत्ययस्य स्यात् । तस्माद्य एवं विद्वानिति विहितकर्मानुवादेनात्र गुणविध्यसंभवादवश्यमेव भावनान्तरं द्रव्यदेवताविशिष्टमाक्षिप्तयजिकं विधातव्यम् । न च भावनान्तरस्य रूपं भवतीति सिद्धमरूपत्वम् । ततः समुदायानुवादौ ॥

॥ इति आघाराद्याग्नेयादीनामङ्गाङ्गिभावाधिकरणम् ॥ ३ ॥

---

षणान्तरेऽपि । इदानीं येषां विशेषणानां प्राप्तकर्मानुवादेन विधानेऽपि न वाक्यभेदस्तानि प्रकृते तद्वैधर्म्यप्रदर्शनायोदाहरति—विशेषणान्यपीत्यादिना उच्चारणपत्तिरित्यन्तेन । विशेणणानां परस्परवैशिष्ट्यं शब्दगम्यं प्रमाणन्तरसिद्धं वापेक्षितम् । अन्यथा कर्मसम्बन्धविधानायोगात् वैशिष्ट्यस्य विधिः। तस्य कर्मसम्बन्धविधिश्चेति वाक्यभेदात् । अतस्तदुभयप्रदर्शनम् । क्रियान्वयादिति । कारकत्वाभावेन क्रियायां प्रथमतोऽन्वयस्यानपेक्षणादिति भावः । अभ्युदियेष्टिर्नाम षष्ठे उदाहरिष्यते । क्षोदिष्ठाः सूक्ष्मास्तण्डुलाः । शिपयोऽत्र रश्मय उच्यन्ते, तैराविष्टो भवतीति निरुक्तव्याख्यातार्थं शिपिविष्ट इति विष्णुविशेषणम् । शृते दुग्धे । श्रुत्यैव शक्त्यैव । सामानाधिरण्यम् अभेदान्वयम् । षष्ट्युदाहरणन्तु तस्य द्वादशशतं दक्षिणेति ज्ञेयम् । अत्र हि तस्य गोर्द्वादशशतं दक्षिणोद्देशेन विधीयते । प्रकृते तु नैवमित्याह—

---

१. क्रियान्वयनदिति ग,

४

सू. पौर्णमा—अतःपरं समुदायानुवादापवादकतयाधिकरणत्रयमारभ्यते। दर्शपूर्णमासयोः श्रूयते—"जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ, उपांशुयाजमन्तरा यजति, विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वायाग्नीषोमावुपांशु यष्टव्यावजामित्वाय" इति। तथाग्नेयाग्नीषोमीयपुरोडाशयाज्यानुवाक्यायुगलयोर्मध्ये वैष्णवप्राजापत्याग्नीषोमीयाणि य ज्यानुवाक्यायुगलान्याम्नातानि शाखाभेदेन। तत्र संशयः–किम् "उपांशुयाजमन्तरा यजति" इति समुदायानुवादो विष्ण्वादिगुणकानां यागानाम्? उत् विधिः? इति। तदर्थं किमस्य रूपमस्ति? न वा? इति। तदर्थञ्च "विष्णुरुपांशु यष्टव्य" इत्यादिभिर्विष्ण्वादिदैवत्या यागा विधीयन्ते? किं वायमर्थवादः? इति। यदि विधयस्तत एषामेव यागानां विष्ण्वादिदैवत्याः याज्यानुवाक्या लिङ्गक्रमाभ्यामङ्गं भवन्ति, नोपांशुयाजमन्तरा यजतीत्यस्य, सामार्थ्यापरिज्ञानात्। ततश्च मान्त्रवर्णिकदेवताऽलाभादरूपत्सन्नगत्या विष्ण्वादियागानां समुदायमनुवदति। यदा तु विष्ण्वादिश्रवणमर्थवादस्तदा याज्यानुवाक्या यागान्तराभावादुपांशुयाजमन्तरा यजतीत्यस्यैव क्रमादङ्गं भवन्ति, दशमाधिकरणन्यायेनेति मान्त्रवर्णिको देवता लभ्यते, ध्रौवञ्च द्रव्यमिति रूपलाभाद्विधिरेव भवतीति।

तत्र विष्ण्वादिवाक्येषु तव्यप्रत्ययदर्शनात्[1]।
ऐकान्तिको विधिर्नात्र वर्तमानापदेशतः॥

वैश्वानरवाक्ये हि "यदष्टाकपालो भवति" इत्यादिषु विधिपुरुषव्यापारयोरश्रवणाद्यच्छब्दोपबन्धाद्वर्तमानापदेशेनार्थवादसरूपत्वात् "द्वादशकपालं निर्वपेत्" इति विधियुक्ते भावनाश्रवणात्तदुपक्रमोपसंहारमध्यवर्तिनामष्टत्वादीनां तदेकवाक्यत्वं न बाधितव्यमिति गुणफलविधानं निरस्तम्। इह तु सत्यपि जामित्वाजामित्वोपक्रमोपसंहारमध्यवर्तित्वे यच्छब्दाद्यनुपहतविधिश्रवणादजामित्वायेति च तेष्वेव प्रत्येकमुपक्रमोपन्यस्ताजामित्वदोषपरिहारप्रशंसावगमाद्वाक्यभेदमङ्गीकृत्य विधित्वम-

[1]तव्यस्य 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चे'ति सूत्रेण प्रैषार्थे विधानात्। तस्य च प्राप्तविषयप्रवर्तनरूपस्येहाप्राप्तविषयत्वेनासम्भवात् "स्वाध्यायोऽध्येतव्यः" इतिवद्विधौ लक्षणया विधायकत्वं निस्सन्दिग्धमित्यर्थः। अत्र अन्तरावाक्ये। वर्तमानापदेशतः वर्तमानबोधकलट्प्रत्ययवशात्। ननु "वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते" इत्युपक्रान्ताया जातेष्टेरेव "यस्मिन् जात एतामिष्टिं निर्वपति" इत्युपसंहारात्तन्मध्यगतानां "यदष्टाकपालो भवति" इत्यादीनां तदेकवाक्यत्ववत् जामित्वाजामित्वोपक्रमोपसंहारमध्यवर्तिनां विष्ण्वादिवाक्यानामपि तदेकवाक्यत्वमेवोचितम्, न तु तद्भेदेन विधायकत्वमित्याशङ्क्य दृष्टान्तवैषम्यमाह—वैश्वानरेति। पुरुषव्यापारो भावना। गुणफलेति। अष्टत्वादिगुणस्य ब्रह्मवर्चसादिफले विधानमित्यर्थः। प्रत्येकमिति। एकवाक्यत्वे सकृदेव जामित्वश्रवणं स्यादिति भावः। तर्हि जामि वेत्येतदपि

१. अत्र पाठः तृटितः।

वसीयते। "जामि वा एतद्" ति चोपक्रमस्त्रयाणामपि तेषामनुषङ्गेण वाक्यशेषो भवति। सति च[1] तेषां विधित्वे रूपाभावाद्वर्तमानापदेशाच्चोपांशुयाजमन्तरा यजतीत्ययं जामित्वोपन्यासेन प्रस्तुतानां वक्ष्यमाणानां विष्ण्वादियागानां समुदायानुवाद इति प्राप्तेऽभिधीयते—

जामित्वोपक्रमादेकमजामित्वोपसंहृतेः ।
वाक्यं तन्मध्यपाताच्च विष्ण्वादेरर्थवादता ॥
वाक्यशेषानुषङ्गस्तु गतौ सत्यां न युज्यते।
अनूचीननिमित्तश्च जामिदोषः प्रकीर्तितः ॥
तेनान्तरालसंयुक्तो विधिस्तत्रैव निश्चितः।
अजामित्वञ्च तस्यैव प्रशंसेत्यवधारितम् ॥

"जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ" इति पुरोडाशनैरन्तर्यजामिदोषाभिधानादुपक्रम एवैतदध्यवसितम्-नूनमन्तराले किञ्चिद्विधित्सितम्। तच्चान्तरालकरणादेवाजामित्वगुणेन प्रशिशंसिषितमिति[2]। किं तद्विधेयमित्येतावदनवगतम्। अन्तरालसंयुक्तं तु तद्विधानामित्यवगतमेव। न च विष्ण्वादियुक्तेष्वन्तरालसंयोगोऽस्ति, येन विधिः स्यात्। अन्तराले चाविहितानां नाजामित्वेन प्रशंसावकल्पते। पुरोडाशनैरन्तर्याज्जामिता स्यादतोऽन्यत्र क्वचिद्विष्णवादयो यष्टव्या अजामित्वायेति किङ्क्रेन सङ्गतम्। तस्मात् "उपांशुयाजमन्तरा यजति" इत्युपांशुगुणको यागोऽन्तरालोपलक्षिते

प्रत्येकं वक्तुं युक्तमित्याशङ्कयाह—जामि वेति। तेषां विष्ण्वादिवाक्यानाम्। एतद्विचारस्य पूर्वपक्षोपयोगितामाह-सति त्विति। न च समुदायानुवादस्यानर्थक्यम्, तस्यान्तरालकालविधानार्थत्वात्। न चैवमुपांशुयाजपदेनोपांशुत्वगुणविधिरन्तरालविधिश्चेति वाक्यभेद इति वाच्यम्। उपांशुयाजपदस्य रूढ्यैव सामानाधिकरण्यवशेन नामधेयत्वात्, अन्यथा व्युत्पत्त्यङ्गीकारे 'चजोः कुधिण्यतोः' इति कुत्वापत्तेः।

जामित्वेति। जामित्वोपक्रमादजामित्वोपसंहाराच्चैकं वाक्यमित्यन्वयः। वाक्यशेषेति जामि वेत्यादिदोषकीर्तनस्येत्यर्थः। अन्तरालवाक्यस्य यागविधित्वे गमकान्तरमाह—अनूचीनेति[3]। पुरोडाशद्वयनैरन्तर्येत्यर्थः। तेनावगतो योऽन्तरालसंयुक्तः कर्मान्तरविधिः, स तत्रैव निश्चित इत्यर्थः। प्रशिशंसिषितम् -प्रशंसितुमिष्टम्। किन्तदिति। किंरूपमित्यर्थः। विष्ण्वादिवाक्ये कर्मविधावर्थवादासङ्गतिमाह—अन्तराले चेति। उपांशुगुणक इति। न चैवंसति कुत्वापत्तिः,

१ तु इति व्याख्यासम्मतः पाठः २ प्रशंशितमिति क, ग.

३ अनूचीनत्वनिमित्तजातित्वकीर्तनादुपक्रम एवान्तरालयुक्ततया किञ्चित्कर्मविधेर्निश्चितत्वादुपक्रमानुसारेणान्तरावाक्यस्यैवान्तरालयुक्ततया कर्मप्रतिपादकस्य विधायकत्वं स्वीकर्तव्यम्, न तु स्वरसतो विधिसमर्थानामपि विष्ण्वादिवाक्यानामित्येकवाक्यतायाः न किञ्चिद्बाधकमित्यर्थः।

काले विधीयते तदर्थवादोऽयं "विष्णुरुपांशु यष्टव्य" इत्यादि मन्त्रवर्णप्राप्तविष्ण्वाद्यनुवादेनेति न्याय्यम्। एवञ्चैकवाक्यत्वं न बाधितं भविष्यति, न चानुषङ्गः सत्यां गतौ कल्पितो भवति। तस्माद्विधिरयं न समुदायानुवादः ॥

॥ इति उपांशुयाजाधिकरणम् ॥४॥

५

सू० आघारा—"अग्निहोत्रं जुहोति" "आघारमाघारयति" इति निर्गुणं कर्म संज्ञायुक्तं श्रुतम्। तत्सन्निधौ "दध्ना जुहोति, ऊर्ध्वमाघारयति" इत्यादीनि सगुणानि श्रवणानि। तत्र संशयः–किं "दध्ना जुहोती" त्यादिभिर्गुणविशिष्टा होमाघारा विधीन्ते, तेषाञ्च रूपवतामरूपोऽयम् "अग्निहोत्रं जुहोति" इति "आघारमाघारयति" इति समुदायानुवादः? उतायमेव कर्मविधिरितरे तत्रैव गुणविधयः? इति। तदर्थमिदं विचार्यते–किमविज्ञातरूपं कर्म विधातुमेवाशक्यम्? उताविज्ञातरूपमपि तावद्विधाय पश्चाद्रूपज्ञानं सम्भवतीति। तथेदमपरं चिन्तनीयम्–प्राप्ते कर्मणि गुणमात्रविधानं सम्भवति? उत न? इति।

तत्र रूपापरिज्ञाने विशेषानवधारणात्।
सामान्यस्याविधेयत्वान्नानयोर्विधिसम्भवः ॥
न च दध्यादिभिर्वाक्यैः प्राप्तकर्मानुवादतः।
गुणमात्रं विधातव्यमव्यापारात्मकं यतः ॥

---

'दृष्टानुविधिश्छन्दसि' इति छान्दसत्वेन तदभावेऽपि साधुत्वोपपत्तेरिति भावः। प्रयोजनं सूत्रार्थश्च स्पष्टः।

॥ इति उपांशुयाजाधिकरणम् ॥ ४ ॥

५

आघारा—संज्ञेति[१]। अग्निहोत्राघारपदयोस्तत्प्रख्यन्यायेन नामत्वस्य साधितत्वादित्यर्थः इत्यादीनीत्यादिपदेन "पयसा जुहोति" इत्यादीनां "सन्ततमाघारयति" इत्यादीनाञ्च संग्रहः। होमाघारा इति। होमाश्चाघाराश्चेत्यर्थः। पूर्वाधिकरणे वाक्यभेदपरिहाराय तव्यप्रत्यययुक्तवाक्यानामर्थवादत्वमुक्तम्, इह तु दध्यादिवाक्यानां विधित्वस्योभयवादिसिद्धत्वाच्छुद्धगुणविधेश्च वक्ष्यमाणरीत्या असम्भवादवश्यं विशिष्टविधिरङ्गीकार्य इति प्रत्युदाहरणसङ्गतिः। पूर्वपक्षमूलमाह तदर्थमिति। पूर्वपक्षमाह तत्रेति। अनयोः अग्निहोत्राघारवाक्ययोः। अनुवादतः अनुवादेन। यतो गुणमात्रमव्यापारात्मकमतो न विधातव्यं विधानार्हमित्यर्थः। श्लोकं

---

१. अग्निहोत्रशब्दः पूर्वपक्षे दध्यादिवाक्योत्पन्नानां होमानां संज्ञा। सिद्धान्ते तु स्ववाक्योत्पन्नकर्मण इति पक्षद्वयेऽपि संज्ञैव न गुणविधिरिति भावः।

अग्निहोत्रं जुहोति" इति होमसामान्यमवगम्यते। न च तद्विधानयोग्यम्, विशेषस्तु योग्यः। स चानुरञ्जकाधीननिरूपणो न जुहोतीत्येतावता गम्यते। न चेह द्रव्यदेवतादिकमनुरञ्जकमुपात्तं, यद्वशेन विशेष्यावधारणं स्यात्। अनिरूपितश्च विशेषो न विधिनाऽन्वेतुं योग्यः। तेनावगतस्य सामान्यस्यायोग्यत्वाद्योग्यस्य च विशेषस्यानवगतत्वान्नात्र विधिः सम्भवति। तथाऽग्निहोत्रमिति संज्ञा च विशेषविषयत्वादनवगते विशेषे दुर्घटैव। यदा चैवं विधिरेवानिष्पन्नस्तदा न दध्यादिवाक्यैरपि गुणविधानं शक्यं, विहिते कर्मणि तदनुवादेन तैर्गुणो विधातव्यः। न चात्र विहितं कर्मेत्युक्तम्। अपि च यद्यप्यत्र कर्म विधीयेत, तथाऽपि न शक्यते गुणो विधातुम्, व्यापारात्मकत्वात्। चेतनप्रवर्तनात्मको हि विधिः न चासौ स्वव्यापारादान्यत्र प्रवर्तयितुं शक्यते। तेन दध्यादिवाक्यैरपि स्वस्य व्यापार एव विधातव्यः। तद्विशेषगुणतया च दध्यादीनां विधिरङ्गीकर्तव्यः। न चाग्निहोत्रवाक्यविहितो होमः पुनरत्र दधिविशिष्टो विधातुं शक्यते, विहितस्य विधानायोगात्। तेन दधिमात्रमवशिष्यते, तच्चाविधेयमित्युक्तम्। अतोऽत्र दध्यादिविशिष्टा होमा विधीयन्ते। तथा चाग्निहोत्रमित्यस्यान्यतोऽपि रूपालाभात्समुदायानुवादत्वम्। एवमाघारवाक्येऽपीति प्राप्ते ब्रूमः—

---

व्याचष्टे अग्नीति। सामान्यस्य ज्ञातत्वेन प्रवर्तनायोग्यत्वेन च विधानायोग्यत्वमित्याशयः। अनुरञ्जकम् विशेषणं द्रव्यदेवतादि। अनिरूपितः अनिर्णीतः। संज्ञया विशेषावगतिमाशङ्क्याह तथेति। विशेषावगतौ तस्येयं संज्ञा इत्यवगमः, संज्ञावगतौ च विशेषावगम इत्यन्योन्याश्रय इनि भावः। गुणविधानं गुणमात्रविधानम्। द्वितीयश्लोकार्थमाह—अपिचेति। अत्र अग्निहोत्रादिवाक्ये। अयं भावः—विशेषनिर्द्धारणहेतुरूपापरिज्ञाने विध्यनङ्गीकारे दध्यादिवाक्येऽपि देवताया आज्ञानात्कथं विधिः स्यादतो विधिवशादेव कश्चिद्विशेष इत्यवगम्यते, पश्चात्तु वाक्यान्तरेण तात्पर्यवसानमित्यङ्गीकर्तव्यमिति। असौ चेतनः। स्वव्यापारे हि पुरुषो नियुज्यत इति न्यायादित्यर्थः। अन्यतोऽपि दध्यादिवाक्येभ्योऽपि। समुदायेति। तत्प्रयोजनन्तु—सर्वप्राकरणिकहोमानामग्निहोत्रनामत्वावगमेन फलवाक्ये सर्वेषां ग्रहणम्, अन्यथा प्रसिद्धाग्निदैवत्यस्यैव फलवाक्ये ग्रहणं स्यान्न सूर्यादिहोमानामपीत्यग्निहोत्रस्थले[1]। आघारस्थले तु 'ऊर्ध्वमाघारयति' इति समुदायस्याघारनामत्वावगतौ तन्नाम्ना तदुद्देशेन "इत इन्द्र ऊर्ध्वोऽध्वर इत्याघारमाघारयति" इति मन्त्रविधिः। अथवा—"चतुर्गृहीतं वा एतदभूत्तस्याघारमाघार्य" इति वाक्येन प्रयाजार्थचतुर्गृहीताज्यसंस्कारकत्वेन सर्वाघारविनियोग इति भावः।

---

१. 'दध्ना जुहोति' 'पयसा जुहोति' 'यदग्नये च प्रजापतये च सायं जुहोति' इत्यादिवाक्यैर्विधेयानां कर्मणामेकरूपत्वाभावादग्निहोत्रवाक्यस्थजुहोतिना सर्वेषामनुवादः 'राजा राजसूयेन स्वाराज्यकामो यजेत' ईति वाक्यस्थयजिना यागायागानामिव न सम्भवति, किन्त्वेकरूपाणामेव। तत्र चोपपदानुसारादग्निसम्बद्धानां 'यदग्नये च' इत्यादिवाक्यविहितानामेव। ततश्च तेषामेव फलवाक्ये ग्रहणं न सर्वेषामिति सोमनाथः।

प्रकृतानामसद्भावात्कर्मणां नानुवादता ।
न हि दध्यादिवाक्येषु दध्याद्याक्षिप्तशक्तिना ॥
विधिना शक्यते कर्म विधातुमितरत्र तु ।
अनन्याक्षिप्तशक्तित्वाद्विधिः कर्मैकगोचरः ॥

"दध्ना जुहोति" इति ह्यप्राप्तदध्याद्याक्षिप्तशक्तिविधायकोऽनेकविधिनिमित्तगौरवपरिजिहीर्षया कर्मानुवादं प्रार्थयमानो यदि न कथञ्चिदपि प्राप्तिं लभते, ततो विशिष्टविधिमङ्गीकरोति । सत्यां त्वग्निहोत्रादिवाक्येन कर्मणः प्राप्तौ तदनुवादेन गुणमात्रविधानं लाघवान्न तु विशिष्टविधानम् । अतश्चाविहितत्वाद्धोमानामप्राप्तत्वादग्निहोत्रवाक्येऽनन्याक्षिप्तशक्तित्वाद् विधायकः कर्म विधत्ते । यद्यपि तत्र रूपं न ज्ञायते, तथापि विधिवशादेव सामान्यमतिक्रम्य तल्लक्षितोऽन्यत्राविहितो होमविशेषोऽयमित्येतावदवगम्यमानत्वान्न विधानासम्भवः, लक्षितविशेषविषयत्वेन संज्ञोपबन्धोऽप्युपपन्नः । तस्य च दध्यादिवाक्यै रूपविधानान्नारूपत्वम् । 'स्वरूपेणाविधेयमपि दध्यादिव्यापाराविष्टं शक्यं विधातुं 'दध्ना जुहुयात्' इति ।' यद्यपि न क्रियां विहाय द्रव्यविधिः प्रतीयते, तथाऽपि तस्यामेव विशिष्टायां प्रतीयमानो विधिः, स्वरूपेण तस्याः प्राप्तत्वादप्राप्तगुणमात्रपरतामवलम्बमानः फलतो गुणविधिरित्युच्यते ।

---

वाक्यान्तरप्राप्तसन्निहितकर्माभावान्नाग्निहोत्रादिवाक्यस्यानुवादत्वमिति । सिद्धान्तमाह—प्रकृतेति । दध्यादिवाक्यैः कर्मप्राप्तिमाशङ्क्य निराकरोति—न हीति । दध्यादिभिराचिप्ताद्धात्वर्थादुत्तार्य स्वमात्रविषयत्वेन बोधिता शक्तिर्यस्येत्यर्थः । इतरत्र अग्निहोत्राघारवाक्योः । श्लोकं व्याचष्टे—दध्नेत्यादि । अनेकम् दध्यादिहोमाघाररूपम् । तदुक्तम्—

सर्वत्राख्यातसम्बद्धे श्रूयमाणे पदान्तरे ।
विधिशक्त्युपसङ्क्रान्तेस्स्याद्धातोरनुवादता ॥ इति ॥

रूपकृतविशेषानवगमे कथं कर्मविधिरत आह—यद्यपीति । तत्र अग्निहोत्रादिवाक्ये तल्लक्षितः—सामान्येन लक्षितः । एवञ्चान्योन्याश्रयपरिहाराद्विध्यवगतविशेषस्यैव नामधेयमग्निहोत्रादिपदमित्याह—लक्षितेति । एतावतापि कथं रूपलाभः, तत्राह—तस्य चेति । आदिना 'यदग्नये च' इत्यादिदेवताविधिसङ्ग्रहः । क्रियापदगतस्य विधेः कथं केवलदध्यादिविधानबोधकत्वमत आह—स्वरूपेणेति । क्रियासम्बन्धरहितमित्यर्थः । व्यापाराविष्टम् । धात्वर्थावच्छिन्नभावनाविशेषणम् । ननु क्रियायाः प्राप्तत्वेनाविधेयत्वात्कथं दध्यादिविशिष्टहोमविधिर्वक्तुं शक्य इत्यत आह—यद्यपीत्यादि । फलतः[1] तात्पर्यतः । अत्र दध्यादिवाक्ये । प्रयोजनन्तु पूर्व-

---

१. गुणस्य साक्षाद्विधिविधेयत्वाभावाद्गुणविशिष्टकर्मविषयतया प्रतीयमानस्यापि विधेर्न कर्मोत्पत्तिपरत्वम्, कर्मणः प्राप्तत्वेन, तत्स्वरूपज्ञापने विधेरतात्पर्यात् । अप्राप्तगुणमात्रे तात्पर्यं विधेः, विधितात्पर्यविषयश्च विधेयः न विधिसम्बन्धितया प्रतीयमानमात्रमिति दध्यादिवाक्यस्य कर्मोत्पत्तिविधित्वाभावादग्निहोत्रवाक्योत्पन्नकर्मणो दध्यादिवाक्ये दध्यादिविशिष्टरूपेण विधेयतया प्रतीयमानत्वेऽपि न भेदप्रसक्तिरिति भावः ।

न प्रतीतितः। तेनात्र गुणमात्रविधानम्। 'अग्निहोत्रं जुहोति'' इति प्रकृतकर्मलाभा-भावाद्रूपलाभाच्च विधिरेव न समुदायानुवादः।

इति आघाराग्निहोत्राधिकरणम्॥ ५॥

६

सू० द्रव्य०—''अग्नीषमीयं पशुमालभेत'' इति श्रूयते। तथा 'हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षस' इत्यादीनि। तथा ''सोमेन यजेत'' इति श्रुतम्। तत्रापि 'ऐन्द्रवायवं गृह्णाति मैत्रावरुणं गृह्णाति' इत्येवमादीनि। तत्र संशयः—किमवद्यति-गृह्णातिभ्यां चोदितानां कर्मणामेवालभतियजती समुदायस्यानुवदितारौ ? उतापूर्वयोः कर्मणोर्विधातारौ ? इति। तदर्थञ्च किमैन्द्रवायवादिवाक्यैर्यागा विधीयन्ते ? किं वा संस्कारमात्रमिति। तत्र—

ऐन्द्रवायवमित्यादिद्रव्यदैवतसङ्गतेः।
याग एव विधातव्यो गृह्णातौ न हि देवता॥

ऐन्द्रवायवमित्यादि तावद्देवतातद्धितोऽयम्। न च देवता यागादन्येन सम्पादयितुं शक्यते, येन ग्रहणेनैन्द्रवायवं कुर्यादिति वाक्यार्थस्स्यात्। न चैन्द्रवायवं सन्तं गृह्णातीति सम्भवति, असिद्धत्वादैन्द्रवायवस्य। तेनावश्यं यागा एव विधातव्याः। ननु नावश्यं देवतातद्धित एवायं, 'तस्येदमिति' सन्बन्धमात्रेऽपि, तस्य स्मरणात्। तेनैन्द्रवायूद्देशविशिष्टग्रहणमात्रविधिः सम्भवत्येव। भवेदेवमैन्द्रवायवादिषु परिहारः, मरुत्वती-

---

पक्षे दध्यादिदशद्रव्यैः दश प्रक्षेपाः, कथञ्चिद्यदग्नये चेति वाक्यस्थदेवतापदानुषङ्गेण यागरूपत्वे सम्प्रतिपन्नदेवताकत्वेन युगपद्दशद्रव्यकहोमानुष्ठानम्। सिद्धान्ते तु गुणलोपमात्रनिमत्तं प्रायश्चित्तं, न तु तदनुरोधेन प्रधानावृत्तिरिति ज्ञेयम्। न च पूर्वपक्षेऽपि क्षारणस्य निष्पन्नत्वान्नावृत्तिरिति वाच्यम्, ऊर्ध्वत्वविशिष्टविजातीयक्षारणक्रियाया अनिष्पत्तेरिति। सूत्रार्थस्तु आघाराग्निहोत्रवाक्यमरूत्वात्समुदायानुवाद इति।

॥ इति आघाराग्निहोत्राधिकरणम्॥ ५॥

६

द्रव्य० —हृदयस्येत्यपादानत्वसम्वन्धे षष्ठी। अग्रे प्रथमम्। इन्द्रवायुदैवत्यं सोमरसं ग्रहाख्यपात्रे गृह्णातीत्यर्थः। कर्मणां समुदायस्येत्यन्वयः। तत्रैन्द्रवायवादिवाक्येषु देवतातद्धितवशाद्यागविधिपूर्वपक्षस्य सुकरत्वमभिप्रेत्यादौ तत्र विचारं दर्शयति—तदर्थञ्चेत्यादिना। गृह्णातौ ग्रहणमात्रे देवता न ह्यस्तीत्यर्थः। यागादन्येनेति। त्यज्यमानद्रव्योद्देश्यत्वरूपदेवतात्वस्य यागं विना न सम्भव इत्यर्थः। असिद्धत्वादिति। द्रव्यदेवतासम्बन्धस्य यागघटितत्वेन यागात्पूर्वमसिद्धत्वादित्यर्थः। उद्देशेति। तथाचेन्द्रवायूद्देश्यकग्रहणकर्मत्वमेव सम्बन्धस्तद्धितार्थ इत्यर्थः। मरुत्वतीयेति। 'द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ-

यादिषु देवतायामेव छविधानादवश्यं देवतासम्बन्धोऽङ्गीकर्त्तव्यः। तथाचैन्द्रवायवादिष्वपि तथाऽस्तु किमनिरूपितसम्बन्धमात्राश्रयणेन। तस्माद्यागविधानम्। एवञ्च "सोमेन यजेत" इति देवताभावादरूपस्सन् समुदायानुवाद एव भवति यजिः। सोमशब्देन तत्रैव गृह्णातिना सामान्याक्षिप्तं द्रव्यं नियम्यते। यद्वा "अण्व्या धारया गृह्णाति" इति गुणवाक्येन धारासमर्थद्रवद्रव्यमात्रावगमात्तत्प्रकृतित्वेन सोमविधान 'व्रीहिभिर्यजेत' इतिवत्। ननु विकृतावुपात्तायां प्रकृतिविधानं युक्तम्। न चैन्द्रवायवादिवाक्येषु पुरोडाशवत् विकृतिरुपात्ता, यस्याः प्रकृतिर्विधीयेत। यदि तु "सोममभिषुणोति, सोम पावयति" इत्यादिभिः सोमरसस्य प्रकृतत्वात्तद्विषयत्वाच्च गृह्णातेः प्राप्त एव विकृतिभूतो रस इत्युच्यते, ततस्तस्य निर्ज्ञातसोमप्रकृतित्वान्न भूयस्सोमविधानं सम्भवति। न चाण्व्याधारयेत्यतोऽपि विकृतिप्राप्तिः, उदकस्यापि द्रवद्रव्यस्य सम्भवात्। उच्यते—यदि विकारानुवादेन प्रकृतिर्विधातव्या स्यात्ततोऽयं दोषः स्यात्। न च "व्रीहिभिर्यजेत" इत्यपि पुरोडाशानुवादेन व्रीहिविधिः, पुरोडाशस्यानुपात्तत्वात्। "व्रीहिभिरिति च करणविभक्तेर्द्रव्यसम्बन्धाभावात्। तेन यागं प्रति करणत्वेन विहिता व्रीहयः पुरोडाशावरुद्धे यागे साक्षात्करणत्वासम्भवात्तत्प्रकृतित्वेनैव करणं भवन्तीति प्रकृतिद्रव्यविधिरित्युच्यते, न च प्रकृतित्वेनैव विधानात्एए। वमत्रापि यागं प्रति करणत्वेन विहितः सोमो धारासमर्थद्रवद्रव्यावरुद्धे यागे तत्प्रकृतिर्भवति। सम्भवति च सोमप्रकृतिकं द्रवद्रव्यमिति युक्तं प्रकृतिद्रव्यविधानम्। अथवा "सोममभिषुणोति" इत्यादिभिः सोमरसस्य प्राप्तत्वात् सोमशब्दोऽप्यनुवाद एव तत्प्रख्यन्यायेन नामधेयं भवति। तदेवं त्रेधा पूर्वपक्षः—सामशब्देन द्रव्यं विधीयते, प्रकृतिद्रव्यं वा, नामधेयं वेति। यजिस्तु सर्वथैव समुदायानु-

---

इति देवताधिकारपठितेन सूत्रेण तत्रैव छप्रत्ययविधानादित्यर्थः। अनिरूपितेति। अनिर्णीतविशेषेत्यर्थः। यजेतेति यजिरित्यन्वयः। तत्रैव यागसमुदाय एव। गृह्णातिनेति। ग्रहणसंस्कृतेनेन्द्रवायुदेवताकेन द्रव्येण यजेतेति द्रव्यसामान्यावगतौ केन द्रव्येणेति विशेषाकाङ्क्षायां सोमेनेति विशेषविधिरित्यर्थः। ननु "अण्व्या धारया गृह्णाति" इति सन्निहितवाक्येन धाराग्रहणविधानाद्द्रवद्रव्यमेव तत्र प्रतीयते; न तु सोमः, तस्य धारया ग्रहणासम्भवादिति कथं सोमविधिरत आह-यद्वेति। अण्वी सूक्ष्मा। व्रीहिभिरिति। यथा-आग्नेयोऽष्टाकपाल इति पुरोडाशप्रकृतिभूतद्रव्यापेक्षायां व्रीहीणां विधानं तद्वदित्यर्थः। उक्तं दृष्टान्तवैषम्यं शङ्कते—नन्विति। पुरोडाशवत्। आग्नेयवाक्ये पुरोडाशवत्। अभिषवः कण्डनम्। पावनं वस्त्रेण गालनम्। उदकस्येति। द्रव्यान्तरनिरपेक्षाया जलधाराया एव शीघ्रं प्रत्ययेन प्रकृतिद्रव्यानपेक्षणादिति भावः। द्रव्येति। कारकाणां क्रियान्वयस्यैव व्युत्पन्नत्वादिति भावः। नामधेयमिति। एवञ्च यजेतेति समुदायानुवादस्याप्येतदेव प्रयोजनमिति भावः। न च ज्योतिष्टोमनामकानां कथं नामान्तरमिति वाच्यम्, विनिगमनाविरहेणोभयनामकत्वे बाधकाभावात्। सिद्धान्तेऽपि "स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुस्सोमः" इति वाक्यान्तरे नामधेय-

वादः। तथा च यागभेदादैन्द्रवायवादीनां समुच्चये सति 'दशैतानध्वर्युः प्रातस्सवने ग्रहान् गृह्णाति' 'आश्विनो दशमो गृह्यते, तं तृतीयं जुहोति' इत्यादि क्रमसमुच्चय-दर्शनमुपपद्यते। अन्यथा त्वेकत्वाद्यागस्य, तदर्थानाञ्च देवतानां ग्रहाणाञ्च विकल्पे सति क्रमादिदर्शनानुपपत्तिः। यदि च 'सोमेन यजेत' इति यागविधिस्स्यात्ततस्सोम-शब्दस्य लतावचनत्वात्तयैवोत्पत्तिशिष्टया यागस्साधनीय इति नैन्द्रवायवादिवाक्यं रस-विषयैर्गुणविधिस्सम्भवतीत्यानर्थक्यं तेषां स्यात्। अभिषवादिविधिभिश्चोत्पत्तिशिष्टा लता न रसीकर्तुं शक्यते। तस्मादैन्द्रवायवादिभिरेव यागविधिः। एवम् 'अग्नीषो-मीयं पशुमालभेत' इत्यत्रापि यागविधौ सत्युत्पत्तिशिष्टपशुजातीयद्रव्यमेव यागसाधन-मिति हृदयाद्यवदानवचनानि। तत्र गुणविधित्वेनासम्भवादनर्थकानि स्युः। अतो हृदयादि-वाक्यविहितहृदयादिद्रव्यककर्मानुवादेन देवताविधानमेतदिति वक्तव्यम्। पशुशब्दोऽपि हृदयादीनां 'छागस्य वपाया मेदस' इति मन्त्रवर्णाच्छागप्रकृतित्वात्तेषामेव 'विकृतौ प्रकृतिवदुपचारादनुवादः। कथं पुनः कर्माणि हृदयादिवाक्यैर्विधीयन्ते, यान्यनूद्य देवताविधानम्? उच्यते; द्वावत्र पक्षौ—एकस्तावदवदानमात्रं विधीयते, द्रव्यदेवता-संयोगाश्रवणात्प्रत्यक्षयज्यश्रवणाच्च। तदाक्षिप्तन्तु स्पर्शनमालभतिनानूद्यते। पशुशब्देन तु हृदयादिप्रकृतिद्रव्यवाचिनोपचाराद्धृदयादिद्रव्यम्, अग्नीषोमीयशब्देन तु प्रतिहृदया-द्यग्नीषोमीयत्वेन विहिते तत्रैव तावन्तो यागाः कल्प्यन्त इति। अन्यस्त्व[1] सत्यपि देवता-

त्वस्येष्टत्वात्। लिङ्गदर्शनमप्याह—तथाचेति[1]। ननु क्रमादिलिङ्गदर्शनबलादेकस्यैव सोमयाग-स्यावृत्तिकल्पनान्न दोष इत्याह—यदि चेति। नन्वभिषवादिविधिवशान्न लता यागसाधनं, किन्तु सोमरस एवेत्याशङ्क्याह-अभिषवेति। उत्पत्तिशिष्टद्रव्यस्य वाक्यान्तरेण बाधायोगादिति भावः। इमामेव युक्तिं पशुवाक्येऽप्यतिदिशन् पूर्वपक्षमाह—एवमिति। द्रव्यमेवेत्येवकारेण हृदयादि-व्यवच्छेदः, हृदयादेः पशुजातीयत्वाभावात्। अनर्थकानीति। न च लक्षणया हृदयादिशब्देन पशुमनूद्यावदानविधिसम्भवान्नानर्थक्यमिति वाच्यम्। एकेनैव तदुपपत्तौ "अथ जिह्वाया" इत्यादीनां वैयर्थ्यादित्याशयात्। अत एवानर्थकानीति बहुवचनमिति। पशुशब्दोऽपि हृदयादीनां छागप्रकृतिकत्वात्तेषामनुवाद इत्यन्वयः। कथं तत्राह-विकृताविति। कार्ये कारणवदुपचारादित्यर्थः। मात्रमित्यनेन यागव्यवच्छेदः तदाक्षिप्तम्—अवदानाक्षिप्तम्। स्पर्शनं विना अवदानासम्भवात् प्रतीति। हृदयादिप्रत्येकद्रव्योद्देशेनेत्यर्थः। तत्रैव पशुवाक्य एव। तावन्तः—हृदयादिद्रव्यस-मसङ्ख्याः। न चैकेन पशुपदेनोपात्तानां द्रव्याणां साहित्यावगमात्समुदितानां देवतासम्बन्धादेक एव यागः स्यादिति शङ्क्यम्, उद्देशविशेषणतया साहित्यस्याविवक्षितत्वात्। पक्षान्तरमाह—

१ उपांश्वन्तर्यामैन्द्रवायवमैत्रावरुणशुक्रमन्थ्याग्रयणोक्थध्रुवाश्विना दश ग्रहाः। अत्र यद्यप्याश्विनः पञ्चमो हूयते, तथाप्युपांश्वन्तर्यामयोरवषट्कारहोमत्वाद्वषट्कारहोमे-ष्वाश्विनहोमस्य तृतीयत्वं बोध्यम्। आदिशब्देन 'पञ्च माध्यन्दिने गृह्णाति तस्मादैन्द्र-वायवः पूर्वो मैत्रावरुणाद्गृह्यते' इत्यादिसंग्रहः।

सम्बन्धश्रवणे हृदयाद्यवदानानां सान्नाय्यावदानप्रकृतित्वात्तद्वदत्र यागसाधनत्वं हृदयादीनामभिषवयुक्तपूतीकवल्लभ्यते, न[२] यागानुवादेनैव देवतादिविधिरिति। तस्मात्समुदानुवाद इति प्राप्ते ऽभिधीयते—

द्रव्यान्तरेण संयोगान्नानुवादोऽवकल्पते।
तेन यागविधी एतावन्ये गुणविधायिनः॥

पशुशब्दो हि जातिवचनोऽतज्जातीयेषु हृदयादिषु विना कारणेन न लक्षणया वर्तितुमर्हति, श्रौतपशुविशिष्टयागविधानोपपत्तेः। न च पशुविशिष्टे यागे हृदयादिवाक्यानां गुणविधित्वासम्भवः, पशोरेव हृदयादिद्वारेण करणत्वोपपत्तेः। प्रणाड्याऽपि हि येन यत्क्रियते, भवति तत्करणं तस्य। यथा लोके गोमयेन पचतीति, वेदेऽपि 'तुषपक्वा भवन्ति' 'यागेन स्वर्गम्' इति। तस्मादेको यागः पशुविशिष्टोऽग्नीषोमदेवत्यो विधीयते। हृदयादिवचनानि तु तत्रैव संस्कारमात्रविधानानि। तथा 'सोमेन यजेत' इति सोमशब्दो लतावचनः। न चासौ प्रकृतेष्वैन्द्रवायवादिषु यागेषु हविष्ट्वं न विधातुं शक्यते। 'धारया गृह्णाति' इति गुणवाक्येन सन्निधापितस्य द्रवद्रव्यस्यैन्द्रवायव-

---

अन्यस्त्विति। सान्नाय्यं दर्शगते दधिपयसी, तदवदानं 'मध्यात्पूर्वार्धाच्च हविषोऽवद्यति' इति विहितं, प्रकृतिरङ्गप्राप्तिनिरूपकं यस्येत्यर्थः। प्रकृतिवद्विकृतिरिति न्यायात् यथा सान्नाय्यावदानं यागीयद्रव्यसंस्कारः। तथेदमपीत्यर्थः। अभिषवेति। 'यदि सोमं न विन्देत् पूतीकानभिषुणुयात्'' इति वाक्येन सोमाभावे तत्सदृशलताविशेषरूपपूतीकानामभिषवविधौ पूतीकानां यथा यागसाधनत्वं लभ्यते तद्वदित्यर्थः। अभिषवस्यापि यागसाधनसोमसंस्कारकत्वात्। तथा चैवमनुमानप्रयोगः - हृदयादिकं यागसाधनम्, अवदानसंस्कार्यत्वात् सान्नाय्यवदिति। समुदायेति। आलभतिः पशुशब्दश्चेति शेषः।

'द्रव्यान्तरेणेति। हृदयादिवाक्यगतहृदयादिद्रव्यात् द्रव्यान्तरेण पशुसोमरूपेणेत्यर्थः। एतौ पशुसोमवाक्यस्थावालभतियजती। अन्ये हृदयादिवाक्यस्था विधयः। गुणविधायिनः[३]। अवदानग्रहणाद्यङ्गविधायिनः। सौकर्यात्प्रथमं पशुवाक्यसिद्धान्तमाह—पशुशब्दो हीति। श्रौतः शक्तिगम्यो यः पशुः तद्विशिष्टेत्यर्थः। गोमयादेर्ज्वालाद्वारा पाकसाधनत्वम्, यागस्यापूर्वद्वारा। सोमवाक्ये सिद्धान्तमाह—तथेति। "सोमेन यजेत" इति न तावद्धविर्विधानमित्यग्रेतनेनान्वयः। तत्र हेतुमाह—सोमेत्यादि। असौ लता। हविष्ट्वेन साक्षात्प्रदेयत्वेन।

---

१ अपरस्त्विति क, ख. २ तेनेति ख.

३ पशुसोमलक्षणद्रव्यान्तरसंयोगे सति प्रत्यभिज्ञाविरहाद्धृदयादिरूपपरसरूपद्रव्यान्तरावरुद्धे पशुसोमलक्षणद्रव्यविध्यसम्भवाच्च पशुसोमवाक्ये नानुवादके, किन्तु द्रव्यविशिष्टकर्मविधायके। हृदयाद्यैन्द्रवायवादिवाक्यनानि तु तत्रैव गुणविधय इत्यर्थः।

मिति तद्धितेन देवतासम्बन्धित्वेन श्रुत्या विधानान्न[1] तावद्धविविधानम्। नापि तत्प्रख्य-न्यायेन नामधेयत्वम्, सोमरसस्य प्रागस्माद्ववचनादप्राप्तेः। नन्वैन्द्रवायवमिति प्रकृता-भिधायी तद्धितोऽभिषवादिवाक्यैः प्रकृतं सोमरसमेवाभिधत्ते। नैवम्; "अण्व्या धार-ये" त्यनेन व्यवधानात्। अभिषवादिवाक्यानामप्रकृतत्वाद्धारासमर्थद्रव्यमात्रमत्र प्रकृ-तम्। न च धारावाक्यं सोमरसविषयम्, धारामात्रश्रवणात्तन्मात्रेण च वाक्यार्थोपप-त्तेः। सत्यपि सन्निधाने तद्विषयत्वं धारावाक्यास्याप्रमाणकम्[2]। संस्कारवाक्येषु हि लौकिकस्य संस्कारानुपपत्तेरपूर्वसाधनविशेषलक्षणया कथञ्चित्प्रकृतग्रहणं युक्तम्। धारा-वाक्ये तु ग्रहणोद्देशेन धारामात्रविधानान्न प्रकृतापेक्षा। किञ्चास्मिन्पक्षेऽयमपि नियमो नास्ति—य एव क्रये सोमः, स एवाभिषवे, य एवाभिषवे, स एव पावने इति। सर्वेषां क्रयादिवाक्यानां लौकिकसोमग्रहणेनारादुपकारकक्रयादिविधायिनां मिथोऽनपेक्षत्वात्। न च प्रकरणाद्विशेषलाभः, प्रकरणस्याविशेषकत्वात्। नाप्यधिकाराद्विशेषसिद्धिः 'तुल्येषु नाधिकारः स्यात्' इति हि 'द्रव्यसंख्याहेतुसमुदायम्' इत्यत्र वक्ष्यति। यदि हि तं सोममभिषुणुयादिति तच्छब्दः श्रूयते, ततः सा वैश्वदेवीतिवत्प्रकृतग्रहणं भवेत्।

---

श्रुत्येति। इन्द्रवायू देवते अस्येति सर्वनामार्थे तद्धितविधानादिति भावः। धारामात्रेति। द्रव्यान्तरनिरपेक्षाया जलधाराया एवोपपदाभावे प्रतीतेरिति भावः। सन्निधानात्सोमरसविषय-त्वमाशङ्क्यापेक्षाभावे दुर्बलेन सन्निधिना प्रबलाया धाराश्रुतेः संकोचो न युक्त इति परिहरति-सत्यपीति। प्रबलप्रमाणापेक्षितस्तु सङ्कोचः सान्निध्यादिना युज्यते, न चात्रापेक्षास्तीत्याह—संस्कारेति। 'व्रीहीन् प्रोक्षति' इत्यादिष्वित्यर्थः। धारामात्रेति—धारासामान्येत्यर्थः। तथा चोद्देश्यवाचिपदस्य प्रकृतापेक्षत्वं। न विधेयवाचिन इत्यर्थः। अनेनैव न्यायेनाभिषवादिवाक्य-गतसोमपदमपि न क्रयादिवाक्यगतसोमपरमित्याह - किञ्चेति। अस्मिन् पक्षे ऐन्द्रवायवादिवा-क्यस्य यागविधायकत्वपक्षे। ननु 'सोममभिषुणोति' इति द्वितीयया सोमस्य संस्कार्यत्वावग-मात् व्रीहीनित्यादिवत्प्रकृतग्रहणमेव युक्तमित्याशङ्क्याह—सर्वेषामिति। सोमस्यापूर्वसाधनत्वा-भावेन तत्संस्कारायोगात्सक्तुवद्विनियोगभङ्गेन सोमेन क्रयं कुर्यादित्यदृष्टार्थक्रयविधायकत्वा-त्परापेक्षेत्यर्थः। प्रकरणशब्देनात्र प्रधानापूर्वप्रकरणं वा सन्निधिमात्रं वा ? तत्र नाद्य इत्याह—प्रकरणस्येति। प्रकरणस्येतिकर्तव्यताकाङ्क्षारूपस्य। अविशेषकत्वात्—सोमविशेषकत्वाभावात्। नापि द्वितीय इत्याह—नापीति। संस्कार्यत्वे हि यस्य कस्यचित्तदयोगात् प्रकृतापूर्वसाधनत्वेन सोमो विशेष्येत, न तु तदस्तीत्याशयः। नवमे हि 'द्रव्यसंख्याहेतुसमुदायम्' इत्यधिकरणे प्रोक्षणादेर्व्रीहिस्वरूपमात्रसम्बन्धे यत्किञ्चिद्व्रीहौ तदानर्थक्यमित्युक्ते सन्निधानाद्यागीयव्रीहीणा-मेव ग्रहणं भविष्यतीत्याशङ्कानिरासार्थं तुल्येषु परस्परानपेक्षेषु नाधिकारो विशेषकः स्यादिति

---

१ अभिधानादिति ग.  २ अप्रामाणिकमिति क, ख.

सोममात्रश्रवणे तु न प्रकृतगामित्वम् । एवं धारावाक्येऽपि ऐन्द्रावायवादिवाक्येषु प्रकृतगामिष्वपि धारासमर्थमेव द्रव्यं गृह्यते, न सोमरसः, तस्याप्रकृतत्वादित्युक्तम्। अतो न तत्प्रख्यन्यायेन नामधेयत्वम् । एतेनैकदेशिनः संस्कारवाक्यैस्सोमरसस्य प्राप्तिमभिदधाना निरस्ताः। तेषां सिद्धान्तेऽपि तथैव सोमप्राप्तेः । सोमपदं नामधेयं स्यादित्यास्तां तावत् । एवं तावन्न हविष्ट्वेन विधानम्, नापि नामधेयत्वमित्युक्तम् । प्रकृतिद्रव्यविधानं त्वविशिष्टं तन्निराकरणार्थं च सूत्रम् 'अचोदकाश्च संस्कारा' इति। यद्यैन्द्रवायवादिवाक्येषु यागो विधीयेत, ततः स्यात्प्रकृतिद्रव्यविधिः। तेषु तु ग्रहणमात्रमेव देवताविशिष्टं विधीयते, तन्मात्रश्रवणात् । सम्भवति च ग्रहणेनैन्द्रवायवं कुर्यादिति विधिः । यद्यपि ग्रहणमात्रेण तद्देवत्यता न भवति, यागसहितेन तु ग्रहणेन शक्यते तद्देवत्यता कर्तुम् । अतो देवताविशिष्टे ग्रहणे चोदिते, यागमन्तरेण तदनुपपत्तेः, यागपेक्षायां 'सोमेन यजेते' त्येतत्सर्वत्र द्रव्यदेवतासम्बन्धमुपपादयद्यागान्तरकल्पनां निरुणद्धि। 'दश मुष्टीमिमीत' इति च परिमाणश्रवणात् । तावतश्च सोमस्याल्पपरिमाणैः पात्रैरसति समुच्चये ग्रहणासम्भवाद् यथागृहीतानामेव च होमादुपपन्नं क्रमसमुच्चयदर्शनम्—'आश्विनो दशमो गृह्यते, तं तृतीयं जुहोति' इति। त्रयाणामपि समुदायानुवादापवादाधिकरणानां पूर्वपक्षे क्रमभेदः, सिद्धान्ते त्वभेद इति लक्षणसम्बन्धः ।

॥ इति पशुसोमाधिकरणम् ॥ ६ ॥

---

वक्ष्यतीत्यर्थः । अप्रकृतगामित्वम्—प्रकृतमात्रविषयत्वाभावः । एकदेशिनः-प्राभाकराः[1] । संस्काराः-संस्कारवाक्यानि । अचोदकाः-यागाविधायकानि । सम्भवति चेति । ऐन्द्रवायवं सन्तं गृह्णातीत्यसम्भवेऽप्येवं सम्भवतीत्यर्थः । कथं केवलग्रहणेन देवतासम्बन्धोपपत्तिरित्याशङ्क्य यागद्वारेणेति समाधत्ते-यद्यपीत्यादिना । यागदेवतयोः परस्परसाकाङ्क्षतया क्लृप्तस्यैव यागस्य ग्रहणद्वारतयान्वय इत्यर्थः । यच्च यागैकत्वे तदर्थानां ग्रहणानामन्व दृष्टार्थत्वेन विकल्पापत्तेस्तत्समुच्चयादिदर्शनानुपपत्तिरित्युक्तम्। तत् परिहरति-दशेति । इदमुपलक्षणम्-'ग्रहैर्जुहोति' इत्युपादेयपात्रबहुत्वस्याप्यसति समुच्चयेऽनुपपत्तिर्द्रष्टव्या । नन्वेवमपि सर्वग्रहणोत्तरं पुनरेकीकृत्य सकृदेव होमापत्तेः 'तं तृतीयम्' इति क्रमानुपपत्तिरित्याशङ्क्याह-यथेति । अन्यथा भेदेन ग्रहणानामदृष्टार्थत्वं स्यादिति भावः । तदुक्तं वार्तिके-'तद्धि द्रव्यमवश्यं यथागृहीतं दातव्यम् । पुनरेकीकरणे पूर्वकृतग्रहणभेदवैयर्थ्यप्रसङ्गात्' इति । प्रयोजनम्-पशौ पूर्वपक्षे विकृतिभूते सवनीयपश्वादौ हृदयादियागानामेकस्यैव कस्यचिदतिदेशात्तदङ्गमात्रानुष्ठानं, न त्वेकादशावदानगणप्राप्तिः, सिद्धान्ते तु सेति ज्ञेयम् । एवं सोमेऽपि पूर्वपक्षे यागभेदादेकस्य कस्यचिदङ्गानि विकृतौ

---

१ प्राभाकरैः पूर्वपक्षे वार्तिककारोन्नीतः प्रकृतिद्रव्यविधिपक्षो न सम्भवति, संस्कारवाक्यैरेव सोमरसस्य प्राप्तेरित्युच्यते, तदप्युक्तरीत्या संस्कारवाक्यैस्सोमरसप्राप्त्यसम्भवान्निरस्तमिति भावः ।

७

सू० पृथक्त्व—गतोऽभ्यासप्रसङ्गः। संख्यया भेद इदानीमभिधीयते। अत्र कर्मोत्पत्तिवाक्यगता कर्मसमानाधिकरणा[1] संख्योदाहरणम्। यथा 'तिस्र आहुतीर्जुहोति' 'द्वादश[2] द्वादशानि जुहोति' इति। तत्रैको होमो विधीयते, बहवो वेति सन्देहः। तत्र—

आख्यातस्य सकृच्छ्रुत्या कर्मैकत्वेऽवधारिते।
संख्यासम्पत्तिरभ्यासात्प्रयाजैकादशत्ववत् ॥
स्यादेवं यदि कर्मैक्यं प्रागस्मादवधारितम्[3]।
आख्यातमात्रात्तत्सिध्येत्तावतश्चाप्रमाणता ॥

'एकादश प्रयाजान्यजति' इति निर्ज्ञातसंख्येषु प्रयाजादिषु श्रुत्या संख्यायुक्तं यदभ्यासेन पूर्यते। न चैवमिह कर्मैकत्वं विज्ञातम्। न ह्याख्यातमात्रं प्रमाणम्, यतः कर्मैकत्वं प्रमितं स्यात्। यावन्ति हि वाक्ये पदानि प्रयुज्यन्ते तावतां संहत्य प्रामाण्यम्। अतो विदधदेवाख्यातं श्रुतसङ्ख्याविशिष्टानि विधत्त इति सिद्धो भेदः। अत्र च कर्मण्येव

---

कार्याणि सकृदेव च याग इति। सिद्धान्ते तु यथाप्रकृति यागाभ्यास इति द्रष्टव्यम्। सूत्रार्थस्तु—पशुसोमयोः कर्मणोर्हृदयादिद्रव्यसंयोगाच्चोदना विधिः, अन्यथा प्रकरणे श्रुतो द्रव्यस्य हृदयादेरवदानसंयोगोऽनर्थकस्यात्। न हि संस्कारस्तस्य यागस्य पशुलतादिगुणार्थत्वेन सम्भवति यत इति॥ इति पशुसोमाधिकरणम्॥ ६॥

७

पृथक्त्व-अभ्यासप्रसङ्ग इति। अभ्यासप्रसङ्गतस्तदपवादविचार इत्यर्थः। तत्समाप्तौ चाभ्यासस्य बुद्धिस्थत्वात्तस्य च पुनःश्रुतिरूपस्य सङ्ख्योदाहरणेऽभावान्न कर्मभेदस्स्यादिति प्रत्युदाहरणरूपा प्रकृतसङ्गतिः। पूर्वाधिकरणे यागाभ्यासेऽपि यागैकत्ववदिहापि संख्यावशेनावृत्तावपि कर्मैकत्वमेवेत्यातिदेशिकी। अनन्तरसङ्गतिश्च इदानीम् इत्यनेन सूच्यते। विचारविषयतावच्छेदकमाह—अत्रेति। 'एकादश प्रयाजान् यजति' इत्यादिवारणायाद्यं विशेषणम्। 'त्रिर्वेदिं प्रोक्षति' इत्येतद्व्यावृत्त्यर्थं द्वितीयम्। क्रियाभ्यावृत्तिगणनार्थसुच्प्रत्ययेनावृत्तिगतसंख्याभिधानेन कर्मसामानाधिकरण्याभावात्। तिस्र इति। साङ्ग्रहायणीष्टिप्रकरण इदम्। चयने 'वाजश्च मे' इत्यादि 'सुवश्च मे' इत्यन्तैर्द्वादशमन्त्रैरेकाहुतिर्द्वादशम्, एवमेकादशापरा आहुतय इति द्वादश द्वादशानीत्यर्थः। दृष्टान्तवैषम्येण सिद्धान्तमाह—स्यादेवमिति। अस्मदुदाहृतवाक्यात्। तत् कर्मैक्यम्। निर्ज्ञातेति। निर्णीतपञ्चत्वसंख्येष्वित्यर्थः।

---

१. कर्मवाचकशब्दसमानाधिकृतशब्दाभिधेयेत्यर्थः। २. द्वादशसङ्ख्यातान् प्रत्येकं द्वादशसंख्यायुक्ताञ्जुहोतीत्यर्थः। ततश्च चतुश्चत्वारिंशदधिकशतहोमास्सम्पद्यन्त इति सोमनाथः। ३. संख्यावाचकपदसम्बन्धादित्यर्थः।

सङ्ख्याश्रवणात्पूर्वपक्षाशङ्का मन्देति मत्वा भाष्यकारः 'सप्तदश प्राजापत्यानि' इत्युदाहरत्। अत्र हि द्रव्यगतसङ्ख्यया नातीव स्फुटः कर्मभेद इति विचार्यते—किं सप्तदश पशुद्रव्यक एको यागो विधीयते ? किं वैकैकपशुद्रव्यकाः सप्तदशैते यागाः ? इति। तदर्थं विचार्यते—प्राजापत्यानिति। प्रकृत्या प्रजापतिर्देवताऽभिधीयते। तद्धितेन पशुद्रव्यं, बहुवचनेन बहुत्वम्। तत्र किं तद्धितार्थः पशुः। बहुत्वेन प्रथममन्वितः पश्चात् प्रजापतिना देवतया सम्बध्यते ? पशुश्च पशुश्च पशुश्च पशवः, तेषां प्रजापतिर्देवतेति, तदा च बहुभिः पशुभिर्व्यासज्यैका देवता सम्बध्यत इति, द्रव्यदेवतासम्बन्धैक्यादेको यागो भवति। किं वा प्रथमं प्रजापतिनाऽन्वितः पश्चाद्बहुत्वेन सम्बध्यते प्रजापतिर्देवता अस्येति प्राजापत्यः, प्राजापत्यश्च प्राजापत्यश्च प्राजापत्यश्च प्राजापत्या बहव इति, तदा भिन्नैर्द्रव्यदेवतासम्बन्धैर्भिन्ना एव यागाः कल्प्यन्ते। तत्र प्राजापत्यशब्देन देवतासम्बन्धोपसर्जनं द्रव्यमेव प्राधान्येनोच्यते। यच्च प्रधानं तस्यैवार्थान्तरेण बहुत्वेन सम्बन्धः, नोपसर्जनस्य देवतासम्बन्धस्य। ननु देवताविशिष्टं द्रव्यमभिहितमिति विशिष्टेनैव रूपेण संख्यान्वयः स्यात्, न स्वरूपमात्रेण। न, द्वौ त्रय इत्यत्रानैकान्त्यात्। न हि द्वावित्यत्र द्वित्वविशिष्टेन रूपेण द्विवचनाभिहितसङ्ख्यायोगः। तथा सति द्वाविति चत्वारः प्रतियेरन्, एवं त्रय इति नव। न च तथा। तस्माद्यथा तत्र द्वित्वविशिष्टमपि द्रव्यं द्विशब्देनोक्तं स्वरूपेणैव द्विवचनाभिहितसङ्ख्यायोगं प्रतिपद्यते, तथात्रापि तद्धिताभिहितं द्रव्यं स्वरूपेणैव बहुत्वयोगं प्रतिपद्यते, न सोपसर्जनम्।

---

प्राजापत्यानितीति। इतिकरणेन 'पशूनालभत' इति शेषो गृह्यते। नन्वत्रापि प्राजापत्यानिति बहुवचनेन द्रव्यदेवतासम्बन्धबहुत्वावगतेस्तुल्यं पूर्वपक्षमन्दत्वमित्याशङ्क्याह—नातीवेति। बहुष्वपि द्रव्येषु व्यासज्यैकदेवतासम्बन्धोपपत्तेरिति भावः। देवताभिधीयत इति। तद्धितार्थभूतदेवतान्वितोऽभिधीयत इत्यर्थः। पशुद्रव्यमिति। सास्य देवतेति सर्वनामार्थे तद्धितविधानात्पशुपदेन च तस्यैव बुद्धिस्थत्वादिति भावः। पशुश्चेति[1]। पशुपदैकशेषप्रदर्शनं तस्यैव तद्धितार्थतया तद्धितार्थभूतद्रव्यमात्रैकशेषप्रदर्शनार्थम्। एवं देवतान्वयात्पूर्वमेव द्रव्ये बहुत्वेनावगते देवतासम्बन्धो मिलितेषु प्रतीयमान एक एवेति यागैकत्वमित्यर्थः। सिद्धान्तोपपत्तिमाह—किंवेति। प्रजापतिना—प्रजापत्यभिन्नदेवतया। एवञ्च बहूनां मिलितानां न देवतासम्बन्धः। किन्तु प्रत्येकमेवेति यागभेदः। भिन्नैरिति। पशुत्वस्य प्रत्येकपर्याप्ततया देवतासम्बन्धस्य प्रत्येकपर्यवसानादिति भावः। देवतेति। देवतासम्बन्ध उपसर्जनं विशेषणं यस्येत्यर्थः। ननु तद्धितेन शक्त्यैव देवतासम्बन्धि द्रव्यं प्रथममुच्यते, पश्चात्तु प्रकृत्यर्थे तस्मिन् बहुत्वान्वयः। इत्यञ्च दण्डिन इत्यादौ बहुत्वादेर्विशेषणेऽप्यन्वयदर्शनात्कथं केवलद्रव्य एवात्र बहुत्वान्वय इति शङ्कते—नन्विति। व्यभिचारान्नोक्तनियम इत्याह—नेति। न च तथा प्रतीतिरिति शेषः

---

१ यद्यपि तद्धितो द्रव्यसामान्यवाची, तथापि 'प्राजापत्यान् पशून्' इति समभिव्याहारात् सामान्यवाचकस्यापि तद्धितस्य पशावेव पर्यवसानं बोध्यम्।

तस्मादेकं कर्म सप्तदशपशुद्रव्यकम्। कथमिदानीं चोदकप्राप्तमेकपशुनिष्पन्नैकादशावदानद्रव्यकत्वं यागस्यानुग्रहीतव्यम्? माऽनुग्राहि, न चोदकानुसार्युपदेशनिर्णयः। यथोपदेशं त्वतिदेशवर्णना। तस्मादेकं कर्मेति प्राप्ते ब्रूमः—

**यदि कर्म भवेदेकमेकः स्याच्चोदकस्ततः।**
**तेन चैकगणप्राप्तेः पशुसङ्ख्या विरुध्यते॥**

सवनीयविकारा ह्यैकादशिनः, तद्विकाराश्च प्राजापत्याः। तत्र चैकपशुनिष्पन्नैकादशावदानद्रव्यत्वं यागस्यासीदित्यत्राप्येकत्वे यागस्य चोदकोऽप्येकमेवावदानगणम-

चोदकप्राप्तं—अतिदेशप्राप्तम्। प्रकृतावग्नीषोमीये पशावेकत्वश्रवणादेकपशुप्रकृतिकहृदयाद्येकादशावदीयमानद्रव्यकत्वं यागाङ्गं प्रकृतिवद्विकृतिरित्यतिदिष्टं तदेकस्य यागस्य सप्तदशपशुद्रव्यकत्वे कथं स्यादित्यर्थः। अतिदेशादुपदेशस्य बलवत्त्वात्तद्बाधे न क्षतिरित्याह—मानुग्राहीति[1]।

संख्यान्वयस्य द्वावित्यादौ प्रकृत्यर्थतावच्छेदकोपलक्षिते दण्डिन इत्यादौ तद्विशिष्टे चोभयथान्वयदर्शनादत्र सन्देहे सत्यतिदेशशास्त्ररूपतात्पर्यग्राहकवशेन विशिष्ट एव प्रकृत्यर्थे संख्यान्वयनिर्णयाद्यागभेद इति सिद्धान्तमाह—यदीत्यादि। एकगणप्राप्तेः—एकपशुनिष्पन्नैकादशावदानगणप्राप्तेः। पशुसंख्या सप्तदशत्वरूपा। नन्वग्नीषोमीयपशुयागाङ्गस्यैकपशुनिष्पन्नैकादशावदानगणस्य तद्विकृतावतिदेशः। प्राजापत्याश्च न तद्विकृतयः, किन्त्वेकादशपशुयागगणविकृतयः, गणत्वरूपावान्तरसादृश्यात्। अत आह—सवनीयेति। सवने—सुत्याकाले भवः सवनीयः आग्नेयः पशुयागः। तत्र हि दर्भमयरज्जुरूपरशनाद्वयमङ्गं, तदैकादशिनेष्वपि दृष्टमित्यवान्तरसाम्यात्ते तद्विकृतय इत्यर्थः। तथा च सवनीयादिपरम्परया परमप्रकृतिभूतादग्नीषोमीयादेकपशुनिष्पन्नैकादशावदानप्राप्तिरिति भावः[2]। ननु प्राजापत्यानिति प्रत्यक्षविहितबहुत्वेनैकत्वस्यानुमानि-

१—यद्यपि सप्तदशपशूपदेशस्य कर्मभेदेऽप्युपपत्त्या उपदेशस्य सन्दिग्धार्थत्वान्न ततश्चोदकस्यान्यथाभावः प्रकृते सम्भवति, तथापि प्रकृतावेकादशावदानस्य प्रकृतिभूतात्पशोर्यागस्साधनीय इत्येवमेकादशावदानगणः पशुधर्मतयैव क्लृप्तः, न यागकर्मतया। ततश्च कर्मैक्येऽप्यवदानगणस्य साधारणधर्मत्वाभावान्न तस्यैकस्य प्राप्तिः, किन्तूपाकरणादिवत् पशुधर्मत्वात्सत्यपि कर्मैक्ये पशुभेदादेकादशावदानगणस्यापि प्रतिपशु भेदेनैव प्राप्तेः सर्वेषां यागसाधनत्वमुपपद्यत इति तात्पर्यं बोध्यम्।

२. अत्र मूले एकादशिनविकाराः प्राजापत्या इत्येतावद्वक्तव्येऽपि एककर्मत्वपक्षे अस्य सवनीयः प्रकृतिर्भवेदिति वार्तिकदर्शनादेककर्मत्वपक्षे सुत्याकालत्वसाम्यात्सवनीयविकारत्वं प्राजापत्यानामिति कस्यचिद् भ्रमस्स्यात्। तन्निरासार्थमेककर्मत्वपक्षेऽप्यैकादशिनविकारा एव प्राजापत्याः, गणसाम्यात्। यद्यप्यैकादशिनेषु प्रतिपशु यागभेदात् पशुयागानां गणः, प्रकृते तु यागैक्यपक्षे न यागानां गणः। किन्त्वेकस्मिन्नेव यागे पशूनामेव गणस्तथापि सुत्याकालस्यै,-कादशिनेष्वप्यविशेषादेककालालम्भनीयगणसम्बन्धित्वसामान्याधिक्यादैकादशिनविकारा एव प्राजापत्याः। न तु सवनीयविकारा इति वार्तिकस्याप्यैकादशिनद्वारा सवनीयः, प्रकृतिरित्यत्र तात्पर्यमिति प्रदर्शनाय 'सवनीयविकारा ह्यैकादशिनः' इत्युक्तमिति वेदितव्यम्।

तिदिशेत्। तस्मादत्र सप्तदशानां प्राजापत्यत्वं न सम्पादितं स्यात्। न चोपदेशेनातिदेशस्य बाधः, विरोधाभावात्। प्राजापत्यानित्युपदेशस्योभयथाप्युपपत्तेः। तेनार्थद्वयसाधारणमुपदेशवाक्यं प्रकृतिवच्छब्देन वाक्यशेषभूतेनानेककर्मपरमवधार्यते। कर्मभेदे हि प्रतिकर्मभिन्नैश्चोदकैस्तावतां गणानां प्राप्तेः सिध्यति सर्वेषां प्राजापत्यत्वम्। एवं 'वसन्ताय कपिञ्जलानालभेत' इत्यादिष्वपि चोदकवशेनैव यावद्द्रव्यं यागभेदः। ये तु चोदकमनादृत्य द्रव्यस्य तद्धिताभिहितस्य विशिष्टस्यैव बहुत्वावगमाद्भेदमाहुः,तेषां चतुर्थ्यभिहितदेवतेषु 'वसन्ताय कपिञ्जलान्' इत्यादिषु न कर्मभेदः सिध्येत्। तत्र च प्रतिपश्ववदानगणप्राप्तिर्न स्यात्। अथ तत्र चोदकवशादभेदः, तथैव सर्वत्रास्तु, किमतद्व्यापिना तद्धितोपन्यासेनेत्यास्तां तावत्।

इति संख्याधिकरणम्॥ ७॥

८

सू० संज्ञा०—उद्देशक्रमस्यातन्त्रत्वाद्बहुविचारं गुणप्रकरणान्तरनिमित्तं भेदमुपेक्ष्य, सम्प्रति संज्ञातो भेदोऽभिधीयते। ज्योतिष्टोमं प्रकृत्य श्रूयते—'अथैष ज्योतिरथैष

---

कस्य बाधो युक्त एवेत्याशङ्क्य निराकरोति—न चेति। अविरोधे दुर्बलस्यापि बोधोऽनुचित इत्यर्थः! उभयथा यागैकत्वे तद्भेदे च। केवले विशिष्टे च द्रव्ये बहुत्वान्वयदर्शनात्। तेन 'संदिग्धेषु वाक्यशेषादि'ति न्यायेनात्र यागभेदनिर्णय इत्याह—तेनेति। तदुक्तम्—

प्राजापत्येषु यागानामेकानेकत्वसंशये।
कृतः प्रकृतिवच्छब्दवाक्यशेषेण निर्णयः॥ इति॥

सकलोदाहरणव्यापकतयोक्तातिदेश एव कर्मभेदसाधको मुख्यः, न तु विशिष्टे बहुत्वान्वयव्युत्पत्तिन्याय इत्याह—एवमिति। अत्र हि भिन्नपदोपात्तदेवतान्वयात्पूर्वमेव पदश्रुत्या बहुत्वान्वयः, न तु देवतासम्बन्धविशिष्टे द्रव्य इति भावः। प्राभाकरास्तु—अनेकयागकल्पनाया गौरवाल्लाघवसहकृतेन द्वावित्यादिवत्केवलद्रव्य एव संख्यान्वयन्यायेन पूर्वपक्षस्य निर्णये सन्देहाभावेनानुमानिकातिदेशवशेन सिद्धान्तं निराकृत्यासति बाधके विशिष्ट एव संख्यान्वयव्युत्पत्तिबलेनैव सिद्धान्तमाहुः, तन्निरासायाह—ये त्विति। तेषां मत इति शेषः। कर्मभेदाभावे किमनिष्टं तत्राह—तत्रेति। प्रयोजनं पूर्वपक्षे देवतासम्बन्धिनि पशुसमुदाये प्रोक्षणादिसंस्काराः सकृत्कार्याः। न प्रतिपशु आवर्तनीयाः। सिद्धान्ते तु प्रतिपश्वावर्तनीया इति। सूत्रं स्पष्टार्थम्।

॥ इति संख्याधिकरणम्॥ ७॥

संज्ञा—सङ्गतिं दर्शयितुमाह—उद्देशेति। शब्दान्तरमभ्यासः संख्या गुणः प्रक्रिया नामधेयमिति क्रमेण भाष्यकारेणोद्देशः कृतः। तत्रातन्त्रत्वान्निर्मूलत्वादित्यर्थः। अथवा निर्मूलतयाऽप्रयोजकत्वादित्यर्थः। एवमपि कर्माङ्गत्वसाम्यात्संख्यानन्तरं गुणविचारौचित्यात्तदुपेक्षाबीजमाह—बह्विति। गुणश्च प्रकरणान्तरञ्चेति द्वन्द्वः। तथा च सूचीकटाहन्यायेन संज्ञानिरूपणमित्यर्थः। पृथक्त्वनिवेशित्वरूपहेतुसाम्यमपि संज्ञायां बोध्यम्। ननु ज्योतिरादिपदानां याग-

विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेत' इति। तत्रैतच्छब्दपरामृष्टानां ज्योतिरादीनां यजिना सामानाधिकरण्याद्यागनामत्वं तावत्सिद्धम्। तत्र संशयः—किं प्रकृतमेव ज्योतिष्टोमं ज्योतिरादिशब्दैरनूद्य सहस्रदक्षिणाख्यो गुणो विधीयते? उत कर्मान्तराण्येवंनामकान्येवंदक्षिणानि विधीयन्त? इति। तत्र प्रकरणादेतच्छब्दस्य च प्रकृताभिधायित्वात्तत्सामानाधिकरण्याच्च ज्योतिरादीनां प्रकृतहान्यप्रकृतकल्पनागौरवाच्च पूर्वस्यैव गुणविधिरिति प्राप्ते ब्रूमः—

**नामान्तरश्रुतावर्थभेदस्तावत्प्रतीयते।**
**बलवद्बाधकाच्चासावन्यथात्वं प्रपद्यते॥**

न चात्र बलवदस्ति बाधकं, येन संज्ञानिमित्तो भेदोऽपोद्येत। संज्ञाश्रुत्या चार्थान्तरतावगमात्प्रकरणविच्छेदे जातेऽर्थान्तरकलुषितायां बुद्धावुपनिपतत्सहस्रदक्षिणेन यजेतेति न ज्योतिष्टोमं गन्तुमर्हति, तस्मात्कर्मान्तराणि। एवञ्च 'अथैष ज्योति' रित्या-

---

सामानाधिकरण्याभावात्कथं तन्नामत्वम्? अत आह—तत्रैतदिति। एतेनेत्यस्य ज्योतिरादिवाचकस्य यजेतेति करणीभूतयागसामानाधिकरण्यादित्यर्थः। अनूद्येति[1]। ज्योतीरूपस्तोमसम्बन्धितया ज्योतिष्टोम एव 'भामा सत्यभामा' इतिवत् 'वसन्ते ज्योतिषा यजेत' इत्यत्र यथानूद्यते। तथा इहापि ज्योतिःपदेनानूद्यते। एवं विश्वानि ज्योतींषि स्तोमरूपाणि यत्रेति स एवानूद्यत इति भावः। एकस्यैवानेकसंज्ञकत्वेनानुवादश्च सहस्रदक्षिणाऋध्यादिरूपगुणफलव्यवस्थार्थः, ज्योतिरादिसंज्ञोल्लेखनप्रयोगे गोसहस्रं दक्षिणा, ऋध्यादि च फलम्। ज्योतिष्टोमसंज्ञोल्लेखेन प्रयोगे तु द्वादशशतं दक्षिणा, स्वर्गश्च फलमिति। अर्थभेद इति। 'द्युतेरिसिन्नादेश्चजः' इत्यौणादिके इसिन् प्रत्यये आदेर्दस्य च जकारादेशे व्युत्पन्नेन ज्योतिश्शब्देन द्योतनाश्रयतया यागान्तरं प्रतीयत इत्यर्थः। 'वसन्ते ज्योतिषा' इतिवज्ज्योतिष्टोम एव कुतो नाभिधीयते? तत्राह—बलवदिति। प्रकृतप्रत्यभिज्ञारूपबाधकबलेन तत्र लक्षणया प्रयोगस्स्वीकृत इति भावः। ननु अत्रापि प्रकरणादेतेनेति सर्वनामवशाच्च प्रकृतप्रत्यभिज्ञानमस्तीत्याशङ्क्याह—संज्ञाश्रुत्येति। प्रकरणविच्छेदे जाते संज्ञाश्रुत्यार्थान्तरावगमादर्थान्तरकलुषितायामित्यन्वयः। प्रकरणविच्छेदश्चाधिकारार्थकाथशब्दबलेनेति ज्ञेयम्। तथा च वसन्ते ज्योतिषेत्यत्र न प्रकरणविच्छेदः, इह त्वथशब्दवशेन स इति भावः। एतच्छब्दस्तु प्रस्तूयमानवचनत्वेनोपपन्न इति वक्ष्यति। भेदबोधकत्वेनैवाथैष[2] इत्यादेस्सार्थक्यमित्याह—एवञ्चेति। प्रयोजनं पूर्वपक्षे—प्रकृतिभूतसोम-

---

१. अत्र ज्योतिरादिशब्दैरनूद्य गुणो विधीयत इत्युक्त्या यथा 'यत्किञ्चित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्ति' इत्यत्र यत्किञ्चेति वाक्यस्यानुवादसमर्पकतया 'तेनोपांश्वि'ति विध्येकवाक्यता, एवम् 'अथैष ज्योतिः' इत्यादेः प्रकृतकर्मानुवादकत्वे गुणविध्येकवाक्यतापन्नत्वान्नानर्थक्यमिति सूचितम्।

२. 'यत्किञ्च प्राचीनम्' इत्यस्यानुवादतया सार्थक्यं युक्तम्, तत्राग्नीषोमीयात् प्राचीनलक्षणोद्देश्यस्यान्यतोऽनुवादासम्भवात्, इह तु 'एतेन सहस्रदक्षिणेन यजेत' इति वाक्यगतैतच्छब्देन धातुना च ज्योतिष्टोमानुवादसिद्धेः। अथैष ज्योतिः इत्यादेर्नानुवादतयार्थवत्त्वमिति तात्पर्यम्।

देरर्थवत्त्वमन्यथानर्थक्यं स्यात्। 'एतेन सहस्रदक्षिणेन यजेत' इत्येतावतैव ज्योतिष्टोमस्य गुणविधिसिद्धेरेतच्छब्दश्च प्रस्तूयमानकर्मान्तरवचनत्वेनाप्युपपद्यत इति सिद्धः कर्मभेदः।

॥ इति संज्ञाधिकरणम् ॥ ८ ॥

९

**सू० गुणश्च०**—इदानीं गुणलक्षणो भेदः प्रस्तूयते। द्वेधा च गुणस्य भेदकत्वम्। कश्चित्तावद्गुणः पूर्वविहितस्य कर्मणः प्रबलगुणावरुद्धत्वात्तत्र निवेशमलभमानः स्वात्मसङ्गतये विधेः कर्मान्तरोत्पत्तिपरतां कल्पयन् भेदको भवति, अनेकत्वाद्वा गुणानां। प्राप्तकर्मानुवादेन विध्ययोगात्सर्वेषां विधिसिद्धये कर्मपरत्वं विधेः कल्प्यते। तत्रानेकगुणनिमित्तो भेदः, पौर्णमास्यधिकरण एव प्रसङ्गात्प्रतिपादितः। अधुना बलवद्विरोधनिमित्तोऽभिधीयते। चातुर्मास्येषु वैश्वदेव्यामिक्षेति यागं विधायाम्नायते—'वाजिभ्यो वाजिनम्' इति। तत्र संशयः—किं पूर्वस्मिन्नेवामिक्षायागे वाजिनं गुणो विधीयते ? किं वा कर्मान्तरम् ? इति। तदर्थञ्च किमुत्पत्त्युत्पन्नशिष्टौ गुणौ तुल्यबलौ ? उत उत्पत्तिशिष्टो बलीयानिति। तथा तद्धितचतुर्थ्योरपि बलाबलं चिन्तनीयम्। तत्र—

---

यागस्याद्यप्रयोगेऽपि द्वादशशतसहस्रदक्षिणयोर्विकल्पेनानुष्ठानम्, सिद्धान्ते तु नेति। उत्पत्तिवाक्ये संयोगात्सम्बन्धात्संज्ञापि भेदिकेति सूत्रार्थः। दाक्षायणयज्ञ इति दर्शपूर्णमासयोरेवावृत्तिविशिष्टयोस्संज्ञा न भेदिकेति बोधयितुं पञ्चम्यन्तम्, सा तु नोत्पत्तिवाक्यगता, किन्तु गुणफलविधिगतेति ॥ इति संज्ञाधिकरणम् ॥ ८ ॥

गुणश्च—पूर्वकर्मानिवेशित्वसाम्यात् संज्ञानन्तरं गुणप्रमाणनिरूपणमिति सङ्गतिं दर्शयति—इदानीमिति। गुणलक्षणो गुणप्रमाणकः। द्वेधेति। पूर्वकर्मानिवेशनिमित्तद्वैविध्यादिति भावः। तदेवाह—कश्चिदित्यादि। वक्ष्यमाणो वाजिनादिरित्यर्थः। प्रबलेति। उत्पत्तिशिष्टेत्यर्थः। स्वात्मसङ्गतये—स्वस्वरूपान्वयाय। विध्ययोगादिति। वाक्यभेदवशादित्यर्थः। तथा च पूर्वकर्मानिवेशे उत्पत्तिशिष्टगुणविरोधो वाक्यभेदप्रसङ्गश्चेति द्वयं निमित्तमित्युक्तम्। प्रतिपादित इति। 'चोदना वा गुणानां युगपच्छास्त्राच्चोदिते हि तदर्थत्वात्तस्य तस्योपदिश्येत' इति तदधिकरणगतसूत्रेणेत्यर्थः। तत्र हि विद्वद्वाक्यविहितयागापेक्षितद्रव्यदेवताविधायित्वमाग्नेयवाक्यस्याशङ्क्य वाक्यभेदप्रसङ्गेन निराकृतं—चोदिते विहिते कर्मणि सति गुणवाक्यगतविधेस्तदर्थत्वाद् गुणमात्रपरत्वात्। तस्य तस्य गुणस्यावृत्या कर्मार्थत्वमुपदिश्येतेति वाक्यभेद इत्यर्थकेन सूत्रावयवेन तत्प्रसङ्गादाग्नेयवाक्ये कर्मान्तरचोदना, गुणानां युगपत् सकृच्छास्त्राद्विशिष्टविधानाद्धेतोरिति प्रतिपादितम्। "तप्ते पयसि दध्यानयति" इति विधानाद् घनीभूतो भाग आमिक्षोच्यते, द्रवीभूतस्तु वाजिनम्। बलाबलमिति। देवतात्वबोधन इति

**वाजेनामिक्षया योगाद्विश्वेदेवा हि वाजिनः ।**
**प्रकृतांस्तान्वदेच्छ्रुत्या वाजिशब्दश्च यौगिकः ॥**

ते हि पूर्वविहितकर्मसम्प्रदानरूपेण प्रकृताः, तेनैव रूपेण प्रत्यभिज्ञायन्ते । तथाविधैश्च तैः सम्बध्यमानं वाजिनं पूर्वकर्मण्येव विहितं भवति । एवञ्च सम्भवति पूर्वत्र गुणमात्रविधाने प्रकृतहानमप्रकृतकल्पनमपूर्वान्तरकल्पनं विशिष्टविधिगौरवञ्च नाश्रयितुं युक्तम् । नन्वामिक्षायुक्तस्यैवोत्पत्तौ पूर्वकर्मणोऽवगतत्वात् । न । तस्य द्रव्यान्तरसम्बन्धापेक्षा, योग्यता वास्ति । उच्यते—यद्यप्युत्पत्तौ द्रव्यसंयुक्तं कर्मावधारितम्, तथापीह निष्कृष्य कर्मस्वरूपमात्रमनूद्यते । अभिधानकृता चाकाङ्क्षा, न वस्तुकृता, तेन स्वरूपमात्रस्याभिधानोपात्तस्यास्त्येव द्रव्यान्तरसम्बन्धापेक्षा । योग्यता चास्त्येव स्वरूपमात्रस्य द्रव्यान्तरेण सम्बद्धुम् । शब्दान्तराधिकरणे हि प्रत्ययवाच्या भावना प्रकृत्यर्थानुरक्तैवावगम्यते, न शुद्धस्वरूपेति, तत्र धात्वन्तरमनवकाशं स्यादित्युक्तम् । इह तु कल्पितेन यजिना गुणाननुरक्तमपि कर्मावगतं पदान्तरत्वादित्युच्यते । ततस्तदनुवादेन शक्यं गुणान्तरविधानम् । अतो नास्त्युत्पत्त्युत्पन्नशिष्टयोर्विरोधः । न चामिक्षाया

---

शेषः । पूर्वपक्षमाह—वाजेनेति । वाजमन्नमामिक्षारूपं येषामस्तीति इनिप्रत्ययस्य सर्वनामार्थे विधानात्सन्निहिता[1] विश्वेदेवा एव वाजिशब्देनोच्यन्त इत्यर्थः । वाजिशब्दस्य देवतान्तरे रूढिशङ्कामपाकरोति- यौगिक[2] इति । रूढिकल्पनायां मानाभावादिति भावः । नन्वेतावतापि देवतात्वावोधात्सुतरां यागाननुवादे कथं तत्र द्रव्यविधिरत आह—ते हीति । मत्वर्थसम्बन्धस्य देवतात्वेनैव पर्यवसानस्य पूर्ववाक्यालोचनेनावगमात् । तस्य च यागाक्षेपकत्वाद्युक्तस्तत्र द्रव्यविधिरिति भावः । सिद्धान्ते दोषचतुष्टयमाह—एवञ्चेति । योग्यता वेति । आमिक्षासाधनके वाजिनसाधकत्वस्य बाधादित्यर्थः । संयुक्तम्—आमिक्षासंयुक्तम् । अनूद्यत इति । वाजिभ्य इति कारकस्य क्रियां विनान्वयायोगात्तत्सम्बन्धोपलक्षितयागक्रियामात्र कल्पितयजिपदेनानूद्यत इत्यर्थः । नन्वेवमपि वस्तुगत्या यागस्यामिक्षायुक्तत्वात्कथमाकाङ्क्षा? इत्यत आह—अभिधानेति । यथा प्रत्ययाभिहितक्रिया कारकसाकाङ्क्षा । न तु सैव क्रियाशब्दाभिहितेत्यर्थः । योग्यता चेति । एकस्मिन्नेव यागे व्रीहियववदित्यर्थः । कथं तर्हि यजति ददातीत्यादौ शुद्धभावनानुवादेन तत्तद्धात्वर्थविधानं निरस्तम् । अत आह—शब्दान्तरेति । 'प्रत्ययः परश्च' इत्यनुशासनेन प्रकृत्युत्तरत्वेनैव प्रयोगात्प्रकृत्यर्थान्वितैव भावना तेनोपस्थाप्यते । न शुद्धेत्यर्थः । प्रकृते तद्वैषम्यमाह—इह

---

१. तदस्यास्तीति सर्वनामार्थे तद्धितविधानादनुवादस्य सतिसम्भवे सन्निहितगामित्वाच्च सन्निहितान्विश्वान्देवानेवानुवदति । न वाजसम्बन्धिमात्रमिति भावः ।

२. वाजिसब्दस्याश्वे रूढत्वाद्विश्वदेवपरत्वे रूढिपूर्वकलक्षणा स्यान्न तु यौगिकत्वमिति इमं लक्षणादोषं वारयितुं 'श्रुत्ये' त्युक्तम् । नात्र रूढिपूर्वकं लक्षणा सम्भवति, अश्वे वाजिशब्दस्य रूढत्वेऽपि विश्वेषां देवानां मुख्यार्थसम्बन्धाभावात् । अतो यौगिक एवेति भावः ।

देवतासम्बन्धस्य श्रौतत्वाद्वाक्यगम्याद्वाजिनसम्बन्धाद्बलीयस्त्वमिति वाच्यम्। उभयोर्वाक्यगम्यत्वात्। न ह्यामिक्षाया देवतासम्बन्धो वैश्वदेवीपदेन केवलेनावगम्यते, किं त्वामिक्षापदैकवाक्यतया। तस्मादुभयोस्तुल्यबलत्वात्पूर्वस्मिन्नेव कर्मणि विकल्पः, समुच्चयो वेति प्राप्तेऽभिधीयते—

**आमिक्षाया बलीयस्त्वमुत्पत्तौ चोदनाच्छ्रुतेः।**
**उत्पन्ने वाजिनं वाक्यात्तेन तद्दुर्बलं मतम्॥**

यत्तु सगुणोत्पन्नमपि कर्म स्वरूपमात्रेण निष्कृष्य शक्यं गुणान्तरं विधातुमित्युक्तं, तदयुक्तम्; यद्यपि ह्यभिधानतस्स्वरूपमात्रं निष्कृष्यते। तथापि तस्योत्पत्तिवाक्यावगतस्यानुवादात्तत्स्वरूपमालोच्यमानमेव गुणयुक्तमवगम्यते, ततश्च नैराकांक्ष्यादयोग्यत्वाच्च गुणान्तरमत्र निवेशमलभमानमात्मनिवेशक्षमकर्मान्तिरोत्पत्तिं सूचयति। श्रौतश्चामिक्षाया विश्वैर्देवैः सम्बन्धः, तद्धितस्य देवताविशिष्टद्रव्यवाचिनः पदान्तरोपस्थापितद्रव्यविशेषवचनत्वाद्वाजिभ्य इति चतुर्थी सम्प्रदानमात्रं वदति। न तु तद्विशिष्टं द्रव्यम्। वाक्यात्तु तत्सम्बन्ध इति दुर्बलत्वम्। प्रपञ्चितञ्चैतद्वार्तिक एव। अन्ये च बहवः सन्निकर्षविप्रकर्षप्रकारास्तत्रैव द्रष्टव्याः। तस्मादामिक्षावरुद्धे पूर्वकर्मण्यसम्भवन्निवेशाद्वाजिनगुणात्कर्मभेदः।

॥ इति गुणाधिकरणम्॥ ९॥

---

त्विति। श्रौतत्वादिति। तद्धितस्य सन्निहितद्रव्यवाचित्वादिति भावः। केवलेनेति। तथा सत्यामिक्षापदवैयर्थ्यापत्तिरिति भावः। समुच्चयो वेति। वाजिभ्य इत्यत्र वाजपदार्थामिक्षाया देवताविशेषणत्वे एकविशिष्टेऽपरवैशिष्टचमिति रीत्या समुच्चय इत्यर्थः। तुल्यबलत्वाभावान्[1] विकल्पसमुच्चयौ युक्ताविरयाह—आमिक्षाया इति। श्रुतेः वैश्वदेवीति पदश्रुतिवशात्। उत्पन्ने कर्मणीति शेषः। वाक्याच्चोद्यत इति शेषः। तत् वाजिनम्। अविरोधाशङ्कां निरस्यति—यत्त्विति। अनुवादस्य पुरोवादसापेक्षत्वात्पूर्ववाक्यालोचने विशिष्टस्यैवोपस्थितेरेकार्थतयाऽस्त्येव विरोधस्फुरणमित्यर्थः। श्रुतेरिति श्लोकगतं पदं व्याचष्टे श्रौतश्चेति। पदान्तरेति। अस्येति सर्वनामार्थे विधानादिति भावः। आमिक्षापदस्य तूपस्थितिमात्रे उपयोग इति नानर्थक्यमिति भावः। अन्य इति। तद्धितस्य द्रव्यसामान्यवाचित्वं निर्विवादम्, चतुर्थ्यास्तु न तदपीति विप्रकर्षः। वाजिभ्य इत्यत्र ददातिपदाध्याहाराद्विप्रकर्षः। अन्यथा कारकविभक्तेरनन्वयात्। एवं तद्धितस्य देवतावाचित्वं, चतुर्थ्यास्तु तल्लक्षकत्वमिति विप्रकर्षः। त्यज्यमानद्रव्योद्देश्यत्वे सति प्रतिगृहीतृत्वरूपसम्प्रदानत्वे हि शक्तिः, सत्यन्तमात्रे तु लक्षणा इत्येवंविधेत्यर्थः। गुणश्च वाजिनादिरपूर्वसंयोगे पूर्वकर्मसम्बन्धासम्भवे भेदक इति शेषः। कुतः? वाक्ययोः कर्मविधायकत्वेन समत्वादिति सूत्रार्थः। प्रयोजनन्तु स्पष्टम्।

॥ इति गुणाधिकरणम्॥ ९॥

---

१. आमिक्षायाः कर्मोत्पत्तिसमय एव चोदितत्वात् श्रुतिचोदितत्वाच्च बलीयस्त्वम्, वाजिनन्तूत्पन्ने कर्मणि चोद्यते वाक्याच्चेति दुर्बलम्। अतो न तुल्यबलत्वमिति भावः।

१०

**सू०अगुणे तु** – अथवाधिकरणान्तरम्। 'अग्निहोत्रं जुहोति' इति निर्गुणं कर्मोत्पन्नम्। तत्सन्निधौ च 'दध्ना जुहोति' 'पयसा जुहोति' इत्यादयो बहवो गुणाः श्रूयमाणाः पूर्वकर्मनिवेशे सति विकल्पप्रसङ्गादन्यतरावरुद्धे चान्यतरस्य निवेशासम्भवात्पूर्ववदेव कर्मान्तरं कल्पयतीति प्राप्ते ब्रूमः—सर्वेषाममीषामन्योन्यानालोचनेनाग्निहोत्रवाक्यमात्रालोचनात्तत्र च निर्गुणस्य कर्मणोऽवगतस्य सर्वगुणयोग्यत्वात्पौर्वापर्याभावाच्चान्यावरुद्धेऽन्यस्य निवेश इत्यभावात्तत्रैव गुणमात्रविधानं, प्रमाणवशाच्च विकल्पः।

॥ इति गुणशेषाधिकरणम्। १०॥

११

**सू० फलश्रुतेस्तु**—'अग्निहोत्रं जुहोति' इति प्रकृत्य 'दध्नेन्द्रियकामस्य जुहुयात्' इति श्रूयते। तत्र संशयः-किमग्निहोत्रात्कर्मान्तरं दधिशिष्टमिन्द्रियकामाय विधीयते? उत तत्रैव गुणमात्रं फलाय विधीयते? इति। तदर्थमिदं विचार्यते-किं कर्मणः फलमिदम्? उत गुणादिति। यदि कर्मणः, ततः प्राप्तस्य कर्मणः फलसम्बन्धं गुणसम्बन्धं चैकं वाक्यं न शक्नोति विधातुमिति कर्मान्तरं स्यात्। गुणफलसम्बन्धे तु तन्मात्रं वाक्येन विधीयते। दधिहोमसम्बन्धस्त्वाश्रयाश्रयिरूपः प्रकरणप्राप्तोऽनूद्यमानो न वाक्यं भिनत्तीति सिध्यत्येकवाक्यत्वमकर्मान्तरत्वेऽपि। तेन भेदाभेदसिध्यर्थं

---

अगुणे तु इति सूत्रं 'दध्ना जुहोति' इत्यादावेतद्वैपम्यप्रदर्शनार्थम्। कर्मविधायके शब्दे 'अग्निहोत्रं जुहोति' इत्यादौ गुणरहिते सति तत्र दध्यादिगुणो वाक्यान्तरादपि प्रतीयेतेत्यर्थः। अपवादसङ्गत्या विचारान्तरपरत्वेन व्याख्यानमाह—अथवेति। समुच्चयमाशङ्क्याह—अन्यतरेति।[1] पूर्ववत्सन्निकर्षविप्रकर्षयोरभावं दर्शयति—पौर्वापर्येति[2]।

॥ इति गुणशेषाधिकरणम्॥ १०॥

फलश्रुतेस्तु—तत्रैवेति। अग्निहोत्र एवेत्यर्थः। आश्रितमिति शेषः। कर्मण इति पञ्चमी। धात्वर्थस्य फलभावनाकरणत्वमुत गुणस्येति संशयार्थः। एतत्संशयस्य पूर्वसंशयार्थतां दर्शयति–यदीति। ननु दध्नो होमरूपक्रियासम्बन्धं विनोदासीनस्य फलसाधनत्वायोगाद्धोमसम्बन्धस्यापि विधिरिति कथं न वाक्यभेदः, अत आह–दधिहोमेति। फलार्थगुणेनापेक्ष्यमाणसम्बन्धी आश्रयस्तत्सम्बद्धो गुण आश्रयी। प्रकरणं-सन्निधिः। तथाच दध्नो होमसम्बन्धस्सन्निहित एव।

---

१. एकैकस्माद्वाक्यादेकैकस्य गुणस्योपस्थित्या सर्वेषां युगपदन्वयासम्भवाद्यस्य प्रथममन्वयस्तदवरुद्धे पूर्वन्यायेनान्यान्वयासम्भवात्कर्मान्तरत्वमिति भावः।

२. एकान्वयानन्तरमपरान्वयनियमोऽप्यसिद्धः, सर्वेषां युगपदुपस्थितौ युगपदन्वयस्यापि सम्भवादित्यर्थः।

कर्मणः फलं, गुणाद्वेति चिन्त्यते। सत्यपि च पक्षद्वये भावनाभेदे धात्वर्थभेदाभेदविचारा-ल्लक्षणसम्बन्धः। तत्र—

**धात्वर्थात्फलमित्युक्तं भावनासन्निकर्षतः।**
**विप्रकृष्टस्तु नामार्थस्तदर्थो न फलान्वयी॥**

भावार्थाधिकरणे ह्येतदुक्तम्—यथा धात्वर्थात्फलं। न तु नामार्थात्, स तु धात्व-र्थस्यैवाङ्गमिति, तदिहापि दधि होमार्थम्. होमः फलार्थः। किञ्च—

**दध्नश्च फलसम्बन्धे जुहोतेः स्यादनन्वयः।**
**यदि सोऽपि विधीयेत वाक्यभेदः प्रसज्यते॥**

न ह्येकं वाक्यं फले होमे च शक्नोति दधि विधातुम्। तत्रासति होमसम्बन्धे जुहोतीति पदमनर्थकं स्यात्, तस्य च दध्ना सह क्रियाकारकभावोऽनवगम्यमानः परि-त्यक्तस्स्यात्। तस्मात् होमस्यैव फले विधानं गुणविशिष्टस्येति प्राप्ते। ब्रूमः—

**धात्वर्थस्यान्यतः प्राप्तेर्गुणमात्रं विधीयते।**
**विधेयं यच्च तेनैव फलं नान्येन युज्यते॥**

तत्रैव हि भावार्थाधिकरणन्यायः, यत्र धात्वर्थो नामार्थश्चोभयमपि विधीयते। अत्र तु प्राप्तत्वेन धात्वर्थस्याविधेयत्वाद्गुणमात्रं विधीयते। विधेयस्यैव च फलसम्बन्धो नाविधेयस्य। तेन गुणस्यैव फलं। न तु कर्मान्तरं विधेयं भविष्यति। नापि प्रकृतहाना-प्रकृतकल्पनाविशिष्टविधिगौरवमत्वर्थलक्षणादोषप्रसङ्गः। अतो गुणमात्रविधानात्तस्यैव फलम्। जुहोतेरिदानीं कथमन्वयः? केचिदाहुः—कर्मापन्नमेव दधि फलकामस्य विधीयते।

---

वाक्येन तु तदनुवादपूर्वकं फलसम्बन्धमात्रं विधीयत इति न वाक्यभेद इत्यर्थः। ननु फलानु-कूलव्यापाररूपभावनायाः पूर्वपक्ष इव सिद्धान्तेऽपि फलभेदेन भेदनिश्चयाद्विचारस्य तदर्थत्वा-भावे कथमध्यायसङ्गतिरत आह—सत्यपीति। धात्वर्थभावनापूर्वाणां त्रयाणां भेदस्याध्यायार्थ-त्वान्न दोष इति भावः। अनन्तरसङ्गतिस्तु-अगुणे त्विति सूत्रस्य प्रत्युदाहरणपक्षे कर्मान्तरत्वा-पवादादधिकरणान्तरपक्षे गुणस्य पूर्वकर्माङ्गत्वापवादादापवादिकीति ज्ञेयम्। तदर्थ इति। धात्वर्थ इत्यर्थः। ननु धात्वर्थस्य विधेयत्वे भावार्थाधिकरणन्यायो न त्वत्र तद्विधिः, प्राप्तत्वात्, किन्तु गुण एव फले विधेय इत्यत आह—किञ्चेति। जुहोतेर्होमस्य दध्नान्वयो न स्यादित्यर्थः। सोऽपि दधिहोमसम्बन्धोऽपि। ननु प्रत्ययोच्चारणार्थमेव जुहोतिप्रयोगोऽस्त्वित्याशङ्क्याह—तस्य चेति। उदासीनस्य दध्नः क्रियासम्बन्धं विना फले विधानायोगादवश्यं क्रियाकारकसम्ब-न्धोऽभ्युपेय इति भावः। प्रथमश्लोकोक्तां पूर्वपक्षोपपत्तिं दूषयति—धात्वर्थस्येति। सिद्धान्ते कल्पनालाघवमाह—न त्वित्यादि। द्वितीयश्लोकोक्तां पूर्वपक्षोपपत्तिं शङ्कते—जुहोतेरिति। इदानीं गुणमात्रविधौ। गुरुग्रन्थोक्तं समाधानं दूषयितुमुपन्यस्यति—केचिदिति। कर्मापन्नं

न दधिमात्रम्, अभावार्थस्य विधिविषयत्वायोगात्। अतो दध्यनुरक्तो होम एवं विधीयते। न चैवं वाक्यभेदः, दध्नो विधानाभावात्। लौकिकं हि क्रियाकारकलक्षणसम्बन्धमाश्रित्य द्रव्याणां क्रियापत्तिः, न पुनस्तादर्थ्यं, कर्मणोऽकारकत्वप्रसङ्गात्। अतः फलार्थतैव होमे कारकीभूतस्य दध्नः प्रतीयते, न होमार्थत्वम्। होमार्थत्वे तत्रापि विधिव्यापाराद्वाक्यभेदस्स्यान्न तु तदस्ति। तेन होमाश्रितस्य दधिव्यापारस्य फले विधानाद्वाक्यभेदं विनैव सिद्धो जुहोत्वन्वय इति। अत्रेदं वक्तव्यम्—यदि न दधि विधीयते, किं तर्ह्यत्र विधीयते? होम एव दध्यनुरक्तः फलाय विधियत इति' चेदेवं तर्हि होम एव फलार्थः स्यात्। दधि तु होमगतदध्यनुरागसम्पत्त्यर्थमुपादीयमानं तदर्थमेव स्यात्। न फलार्थम्। अपि च मा भूद्दध्नो विधानम्, तदनुरागस्तु प्राप्तस्य कर्मणो विधीयते फलसम्बन्धश्चेति वाक्यभेदः। ननु न ब्रूमो दध्नो न विधानमिति, किंतु होमार्थतया न विधीयते, फलार्थतया होमाश्रितं विधीयते। होमे कारकीभूतमित्यर्थः। उच्यते—दध्नेति दधिविशिष्टं कारकमात्रं पदेनोच्यते। होमे तु तत्कारकमिति कुतोऽवगम्यते? वाक्यादिति चेत्, एवं सत्याश्रयसम्बन्धं फलसम्बन्धञ्च बोधयद्वाक्यं भिद्येत। ननु लौकिकमेव क्रियाकारलक्षणमाश्रयाश्रयिसम्बन्धमुपादाय केवलं फलसम्बन्धकरणान्न वाक्यभेदः।

---

होमविशेषणतामापन्नम्। अभावार्थस्येति। अधात्वर्थस्य-अक्रियात्मकस्येति यावत्। विधीयते। कार्यत्वरूपविधौ कृत्यंशविषयत्वायोग्यत्वादित्यर्थः। दध्यनुरक्तो दधिसम्बद्धः वाक्यभेद इति। प्राप्ते होमे दधिसम्बन्धः फलसम्बन्धश्चेत्यनेकविधानादिति भावः। परिहरति—दध्न इति। कथं तर्हि होमे दधिसम्बन्धसिद्धिरत आह—लौकिकमिति। शब्दव्युत्पत्तियोग्यतारूपलोकप्रमाणसिद्धमित्यर्थः। क्रियापत्तिः क्रियाविशेषणता। तादर्थ्यम् अङ्गत्वम्। तद्विधिगम्यमिति भवेद्वाक्यभेदः, न तु तदङ्गीक्रियत इत्यर्थः। कुतस्तत्राह कर्मण इति। वाक्यभेदप्रसङ्गेन कर्मणो होमस्य फलं प्रति करणत्वाभावप्रसङ्गादित्यर्थः। नन्वेवं सति होमे दध्यादिविधानात्पयोहोमादपीन्द्रियफलापत्तिरत आह—अत इति। फलार्थता पयोहोमादिव्यावृत्तस्वजन्यविजातीयहोमस्य फलसाधनस्य सम्पादनद्वारा फलप्रयोजकता। प्रतीयत इति। दध्नेति पदसमभिव्याहारादिति भावः। होमार्थत्वं होमाङ्गत्वम्। फलितमाह—तेनेति। होमाश्रितस्य होमसम्बन्धिनो दधिव्यापारस्य दध्ना होमानुष्ठानस्येत्यर्थः। तथानुष्ठानञ्च विजातीयहोमरूपसाधनस्य दध्नो नियमेनोपादानं विना न सिध्यतीति दधिनियमलाभ इति भावः। तदिदं दूषयति—एवं तर्हीति। तथाच कर्मफलसम्बन्ध एव स्यान्न गुणफलसम्बन्ध इत्यर्थः। वाक्यभेदोऽपि तदवस्थ इत्याह—अपि चेति। तदनुरागः तत्करणकत्वम्। गुणफलसम्बन्धसिध्यर्थं प्रकारान्तरं शङ्कते—नन्विति। दध्नो विधानाभावादित्यस्य होमार्थतयेति शेषपूरणेनार्थ इति भावः। होमे कारकीभूतमिति। होमनिरूपितकरणत्वविशिष्टमित्यर्थः। अत्रापि दध्नि होमकरणतासम्बन्धो दध्नश्च फलसम्बन्ध इति वाक्यभेद इत्याह—उच्यत इति। ननु योग्यतया क्रियाकारकसम्बन्धस्य ज्ञातत्वान्न तदंशे विधिः, किन्त्वज्ञातफलसम्बन्धांश एवेति शङ्कते—नन्विति। अज्ञातज्ञापनं कर्तव्यताबोधनञ्च द्वयं विधिकार्यम्। प्रकृते प्रथमस्याभावेऽपि द्वितीयं विध्यधीनमेवेति तत्रापि विधिव्यापारावश्यकत्वाद्दुरुद्धर एवं वाक्यभेद-

नैतदेवम्; लोकतो हि क्रियाकारकयोस्सम्बन्धः सम्भवमात्रेण सिद्धः, न कर्त्तव्यतया। कर्त्तव्यतया चात्र दधिहोमसम्बन्धः श्रूयते—दध्ना जुहुयादिति। तेन तस्य कर्त्तव्यता फलसम्बन्धश्चेति वाक्यभेदः। तथाहि दध्नेन्द्रियकामस्य जुहुयादित्यत्र न तावद्य इन्द्रियकामः, स दध्ना जहुयादिति वचनव्यक्तिस्सम्भवति, होमस्याविधेयत्वात्। विधाने च कर्मान्तरत्वापत्तेः। अतो जुहुयादिति तावदनुवादः। तत्र यज्जुहुयात्तद्दध्नेति इन्द्रियकामस्येति च वाक्यभेदः। अथ यद्दध्ना जुहुयात्तदिन्द्रियकामस्येति, तदयुक्तम्; न हि सत्यपि सम्भवे दध्ना होतव्यं प्राप्तं यदनूद्येत। अथ यदिन्द्रियकामस्य जुहुयात्तद्दध्नेति तदप्ययुक्तम्; इन्द्रियकामार्थेन होमस्याप्राप्तत्वात्। अथ मन्येत यद्यपीन्द्रियकामस्येन्द्रियकामत्वेन रूपेण होमो न प्राप्तः, इन्द्रियार्थत्वेनेति यावत्, तथापि पुरुषाणां बहुकामत्वात्कदाचिदग्निहोत्रावस्थायामपि सम्भवतीन्द्रिये पुरुषस्य कामना, तेनेन्द्रियकामेनोपलक्षितस्य पुरुषस्य कदाचित्प्राप्त एव होम इति तदनुवादेन दधि विधीयत इति, तदयुक्तम्; कामशब्दस्य[1] काम्यफलस्वरूपाभिधायिनः पुरुषस्वरूपपरत्वे लक्षणाप्रसङ्गात्। अपि चैवं न फ॰ार्थं दधि स्यात्, किन्तु इन्द्रियकामनायां निमित्ते नैमित्तिकं क्रत्वङ्गं स्यात्। विवरणकारस्य तु अपूर्वान्तरानभ्युपगमात् क्रतुप्रपूर्वान्वितस्यैव गुणस्य फलार्थत्वादपूर्वसम्बन्धस्य च लोकतः सिद्ध्यभावात्सुतरां वाक्यभेदस्स्यात्। तस्मान्न होमसम्बद्धं दधि वाक्येन विधियते, अपितु दध्नेत्येतावन्मात्रं य इन्द्रियकामः स दध्नेति। कथं तर्हि जुहोतेरन्वयः? उच्यते—दध्नेति करणभूतं दधि फलाय विधी-

---

दोष इत्याह—नैतदिति। वाक्यभेदमेव वचनव्यक्तिप्रदर्शनेन विवृणोति—तथाहीति। लौकिकक्रियाकारकसम्बन्धाश्रयणेन वचनव्यक्तिं प्रदर्श्य दोषमाह—अथेति। सम्भवे योग्यतायाम्। प्राप्तमिति। रागतस्तावन्न प्राप्तिः, दृष्टफलकत्वाभावात्। दध्ना जुहोतीति विधितस्तु प्राप्तत्वेऽपि विशिष्टानुवादाद्वाक्यभेदः स्यात्। होमेनेन्द्रियं भावयेद्धोमञ्च दध्नेति। न हि नियमेन दधि होमे प्राप्तं यस्यानुवादस्सम्भवेदिति भावः। वचनव्यक्त्यन्तरमाशङ्कते—अथेति। अर्थेनेति भावप्रधानम्। कामपदं न काम्यमानफलपरम्, किन्तु तत्कामनोपलक्षितपुरुषपरमिति शङ्कते—अथेति। फलस्वरूपाभिधायिनः फलेच्छाभिधायिनः, इच्छाविषयत्वस्य फलत्वात्। लक्षणेति। स्वार्थस्यान्वयानुप्रवेशाभावादिति भावः। सिद्धान्तहानिश्चेत्यत आह अपिचेति। अत्र निबन्धनकारमते दधिरूपगुणनुरक्ततया होमस्याग्निहोत्रहोमाद्वैलक्षण्यात्तद्विषयमपूर्वं भिन्नमेवेति शब्दबलवादानुसारेण सिद्धान्तः। विवरणकारमते तु वस्तुबलानुसाराद्वस्तुतः स एव होमोऽत्रापीति विषयैक्यादपूर्वमप्येकमेव। ततश्च। दध्नोऽग्निहोत्रापूर्वानुरागो लोकसिद्धोऽपि न लभ्यत इति सुतरां वाक्यभेद इत्याह—विवरणेति। गुरुमतदूषणमुपसंहरति—तस्मादिति। उक्तरीत्या वाक्यभेदादित्यर्थः। स्वमते जुहोत्यन्वयमुपपादयितुं पृच्छति—कथमिति। शक्ति-

---

१. कामस्य फलरूपाभिधायिनः कामपदस्येति ग.

यते, तृतीयानिर्देशात्। क्रियापेक्षञ्च कारकमिति क्रियाविशेषापेक्षायां सन्निधिलक्षण-प्रकरणप्राप्तो होमसम्बन्धो जुहोतिनानूद्यते। ननु उद्भिदादिवत्फलभावनापेक्षमेव करणत्वं भविष्यति, न क्रियान्तरमपेक्षते। उच्यते-न धात्वर्थवद्दध्यादेः सिद्धस्वभावस्य स्वरूपेण फलभावनाकरणत्वमुपपद्यते, कर्त्तृव्यापारविषयस्य हि करणत्वं, दध्यादेश्च कञ्चिद्धात्वर्थं प्रति करणीभवतः कर्त्तृव्यापारविषयता न स्वरूपमात्रेण यागादिव-दित्यस्ति धात्वर्थविशेषापेक्षा। यद्यपि चादृष्टोपकारकप्रयाजादिव्यापारविषयता यागादिवद्दध्यादेस्सिद्धस्वभावस्यापि स्वरूपेण सम्भवेत्। तथापि दृष्टार्थव्यापारविषय-तासिध्यर्थं कारकभावमपेक्षते[२]। अवश्यञ्च दृष्टद्वारेणापि कर्त्तृव्यापारविषयता करणस्याङ्गीकर्त्तव्या, अन्यथा दृष्टार्थाङ्गमात्रानुष्ठानात्करणं प्रति पुरुषव्यापाराभावात् करणोपदेशवैयर्थ्यं स्यात्। तस्माद्विभक्त्याभिहितकारकविशिष्टं दधि, दधिविशिष्टं वा कारकं प्रत्ययार्थप्राधान्यात् फलाय विधीयते। फलभावनाकरणत्वञ्च यागादिवदेव समभिव्याहारात् सिद्धं न विभक्त्यभिधानमपेक्षते। कारकभावश्च क्रियाविशेषापेक्ष इति सन्निधिवशप्राप्तो होमोऽत्र धातुनानूद्यत इति सिद्ध्यति जुहोतेरन्वयः, कारक-भावश्चैकपदोपात्तः, क्रियाविशेषसम्बन्धश्च सन्निधिप्राप्तः, फलान्वय एव वाक्येन विधीयत इति न वाक्यभेदः॥ इति इन्द्रियकामाधिकरणम्॥ ११॥

---

मत्कारकमिति मतेन करणीभूतं दधि। प्राधान्येनोक्तं। दध्येव कुतो न विधीयते। तत्राह-तृतीयेति। दध्नेतीत्यस्यात्रान्वयः। सन्निधीति। उभयाकाङ्क्षालक्षणस्य दध्नः फलार्थतया होमस्य च द्रव्यान्तरसाधनत्वावगमेनाभावादिति भावः। फलसाधनस्य करणत्वं फलभावनानिरूपितमेव होमयागादिवद्युक्तमिति शङ्कते—नन्विति। आपाततः तृतीयोपात्तकरणत्वस्य फलभावनान्वया-ङ्गीकारेऽपि तत्पर्यवसानायोगात्प्रकृतक्रियाकरणत्वमवश्यं कल्प्यम्। तत्र तृतीयोक्तकरणतया निरूपकमात्रकल्पनमेव लाघवाद्युक्तम्। फलभावनाकरणत्वन्तु विधिबलादेव संसर्गतया यागा-दिवत्प्रतीयत इति न तदभिधानमावश्यकमिति समाधत्ते—उच्यत इति। स्वरूपेण—स्वरूमा-त्रेण। विषयस्य—आश्रयस्य। न स्वरूपमात्रेणेति। पुरुषव्यापाररूपा हि कृतिर्न दधिमात्र-विषया, किन्तु दधिव्यापारविषयेत्यर्थः। किमर्थं दृष्टार्थव्यापारविषयतापेक्षितेत्याशङ्क्याह—अव-श्यञ्चेति। वैयर्थ्यमिति। पुरुषं प्रति दधिविषयव्यापारानुष्ठानोपदेशाभावे ह्यदृष्टार्थाङ्गानुष्ठा-नाद्यत्रक्वचिदवस्थिताद्दध्नः फलसिद्धेर्दध्युपदेशवैयर्थ्यमित्यर्थः। उपसंहरति—तस्मादिति। प्रयो-जनं पूर्वपक्षे-कर्मान्तरस्याप्यस्याग्निहोत्रतुल्यकालतया कर्मद्वयं तन्त्रेण करिष्य इत्युल्लेखः। सिद्धान्ते तु गुणफलार्थं गुणेनाश्रयं करिष्य इति। फलश्रवणात्कर्मैव विधेयं स्यात्, कुतः? फलस्य कर्मरूपकरणयोगित्वादिति सूत्रार्थः॥ इति इन्द्रियकामाधिकरणम्॥ ११॥

---

१. आकाङ्क्षेति क, ख. २. कारकीभावमिति क, ख.

## १२

सू० समेषु—'त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यास्वेकविंशमग्निष्टोमसाम- कृत्वा ब्रह्मवर्चसकामो यजेत' इत्यग्निष्टुत्संज्ञकं यागं विधाय, तस्य प्राकरणिकेन 'वारवन्तीयमग्निष्टोमसाम कार्यम्' इति वाक्येन गुणं विधाय पुनराम्नातम्—'एत- स्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत' इति। तत्र पूर्ववदेव संशयः—किं पूर्वस्मिन्नेवग्निष्टुत्संज्ञके यागे पशुफलार्थत्वेन रेवत्याधारं वारवन्तीयं गुणो विधीयते? उत कर्मान्तरम् इति। तदर्थमेतद्विचार्यते—किं फला- र्थस्य वारवन्तीयस्य प्रकृतो याग आश्रयीभवितुं शक्नोति? न वा? इति।

तत्र पूर्ववदत्रापि गुणमात्रं विधीयते।
फलाय, न तु यागस्य विधानं, विधिगौरवात्॥
सामाश्रयत्वं यागस्य साक्षाद्यद्यप्यसम्भवि।
तथापि स्तोत्रनिर्वृत्तिद्वारा तदुपपद्यते॥

विशिष्टयागान्तरविधौ विधिगौरवात्प्रकृतहानाप्रकृतकल्पनादोषाच्च तत्रैव रेवत्याधारं वारवन्तीयं फलाय विधीयते। यद्यपि द्रव्यदेवतासाधनो यागः साम्ना साक्षात्साधयितुं न शक्यत इति, न साक्षात्साम्नः प्रकृताश्रयत्वं सम्भवति। तथापि 'आनर्थक्यात्तदङ्गेषु' इत्यङ्गभूतस्तोत्रनिर्वृत्तिद्वारेण यागसाधनत्वं साम्नस्सम्भवतीति युक्तं प्रकृताश्रयत्वम्। नन्वेवं रेवतीवारवन्तीयसम्बन्धः फलसम्बन्धश्चेत्यनेकार्थत्वा- द्वाक्यभेदः स्यात्, नैष दोषः; यदि सम्बन्धद्वयमपि विधिशब्देनैव बोधयितव्यं स्यात्स्याद्वाक्यभेदः। कृत्वाशब्देनैव तु रेवतीवारवन्तीयसम्बन्धे प्रतीते केवलसम्बन्ध एव यजेः परेण लिङ्प्रत्ययेन प्रतिपादयितव्य इति न वाक्यभेदः। यथा विशिष्टा-

---

समेषु—त्रिवृदिति। स्तोत्रसाधनर्चां नवसंख्यारूपस्तोमवानित्यर्थः। अग्निः स्तूयते अत्रेति। अग्निष्टुन्नामकः अग्निष्टोमसंस्थः अग्निष्टोमस्तोत्रेण समाप्य इत्यर्थः। एतत्प्रकृतिभूत- पूर्वपठितयागे उक्थ्यसंस्थाङ्गम्, तद्बाधेनाग्निष्टोमसंस्थाविधिः। अत्र कर्तव्य इति शेषो बोध्यः। तस्येति। तस्याग्निष्टुद्यागस्याङ्गभूतमग्निष्टोमसाम अग्निष्टोमस्तोत्रं, विशेषेण प्राधान्यात् वायव्यास्वृक्षु एकविंशस्तोमकं कृत्वा एतेन यागेन ब्रह्मवर्चसं भावयेदित्यर्थः। वारवन्तीयमिति। अग्निष्टोमाख्यस्तोत्रे यत्साम कार्यं तद्वारवन्तीयाख्यमित्यर्थः। तत्र हि यज्ञायज्ञीयाख्यं साम प्रकृतितः प्राप्तं बाधित्वेदं विधीयते। तस्येति। परम्परासम्बन्धे षष्ठी, तत्सम्बन्धिस्तोत्रसम्बन्धिन इत्यर्थः। एतस्यैवेति। एतस्यैव यागस्य सम्बन्धि अग्निष्टोमसाम एतन्नामकं स्तोत्रं रेवतीषु वारवन्तीयकरणेनेत्यर्थः। यजेतेति तु प्रत्ययोच्चारणाय यजतिप्रयोगो निर्वपतिवत्प्राप्तानुवाद इत्यर्थः। आनर्थक्यादिति। इति करणोत्तरं न्यायेनेति शेषः तृतीये हि 'सप्तदशारत्नि- र्वाजपेयस्य यूपः' इति वाक्ये विधीयमानं सप्तदशारत्निपरिमाणं प्रकृतवाजपेये साक्षादसम्भ- वात्तदङ्गपश्वङ्गे यूपेऽवतरतीति यथोक्तं। तथेहापि प्रकृते यागेऽसम्भवादाश्रयत्वं तदङ्गे स्तोत्रेऽव-

पूर्वकर्मविधौ तस्य विशेषणसम्बन्धे विभक्त्यादिभिरेव सिद्धे तादृशस्य फले विधानाद्वाक्यभेदः, यः फलं कुर्यात्स ईदृशेन यागेनेति, तद्वदिहापि यः फलं कुर्यात्स रेवतीषु वारवन्तीयकरणेनेति न वाक्यभेदः। तस्मात्फलाय गुणमात्रविधिः, यजिस्तु विपरिवृत्तिप्राप्तयागानुवादः,[1] एतच्छब्दोऽपि षष्ठयन्तः पूर्वस्य यागस्य फलवता गुणेन सहाश्रयाश्रयिसम्बन्धं सन्निधिलब्धमनुवदति। अग्निष्टोमसामशब्दोऽप्यानर्थक्यतदङ्गन्यायप्राप्तस्तोत्रसन्बन्धानुवादः। यद्यपि तत्रान्यानि बहूनि स्त्रोत्राण्याज्यपृष्ठादीनि सन्ति, तथापि वारवन्तीयस्य क्रत्वर्थस्याग्निष्टोमस्तोत्रमेव स्थानं दृष्टमिति फलार्थस्यापि तदेव स्थानं भविष्यति। तस्मादेषां प्राप्तत्वेनाविधेयत्वान्न वाक्यभेद इति प्राप्ते ब्रूमः[2]—

**प्रकृतं कर्म गृह्णाति फलाय विहितो गुणः।**
**यत्र तत्र गुणात्कामो यागस्साम्ना न साध्यते॥**

कारकभावापत्तिर्हि तदाश्रयत्वं, तदपि प्रकरणप्राप्तमनुवदितव्यम्, वाक्येनाश्रयसम्बन्धकरणे वाक्यभेदात्[3]। तेन यत्र प्रकृते कर्मणि फलार्थस्य गुणस्य कारकत्वं सम्भवति, तत्रैव गुणात्कामः। यथा-दध्नेन्द्रियकामस्येति। न त्विह प्रकृतयागे कारकत्वं साम्नस्सम्भवति, सम्भवति तु तदङ्गभूते स्तोत्रे कारकत्वम्। तत्तु न प्रकृतम्, आतिदेशिकत्वादिह स्तोत्राणाम्। न चायमानर्थक्यतदङ्गन्यायस्य विषयः, यो हि कर्माङ्गत्वेन गुणश्चोद्यते, स तत्र साक्षादसम्भवन्नङ्गे निविशते। सम्भवति ह्यङ्गद्वारेणाप्युपकारकत्वम्। न चाश्रयत्वमङ्गद्वारेण सम्भवति। न ह्यङ्गे कारकं भवत्प्रधाने कारकं सम्भवति। साम्नश्च गीतिरूपक्रियात्वाद्यागादिवन्नाश्रयापेक्षा, यतः प्रकृतक्रियासम्बन्धः स्यात्। ननु नावश्यं कारकतयैव तदाश्रयत्वं, सम्बन्धान्तरेणाप्युपपत्तेः। तेन कृत्वाशब्देन क्रियान्तरसमानकर्तृकतया गम्यमानं रेवतीवारवन्तीयसम्बन्धकरणं फलाय विधीयते। किं तत्क्रियान्तरमित्यपेक्षायां सन्निदधानो[4] याग उपलभ्यते। एवमप्यग्निष्टो-

---

तरतीत्यर्थः। विपरिवृत्तिः। सन्निधिः। चोद्यत इति। श्रुतशब्देन विधीयत इत्यर्थः। तथाच शब्दप्रतीताङ्गत्वान्यथानुपपत्त्याङ्गद्वारोपकारकत्वकल्पनमानर्थक्यतदङ्गन्यायस्य विषयः। आश्रयत्वन्तु यागस्य न श्रुतशब्देनावगतं। यदङ्गद्वारावकल्पेत, किन्तु कल्प्यम्। तत्तु योग्य एव कल्पयितुमुचितमिति भावः। प्रधाने कारकत्वमित्यनन्तरं कल्प्यमित्यध्याहार्यम्। एवमिहाश्रयापेक्षामङ्गीकृत्योक्तम्। वस्तुतः सैवात्र नास्तीत्याह—साम्नश्चेति। सम्बन्धान्तरेणेति। काम्योक्थ्यादिसंस्थाया आधारत्वेन ज्योतिष्टोमस्याश्रयत्वाङ्गीकारवदिति भावः। प्रकृते आश्रयाकाङ्क्षामुपपादयति—तेनेति। दूषयति—एवमिति। ननु वारवन्तीयसाम्नो ऋगाधारत्वादग्निष्टोमस्तोत्रसाधनऋगाधारतया च क्रत्वर्थतायाः क्लृप्तत्वादग्निष्टोमस्तोत्रसाधनऋक्सम्बन्धेनैव फलार्थतापि

---

१. पूर्वेति ख. २. अभिधीयत इति ख. ३. भेदापत्तेरिति ख. ४. सन्निधानाद्यागो लभ्यत इति ख.

मसामेति नावकल्पते, अनुवादासम्भवाद्विधाने च वाक्यभेदात् । न च क्रत्वर्थस्य वारवन्तीयस्य यत्स्थानं तदेव पुरुषार्थस्यापि भवतीति प्रमाणमस्ति, यतोऽग्निष्टोमसामेत्यनूद्येत[1] । किञ्च रेवतीषु वारवन्तीयं कृत्वा पशून् भावयेदित्युक्ते पशुभावनापेक्षयैव समानकर्तृत्वसम्भवान्न क्रियान्तरापेक्षा, यतः सन्निहितो यागः सम्बध्येत । तस्मात् गुणफलसम्बन्धविधौ यजेतेति चाग्निष्टोमसामेति च द्वावपि शब्दौ प्रकरणप्राप्तानुवादत्वासम्भवाद्विधाने च वाक्यभेदादनर्थकौ स्याताम् । तस्मात् कृत्वाशब्दकल्पितरेवतीवारवन्तीयसम्बन्धविशेषितोऽपूर्वो यागः फलाय विधीयते । तत्र साम्नः प्रकृतितोऽग्निष्टोमस्तोत्रस्थानप्राप्तेस्तदनुबद्धा रेवत्योऽपि तत्स्थाना भवन्ति । तेनाग्निष्टोमसामेत्यनुवादः । एतच्छब्दोऽपि प्रस्तूयमानापूर्वयागवचनः । रेवतीषु वारवन्तीयं कृत्वा पशुकामो यजेतेत्येतावन्मात्रं विधीयत इति लाघवमेकवाक्यत्वञ्च लभ्यतेऽपूर्वकर्मविधौ । गुणफलसम्बन्धविधौ तु यज्यादेरानर्थक्यं वाक्यभेदो वा स्यादित्युक्तम् । ये तु गुणफलाधिकारेष्वपि वाक्येनैव गुणस्याश्रयसम्बन्धमुपगच्छन्तः कर्मैव गुणानुरक्तं फलाय[2] विधीयते वाक्येनेत्याहुः, तेषामत्रापि रेवतीवारवन्तीयसाधनकाग्निष्टोमस्तोत्रविशिष्टस्य प्रकृतस्यैव यागस्य दध्यनुरक्तस्यैव होमस्य फले विधिसम्भवात्सिद्धान्तहानिः । ननु तत्र दध्यनुरागो होमस्य लोकसिद्धो लभ्यते, केवलस्तु फलसम्बन्धो वाक्येन विधीयते । इह तु यद्यपि ऋक्सामयोः स्तोत्रसाधनत्वं लौकिकं, स्तोत्रस्य तु यागविशेषणत्वं न लोकतस्सिध्यतीति विधिवशादेव[3] लब्धव्यं, ततश्च तस्य फलसम्बन्धस्य च विधानाद्वाक्यभेदस्यात् । सत्यं । न लोकतः सिद्धम्, अतिदेशतस्तु सिद्धं, स्तोत्रस्य पूर्वयागाङ्गत्वात् । स्तोत्रविशेषणत्वञ्च ऋक्सामयोर्लोकतः सिद्धम् । तदेवं ऋक्सामविशेषितस्तोत्रानुरागं यागस्यान्यतरसिद्धमुपादाय केवलफलसम्बन्धमात्रं विधिनानेन बोध्यत इति कुतो वाक्यभेदः ? किञ्च कृत्वाशब्देन स्तोत्रसमानकर्तृकत्वमेव यागस्योच्यते, न तत्कारकत्वं तादर्थ्यं वा । समानकर्तृकत्वञ्च लोकसिद्धमेव लभ्यत इति दध्यादिभिरविशेषः अतो रेवतीवारवन्तीयसाधनकाग्निष्टोमस्तोत्रसमा-

---

युक्तेति युक्तोऽनुवाद इति शङ्कामपाकरोति—न चेति । ननु क्लृप्तत्वमेवाग्निष्टोमस्तोत्रसम्बन्धे मानमत आह—किञ्चेति । स्ववाक्यगतक्रियामपेक्ष्य समानकर्तृकत्वसम्भवे वाक्यान्तरीयामपेक्ष्य तद्बोधो न सम्भवतीति भावः । कृत्वाशब्दकल्पितेति । तद्बोधितेत्यर्थः । अग्निष्टोमस्तोत्रन्तु नात्र विधीयत इत्याह—तत्रेति । साम्नः वारवन्तीयस्य । प्रकृतितः अग्निष्टोमात् । ननु वारवन्तीयस्याग्निष्टोमस्तोत्रसम्बन्धेऽपि रेवतीनां कथं तत्सम्बन्धः ? तत्राह—तदनुबद्धा इति । तदाधारभूता इत्यर्थः । एतच्छब्दो न प्रकृतपरामर्शकः, किन्तु प्रस्तूयमानपर इत्याह—एतदिति । पूर्वोक्तगुरुमते त्वेतत्सिद्धान्तहानिरपि दूषणमिति प्रसङ्गादाह—ये त्विति । लौकिकम् । साम्नो ऋगक्षराभिव्यक्तिद्वारा ऋचा च गुणगुणिसन्बन्धाभिधाने सामर्थ्यमन्वयव्यतिरेकसिद्धमित्यर्थः ।

---

१ सामत्वमिति ग. २ फले इति ख. ३ देव तु लब्धुं शक्यमिति ख.

नकर्तृकत्वविशिष्टः प्रकृत एव यागः फलाय विधातुं शक्यते। यद्वा अग्निष्टोमस्तोत्रमेवातिदेशप्राप्तं रेवतीवारवन्तीयानुरक्तं पशुकामस्य विधीयते। यजिपरस्यापि विधेः स्तोत्रविषयत्वं न दुष्यति निर्वापपरस्येव द्रव्यदेवतासम्बन्धविषयत्वं, यजेरपि निर्वपतिवदनुवादत्वात्। तस्माद्वाक्येनाश्रयसम्बन्धे सिद्धान्तहानिरित्यास्तां तावत्॥ १२॥

॥ इति रेवत्यधिकरणम् ॥ १२॥

१३

सू० सौभरे--'यो वृष्टिकामो योऽन्नाद्यकामो यस्स्वर्गकामः, स सोभरेण स्तुवीते' ति ब्रह्मसामाख्यं स्तोत्रं प्रकृत्य तदाश्रयं सौभरं फलत्रयसाधनत्वेनाम्नातम्। यद्यपि सौभरस्य साम्नो गीत्यात्मकक्रियात्वाद्वारवन्तीयवन्नाश्रयापेक्षा, तथापि स्तुवीतेत्यनेनैकवाक्यत्वात्तत्साधनभूतस्यैव फले विधानं विज्ञायते। तथा हि-यावन्ति पदानि प्रयुज्यन्ते, तावतां यथान्वयो भवति, तथा वाक्यार्थो वर्णनीयः। तद्यदि सौभरमात्रं विधीयेत ततः स्तुवीतेत्यनर्थकं स्यात्, स्तुत्यन्तरविधाने गौरवं, मत्वर्थलक्षणा च स्यात्। अतः सौभरेणेत्येकपदोपात्तं सौभरविशिष्टं करणकारकं फले विधीयते, करणं च क्रियापेक्षमिति युक्तं प्रकृतस्तोत्राश्रयत्वम्। वारवन्तीयन्तु द्वितीयान्तत्वान्न करणीभूतमवगम्यते, किं तर्हि कर्मीभूतम्। न च स्तोत्रे यागे वा साम्नः कर्मत्वं सम्भवति। तेन कृत्वाशब्दार्थमात्रं प्रति कर्मत्वान्न क्रियान्तरापेक्षेति वैषम्यम्। तदेवं फलत्रयसाधनं सौभरं प्रकृत्याऽऽम्नातं 'हीषिति वृष्टिकामाय निधनं कुर्यात्—ऊर्गित्यन्नाद्यकामाय ऊ, इति स्वर्गकामाये' ति। तत्र संशयः-किं हीषादयो निधनविशेषाः सौभरफलात्फलान्तरार्थेन विधीयन्ते? उत सोभरस्यैव तत्तत्फलं साधयतस्तत्तन्निधनमनियमेन पाठतः प्राप्तं नियम्यते? इति। तदर्थं किं वृष्टिकामादिशब्दोक्तपुरुषशेषत्वेनैते साक्षाद्विधी-

---

विशेषणत्वम् अङ्गतायाः। तस्य स्तोत्रयागसम्बन्धस्य। लाघवादाह—यद्वेति। निर्वापपरस्येति। निर्वपतिधातूत्तरस्येव विधेर्निर्वपेदित्यादावित्यर्थः। प्रयोजनं स्पष्टम्। आश्रयाश्रयिभावेनानन्वयात्समेषु कर्मयुक्तमेव फलं स्यान्न गुणयुक्तमिति सूत्रार्थः। इति रेवत्यधिकरणम्॥ १२॥

सौभरेय इति। अत्र 'स सौभरेण स्तुवीत' इत्यस्य वाक्यत्रयेऽप्यन्वयः। उद्देश्यानेकत्वेनैकवाक्यत्वाभावात्। ब्रह्मेति। ज्योतिष्टोमस्य षोडशिसंस्थावान्तरप्रकरणे विहितं ब्रह्मसामाख्यं स्तोत्रं प्रकृत्येर्थः। वारवन्तीयवत् सौभरस्यापि गीतिक्रियात्मकत्वात्कथमाश्रयाकाङ्क्षेत्याशङ्क्य तामुपपादयति—यद्यपीत्यादिना। तत्साधनभूतस्येव—स्तोत्रसाधनभूतस्यैव। प्रत्ययार्थप्राधान्यमवलम्ब्याह—करणकारकमिति। करणेति भावप्रधानम्। वारवन्तीये तु नायं प्रकार इति वैषम्यमाह—द्वितीयान्तेति। निधनमिति। प्रस्तावप्रतिहारोग्दीथोपद्रवनिधनाख्याः पञ्च सामभागाः, तत्रान्त्यभागाधारतया हीषादयस्त्रयः शाखाभेदेनाम्नाता अनियमेन प्राप्ता

---

१ विधीयतामिति ख.

यन्ते ? अथ तत्साधनशेषत्वेन ? इति। तत्र पुरुषस्य श्रौतत्वात्तादर्थ्यमेव हीषादीनां चतुर्थ्या विज्ञायते। तच्छेषता च तदभिलषितफलसाधनतयेति फलार्थत्वमेवैषां, साधन-सम्बन्धे तु वृष्टिकामादिशब्दैः सौभरं लक्ष्येत। न च श्रुतिसम्भवे लक्षणा न्याय्या। तस्माद्धीषादयो गुणाः फलान्तरार्था इति प्राप्ते। ब्रूमः—

वृष्ट्यादीनि पूर्वोक्तान्येव विपरिवर्त्तमानानि प्रत्यभिज्ञायन्त इति। न फला-न्तरावगमः। किञ्च हीषिति शब्दमात्रे फलाय विहिते सत्याश्रयापेक्षायां यत्तावत्सौभरं प्रकृतं, न तच्छक्नोत्याश्रयत्वं प्रतिपत्तुम्। यत्तु तदवयवभूतं निधनं, न तत्प्रकृतं, न चानर्थक्यतदङ्गन्यायस्यायं विषय इत्युक्तम्। सत्यपि च तदङ्गावतरणेऽनेकावयवत्वान्न नियमेन निधनसम्बन्धः। तत्र निधनमित्यनर्थकं स्यात्, विधाने च वाक्यभेदः। तस्माद्वृष्टिकामादिशब्दलक्षिते सौभरं निधनत्वेनैवानियतप्राप्ता हीषादयो नियम्यन्ते। अथवा लक्षणापि नातीवात्र विद्यते। न हि यदेव फलस्य करणं तस्यैव पुरुषशेषत्वं। तदङ्गस्यापि तद्द्वारेणास्त्येव पुरुषशेषता। तथा चान्यत्राऽपि प्रयोगो दृश्यते। 'वासिष्ठा-दीनां नाराशंसो द्वितीयः प्रयाजः' इत्यादि। तेन हीषादयः सौभराङ्गभूतास्तद्द्वारेण वृष्टिकामादीनां पुरुषाणामनियमेन यथा शेषभूताः प्राप्तास्तानेव प्रति यथारूपा नियम्यन्त इति न लक्षणा। साधनद्वारेण तु तादर्थ्यं, न साक्षादिति लक्षणावाचोयुक्ति-भाष्यवार्त्तिकयो। यथाप्राप्तानां च नियम इति न शाखान्तरगते सौभरे शाखान्त-

---

वृष्टिफलार्थे सौभरे हीषित्येव नियम्यत इत्यर्थः। एतेनेन्द्रियकामाधिकरणेवत्यधिकरणयोरपवा-दादनन्तरसङ्गतिस्सूचिता। भावनाभेदाभेदफलकत्वात्त्वध्यायसङ्गसिर्ज्ञेया। ननु वृष्टिसाधनसौभरे हीषादिविधौ लक्षणादोषात्फलान्तरार्थतैव युक्तेत्यत आह—किञ्चेति। न तदिति। हीषित्येता-वता शब्देन सौभरनिष्पत्तेरिति भावः। ननु यागस्तोत्रयोरिव सौभरतदेकदेशयोर्नात्यन्तभेद इति कुतो नाङ्गावतार इत्यत आह—सत्यपीति। अनेकावयवत्वात्—प्रस्तावाद्यनेकभागत्वात्। साम्न इति शेषः। अनर्थकमिति। पाक्षिकानुवादत्वे नित्यवच्छ्रवणानुपपत्तेरित्यर्थः। विधाने निधनाख्यान्तिमभागस्याश्रयत्वविधाने। वाक्यभेदः। फलसम्बन्धाश्रयसम्बन्धयोरेकेन विधाना-योगादिति भावः। एवञ्च नियमविधिलाघवाय लक्षणैव युक्तेत्याशयेनाह-तस्मादिति। वस्तुतो न लक्षणापीत्याह—अथवेति। नाराशंसः नराशंसदेवत्यः। कथं तर्हि भाष्ये लक्षणेत्युक्तमत आह-साधनेति। परम्परया शब्दार्थस्वीकारसादृश्याद्गौण्या लक्षणशब्द इत्यर्थः। ननु कासुचिच्छा-खासु हीषित्येतन्निधनकसौभरसमानजातीयं सौभरमेवोर्गिति निधनयुक्तमाम्नातम्। तत्र शाखा-भेदेऽपि स्वरूपैक्याद्दृष्टचप्रयोगेऽन्येषामपि विकल्पेन प्राप्तेर्नियमो युक्तः। यत्तु हीष्निधनक-सौभराद्विजातीयमेव कासुचिच्छाखासु पठितं सौभरम्, तस्य स्वरूपभेदाद्धीषादिनिधनमत्यन्ता-प्राप्तमेवेति कथं नियमविधिरित्याशङ्क्यां परिहरति—यथेति। शाखान्तर इति। विजातीय-सौभर इत्यर्थः। एवञ्च निधननियमविधिवशादेव तत्तन्निधनकसौभरविशेष एव फलार्थे

रीयं निधनं प्रयोक्तव्यं, किन्तु तत्तन्निधनसहित एव च सौभरविशेषस्तत्तात्फलार्थेन प्रयोक्तव्यः। तस्मात्फलान्तरार्थेन नैव हीषादयो गुणाः विधीयन्ते, नियम्यन्ते तद्यथाप्राप्ति सौभरे ॥ इति सौभराधिकरणम् ॥ १३ ॥

इति शास्त्रदीपिकायां द्वितीयस्याध्यायस्य द्वितीयः पादः ॥

## अथ द्वितीयाध्यायस्य तृतीयः पादः

१

सू० गुणस्तु—ज्योतिष्टोमं प्रकृत्य श्रूयते यदि रथन्तरसामा सोमस्स्यादैन्द्रवायवान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुकाग्रान्[१]' इति तत्र संशयः—किं ज्योतिष्टोमात्कर्मान्तरं रथन्तरसामा बृहत्सामेति विधीयते ? किं वा ज्योतिष्टोम एव रथन्तरेण बृहता वावच्छिन्नो ग्रहाग्रताविशेषं प्रति निमित्तत्वेनानुकीर्त्यते ? इति[२]। तदर्थमिदं चिन्त्यते किमयं कृत्स्नक्रतुसंयोगो रथन्तरादेरुताकृत्स्नक्रतुसंयोगः ? इति। तदथमपि किं रथन्तरविशिष्टः क्रतुरिह निमित्तमुत क्रतुविशिष्टं रथन्तरम् ? इति।

---

विधीयत इत्यपि नियमः फलित इत्याह—किन्त्विति। उपसंहरति—तस्मादिति। विधीयन्त इति पूर्वार्धान्वयि। प्रयोजनं पूर्वपक्षे-क्रत्वर्थेऽपि सौभरप्रयोगे हीषादितो वृष्ट्यादिफलम्, सिद्धान्ते नेति। सूत्रन्तु सौभरे निधने सौभराश्रिते हीषादिनिधने कामसंयोगः फलसम्बन्धः, कुतः ? पुरुषश्रुतेः वृष्टिकामायेति कामयुक्तपुरुषश्रवणादिति व्याख्येयम्।

॥ इति आग्नेयस्तुत्यर्थताधिकरणम् ॥ १२ ॥

इति श्रीमत्पदवाक्यप्रमाणाभिज्ञतत्सद्रामभट्टात्मजवैद्यनाथकृतायां
शास्त्रदीपिकाव्याख्यायां प्रभाख्यायां
द्वितीयाध्यायस्य द्वितीयः पादः ॥

अथ द्वितीयाध्यायस्य तृतीयः पादः

१

गुणस्तु यदीति। ज्योतिष्टोमे हि 'रथन्तरं पृष्ठं भवति बृहद्वा पृष्ठं भवति' इति बृहद्रथन्तरयोः विकल्पोऽस्ति। तेन तत्सामकत्वे निमित्ते ऐन्द्रवायवाख्यग्रहस्याग्रता प्राथम्यरूपा विधीयते, एवं वाक्यान्तरेऽपि। विधीयत इति। रथन्तरमात्रसामकत्वविशिष्ट ऐन्द्रवायवाग्रत्वविशिष्टश्चेत्यर्थः। कृत्स्नेति। सर्वस्तोत्रावच्छिन्नेत्यर्थः। निमित्तता क्रतोरेवावगम्यत इत्य-

---

१. गृह्णीयादित्यधिकं क. २. इतीति नास्ति क.

तत्रान्यार्थप्रधानत्वाद्बहुव्रीहेर्निमित्तता ।
रथान्तरविशिष्टस्य क्रतोरेवावगम्यते ॥
विशेषणं व्यवच्छेत्तृ विशेष्यव्यापि चोच्यते ।
ज्योतिष्टोमे च नान्येषां व्यवच्छेदस्य सम्भवः ॥
रथन्तरेण कृत्स्नस्य क्रतोर्व्याप्तिश्च नैव हि ।
सन्त्यन्यान्यपि सामानि गायत्रादीनि तत्र हि ।

तेन व्यवच्छेदाभावात्सत्तयापि त्वव्यापिन्या सामान्तरसापेक्षतया विशेषणत्वासम्भवात्पूर्वत्रासम्भवी रथन्तरसामत्वं गुणः कर्मान्तरं कल्पयति । यदिशब्दश्च[1] निपातत्वान्निरर्थको रुच्यध्याहारादिना वा व्याख्येय इति प्राप्ते ब्रूमः[2]—

न्वयः । व्यवच्छेत्तृ[3] विशेषणान्तरव्यावर्तकम् । व्यापि सर्वावच्छेदेन वर्तमानम् । यथा नीलो घट इत्यत्र पीतादिव्यावर्तकं सर्वघटत्यापि च नीलत्वम् । किञ्चिदवच्छेदेन नीलवति नीलो घट इत्यप्रतीतेः । एवञ्च नात्र ज्योतिष्टोमानुवाद इत्याह-ज्योतिष्टोमे चेति । अन्येषाम् सामान्तराणाम् । विशेष्यव्यापितापि नेत्याह—रथन्तरेणेति । ननु दण्डी कुण्डली चैत्र इतिवद्व्यवच्छेदकत्वव्यापित्वयोरभावेऽप्येकदेशसत्तामात्रेण विशेषणत्वं स्यादत आह—सामान्तरेति । तथा च नैरपेक्ष्यलक्षणसामर्थ्याभावात्समासानुपपत्तिरिति भावः । पूर्वत्र प्रकृतज्योतिष्टोमे । गुण इति —तथाच गुणप्रयुक्तभेदाभेदचिन्तनमिह पादे क्रियते । पूर्वं निश्चितविधेयताकगुणश्चिन्तितः, इह तु सन्दिग्धविधेयताक इति भेदः । हीषादिविधौ वृष्टिसाधनसौभरस्य निमित्तत्वेऽप्यत्र रथन्तरसामकक्रतोस्तन्नास्तीति प्रत्युदाहरणरूपेण पूर्वपक्षादनन्तरसङ्गतिः । निपातत्वादिति । निपातानां द्योतकत्वात्तदभावे 'यदाग्नेय' इत्यादिवदविवक्षितार्थतेत्यर्थः । अर्थपरित्यागाद्वरमध्याहार इत्याशयेनाह—रुचीति । यदि रुचिः स्यादिति योजनेत्यर्थः । आदिना गृह्णीयादिति । लिङ इच्छार्थः । 'कामप्रवेदन' इत्यनुशासनात् । तथा च यदिशब्दस्य व्यवहितान्वयः । 'यद्यन्द्रवायवाग्रान्-ग्रहीतुमिच्छेत्तदा रथन्तरमात्रसामकं कुर्यादित्यर्थः । यद्वा स्यादिति लिङ् हेतौ, 'हेतुहेतुमतोर्लिङ्' इति सूत्रात् । तथाच रथन्तरमात्रसामकक्रतुकैन्द्रवायवाग्रता कर्तव्येत्यर्थः । तदुक्तम्—

यदि शब्दपरित्यागो रुच्यध्याहारकल्पना ।
व्यवधानेन सम्बन्धो हेतुहेतुमतोश्च लिङ् ॥ इति ।

---

१ शब्दश्च निर्थक इति ग.  २ अभिधीयत इति ग.

३ 'देवदत्तः कुण्डली' इत्यत्रैकदेशे वर्तमानस्य कुण्डलस्य विशेष्यव्यापित्वाभावेऽपि विशेषणत्वदर्शनादत्रापि रथन्तरसाम्नः कृत्स्नक्रतुव्यापित्वाभावेऽपि विशेषणत्वं किं न स्यादिति चेदाह व्यवच्छेत्तृ इति । तत्रैकदेशस्थस्यापि कुण्डलस्य व्यावर्तकत्वं सम्भवति, अत्र तु व्यावर्तकत्वाभावान्न विशेषणत्वसम्भव इति भावः ।

यदिशब्दात्प्रकरणाच्च ज्योतिष्टोमस्याभिधानम्। न च सामान्तरव्यवच्छेदेनैव रथन्तरस्य विशेषणत्वम्। शब्दो हि स्वार्थकसत्तामेव प्रथमं बोधयति। यदि सा नित्यप्राप्ता स्यात्ततस्तत्प्रतिपादनमनर्थकमित्यार्थान्तरव्यवच्छेदं कुर्यात्। इह तु रथन्तरसत्तायाः पाक्षिकत्वात्तत्प्रतिपादनेऽपि नानर्थक्यमित्यसत्ताव्युदासेन च सत्तयैवात्र विशेषणत्वलाभान्न कर्मान्तरत्वम्। यद्यपि सामान्तरमेव व्यवच्छेत्तव्यम्,[1] तथापि वैकल्पिकयो[2] रथन्तरबृहतोर्विरोधिनोः परस्परव्यवच्छेदेनैव विशेषणत्वं, नाविरोधिनां सामान्तराणां व्यवच्छेदेन। यथा नीलोत्पलमिति पीतादीनामेव[3] व्यवच्छेदो न तु दैर्घ्यादीनाम्। न च रथन्तरस्य सामान्तरापेक्षत्वम्, अनपेक्षस्यैव पृष्ठस्तोत्रसाधनत्वेन ज्योतिष्टोमान्वयात्। तेन यद्यपीह रथन्तरविशिष्टः क्रतुर्निमित्तं, तथाऽपि प्रकृतस्यैवाभिधानम्। अथवा क्रतुविशिष्टं रथन्तरमिह निमित्तमनित्यत्वात्। नित्यस्तु क्रतुर्न निमित्तं भवितुमर्हति। तेन यद्यपि बहुव्रीहिणा रथन्तरविशिष्टः क्रतुरेवाभिधीयते, तथाऽपि 'दध्ना जुहोती' तिवद्विशेषणपरत्वात्तस्यैव निमित्तत्वम्। प्रथमप्रतीतं रथन्तरमुल्लङ्घ्य यदिशब्दोपक्रान्तनिमित्तत्वप्रतीतिर्न क्रतुं यावद्गच्छतीति रथन्तरमेव निमित्तम्। तच्च ज्योतिष्टोमेऽप्यस्ति। तस्मान्न कर्मान्तरम्॥

॥ इति रथन्तराधिकरणम्॥ १॥

---

सिद्धान्तमाह यदीति। यदिशब्दस्य प्राप्तिद्योतकत्वात्प्राप्तेश्च प्रकरणेन प्रमितत्वादित्यर्थः। नित्यप्राप्तेति। देवदत्तो मनुष्य इत्यादौ हि मनुष्यत्वस्य नित्यसिद्धस्य कथनं व्यर्थमिति शूरत्वादिव्यवच्छेदज्ञापनेन तद्विशेषणमुच्यत इत्यर्थः। तत्प्रतिपादनेऽपि तन्मात्रप्रतिपादनेऽपि। असत्तेति। अयोगव्यवच्छेदेनेत्यर्थः। इतरव्यावर्त्तकत्वमपि[4] सम्भवत्येवेत्याह–यद्यपीति। सापेक्षत्वेन समासानुपपत्तिमुक्तां परिहरति–नचेति। स्वकार्ये हि सापेक्षता दोषः। न च रथन्तरकार्ये पृष्ठस्तोत्रे[5] सामान्तरसापेक्षतास्तीत्यर्थः। विशेषणपरत्वादिति। विशिष्टस्य निमित्तत्वं श्रुतं। विशेष्ये बाधाद्विशेषणे पर्यवस्यतीत्यर्थः। दधिकरणकहोमे प्रतीतो विधिर्होमस्य प्राप्तत्वात्तत्रासम्भवन् विशेषणे दधिकरणत्वे यथा पर्यवस्यति 'यत्परश्शब्दः स शब्दार्थ' इति न्यायादिति दृष्टान्तार्थः। आकृत्यधिकरणगतं नागृहीतविशेषणन्यायमिहापि योजयति–प्रथमेति। रथन्तरमेवेत्येवकारेण क्रतोरपि निमित्तकोटावप्रवेश इत्युक्तम्। प्रकरणादेव क्रतुगतत्वलाभादिति। प्रयोजनं पूर्वपक्षे–कर्मान्तरं सोमयागाङ्गं रथन्तरमात्रनामकमिति स्तोत्राण्यावर्तनीयानि, सर्वस्तोत्रेषु रथन्तरस्यैव गेयत्वात्। एवं बृहत्सामकेऽपि। ग्रहाग्रतयामधिको विशेष इति भिन्न एव तत्प्रयोगः। सिद्धान्ते तु नेति। गुणस्तु रथन्तरसामत्वादि क्रतुसम्बन्धात्कर्मान्तरमेव प्रयोजयेद्बोधयेत्। कुतः? संयोगस्य विशेषणसम्बन्धस्याशेषे क्रतौ भूतत्वादवगतत्वात्तस्य च ज्योतिष्टोमेऽसम्भवादिति सूत्रार्थः।

॥ इति रथन्तराधिकरणम्॥ १॥

---

१ व्यवच्छिद्यत इति क. २ वैकल्पिकबृहद्रथन्तरयोरिति क. ३ एवेति नास्ति क.
४ अन्ययोगव्यवच्छेदकत्वमित्यर्थः। ५ तत्र राज्यनिमित्त इति क.

२

**सू॰ अवेष्टौ**—राजसूये राजकर्तृकेऽवेष्टिर्नामेष्टिस्समाम्नाता–'आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा' इत्यादिस्तां प्रकृत्य श्रूयते—'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वा तमभिघारयेत्, यदि राजन्य ऐन्द्रम्, यदि वैश्यो वैश्वदेव' मिति। तत्र संशयः–किं ब्राह्मणादीनामवेष्टौ प्राप्तानां मध्यनिधानविशेषं प्रति निमित्तार्थानि श्रवणानि ? उताप्राप्तानां प्रापकाणि ? इति। तदर्थ[1]मिदं विचार्यते–किं राजसूये त्रयाणामपि वर्णानामधिकारः[2] ? उत[3] क्षत्रियस्यैव ? इति। तदर्थमपि[4] किं राजशब्दस्त्रयाणामपि वाचकः ? किंवा क्षत्रियस्यैव ? इति। ततोऽपि पुनर्विचारयितव्यम्–क्षत्रियत्वजातिनिमित्तोऽयं राजशब्दो राज्यकर्तृत्वनिमित्तो वेति। यदि राज्यकर्तृत्वनिमित्तस्ततस्तद्योगिनां त्रयाणामपि वर्णानामधिकारवाक्यस्थराजोपपदवशेन तत्र प्राप्तेर्निमित्तार्थानि ब्राह्मणादीनां श्रवणानि। अथ जातिनिमित्तः, ततोऽतज्जातीययोर्वैश्यब्राह्मणयो राजोपपदवशेनार्थान्निवृत्तेरप्राप्तानां ब्राह्मणादीनां प्रापकाणीति। तत्र[5]—

**राज्ययोगनिमित्तोऽयमार्यावर्त्तप्रसिद्धितः।**
**सर्वलोकप्रसिद्धत्वादविगानाच्च गम्यते॥**

---

अवेष्टौ–राजकर्तृक इति। 'राजा राजसूयेन स्वाराज्यकामो यजेत' इति वचनादित्यर्थः। आदिना 'ऐन्द्रमेकादशकपालमृषभो दक्षिणा, वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा, मैत्रावरुणीमामिक्षां वशा दक्षिणा, बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणा' इति वाक्यचतुष्टयसङ्ग्रहः। पिशङ्गी पिशङ्गवर्णा। पष्ठौही बालगर्भिणी गौः वशा वन्ध्या गौः। शितिपृष्ठः श्यामपृष्ठो गौः। सर्वत्र निर्वपतीत्यनुषङ्गः। पञ्चानामपीष्टीनाम् 'दिशामवेष्टयो भवन्ति' इत्यर्थवादादवेष्टिनामकत्वादवेष्टिरित्येकवचनप्रयोगः। दक्षिणाभेदाच्चामी पृथगेव साङ्गाः प्रयोगाः। यदीति। बार्हस्पत्यं चरुं चतुर्णां हविषां मध्ये निधाय आहुतिमाहुतिं चतुर्णां हविषां हुत्वा तं बार्हस्पत्यं चरुमभिघारयेदित्यर्थः। यदि राजन्य इत्यनन्तरं यजेतेत्यनुषङ्गः। ऐन्द्रमित्यनन्तरञ्च मध्ये निधायेत्यादेः। एतमुत्तरत्रापि ज्ञेयम्। राजोपपदेति। राजसूयविधिवाक्यगतराजपदवशेनेत्यर्थः। आर्थादीति। राजकर्तृकराजसूयस्याराज्ञा करणाशक्तेरित्यर्थः। राज्यम् प्रजापालनम्। अयं राजशब्दः। आर्यावर्तेति शिष्टप्रसिद्धित्वेन प्राबल्यसूचकम्। सर्वेति। आर्यावर्ततदितरसाधारण्येन पालनकर्तरि राजपदप्रसिद्धिरिति व्यापकतयापि सैव प्रबलेत्यर्थः। अविगानादिति। द्रविडानामपि प्रजापालनकर्तर्यराजशब्दप्रयोगाभावाद्विप्रतिपत्त्यभावादि-

---

१ तत्सिद्ध्यर्थमिति क. २ ब्राह्मणादीनामिति ग. ३ किंवेति क. ४ तदर्थञ्चेति क.

५ अत्र यद्यपि पृष्ठस्तोत्रं न श्रुतम्, तथापि रथन्तरस्य साम्नः साक्षात्सोमयागसम्बन्धाभावादानर्थक्यतदङ्गन्यायेन रथन्तरसामेति निर्देशः, पृष्ठस्तोत्रद्वारा परम्परासम्बन्ध एव योग्यत्वात्पर्यवस्यतीति स्वीकर्तव्यम्।

**क्षत्रियत्वनिमित्तत्वमनार्येष्ववगम्यते ।**
**द्रविडेषु, विगीतञ्च तदन्येष्वप्रसिद्धितः ॥**

तेन राज्ययोगाद्राजानस्त्रयोऽपि भवन्ति। राज्यपदं तु रूढ्या जनपदरक्षणे वर्त्तते, न राजयोगमपेक्षते। ननु राजयोगाद्राज्यमभियुक्ताः स्मरन्ति 'तस्य कर्मणी' त्यधिकृत्य 'पत्यन्तपुरोहितादिभ्यो यगि' ति वचनाद्राजशब्दस्य तत्र पाठात्। आचाराच्च स्मृतेर्बलीयस्त्वं स्थितम्। उच्यते-लोकप्रयोग एव शब्दार्थावधारणे प्रमाणं स्मृतेरपि स एव मूलं नान्यदस्ति। प्रयोगाच्च राज्यशब्दस्यैव स्वातन्त्र्यं तन्निमित्तत्वञ्च राजशब्दस्यावगम्यते। ततस्तदनुसारेण स्मरणं साधुशब्द-विभागमात्रपरं व्याख्येयम्। अतस्त्रयाणामपि राजपदाभिधेयत्वेन[1] राजसूये प्राप्तानां निमित्तार्थानि श्रवणानि। यदिशब्दसामर्थ्यादप्येवमेव। यदिशब्दो हि राजशब्दस्य राज्ययोगनिमित्तत्वे प्रमाणम्, अन्यथा हि प्राप्त्यभावाद्यदिशब्दोऽनुपन्नस्स्यान्वैदिकश्च निदशः स्मृतेरपि बलीयान्। तस्मान्निमित्तार्थानीति प्राप्ते ब्रूमः—

न तावद्वैदिकनिर्देशादत्र निर्णयः शक्यते कर्त्तुम्, अन्यथाऽपि तत्सद्भावात्। "राजानमभिषेचये" दिति ह्यभिषेकविधौ प्रागेव राज्ययोगाद्राजशब्दः क्षत्रियमात्रे वेदे

---

त्यर्थः अथवा द्रविडेतरसर्वलोकविप्रतिपत्त्यभावादित्यर्थः। द्रविडेष्विति पूर्वान्वितम्। विगीतञ्चेति। क्षत्रियत्वनिमित्तत्वं विप्रतिपत्तिग्रस्तमित्यर्थः। तदन्येषु द्रविडभिन्नसर्वलोकेषु। अप्रसिद्धितः विरुद्धयोगप्रसिद्धिवशात्। तथाच बहुविरोधापेक्षयाल्पम्लेच्छविरोधो न बाधक इति भावः। तत्र पाठादिति। पुरोहितादिगणे पाठादित्यर्थः। आचारात्। प्रयोगरूपात्। स्मृतेः व्याकरणस्मृतेः। स्थितं सिद्धान्तितम्। स्मृतिचरण इति शेषः। साध्विति। सम्बन्धस्याशास्त्रहेतुत्वादिति न्यायान्न व्याकरणस्मृतेः प्रयोगबाधेऽर्थान्तरवाचकत्वे तात्पर्यम्, किन्तु साधुशब्दव्युत्पादनमात्र इत्यर्थः। किञ्च व्याकरणादपि प्रबलया श्रुत्यैव राजपदार्थनिर्णय इत्याह—यदिशब्देति।

वैदिकनिर्देशस्य सर्वतो बलवत्त्वेन तत्परिहाराय ततोऽपि प्रबलवैदिकनिर्देशालम्बनेन सिद्धान्तमाह—न तावदिति अन्यथापि उक्तनिर्देशविरुद्धतयापि। तत्सद्भावात् वैदिकनिर्देशसद्भावात्। तमेवाह—राजानमिति। प्रागेवेति। अभिषेकोत्तरं हि राज्यं, न तु ततः

---

१. शब्देति क.

२. यद्यपि 'एष वो भरतो राजा सोमोऽस्माकं ब्राह्मणानां राजा' 'राजानौ वा एतौ देवतानां यदग्नीषोमौ'' इत्यादिवैदिकनिर्देशः परिपालनेऽप्यस्ति, एवं 'तस्य राजन्यपत्यवत्' इति वार्तिकं राजशब्दस्य परिपालकार्थकत्वं ब्रवीति, तथापि अनेकार्थकत्वस्यान्याय्यत्वात् पालकत्वं क्षत्रियजातिर्वा एकमेव राजशब्दार्थः, इतरत्र प्रयोगस्तु गौणतया नेयः। तत्र क्षत्रियत्वजातिवाचित्वे शक्यतावच्छेदकं लघुभूतम्, पालकत्वस्य सप्रतियोगिकत्वेन गुरुभूतत्वात्। अतः क्षत्रियत्वजातिवाचकत्वमेवेति भावः।

प्रयुक्तः,तेन रूढमेव राजपदं निर्णीयते। यदिशब्दस्तु निपातत्वाद्यथाकथंचिदपनीयमानो न दुष्यति। स्मरणाच्च स्वतन्त्रमेव राजपदम्। न च तस्य निर्मूलत्वं,द्रविडप्रयोगस्य मूलस्य सम्भवात्। अतो नायथार्थत्वे स्मरणस्य प्रमाणमस्तीति तेनैवाभियुक्तप्रणीतेनाचारस्य सम्भवाद्गौणभ्रान्त्यादिप्रयोगप्रसूतस्य बाधाद्राजयोगादेव राज्यशब्दः, स्वतन्त्रश्च राजशब्दः क्षत्रियवचन इति ब्राह्मणादेरवेष्टौ प्राप्त्यभावात्प्रापकाणि वचनानीति॥ इति अवेष्टयधिकरणम्॥ २॥

## ३

सू० आधाने—इदमामनन्ति 'वसन्ते ब्राह्मणोऽग्नीनादधीत[1], ग्रीष्मे राजन्यः, शरदि वैश्य' इति। तथा 'वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्यम्' इति। अत्रापि स एव विचारः–किम् ब्राह्मणादीनामाधानोपनयनयोः प्राप्तानां वसन्तादिकालं प्रति निमित्तार्थानि श्रवणानि? किंवा ब्राह्मणादीनामप्राप्तमाधानमुपनयनञ्च विधीयत इति।

---

प्राक्। प्रजापालनधर्मस्याभिषेकादिगुणयुक्तं प्रत्येव विधानात्। अभिषेकस्य च राजानमुद्दिश्य विधानात्पूर्वंसिद्धस्य चोद्देश्यत्वादिति भावः। मात्रपदेन पालनादिव्यवच्छेदः। रूढमिति। क्षत्रियत्वजातिवाचकमेव न तु प्रजापालनकर्तृत्वरूपसखण्डोपाधिनिमित्तमित्यर्थः। ननु द्वयोर्वैदिकनिर्देशयोस्तुल्यत्वात्कथमेकस्यैव निर्णायकतेत्याशङ्क्य पूर्वस्य दौर्बल्यहेतुमाह—यदीति। निपातानां द्योतकत्वेनार्थाभावात्पूर्वाधिकरणन्यायेनान्यथासिद्धत्वमित्यर्थः। व्याकरणस्मृत्युपष्टब्धत्वादप्युक्त एव। निर्देशो बलवानित्याह-स्मरणाच्चेति। स्वतन्त्रं राज्ययोगानपेक्षम्। तस्य स्मरणस्य। अभियुक्तेति। शब्दार्थाभियोगशालिपाणिन्यादीत्यर्थः। आचारस्य इदानीन्तनार्यावर्तवासिप्रयोगस्य। सम्भवदिति। सम्भवन् गौणः। तथा भ्रान्तिरादिः कारणमस्य तथा भूतो यः प्रयोगः पूर्वेषां तत्प्रसूतस्य तन्मूलकस्येत्यर्थः। प्रयोजनं पूर्वपक्षे ब्राह्मणादिकर्तृकत्वे निमित्ते राजसूयप्रयोगमध्य एव मध्यनिधानादिविशिष्टः पञ्चहविष्कैकप्रयोगः, पृथक्प्रयोगत्वे मध्यनिधानासम्भवात्। एवञ्च सति पृथगिष्टिप्रयोगा अनुलोमादिविषयत्वेन व्यवस्थापनीया इति। सिद्धान्ते तु राजसूयाद्बहिः ब्राह्मणादीनां पञ्चहविष्कैकप्रयोगः। न च राजन्यस्य नित्यप्राप्तत्वेन यदि राजन्यमिति वाक्यस्य कथं प्रापकत्वमिति वाच्यम्, वैयर्थ्यभिया राजन्यपदस्यानभिषिक्तक्षत्रियमात्रपरत्वेन। तस्य च राजसूयेऽप्राप्तत्वेन तं प्रति विधायकत्वसम्भवादिति अवेष्टौ तत्सम्बन्धिब्राह्मणादिवाक्ये ब्राह्मणादिश्रवणं क्रतुः प्रधानान्तरं तत्प्रधानमुच्यते। कुतः यज्ञसंयोगात् क्षत्रियस्यैवेति शेष इति सूत्रार्थः। इति अवेष्ट्यधिकरणम्॥ २॥

आधाने—सङ्गतिं सूचयति—अत्रापीति। तेनातिदेशिकी सङ्गतिरित्याशयः।

---

१ अग्निमिति क. २ उत प्रापकाणीति ग.

**तत्र[1] विद्याग्निसाध्यत्वात् क्रतूनां तदुपाययोः।**
**प्राप्तत्वात् ब्राह्मणादीनां निमित्तार्था पुनःश्रुतिः॥**

'आहवनीये जुहोती' ति वाक्यादग्निसाध्यत्वं क्रतूनाम्, आहवनीयश्चाधानैकसाध्य इत्यर्थादाधानप्राप्तिः। ज्ञानपूर्वकत्वाच्चेतनप्रवृत्तेः, क्रतुज्ञानस्य च वेदाध्ययनसाध्यत्वात्, वेदाध्ययनस्य चोपनयनमन्तरेणासम्भवात् उपनयनस्यापि क्रतुभिरेवार्थात्प्राप्तिः। नन्वलौकिकत्वादाहवनीयादीनां विधिमन्तरेणाधानसाध्यत्वानवगतेः कथं क्रतुभिरर्थादाधानस्याक्षेपः? तवापि कथमाधानविधिषु[2] वसन्तादिष्वाहवनीयपदाश्रवणादाधानसाध्यत्वावगमः स्यात्? यदि तु 'नक्तं गार्हपत्यमादधाति दिवाहवनीयं त्रिभिर्गार्हपत्यमादधाति पञ्चभिराहवनीयम्' इत्यादिगुणवाक्यालोचनेनैतज्ज्ञायते—नूनमाधानाधीनमाहवनीयादिशब्दाभिधानीयकमित्युच्येत,[3] तन्ममापि तुल्यम्। अतोऽग्निविद्यासाध्यैः क्रतुभिस्तदुपायभूतयोरुपनयनाधानयोराक्षेपतः प्राप्तिः। अथवा 'य एवं विद्वानग्निमाधत्ते' इति सामान्यतः सर्ववर्णानामाधानस्य विधायकं गुणानपहृतशक्तिकमस्त्यत्र[4] वचनं, यस्मिन् गुणापहृतविधिशक्तयो वसन्तादिविधयो ब्राह्मणादिनिमित्तं कालमात्रं विदधति। तस्मान्निमित्तार्थानि श्रवणानीति प्राप्ते ब्रूमः—

---

तत्रेति। क्रतूनां विद्याग्निसाध्यत्वाद्धेतोस्तदुपाययोर्विद्याग्न्युपाययोस्साधनभूतयोरुपनयनाधानयोराक्षेपादेव प्राप्तत्वात्। ब्राह्मणादीनाम्। इत्युभयान्वयि। निमित्तार्था वसन्तादिविधानं प्रति निमित्तत्वार्था पुनःश्रुतिरित्यर्थः। विद्याया अभ्यर्हितत्वात्पूर्वनिपातेऽपि सूत्रारूढतया प्रथममाधाने प्राप्तिमाह—आहवनीयेति। वैदिकहोमसामान्यानुवादेनाहवनीयस्य विजानादित्यर्थः। आहवनीयश्चेति। अलौकिकसंस्काररूपाहवनीयत्वविशिष्ट इत्यर्थः। विद्योपायत्वेनोपनयनप्राप्तिमुपपादयति— ज्ञानेति। उपनयनं गुरुसमीपगमनम्। आधानप्राप्तिमाक्षिपति—नन्विति। आदिपदेन गार्हपत्यदक्षिणाग्न्योस्सङ्ग्रहः। एतदाक्षेपसमाधानमावयोस्तुल्यमित्याह—तवापीत्यादि। कथमाधानसाध्यत्वावगमस्स्यादित्यन्वयः। आहवनीयस्येति शेषः। गुणवाक्येति। नक्तादिकालव्यापिसंख्यामन्त्ररूपाङ्गविधायिवाक्येत्यर्थः। शब्दाभिधानीयकं शब्दाभिधेयम्। प्रत्यक्षविधौ सम्भवत्येवंविधाक्षेपक्लेशायोगात्पक्षान्तरमाह—अथवेति। गुणानपहृतेति। गुणश्रवणाबाधितधात्वर्थविधितात्पर्यकमित्यर्थः।

---

१ तत्र-विना नैवाग्निविद्याभ्यां क्रत्वनुष्ठानसम्भवः। अग्निविद्ये न च स्यातामाधानोपनयौ विना॥ न हि गुरुमनुपेत्य विद्या लभ्यते, नाप्याधानमन्तरेणाहवनीयादयः, तदेकोपायत्वात्। कथं पुनरसत्याधानविधौ तदेकोपायत्वमाहवनीयादीनामदृष्टरूपाणामवगन्तुं शक्यम्? येनाहवनीयादिभिस्तदाक्षिप्येत? सति वा विधौ तवापि कथमाहवनीयादेस्तत्साध्यत्वम्? न हि वसन्तादिवाक्येष्वाहवनीयादिग्रहणमस्ति, यतस्तज्ज्ञयेत इति पाठस्सोमनाथसम्मतः। २ वा प्रथमाधानेति ग. ३ ध्रुवमिति क. ४ गुणानभिभूतेति ग.

न तावत्क्रतुसामर्थ्यात्प्राप्तिरैकान्तिकी तयोः ।
सामान्यवचनं यत्तद्वर्त्तमानापदेशकम् ॥

वसन्तादिवाक्येषु तावद्यदिशब्दाद्यभावाद्वाक्यान्तरविहिताधानोपनयनविपरिवृत्त्यभावाच्च क्रियाविधिरेव प्रतीयते। यदि सामान्यतः प्राप्तिस्स्यात् तदा बलान्निमित्तार्थता स्यात्, न त्वस्ति प्राप्तिः। क्रतुविधयस्तावदग्निविद्यामात्रसाध्याः, अग्नयस्तु यद्यप्याधानसाध्याः, तथापि न तेनैव सर्वैर्निष्पाद्याः, अन्येन निष्पादितानामन्येन क्रयादिभिरपि प्राप्तिसम्भवात्। तथा विद्यापि पुस्तकनिरीक्षणाद्युपायसम्भवेन नैकान्तत उपनयनमाक्षिपति। तत्रास्ति विधेरवकाशः। सामान्यवचनन्तु वर्त्तमानापदेशमरूपं। न वसन्तादियुक्ते प्रत्यक्षविधौ सति क्लेशेन विधित्वमापादयितव्यम्। तस्मात्त्रापकाणि वचनान्याधानोपनयनयोः ॥ इति आधानाधिकरणम् ॥ ३ ॥

४

**सू० अयनेषु**—दर्शपूर्णमासप्रकरणे श्रूयते 'दाक्षायणयज्ञेन स्वर्गकामो यजेत' तथा 'साकं प्रस्थाय्येन यजेत पशुकाम' इति। तत्र विचारः—किङ्कर्मान्तरविधिः? उत दर्शपूर्णमासयोरेव गुणात्फलम्? इति। तदर्थं च किं दाक्षायणादिशब्दो गुणविधिः?

---

ऐकान्तिकीति। उपनयनविषये नियतेत्यर्थः। आधानविषये तु तत्तत्पुरुषनियतेत्यर्थः। सामान्यवचनं ब्राह्मणादिसाधारणं 'य एवं विद्वानग्निमाधत्त' इति। वर्तमानापदेशकम् वर्तमानतया बोजकम्. विधिप्रत्ययशून्यमिति यावत्। [1]बलादिति। पदश्रुत्या हि धात्वर्थविधिरेवोत्सर्गतो न्याय्यः। बाधकबलात्परं तत्याग इति भावः। तेनैव आधानेनैव। सर्वैः क्रतुकारिभिः। वर्तमानेति। सिद्धवन्निर्देशसदृशमित्यर्थः। लेडन्तत्वस्यापि सम्भवात्सरूपमित्युक्तम्। क्लेशेन लेडन्तत्वकल्पनया 'अथ (सम्भारान्) सम्भरति' [2]इत्युदकादिसम्भारस्थापनविधेरर्थवादत्वस्य क्लृप्तस्य त्यागेन। य[3] एवं सम्भारादि विद्वानग्निमाधत्ते एवं सपत्नं भ्रातृव्यं शत्रुमवर्त्तिवर्तनरहितो यथा स्यात्तथा सहते जयतीत्यर्थवादार्थः। प्रयाजनम्—अपशूद्राधिकारस्सिद्धान्ते, पूर्वपक्षे सर्ववर्णाधिकारः। आधाने उदाहृताधानवाक्ये क्रतुप्रधानमुच्येतेत्यनुषङ्गः। कुतः १ असर्वशेषत्वात् ब्राह्मणादिसर्वशेषतयाऽप्राप्तेरिति सूत्रार्थः। इत्याधानाधिकरणम् ॥ ३ ॥

अयनेषु—इह कर्मभेदापवादादनन्तरसङ्गतिं सूचयन्नाह—किं कर्मान्तरेति। ज्योतिरादिवत् अथैष ज्योतिरित्यादिवत्। ननु तत्राथशब्देन प्रकरणविच्छेदवदिह तदभावान्न भेद

---

१ क्रियायाः प्राप्तत्वेन तद्विध्यसम्भवे सति यदिशब्दाद्यभावेऽपि प्राप्तार्थत्वमात्रेण ब्राह्मणादिश्रवणस्य निमित्तत्वं स्यात्, न चात्र तत्सम्भव इति भावः।

२ 'अप उपसृजति' इत्यादिविशेषविधिविहितानामुदकादिसम्भाराणामित्यर्थः।

३ 'य एवं विद्वानग्निमाधत्ते एवं सपत्नं भ्रातृव्यमवर्त्ति सहते' इत्यर्थवादः। तदर्थविवरणपरमिदं वाक्यं बोध्यम्।

कर्मनामधेयं वेति विचारः। तत्रैवंसंज्ञकस्य[1]गुणस्य लोकेऽप्रसिद्धत्वादुद्भिदादिवत्सामानाधिकरण्येन नामधेयत्वं, तच्च भेदकं ज्योतिरादिवत्। अपि चास्य नामत्वेनाविधेयत्वात् गुणान्तरस्य[2] विधेयस्याभावात्फलस्य चाविधेयत्वात्कर्मैव विधेयमित्यभ्यासादपि[3] भेद इति प्राप्ते ब्रूमः[4]—

स्यादेवं नामधेयत्वे गुणस्त्वत्र विधीयते।
फलाय साकंप्रस्थानमावृत्तिश्चेत्यभिन्नता॥

नामत्वे संज्ञालक्षणोऽभ्यासलक्षणो वा कर्मभेदस्स्यात्, गुणविधिस्त्वयम्। यद्यपि न लोकसिद्धो गुणः,तथापि वाक्यशेषादवयवव्युत्पत्त्या वाऽऽवृत्तिसहप्रस्थानलक्षणगुणवचनत्वमनयोरवगम्यते। अतो गुणावप्राप्तावदवश्यं विधातव्यौ, यागस्तु प्रकृत इति तदाश्रयमेव गुणमात्रं फलाय विधीयते दध्यादिवत्। तद्यथैव दध्यादेरर्थान्तरेऽत्यन्तरूढत्वान्न नामधेयत्वमेवं दाक्षायणादिशब्दानाम्। द्वे पौर्णमास्यौ इत्यादिवाक्यशेषदर्शनेन दार्शपौर्णमासिकगुणवचनत्वावगमात्तद्वशेन च धातुपारार्थ्यादेराश्रयणीयत्वात्, नोद्भिदादिवत्कर्मान्तरवचनत्वं सम्भवतीत्यकर्मभेदः॥४॥

## ५

सू॰ संस्कारश्च—'वायव्यं श्वेतमालभेत भूतिकामः' 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इत्यनारभ्याम्नातम्। तथा दर्शपूर्णमासप्रकणे 'ईषामालभेत चतुरो

---

इत्याशङ्क्य भेदकान्तरमाह-अपिचेति। अनन्यपरपुनःश्रवणरूपादभ्यासाद्भेदसिद्धिरिति वक्तव्येऽपिशब्दोऽभ्युच्चयोक्तिसूचनार्थः। 'सन्निधौ त्वविभागादि' ति न्यायेनाभ्यासस्यासम्भवात्पुनःश्रुतेः फलसम्बन्धार्थत्वेनानन्यपरत्वाभावात्। साकमिति। सहेत्यर्थः। वाक्यशेषादिति। 'द्वे हि पौर्णमास्यौ यजेत द्वे आमावास्ये' इत्येवंरूपादित्यर्थः। अवयवयोगश्च दक्षस्य यजमानस्येमे दाक्षा ऋत्विजः, तेषामयनमावृत्तिस्तद्वानिति यावत्। आवृत्तिः परिच्छेदश्च द्विवारमिति वाक्यशेषादवगम्यत इत्यर्थः। एवं साकं सह प्रस्थानं यत्रेति योगार्थः। केन साहित्यमित्यपेक्षायां 'सह कुम्भीभिरभिक्रामन्ति' इति वाक्यशेषात्कुम्भीसाहित्यप्रतीतिः। होमार्थं दधिपयःकुम्भीभ्यां सह गमनं गुणः। कुम्भीभिरिति द्वयोश्छान्दसम्। अनयोर्दाक्षायणसाकंप्रस्थाय्यशब्दयोः। प्रयोजनं पूर्वपक्षे—दर्शपूर्णमासप्रयोगाद्बहिरेतत्प्रयोगः[5]। सिद्धान्ते तु दर्शपूर्णमासयोरेवावृत्तिरिति। सूत्रार्थस्तु—अयनेषु बहुवचनमाद्यर्थे। दाक्षायणयज्ञेनेत्यादौ चोदनान्तरं कर्मान्तरं संज्ञासम्बन्धादिति॥ इति दाक्षायणाधिकरणम्॥४॥

संस्कारश्च—इह कर्मान्तरत्वसिद्धान्तापवादसङ्गतिः। दर्शपूर्णमासयोरित्यनन्तरं

---

१ एवंविधसंज्ञायुक्तस्येति ग. २ गुणस्य च विधेयान्तरस्येति क. ३ विधीयत इति ग. ४ अभिधीयत इति ग.

५ यथा दर्शपूर्णमासप्रयोगाद्बहिः सौर्यादियागस्य प्रयोगः, तथा दाक्षायणयज्ञस्य प्रयोग इत्यर्थः। एवञ्च 'त्रिंशद्वर्षाणि दर्शपूर्णमासाभ्यां यजेत' इत्यस्य पूर्वपक्षे न बाधः, सिद्धान्ते तु तद्बाध इति सिध्यति।

मुष्टीन्निर्वपति' इति। तत्र संदेहः—किं दार्शपूर्णमासिकयोरीषालम्भमुष्टिनिर्वापयोः श्वेतचरुगुणौ विधीयेते ? किंवा कर्मान्तरे यावदुक्ते निर्वपणमालम्भनञ्च गुणफलविशिष्टे ? किंवा ? यागविधानमितरच्चेतरच्च[1] ? इति। तत्र विधिगौरवान्न कर्मान्तरविधानं, यागस्त्वश्रुतो[2] दूरभ्रष्टः। न चासति यागे देवतात्वं वाय्वादीनां सभवति। तेन सर्ववृक्षाणां वायुसम्बन्धात् कथञ्चिदीषाया एव वायव्यमित्यनुवादः। सौर्यमिति चाग्नेयस्यैव तेजोदैवत्यत्वसामान्यात्। अतो दार्शपौर्णमासिकयोरालम्भनिर्वापयोर्गुणविधी यदा लभेत तच्छ्वेतमिति यन्निर्वपेत्तच्चरुमिति। चरुशब्दः स्थालीवचनः, सप्तम्यर्थे च द्वितीया, स्थाल्यां निर्वपेदित्यर्थः। भूतिब्रह्मवर्चसकामशब्दौ सार्वकाम्यप्राप्तानुवादाविति। नैतद्युक्तम्; न हि फलपदयोर्नित्यवच्छ्रुतयोः सम्भवत्प्रयोजनयोश्च पाक्षिकानुवादत्वमानर्थक्यञ्च युक्तमङ्गीकर्तुम्। तस्माद्गुणफलविशिष्टं कर्मान्तरं यावदुक्तं विधीयते। लोकेऽपि चालम्भादिसद्भावान्नैकान्ततो दार्शपौर्णमासिकयोः प्रतीतिः। देवतापदन्तु पूर्ववद्यथाकथञ्चिन्नेयम्[3]। यागस्याश्रुतस्य विधानायोगात्तदभावाच्च देवतात्वासम्भवात्। तस्माद्यावदुक्तकर्मान्तरविधिरिति प्राप्ते ब्रूमः—

देवतापदवैयर्थ्यं यावदुक्तविधौ भवेत्।
तेन तत्कल्पितो यागो विधेयोऽत्राश्रुतोऽपि सन्॥

---

प्रकरण इति शेषः। ईर्षा 'अनसोऽधिनिर्वपति' इति शकटोपरि निर्वापविधानाच्छकटसम्बन्धिकाष्ठभेदः। आलम्भः स्पर्शः। निर्वपतीत्यनन्तरमाम्नातमित्यन्वयः। इतरच्चेति वायव्यमिति सौर्यमिति चेत्यर्थः। तेजोदैवत्यत्वेपि। आग्नेयो हि निर्वापस्तेजोदैवत्यत्वगुणयोगाद्गौण्या सौर्यपदेनोक्त इत्यर्थः। यदालभतेत्यालभ्यमानेषानुवादेन श्वेतत्वविधिः। सार्वकाम्येति। 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ' इति वचनेन भूतिब्रह्मवर्चसफलयोरपि तत्र प्राप्तत्वादित्यर्थः। पाक्षिकेति। फलान्तराणामपि सत्त्वेन नियतत्वाभावादित्यर्थः: निरर्थकश्चानुवाद इत्याह—आनर्थक्येति। यावदुक्तं निर्वापालम्भमात्रम्। ननु दार्शपौर्णमासिकालम्भनिर्वापाश्रितौ श्वेतचरू फले विधातव्यावत आह—लोकेऽपि चेति। अप्रकृतत्वेन न तयोराश्रयत्वसम्भव इति भावः। यथाकथञ्चिदिति। सम्बन्धमात्रे तद्धितवर्णनेनेत्यर्थः। ननु देवतापदवशाद्याग एव विधीयतामत आह—यागस्येति। अश्रुतयागाध्याहारापेक्षया[4] सम्बन्धमात्रे तद्धिताङ्गीकरणमेव युक्तमित्यर्थः। सिद्धान्तमाह—देवतेति। वायव्यमितिपदस्य सौर्यमित्यस्य चानुवादत्वे वैयर्थ्यम्—अप्रयोजनत्वम्। तत्कल्पितः—तेन देवतापदेन स्वार्थान्वयानुपपत्त्या कल्पित

---

१ इतरदितरच्चेति ग. २ अश्रुतत्वादिति क, ख. ३ नेतव्यमिति क.

४ 'आग्नेयोऽष्टाकपालो भवति' इत्यत्र पुरुषव्यापारं विना विध्यनुपपत्तेः पुरुषव्यापारापेक्षायाम् 'आग्नेय' इति द्रव्यदेवतासम्बन्धोपस्थितयागरूप एव पुरुषव्यापारः कल्पयितुं न्याय्य इति युक्तस्तत्राश्रुतस्यापि यागस्य विधिः, प्रकृते तु आलम्भनिर्वापयोः पुरुषव्यापारयोः श्रुतत्वात्तत एव विध्युपपत्तेरश्रुतयागविधिर्नाभ्युपेय इति भावः।

न हि यदेव प्रत्यक्षपठितं तदेवैकं शाब्दम्, सामर्थ्यमपि हि शब्दैकदेश इत्युक्तम्। अतो द्रव्यदेवतासम्बन्धकल्पितो यागो विधीयते। तदयं वाक्यार्थः— श्वेतमालभेत वायुदैवत्यं कुर्यात् भूतिकाम इति। तत्रालभेतेत्यनुवादः, चोदकादर्थेन च प्राप्तत्वाद्वायव्यं श्वेतं कुर्यादित्येतावद्विधीयते। न चान्तरेण यागं वायव्यः[1] शक्यते कर्तुमिति याग एवायमेवं विहितो भवति। तस्माद्याग एव गुणफलविशिष्टो विधीयते ॥५॥

६

सू० विषये—अग्निहोत्रदोहाधिकारे[2] 'वत्समालभेते' ति श्रुतम्। तत्रासत्यपि देवतासंयोगे प्राणिद्रव्यकालम्भत्वसामान्यादत्रापि यागविधिं[3] मन्यते। तस्योत्तरम्— आलम्भो नाम स्पर्शमात्रं। न तस्य यागमन्तरेणानुपपत्तिः, लोकेऽपि दृष्टत्वात्। अतोऽत्रालम्भमात्रं वत्ससंस्कारो विधीयते ॥६॥

७

सू० संयुक्त—'चरुमुपदधाति वृहस्पतेर्वा एतदन्नं यन्नीवारा' इत्यत्रापि किं चरोर्यावदुक्तमुपधानमात्रम्, उत यागः ? इति संशयः। तत्र 'बृहस्पतेर्वा एतत्' इति कथं

---

अध्याहृतः। उक्तमिति। 'अर्थाद्वा कल्पनैकदेशत्वात्' इत्यत्र क्तमित्यर्थः। वाक्यार्थ इति। यथाश्रुतवाक्यार्थ इत्यर्थः। चोदकात् 'अग्नीषोमीयं पशुमालभेत्' इत्यग्नीषोमीयपशुयागातिदेशात्। विशसनरूपालम्भस्य तत्र विधानात्। अथवालम्भः—स्पर्शः। स चार्थादेव प्राप्त इत्याह—अर्थेन चेति। यागमिति। वायुदैवत्यत्वं हि वायूद्देशेन त्यज्यमानत्वं। न तु वायुशब्दोच्चारणकालीनालम्भनत्वम्। त्यागं विना तथा व्यवहाराभावादिति भावः। एवं सौर्यवाक्येऽप्याग्नेययागातिदेशप्राप्तनिर्वापानुवादो यागविधानञ्च स्पष्टत्वान्नोक्तम्। प्रयोजनन्तु स्पष्टम्। अप्रकरणेऽपि श्रूयमाणः प्राकृतसंस्कार एव। कुतः ? अकर्मशब्दत्वात् अदृष्टार्थकर्मविधायकशब्दाभावादिति सूत्रार्थः ॥ ईषालम्भाधिकरणम् ॥ ५ ॥

विषये-अग्नीति। अग्निहोत्राङ्गपयःसम्पादकदोहविधिसन्निधावित्यर्थः। प्रत्युदाहरणसङ्गतिं सूचयन् पूर्वपक्षमाह—तत्रेति। वत्सालम्भो वत्सद्रव्यकयागार्थः प्राणिद्रव्यकालम्भत्वात् पश्वालम्भवदित्यनुमानादित्यर्थः। स्पष्टं प्रयोजनम्। विशये यागविधिसंशये प्रायेण बाहुल्येन यागं विनापि दर्शनात्संस्कारप्रायपाठाद्वा संस्कार एवेति पूर्वसूत्रस्थसंस्कारपदानुवृत्या सूत्रार्थः ॥ इति वत्सालम्बाधिकरणम् ॥६॥

संयुक्तः—अग्निचयनप्रकरणगतं वाक्यमुदाहरति—चरुमिति। एतच्च 'नैवारश्चरुर्भवति, बृहस्पतेर्वा एतदन्नं यन्नीवारा' इत्यनन्तरं श्रुतम्। आतिदेशिकीं सङ्गतिं सूचयन् संशयमाह—अत्रापीति। पूर्वपक्षमाह—तत्रेति। वाक्यशेषबलाच्चरुर्भवतीति चरुद्रव्यकबृहस्प-

---

१ वायव्य कर्तुं शक्यमिति ग. २ होमेति क. ३ यागविधिः कल्प्यत इति क.

बृहस्पतेरस्याद्यसौ देवता न स्यात्। सम्बन्धान्तराभावात्। तैत्तिरीयकाणां तु 'बार्हस्पत्यो भवतीति' तद्धितेनैव वाक्यशेषे देवतात्वमुक्तम्। अतो वाक्यशेषावगतदेवतासम्बन्धबलेन यागार्थता चरोः, उपधानन्तु यागोपयुक्तस्य प्रतिपत्तिः स्विष्टकृदादिप्रत्याम्नानेनेति प्राप्ते। ब्रूमः विध्युद्देशापेक्षितो विशेषो वाक्यशेषाद्गृह्यते[1] नानपेक्षितः। स्थलनिर्वृत्त्यौपयिकेन निराकांक्षो नार्थान्तरमपेक्षते। न चोपधानस्य यागवद्देवतापेक्षा, यतो वाक्यशेषावगता देवता गृह्येत। तैत्तिरीयकवाक्यमपि 'बार्हस्पत्यो भवती" ति वर्त्तमानापदेशकं न देवताविधिपरम्। अतोऽर्थवादमात्रं वाक्यशेष इत्युपधानमेव चरोर्न यागः॥ इति चरूपधानाधिकरणम्॥ ७॥

८

**सू० पात्नी**—'त्वाष्ट्रं पात्नीवतमालभेते' ति प्रकृत्य 'पर्यग्निकृतं पात्नीवतमुत्सृजती" ति श्रुतम्। तत्र संशयः—किं पर्यग्निकरणान्ताङ्गरीतिगुणविधिः १ उत तत्सं-

---

तिदेवताकयागविधिः, यागोपयुक्तस्य च स्थण्डिल उपनिधानं प्रतिपत्तिः। सा चैककार्यतया प्राकृतप्रतिपत्तिबाधिकेत्यर्थः। विशेष इति। यथा 'अक्ताश्शर्करा उपदधाति' इति विध्यतेचितोऽञ्जनसाधनद्रव्यविशेषो घृतरूपः 'तेजो वै घृतम्' इति वाक्यशेषादित्यर्थः। अनपेक्षितो यथा देवताविग्रहादिः। ननु चरुर्भवतीति विहितचरुद्रव्यस्य फलाकाङ्क्षायां योग्यतारूपलिङ्गेन यागार्थत्वमेव वाक्यशेषावगतदेवतासम्बन्धवशेन कल्पनीयमित्याशङ्क्याह—चरोश्चेति। प्रकरणसहकृतेन 'चरुमुपदधाति' इति वाक्येन चयनापूर्वसाधनोपधानाङ्गत्वेन विनियोगान्नोक्ताकाङ्क्षास्तीति[2] न यागकल्पनेत्यर्थः। चरुमिति द्वितीयावशादुपधानस्य संस्कारकर्मत्वन्तु नाशङ्कनीयम्। भूतभाव्युपयोगरहितचरोः संस्कार्यत्वासम्भवेन सक्तुवद्विनियोगभङ्गस्यावश्यकत्वात्। इष्टकासाध्यस्थण्डिले चरोर्दृष्टोपयोगासम्भवात्। प्रयोजनं स्पष्टम्। अर्थशब्देन प्रयोजनवाचिशब्देन उपदधातीत्यनेन संयुक्तश्चरुस्तदर्थ एव, उपधानश्रुतिसम्बन्धादिति सूत्रार्थः।

॥ इति चरूपधानाधिकरणम्॥ ७॥

पात्नीवते—तत्रेति। द्वितीयवाक्य इत्यर्थः। किमिति। पर्यग्निकरणं नाम ज्वलतोल्मुकेन परितो भ्रमणं, तदन्ते यस्यास्तादृशी याङ्गरीतिरङ्गानुष्ठानप्रकारस्तद्रूपस्य गुणस्य पूर्ववाक्यविहितयागे विधिरित्यर्थः। तत्संस्थेति। तस्याः पर्यग्निकरणान्ताङ्गरीतेः संस्था स्थिति-

---

१ गम्यत इति क.

२ 'बृहस्पतेर्वा एतदन्नं यन्नीवाराः' इति वाक्यशेषे बृहस्पतेर्देवतात्वं न ज्ञायते। तत्र यदि विधिवाक्यस्य देवताविषयिणी आकाङ्क्षा स्यात्। तर्हि तद्बलादश्रुतदेवता कल्पनापेक्षया रात्रिसत्राधिकरणन्यायेन वाक्यशेषश्रुतबृहस्पतेः कथञ्चिद्देवतात्वं कल्पयितुं शक्यम्। परन्तु विधिवाक्यस्योपधानमात्रविधायकत्वेनोपपन्नस्य न देवतापेक्षास्तीति भावः।

स्थयागान्तरविधिः १ इति। तदर्थञ्च किं पर्यग्निकृतं पात्नीवतं कुर्यादित्यन्वयः १ उत पर्यग्निकृतमुत्सृजतीति। तत्राव्यवहितसम्बन्धलाभात्पर्यग्निकृतं पात्नीवतं कुर्यादित्यन्वयः, न तु पर्यग्निकृतमुत्सृजतीति, व्यवहितकल्पनादोषात्। न च पात्नीवतशब्दात्पूर्वयागप्रत्यभिज्ञानम्, त्वष्टा हि पत्नीवान् तत्र देवता न केवलः पत्नीवान्। अतो यथाग्नेयमित्यग्नीषोमीयादेरग्रहणं तथात्रापि। न च पूर्वत्र विधेयः कश्चिदिह गुणः सम्भवति। न तावत्पर्यग्निकरणं, चोदकप्राप्तत्वात्। नोत्सर्गः, तस्याप्युत्पत्तिवाक्यसिद्धत्वात्। पर्यग्निकरणविशिष्टपात्नीवतोद्देशेनोत्सर्गविधौ विशिष्टानुवादाद्वाक्यभेदः। न च पर्यग्निकृत्वोत्सृजतीति क्रमः, तस्यापि चोदकप्राप्तेः। न च पर्यग्निकरणान्ताङ्गकलापः, तस्यापि सिद्धत्वात्। नोत्तराङ्गपरिसंख्या, त्रिदोषत्वात्, तस्मात्कर्मान्तरमिति प्राप्ते[1] ब्रूमः—पात्नीवतशब्दस्तावन्मनोतास्थाग्निशब्दवच्छक्नोत्यत्र पूर्वयागमुपस्थापयितुम्। न चात्राग्नेयवदसामर्थ्यम्, उत्पत्तिवाक्ये हि त्वाष्ट्रं पात्नीवतमिति प्रत्येकमुत्पन्नस्तद्धितः प्रत्येकमेव देवतात्वङ्गमयति, न त्वग्नीषोमीयादिवत्समासादुत्पन्नस्तद्धितः, येन व्यासक्तं सापेक्षं देवतात्वं स्यात्। न च प्रत्येकमपि देवतात्वे विकल्पः, युगपदेकेन

---

र्यत्र तादृशेत्यर्थः। पूर्वोक्तस्यार्थवादगतदेवतातद्धितस्य देवतापरत्वाभावरूपस्य सिद्धान्तहेतोः प्रत्युदाहरणेन पूर्वपक्षोत्थानाच्च सङ्गतिरिह ज्ञेया। गुणविधिरुत कर्मान्तरमिति वार्तिकानुसारेण प्रथमं सिद्धान्तकोटिरनन्तरञ्च पूर्वपक्षकोटिरुक्ता। इदानीं तदङ्गसंशयं पूर्वपक्षकोटिपूर्वकमेवाह—तदर्थमिति। कुर्यादिति प्रत्ययार्थकथनम्। उत्सृजतिस्तु प्राप्तोत्सर्गानुवाद इति भावः। एवं पर्यग्निकृतमित्यप्यनुवादः, अतिदेशप्राप्तत्वादिति ज्ञेयम्। उतेति। यदुत्सृजन्तीति यागमनूद्य पर्यग्निकरणान्ताङ्गरीतितिभिरित्यर्थः। ननु त्वष्टुः पत्नीवतश्च निरपेक्षमेव देवतात्वम् पृथक् तद्धितश्रवणादिति केवलपात्नीवतशब्दादपि पूर्वकर्मोपस्थितिर्युक्तेत्यत आह—न चेति। एतदेव प्रपञ्चयति—न तावदिति। उत्पत्तीति। यागविधायकेत्यर्थः। पर्यग्निकरणविशिष्टेति। विशेषणत्वमितराङ्गव्यावर्तकतयेति भावः। वाक्यभेद इति। अनुवाद्यविशेषणस्याप्यप्राप्तत्वेन विधानेऽनेकविधानाद्विध्यावृत्तिरूपो वाक्यभेदस्स्यादित्यर्थः। क्रमः पर्यग्निकरणोत्तरकालतारूपः। न चानन्तर्यरूपक्रमो विधेय इति वाच्यम्। क्त्वाप्रत्ययस्य भूतकालमात्रवाचिन उक्तक्रमलक्षणायां मानाभावात्। वाक्यार्थस्य कर्मान्तरविधानेनोपपत्तेरिति भावः। मनोतेति। अग्नीषोमीयपशुप्रकरणे 'त्वं ह्यग्ने प्रथमो मनोता' इति मन्त्रगतकेवलाग्निपदेन यथाग्नीषोमप्रकाशनं तथेत्यर्थः। आग्नेयवत्–आग्नेयपदवत्। निरपेक्षाग्निदैवत्यस्यैव तद्धितेन सामर्थ्यवशेनाभिधानादित्यर्थः। मनोतास्थाग्निपदे तद्धिताभावाद्युक्तमेकदेशद्वारेण विशिष्टोपस्थानमिति भावः। तद्धितसत्वेऽपि तस्य विशिष्टादनुत्पत्तेर्नाग्नीषोमन्याय इत्याह—उत्पत्तीति। व्यासक्तम् अतएव सापेक्षमित्यर्थः। युगपदिति। एककर्मान्वयस्यैकेन वाक्येनावगतेर्देवतयोस्समुच्चयः, न तु समु-

---

१ अत्राभिधीयत इति क, ख.

वाक्येन विधानात् । अतो डित्थडवित्थयोर्माता डित्थामातेति शक्यते वक्तुं यथा, एवं पात्नीवतमिति । सति चैवं प्रकृतप्रत्यभिज्ञाने न कर्मान्तरत्वं युक्तम् । अत उत्सृजतिना पूर्वंयागमनूद्य पर्यग्निकरणान्ताङ्गकलापविधिः । यद्यपि चासौ चोदकात्सिध्यति, तथापि ततः प्रागेव विधीयते । तेन च क्लृप्तोपकारेण निराकाङ्क्षस्त्वाष्ट्रप्रयोगवचनो गृहमेधीयवन्नातिदेशमपेक्षते । शक्नोति च पर्यग्निकृतशब्दः प्राकृतपर्यग्निकरणावस्थावचनस्तदन्ताङ्गकलापं गमयितुम् । न हि पूर्वाङ्गेष्वकृतेष्वियमवस्था भवति । पर्यग्निकृतोत्सर्गानुवादेनात्राङ्गरीतिविधौ पात्नीवतशब्दो नित्यानुवाद इति न विशिष्टानुवाददोषः ॥ इति पात्नीवताधिकरणम् ॥ ८ ॥

९

**सू० अद्रव्य**—'एष वै हविषा हविर्यजते योऽदाभ्यं गृहीत्वा सोमाय यजते' 'परा वा एतस्यायुः प्राण एति योऽशुं गृह्णाति' इत्यनारभ्य श्रुतम् । तत्र विचारः—किं ज्योतिष्टोमे ग्रहणविधिरुत यागान्तरविधिः ? इति । तदर्थञ्च किमंशुमदाभ्यमिति यागनामनी ग्रहनामनी वेति । तत्र ग्रहणस्य संस्कारत्वादवघातादिवन्नामधेयानर्हत्वाद्यागनामत्वमदाभ्यं यजत इति । नाम च प्रकृतादपि भेदकमित्युक्तं, किमुताप्रकृतादेव

---

ञ्चितयोर्देवतात्वमित्यर्थः । डित्थेति । डित्थजनकता हि न डित्थसापेक्षा यथेति भावः । गुणविधिमुपपादयति—अत इति । प्रागेवेति । अतिदेशस्य कल्प्यत्वेनोत्तरभावित्वात्प्रत्यक्षवाक्यस्य ततः पूर्वमेव प्रवृत्तेरित्यर्थः । एतत्फलमाह—तेन चेति । पर्यग्निकरणान्ताङ्गकलापेन चेत्यर्थः । गृहमेधीयवदिति । यथा तत्रातिदेशतस्सम्भवत्प्राप्तिकयोरप्याज्यभागयोः प्रत्यक्षवाक्येन विधानान्निराकाङ्क्षतया नातिदेशकल्पना तथेहापीत्यर्थः । एवञ्च प्रापकाभावादुत्तराङ्गनिवृत्तिरर्थसिद्धेति न त्रैदोष्यम् । ननु पर्यग्निकृतशब्देन कथं तदन्ताङ्गकलापप्रतीतिरत आह—शक्नोतीति । पर्यग्निकृतशब्दो हि भूतपर्यग्निकरणतां प्रकृतौ दृष्टां विधत्ते । प्रकृते च पूर्वाङ्गकलापपूर्विकैव सा क्लृप्तेत्यर्थात्तल्लाभ इति भावः । प्रयोजनन्तु स्पष्टमेव-कर्मान्तरानुष्ठानाननुष्ठानाभ्याम् । पात्नीवते उक्तवाक्ये पूर्ववत्वात्पूर्वकर्मानुवादादवच्छेदः पर्यग्निकरणान्ताङ्गकलाप एव विधेय इति सूत्रार्थः ॥ इति पात्नीवताधिकरणम् ॥ ८ ॥

अद्रव्यत्वात्-एष इति । यः अदाभ्यसंज्ञकं ग्रहं गृहीत्वा सोमाय यजते सोमरूपदेवतोद्देशेन त्यजति एष यजमानो हविषा सोमरूपेण हविस्सोमरूपमेव यजते । यदेव हविस्तदेव देवतारूपमित्यर्थः । योंऽशुनाम ग्रहं गृह्णाति तस्य प्राणः आयुः परैति अतिक्रामति आयुषोऽधिकमपि जीवतीत्यर्थः । सिद्धान्तोपक्रमेणैव सूत्रप्रवृत्तेस्तदनुसारेण पूर्वं सिद्धान्तकोटिनिर्देशः । पूर्ववदेव प्राप्ते कर्मणि गुणमात्रविधिसाधनादातिदेशिकी सङ्गतिः । अनर्हत्वादिति । इतरव्यच्छेदार्थमिह नामधेयम् । संस्कारकर्मणश्च संस्कार्यसम्बन्धादेव तत्सिद्धेर्न नाम्नः प्रयोजनमिति भावः ।

ज्योतिष्टोमात् । अंशौ तु यद्यपि यजिर्न[1] श्रुतः तथापि संज्ञयैव तावत्कर्मान्तरं कल्प्यते । तच्च गृह्णातिचोदनासामान्याज्ज्योतिष्टोमप्रकृतिकमिति तदीयविध्यन्तप्राप्तेर्द्रव्यदेवता-सम्बन्धाद्यागो भविष्यति । तस्माद्यागान्तरे इति । उच्यते—

संस्काराणां न नामानि वार्यन्ते राजशासनात् ।
आनन्तर्यादतः स्यात ग्रहयोरेवां नामनी ॥
अंशौ तावद्यजिर्नैव श्रुतस्तन्नामता कुतः ।
अदाभ्ये श्रूयमाणोऽपि व्यवधानान्न नाम भाक् ॥
तदिह ग्रहयोरेव भेदो नामवशाद्भवेत् ।
न तु यागस्य. तेनात्र विधीयेते ग्रहावुभौ ॥
तयोर्गृह्णात्युपस्थानाज्ज्योतिष्टोमेन सङ्गतिः ।
अथवा तैत्तिरीयाणामनयोर्विनियोजकम् ॥
अस्ति प्रकरणे वाक्यं, तेन तादर्थ्यमेतयोः ।
अदाभ्ये श्रूयमाणोऽपि गुणसंक्रान्तशक्तिना ॥
विधिना न विधातव्यो यागस्तेन न भिद्यते ।
अंशौ त्वश्रुत एवेति विधेयौ केवलौ ग्रहौ ॥ ९ ॥

॥ इति अश्वदाभ्याधिकरणम् ॥ ९ ॥

## १०

सू० अग्निस्तु—'य एवं विद्वानग्निं चिनुत' इति श्रुतम् । तथेमान्यपि वचनानि 'अथातोऽग्निमग्निष्टोमेनानुयजन्ति तमुक्थ्येन' इत्यादि । तत्र संशयः[2]—

---

नन्वंशुवाक्ये यजिदेवतयोरश्रवणात्कथं यागविधिः, तत्राह—अंशौ त्विति । अंशुवाक्य इत्यर्थः । गृह्णातिचोदनेति । यथांशुकर्मणो गृह्णतिना विधानं । तथा ज्योतिष्टोमशब्दस्तत्सम्बन्धिग्रहणपरः । वस्तुतोऽव्यक्तत्वेन ज्योतिष्टोमातिदेशाद्यागसिद्धिरिति ज्ञेयम् । नामवैयर्थ्यं परिहरति—तदीयेति । भेदश्चोपांश्वन्तर्यामादिग्रहेभ्यः । ज्योतिष्टोमाङ्गत्वे[3] प्रमाणमाह—तयोरिति । उपांशुयाजादाव-प्याज्यादिग्रहणसत्वान्न ग्रहणं ज्योतिष्टोमाव्यभिचारीत्याशङ्क्याह—अथवेति । प्रयोजनन्तु पूर्वपक्षे-स्वर्गार्थं कर्मान्तरमनुष्ठेयम्, सिद्धान्ते नेति । अद्रव्यत्वाद्देवताशून्यत्वात्केवले यागशून्ये ग्रहणमेव कर्मणो ज्योतिष्टोमस्य शेषोऽङ्गत्वेन विधेयं स्यादिति सूत्रार्थः ।

॥ इति अश्वदाभ्याधिकरणम् ॥ ९ ॥

अग्निस्तु—अथात इति । अथ अग्निचयनानन्तरं, अतश्चयनस्याहवनीयाधारस्य-

---

१ यजतिरिति क. २ सन्देह इति क.

३ ज्योतिष्टोमाव्यभिचरितगृह्णातिशब्दोपस्थितज्योतिष्टोमाङ्गत्वे सति तत्रापि सन्निपातित्वसम्भवे आरादुपकारित्वस्यान्न्याय्यत्वात् सन्निपातित्वस्य सोमसंस्कारद्वारैव वक्तव्यत्वात्सं-कार्यसोमाख्यग्राह्यलाभः क्रतूपकारलक्षणप्रयोजनलाभश्चेति भावः ।

किमयमग्निं चिनुत इति यागविधिः ? उताग्निसंस्कारमात्रं चयनं[1] स्वतन्त्रं विधीयते ? किं वा ज्योतिष्टोमादिषु गुणो विधीयते ? इति । तदर्थञ्च किमग्निशब्दो यागनामधेयम् उत द्रव्यवचनः ? इति । तत्राश्वदाभ्यवत्प्रकरणे पुनः सङ्कीर्त्तनाभावान्न क्रतुसंयोगः, तदभावे च संस्कारमात्रं स्वतन्त्रमनर्थकम् । अतः 'अग्निं कुर्यात्' इति यागविधिः, चिनोतिस्तु 'इष्टकाभिरग्निं चिनुत' इति वाक्यप्राप्तानुवादो निर्वपतिवत् । कथं पुनरसति यजिश्रवणे यागविधानम् ? उच्यते—अग्निं कुर्यादिति तावत्संज्ञयैव कर्मान्तरेऽवधारिते 'अथातोऽग्निमग्निष्टोमेन अनुयजन्तो'ति यदग्निं यजति तदग्निष्टोमेनेति संस्थाविधिपरे वाक्ये यजिनानुवादादुत्पत्तौ यागवचनोऽग्निशब्द इति गम्यते । यद्यपि नायं संस्थाविधिः किन्त्वग्निष्टोमसंस्थेन यागेनाग्निमनुयजन्तीति, तथाऽप्यग्नेर्यागत्वं, न ह्यन्यथा तमन्वन्यैर्यष्टुं[2] शक्यते । यथा देवदत्तमनुगच्छति यज्ञदत्त इत्युक्ते देवदत्तोऽपि गच्छतीति प्रतीयते, अन्यथानुगमनानुपपत्तेरेवमनुयजनवशादेवाग्नेर्यागत्वं[3] सिद्धम् । तस्माद्यागविधानं स्यादिति प्राप्ते ब्रूमः[4] ।

अग्नेश्चयनसंस्कारमात्रमत्र विधीयते ।
तस्याथातोऽग्निमित्यादिवाक्यैस्स्यात्क्रतुसङ्गतिः ॥

वह्नौ रूढोऽग्निशब्दोऽयं, नहि यागस्य वाचकः । न ह्यग्निशब्दोऽत्यन्तरूढत्वात् वाक्यभेदतत्प्रख्यतद्व्यपदेशविधुरत्वाच्च यागनामत्वं प्रतिपद्यते । तेन ज्वलनस्यैवायं चयनसंस्कारो विधीयते । तस्य च संस्कारस्य क्रतुसम्बन्धपराणि 'अथातोऽग्निमग्निष्टो-

---

ण्डिलोत्पादकत्वात्तमनु स्थण्डिलस्थापितेऽग्नौ अग्निष्टोमेन यजन्तीति चयनस्य क्रत्वङ्गताबोधकम् । आदिना 'तं द्विरात्रेण 'त त्रिरात्रेण' इत्यादि संग्रहः । स्वतन्त्रमिति । 'ऋध्नोत्येव' इत्यार्थवादिकफलार्थं न तु क्रत्वङ्गमित्यर्थः । सिद्धान्तकोट्युल्लेखादातिदेशिकी सङ्गतिस्सूचिता । प्रथमपक्षमुपपादयति तत्रेति । प्रकरणे क्रतुप्रकरणे । तृतीयपक्षदूषणेनैव द्वितीयं दूषयति—तदभावे चेति । ऋध्न्याख्यार्थवादिकफलन्तु संस्कारत्वविरोधीति भावः । तस्माद्यागविधानमेवेदमित्याह—अत इति । अग्निसंज्ञकयागं कुर्यादित्यर्थः । एतदङ्गभूताग्निसंस्कारकतया च 'इष्टकाभिरग्निं चिनुत' इत्यनेन चयनं विधीयत इति प्राप्तार्थत्वाच्चिनोतिरनुवादः । प्रत्ययानुग्रहार्थ इत्याह—चिनोतिस्त्विति । अग्निशब्दस्य यागनामतामुपपादयितुं पृच्छति— कथं पुनरिति । अग्नियागानुवादेन संस्थाविधावनुशब्दवैयर्थ्यापत्तेरग्निमनु अग्निष्टोमेन यजेतेत्यर्थमभ्युपेत्याप्यग्निपदस्य यागनामत्वमुपपादयति—यद्यपीति । अनुशब्दस्य सजातीयक्रियापश्चाद्भावबोधकत्वस्यैव व्युत्पन्नत्वादिति भावः । एतदेव विशदयति—न हीत्यादि । अग्निशब्दमात्रेण कथं चयनसंस्कारस्य

---

१ चनयमिति नास्ति क. २ तमन्यैरन्विति क ३ यागत्वसिद्धिरिति क. ४ अभिधीयत इति क.

मेनानुयजन्ति' इत्यादीनि। अत्राग्निशब्दः प्रकरणाच्चयनसंस्कृतेऽग्नौ वर्त्तते। अनुशब्दश्चयनापेक्षया पश्चाद्भावमग्निष्टोमादीनामाह। तेन चयनसंस्कृतेऽग्नावग्निष्टोमादिभिर्यजेतेत्यर्थः। न त्वत्राग्निशब्दो यजिसमानाधिकरणः, येन नाम स्यात्। न चावश्यं तुल्यरूपाणामेव पौर्वापर्ये, पाकमनुभुङ्क्ते इत्यादिषु विजातीयानामपि दर्शनात्। तस्मात् ज्योतिष्टोमादिषु गुणविधिः॥ इति चयनाधिकरणम्॥ १०॥

११

सू० प्रकर—गुणभेदप्रसङ्गे समाप्तेऽधुना प्रकरणान्तरेण भेदोऽभिधीयते। कुण्डपायिनामयने 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति मासं दर्शपूर्णमासाभ्यां यजन्ते' इत्यादि श्रुतम्। तत्र संशयः[1]—किं नैयमिकेऽग्निहोत्रादौ मासो विधीयते? किंवा कर्मान्तरम्? इति। तदर्थञ्च किमनुपादेयगुणसम्बन्धानुगृहीतोऽसन्निधिर्भेदकारणं सम्भवति न? इति।

तत्राग्निहोत्रशब्देन तत्कर्मोपस्थितं यतः।
तस्मात्तत्रैव मासोऽयमप्राप्तो[2] हि विधीयते॥

उपादेयमनुपादेयं वा यदप्राप्तं तदेव विधेयम्। मासश्च तथा। यच्च प्राप्तं तदनुवाद्यम्। अग्निहोत्रशब्दश्च स्वाभिधेयं कर्मोपस्थापयति, तच्च प्राप्तं न विधेयम्।

---

विनियोगस्तत्राह—अत्रेति। प्रयोजनं स्पष्टम्। अग्निरग्निशब्दः क्रतुशब्दो दाननामधेयम्, लिङ्गदर्शनात् 'अग्नेः स्तोत्रम्' इत्यादिव्यपदेशदर्शनात्। तस्य च चयनमात्रेऽनुपपत्तेरिति सूत्रार्थः।

॥ इति चयनाधिकरणम् ॥१०॥

प्रकरणान्तरे—अधुनेत्यनेन गुणप्रकरणेनावसरसङ्गतिस्सूच्यते। अनन्तरसङ्गतिस्तु यथादूरस्थाग्निष्टोमानुवादेनाग्निविधिरेवमग्निहोत्राद्यनुवादेन न मासादिविधिरित्यापवादिकी ज्ञेया। कुण्डपायिनामयनमिति सत्रविशेषनाम। उपसदो नामेष्टिविशेषाः। चरित्वा तत्प्रयोगं कृत्वेत्यर्थः। नैयमिके यावज्जीवं कर्तव्यत्वेन बिहिते। प्रकरणान्तरं लक्षयन्नेव तद्भेदकत्वसंशयस्य पूर्वसंशयहेतुतामाह—तदर्थञ्चेति। अनुपादेयेति। उपादेयगुणसम्बन्धाभावानुगृहीत इत्यर्थः। यथाश्रुतेऽनुपादेयगुणस्यैवासन्निधिसहकृतस्य भेदकत्वापत्त्या षष्ठप्रमाणाभावप्रसङ्गात्। ननु मासस्य कृत्यसाध्यत्वात्कथं बिधेयतेत्याशङ्क्याह—उपादेयमिति। उपादेयत्वं कृतिविषयत्वतदाश्रयत्वान्यतरवत्वं तदभावोऽनुपादेयत्वम्। तत्र विधिः शास्त्रतयाऽप्राप्तविषयः, 'अप्राप्ते शास्त्रमर्थवत्' इति न्यायात्। यद्यपि प्रवर्तनारूपत्वात्स्वविषयस्य प्रवृत्तिसाध्यतारूपमुपादेयत्वमपि बोधयति, तथापि कालादावयोग्यत्वात्प्रयोगाधिकरणत्वमात्रमवगमयतीति विधेयत्वमुपपद्यत इति भावः। ननु उद्देश्यत्वविधेयत्वयोर्विरोधात्कालस्य च यो मासस्तत्र कर्म कुर्यादि-

---

१ सन्देह इति क. २ अप्राप्तत्वादिति क.

अतो यद्यपि स्वभावतोऽनुपादेयं मासमुद्दिश्य कर्मोपादीयते। तथापि मास एव विधेयः न कर्म। विधिनिबन्धनश्च भेदो नोपादाननिबन्धनः। तस्मादुपादेयमपि कर्माविधीयमानं न भिद्यत इति प्राप्तेऽभिधीयते—प्रकरणान्तरे प्रयोजनान्यत्वम् इति। किमिदं प्रकरणान्तरम् इति? अप्रकृताभिधानमित्यर्थः। कथमप्रकृताभिधानम्? 'उपसद्भिश्चरित्वा' इति वचनात्। न हि नैयमिकस्योपसदस्सन्ति। तत्र ताश्च मासश्चेत्यनेको गुणः, प्राप्ते कर्मणि न शक्यते विधातुमिति कर्मान्तम्। अत्र चाप्रकृताभिधानादेव प्रकरणान्तरपर्यायाद्भेदः, अप्रकृताभिधानं तु गुणादिति, न गुणाद्भेदः। यद्येवं वाजिभ्यो वाजिनमित्यत्राप्यप्रकृताभिधानादेव प्रकरणान्तरपर्यायाद्भेदः। अप्रकृताभिधानं तु पूर्वकर्मसंयोगिनो गुणादिति। तत्रापि प्रकरणान्तरमेव भेदकं स्यात्न गुणः। तथा शब्दान्तराभ्याससंज्ञाभिरप्यप्रकृतविषयतैव विधेर्बोध्यते। न साक्षाद्भेदः। स तु विधेरप्रकृतविषयत्वात्सिध्यतीति सर्वत्र प्रकरणान्तरमेव भेदकं स्यात्न शब्दान्तरादयः। अथ तेषामेतदेव भेदकत्वं, यद्विधेरप्रकृतविषयत्वापादनम्। एवं सत्यत्रापि गुणादेव तत्सिद्धेः। स एव भेदकस्स्यादिति न प्रकरणान्तरं, शब्दान्तरादिभिस्सह संख्यातुं युज्यते। तद्धि साक्षाद्भेदकं सर्वत्रान्ये तु तद्धेतव इत्यतुल्यत्वात्कथं सह गणनम्? अपि च 'मासं दर्शपूर्णमासाभ्यां यजेत' इत्यत्रानेकगुणाभावान्नाप्रकृताभिधानं सिध्येत्। तस्मान्नाप्रकृताभिधानं प्रकरणान्तरं, किन्त्वन्यदेव गुणादिवत्प्रकृतानभिधानहेतुभूतमिति वक्तव्यम्। किं पुनस्तत् पूर्वकर्मासन्निधानम्? कथं पुनस्तेन भेदसिद्धिः? उच्यते—

---

त्युद्देश्यत्वात्कथं विधेयतेत्याशङ्क्याह—अत इति। तथाचोद्देश्यत्वविधेयत्वयोर्न विरोधः, किन्तूद्देश्यत्वोपादेयत्वयोरेवेत्यर्थः। विधीति। उत्पत्तिविधिनिबन्धन इत्यर्थः। नोपादानेति। न कृतिसाध्यताबोधकप्रयोगविधिनिबन्धन इत्यर्थः। अविधीयमानम्—अनुत्पाद्यमानम्। प्रकृतोपस्थितावन्यप्रकरणपाठस्याभेदकत्वात्पृच्छति—किमिदमिति। अप्रकृतेति। प्रकृतानभिधानमित्यर्थः। यथाश्रुतस्यार्थस्य भेदसिद्धेः प्रागनुपपत्तेः। एवमग्रेऽप्यूह्यम्। अग्निहोत्रशब्देनैव प्रकृताभिधानात्कथं तदभाव इत्याक्षिपति—कथमिति। नैयमिकस्य नित्याग्निहोत्रस्य। नन्वेवं सति वाक्यभेदापादको गुण एव भेदकः स्यादिति शङ्कामपाकरोति—अत्र चेति। तथा च गुणः प्रकरणान्तरोत्थापकतयान्यथासिद्ध इत्यर्थः। एवं यथाश्रुतभाष्यार्थं दूषयति—यद्येवमिति। वार्त्तिककृन्मतेन सिद्धान्तमाह-असन्निधानमिति। अनुपस्थितिरित्यर्थः। यदाहवनीये जुहोतीत्यादावसन्निधानेऽपि कर्मभेदाभावात्कथमेतद् भेदसाधकमित्याक्षिपति—कथं पुनरिति—असन्निधानमुत्सर्गतो भेदकमेव। क्वचित्तु तदपवाद इति समाधत्ते[1]—उच्यत इति। पूर्वार्धेनोत्सर्गः, उत्त-

---

१ यत्र पूर्वकर्म सन्निहितं। तत्र तदनुवादेन गुणविधिः। यथा 'दध्ना जुहोति' इत्यादौ। यत्र च कर्म न सन्निहितं। तत्र पूर्वकर्मप्रत्यभिज्ञाभावेन गुणविधित्वासम्भवाद्भावार्थाधिकरणन्यायेन शास्त्रार्थविध्यवश्यम्भावाद्विहितस्य विध्यसम्भवेन सिध्यति कर्मभेद इति समाधानस्याशयः।

**कर्मासन्निहितं नैव बुद्धौ विपरिवर्त्तते।**
**शब्दात्तु तदुपस्थानमुपादेये गुणे भवेत् ॥**

असन्निहितं तावत्कर्म न बुद्धौ विपरिवर्त्तते; तादृशमपि कथञ्चिज्जुहोतीति प्राप्तवन्निर्देशेन दूरस्थमप्युपस्थाप्येत, यदि विधित्सितो गुण उपादेयस्स्यादाहवनीयादिवत्तत्र ह्येदृशी वचनव्यक्तिः शक्यते दर्शयितुम्—यज्जुहोति तदाहवनीय इति।

**यत्र वाक्येऽनुपादेयो देशकालादिको गुणः।**
**श्रुतः, न तत्र दूरस्थकर्मोपस्थानसंभवः ॥**

यत्कुर्यादित्येवं प्राप्तवन्निर्देशेन दूरस्थकर्मोपस्थानं स्यात्तथा च तस्योद्देशान्मासस्तत्रोपादेयः। न च होमानुरोधेन मासः सम्पादयितुं शक्यते। तेनैषा वचनव्यक्तिः, यो मासस्तत्र होमं कुर्यादिति। तेन शब्दस्वरसतः प्राप्तोपस्थानानवगमात्सन्निधानाभावाच्च क्रियैव विधातव्येति कर्मभेदः। एवं 'सरस्वत्या दक्षिणेन तीरेणाग्नेयोऽष्टाकपालः' 'सत्रायाऽवगूर्य विश्वजिता यजेत' इति देशनिमित्तयोरपि द्रष्टव्यम्। ननु नामधेयेन भवति पूर्वकर्मण उपस्थानम्। भवतु धात्वर्थस्य, भावना तु तेनानुपस्थानाद्भिद्यत एव। धात्वर्थोऽपि यादृशो धातुनाख्यातवर्तिना पूर्वापरीभूतो विधेरुपादीयते[1] न तादृशो नाम्न उपस्थाप्यत इति। तस्यापि युक्तो भेदः तदभेदेऽपि तावद्भावना भिन्नेति सिद्धम् ॥ इति प्रकरणान्तराधिकरणम् ॥ ११ ॥

---

रार्धेन च तदपवाद उक्त उपादेयगुणयोगे। तत्रोपादेयगुणविध्यनुरोधेन कर्मानुवादापेक्षायां दूरस्थस्यापि बुद्धिविषयत्वसिद्धेरनुवादस्य प्राप्तविषयत्वात्। एतदेव कथञ्चिदित्यनेनोक्तम्। अपवादं प्रपञ्चयति—यत्रेति। उपादेयत्वं ह्युद्देश्यसापेक्षमिति तद्बलेन दूरस्थस्याप्युपस्थानम्। न च मासादेरुपादेयत्वमस्ति। यद्बलेनोद्देश्यतया कर्मोपस्थानं स्यादिति भावः। एवञ्च परिशेषात्कर्मण एवोपादेयत्वं, मासस्य तु स्वरूपतस्सिद्धस्योद्देश्यत्वमित्याह—यो मास इति। नन्वस्तु कर्मण एवोपादेयत्वम्, विधेयत्वन्तु मासस्यैवाधिकरणतया ज्ञाप्यत्वरूपमिति कर्मोत्पत्त्यविधानान्न भेदस्स्यादत आह—तेनेति। कर्मणोऽवश्यमुपादेयत्वेनेत्यर्थः। शब्दस्वरसतः उद्देश्यबोधकत्वसामर्थ्यात्। क्रियैवेत्येवकारो विधातव्यैवेति सम्बन्धनीयः। उपादेयत्वस्य हि विधेयत्वसामानाधिकरण्यमुत्सर्गसिद्धमपवादाभावेन बाधनीयमिति भावः। कालवद्देशनिमित्तयोरनुपादेययोरुदाहरणेऽपि बोध्यमित्याह—एवमिति। आगूर्य सङ्कल्प्य। अत्र सत्रं सङ्कल्प्य तदकरणं निमित्तमिति दशमे वक्ष्यते। जुहोतिना दूरस्थहोमाप्रत्यभिज्ञानेऽपि नाम्ना प्रत्यभिज्ञानादभेदमाशङ्क्यापाततो धात्वर्थभेदमङ्गीकृत्य भावनाभेदसिद्धिमाह—नन्वित्यादिना। वस्तुतो धात्वर्थोऽपि भिद्यत एवेत्याह—धात्वर्थोऽपि चेति। पूर्वापरीभूतः साध्यक्रियारूपो लिङ्गसंख्यान्वयायोग्यः। ननु 'सर्वेभ्यो ज्योतिष्टोमः' इत्यादौ क्रियापदाभावान्नाम्नैव प्राप्तज्योतिष्टोमस्य फलसम्बन्धमात्रं, तत्र यागभेदे मानाभाव इत्याशङ्क्याह—तदभेदेऽपीति। भावनाभेदमात्रमेव तत्रेष्टमित्यर्थः। प्रयोजनं सूत्रञ्च स्पष्टम्।

॥ इति प्रकरणान्तराधिकरणम् ॥ ११ ॥

---

१. उपनीयत इति क.

## १२

सू० फलं—'आग्नेयमष्टाकपालं निर्वपेद् रुक्काम' इत्यनारभ्य श्रुतम्। तथा 'त्रैधातव्या दीक्षणीया' इत्यश्वमेधे। तत्रापि पूर्ववत्संशयः—किं प्रकृत आग्नेये फलविधिः, काम्ये च त्रैधातवीये कर्मणि दीक्षणीयाकार्ययजमानसंस्कारविधिः? उत कर्मान्तरविधिः? इति। तदिह यः पूर्वत्र प्रकरणान्तरग्रहणात्तदेव भेदकं, नासन्निधानमात्रमिति मन्यते। यो वा फलस्योपादेयत्वं मन्यते, शक्यते तद्दर्शपूर्णमासस्थेनापि कामयितुम्। न मासादिवदशक्यसम्पादनमिति[1] तन्निराकरणार्थमिदमधिकरणम्। पूर्वत्राप्यविपरिवृत्तिकारणत्वादसन्निधानमेव कारणं, न प्रकरणान्तरं, सदपि तन्न व्याप्रियते। तच्चासन्निधानमत्राप्यविशिष्टम्। यद्यपि[2] च फलं शक्यते कामयितुं, तथापि स्वरसादेव तत्काममुद्दिश्य साधनमेवोपादेयं, न फलं, फलत्वव्याघातात्। विधीय-

---

फलञ्च—रुक्काम इति रुक् कान्तिः। त्रैधातव्या इष्टिविशेषः। तस्याश्च दीक्षणीयेष्टिरूपत्वाभावाज्जघन्ये दीक्षणीयापदे तत्कार्ययजमानसंस्कारलक्षणा। तथा च त्रैधातव्या दीक्षणी- याकायकारिणीत्यर्थः। आतिदेशिकीं सङ्गतिं सूचयन्नाह—तत्रापीति। कर्मान्तरेति आग्नेयान्तरत्रैधातव्यान्ततेत्यर्थः। ननु सूत्रान्तरवैयर्थ्यम्, कालदेशनिमित्तफलसंस्कार्याणां पञ्चानामप्यनुपादेयत्वमित्याशङ्क्याह—तदिहेति। प्रकरणान्तरशब्देन हि अन्यत्प्रकरणमुच्यते, तेन क्रत्वन्तरप्रकरणगतानां भेदः। रुक्कामवाक्यन्त्वनारभ्याधीतत्वान्न प्रकरणान्तरस्य विषय इत्यधिकाशङ्कानिरासार्थं सूत्रान्तरमित्यर्थः। त्रैधातव्याद्युदाहरणेष्वेतच्छङ्काऽसम्भवाच्छङ्कान्तरमाह—यो वेति। फलस्येति संस्कार्योपलक्षणम्। उपपत्तिमाह—शक्यत इति। कामयितुमित्यनेनोद्देशात्मकक्रियाविष्टतया देवतावत्फलसंस्कार्ययोरप्युपादेयत्वसम्भव उक्तः। आद्याशङ्कां निरस्यति—पूर्वत्रापीति। अविपरिवृत्तिः अनुपस्थितिः। असन्निधानं दूरस्थत्वम्। द्वितीयाशङ्कां निरस्यति-यद्यपीति। देवतोद्देशस्त्वप्राप्तत्वादुपादेयताप्रयोजक इति वैषम्यमिति भावः। फलत्वेति। प्राधान्येत्यर्थः। अत[3] एवाह—विधियमानं हीति। संस्कार्यमपि विध्यन्तरप्राप्तत्वान्नोपादेयमित्याह—एवमिति। संस्कारे संस्कारवाक्ये। आग्नेये आग्नेयपदे। यौगिकमात्रत्वादिति

---

१. आदीति नास्ति क. २. चेति नास्ति क, ख.

३. विधेयत्वे देशकालवदेवाङ्गं स्यात्, तस्माद् देशकालयोरुद्देश्यत्वेऽपि कर्मणस्तत्र अनुष्ठेयतया तद्विशिष्टरूपेण तयोरपि विध्यधीनप्रवृत्तिविषयतया विधेयत्वमुपपद्यते, फलस्य तु स्वारसिकप्रवृत्तिवियत्वलक्षणप्रयोजनरूपेणोद्देश्यत्वम्। तच्च विधेयत्वविरोधि विधेयत्वे विध्यधीनप्रवृत्तिविषयत्वापत्या स्वारसिकप्रवृत्तिविषयत्वरूपप्रयोजनत्वव्याघातादिति वैषम्यमिति भावः।

मानं हि तदङ्गमेव स्यात् । एवं संस्कारेऽपि द्रष्टव्यम् । न चाग्नेयेऽग्निहोत्रवन्नामधेयत्वमस्ति येनाभेदाशङ्कापि तावत्स्यात् । तस्मादत्रापि कर्मभेदः ॥

॥ इति फलसंस्कार्याधिकरणम् ॥ १२ ॥

१३

**सू० सन्निधौ**—सर्वेषामेव देशकालनिमित्तफलसंस्कार्याणां सन्निधौ[1] प्रत्युदाहरणार्थमिदमारभ्यते । 'समे दर्शपूर्णमासाभ्यां यजेत, पौर्णमास्यां पौर्णमास्या यजेत, यावज्जीवं दर्शपूर्णमासाभ्यां यजेत, एतयान्नाद्यकामं याजयेत्, शेषात्स्विष्टकृते समवद्यति' इति । तत्र संशयः–कर्मसन्निधौ किं देशादिसम्बन्धे कर्मभेदो भवति ? उत प्रकृतमेव कर्म देशादिषु विधीयत ? इति विचारः । किं प्राप्तम्—

**अत्रापि तावद्देशादेरुद्देशात्कर्म तत्प्रति ।**
**उपादेयं तथा च स्याद्विधेयं तेन भिद्यते ॥**

विधानमेवोपादनं नान्यत् । अत्र च देशादेरुद्देश्यत्वात्कर्मावश्यमुपादेयम् । अतश्च विधेयत्व.पत्तेर्विहितस्य विधानायोगात्सत्यपि सन्निधौ कर्मान्तरमिति प्राप्ते ब्रूमः—

**सन्निधावविभक्तत्वं कर्मणः प्रत्यभिज्ञया ।**
**गम्यते तेन तस्यैव फलाद्यर्था पुनःश्रुतिः ॥**

निर्देशगतस्वातन्त्र्यपारतन्त्र्यात्मके उद्देशोपादाने, प्राप्त्यप्राप्तिवशौ तु विध्य-

---

भावः । प्रयोजनं स्फुटमेव[2] । फलञ्च शब्दात्संस्कार्यञ्च कर्मसन्निधानाभावे भेदकमित्यध्याहारेण सूत्रार्थः ।

॥ इति फलसंस्कार्याधिकरणम् ॥ १२ ॥

सन्निधौ—सङ्गतिमाह—सर्वेषामिति । समे समदेशे । एतया पूर्वोदाहृतावेष्टिनामकयेष्ट्या । शेषात् यागावशिष्टपुरोडाशात् । स्विष्टकृते एतद्गुणकायाग्नये । 'स्विष्टकृतं यजति' इति विहितस्य स्विष्टकृद्यागस्य शेषरूपसंस्कार्यसम्बन्धार्थमिदं वचनम् । उपादेयत्वेऽपि न विधेयत्वमित्याशङ्कयाह—विधानमेवेति । विधेयत्वोपादेयत्वयोर्भेदमुपपादयति–निर्देशेति निर्दिश्यमानगतेत्यर्थः । स्वातन्त्र्यं श्रूयमाणकृत्यनधीनत्वम् । तदधीनत्वञ्च पारतन्त्र्यम् । अस्ति चेदं सर्वत्रोद्देश्ये । मासादेः कृतिसामान्यानधीनत्वात् । 'दध्ना जुहोति' इत्यादौ होमादेरपि तद्वाक्यश्रुतकृत्यनधीनत्वात् । होमस्य हि अग्निहोत्रवाक्यश्रुतकृत्यनधीनत्वमेव, न तु दधिवाक्यश्रुतकृत्यधीनतया निर्देश इति भावः । प्राप्त्यप्राप्तीति । निर्दिश्यमानगतप्राप्त्याप्राप्तिप्रयुक्ताविधेयत्वानीत्यर्थः ।

---

१. मसन्निधिप्रत्यु इति ग.

२. 'शक्यते हि तद्दर्शपूर्णमासस्थेनापि कामयितुम्' इति मूलेनैव—रुक्कामार्थं न पृथक्प्रयोगः, किन्तु गुणफलवद्दर्शपूर्णमासप्रयोगेणैव तत्सिद्धिः पूर्वपक्षे, सिद्धान्ते तु कर्मान्तरत्वात्पृथक्प्रयोग इति प्रयोजनं सूचितमित्याह –स्फुटमेवेति ।

नुवादौ। अतस्तयोः ताभ्यां भेदादुपादेयमपि देशकालयोः कर्म पूर्वप्राप्तं तद्रूपमेव प्रत्यभिज्ञायत इत्यनुवाद्यम्। तस्य तूद्देश्याभ्यामपि देशकालाभ्यां सम्बन्धमात्रमप्राप्तमिति तन्मात्रं विधीयत इति न कर्मभेदस्स्यात्। अस्तु तावद्देशकालयोर्विधेयत्वात्कर्मणोऽनुवादः। निमित्तफलसंस्कार्याणां त्वविधेयत्वात्कर्मैव विधेयमिति भेदस्स्यात्।

**सत्यं कर्म विधातव्यं तथापि तु न भिद्यते।**
**उत्पत्तिविधिभेदे हि भेदो नास्ति च सोऽत्र नः॥**

कर्मस्वरूपगताप्रवृत्तप्रवर्त्तनमुत्पत्तिः। न चैकस्मिन्कर्मणि उभाभ्यामप्रवृत्तप्रवर्त्तनं सम्भवतीति कर्मभेदस्स्यात्, सम्भवति त्वन्येनाप्युत्पादितस्यान्येन निमित्तादिसम्बन्धमात्रप्रतिपादनम्, कर्त्तव्यतामात्रं ह्युत्पत्तिवाक्यादवगतम्। तत्र किं कस्मिन् निमित्ते कस्मै वा कामायेति विशेषापेक्षायामुत्पन्नस्यैव कर्मणो नैमित्तिकी कर्त्तव्यता

---

त्वर्थः। उपादेयमपीति। देशकालयोरधिकरणयोः क्रत्यधीनतया बोधितमपीत्यर्थः प्रत्यभिज्ञायत इति हेतोः प्राप्तं तस्माच्चानुवाद्यमित्यर्थः, न तूपादेयत्वेऽपि विधेयमिमिति भावः। ननूपादेयत्वं विधेयत्वञ्च द्वयं विधिबोध्यम्। तत्रोपादेयत्वस्य कर्मणि बोधनेऽपि विधेयत्वं कस्य बोध्यमित्याशङ्क्याह—तस्य त्विति। कर्मण इत्यर्थः। उपादेयत्वसामानाधिकरण्यं हि विधेयत्वस्यौत्सर्गिकं तदिह सन्निधानेनापोद्यत इति भावः। ननु देशकालयोरुत्पत्तिविधिविषयत्वासम्भवेऽप्यङ्गत्वाद्विनियोगविधिविषयत्वमालोचनसमीपगमनादिक्रियावेशेन सम्भवेत्, निमित्तादीनान्तु न कथञ्चिदिति कर्मैव विधेयमित्याशङ्कते—अस्तु तावदिति। कर्मणो विधिविषयतामङ्गीकृत्य समाधत्ते—सत्यमिति। विधातव्यं विधिविषयः। कथं तर्हि न भेदस्तत्राह—उत्पत्तीति। प्रवर्तनाबोधकस्य हि विधेर्विषयभेदाच्चत्वारो भेदाः—उत्पत्तिविधिर्विनियोगविधिः प्रयोगविधिरधिकारविधिरिति। तत्र तद्विषयकाज्ञातकर्तव्यताज्ञापनमुत्पत्तिविधिः—'अग्निहोत्रं जुहोति' इत्यादौ। फलादिरूपाङ्गिसम्बन्धितया कर्तव्यताज्ञापनं विनियोगविधिः—'स्वर्गकामो यजेत' 'व्रीहिभिर्यजेत' इत्यादौ। यागादिस्वरूपकर्तव्यताया मानान्तरेण ज्ञातत्वात् व्रीह्यादावसम्भवाच्चाङ्गाङ्गिसम्बन्धमात्र एव विधेस्तात्पर्यं प्राप्ताप्राप्तविवेकेन गृह्यते। देशकालकर्त्रादिसम्बन्धित्वेन साङ्गकर्तव्यताज्ञापनं प्रयोगविधिरुदाहृत एव। तत्रापि देशकालकर्तृरूपाङ्गसम्बन्ध इवाङ्गसाहित्येऽपि तात्पर्यात्। एवं यावज्जीवमित्यादौ निमित्तसम्बन्धपरतया जीवतोऽधिकारज्ञापनादधिकारविधिः। अयञ्च फलवाक्ये सर्वत्र विनियोगविधिसङ्कीर्णो ज्ञेयः। एतेषु चाद्य[1] एव भेदको नान्य इति भावः। कर्तव्यः

---

१. 'मासमग्निहोत्रं जुहोति' इत्यादावपि प्रयोगविधिरेव नोत्पत्तिविधिरित्यसन्निधानस्थलेऽपि भेदो न स्यादिति यद्यपि शङ्कोदियात्, तथापि प्रयोगस्योत्पत्त्यपेक्षितत्वात् सन्निहितोत्पत्त्यभावेऽयमेव 'मासमग्निहोत्रम्' इति विधिरुत्पत्तावपि व्याप्रियत इति स्वीकर्तव्यम्।

निमित्तवाक्ये प्रतिपाद्यते, फलविनियोगश्च फलवाक्ये, संस्कारविनियोगश्च तद्वाक्य इत्यकर्मभेदः ।। इति प्रकरणान्तप्रत्युदाहरणाधिकरणम् ।। १३ ।।

## १४

सू० आग्नेय—दर्शपूर्णमासयोः 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्याञ्चाच्युतो भवति' इति कालद्वययुक्तमाग्नेयस्यैकं वचनम्, अपरन्तु 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवति' इत्येककालयुक्तम् । तत्र संशयः–किमुभयत्र विहितादाग्नेयात्कर्मान्तरमिदममावास्यायां विहितम् ? उत तस्यैवानुवादः ? इति । तत्राभ्यासात्कर्मान्तरम् । ननु तत्राविशेषाद्भेदः, न हि तत्रैवं शक्यं वक्तुम्–एवमर्थेन पुनःश्रुतिरेषेति विशेषाग्रदणात्सर्वे विधयः । इह त्वस्ति विशेषग्रहणं कालद्वययुक्तस्येतरा पुनः श्रुतिः सम्भवति । न च विपर्ययः पौर्णमास्याधिक्यादिति । नैवम् ; न हि तत्राविशेषाद्भेदः, समिद्वाक्यस्य प्राथम्येन विशेषग्रहणाद्विधिपुनःश्रुतिबलात्तत्र भेदः । किञ्चात्रापि न विशेषग्रहणम्, किमुभयकालयुक्तेन विहितस्येतरोऽनुवादः ? किं वा केवलामावास्यायुक्तेन विहितममावास्यायामाग्नेयमनूद्य तरेण केवलपौर्णमासीकालाग्नेयविधिरिति । तस्मात्कर्मान्तरमिति प्राप्ते ब्रूमः—

---

तामात्रं कर्तव्यतासामान्यम् । प्रयोजनं स्पष्टम्[1] । सन्निधावविभागादभेदात्फलाद्यर्थतया पुनः श्रुतिर्ज्ञेयेति सूत्रार्थः । फलपदञ्चानुपादेयमात्रोपलक्षणं बोध्यम् ।

॥ इति फलसंस्कार्याधिकरणम् ॥ १३ ॥

आग्नेयस्तु—इह 'अविभागात्तु कर्मण' इति सिद्धान्तसूत्रेणविभागादेव सिद्धान्तकथनादातिदेशिकी सङ्गतिः । सूत्रान्यरारम्भप्रयोजिकामधिकामाशङ्कामह—अभ्यासादिति । अविशेषेपुनःश्रुतिरूपाभ्यासलक्षणोऽविषपदार्थमन्यथा मन्वानः शङ्कते—नन्विति । उक्तमविशेषपदार्थं दूषयति–नैवमिति ! विधिश्रुतेर्बलमनन्यपरत्वम् । त्वदुक्तरीत्या अविशेषोऽप्यत्रास्ति इत्यभ्युपेत्यवादेनाह—किञ्चेति । ऐन्द्राग्नस्य पुरोडाशस्य प्रशंसेति । केवलाग्निदेवत्यस्य[2] प्राशस्त्ये सुतरामिन्द्रसहिताग्निदैवत्यस्य प्राशस्त्यमिति ऐन्द्राग्नविध्येकवाक्यतया तदर्थवादोऽयम्

---

१. पौर्णमास्यादिवाक्येषु कर्मान्तरविधौ कर्माधिक्यं पूर्वपक्षे, सिद्धान्ते तु तदभाव इति स्पष्टम् ।

२. अमावास्यायां केवलाग्निदेवत्योऽपि प्रशस्तः, किमुतेन्द्रसहिताग्निदेवत्य इत्येवैन्द्राग्नयागप्रशंसार्थत्वात्पुनःश्रवणस्य विधिरेवात्र नास्तीति विधिपुनःश्रवणाभावादैन्द्राग्नविध्येकवाक्यतया तत्प्रशंसार्थं केवलामावास्यावाक्यमेवानुवाद इति विशेषग्रहसद्भावाच्च मात्राभ्यासन्यायाद् भेदः, किन्त्वर्थवाद एवेति भावः ।

कर्मणः प्रत्यभिज्ञानादविभागः प्रतीयते।
ऐन्द्राग्नस्य प्रशंसार्था तस्यैवैषां पुनःश्रुतिः॥
॥ इति आग्नेयस्तुत्यधिकरणताधिकरणम् ॥ १४ ॥

इति शास्त्रदीपिकायां द्वितीयस्याध्यायस्य तृतीयः पादः ॥

## द्वितीयाध्यायस्य चतुर्थः पादः

१

**सू० यावद्**—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति काम्यं प्रयोगं विधायाम्नायते 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति। तत्र संशयः—योऽयं यावज्जीविको धर्मो विधीयते, स किमभ्यासः कर्मार्थः? उत नियमः पुरुषार्थः? इति। पूर्वपक्षे काम्यस्यैव प्रयोगस्याभ्यासविधिः' सिद्धान्ते प्रयोगान्तरं नित्यं विधीयत इति भेदप्रसङ्गात् प्रयोगभेदाभेदचिन्ता। तत्र कर्माङ्गविधौ कर्मकथम्भावसम्बन्धात्प्रकरणानुग्रहः, पुरुषार्थविधौ तु तदसम्बन्धात्प्रकरणबाधस्स्यात् अतोऽभ्यासविधिः—यावज्जीवं यागमभ्यसेदिति। नैतद्युक्तम्;

यावज्जीवपदे काललक्षणैव प्रसज्यते।
यजिना च तदभ्यासलक्षणा प्रक्रियावशात्॥

इत्यर्थः। पूर्वपक्षे अमावस्यायां चत्वारि प्रधानकर्माणि, सिद्धान्ते तु त्रीण्येवेति स्पष्टं प्रयोजनम्। आग्नेयस्त्वभ्यासेन भिन्नः प्रतीयेत, अभ्यासहेतोरुक्तत्वादिति सूत्रार्थः।
॥ इति आग्नेयस्तुत्यधिकरणम् ॥१४॥

इति श्रीमत्पदवाक्यप्रमाणाभिज्ञश्रीमत्तत्सद्रामभद्रात्मज-
वैद्यनाथकृतायां शास्त्रदीपिकाटीकायां प्रभाख्यायां
द्वितीयाध्यायस्य तृतीयः पादः॥

द्वितीयाध्यायस्य चतुर्थः पादः

यावत्—यावज्जीविक इति। यावज्जीवं भवो यावज्जीविकः। धर्मोऽपूर्वसाधनम्। अभ्यासः प्रयोगावृत्तिरूपः। नियमः यदा यदा जीवनं तदा तदा दर्शपूर्णमासावित्येवं रूपः—पुरुषार्थः पुरुषाभिलषितपापक्षयार्थः। अध्यायसङ्गतिमाह—पूर्वेति। अभ्यासविधिरित्यनन्तरं अङ्गत्वेनेति शेषः। भेदस्य चानुपादेयान्वयनिमित्तत्वात्प्रसङ्गरूपानन्तरसङ्गतिर्ज्ञेया। कर्माङ्गविधौ—कर्माङ्गत्वेनाभ्यासविधौ। कथंभावः इतिकर्तव्यताकाङ्क्षा। तदसम्बन्धात्—इतिकर्तव्यताकांक्षारूपप्रकरणासम्बन्धात्। अभ्यासलक्षणेति। अभ्यासस्य ह्यङ्गत्वं न विधानं विना। तच्च नाश्रुतस्येत्यवश्यं लक्षणाध्याहारो वा स्वीकर्तव्य इति भावः। न च याव-

न हि प्रकरणवशेन श्रुतेर्लक्षणार्थता न्याय्या। त्वत्पक्षे च जीवनवाचिना तत्सम्बद्धः कालो लक्ष्यते, यजिना च यागाभ्यासः। न चैतन्न्याय्यं, तस्माज्जीवने निमित्ते पुरुषस्य प्रत्यवायपरिहाराय दर्शपूर्णमासप्रयोगो विधीयते। जीवनञ्च यावद्विनिपातं नियतमिति नियतनिमित्तत्वान्नियमो विधीयते पुरुषार्थः॥

॥ इति यावज्जीवाधिकरणम्॥ १॥

२

**स नाम०**—शाखान्तरेषु किमग्निहोत्रादिकर्म भिद्यते? किं वा सर्वशाखास्वेकमेव? इति विचारः। तत्राविशेषात्पुनःश्रुतिलक्षणादभ्यासाद् दूरत्वलक्षणाच्च प्रकरणान्तराद् भेदः। तथा गुणादपि क्वचित् 'ऐन्द्राग्नमेकादशकपालं निर्वपेदि' ति श्रुतं, क्वचिद् 'द्वादशकपालमि'ति। तत्रावश्यमन्यतरेण कर्मोत्पादयितव्यं, येन चोत्पादितं तद्गतो गुण उत्पत्तिशिष्टः। इतरस्तु तत्र निवेशमलभमानो वाजिनवत्कर्मान्तिरं कल्पयतीति प्राप्ते ब्रूमः—

**विधेः कर्मार्थतामात्रं पुनःश्रुत्यादिभिर्भवेत्।**
**तावन्मात्रमिहापि स्यान्न तु भेदः प्रसिद्ध्यति॥**

पुनःश्रुत्या हि कर्म विधेयमित्येतावत्सिद्ध्यति, विधिवशात्तु भेदः, विहितस्य विधानायोगात्। एवमसन्निधावपि विपरिवृत्त्यभावात्कर्मविधानं, विधानाच्च भेदः। तदिहापि कर्मविधिः पुनःश्रुत्यादिना सिध्येत्, न त्वत्र विधिवशाद् भेदसिद्धिः, विहितस्यापि

---

त्पदोक्ता जीवनकालव्यापकतैव यागाङ्गत्वेन विधेयेति वाच्यम्, तस्यास्साक्षात्कर्मस्वरूपान्वयायोग्यतया द्वारभूताभ्यासाध्याहारस्य लक्षणाया वावश्यकत्वात्। प्रत्यवायः पापं। तस्य परिहारः क्षयः 'धर्मेण पापमपनुदति' इति सामान्यतः क्लृप्तत्वात्। अकरणजन्यप्रत्यवायप्रागभावस्यानादितया भावनाभाव्यत्वायोगाच्चेति। नियम इति। नियतनिमित्ताक्षिप्तावश्यकत्वापरपर्याय इत्यर्थः। प्रयोजनम्-सौर्यादिविकृतौ यावज्जीविकोऽभ्यासः पूर्वपक्षे, सिद्धान्ते तु नेति। सूत्रं स्पष्टार्थम्॥ इति यावज्जीवाधिकरणम्॥ १॥

नामरूप—आपवादिकीं सङ्गतिं सूचयन् विचार्यमाह—शाखान्तरेष्विति। अत्र भेदकप्रमाणेषु गुणाभ्यासौ रूपपुनरुक्तिशब्दाभ्यां सूत्रोपात्तौ, प्रकरणान्तरन्तु सूत्रानुक्तमपि स्वयमुक्तम्। नामधेयं तु सूत्रोक्तमपि काठकादिरूपं शाखावाच्येव, लक्षणया तु कर्मणि प्रयोग इति कर्मभेदासाधकत्वादुपेक्षितम्। तथा विशेषोऽपि भेदकप्रमाणानन्तर्गतत्वादुपेक्षितः। यथा कारीरीष्टिवाक्याध्ययने तैत्तिरीयाणां भूमौ भोजनं नान्येषामिति। तच्चाध्ययनाङ्गं। न तु कर्माङ्गं, येन भेदकं स्यादिति। एवम् उदितानुदितहोमनिन्दापि नहिनिन्दान्यायेदार्थवादत्वादुपेक्षिता। एवं शाखाभेदेऽपि कर्मैक्ये सर्वाङ्गोपसंहाराशक्तिरपि न भेदहेतुः। बहूनामङ्गानां समानत्वादल्पाधिक्येन चाशक्तेरसम्भवादिति तदुपेक्षा। एवमत्रास्माकमग्निः परिसमाप्यते नात्रेति समाप्तिवचनमपि अस्माकं योऽग्निरित्यन्वयात् योऽग्निस्सोऽस्माकमत्र समाप्यत इत्यन्व-

पुरुषान्तरं प्रति विधिसम्भवात्। यथा खल्वेकशाखागतमग्निहोत्रादिवाक्यमेकस्य पुरुषस्य विहितमेव परस्यापि विधत्ते। न कर्मान्तरम्, एवमत्रापि अध्येतृभेदात्तान्प्रति सर्वाण्येव वाक्यान्येकमेव कर्म विदधति। न कर्मान्तरम्, एवमेकादशद्वादशकपालयो-रुभयोरुत्पत्तिशिष्टत्वान्न बलाबलम्, तस्माद् भेदः।

शब्दान्तराभ्यासगुणैः ससंख्यैर्नाम्नातिदूरेण च सापवादः।
भेदः क्रियाणामिति साधितोऽयमतः परं तद्विनियोगचिन्ता॥

॥ इति शाखान्तराधिकरणम् ॥ २ ॥

इति श्रीमहामहोपाध्यायश्रीपार्थसारथिमिश्रविरचितायां
शास्त्रदीपिकायां द्वितीयस्याध्यायस्य चतुर्थः पादः॥

इति द्वितीयोऽध्यायस्समाप्तः॥

येन चाभेदेऽप्युपपत्तेः शाखाव्यवस्थया च समाप्तिभेदोपपत्तेरुपेक्षितम्। अग्निः चयनम्। एवमुदितहोमिनामनुदितहोमे प्रायश्चित्तमपि। उपक्रमे सङ्कल्पितस्य बाधादुपपन्नं न भेदहेतुरित्युपेक्षितम्। अन्यार्थदर्शनं नाम लिङ्गदर्शनम्। यथा कस्याञ्चिच्छाखायां द्वादशाहे। अथ-यद्यदीक्षणा इत्यदीक्षादर्शनं भेदहेतुः। द्वादशाहैक्ये हि 'एष वा व प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः, य एतेनानिष्ट्वाथान्येन यजते गर्तपत्यमेव तद्भवति' इति ताण्डकशाखावचने नन्येषामिव द्वादशाहस्यापि ज्योतिष्टोमानन्तरत्वविधानाददीक्षितत्वदर्शनानुपपत्तिः। भेदे तु ताण्डकविहितद्वादशाहस्यैव तद्वचनेन ज्योतिष्टोमोत्तरताविधानाद्द्वादशाहान्तरस्य ततः प्रागप्यनुष्ठानसम्भवाददीक्षितवचनोपपत्तिरिति। तदिदं भेदेऽपि नोपपद्यते। ज्योतिष्टोमोत्तरत्ववचनस्थानारभ्याधीतत्वेन द्वादशाहमात्रे तद्विधानात्। स्वशाखागतत्वस्य च मानाभावेनोद्देश्यतानवच्छेदकत्वात्। तस्मात्पक्षद्वयेऽपि तदुपपत्तिरन्यथैव वक्तव्येति न तत्साधकमित्युपेक्षितम्। यद्यपि चाभ्यासादीनामपि सिद्धान्तरीत्या परिहारोऽस्ति, तथापि भेदकप्रमाणान्तर्गततया विशेषादुपन्यासः। अतएव सूत्रानुक्तमपि प्रकरणान्तरमुपन्यस्तमिति बोध्यम्। भेदकप्रमाणैर्हि स्ववाक्योपात्तस्य कर्मणो विधेयत्वं बोध्यते। विधिभेदस्त्वनुपपद्यमानः कर्मभेदं बोधयति। प्रकृते तु शाखाभेदेनाध्येतृभेदादेव विधिभेदोपपत्तेर्न कर्मभेद इति सिद्धान्तमाह—विधेरित्यादिना। न च शाखाभेदेनाध्येतृभेदे मानाभाव इति वाच्यम्। स्वैरधीयत इति व्युत्पत्त्या एकवचनेन च 'स्वाध्यायोऽध्येतव्य'[1] इति वाक्येन स्वशाखामात्राध्ययनस्यवावश्यकत्वबोधनादिति भावः। अध्यायार्थमुपसंहरति शब्दान्तरेति। अतिदूरेण प्रकरणान्तरेण। प्रयोजनमविरुद्धाङ्गानामुपसंहारः। सूत्रन्तु तत्तद्भेदहेतूपवर्णनेन व्याख्यातम्।

॥ इति शाखन्तराधिकरणम् ॥ २ ॥

इति श्रीमत्पदवाक्यप्रमाणाभिज्ञतत्सद्रामभट्टात्मजवैद्यनाथ-
कृतायां शस्त्रदीपिकाटीयां प्रभाख्यायां
द्वितीयाध्यायस्य चतुर्थः पादः॥

---

१. अधीयत इत्यध्यायः स्वश्चासावध्यायश्च स्वाध्यायः! स्वत्वञ्च पितृपितामहादिस्वकुलपरम्परागतत्वम्। ततश्च 'स्वाध्यायोऽध्येतव्य' इति स्वकीयशाखाध्ययनमात्रमेव विधीयते। स्वाध्यायस्याध्ययनसंस्कार्यस्याप्यर्थज्ञानं प्रत्युपादेयत्वेन तत्र स्वत्वस्यैकत्वस्य च विवक्षितत्वादेवैकैकस्य पुरुषस्यैकैकशाखाध्यायित्वात्तत्तच्छाखागतविधीनां तत्तदध्यायिपुरुषान् प्रत्यज्ञातज्ञापकत्वेनार्थवत्वादभ्यासन्यायाप्रवृत्त्या न भेद इति भावः।

## अथ तृतीयाध्यायस्य प्रथमः पादः

१

**सू० अथातः**—एवं सिद्धे भेदे शेषशेषित्वमिदानीं चिन्त्यते—भिन्नानां हि तत्सम्भवति नाभिन्नानामिति भेदलक्षणस्य हेतुत्वम्। यद्यपि व्रीहीनवहन्ति' 'सोमेन यजेत' इत्यादिषु द्रव्यकर्मणां शेषशेषिभावो न कर्मभेदापेक्षः। तथापि कर्मणामपि प्रयाजाग्नेयादीनां शेषशेषित्वमिहैव वक्तव्यमिति तत्सिद्ध्यर्थं भेदलक्षणापेक्षणम्। ननु चावघातस्यापि 'व्रीहिभिर्यजेत' इति शास्त्रान्तरार्थेन शेषशेषित्वचिन्ता। न व्रीहिपदार्थमात्रेण, शास्त्रभेदलक्षणञ्च पूर्वं वृत्तमिति भवति हेतुत्वम्। तत् किं व्रीहीनवहन्ति, व्रीहिभिर्यजेत' इत्यनयोः शास्त्रयोर्भेदोऽस्ति ? ओमिति चेत्—केन खलु ? न तावन्निरपेक्षसाध्यभेदोऽत्रास्ति, नाप्यनुबन्धभेदः। येन शास्त्रभेदः स्यात्। तस्माद्वाक्यान्तरत्वमेवात्र न शास्त्रान्तरत्वम्। न च वाक्यभेदलक्षणं पूर्वं वृत्तम्।

---

अथातः—सूत्रं व्याकुर्वन्नध्यायार्थमाह—एवमिति। भेद इति सतिसप्तम्याथशब्दस्यानन्तर्यार्थता दर्शिता। अतश्शब्दार्थमाह—भिन्नानामिति[1]। लक्षणं व्युत्पादनम्। शेषशेषित्वावच्छेदेन कर्मभेदहेतुकत्वाभावेऽपि तत्सामानाधिकरण्येन कर्मभेदस्य हेतुत्वसम्भवात्सङ्गत्युपपत्तिरित्याह—यद्यपीत्यादि। शेषत्वावच्छेदेनापि पूर्वाध्यायार्थस्य हेतुत्वं सम्भवतीति गुरुमतेन कश्चिच्छङ्कते—ननु चेति। शास्त्रान्तरेति। अवघातशास्त्रभिन्नेत्यर्थः। तावता कथं द्वितीयाध्यायार्थस्य हेतुता ? तत्राह—शास्त्रभेदेति। अत्रैवं गुरुमतम्-प्रथमाध्यायप्रतिपादितप्रामाण्यस्य शास्त्रस्यैव भेदः, साध्यानुबन्धभेदाभ्यां द्वितीये प्रतिपाद्यते, न कर्मभेदः, तस्य शास्त्रभेदफलत्वेनार्थसिद्धत्वात्। शास्त्रप्रामाण्यहेतुकश्च भेदः सामानाधिकरण्याच्छास्त्रस्यैवोचितो न कर्मणाम्। एकशास्त्रत्वे हि सर्वचोदनानामशक्यानुष्ठानार्थतयाऽप्रामाण्यप्रसङ्गात्सिद्धप्रामाण्यबलेन शास्त्रभेदसिद्धिः। साध्यानुबन्धभेदौ च तत्साधकौ। तत्र साध्यमुत्पत्तिप्राप्तिविकृतिसंस्कृतिकरणोपकारकरणावान्तरकार्यैश्वर्यलक्षणाधिकारभेदात्सप्तविधम्। तच्च निरपेक्षं भिद्यमानं शास्त्रभेदहेतुः। यथा 'पुरोडाशं संयौति' इत्यस्य पुरोडाशोत्पत्तिशास्त्रस्य 'पुरोडाशं चतुर्धा करोति' इति संस्कारशास्त्राद्भेदः, तन्निरपेक्षोत्पत्तिरूपसाध्यभेदात्। 'आग्नेयोऽष्टाकपालः' इति शास्त्रात्त्वभेद एव, तत्सापेक्षपुरोडाशोत्पत्तितात्पर्यवत्वात्। एवं 'पयो दोग्धि' इति पयःप्राप्तिशास्त्रस्य पयस्संस्कारशास्त्राद्भेदः, अभेदश्च 'ऐन्द्रं पयः' इत्यस्माद्यागशास्त्रात्। एवं

---

१. दर्शपूर्णमासयोः सोमयागस्य च भेदे सत्यप्यङ्गाङ्गित्वाभावेन भेदस्य शेषशेषित्वहेतुत्वाभावान्नानयोरध्याययोर्हेतुहेतुमद्भाव इति चेदाह —भिन्नानामिति। विना भेदं शेषशेषित्वभावो न सिध्यतीति भेदः शेषत्वहेतुरिति भावः।

'सोमेन यजेत, अरुणया क्रीणाति' इत्यादिषु वाक्यान्तरत्वमपि नास्ति। ननु तत्रापि 'ज्योतिष्टोमेन स्वर्गकामो यजेत'इति शास्त्रान्तरविहिताधिकारसम्बद्धस्यैव यागस्य शेषः सोम इति चेन्न; न हि सोमज्योतिष्टोमवाक्ययोरनुबन्धसाध्यभेदोऽस्ति, उभयत्रापि सोमस्यैव विषयत्वेनानुबन्धभेदाभावात् निरपेक्षसाध्यभेदाभावाच्च। 'उद्भिदा यजेत पशुकामः' सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इत्यादौ तु स्ववाक्यत एव फले यागस्य, द्रव्यदैवतस्य च यागे शेषत्वमिति वाक्यान्तरत्वमपि नास्ति। तथैकस्मिन्नेव पदे प्रत्ययार्थभावनापूर्वं वा प्रति प्रकृत्यर्थस्य यागस्य शेषत्वात्पदभेदोऽपि नास्ति नतरां वाक्यभेदः, नतमाञ्च शास्त्रभेदः। तस्मात्कर्मणामेव शेषशेषित्वचिन्तार्थं भेदलक्षणापेक्षणम्। अत्रापि न शास्त्रभेदापेक्षा, तदभावेऽप्यवघाताग्नेयादीनां शेषशेषित्वात्। तस्मात्कर्मभेदानुभाषणमेवैतन्नानाकर्मलक्षणं वृत्तमिति न तद्द्वारा शास्त्रभेदानुभाषणं तस्येहानुपयोगात्। अत एव कर्मभेद एव पूर्वाध्यायार्थौ न शास्त्रभेदः, सौत्रेण चातःशब्देन पूर्ववृत्तस्येह हेतुत्वमुच्यते। हेतुत्वञ्च कर्मभेदस्यैव सम्भवतीत्युक्तम्,

---

'व्रीहीनवहन्ति' इति विकारशास्त्रस्य प्रोक्षतीति संस्कारशास्त्राद्भेदः, अभेदश्च 'व्रीहिभिर्यजेत' इति व्रीहिशास्त्रात्। तथा 'समिधो यजति' इत्यादीनामितिकर्तव्यताशास्त्राणां करणोपकाररूपनिरपेक्षसाध्यभेदाद् 'आग्नेयोऽष्टाकपाल' इत्यादितः करणावान्तरकार्यरूपोत्पत्त्यपूर्वरूपसाध्यविषयाद्भेदः, अभेदश्च स्वर्गकाम इत्यधिकारशास्त्रात्, तत्सापेक्षत्वात्सकलेतिकर्तव्यताशास्त्राणां करणशास्त्राणाञ्च। तथा स्वर्गकामयावज्जीवाधिकारशास्त्रयोर्निरपेक्षाधिकाररूपसाध्यभेदाद्भेद इत्यूह्यम्। एवमनुबन्धत्वं नियोगाख्यापूर्वविषयत्वम्। तद्भेदश्च शब्दान्तरादिप्रमाणषट्कापादितः षड्विध इति। तदेतदभ्युपेत्य प्रकृते त्वदुक्तरीत्या शास्त्रभेदो नास्तीत्याह-किमिति। केन प्रमाणेन निरपेक्षेति। अवघातशास्त्रस्य व्रीहिविकाररूपसाध्यविषयत्वात्तस्य च व्रीहिशास्त्रसापेक्षत्वादिति भावः। नापीति। व्रीहितदवघातशास्त्रयोर्दृष्टार्थत्वेन नियोगविषयरूपानुबन्धभेदो नास्तीत्यर्थः। नन्ववघातशास्त्रस्य व्रीहिशास्त्रसापेक्षत्वेऽपि व्रीहिशास्त्रस्यावघातशास्त्रनिरपेक्षत्वात्ततो भेदोऽस्येवेत्याशङ्क्य शास्त्रभेदाभावस्य स्फुटमुदाहरणमाह—सोमेनेति। शास्त्रभेदव्यापकवाक्यभेदाभावे सुतरां शास्त्रभेदाभाव इत्यर्थः। अत्रापि शास्त्रान्तरविहितयागं प्रत्येव सोमस्य शेषतेति शङ्कते—नन्विति। अधिकारः फलं तत्सम्बद्धस्येत्यर्थः। सोमस्यैव सोमयागस्यैव। विषयत्त्वेन कार्यरूपापूर्वविषयत्वेन। निरेपेक्षेति। उत्पत्त्यपूर्वस्य परमापूर्वसिध्यनन्तरं कल्प्यत्वेन तत्सापेक्षत्वादिति भावः। निस्सन्दिग्धमुदाहरणान्तरमाह—उद्भिदेति। यागस्येत्यनन्तरं शेषत्वमिनुषङ्गः। अतिस्पष्टं शास्त्रभेदव्यभिचारस्थलमाह—तथेति। उपसंहरति—तस्मादिति। एवकारेण द्रव्यादिव्यवच्छेदः। कर्मणां शेषत्व एव शास्त्रभेदस्य हेतुत्वं स्यादिति शङ्कामपाकरोति—अत्रापीति। कर्मणां शेषशेषित्वेऽपीत्यर्थः। अवघातशास्त्रस्य प्रधानशास्त्रसापेक्षतया न शास्त्रभेद इति भावः। न केवलं त्वदुक्तहेतुत्वाभावाच्छास्त्रभेदस्य न द्वितीयाध्यायप्रतिपाद्यत्वम्, अपितु भाष्यग्रन्थविरोधादपीति सूचयति—तस्मादिति। अनुभाषणम् अनुवादः। कर्मपदं स्वबोधकशास्त्रोपलक्षणमिति तन्मतं दूषयति—न

अतः सूत्रभाष्यविपरीतं शास्त्रभेदस्याध्यायार्थत्वम्। अयुक्तञ्च–अनुबन्धान्तरं हि बुध्यमानस्तदनुबद्धं नियोगान्तरमेव बुध्यते, न मध्ये शास्त्रभेदमतो नासौ चोदनार्थः। अचोदनार्थश्च न विचारमर्हतीति न तद्विचारार्थं भेदलक्षणमित्यास्तां तावत्। बहुप्रकारञ्चेदं शेषलक्षणं वक्ष्यते–कः शेषः? इति स्वरूपं, केन हेतुना शेषः? इति शेषशब्दप्रवृत्तिनिमित्तं, कथं नियुज्यत इति विनियोगप्रकारः, श्रुत्यादीनि विनियोगे शेषस्य शेषिणा सहान्वयबोधने कारणानि प्रमाणानि, तेषाञ्च विरोधे बलाबलं, विरोधश्च क्वास्ति? क्व च नास्ति? तदेतत्सर्वमभिसन्धाय शेषलक्षणं वक्ष्याम इति सूत्रितम्। तदनेन सूत्रेण श्रोतृबुद्धिसमाधित्सया वक्ष्यमाणार्थप्रदर्शनमात्रं कृतं नात्र पूर्वपक्षेण प्रयोजनम्॥ इति प्रतिज्ञाधिकरणम्॥ इति प्रतिज्ञाधिकरणम्॥ १॥

२

सू० शेषः—उक्तं शेषलक्षणं वक्ष्यत इति, तदिदमुच्यते। प्रथमं तावदनेन सूत्रेण शेषस्वरूपं हेतुश्च श्रुत्यर्थाभ्यामुच्यते। तत्र सूत्रे श्रुत्या हेतुरुच्यते परार्थत्वा-

---

तदिति। अतएव प्रकृतोपयोगित्वेन भाष्यकारीयानुवादादेव। सूत्रविरोधमप्याह–सौत्रेण चेति। ननु न्यायानुगुण्ये ग्रन्थविरोधो न दूषणम्, ग्रन्थस्य न्यायानुसारित्वादत आह–अयुक्तञ्चेति। अनुबन्धान्तरं यजति ददाति इत्यादौ यागरूपानुबन्धादन्यद्दानादिकम्। तदनुबद्धं तद्विषयकम्। नियोगान्तरं कार्यान्तरम्। मध्ये अनुबन्धभेदकार्यभेदयोर्मध्ये। शास्त्रस्य शब्दरूपतया शास्त्राप्रतिपाद्यत्वादिति भावः। चोदनार्थः—चोदनातात्पर्यविषयः। अनुष्ठानानुपयोगित्वात् मीमांसायाश्चानुष्ठानपर्यवसायित्वादिति भावः। किञ्च प्रधानभूताधिकारशास्त्रात्तत्सापेक्षतया अभिन्नेनाङ्गशास्त्रेण स्वार्थोऽपि प्रधानशास्त्रार्थादभिन्न एव प्रतिपादनीय इत्यङ्गप्रधानकर्मणोर्भिन्नरूपेणावगतिर्न स्यादित्यादिबहुदूषणग्रस्तमेतन्मतमिति सूचयति–आस्तां[1] तावदिति। शेषत्वनिर्णयोपयोगितयार्थादन्येषामपि प्रतिज्ञासूत्रविषयतां दर्शयति–बह्विति। लक्षणं व्युत्पादनम्। वक्ष्यते करिष्यते, दानं दध्यादितिवत्। विनियोग इत्यस्य भाष्याद्युक्तस्य व्याख्यानं शेषस्येति॥ १॥

शेषः प्रतिज्ञातानां शेषस्वरूपादीनां निरूपणे कर्तव्ये विनियोगप्रमाणादीनां शेषस्वरूपज्ञानसापेक्षत्वात्तस्य च हेतुमन्तरेणासम्भवाद्धेतुप्रदर्शनपूर्वकं शेषस्वरूपं प्रथमं निरूप्यत इत्याह–प्रथममिति। श्रुतिपदस्य घिसंज्ञत्वेन 'द्वन्द्वघी'ति पूर्वनिपातेऽप्यर्थक्रमेण हेतावन्वयः। तदाह–तत्रेति। श्रुत्या पञ्चमीविभक्त्या। अर्थादित्येतद्विवृणोति–यदा हीति। प्रयाजादयः

---

१ प्रथमाध्याये न हि प्रमाणं स्वातन्त्र्येण प्रस्तुतं; येन तन्निरूपणानन्तरं तत्रैव भेदजिज्ञासा स्यात्, किन्तु धर्मजिज्ञासायां प्रतिज्ञातायां किं धर्मे प्रमाणमित्येवं धर्ममुखेन, ततश्च प्रमाणव्युत्पादनस्य धर्मार्थतया प्रमाणव्युत्पादनानन्तरं प्रधानभूतधर्मस्यैव भेदजिज्ञासा, न तु तद्गुणभूतस्य प्रमाणस्य भेदजिज्ञासेति शास्त्रभेदस्य प्रथमं जिज्ञासितत्वमेवासिद्धमिति न शास्त्रभेदोऽध्यायविषय इति भावः।

च्छेष इति, स्वरूपं त्वर्थात्। यदा हि परार्थत्वं शेषशब्दप्रवृत्तौ हेतुस्तदा परार्थ एव शेष इति सिद्धं भवति। भाष्ये तु 'यः परार्थस्तं वयं शेषं ब्रूम' इति स्वरूपं श्रुत्युक्तम्। अर्थात्तु हेतुरिति द्रष्टव्यम्। अत्र चाविनाभावादिलक्षणाभासनिराकरणाय पारार्थ्यं लक्षणमुच्यते। केचित् किल येन विना यन्न भवति बीजादिस्तस्यांकुरादिः शेष इत्याहुः, तदयुक्तम्; रूपरसादीनामाग्नेयादीनाञ्च मिथोऽविनाभावेन शेषत्वापत्तेः। प्रयोज्यत्वं शेषत्वमित्येतदपि पुरोडाशकपालादिष्वप्रयोज्येष्वपि शेषत्वसम्भवादव्यापकम्। अन्ये तु यद्यस्मादधिकं विधीयते। स तस्य शेष इत्याहुः, तदतिमन्दम्; अङ्गप्रधानानां परस्पराधिक्यात्। अन्ये विध्यन्तविहितं शेषमाहुः, तदपि विध्यादिविहितायामपि शाखाच्छेदनादीनामङ्गत्वदर्शनात् अयुक्तम्। तस्मादुपकारकत्वमेव शेषत्वमित्येतदप्ययुक्तम्, प्रधानान्यप्यङ्गानामनुष्ठानोपयोगं कुर्वन्ति शेषत्वं गच्छेयुः।

तस्मात्पारार्थ्यमेवैकं युज्यते शेषलक्षणम्।
परोद्देशप्रवृत्तिश्च पारार्थ्यमभिधीयते॥

कथं तर्हि श्रुत्यादिलक्षणं शेषत्वम्? न हि 'सोमेन यजेत' इति तृतीयया परोद्दे-

---

शेषपदवाच्याः। 'परार्थत्वादि'ति सूत्रवाक्यार्थेऽवगते परार्थत्वं शेषलक्षणमित्यर्थसिद्धमित्यर्थः। अत्र भाष्यकारेण 'लक्षणहेत्वोस्तदुभयमाख्यायत' इति ग्रन्थेन सूत्रप्रतिपाद्यत्वमुक्त्वाग्रेस्वरूपप्रतिपादनमेव। दर्शितं न हेतुप्रतिपादनं। तदभिप्रायमाह–भाष्ये त्विति। अयमाशयः–प्राधान्येन प्रथमं कीदृक्छेष इति शेषस्वरूपजिज्ञासेति तदेव साक्षात्प्रतिपादयितुमुचितम्, हेतुस्तु स्वरूपज्ञानोत्तरं जिज्ञासितो भवतीति तस्यार्थतः प्रतिपादनमुचितम्। एवञ्च यः परार्थः स शेष इति स्वरूपकथने सूत्रतात्पर्यमिति। परार्थत्वादिति पञ्चमी प्रथमार्थे बोध्या। परार्थत्वं शेषपदवाच्यमित्यर्थः। परार्थत्वस्य शेषपदवाच्यत्वे चावगते तस्यैव शेषपदप्रवृत्तिनिमित्तत्वरूपहेतुत्वमर्थसिद्धमिति। ननु शेषत्वस्य लोकप्रसिद्धत्वात्किं तल्लक्षणेनेत्याशङ्क्याह–अत्र चेति। अविनाभावादयश्च ते लक्षणाभासा इति विग्रहः। तानेव दर्शयति–केचिदित्यादिना। अतिव्याप्तिमाह–रूपेति। तद्रूपतद्रसादीनामित्यर्थः। एवं तदाग्नेयतदग्नीषोमीयादीनामिति ज्ञेयम्। प्रयोज्यत्वमिति। अङ्गानां प्रधानप्रयुक्तत्वाद्यत्प्रयोज्यं यत् तत्तदङ्गमित्यर्थः। दूषयति–पुरोडाशेति। 'पुरोडाशंकपालेन तुषानुपवपति' इति तुषोपवापे पुरोडाशार्थकपालस्याङ्गत्वबोधनात्तत्राव्याप्तिः। कपालस्य पुरोडाशप्रयोज्यत्वेन तुषोपवापाप्रयोज्यत्वस्य चतुर्थे वक्ष्यमाणत्वादिति भावः। विध्यन्तेति। प्रधानविध्यन्तेत्यर्थः। एवं विध्यादीत्यत्रापि ज्ञेयम्। शाखेति। 'इषेत्वेति छिनत्ति' इति पयोदोहनार्थवत्सापाकरणार्थमिष्टिपूर्वदिने शाखाच्छेदनं विहितं तत्राव्याप्तिरित्यर्थः। अन्ये बादरिमतानुसारिणः कुर्वन्तीति शत्रन्तं प्रधानविशेषणम्। अनुष्ठानोपयोगं अनुष्ठानसार्थक्यरूपोपकारम्। परोपकारकत्वरूपस्य पारार्थ्यस्योक्तदोषत्वात्तन्निर्वक्ति––परोद्देशेति। प्रवृत्तिश्चेत्यनन्तरं शेषत्वाभिमतस्येति शेषः। तथाच परोद्देश्यकप्रवृत्तिसम्बन्धित्वमित्यर्थः। स्वभिन्नयदुद्देश्यकप्रवृत्तिसम्बन्धित्वेन विधिबोध्यं यत्तत्तदङ्गमिति तु निष्कर्षः। यागादेः

शप्रवृत्तत्वं सोमस्योच्यते, करणमात्राभिधानात्। उच्यते—न श्रुत्यादयः पारार्थ्यमभिदधतीति ब्रूमः। किं तर्हि? विधिसहिताः पारार्थ्यं बोधयन्तीति। विधिरपि नाभिधानेन पारार्थ्यं गमयति, किं त्वर्थापत्त्या। स हि चेतनप्रवर्तनात्मा। न चानुद्दिष्टफले व्यापारे चेतनः प्रवर्तयितुं शक्यत इत्यर्थाद्विधिविषयस्य व्यापारस्य फलोद्देशप्रवृत्ततावगम्यते। फलार्थश्च व्यापारः फलवदेव पुरुषस्याभिलषित इति तत्साधनत्वेन श्रुत्यादिभिरवगतानां तत्साधनत्वेन च विधीयमानानां सोमादीनामपि तदुद्देशप्रवृत्तिस्सिद्धा भवति। तस्माद्युक्तं श्रुत्यादिगम्यं पारार्थ्यलक्षणं शेषत्वमिति।

॥ इति शेषलक्षणाधिकरणम् ॥ २ ॥

३

सू० द्रव्य०—अत्र शेषत्वस्य विषयकथनेन कः शेष इत्ययमेवांशः प्रपञ्च्यते।

बादरिर्द्रव्यसंस्कारगुणेष्वेवाह शेषताम्।
श्रुत्यादेर्दर्शनाच्चैते कर्मणामुपकारकाः॥

उपकारकत्वमेव शेषत्वं, न पारार्थ्यं, तस्य बोधकाभावात्। विधिस्तावत्प्रवर्तनामात्ररूपो न तादर्थ्यं गमयति, श्रुत्यादयोऽपि साध्यसाधनभावमात्रपराः, न पारार्थ्यं प्रतिपादयन्ति। तस्मादुपकारकत्वमेव शेषत्वं, तच्च दृष्टार्थानां द्रव्यगुणकर्मणां दर्शनादेवावगम्यते, प्रोक्षणादीनां तु श्रुत्यादिभिः। द्वितीया हि व्रीहीणां प्रोक्षणं प्रति साध्यत्वमभिदधानोपकारमन्तरेण तदनुपपत्तेरुपकारं गमयति, न तु यागस्य

---

स्वर्गाद्युद्देश्यकप्रवृत्तिसम्बन्धित्वेन विधिगम्यत्वात्स्वर्गाद्यङ्गत्वोपपत्तिः। फलस्य स्वाङ्गत्ववारणय स्वभिन्नेति। सम्बन्धित्वञ्च कारकतया ज्ञेयम्। तेन निमित्ते न फलाङ्गत्वापत्तिः, द्रव्यगुणकर्तृकालदेशादौ तादृशप्रवृत्तौ कारणत्वाधिकरणत्वादिना सम्बन्धित्वेन विधेयत्वाल्लक्षणसमन्वयः। निमित्तोद्देश्यकप्रवृत्तिसम्बन्धितया कर्मणो विधेयत्वेऽपि न निमित्ताङ्गत्वापत्तिः। ईप्सितत्वेन विलक्षणोद्देश्यताया एव लक्षण ( समन्वय ) घटकत्वादिति। श्रुत्यादिलक्षणं श्रुत्यादिप्रमाणकम्। अभिधानेन शक्त्या। फलोद्देशप्रवृत्तता फलोद्देश्यकप्रवृत्तिसम्बन्धिता। नन्वेवं सति फलस्यैवोद्देश्यतया तदुद्देश्यकप्रवृत्तिसम्बन्धिनां प्रधानकर्मणामेव तदङ्गत्वं स्यात, न तु प्रयाजादीनां दर्शाद्यङ्गत्वमपि। दर्शादेरीप्सितत्वाभावेन तल्लक्षणोद्देश्यत्वाभावादित्याशङ्क्याह— फलार्थश्चेति। फलेच्छाया उपायेच्छाहेतुत्वेनोपायस्याप्युद्देश्यत्वमविकलमिति भावः।

॥ इति शेषलक्षणाधिकरणम् ॥ २ ॥

द्रव्य—एतदधिकरणस्य पूर्वाधिकरणकोष्ठशोधनिकारूपतया तच्छेषतामाह— अत्रेति। द्रव्यं व्रीह्यादि। संस्कारोऽवघातादिः। गुणोऽरुणादिः। श्रुत्यादेः श्रुतिलिङ्गादिप्रमाणात्। दर्शनात् प्रत्यक्षात्। तत्र व्रीह्यादीनामुपकारकत्वं प्रत्यक्षादवगम्यते, प्रोक्षणादिसंस्कारस्य तु द्वितीयाश्रुतिवशेनेति। द्रव्यादीनामेव शेषत्वे हेतुमाह—उपकारकत्वमेवेति न त्विति। तृतीयाद्वितीययोरभावादिति भावः। नन्वपुरुषार्थस्य यागस्य कथं विधिना कर्तव्यतावगमः स्यात्?

फलशेषत्वे, फलस्य वा पुरुषशेषत्वे प्रत्यक्षदर्शने श्रुत्यादयो वा सम्भवन्ति। यजेतेति यागः कर्तव्य इत्येतावदुच्यते, न तु यागेन फलमिति। तदेतत्स्वर्गकामाधिकरणपूर्वपक्षे वक्ष्यामः। स्वर्गोऽपि काम्यमानात्मना शब्देनोच्यते, न त्वात्मार्थः परार्थो वेति। तस्मान्न तयोः शेषत्वम्। अतएव न पुरुषस्य शेषिता, शेषत्वन्तु तस्य द्रव्यत्वादिष्टमेव। तस्माद् द्रव्यगुणसंस्कारेष्वेव शेषत्वमिति। तदेतत्स्वर्गकामाधिकरणपूर्वपक्षवादिनो बादरेर्मतम्। जैमिनिस्तु उपकारलक्षणस्य शेषत्वस्योक्तदोषत्वात्पारार्थ्यमेव शेषत्वं, तच्च विधिगम्यमिति स्वर्गकामाधिकरणसिद्धान्ते वक्ष्यमाणमभिप्रेत्य कर्मणामपि पारार्थ्याच्छेषत्वमाह। तदेतत्तत्र सिद्धमिति नात्र किञ्चित्प्रतिपाद्यम्। प्रपञ्चमात्रं त्विह पूर्वोक्तशेषत्वविषयस्य क्रियते। प्रपञ्चन्तु कुर्वन् परमतोपन्यासपुरःसरं स्वमतमुपन्यस्तवान्। एवं फलस्यापि पुरुषशेषत्वं कामवशादेवावगम्यते विधिवशाच्च। न ह्यस्वार्थं कश्चित्कामयते। यदपि परार्थं कामयते तदपि परम्परया स्वार्थमेव। अत्र तु परम्परायां प्रमाणाभावादात्मार्थमेव। विधिश्चानात्मार्थफलसाधने प्रवर्तयितुमशक्नुवन् फलस्यात्मार्थतां गमयति, यजेतेति चात्मनेपदनिर्देशात्। तस्माद्यागफलयोरप्यस्ति शेषता। ततश्च पुरुषस्यापि शेषित्वम्। न चैवं सर्वतः प्रधानत्वात्पुरुषस्य शेषत्वं नास्तीति मन्तव्यम्, आख्यातेन कर्तुर्गुणभूतत्वेनोपादानात् औदुम्बरीसंमानादिषु श्रुत्यैव गुणत्वात्॥३॥

॥ इति बादर्यधिकरणम्॥ ३॥

४

सू॰ तेषाम्—कः शेषः? केन हेतुना शेषः? इति द्वयमप्युक्तम्। इदानीं कथञ्च

---

अत आह—तदेतदिति। प्रेक्षावद्भिर्यागकरणेऽपि कृतिसाध्यत्वयोग्यतामात्रबोधनेन वाक्यप्रमाणोपपत्तेस्तदभावेऽपि न क्षतिरिति तत्र पूर्वपक्षो वक्ष्यत इत्यर्थः। इष्टमेवेति। औदुम्बरीसम्मानादिष्विति शेषः। एवमिति। फलस्येव पुरुषस्यापि तत्सम्बन्धित्वेनेच्छाविषयतयोद्देश्यत्वसत्त्वात्। फलं मे भूयादित्याकारेच्छानुभवात्। तथाच पुरुषोद्देश्यकप्रवृत्तिसम्बन्धितया विधिगम्यत्वात्पुरुषशेषत्वमिष्टिमिति भावः। कामवशात् फलं भूयादितीच्छास्वाभाव्यात्। एतदेव विवृणोति—न हीत्यादि। विधिवशादिति व्याचष्टे—विधिश्चेति। न केवलमर्थापत्त्या फलस्यात्मार्थतावगमः, किन्तु शब्दतोऽपीत्याह—आत्मनेपदेति। आत्मगामिक्रियाफले तद्विधानादिति भावः। ननु कर्तव्यत्वेन शेषभूतस्य पुरुषस्य कथं शेषत्वमित्याशङ्क्य कर्तृत्ववद्भोक्तृत्वस्यापि सत्वाद्रूपभेदेनाविरोध इत्याशयेनाह—ततश्चेति। अपिभिन्नक्रमः शेषित्वमपीत्यर्थः। रूपभेदाभिप्रायमेव विवृणोति—आख्यातेनेति। तथाच कामपदेन भोक्तृतयाख्यातेन कर्तृतयोपादानात् रूपभेद इति भावः। श्रुत्यैवेति। यजमानसम्मितेतिशब्देन यजमानेन सम्मितेत्यर्थकेनेत्यर्थः॥ इति बादर्यधिकरणम्॥ ३॥

तेषाम्–सामान्यतोऽङ्गाङ्गित्वावगमे सति कथमङ्गाङ्गित्वमित्याकाङ्क्षायां तन्निरूपणादनन्तरसङ्गतिरित्याह–इदानीमिति। इत आरभ्य पञ्चभिरधिकरणैः पादान्त्येन च श्रौतविनियो-

विनियुज्यत इत्ययमंशो निरूप्यते। दर्शपूर्णमासयोर्निर्वपणप्रोक्षणावघातादय औषधधर्माः, उत्पवनादय आज्यधर्माः, शाखाहरणादयः सान्नाय्यधर्माः। तेषु संशयः— किं सर्वे आज्ये औषधे सान्नाय्ये च कर्तव्याः? उत यथासंयोगं व्यवस्था? इति। तदर्थञ्च किं परमापूर्वप्रयुक्ता एते? किं वावान्तरापूर्वप्रयुक्ता? इति। तत्सिध्यर्थमपि किमवान्तरापूर्वाणि सन्ति? नेति? सत्स्वपि च तेषु किं तानि प्रयोजकानि? किं वा परमापूर्वम्? यदापि तानि, तदापि किं सर्वाणि सर्वेषां प्रयोजकानि? किं वा व्यवस्थेति? किं तावत्प्राप्तम्।

**एकमेव फलापूर्वं फलस्यैकस्य सिद्धये।**
**कल्प्यं नान्यानि धर्माणां तादर्थ्यात्सङ्करो भवेत्॥**

अवघातादीनां व्रीह्यादीनाञ्च सम्बन्धोऽपूर्वसाधनविशेषत्वकृतः, न व्रीह्यादिस्वरूपकृतः, तच्चापूर्वं सर्वेषामाग्नेयादीनामेकफलसाधनत्वादेकमेव कल्प्यते। न बहूनि। तदर्थश्चावघातस्तदीये हविषि कर्त्तव्यः, तदीयत्वं चाज्यादीनामप्यविशिष्टम्। अतो यथा व्रीहिषु श्रुतोऽवघातो यवेष्वपि भवति एवमाज्यादिष्वपि भवितुमर्हति। सन्तु वावान्तरापूर्वाणि, तथापि तानि निष्फलत्वाद्यागस्वरूपवदेव न धर्माणां प्रयोजकानि। परमापूर्वं तु फलवत्, अतस्तदेव प्रयोजकम्। न चात्र वाङ्नियमन्यायः, तत्र हि दीक्षणीयाशब्दो दीक्षणीयापूर्वं लक्षणयोपस्थापयति, ज्योतिष्टोमापूर्वन्तु लक्षितलक्षणयेत्यस्ति विप्रकर्षः। अत्र तु परमापूर्वमेव। अवान्तरापूर्वञ्च द्वयमप्याग्नेयादिसाध्यमिति न लक्षणा-

---

गप्रकारविचारः प्राधान्येन प्रथमपादार्थः, अन्यत्प्रासङ्गिकमिति ज्ञेयम्। औषधं व्रीह्यादि। सान्नाय्यं दधिपयसी। यथासंयोगमिति। औषधसंयुक्ता औषधे कार्या इत्येवमित्यर्थः। एते धर्माः। तानीत्यनन्तरं प्रयोजकानीति शेषः। नन्वस्तु फलापूर्वमेवैकं, तथापि व्रीह्यादिसम्बन्धित्वेन श्रुतानामवघातादीनां कथमाज्यादिसाधारण्यमत आह—धर्माणामिति। एतदेवोपपादयति—अवघातादीनामिति। व्रीहिस्वरूपे तत्कार्यपुरोडाशादौ चावघाततन्नियमतददृष्टानामनुपयोगादपूर्वं एव तदुपयोग इति व्रीहिपदेनापूर्वसाधनलक्षणयावघातेनापूर्वसाधनं भावयेदिति वाक्यार्थः। अपूर्वञ्चैकमेवेति सर्वेषामाज्यादीनां तत्साधनानामवघातो यवानामिव भवितुमर्हतीत्यर्थः। नन्वपूर्वसाधनत्वविशिष्टव्रीहित्वमेवोद्देश्यतावच्छेदकमिति नान्यत्रावघातादि स्यादत आह न व्रीहीति। युगपद्वृत्तिद्वयविरोधादपूर्वसाधनलक्षणोपक्षीणतया च न व्रीहित्वस्योद्देश्यकोटिप्रवेशः। अन्यथा यवेष्ववघातानापत्तेरिति भावः। अवान्तरापूर्वाणामपूर्वाधिकरणोक्तरीत्या आवश्यकत्वात्तदभ्युपगमेनापि पूर्वपक्षमाह—सन्तु वेति। फलवद्धि फलोत्पत्त्यर्थमङ्गान्यपेक्षते नान्यदित्यर्थः। वाङ्नियमेति। 'यावत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूयात्' इति विहितः स्वरविशेषनियम इत्यर्थः। स च यथा दीक्षणीयापूर्वार्थ एव, न तु प्रधानीभूतज्योतिष्टोमापूर्वार्थ इति नवमे वक्ष्यते। तथात्रापीति शङ्कार्थः। नन्वेमपूर्वद्वयस्याप्याग्नेयादि-

यां विशेषः। प्रधानत्वाच्च परमापूर्वमेव प्रयोजकं युक्तम्। यद्यपि चावान्तरापूर्वाण्येव प्रयोजकानि, तथापि प्रकरणाविशेषात्सर्वाणि सर्वेषां प्रयोजकानि। तस्मात् सङ्कर इति। अत्राभिधीयते—सन्ति तावदवान्तराण्यपूर्वाणि। कुतः ?

**न ह्याग्नेयादिकर्माणि विशरारूणि तैर्विना।**
**संहत्य परमापूर्वं जनयन्ति स्वरूपतः॥**

तदेतदपूर्वाधिकरणे एवानागतावेक्षणेन प्रतिपादितम्। सत्सु च तेषु तादर्थ्यमेवावघातादेर्युक्तं, प्रत्यासत्तेः। यद्यपि चाग्नेयादीन्येवोभयत्र कारणं, तथापि साक्षादुत्पत्त्यपूर्वे करणत्वं तद्द्वारेण तु परमापूर्वे। सम्बन्धनिमित्ता च लक्षणा, तेन व्रीहिशब्दो यागद्वारेणापूर्वमुपस्थापयन् प्रथमं तावदुत्पत्त्यपूर्वे निपतति, तस्यापि चादृष्टत्वेनाज्ञाततत्प्रकारत्वात्परमापूर्वसिध्यौपयिकत्वेन च फलवत्त्वादतिक्रमकारणाभावात्तादर्थ्यमेवावघातादेर्युक्तम्। सत्यपि च सर्वेषां प्रकरणाविशेषे श्रुतेर्बलीयस्त्वावगमादसङ्करः। एवञ्चावघातादेर्दृष्टार्थता भवति, अन्यथा त्वदृष्टार्थता स्यात्। न च क्वचिदपि दृष्टसम्भवे तत एव विध्युपपत्तेः[1] अर्थापत्तिपरिक्षयाददृष्टकल्पनया सवार्थत्वं युक्तमङ्गीकर्तुम्। अतश्च यद्यपि तावदवहन्तीत्येतावन्मात्रं श्रूयते, तथापि दृष्टार्थवशादेव व्यवस्था स्यात् किमुत यदा व्रीह्यादिसंयोगेनैव श्रवणं, तस्माद्यथासंयोगं व्यवस्था॥

**॥ इति तेषामर्थाधिकरणम्॥ ४॥**

**५**

**सू० द्रव्य**—दर्शपूर्णमासयोः 'स्फ्यश्च कपालानि च' इत्याद्युपक्रम्य

---

सम्बन्धाविशेषात्परमापूर्वसाधनतैव कुतो लक्ष्यत इति शङ्कायामाह—प्रधानत्वाच्चेति। ननु दीक्षणीयापूर्वस्य साक्षादफलत्वेऽपि परम्परया फलवत्वाद्धर्मप्रयोजकत्वमुक्तमेवमवान्तरापूर्वाणामिहापि युक्तमित्याशङ्क्याह—यद्यपि चेति। सर्वेषां धर्माणाम्। विशरारूणि आशुतरविनाशीनि। तैः अवान्तरापूर्वैः। ननु प्रकृतोपयोगितयात्रैवावान्तरापूर्वभेदसाधनमुचितं नापूर्वाधिकरण इत्याशङ्क्याह—अनागतेति। वक्ष्यमाणोपयोगाभिप्रायेणेत्यर्थः। अवान्तरापूर्वलक्षणायां बीजभूतप्रत्यासत्तिविशेषमाह साक्षादिति। व्यवस्थाबीजमाह—श्रुतेरिति। व्रीह्यादिशब्दादित्यर्थः। व्रीह्यादिशब्दो हि स्वसाध्यकर्मापूर्वमेव लक्षयति, नान्यदसम्बन्धादिति भावः। तादृशापूर्वसाधनत्वञ्च यत्रेष्वणीति तत्रात्यवघाताद्यनुष्ठानलाभः। साधनत्वञ्च हविःप्रकृतितया व्रीहीणामिति तादृशमेव व्रीहिपदेन लक्ष्यते। तेन स्रुगादिषु नातिप्रसङ्ग इति दिक्। दृष्टार्थेषु दृष्टार्थतैव व्यवस्थाहेतुरित्याह—एवञ्चेति। तेषां शेषाणामर्थेन प्रयोजनभूतेनापूर्वसाधनव्रीह्यादिना सम्बन्ध इति सूत्रार्थः। प्रयोजनन्तु स्पष्टमेव॥ इति तेषामर्थाधिकरणम्॥ ४॥

द्रव्य—पूर्वाधिकरणोक्ताया व्रीह्यादिपदवशेनापूर्वसाधनताविशेषलक्षणाप्रयुक्तव्यवस्थाया इह यज्ञायुधवाक्यवशेनाक्षेपादनन्तरसङ्गतिः। स्फ्यश्चेति। 'स्फ्यश्च कपालानि

---

१ क्वाचित्कदृष्टलाभमात्रेणैवाम्नानस्य चरितार्थत्वादिति भावः।

'एतानि वै दश यज्ञायुधानि' इति श्रुतम्। तथा 'स्फ्येनोद्धन्ति' इत्यादीन्यपराणि वचनानि। तत्र संशयः—कि स्फ्यादीनां येन यदस्मिन् प्रकरणे शक्यं तत्सर्वं तेन कर्त्तव्यम्? उत यथा संयोगमुद्धननाद्येव इति। तत्रायुधशब्दस्य साधनवचनत्वाद्यज्ञसाधनत्वं गम्यमानं साक्षादसम्भवदङ्गेष्ववतरदविशेषात्सर्वाङ्गेषु विज्ञायते। उद्धननादिसंयोगस्त्वनेनैव[1] प्राप्तत्वादवयुत्यानुवादः। नैतद्युक्तम्; एवं हि बहूनामुद्धननादिवाक्यानामानर्थक्यं स्यात्। न चानुवादत्वमपि सम्भवति, नित्यप्राप्तत्वात्। ह्यु-द्धननं स्फ्येनैव प्राप्तम्, अन्येनापि सम्भवात्। पाक्षिकानुवादत्वे वा नित्यवच्छ्रवणविरोधः। तस्मादेतानि वाक्यानि विधायकानि। यज्ञायुधवाक्यं त्वेतैरेव प्राप्तार्थत्वात् वैशब्दोपबन्धादाख्याताभावाच्चानुवादकम्। वरञ्च बह्वानर्थक्यादेकानर्थक्यम्। नचास्यानर्थक्यं, 'यज्ञायुधानि सम्भरन्ती' त्यनन्तरश्रुतासादनविधिशेषत्वात्।

**तस्मादस्यानुवादत्वादितरे विधयो मताः।**
**तेन स्फ्यादेर्व्यवस्था स्यात्कार्येषूद्धननादिषु ॥५॥**

**॥ इति स्फ्याधिकरणम् ॥ ५ ॥**

**६**

**सू० अर्थैकत्वे—ज्योतिष्टोमे श्रूयते 'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं**

---

चाग्निहोत्रहवणी च शूर्पञ्च कृष्णाजिनञ्च शम्या चोलूखलञ्च मुसलञ्च दृषच्चोपला च' इत्युपक्रमः। स्फ्यः खड्गाकारो दारुमयः, अग्निहोत्रं हूयते यया साग्निहोत्रहवणी, शम्या दारुमयो। इत्यादीनि इत्यादिपदात् 'कपालेषु श्रपयति' 'अग्निहोत्रहवण्या हवींषि निर्वपति' 'शूर्पेण विविनक्ति' 'कृष्णाजिनमधस्तादुलूखलस्यावस्तृणाति' 'शम्यायां दृषदमुपदधाति' 'उलूखलमुसलाभ्यामवहन्ति' 'दृषदुपलाभ्यां पिनष्टि' इति वाक्यानां सङ्ग्रहः। उद्धननं वेद्याः कुट्टनम्। साक्षादिति। उत्पत्तिशिष्टपुरोडाशाद्यवरुद्धेषु यागेषु हविष्ट्वेनासम्भवादित्यर्थः। अङ्गेष्ववतरदिति। आनार्थक्यात्तदङ्गेष्विति न्यायादिति भावः। तथाच यज्ञसाधनानीत्यर्थपर्यवसानमिति भावः। अवयुत्य बह्वीभ्यः स्फ्यादिसाध्यक्रियाभ्य पृथक्कृत्य। तस्मादिति आनर्थक्यप्रसङ्गादित्यर्थः। वैशब्देति। प्रसिध्यर्थकतया प्राप्तिसूचकत्वेन वशब्दस्य विधिशक्तिप्रतिबन्धकत्वादिति भावः। ननूद्धन्तीत्यादावुद्धननादिगतापूर्वसाधनत्वलक्षणायां यज्ञायुधवाक्यवैयर्थ्यापत्तेः 'व्यर्थं सत्किञ्चिज्ज्ञापयति' इति न्यायेनापूर्वसाधनत्वसामान्यलक्षणातात्पर्यग्राहकत्वोपगमादव्यवस्थासिद्धिरित्याशङ्क्याह—नचेति। यज्ञायुधत्वप्रयुक्तस्तुतेरन्यथाप्युपपत्तेरित्यर्थः। अस्य यज्ञायुधवाक्यस्य। इतरे उद्धन्तीत्यादयः। प्रयोजनं सूत्रञ्च स्पष्टम्।

॥ इति स्फ्याधिकरणम् ॥ ५ ॥

अर्थैकत्वे—वाक्यार्थोपयोगितया पदार्थानाह—तत्रेति। द्रव्यवाचित्वे हि विशिष्ट-

---

१ अस्तु नाम यज्ञायुधवाक्यं विधायकम्, 'पुरोडाशं चतुर्धा करोति, आग्नेयं चतुर्धा करोति' इत्यत्रैव विशेषशास्त्रेण सामान्यस्योपसंहाराभावान्न सर्वार्थत्वमित्यत आह—उद्धननेति।

क्रीणाति' इति। तत्रारुणाशब्दोऽयमाकृत्यधिकरणन्यायेनान्वयव्यतिरेकाभ्यां गुणवचनः। पिङ्गाक्ष्येकहायनीशब्दौ तु यौगिकौ सामानाधिकरण्यादेकद्रव्यवाचिनौ। गुणाधिक्यफलञ्च शब्दद्वयम्। न चैकेन विहितेऽपरेण विधिर्न सम्भवतीति वक्तव्यम्, उभयोरपि श्रुत्यैव द्रव्यवाचकयोर्युगपत्प्रवृत्तेः। तदिहारुणिमानं प्रति सन्देहः—किमेनं वाक्याद्भित्वा प्रकरणेन सर्वद्रव्येषु निवेशयामः? किं वा क्रीणातिना सम्बद्ध्य तदङ्गं सदेकहायिन्यां निविशत इति। तदर्थञ्च क्रियासाधनत्वं सम्भवति नेति। तत्र—

अमूर्तत्वाद् गुणो नैव क्रियां साधयितुं क्षमः।
तस्मात् क्रीणातिना नास्य सम्भवत्येकवाक्यता॥

क्रीणातिना च सम्बध्यमानस्तृतीयासंयोगात्करणकारकं स्यात्। न चामूर्त्तस्य करणकारकत्वं सम्भवतीति नास्य क्रयसम्बन्ध इति तत पृथग्भूतः प्रकरणे निविशत इति। ननु प्रकरणे वा कथमस्य निवेशः? न तावत्क्रियाभिः, अमूर्तत्वात्। न च द्रव्यैः; कारकस्य द्रव्यसम्बन्धानुपपत्तेः। अनुपात्तानि चात्र द्रव्याणि कथं तैर्गुणः सम्बध्येत? स्यादेतत्, तृतीयया करणद्रव्याणि प्राकरणिकान्यनूद्य प्रातिपदिकार्थो गुणस्तत्परिच्छेदकत्वेन विधीयते, न तु गुणस्य करणत्वं, येन द्रव्यसम्बन्धो न स्यात्। तृतीयया

---

वाचिता शुद्धद्रव्यवाचिता वा स्यात्। आद्ये आह–आकृतीति। द्वितीयं निरस्यति—अन्वयेति। लिङ्गसंख्याद्रव्यसामानाधिकरण्यानि तु आक्षेपादिलब्धव्यक्तिमादाय घटादिपदवदेवेति भावः। यत्र तु गुणमात्रमेवोच्यते यथा गोररुण इत्यादौ तत्र पुल्लिङ्गमेव गुणगतं प्रतीयते। 'गुणे शुक्लादयः पुंसि' इत्यनुशासनात्। अन्यत्र त्वाश्रयलिङ्गत्वमेव 'गुणिलिङ्गास्तु तद्वति' इति, 'गुणवचनानामश्रयतो लिङ्गवचनानि' इति चानुशासनादिति। 'गुणवचनेभ्यो मतुपो लुगिष्टः' इति च रूपादिशब्दवैलक्षण्येन लक्षणया गुणिबोधकत्वादुपपन्नमिति। यौगिकावित्यनेन 'सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते' इति न्यायः सूच्यते। एकद्रव्यवचनत्वे पौनरुक्त्यमाशङ्क्याह—गुणेति। पिङ्गाक्षीत्वैकवत्सरत्वरूपेत्यर्थः। पिङ्गाक्षीपदेन विहितस्य द्रव्यस्यैकहायनीपदेन विध्ययोगादेकहायनगुणमात्रस्य चारुण्यतुल्यतया तस्यापि विचार्यत्व स्यादित्यभिप्रेत्य शङ्कते—न चेति। श्रुत्यैवेत्यरुणयेत्यनेन। वैषम्यसूचनम्। तस्मादरुणगुण एव विचार्य इत्याह—तदिहेति। पूर्वपक्षमाह–अमूर्तत्वादिति। मूर्तद्रव्याश्रिता हि क्रियानुभूयते न त्वमूर्त इति विक्रेतृहस्तसमर्पणादिक्रियायोगं विना क्रयसाधनत्वासम्भव इत्यर्थः। एवञ्च स्फ्यादेरिव स्ववाक्यगतक्रियान्वयायोगात्तत्प्रत्युदाहरणतया पूर्वपक्षादनन्तरसङ्गतिः सूचितेति ज्ञेयम्। नन्वरुणयेत्युपलक्षणे तृतीयेति द्रव्यसम्बन्ध उपपद्यतेऽत आह–अनुपात्तानि[1] चेति। कारकशक्तिं करणत्वादिरूपाम्। निष्कृष्य प्राधान्येन। कारकमुपसर्जनं

---

१ प्रकरणस्य साक्षाद्गुणविनियोजकत्वाभावेन प्राकरणिकद्रव्ये विनियोगमिच्छता केनचिच्छब्देन प्राकरणिकद्रव्याण्यनूद्य तत्रायं गुणो विधीयत इति वक्तव्यम्। न चात्र प्राकरणिकद्रव्यवाचकः कश्चिच्छब्दोऽस्तीत्यर्थः।

चोपादानाद् द्रव्याणां नानुपादानदोष इति। नैतद् युक्तम्, न हि तृतीया करणीभत-द्रव्याभिधायिनी। विभक्तयो हि कारकशक्तिं निष्कृष्याभिधायकतया क्रियां विशिंषन्ति,[1] न तु कृदन्तकरणादिशब्दवत्कारकोपसर्जनं द्रव्यमभिदधति, येन गुणस्तत्परिच्छेदकतया सम्बध्येत। उच्यते—प्रातिपदिकमेव गुणवचनमपि लक्षणया द्रव्यं प्रतिपादयति। तच्च तृतीयासंयोगात्करणम्। तदनेन पदेन गुणविशिष्टं द्रव्यं करणभूतं प्रतिपाद्यते। तत्र विशेष्याणि करणद्रव्याणि प्रकरणगतान्यनूद्य विशेषणभूतो गुणः परिच्छेदकत्वेन विधीयते—येन द्रव्येण किञ्चित्क्रियते तेनारुणगुणकेनेति। नन्वेवं लक्षितस्य द्रव्यस्य क्रय एव करणत्वस्य सम्भवात्किमिति वाक्यभेदः। नानेन लक्षितं द्रव्यान्तरं शक्यं विधातुं, श्रौतैकहान्यवरुद्धत्वात्क्रयस्य। एकहायनी तु स्वशब्दविहिता न पुनर्लक्षणया विधातुं शक्यते। अथैकहानीमेवानूद्य तत्रैव गुणो विधीयतां, न भविष्यति वाक्यभेदः। नैवं शक्यम्, विधीयते ह्यत्रैकहायनी क्रयं प्रति गुणभूता च स्वार्था च, नासावेकस्मिन्नेवोच्चारणेऽनुवदितुं गुणं प्रति प्रधानीभवितुं परार्थञ्चोच्चारयितुं शक्यते; आवृत्तिप्रसङ्गात्। प्राकरणिकानि तु द्रव्याणि वाक्यान्तरविहितानि शक्यन्ते वाक्यान्तरेणानुवदितुम्। तस्मात्कृत्स्ने प्रकरणेऽरुणिमा निविशत इति प्राप्ते ब्रूमः—

**तृतीयया गुणस्यैव करणत्वं क्रयं प्रति।**
**विस्पष्टं गम्यते तच्च द्रव्यद्वारेण युज्यते॥**

यद्यप्यमूर्तत्वादयं न साक्षात्क्रियां साधयितुमलं, तथापि द्रव्यपरिच्छेदमुखेन शक्नोति साधयितुम्। न ह्यपरिच्छिन्नं द्रव्यं क्रियां साधयति, गुणश्च तत्परिच्छिनत्ती-

---

विशेषणं यस्य करणत्वादिविशिष्टमित्यर्थः। विधीयत इति। अपूर्वसाधनद्रव्यमरुणगुणपरिच्छिन्नं कुर्यादिति कल्पितवाक्येनेत्यर्थः। न च परिच्छेदक्रियापि कथममूर्तेनेति शङ्क्यम्, क्रियान्तरवैलक्षण्येन परिच्छेदक्रियाया अमूर्तेनापि साधनस्य प्रमाणसिद्धत्वादिति। वाक्यभेद इति। वाक्यान्तरकल्पनेत्यर्थः। श्रौतेति। शक्तिगम्येत्यर्थः। ननु सैवारुण्यविशिष्टतया विधियतामत आह—एकहायनी त्विति। तटस्थश्शङ्कते—अथेति। क्रयवाक्यानन्वयित्वरूपवाक्यभेदाभावेऽपि विरुद्धत्रिकद्वयप्रयुक्तावृत्तिलक्षणवाक्यभेदापत्त्या नायं पक्षो युक्त इत्याह—नैवमिति। स्वार्थेत्युपादेयत्वमुच्यते। परार्थमित्युद्देश्यत्वम्। विधेयत्वादित्रिकं यथासंख्येनानुवाद्यदिविरुद्धं बोध्यम्। प्रकरणे प्रकृतापूर्वसाधनद्रव्ये। तृतीययेति। गुणस्यैवेत्येवकारेण द्रव्यव्यवच्छेदः। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वात् गुणस्यैव चाकृत्यधिकरणन्यायेन पटस्य शुक्ल इति केवले गुणे प्रयोगेण च प्रकृत्यर्थत्वात्। अमूर्तत्वेनायोग्यतामुक्तां निरस्यति—तच्चेति। द्रव्यद्वारेण द्रव्यपरिच्छेदद्वारेण। एतदेवोपपादयति—यद्यपीत्यादि। गोव्यक्त्यन्त-

---

१ अनेन कारकशक्तेरेव क्रियान्वययोग्यत्वं न तु शक्तिमतो द्रव्यस्य। ततश्च शक्तिमद्-द्रव्याभिधायित्वे क्रियान्वयो न स्यादिति दोषं ग्रन्थकारस्सूचयति।

ति युक्तमस्य क्रियासाधनत्वम्। गुणं हि साधनत्वेन विदधच्छब्दो यथा ह्येतेन शक्यते साधयितुं तथा कुर्यादित्याह। स च द्रव्यपरिच्छेदमुखेन शक्नोति साधयितुं नान्यथा। तेनायमर्थो भवति—अरुणपरिच्छिन्नेन द्रव्येण कुर्यादिति। एवं सम्भवति श्रौतस्यैव गुणस्य क्रयैकवाक्यत्वेन लक्षणा वाक्यभेदश्च न युज्यते। यदा च क्रयार्थत्वं तदा तदीय एव द्रव्ये निवेशादेकहायन्यामेवास्य निवेशः। ननु वासःप्रभृतीन्यन्यान्यपि क्रयद्रव्याणि तेष्वपि निविशेत। न; तेषां क्रयान्तरद्रव्यत्वात्। भिन्ना ह्येते प्रतिवाक्यं क्रयाः, विधिभेदात्। सर्वे ह्येते विधयोऽन्योन्यस्मिन्नुत्पत्तिशिष्टद्रव्यावरोधाद् द्रव्यान्तरं विधातुमशक्नुवन्तस्तत्तद्द्रव्यविशिष्टक्रयविधानार्थाः। न च विहितस्य विधानं सम्भवतीति सिद्धः क्रयभेदः। तदाह भाष्यकारः—'भिन्ने हि वाक्ये एकहायनीसाधनक एकः क्रयोऽवबुद्धो भवति, अरुणसाधनकमपि क्रयान्तरम्' इति। एवं हि वदन्वाक्यभेदे क्रयभेदं दर्शयति। तेन ये[1] तु गुणकर्मत्वात्क्रयाणां भेदं नेच्छन्ति, ते

---

रेम्य इयं क्रयसाधनीभूता गौरिति व्यावृत्तत्वबुद्धिः कर्मव्यापृतस्य परिच्छेदपदार्थः। कथमेतद्द्वारकसाधनतावगम इत्याशङ्क्य योग्यताबलादित्याह—गुणं हीति। फलितमर्थं दर्शयति—तेनेति। द्रव्येणेत्यनन्तरं क्रयमिति शेषः। अरुणगुणेन द्रव्यपरिच्छेदद्वारा क्रयं कुर्यादिति वाक्यार्थो बोध्यः। नन्वेवमरुणगुणाश्रयस्य द्रव्यस्यैव लक्षणयावगतस्य साक्षादेव करणत्वमस्तु। न च श्रौतैकहायन्यवरोधान्नैतत्सम्भवतीति शङ्क्यम्, लक्षितस्य द्रव्यस्य वस्तुत एकहायनीरूपत्वेन विरोधाभावादित्याशङ्कां निरस्यति—एवमिति। प्रकृते लक्षणायामन्वयानुपपत्तिरूपकारणाभावादरुणामानयेत्यादौ तु आनयनकर्मत्वान्वयानुपपत्त्या द्रव्यलक्षणाभ्युपगम इति भावः। तदीय एवेति। क्रयसाधनभूत एवेत्यर्थः। तच्च द्रव्यं स्ववाक्योपस्थितैकहायनीरूपमेवेत्याह—एकहायन्यामेवेति। अयमेव यारुणा सा एकहायनीति पार्ष्ठिकान्वय इत्युच्यते। वाससा क्रीणातीत्यादिवाक्यभेदेन क्रयभेद इत्यत्र भाष्यसम्मतिमाह—तदाहेति। ननु नात्र वासःप्रभृतिगुणात्क्रयभेद उक्तः, किन्त्वारुण्यरूपात्। स च पूर्वपक्षे क्रीणातेः पृथग्भूतस्यारुणगुणस्य क्रयभेदकत्वासम्भवात् सिद्धान्ते च वाक्यभेदाभावादयुक्त इत्याशङ्क्याह—एवमिति। भाष्ये हि अरुणैकहायन्योः परस्परनियमे एकवाक्यत्वं कारणमिति सिद्धान्ताक्षेपेण भिन्नवाक्यत्वेऽपि क्रयसाधनपरिच्छेदकत्वेनैव क्रयाङ्गत्वादेकहायनीसम्बन्धनियमः सेत्स्यतीति किमेकवाक्यत्वेनेति शङ्कित्वोक्तं भिन्ने हीत्यादि। तथाच विधेरावृत्तावरुणासाधनकादेकहायनीसाधनकः क्रयो गुणाद्भिन्न एवेति न परस्परमरुणैकहायन्योः सम्बन्धस्सिध्येदिति वदन् वासःप्रभृतिगुणभेदात्क्रयभेदं सुतरामभिप्रैतीति भावः। क्रयैकत्ववादिगुरुमतं निरस्यति—तेनेति। उक्तन्यायेनेत्यर्थः। गुणकर्मत्वात् एकप्रयोजनसन्निपत्योपकारिकर्मत्वात्। कर्मभेदो हि वैजात्यरूपः, वैजात्यञ्च कार्यवैजात्ये युज्यते

---

१. प्राभाकराः—गुणकर्मणां साध्यभेदाद्भेदः, प्रकृते च सोमस्यैव सर्वत्र साध्यत्वेन साध्यभेदाभावान्न क्रयभेद इत्याहुः, तन्मतं दूषयति।

न्यायविरोधाद्भाष्यविरोधाच्चोपेक्षणीयाः। न च गुणकर्मणां भेदो नास्तीति राजाज्ञा, ऐन्द्रवायवादिग्रहाणां भेदस्य पशुसोमाधिकरणे दर्शितत्वात्। अतोऽस्ति क्रयभेदः। 'क्रयणेषु विकल्पस्स्यात्' इत्यत्राधिकरणे क्रयाणामेव विकल्पसमुच्चयचिन्ता न द्रव्याणामित्यविरोधः ॥६॥

॥ इति अरुणाधिकरणम् ॥ ६ ॥

७

सू० एकत्व—एवं त्रिभिरधिकरणैः क्रमेण संस्कारद्रव्यगुणानां यथासंयोगं व्यवस्थोक्ता। संयोग एव त्विदानीं चिन्त्यते—किं विवक्षितविशेषणेन शेषिणा शेषस्य संयोगः? किमविवक्षितविशेषणेन? इति। एवं हि श्रुतं 'ग्रहं संमार्ष्टि' इति। तत्र संशयः—किमेकस्य ग्रहस्य सम्मार्गः? उत सर्वेषाम्? इति। तदर्थञ्च किमुद्देश्यगता सङ्ख्या विवक्षिता? न? इति।

---

नान्यथा। प्रकृते च सोमप्राप्तिरूपकार्यैक्यान्न तद्धेतुभूतक्रयवैजात्याङ्गीकारः प्रयोजनवानिति हि गुरुमतम्। ननु न्यायस्यैतदतिरिक्तविषयत्वादत एव च भाष्यविरोधस्याकिञ्चित्करत्वान्न दोष इत्याशङ्क्याह—नचेति[1]। बलवद्बाधकाभावे न्यायसङ्कोचो न युक्त इति भावः। न च तत्तत्पात्रगतग्राह्यसोमरसभेदाद्देवताभेदाच्च ग्रहणभेदेऽपि न क्रयभेद इति वाच्यम्, वाससेति निरपेक्षसाधनभूतवस्त्रादिभेदेन क्रयस्यापि भेदोपपत्तेः। क्रयभेदे किञ्चिद्द्रव्यविस्मृतौ तेन द्रव्येण पुनः कर्तव्यः क्रयः, ऐक्ये तु प्रधानस्य निष्पत्तेर्द्रव्यापचारप्रायश्चित्तमात्रमिति प्रयोजनस्यापि सत्त्वाच्चेत्याशयः। द्वादशाध्यायाधिकरणसूत्रविरोधमाशङ्क्य परिहरति—क्रयणेष्विति। भावे ल्युडयम्, न करण इति भावः। अर्थैकत्वे तत्प्रयुक्तैकवाक्यत्वे द्रव्यगुणयोरेकक्रयरूपकर्मार्थत्वान्नियमः परस्परान्वयरूपः स्यादिति सूत्रार्थः। प्रयोजनं स्पष्टम् ॥ इति अरुणाधिकरणम् ॥ ६ ॥

एकत्व—सङ्गतिं दर्शयितुमाह—एवमिति[2]। क्रमेण त्रिधेरन्तरङ्गतया प्रथमं क्रियावघातादिरूपा, ततस्तदाश्रयभूतं द्रव्यम्, ततस्तदाश्रितो गुण इति क्रमेण। संयोगसामान्यनिरूपणानन्तरं तद्विशेषनिरूपणं पूर्वोक्तस्य गुणस्य क्रियाङ्गत्वस्यापवादरूपेण क्रियते इत्याह—संयोग एव त्विति। श्रुतीति। एकवचनश्रुतीत्यर्थः। 'पशुना यजेत' इति विधेयपशुगता संख्या

---

१ एकस्मिन्नपि साध्ये विकल्पेन समुच्चयेन वानेकसाधनान्वयसम्भवात्साध्यभेदो न कर्मभेदप्रयोजकः, किन्तु विधिभेद एवेति भावः।

२ सम्मार्गस्य तेषामर्थाधिकरणन्यायेन यथासंयोगं ग्रहशेषत्वे सिद्धे संयोगप्रकारविशेष इदानीं चिन्त्यत इति श्रौतविनियोगचिन्तारूपत्वादध्यायसङ्गतिः, यथासंयोगं शेषत्वे सिद्ध एव तद्विशेषचिन्ता सङ्गच्छत इत्यनन्तरसङ्गतिश्च।

तत्र श्रुतेर्बलाद्यद्वत् सङ्ख्योपादेयगामिनी ।
विवक्षिता तथोद्देश्यगता श्रुत्यविशेषतः ॥

इति प्राप्तेऽभिधीयते—

उद्देश्यलक्षणं जातिर्यद् द्रव्यं लक्ष्यते तया ।
तस्याङ्गमेष सम्मार्गस्सर्वस्येति विनिश्चयः ॥

यदि ग्रहत्वजातेरयं संस्कारस्स्यात्ततस्तस्याः प्रतिव्यक्ति समाप्तेः, यत्र क्वचिद् द्रव्ये संस्कृते सा संस्कृतैवेति न द्रव्यान्तरे संस्कारः क्रियेत, तस्यास्त्वमूर्तत्वादसाधनत्वाच्च तल्लक्षितानां द्रव्याणां ज्योतिष्टोमापूर्वसाधनानामयं संमार्गः । तत्रापि यदि द्रव्याणि संमार्गं प्रति गुणभूतानि स्युः पशुरिव यागं प्रति, ततो येन केनापि सिद्धेर्नावश्यं सर्वत्र क्रियेत । न हि यावद्गुणं प्रधानमावर्तयितव्यं प्रयोजनाभावात् । ततश्च कियता द्रव्येणायं संमार्गः कर्तव्य इत्यपेक्षा भवति । तस्यां चापेक्षायां परिच्छेदकत्वेन सङ्ख्या विधीयते पश्वेकत्ववत् । प्रधानानि त्विह द्रव्याणि संमार्गं प्रति द्वितीयानिर्देशात् प्रयोजनवत्वाच्च । प्रतिप्रधानञ्च गुणावृत्तेस्सर्वेषां समुच्चितानामयं संस्कार इति निश्चयान्न परिच्छेदकापेक्षा । तदभावाच्च न सङ्ख्या पूर्ववदादर्त्तव्या । परिच्छेदकतया हि तस्याः क्रियान्वयः । न च परिच्छेदोऽपरिच्छिन्ने सम्भवतीति द्वाराभावान्न क्रियान्वयस्सङ्ख्याया विधातुं शक्यते । विधीयमानमप्येकत्वं सर्वद्रव्येषु समुच्चयेन संमार्गे प्राप्ते परिसङ्ख्यार्थं स्यात् । सा च त्रिदोषा । न चैकस्मिन्वाक्ये सम्मार्गविधिः परिसङ्ख्या च सम्भवति, वचनव्यक्तिभेदात्[1] । न चास्य विधिरपि सम्भवति । कुतः ?

---

दृष्टान्तः । उद्देश्यलक्षणमिति । उद्देश्याया व्यक्तेर्लक्षिकेत्यर्थः । सम्मार्गकर्मत्वस्य ग्रहत्वजातौ बाधादिति भावः । तया जात्या । श्लोकोक्तग्रहव्यक्तिप्राधान्यस्य सम्मार्गक्रियायास्तदङ्गत्वस्य चोपादेयस्थलवैलक्षण्यस्य प्रकृतोपयोगं दर्शयति—यदीति । सर्वत्र सर्वग्रहेषु । एतदुत्तरं सम्मार्ग इति शेषः । प्रयोजनाभावादिति । प्रयोजकाभावादित्यर्थः । प्रधानं ह्यङ्गप्रयोजकं न त्वङ्गं प्रधानप्रयोजकमिति भावः । ननु प्रधानपरिच्छेदकतयैव सङ्ख्या विधीयतामत आह-प्रतिप्रधानमिति कियत्संस्कार्यमिति संशये हि एतावदिति निर्णयरूपपरिच्छेदाकाङ्क्षा, न तु तन्निश्चयसत्वेऽपीत्यर्थः । द्वाराभावादिति । यथा वैतुष्यद्वाराङ्गस्यावघातस्य वैतुष्यासंभवे कृष्णलेषु न विधानं । तथात्रापीति भावः । ननु परिच्छेदानपेक्षायामपीतरव्यावर्तनार्थमेकत्वविधिरस्त्वित्यत आह-विधीयमानमपीति । ननु श्रुतैकवचनबलात्त्रैदोष्यमप्यङ्गीकार्यमत आह—न चैकस्मिन्निति । विधिं विना सम्मार्गप्राप्त्यभावात्तदभावे च परिसंख्याया असम्भवादनेनैव वाक्येन ग्रहस्सम्मार्ष्टव्य एकातिरिक्तश्च नेति विरुद्धनानार्थबोधनासम्भव इत्यर्थः । एवं विधिसंभवमभ्युपेत्य परिच्छेदापेक्षाभावादिदूषणमुक्तम्, इदानीमेकत्वविधेरसम्भव एवेत्याह—नचेति । विकल्पपूर्वकं विध्यसम्भव-

---

१ ग्रहं समृज्यादेकमेव न तु ग्रहान्तरमित्येवं संमार्गविधिवचनव्यक्तेः परिसंख्यावचनव्यक्तेश्च भेदेन वाक्यभेदप्रसङ्गादित्यर्थः ।

**ग्रहस्य संमृजेर्वैतत् प्रधानं गुण एव वा।**
**सर्वथा वाक्यभेदः स्यादतो नास्य विधेयता ॥**

विधीयमानं ह्येकत्वं यदि तावद्ग्रहद्रव्यस्य विधीयेत, ततो ग्रहसंमार्गसम्बन्धो ग्रहैकत्वसम्बन्धश्चेत्यर्थद्वयविधानाद्वाक्यभेदस्स्यात्। विहितमपि चैकत्वं ग्रहस्वरूपमात्रोपक्षयान्न संमार्गविशेषणमिति सर्वेषां संमार्गस्स्यादित्यस्मत्पक्षाविरोध एव। अथ संमार्गान्वितस्य ग्रहस्यैकत्वसम्बन्धो विधीयते न स्वरूपमात्रस्य। नैवं शक्यम्, न हि संमार्गो ग्रहविशेषणम्। निर्ज्ञातं हि विशेषणं भवति। संमार्गस्त्विहापूर्वो विधीयते। कथमसौ ग्रहविशेषणम्? युगपद्वा विधानविशेषणत्वयोरभ्युपगमे वाक्यभेदः—ग्रहं संमृज्यात् यञ्च संमृज्यात्स एक इति। अथैकत्वविशिष्टस्य ग्रहस्य संमार्ग एकोऽर्थो विधीयते, तेन न कश्चित्पूर्वोक्तो दोषस्स्यादिति मतम्। कस्तदा भवति वाक्यार्थः—यद्ग्रहजातीयमेकसंख्यञ्च द्रव्यं तस्य संमार्ग इति। एवमपि सर्वेषां प्रत्येकमेकत्वाद्ग्रहत्वाच्च सम्मार्गस्य च तद्गुणत्वात्सर्वत्र प्राप्तिस्स्यात्। अपि च विभक्त्या युगपत् सङ्ख्या कारकञ्चोच्यते, न तु प्रथमं सङ्ख्यां प्रातिपदिकार्थस्याभिधाय पश्चात्तद्विशिष्टस्य कारकत्वं, येनैकत्वविशिष्टस्य ग्रहस्य सम्मार्गं प्रति कर्मता स्यात्। यत्र तावदेकत्वं

---

मेव दर्शयति—ग्रहस्येति। एतदेकत्वं[1] ग्रहस्य ग्रहं प्रति प्रधानं गुणो वा सम्मृजेः सम्मार्गस्य तं प्रतीति यावत् प्रधानं गुणभूतं वेति विकल्पचतुष्टयम्। सर्वथा सर्वप्रकारेषु। वाक्यभेद आवृत्तिलक्षणस्स्यादित्यर्थः। अस्य एकत्वस्य। विधेयता विध्यन्वयः। तत्राद्यपक्षद्वयं तन्त्रेण दूषयति विधीयमानमिति। विधिनान्वीयमानमित्यर्थः। ग्रहद्रव्यस्य ग्रहद्रव्यसम्बन्धितया। सम्बन्धश्च गुणत्वेन प्रधानत्वेन वेति पक्षद्वयसङ्ग्रहः। अर्थद्वयेति। ग्रहं संमृज्यात् इत्येकोऽर्थः, सम्बन्धश्च कार्यः, एकत्वं ग्रहसम्बन्धीति वापर इत्यर्थः। अत्र च ग्रहपदावृत्तेश्च वाक्यभेदस्स्पष्टः। एवमपि पूर्वपक्षिणो नेष्टसिद्धिरित्याह—विहितमपीति। स्वरूपमात्रोपक्षयात् ग्रहस्वरूपमात्रसम्बन्धपर्यवसानात्। न संमार्गविशेषणम् न संमार्गस्य ग्रहान्तरेभ्यो व्यावर्तकम्। दोषद्वयोद्धारेण शङ्कते—अथेति। संमार्ष्टव्यो यो ग्रहः स एक इति प्रकारेणेत्यर्थः। संमार्गाप्राप्तौ तद्विशिष्टतया ग्रहानुवादासम्भव इत्याह—नैवमिति। निर्ज्ञातं निर्णीतम्। एवमपीति। एकत्वविशिष्टग्रहस्योद्देश्यत्वेऽपीत्यर्थः। नन्वेकत्वस्य सजातीयद्वितीयव्यवच्छेदकत्वेनैवान्वयः, अन्यथा पश्वेकत्वविवक्षायामपि पशुद्वयोपादानात्तिरोधाद्वैगुण्याप्रसङ्गस्स्यादिति वाच्यम्। अनुष्ठानकाले उपादेयपरिच्छेदार्थतया विधेयस्य पश्वेकत्वस्य सजातीयराहित्यविशिष्टसमवायेनान्वयेऽपि अनुपादेयग्रहैकत्वस्य परिच्छेदाकांक्षाविरहेण तादृशसंसर्गेण विधितात्पर्याभावस्य प्रागेव दर्शितत्वात्। एतदस्वरसादाह—अपि चेति। युगपत् एकाभिधानश्रुत्या। सङ्ख्या कारकञ्चेति। तथाच संख्यायाः कर्मत्वेनैवान्वयो न पूर्वं ग्रहेणेति ग्रहविशेषणत्वानुपपत्तिरित्यर्थः। अधुना संमार्गं प्रतिप्रधानगु-

---

१ किमेकत्वं ग्रहसम्बन्धि सत् त्रिषिसंस्पर्शि संमार्गसम्बन्धि सद्वा? यदा च संमार्गसंबन्धि तदा किं संमार्गापेक्षया प्रधानमुत गुणः? सर्वथा वाक्यभेदस्स्यादित्यर्थः।

ग्रहविशेषणम्। अथैतदपि पश्वेकत्ववद्विभक्तिश्रुत्या कारकं सत्क्रिययैव सम्बध्यते, तत्रापि द्वयी गतिस्स्यात्—एकत्वस्याङ्गं संमार्गः, संमार्गाङ्गं वैकत्वम्। यदि तावदेकत्वाङ्गं संमार्गस्स्यात्ततो ग्रहमेकत्वञ्चोद्दिश्य सम्मार्गविधानात्तदुद्देश्ययोश्चोपादेयवत् क्रियया वशीकरणासम्भवात्प्रत्येकमेव ताभ्यां क्रियासम्बन्धात्प्रत्युद्देश्यं वाक्यसमाप्तेर्वाक्यभेदः। पुनरपि च ग्रहस्यैकत्वानपेक्षस्यैव सम्मार्गान्वियात्सर्वग्रहसम्मार्गस्स्यादित्यस्मत्पक्षसिद्धिः। अथैकत्वं सम्मार्गस्य गुण इत्युच्यते, तदयुक्तम्; न हि द्वितीया गुणत्वं वदति, प्राधान्यवाचिनी हि सा। अथ सक्तुवल्लक्षणया गुणत्वमुच्यते, न तु श्रुतिसम्भवे सा युक्ता। किञ्च तथा सति ग्रहस्यापि गुणत्वं स्यात्। अथैकत्वस्य गुणत्वं ग्रहस्य च प्राधान्यमुच्यते, न तच्छक्यम्; कथं हि सकृदुपात्ता द्वितीया विभक्तिर्ग्रहापेक्षया प्राधान्यं श्रुत्याभिदध्यात्? एकत्वापेक्षया च गुणत्वं लक्षयेत्। तत्र कथञ्चिदेकत्वं विवक्षितुं शक्यम्॥

॥ इति ग्रहैकत्वाधिकरणम्॥ ७॥

---

णभावेन विधिसम्बन्धपक्षावाशङ्कते—अथेति। कारकं सत् कर्मत्वान्वितं सत्। आद्ये दूषणमाह—यदि तावदित्यादि। ग्रहं संमृज्यादिति उद्देश्यभेदेन क्रियापदावृत्त्या वाक्यभेदः स्यादित्यर्थः। नन्विहोद्देश्यभेदादिव पशुनेत्यत्र पश्वेकत्वरूपोपादेयभेदादपि कुतो नावृत्तिरित्याशङ्क्योक्तम्—उद्देश्योरिति[1]। परस्परानपेक्षैकविधनानाकारकान्वयस्य क्रियायां निराकांक्षतया असम्भवान्नोद्देश्ययोः कर्मकारकरूपयोरेकक्रियान्वयः पश्वेकत्वयोररुणैकहायन्योश्च परस्परापेक्षयोरन्वयात्परस्परानपेक्षत्वादिति विशेषणम्। न च ग्रहैकत्वयोरपि परस्परापेक्षत्वान्न दोष इति वाच्यम्। ग्रहाणां निर्ज्ञातसंख्यतया अपेक्षाभावस्य प्रागेवोक्तत्वात्। एकस्यामेव क्रियायां करणाद्यन्वयादेकविधेति। निमित्तकर्मणोरेकक्रियान्वयात्कारकेति। न च तर्हि निमित्तद्वयोपादाने वाक्यभेदो न स्यादिति वाच्यम्। तत्राप्यनुष्ठापकत्वरूपनिमित्तवशेन द्वयोरपि भाव्यद्वयाक्षेपकतया कर्मकारकानेकत्वप्रसङ्गेन वाक्यभेदोपपत्तेः। कारकनानात्वञ्च नानापदबोध्यत्वम्। तेनैकपदबोध्यनानाकर्मकारकसत्वेऽपि 'सर्वेभ्यो दर्शपूर्णमासौ' इत्यादौ न वाक्यभेद इति दिक्। ग्रहापेक्षयेति। ग्रहान्विततयेत्यर्थः। एवमेकत्वापेक्षयेत्यपि ज्ञेयम्। अतश्च यथाप्राप्तानुवादकमेकवचनमिति नैकत्वस्य विधिविषयत्वमित्युपसंहरति तदिति। ग्रहमित्येकत्वेन युक्तं समभिव्याहृतं सम्मार्गादि एकस्यैव कार्यम्। एकवचनश्रुतिसंबन्धादिति सूत्रार्थः। प्रयोजनं स्पष्टम्॥ ७॥

---

१ उपादेययोः पश्वेकत्वयोः पृथक्कारकान्वयेऽपि क्रियागुणत्वेन क्रियावशीकृतयोर्युगपदेव क्रियया सम्बद्धे सति उभयविशिष्टक्रियायां सकृदेव विधिव्यापारान्न विध्यावृत्तिलक्षणवाक्यभेदः। उद्देश्यस्थले तु क्रियाया एव ग्रहैकत्वे प्रति गुणत्वात्तयोः प्रधानतया क्रियावशवर्तित्वाभावेन प्रत्येकमेव क्रियान्वये सति विध्यन्वयदशायां पश्वेकत्वोभयविशिष्टक्रियावदेकस्य विशिष्टस्याप्रतीतत्वेन सकृद्विधिव्यापारेणानिर्वाहात् प्रत्येकमेव विधिव्यापारस्य वक्तव्यतया वाक्यभेदस्स्यादिति बोध्यम्।

८

**सू० संस्काराद्वा** — किमेकत्ववत्प्रातिपदिकार्थस्याप्यविवक्षितत्वाच्चमसानामपि सम्मार्गः कर्त्तव्यः ? उताविवक्षाकारणाभावाद् ग्रहाणामेव ? इति विचारः। तत्र संमार्ष्टीत्येतावत्युक्ते सोमावसेकनिर्हरणप्रयोजनतया सोमपात्राणामित्यवगमाद् भूयः कस्येत्यपेक्षाभावादविवक्षितं ग्रहग्रहणमेकत्ववदुपलक्षणमात्रम्। अपि च सोमयागस्यैकत्वात्तदपूर्वमप्येकमेव। तत्साधननिवेशी च सम्मार्गश्चमसेष्वपि तत्साधनेषु भवितुमर्हति। न ह्यत्र कर्मभेदोऽस्ति, येनापूर्वभेदादवघातादिवद् व्यवस्था स्यात्। तस्माच्चमसेष्वपि स्यादिति प्राप्तेऽभिधीयते—

**न हि ग्रहविवक्षायां वाक्यभेदः प्रसज्यते।**
**यागैकत्वेऽप्यपूर्वाणि भिद्यन्तेऽभ्यासभेदतः॥**

न तावदेकत्वविवक्षावद् ग्रहविवक्षायां वाक्यभेदः। अवश्यं हि सम्मार्गः कस्यचिद्विधातव्यः। तत्र शब्दोपनीतं ग्रहमुल्लङ्घ्य न युक्तं यत्सामर्थ्यलभ्यं सोमपात्रमात्रं गम्यते। एकस्यापि च यागस्याभ्यासभेदात्तेषाञ्चापूर्वमन्तरेण संहत्यकारित्वायोगादवश्यं प्रत्यभ्यासमपूर्वाणि भिद्यन्ते। ततश्च ग्रहशब्दलक्षितापूर्वविशेषनिबन्धनस्संमार्गो न चमसेषु कर्तव्यः॥

**॥ इति चमसाधिकरणम्॥ ८॥**

९

**सू० आन**—'सप्तदशारत्निर्वाजपेयस्य यूपः' इति श्रूयते। तत्र संशयः—किं सप्तदशारत्नित्वं वाजपेयसाधनभूतोर्ध्वपात्रद्वारेण वाजपेयाङ्गम् ? उत यूपद्वारेण पश्वङ्गमिति। तदर्थञ्च किं सप्तदशारत्निर्वाजपेयस्येति वचनव्यक्तिः ? उत ? सप्तदशारत्निर्यूप

---

संस्काराद्वा—प्रत्युदाहरणसङ्गतिं दर्शयन् विचार्यमाह—किमिति। पूर्वपक्षमाह—तत्रेति। सोमस्य सोमरसस्यावसेको निष्यन्दः तस्य निर्हरणमपनयनम्। सोमपात्राणामित्यनन्तरं संमार्ग इति शेषः। ननु ग्रहत्वस्योपलक्षणत्वेऽपि विलक्षणापूर्वसाधनत्वस्यैव लक्ष्यतया चमसेषु तदभावान्न संमार्गस्स्यादत आह— अपिचेति। न च सोमयागस्यैकजातीयत्वेऽपि ग्रहादिसाध्यतत्तदभ्यासापूर्वभेदाद्व्यवस्थेति शङ्क्यम्, अनेकाभ्यासापूर्वाणां धर्मप्रयोजनकत्वे गौरवेण तदसिद्धेरिति भावः। ग्रहत्वाविवक्षायां किं वाक्यभेदो हेतुरुतापूर्वसाधनत्वलक्षणाया आवश्यकतया तदुपक्षीणता ? तत्र नाद्य इत्याह—न हीति। द्वितीये तु ग्रहसाध्यापूर्वभेदात्तस्यैव शीघ्रोपस्थितत्वेन दीक्षणीयावाङ्नियमन्यायेन लक्षणान्न चमससम्मार्गसिद्धिरित्याह—यागैकत्वेऽपीति। गुणानां संमार्गादीनामव्यवस्था चमसादिसाधारण्यं कुतः ? संस्कारात् अपूर्वसाधनगतदृष्टप्रयोजनसंस्कारादिति सूत्रार्थः। कण्ठोक्तमेव प्रयोजनम्॥ ८॥

आन—सप्तदशेति। अरत्निशब्देन कूर्परमारभ्य कनिष्ठिकाग्रपर्यन्तहस्तपरिमाणमुच्यते। उद्देश्यतयावगम्यमानस्य यूपपदार्थस्य विवक्षया आक्षिप्यसमाधानादनन्तरसङ्गतिः। तदर्थ-

इति। तत्राव्यवहितत्वात्प्रधानत्वप्रकरणानुग्रहाच्च सप्तदशारत्निर्वाजपेयस्येति सम्बन्धः। परिमाणञ्च साक्षात्कर्मणि न सम्भवतीति तत्साधनभूतोर्ध्वपात्रद्वारेण सम्बध्यते। यूपशब्दश्चोर्ध्वपात्र एव सादृश्याद्वर्तते। यद्वा वाजपेयस्येति षष्ठ्या तत्सम्बन्ध्यूर्ध्वपात्रमुद्दिश्य सप्तदशारत्नित्वं विहितं तद्द्वारेण वाजपेयाङ्गं भवतु। एवञ्च वाजपेयशब्दः श्रुतिवृत्तो भवति। यूपसम्बन्धे तु वाजपेयस्य यूपाभावात्पशुयागसम्बन्धित्वाद् यूपस्य वाजपेयशब्दः पशुलक्षणार्थस्स्यात्। नन्वितरत्रापि यूपशब्दो गौणः, स तु न दोषः, जघन्यत्वाद् यूपशब्दस्य। वाजपेयशब्दस्य तु मुख्यत्वात्तत्र न लक्षणा युक्ता, तस्मादूर्ध्वपात्रे निवेशः।

स्यादेवं यदि यूपेन सम्बन्धे लक्षणा भवेत्।
वाजपेयश्रुतेर्नासौ श्रुतिवृत्त्यैव सा यतः॥
षष्ठी सम्बन्धमात्रार्था नाङ्गाङ्गित्वमपेक्षते।
नाप्यव्यवधिसम्बन्धं देवदत्तस्य नप्तृवत्॥
यूपस्य च पशुद्वारा वाजपेयोपकारतः।
सम्बन्धमात्रमस्त्येव क्रतुनातो न लक्षणा॥
ऊर्ध्वपात्रेण सम्बन्धे यूपशब्दस्य गौणता।
अनन्तरेण सम्बन्धः प्रधानेन च सङ्गतिः॥
प्रक्रियानुग्रहश्चैवं नादृत्यः श्रुतिबाधतः।
तेन सप्तदशारत्निर्यूप इत्येव सङ्गतिः॥
सा च प्रकरणाद्वाजपेयसम्बन्धियूपगा।
तेनायं वाजपेयस्येत्यनुवादो भविष्यति॥ ९॥
॥ इति आनर्थक्यतदङ्गाधिकरणम्॥ ९॥

---

ञ्चेति। वाजपेयस्योद्देश्यत्वे वाजपेयाङ्गत्वम्, यूपस्योद्देश्यत्वे तद्वारेण पश्वङ्गत्वमिति भावः। प्रकरणेति। वाजपेयप्रकरणपाठो हि वाजपेयाङ्गत्वे घटते, नान्यथेत्यर्थः। ऊर्ध्वपात्रं षोडशिग्रहरूपम्। सादृश्यात् खादिरत्वोर्ध्वत्वादिरूपात्। द्वारसंबन्धस्यार्थिकत्वापेक्षया शाब्दत्वमेव वरमित्याह—यद्वेति[१]। सिद्धान्तमाह—स्यादेवमिति। वाजपेयश्रुतेरिति पूर्वार्धान्वयि। नासौ न लक्षणा। क्रतुना वाजपेयेन। प्रकरणादिति। अधिकाराख्यप्रकरणवशेन वाजपेयापूर्वसम्बन्धित्वस्य यूपपदेन लक्षणादिति भावः। न च दीक्षणीयावाङ्नियमन्यायेन यूपपश्वपूर्वसाधनत्वलक्षणैव किं न स्यादिति शङ्क्यम्। सप्तदशारत्नित्वं विनापि प्रकृतौ यूपपश्वपूर्वयोः सिद्ध्यानर्थक्यस्यापरिहारादिति। प्रधाने वाजपेये आनर्थक्यादसम्भवात्तदङ्गेषु सप्तदशारत्नित्वं भवतीति सूत्रार्थः। प्रयोजनं स्पष्टम्॥ ९॥

---

१. सप्तदशारत्निशब्दस्य बहुव्रीहितया विशेष्यसापेक्षत्वात् षष्ठ्यन्तवाजपेयपदस्य च तत्सामानाधिकरण्याभावेन तद्विशेष्यत्वासम्भवेन साक्षाद्वाजपेयोद्देशेन सप्तदशारत्नित्वविधानमयुक्तमित्यरुचिरत्र बोध्या।

## १०

सू० कर्तृ—दर्शपूर्णमासयोः प्रयाजसमीपे श्रूयते 'अभिक्रामं जुहोती'ति। तत्र भाष्यकारेण जुहोतेः सन्निहितप्रयाजविषयत्वं सिद्धं कृत्वा किमभिक्रमणं तेनैकवाक्यं सत्तत्कर्त्रा सम्बध्यते? किं वा ततो भिन्नं सत्कृत्स्नप्रकरणकर्त्रेति विचारितम्। एवञ्च पूर्वः पक्षः—

**क्रियया कारकस्यैव नान्यस्यास्त्येकवाक्यता।**
**न चाभिक्रमणं मूर्तिवर्जितं कारकं भवेत्॥**

न चारुण्यवद् द्रव्यद्वारेण सम्भवति, तत्र ह्येकहायनीद्रव्यमुपात्तं युक्तं यद् द्वारतां प्रतिपद्यते। अत्र तु जुहोतिना कर्तुरनुपादानान्न द्वारत्वं, तस्माद्विच्छिन्नं प्रकरणेन गृह्यते। शक्यते च क्रियायाः प्रकरणेन ग्रहणं प्रयाजवत्। सम्भवति हि कर्मणः कर्मोपकारत्वं, कारकत्वं तु न सम्भवति। तस्माद्दर्शपूर्णमासाङ्गं सत्सामर्थ्यात्कर्तृसंस्कारकं भवति। कर्ता च सर्वप्रयोगाङ्गमिति सर्वप्रयोगसम्बन्धोऽभिक्रमणस्येति। सिद्धान्तस्तु—

**अनुपात्तोऽपि सद्भावमात्रेण द्वारतां व्रजेत्।**
**कर्ताभिक्रमणं तेन भवेद्धोमस्य साधनम्॥**

वार्त्तिककारस्तु क्त्वान्तमभिक्रमणं न क्रियातोऽन्येन[1] सम्बध्यते। तस्मा-

---

कर्तृ—दर्शेति। एतत्पूर्वपक्षप्रदर्शनम्। प्रयाजेति सिद्धान्तबीजसूचनम्। अभिक्राममिति। आभीक्ष्ण्ये णमुल्चेति क्रियावृत्तौ णमुल् विधानादभिक्रम्याभिक्रम्येत्यर्थः। आहवनीयाभिमुख्येन क्रमणं गमनमभिक्रमणम्। पूर्वाधिकरणे वाजपेयप्रकरणेन यूपरूपोद्देश्यविशेषसिद्धिवदिहापि दर्शपूर्णमासप्रकरणवशेन होमरूपोद्देश्यविशेषलाभप्रसक्तौ तदपवादादनन्तरसङ्गतिः। सिद्धमिति। सामान्यशब्दस्य सन्निधिवशेन विशेषपरत्वस्य व्युत्पत्तिसिद्धत्वादिति भावः। प्रकरणकर्त्रेति। प्रक्रियत इति प्रकरणमिति व्युत्पत्या प्राकरणिकेत्यर्थः। कारकस्यैवेति। यद्यपि निमित्तादेरकारकस्यापि वाक्यीयक्रियान्वयो दृष्टः, तथाप्यत्र क्रियाया एव व्यवच्छेदे तात्पर्यम्। जुहोतिना जुहोतिपदेन। अनुपादानादिति। अनभिधानादित्यर्थः। वस्तुतस्त्वत्रारुणयेतिवत्कारकत्वेनानिर्देशान्न द्वारकल्पनेति वैषम्यं बोध्यम्। तस्मात्—उक्तहेतोः विच्छिन्नं वाक्यात्पृथग्भूतम्। प्रकरणेन—इतिकर्तव्यताकाङ्क्षारूपेण। सम्भवति हीति। वाक्यीयो हि क्रियान्वयः कारकत्वेनैव। प्राकरणिकस्तु प्रयाजवदुपकारकत्वमात्रेणापि सम्भवतीत्यर्थः। सद्भावमात्रेण—लक्षणादिनोपस्थितत्वमात्रेण। कर्तेति पूर्वान्वयि। होमस्य—प्रयाजहोमस्य। क्त्वान्त-

---

१ 'धातुसम्बन्धे प्रत्ययाः' इत्यधिकृत्य णमुलो विधानेन क्रिययैव सम्बन्धनियमस्ततश्च प्रकरणेपि क्रियाभिरेव सम्बन्धो वाच्य इति जुहोति क्रिययैवान्वयो न्याय्यः। न च कारकस्यैव क्रियान्वयनियमः, मातुः स्मरतीत्यादौ शेषत्वेन विवक्षितस्यापि मात्रादेरन्वयदर्शनादभिक्रमणस्यापि समानकर्तृकतया जुहोत्यन्वयोपपत्तेरिति भावः।

ज्जुहोतिसम्बन्धस्य स्पष्टत्वान्न ततो विच्छेदाशङ्केत्यन्यथाऽधिकरणं वर्णयाञ्चकार। 'अभिक्रामं जुहोती' ति होमानुवादेन विधीयमानमभिक्रमणं किं प्राकरणिकसर्वहोमाङ्गम् ? उत प्रयाजहोमस्यैवेति संशयः। तदर्थञ्च किमवान्तरप्रकरणमस्ति न वेति।

फलवद्भावनोद्भूतकथंभावतिरोहिताः ।
नैवाङ्गानां कथंभावाः प्रादुःष्यन्ति तमन्तरा ॥
प्रादुःष्युर्यदि चाङ्गानां कथं भावास्ततो मिथः ।
तेषामङ्गाङ्गितापत्तेरव्यवस्था प्रसज्यते ॥

तस्मान्नावान्तरप्रकरणम्। तदभावे च सन्निधिमात्रेणाभिक्रमणं प्रयाजाङ्गं स्यात्, स च दुर्बलः प्रकरणात्। अतो दर्शपूर्णमासभावनया सम्बन्धात्तदीयसकलहोमाङ्गमभिक्रमणं बर्हिर्धर्मवत्। नन्वसत्यप्यवान्तरप्रकरणे वाक्येनैव प्रयाजाङ्गता स्यादभिक्रामं जुहोतीति। नैवम्; जुहोतेः साधारणत्वेन प्रयाजोपस्थापनाभावात्। ननु अनुवादोऽयं सन्निहितगामी, प्रयाजाश्च सन्निहिताः। नैवम्; बुद्धिविपरिवृत्तिरनुवादस्यापेक्षिता, न पाठप्रत्यासत्तिः। तथा सत्यत्यन्तसन्निधानादुत्तमप्रयाजस्यैवाभिक्रमणमङ्गं स्यात्, न समिदादीनां, तथा 'बर्हिषि हवींष्यासादयती' ति यस्यैव हविषः कियानपि हि पाठतः सन्निधिविशेषोऽस्ति, तस्यैव बर्हिष्यासादनं स्यान्नान्येषां, बुद्धिविपरिवृत्तिश्च सर्वहोमानामविशिष्टा प्रकृतत्वादेव। अतो बर्हिर्हविःशब्दस्येव जुहोतिशब्दस्यापि सङ्कोचायोगात्सर्वहोमाङ्गमभिक्रमणमिति। अत्राभिधीयते—

भवेदेवं प्रयाजानां नास्ति प्रकरणं यदि ।
तेषां वचनसंयुक्ता ये गुणा विहिताः पुरा ॥
पश्चाच्च ये विधास्यन्ते तैस्सन्दष्टमिदं श्रुतम् ।
अभिक्रामं जुहोतीति न ततोऽन्यत्र गच्छति ।

---

मिति णमुलन्तत्वेऽपि समानार्थकत्वादुक्तम्। धातुसम्बन्धे प्रत्यय इत्यधिकारे णमुल्विधानादिति भावः। फलवदिति।[1] फलवत्या भावनाया उद्भूतेन उत्कटेन कथंभावेन कथं भावयेदित्याकाङ्क्षारूपेण तिरोहिताः प्रतिबद्धा इत्यर्थः। तं फलवद्भावनाकथंभावम्। अन्तरा तन्मध्ये। न प्रादुःष्यन्ति न विनियोगसमर्था भवन्ति। कुत इत्याशङ्क्य तत्र बाधकमाह—प्रादुःष्युरिति। बर्हिरिति। यथा बर्हिर्लुनातीत्यादयो धर्मा अङ्गप्रधानसाधारणसकलबर्हिषां तथेत्यर्थः।

अवान्तरप्रकरणाङ्गीकारे पूर्वोक्तं बाधकं परिहरन् सिद्धान्तमाह—भवेदेवमिति। तेषां प्रयाजानां, वचनेन वाचकप्रयाजादिशब्देन संयुक्ता इत्यर्थः। सन्दष्टं तन्मध्यगतम्। इदम् अभिक्रामं जुहोतीति पूर्वान्वयि। ततः प्रयाजेभ्यः। वाचनिकाङ्गसंदंशमेव दर्शयति—

---

१ दर्शपूर्णमासाभ्यां स्वर्गं भावयेत् इति प्रधानवाक्येन फलवत्यां भावनायां प्रतिपादितायां तस्याः कथंभावाकाङ्क्षोद्भवति, तदनन्तरञ्च विधीयमानानां प्रयाजादीनामितिकर्तव्यताग्रहणव्यग्रप्रधानभावनाग्रस्तत्वेन परार्थतयोपक्षीणत्वान्न तेषां स्वयं प्रधानभावमनुभूय स्वार्थमितिकर्तव्यताकाङ्क्षित्वं संभवतीति भावः।

प्रयाजान् विधाय 'समानयत उपभृत' इत्यादिगुणान्विधायाभिक्रामं जुहोतीत्युक्त्वा 'यो वै प्रयाजानां मिथुनं वेद स समिधो बह्वीरिव यजती' त्यादि तत्प्रयाजानिष्ट्वा 'हवींष्यभिघारयती' ति प्रयाजपरामर्शदर्शनान्नूनमेतावता प्रदेशेन प्रयाजास्समाप्यन्त इत्यवगमात्तन्मध्यपतितमभिक्रमणं तदतिक्रमेण नान्यत्र गच्छति। यद्यपि विद्यते चाङ्गभावनानामप्यविज्ञातप्रकारत्वात्कथमित्याकाङ्क्षा, तथापि —

न विद्यते तु सन्दंशो यत्र वाचनिकैर्गुणैः।
तत्राङ्गानां कथंभावः सन्नप्यविनियोजकः॥
निष्फलत्वेन सर्वेषां न विशेषोऽवगम्यते।
कः शेषः कस्य शेषित्वमतस्सर्वं प्रधानगम्॥
अव्यवस्थाप्रसक्तिश्च प्रोक्ता सैवं निराकृता।
सन्दंशे सति सन्दष्टं तदङ्गमितरत् पुनः।
सर्वं प्रधानगामीति नाव्यवस्था प्रसज्यते।
यस्त्वाह साधिकाराणामितिकर्तव्यता स्थिता।
नान्येषामिति तस्यापि प्रतिज्ञामात्रमेव तत्।
अविज्ञातप्रकारत्वादुभयेषां हि सा भवेत्॥

तान्यपि ह्यनुष्ठेयानि न चेदनुष्ठानमेव न स्यात्। एतावांस्तु विशेषः, यदेषाम् अन्यार्थमनुष्ठानं, साधिकाराणान्तु स्वनिष्ठमिति। न चैतावता विशेषः, अन्यार्थस्याप्य-

---

प्रयाजानित्यादिना। उपभृतः पात्रविशेषादाज्यं समानयत इत्यन्त्यप्रयाजद्वयार्थाज्यसमानयनविधिः। मिथुनं स्त्रीपुंरूपम्। समिधो यजतीति स्त्रीरूपसमिद्देवताकः प्रथमप्रयाजः तनूनपातमिति पुंदेवत्य इति वेद। एवमिडो यजति बर्हिर्यजतीत्यत्रापि। एतस्योपपादनं समिधो बह्वीः तनूनपातमेकमित्यादि। अयमर्थः—प्रधानस्य श्रुतफलत्वेनेतिकर्तव्यताकाङ्क्षायामङ्गानां तदुपकारार्थत्वावगतौ कथमुपकर्तव्यमित्यङ्गेतिकर्तव्यताकाङ्क्षा पश्चादुपजायते। साच प्राकरणिकसर्वाङ्गग्राहकपूर्वप्रवृत्तस्वोपजीव्यप्रधानेतिकर्तव्यताकाङ्क्षानिरुद्धवाचनिकैरातिदेशिकैश्चाङ्गैरुपशाम्यतीत्युत्सर्गः। वाचनिकाङ्गसन्दष्टे तु न प्रधानाकाङ्क्षा, वाचनिकाङ्गवत्तन्मध्यगतस्याप्यन्यान्वितत्वेनावगमादिति युक्तस्तस्याङ्गकथंभावेन ग्रह इति। समाप्यन्ते निराकाङ्क्षी भवन्ति। गुरुमतं[1] दूषयति—यस्त्विति। साधिकाराणां फलवतां प्रधानानाम्। नन्वनुष्ठेये कथमित्याकाङ्क्षा, अनुष्ठेयश्च फलवलान्नियोग एव परमापूर्वाख्य इति तस्मै इतिकर्तव्यताकाङ्क्षा युक्तेत्याशङ्क्याह—तान्यपीति। अङ्गजन्यापूर्वाण्यपीत्यर्थः। अन्यार्थम् अन्योपकारार्थम्। स्वनिष्ठं

---

१ प्राभाकरास्साधिकारविधीनामेवेतिकर्तव्यताकाङ्क्षा, तेषामेव स्वतः प्रयोजनतया पुरुषेणानुष्ठेयत्वादङ्गविधीनाञ्च स्वतः प्रयोजनत्वाभावान्नेतिकर्तव्यताकाङ्क्षा इत्यभिप्रयन्ति, तन्मतमनूद्य दूषयति।

विज्ञातप्रकारस्यानुष्ठानासम्भवात् । प्रयाजैरपूर्वं कृत्वा प्रधानस्योपकुर्यादित्युक्ते यो नाम प्रयाजैरपूर्वं कर्त्तुं न जानाति, तस्य भवत्येव कथमाभिरपूर्वं कर्तव्यमिति प्रकारविशेषापेक्षा। सत्यामपि तस्यां सन्दंशपतितं यद्यङ्गं न स्यात्ततोऽविशेषात्सर्वं फलवदङ्गं स्यात् । प्रकाराकाङ्क्षा तु वाचनिकैर्गुणैरर्थापत्तिलभ्येन च स्वरूपनिष्पादनेनाचमनादिभिश्च दर्विहोमवत्पूर्यते, अभिक्रमणन्तु सन्दंशपतितत्वादेवान्तरप्रकरणोद्भूतेः प्रयाजाङ्गम्। एकदेशिनां त्ववान्तरप्रकरणाभावात्सर्वं विधिबाधेन प्रकरणाविशेषात्सर्वार्थः स्यादित्यास्तां तावत् ।

॥ इति अभिक्रमणाधिकरणम् ॥ १० ॥

## ११

**सू० संदिग्धे**—दर्शपूर्णमासयोः सामिधेनीर्विधाय[1] तासाञ्च 'त्रिः प्रथमामन्वाह, त्रिरुत्तमाम्' इत्यादिवचनैर्गुणान् विधाय ततो निविदो नाम मन्त्रा 'देवेद्धो मन्विद्ध' इत्यादयो विहिताः। ततः काम्याः सामिधेनीकल्पा विहिताः। तदनन्तरं यज्ञोपवीतमाम्नातम् 'उपव्ययते देवलक्ष्ममेव कुरुत' इति । ततः पुनरपि च सामिधेनीनामेव वाचनिका गुणा विधास्यन्ते 'अन्तरानूच्यं[2] सदेवत्वाये' त्यादयः। तदत्रोपवीतं प्रति संशयः—सामिधेन्यङ्गमुत दर्शपूर्णमासाङ्गमिति । तदर्थञ्च किं सामिधेनीनां

---

स्वफलार्थम् । न केवलं युक्तिविरोधः प्रकृताधिकरणसिद्धान्तभङ्गोऽपि दूषणमित्याह—एकदेशिनान्त्विति । उत्तराधिकरणवैयर्थ्यं तत्रैव लक्ष्यमाणमिह तावच्छब्देनोक्तम् । कर्तृगणे अभिक्रमणादौ प्रयाजादिकर्मण्यसमवायाद्वाक्यभेदः प्रयाजवाक्यैकवाक्यत्वाभावस्यादिति सूत्रार्थः । प्रयोजनं पूर्वपक्षे सर्वे होमा अभिक्रम्य कार्याः, सिद्धान्तेतु प्रयाजहोम एवाभिक्रमणमिति स्पष्टम् ॥१०॥

सन्दिग्धे—सामिधेनीरिति । समिध्यमानाग्निप्रकाशिका ऋच इत्यर्थः । प्रथमां सामिधेनीं त्रिवारमन्वाह अनुब्रूयात् त्रिरुत्तमामित्येतदुत्तरवाक्यम् । उत्तमां अन्त्याम् । निविदोऽप्यग्निसमिन्धनप्रकाशकाः । काम्याः प्रतिष्ठादिफलार्थाः । कल्पाः प्रयोगाः 'एकविंशतिरनुब्रूयात्प्रतिष्ठाकामस्य' इत्यादिरूपाः । देवलक्ष्म देवचिह्नम्, उपवीतं देवानामिति श्रुतेः । मन्द्रोच्चस्वरयोरन्तरा मध्यमस्वरेणेत्यन्तरेति गुणविधेरर्थः । अवान्तरप्रकरणापवादरूपामनन्तरसङ्गतिं दर्शयन्नुक्तसंशयहेतुमाह—तदर्थञ्चेति । निविदां सामिधेनीप्रकरणविच्छेदकत्वं निरा-

---

१ तैत्तिरीयशाखायां 'हिङ्करोति' इति सामिधेनीगुण एव विहितः, न सामिधेन्यः, तथापि शाखान्तराभिप्रायेणेदं बोध्यम् ।

२ क्रौञ्चमन्द्रोभयमध्यमस्वरेणेत्यर्थः ।

वाचनिकगुणोद्भूतमवान्तरप्रकरणमुपवीतविधावनुवर्तते ? अथवा विच्छिन्नमिदं निविद्भिः ? इति ।

अनुवृत्तौ तदङ्गत्वं विछिन्ने दर्शशेषता ।
किं प्राप्तमुभयत्रापि कीर्तनादनुवर्तते ॥
पुरस्तादुपवीतस्य परस्ताच्चापि कीर्तनम् ।
विद्यते सामिधेनीनामतः प्रकरणास्तिता ॥

निविदस्तु पूषाद्यनुमन्त्रणमन्त्रवत्परप्रकरणपठिता[1] इत्यवगन्तव्यम् । अथवा—

निविदामपि तादर्थ्यं तत्कथं भावसङ्गतेः ।
न चाङ्गैर्व्यवधीयन्ते प्रधानानि कथञ्चन ॥
काम्येष्वप्याश्रयत्वेन तासामप्यनुवर्तनम् ।
उपवीतमतस्तासामङ्गं प्रकरणाद् भवेत् ॥
एवं प्राप्ते वदामोऽत्र निविद्भिर्व्यवधानतः ।
विच्छिन्ना सामिधेनीनां प्रक्रिया नानुवर्तते ॥

यस्तु सन्निधानस्यैवासम्बन्धिभिः पदैर्व्यवधानं न प्रकरणस्येति मन्यते, तस्य सर्वकर्मणां सर्वप्रकरणानुवृत्तेस्सर्वे धर्मास्सर्वेषामुपदेशेनैव स्युः, अतो विश्वजिदादीनामपि क्रत्वर्थत्वं स्यात् । यत्तु निविदामप्यवान्तरप्रकरणेन सामिधेन्यङ्गत्वादव्यवधायकत्वमित्युक्तम्, तदयुक्तम् ; लिङ्गेन हि प्रकरणं बाधित्वा निविदोऽग्निसमिन्धनाङ्गं भवन्ति । न चाग्निस्सामिधेन्यङ्गं भवति, येन तद्द्वारेण निविदोऽपि तदङ्गं स्युः । किं तु सामिधेन्य एवाग्न्यङ्गं निविदोऽपि, न तासां मिथस्सम्बन्धः । यथा वक्ष्यति—'गुणानाञ्च परार्थत्वादसम्बन्ध' इति । तेनासम्बन्धिभिर्निवित्पदैर्दर्शपूर्णमासाङ्गैर्विच्छिन्नं

---

करोति—निविदस्त्विति । यथा 'पूष्णोऽहं देवयज्यया' इति मन्त्रो दर्शपूर्णमासप्रकरणपठितोऽपि न तत्प्रकरणविच्छेदकस्तथेत्यर्थः । ननु बहूनां निविदां परप्रकरणस्थत्वकल्पनापेक्षयाल्पवाचनिकाङ्गानामनारभ्याधीतत्वकल्पनैव लघीयसीत्यत आह—अथवेति तादर्थ्यम् । सामिधेन्यङ्गत्वम्, अग्निसमिन्धनरूपफलप्रकाशनद्वारा, स्वर्गरूपफलप्रकाशनद्वारा 'अगन्म सुवः' इति मन्त्रस्य दर्शपूर्णमासाङ्गत्वमिवेति भावः । एकविंशत्यादिकाम्यविधिभिः प्रकरणविच्छेदमाशङ्क्य निरस्यति—काम्येष्वपीति । आश्रयत्वेन एकविंशत्यादिसंख्याश्रयत्वेन । तासां सामिधेनीनाम् ।

सिद्धान्तमाह—एवमिति । अत्रोपस्थितिरूपसन्निधेरेवासम्बद्धपदेन विच्छेदो न तूभयाकाङ्क्षारूपप्रकरणस्य । अन्यथा पूषानुमन्त्रणमन्त्रेण दर्शपूर्णमासप्रकरणविच्छेदापत्तेरिति गुरुमतं तदनिष्टापत्या तावद्दूषयति—तस्येति । मत इति शेषः । तस्मात्सन्निहितोभयाकाङ्क्षैव

---

१ 'पूष्णोऽहं देवयज्यया प्रजया च पशुभिश्च जनिषीय, सरस्वत्या अहं देवयज्यया वाचमन्नाद्यं पुषेयम्'' इत्याद्यनुमन्त्रणमन्त्रः ।

सामिधेनीनां प्रकरणं नोपवीतं गृह्णाति। नन्वेवं निविदङ्गमुपवीतं स्यात्, न तासां प्रकरणमस्ति, अभितः कीर्तनाभावात्। सन्निधिमात्रमपि नास्ति काम्यैर्व्यवधानात्, तर्हि काम्यानामेवाङ्गं स्यादव्यवधानात् फलावच्छेदेन च प्रकरणसद्भावात्। न, तेषां विकृतित्वात्। इह हि न नित्यसामिधेन्याश्रयणेन गुणमात्रं फलाय विधीयते। विच्छिन्नप्रक्रियाणां तासामाश्रयत्वानुपपत्तेः। वाक्येन चाश्रयसम्बन्धे वाक्यभेदात्, किन्त्वनुवचनान्तराणि सङ्ख्याविशिष्टानि फले विधीयन्ते। तानि च सङ्ख्यायुक्तानुवचनत्वसामान्यान्नित्यानुवचनप्रकृतीनि। ततश्च तासामृचामन्येषाञ्च तद्धर्माणां प्राप्तिः। अनुशब्देन च यस्तत्र 'नमः प्रवक्त्रे' इति निगदानन्तरभावस्सामिधेन्यङ्गत्वेनोक्तस्सोऽप्यत्रातिदिश्यते। स च निगदः क्रतुप्रयुक्तत्वान्न बहिःप्रयोगे लभ्यते। ततस्तद्वशेनानुवचनान्तराणामपि क्रतुमध्ये प्रयोगसिद्धिः। एतैरेव चाग्निसमिन्धनस्य प्रसङ्गात्सिद्धेर्नित्यानुवचननिवृत्तिः। तेनैतेषामनुवचनानां क्लृप्तोपकारप्राकृतधर्मपरिपूरितानां कथंभावापेक्षाभावान्नास्ति प्रकरणम्, पाठसन्निधानमात्रन्तु स्यात्। तच्च दुर्बलं प्रकरणादिति दर्शपूर्णमासाङ्गमेवोपवीतम्। ये तु पश्चात्तना गुणास्तैः, दूरस्थानुवादेनैव द्वादशोपसत्ववद्विधातुं शक्या इति न तद्वशेनैकान्ततः प्रकरणानुवृत्तिर्विज्ञायते, यतः परप्रकरणे पाठो निविदा स्यात्। यद्वा 'तिष्ठन्नन्वाहान्तरानूच्यमि' त्यादिष्वनुवचनमात्रं श्रूयते, तत्र यदि सामिधेन्यनुवचनं प्रकृतं स्यात्ततस्तदेवावगम्येत तदभावात्त्वनुवचनमात्रमनुवाक्यादिसाधारणमिति न सामिधेन्यनुवृत्तिरवधार्यते। यदपि 'देवा वै सामिधेनीरनूच्ये' त्यन्ते वचनं तदप्याघारार्थवादत्वान्न सामिधेन्यनुवृत्तिं सूचयति। तस्माद्दर्शपूर्णमासाङ्गमुपवीतम्। एकदेशिनां त्ववान्तरप्रकरणाभावात्सन्निधेश्च प्रकरणाद् दुर्बलत्वादसत्यपि विच्छेदे सामिधेनीनां दर्शपूर्णमासाङ्गत्वमुपवीतस्य सिध्यतीति व्यर्थमिदमधिकरणं स्यात्।

---

प्रकरणं नोभयाकाङ्क्षामात्रं, तद्विच्छेदश्च सन्निधिविच्छेदात्। पूषानुमन्त्रणमन्त्रेण तु न दर्शसन्निधिविच्छेदः; अग्रे दर्शोद्देशविहितानेकाङ्गसन्दंशादिति वक्तव्यमिति भावः। फलावच्छेदेनेति। फलविशिष्टतयेत्यर्थः। विकृतित्वादिति। विकृतेश्च क्लृप्तोपकारप्राकृताङ्गेष्वेवाकाङ्क्षा, न तु सन्निहितेष्विति न प्रकरणमित्यर्थः। सामिधेन्यनुवचनस्यैव विधानात्काम्यवाक्ये च तदाश्रितसंख्यामात्रस्य फले विधानात्कस्य विकृतित्वमित्याशङ्क्य प्रकृतिविकृतिभावमुपपादयति-इह हीति। अनुवचनान्तराणाम् काम्यानुवचनानाम्। ननु नित्यकाम्ययोरनुवचनयोः कथं निगदानन्तर्यसम्भवः, अत आह-एतैरेव चेति। काम्येन गोदोहनेन प्रसङ्गात्प्रणयनसिद्धेश्चमसनिवृत्तिवदित्यर्थः। द्वादशेति। ज्योतिष्टोमप्रकरणे 'तिस्रः साह्नस्योपसदः द्वादशाहीनस्य' इति वचनेन यथाऽहीनाख्यद्वादशाहादिदूरस्थयज्ञानुवादेन द्वादशसंख्या उपसदो नामेष्टिविशेषा विधीयन्ते तद्वदित्यर्थः। वस्तुतस्तु गुणविधिषु सामिधेनीप्रकरणानुवृत्त्यङ्गीकारे तेषामनुवचनसामान्याङ्गत्वहानिरूपानिष्टप्रसङ्गोऽपि बाधक इत्याह—यद्वेति। पूर्वाधिकरणोद्भाविते गुरुमते दूषणान्तरमाह-एकदेशिनामिति।

कश्चित्त्वाह—'उपव्ययत' इत्येकं पदमन्विताभिधानाय कर्तारमपेक्षमाणं सन्निहितेन कर्त्रान्वीयत इति। तदयुक्तम्; प्रत्ययार्थेनापूर्वेण धातोरन्विताभिधानसिद्धेः, अवश्यञ्चानेन प्रत्ययेन सत्यपि सामिधेनीनां सन्निधानेऽधिकारापूर्वमेवाभिधातव्यं सामिधेनीनां सन्निपातित्वेनापूर्वशून्यत्वात्। अतः पदश्रुत्यैव तदङ्गमुपवीतं भवतीति किमर्थमिदमधिकरणम्? अपि चैवं पूर्वाधिकरणपूर्वपक्षेऽपि विच्छिन्नमप्यभिक्रमणमेकपदत्वात्सन्निहितेनैव प्रयाजकर्त्रान्वीयत इति तदधिकरणवैयर्थ्यं स्यात्। नन्वभिक्राममित्यस्यानाख्याततत्वात्सिद्धवत्प्रतीतेर्न कर्त्राकाङ्क्षा, किन्तु शेषिभूतस्तत्र कर्तापेक्षितः, न च शेषिणान्विताभिधानमिति। नैवम्, अवघातादिषु शेषिणाप्यन्विताभिधानाभ्युपगमात्।

---

तन्मतानुसारेण दूषणोद्धारमाह—कश्चिदिति[1]। उपव्यानक्रियायाः कारकसापेक्षत्वात्कर्तुरनाकुलतासम्पादकतया च कर्तृधर्मत्वावगमात्कर्तैव एकविंशतिरनुब्रूयादिति सन्निहितकाम्यवाक्योपस्थितेनान्वीयत इत्यर्थः। प्रत्ययार्थेति। 'परिपूर्णं पदं पदान्तरेणान्वेति' इति व्युत्पत्तेः प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वाच्च प्रधानापूर्वान्वितस्योपव्यानस्य तन्नियोज्यसंस्कारद्वारकत्वावगमान्न सामिधेन्यङ्गत्वसिद्धिरित्यर्थः। ननु प्रत्ययेन सन्निहितसामिधेन्यपूर्वस्यैवाभिधानात्सामिधेन्यङ्गत्वमेव भवेदित्याशङ्क्याह—अवश्यञ्चेति। सन्निपातित्वेन अग्निसमिन्धनरूपदृष्टार्थत्वेन। तदङ्गं अधिकृतापूर्वाङ्गम्। एतदेव प्रधानापूर्वान्वितत्वेनाभिधानं गुरुमते ग्राहकग्रहणमित्युच्यते। तत्तु प्रधानविषयकत्वेनावगते विषयत्वेनासम्भवादन्विताभिधानान्यथानुपपत्तिरूपचतुर्थाध्यायप्रतिपाद्योपादानाख्यप्रमाणेन प्रधानरूपविषयाङ्गत्वद्वारेति स्थितिः। ननूपव्ययत इति साध्यतयाभिधीयमानायाः क्रियायाः कर्तृकारकाकाङ्क्षोत्कंठ्यात्सन्निहितकर्त्रन्विताया एवापूर्वान्वयस्स्यादित्यवश्यं सन्निधिविच्छेदसाधनापेक्षेति नाधिकरणवैयर्थ्यमत आह—अपिचेति। विच्छिन्नमपि भाष्योक्तरीत्या कर्मणः कर्मार्थत्वायोगाज्जुहोतीत्यस्माद्विभक्तं तदेकवाक्यतानापन्नमपि। एकपदत्वादित्यनन्तरं अन्विताभिधानायेति पूरणीयम्। क्रियात्वेन कर्त्राकाङ्क्षायास्तत्रापि साम्यान्न प्रथमं प्रधानापूर्वान्वयः, येन तत्प्रयोगकर्त्रा सम्बन्धस्स्यादिति भावः। साध्यत्वेनाभिहितायाः क्रियायाः कारकभूतकर्त्राकाङ्क्षाबलात्तदन्विताभिधानं न त्विह तथेति शङ्कते—नन्विति। किं शेषिणान्विताभिधानं नेत्युच्यते? किंवा शेषिभूतकर्तापेक्षितो नानुष्ठातृभूत इति। तत्राद्ये दोषमाह—नैवमिति। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकतयावहन्तीत्यस्यापि कार्यान्वितावघातबोधकत्वमिति भावः। न केवलं कियापदमेव तथा, व्रीहिसोमा-

---

१. शङ्काया अयमाशयः—'उपव्ययत' इत्येकमिदं पदम्। तस्य पर्यवसितार्थत्वाभावात्तत्सिध्यर्थं किञ्चिदपेक्षते। तत्रापि कर्तृप्रयोगत्वात् व्येञोऽकर्मकत्वाच्च कर्तारमेवापेक्षते। तथा चाकाङ्क्षाद्यन्वयसामग्रीबलात्सन्निहितसामिधेनीकर्त्रैवान्वीयते। एवञ्च सामिधेनीसन्निधिविच्छेदाभावे समिधेनीकर्त्रा एकवाक्यत्वापन्नत्वादुपवीतं प्रकरणादपि प्रबलेन वाक्येन सामिधेन्यङ्गमेव स्यादिति तत्सन्निधिविच्छेदप्रतिपादनमर्थवदिति।

अपि च सर्वाण्येव कार्यार्थीनि पदानि कार्येण शेषिणान्वितमर्थमभिदधतीति यत्किञ्चिदेतत्। अपि च यदि न शेषिणान्वितामिधानं, केन तर्ह्यन्वितमभिक्रमणमभिधातव्यम्? न ह्यनन्वितस्याभिधानं सम्भवति। गुणभूतस्तु कर्तानपेक्षितत्वात् न तेनान्विताभिधानं सम्भवतीति त्वयोक्तम्। सम्भवे वा सन्निहितेनैव प्रयाजकर्त्रान्विताभिधानाद् व्यर्थमेकवाक्यत्वप्रतिपादनम्। प्रधानविधिनाभिक्रमणमन्वितमभिधीयत इति चेत्। न, तस्यापि शेषित्वादुपवीतस्यापि तत्सम्भववान्न सन्निहितेनापि सामिधेनीकर्त्रान्वयस्स्यात्। अथानभिहितमभिक्रमणं ग्राहको गृह्णीयादुपवीतमपि गृह्णीयात्। यदपि शेषिभूतः कर्ताऽपेक्षितो नानुष्ठातृभूत इति, तदपि विपरीतम्, अविहितस्य शेष्यपेक्षाभावात्, कर्त्रपेक्षा तु क्रियास्वाभाव्यादेव स्यादित्यास्तां तावत्।

॥ इति उपवीताधिकरणम् ॥ ११ ॥

## १२

सू० गुणानां—आधानप्रकरणे वारणवैकङ्कतानि यज्ञसंयुक्तानि पात्राणि श्रूयन्ते—'वारणा यज्ञावचरो वैकङ्कतो यज्ञावचर' इति। पवमानेष्टयोऽप्याधानप्रकरण एव प्रदेशान्तरे श्रुताः। तत्र पात्रेषु सन्देहः-किं पवमानेष्टयङ्गम्? उत यज्ञमात्राङ्गमिति? तदर्थञ्च किं पवमानहवींष्याधानाङ्गम्? उत तान्यप्याधानेन समप्रधानान्यग्न्यर्थानि? इति। यद्यङ्गं ततो यज्ञसंयोगात्साक्षादाधानेऽसम्भवन्त्यपि[1] पात्राण्यानर्थक्यतदङ्गन्यायेन

---

दिपदान्यपि प्रणाड्या कार्यान्वितस्वार्थपराण्येवेत्याह—अपिचेनि। नहीति। व्यन्हारेणान्वितस्यैवोपस्थितेस्तत्रैव शक्तिग्रहौचित्यादिति भावः। अनपेक्षितत्वात् सिद्धतयावगतेनाभिक्रमणेनानाकाङ्क्षितत्वात्। एकेति। जुहोतिनेत्यादिः। ननु प्रधानस्य सर्वाङ्गग्राहकतया तदन्विताभिधानेऽपि तद्व्यतिरिक्तशेषिणा नान्विताभिधानमित्याशयेन शङ्कते—प्रधानेति। इत्थं सङ्कोचकल्पने मानाभाव इत्याशयेन दूषयति—नेति। एवं सत्युपवीतस्यापि प्रधानान्वयसिद्धावेतदधिकरणवैयर्थ्यमित्याह—उपवीतस्यापीति। तत्सम्भवात् प्रधानान्वयसम्भवात्। अनभिहितं अनन्विताभिहितम्। ग्राहकः परमापूर्वम्। द्वितीयपक्षं दूषयति—यदपीति। अविहितस्य सिद्धवत्प्रतीतेरिति त्वदुक्तहेतुना विध्यन्वयानर्हस्य। कर्त्रपेक्षा अनुष्ठातृकर्त्रपेक्षा। स्वाभाव्यात् अविनाभावात्। सूत्रार्थस्तु-सामिधेन्यङ्गं दर्शाङ्गं त्रेति सन्दिग्धे उपवीतेनिविद्भिर्व्यवायाद्व्यवधानाद्वाक्यभेदः सामिधेन्येकवाक्यत्वाभावस्स्यादिति। प्रयोजनं स्पष्टम् ॥ ११ ॥

गुणानाम्—आधानेति। वरणविकङ्कतौ वृक्षविशेषौ। यज्ञोऽत्र चर्यते सम्पाद्यतेऽनेनेत्यवचरो यज्ञपात्रम्। तत्र वारणानां होमव्यतिरिक्तकार्यद्वारा यज्ञाङ्गता, नत्वेतेन जुहुयादितिवचनात्। वैकङ्कतानां तु स्रुवादीनां होमतदतिरिक्ताभिघारणादिद्वारेति। प्रदेशान्तरे[2] पात्रविधितो

---

१. अनेनापवादिकी सङ्गतिस्सूचिता।

२. इष्टिसन्निधावाम्नानेऽनुवादस्य सति सम्भवे सन्निहितगामित्वेन तदङ्गत्वापत्या सिद्धान्तासिद्धिस्स्यादिति प्रदेशान्तर इत्युक्तम्।

पवमानेष्टिषु भवन्ति। अनङ्गत्वे तु कथञ्चिदपि यज्ञसंयुक्तानां प्रकृताधाननिवेशासम्भादिष्टीनाञ्च स्वयमप्रकृततयानारभ्यवादरूपेण सर्वयज्ञेषु सम्भवन्ति। तत्राधानस्य द्वितीयासंयुक्ताग्निसंस्कारार्थतया फलवत्त्वादफलानि पवमानहवींषि प्रकरणात्तदङ्गम्। अत्रोच्यते—'यदाहवनीये जुहोती' ति वाक्यादेषामप्यग्न्यर्थता। नन्वनारभ्यवादोऽयं सर्वहोमाङ्गमाहवनीयं विधत्ते, न त्वाहवनीयाङ्गत्वं पवमानहविषाम्। अत्र कश्चिदाह अनारभ्यवादेन प्रकृतावाहवनीयोऽङ्गत्वेन विहितः पवमानेष्टिष्वतिदेशेन प्राप्तः, स च पवमानहविर्वेलायामनिष्पन्नत्वान्नाङ्गं सम्भवतीत्यङ्गत्वे निवृत्ते यस्तस्य प्रकृतौ दृष्टस्साक्षात्संबन्धांशस्स इह सम्भवे न बाधनीयः। अवश्यञ्च पवमानहविषामाधानाङ्गत्ववादिनाऽप्यग्निनिष्पादकत्वमभ्युपगन्तव्यम्। तच्च प्राकृतसम्बन्धाबाधाय साक्षादेवास्तु किमाधानप्रणाड्या समाश्रीयत इति सिध्यत्यग्न्यर्थत्वम्। तदिदमसारम्; यत्तावदुक्तमङ्गत्वं निवृत्तमिति तत्स्वसिद्धान्तविस्मरणात्। न हि चोदकावगतमङ्गत्वं निवर्तते। यद्यपि चानिष्पन्नत्वान्न साधयति। तथाप्यसाधयत एवाङ्गत्वमवघातस्येव कृष्णलचराववतिष्ठते। तेन साक्षात्सम्बन्धस्यैवाङ्गत्वेनैव प्रकृतिवदुपपन्नत्वान्न तत्सिद्धयर्थं साध्यत्वमङ्गीकर्तव्यम्। अपि चार्थिकः प्रकृतौ साक्षात्सम्बन्धोऽङ्गत्वमेव शास्त्रार्थः, न चार्थिकं चोदकः प्रतिदिशति, यद्बलेन साध्यता स्यात्। प्रतिदिश्यतां वा सम्बन्धः, स तु येन केनापि प्रकारेण सिध्यंतीति साध्यत्वविशेषः कुतो लभ्यते। यत्तु साध्यत्वमाधानाङ्गत्ववादिनाऽप्यभ्युपगन्तव्यमिति, सत्यमभ्युपगतम्; अस्ति हि तस्य प्रकरणं प्रमाणम्। भवतस्तु किं प्रमाणम्? प्रकरणमेवेति चेन्न; तथा सत्याधानाङ्गत्वद्वारेणैवाग्नीनां साध्यत्वं स्यात्। यदि ह्यविशेषितं साध्यत्वं प्रकरणात्सिध्येत्, ततोऽतिदेशवशेन साक्षात्तदित्या-

---

दूरप्रदेशे। अत्र चोपवीतस्य व्यवहितसामिधेन्यनङ्गत्ववत्पात्राणामपि व्यवहितपवमानेष्टिमात्रानङ्गत्वमुच्यत इति प्रसङ्गसङ्गतिर्बोध्या। वाक्यादिति। अगारे गावो वास्यन्तामितिवदाहवनीय इति सप्तमीसंस्कार्यपरा तत्संस्कारकत्वेन पवमानेष्टिहोमस्य जुहुयादित्यनेन विधानमिति भावः। एतदाक्षिपति—नन्विति। अनारभ्येत्यनेन जुहोतेर्विधेयपरत्वे प्रकरणान्तरन्यायेन कर्मान्तरविधिस्स्यान्न दूरस्थपवानेष्टेरग्न्यङ्गता; अन्यथा विश्वजिदादेरप्यग्न्यङ्गतापत्तिरिति सूचितम्। गुरुमतेन समाधानमाह—अत्रेति। आधानप्रणाड्या आधानद्वारा। स्वसिद्धान्तेति। गुरुमतसिद्धान्तविस्मरणादित्यर्थः। असाधयत एवेति। उपकारमजनयत इत्यर्थः। अत्रासत इत्यप्युपलक्ष्यम्। अङ्गत्वं हि योग्यतारूपमरण्यस्थदण्डादाविव शास्त्रगम्यं न बाध्यते, अन्यथाख्यातिप्रसङ्गेनाप्रामाण्यापत्तेः, किन्त्वशक्त्यानुष्ठानबाधमात्रम्। न च बाधस्थले शास्त्रेणाङ्गत्वमेव न बोध्यत इति वाच्यम्, तथा सत्याप्राप्तबाधप्रसङ्गात्। दशमाध्याये च लुप्तार्थबाधस्य प्राप्तबाधत्वाङ्गीकारेणातिदेशतः कृष्णलचरावप्यङ्गत्वेनावघातप्राप्तेरावश्यकत्वादिति गुरुमतसिद्धान्तरीतिः। नचेति। अन्यथा प्रकृतावग्नये जुष्टमित्यग्निशब्दस्यार्थिकस्यापि विकृतावतिदेशात्तेनैव लक्षणया सूर्यप्रकाशने सत्यूहो न सिध्येदिति भावः। अभ्युपेत्याह—प्रतीति। येन केनापि देवता-

श्रीयेत। क्रत्वर्थत्वमेव तु प्रकरणादवगम्यते, नाविशिष्टं साध्यत्वम्। तेन यदि प्रकरणमङ्गीक्रियेताधानाङ्गतैव स्यात्। नो चेत्साध्यत्वमेव न स्यात्। विश्वजिदादिवत्तु फलं कल्पयित्वाग्नीनामेवाङ्गत्वं स्यात्। अस्तु वातिदेशावगतसाक्षात्सम्बन्धवशादेव साध्यत्वं, तत्तूपदेशात्मकप्रकरणावगतक्रत्वर्थत्वविरोधाद्बाधितव्यम्। अपि च करणत्वेऽपीष्टीनां न भवति साक्षादिष्टिसाध्यत्वमग्नीनाम्। ता हि सकलप्राकृताङ्गाहितोपकारसचिवा अग्नीन् संसाधयन्ति, तेन सर्वाङ्गानुष्ठानादवस्थितमुत्पत्त्यपूर्वं द्वारभूतमङ्गीकर्तव्यम्। तत्प्रणाड्याग्नीनां साध्यत्वं, न साक्षात्। अपि च न प्रकृतावाहवनीयस्य साक्षात्सम्बन्धः, अङ्गभूतेन हि प्रक्षेपेणाहवनीयस्य सम्बन्धः, न साक्षाद्यागेन। तदिहापि प्रकृतिवदतिदेशात्प्रणाड्यैव सम्बन्धस्स्यात्। तस्मान्नैवमग्न्यर्थता सिध्यतीत्यन्यदुत्तरं वाच्यम्। तदुच्यते, अयमभिप्रायो भाष्यकारस्य—

**अनारभ्यविधानेन सत्यं नाग्न्यर्थता भवेत्।**
**तत्तुल्यं वाक्यमस्त्यन्यत्पवमानेष्टिसन्निधौ॥**

तेन चाग्नेरनिष्पन्नस्यैव साधनत्वेन विधानासम्भवात्तस्यैव निष्पादयितव्यस्य फलवत्साधनत्वेनाफलानि पवमानहवींषि विधीयन्ते। सप्तमी च लक्षणया साध्यत्वमेव प्रतिपादयति तप्ते पयसि दध्यानयतीतिवत्। तस्माद्वाक्येनाधानवत्पवमानहविषामग्न्यर्थत्वान्नाधानाङ्गत्वम्। अतस्सर्वयज्ञार्थानि पात्राणीति।

आचार्यस्त्वसत्यपि पवमानहविषामग्न्यर्थत्वे पात्राणां वाक्येन सर्वयज्ञार्थता सिध्यतीति वाक्यद्वयकल्पनाक्लेशं न ममृषे। 'व्रीहीनवहन्ती' त्यादिषु यथाश्रुतव्रीहिमात्रार्थत्वेऽवघातस्यानर्थक्याद्युक्तः प्रकरणानुप्रवेशः। तद्वशेन च व्रीहिशब्दस्य साधन-

---

त्वेनेत्याशयः। क्रत्वर्थत्वम् आधानरूपकर्माङ्गत्वम्। साध्यत्वं अग्नीनां पवमानेष्टिसाध्यत्वम्। किं तर्हि स्य त्तदाह—विश्वजिदिति। अंगत्वं पवमानेष्टिं प्रति। नन्वग्नीषोमीयानुबन्ध्ययोः प्रकृतिदृष्टं पौर्वापर्यमार्थिकमपि साद्यस्क्रे यज्ञे 'सह पशूनालभत' इति सहानुष्ठाने स्वीकृतं तथेहापि साक्षात्सम्बन्ध अतिदेशिको युक्त इत्याशङ्क्याभ्युपेत्याह—अस्तु वेति। वस्तुतस्तु साध्यताङ्गकारेऽपि न साक्षात्सम्बन्धसिद्धिरित्याह—अपि चेति। प्रकृतावपि न साक्षात्सम्बन्ध इति निर्मूलैवेयं कल्पनेत्याह—अपि चेति। अस्त्यन्यदिति। कस्याञ्चिच्छाखायामित्यर्थः।

वार्तिककारमतमाह[1]—आचार्यस्त्विति। ननु व्रीहीनवहन्तीत्यादिवाक्ये यथा प्रकरणवशेन व्रीहिपदस्य प्रकृतव्रीहिपरत्ववत्तत्रापि यज्ञपदस्य प्रकृतपवमानेष्टिपरत्वं स्यादित्याशङ्क्य तद्वैषम्यमाह—व्रीहीनित्यादिना। तद्वशेन प्रकरणादिवशेन। साधनेति। अपूर्वसाधनेत्यर्थः।

---

१. वार्तिकाराणामयमाशयः—पवमानहविषमाधानार्थत्वे आनर्थक्यतदङ्गन्यायेन पात्राणामाधनाङ्गहविरर्थत्वं स्यादिति तद्वारेण सर्वयज्ञार्थत्वसिध्यर्थं पवमानहविषां यदग्न्यर्थत्वप्रतिपादनं तदफलं, पात्राणां प्रबलेन यज्ञसंयुक्ततया श्रुतानां दुर्बलेन प्रकरणेनाङ्गत्वस्याप्रसक्त्या हविषामाधानाङ्गत्वेऽपि पात्राणां तेष्वनवतारात्। एवञ्च वृथा वाक्यान्तरकल्पनाक्लेश इति।

रूपलक्षणाश्रयणम्। इह तु यथाश्रुतयज्ञार्थत्वेऽपि दीक्षणीयार्थस्येव वाङ्नियमस्यानर्थक्याभावान्न लक्षणाश्रयणेन प्रकरणानुप्रवेशकल्पना न्याय्या। यदि च पवमानेष्टिसन्निधौ पात्राणि यज्ञार्थानि श्रूयेरन् ततोऽनुवादस्य सति सम्भवे सन्निहितगामित्वात्सप्तदशारत्नित्वमिव वाजपेयस्य प्रकृतिवच्छब्दसन्निधापिते यूपे कृष्णलहोमवच्च सौर्ये प्रकृतिवच्छब्दसंनिधापितेषु प्रयाजेषु पवमानेष्ट्यनुवादेन विधानात्तास्वेव पात्राणि स्युः, न तु तासामिह सन्निधानमस्ति। तस्मात्प्रकरणात्पूषाद्यनुमन्त्रणवदुत्कृष्टानि पात्राणि सर्वार्थानीति नार्थोऽधिकरणेन। सूत्रं तु पूर्वाधिकरण एव पदोत्तरत्वेन व्याख्येयम्। निविद्भिर्व्यवायात्सामिधेनीवाक्यस्योपवीतवाक्यस्य च भेदस्स्यादित्युक्तम्। ननु निविदां सामिधेन्यङ्गत्वादव्यवधायकत्वं स्यादिति ये वदन्ति, तेषामुत्तरं 'गुणानां च परार्थत्वादि' ति। निविदोऽपि लिङ्गेनाग्निसमिन्धने गुणभूताः सामिधेन्योऽपि। अतो न तासां मिथः सम्बन्धः ॥ १२ ॥

## १३

सू० मिथः—दर्शपूर्णमासयोराग्नेयस्सौम्यश्च द्वावाज्यभागौ विहितः, तयोः क्रमेणानुवाक्याचतुष्टयमाम्नातम्—आग्नेयी सौमीत्येकं युगलं, पुनराग्नेयी सौमी चेत्यपरम्। तत्र प्रथमद्वितीये वार्त्रघ्न्यौ, तृतीया चतुर्थी च वृधन्वत्यौ। तत्रापरं वचनं 'वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्यायामि'ति। तत्र संशय :—

---

नन्विहापि यज्ञस्वरूपमात्रे पात्राणामानर्थक्याल्लक्षणाश्रयणं तुल्यमत आह—इह त्विति। यथाश्रुतयज्ञार्थत्वेऽपि यज्ञमात्रार्थत्वेऽपि। अनार्थक्याभावात् यज्ञमात्रस्यापूर्वाव्यभिचारेण यज्ञपदेनैव प्रकरणं विनाप्यपूर्वसाधनयज्ञमात्रे पात्रविधानेऽप्यानर्थक्याभावात्। न लक्षणेति। न यज्ञपदलक्षितापूर्वद्वारा आधानापूर्वलक्षणेत्यर्थः। स्वापूर्वलक्षणा तु दीक्षणीयावदवश्यमङ्गीकार्यैव। सा तु यज्ञपदमात्रेण गम्यत्वात् श्रुतिसमानतया निर्दिष्टा। लक्षितलक्षणा परं निराकृतेति ज्ञेयम्। सति सम्भव इति। असम्भवे तु दूरस्थस्याप्यनुवादो यथा द्वादशाहीनस्येत्यत्रेत्यर्थः। सन्निहितगामित्वादित्यस्य पवमानेष्ट्यनुवादेनेत्यादिनान्वयः। प्रकृतिवदिति प्रकृतिवद्वाजपेयेन भावयेदिति वाजपेयविधिशेषभूतेन प्रकृतिवदिति शब्देनोपस्थिते वाजपेयाङ्गपशुसम्बन्धियूपे इत्यर्थः। कृष्णलेति। सौर्ययागप्रकरणे 'प्रयाजे प्रयाजे कृष्णलं जुहोति' इति वचनादित्यर्थः। सूत्रप्रयोजनमाह—पदोत्तरत्वेनेति। शङ्कापदोत्तरसमर्पकत्वेनेत्यर्थः। तान्येव शङ्कापदान्याह—नन्विति। अधिकरणान्तरत्वे तु पूर्वपक्षे आधानार्थसम्पादितवारणादिपात्राणां दैवान्नाशे दर्शादौ वारणादिनियमाभावः, सिद्धान्ते तु तन्नियम इति प्रयोजनम् ॥ १२ ॥

मिथः—वार्त्रघ्न्याविति। 'अग्निर्वृत्राणि जङ्घनत् द्रविणस्युर्विपन्यया। समिद्धशुक्र आहुत' इति वृत्रहगुणकाग्निदैवत्या। एतद्गुणकसोमदैवत्या तु 'त्वं सोमासि सत्पतिस्त्वं राजोत वृत्रहा। त्वं भद्रो असि क्रतुः' इति। तथा 'अग्निः प्रत्नेन मन्मना शुम्भानस्तन्वं स्वाम्। कविर्विप्रेण वावृधे' इति वृधन्वद्गुणकाग्निदेवत्या। 'सोमगीर्भिष्ट्वा वयं वर्धयामो

किमाज्यभागयोः क्रमप्राप्ता मन्त्रास्ताभ्यामाच्छिद्य वचनेन प्रधानाङ्गतया विधीयन्ते ? उताज्यभागयोरेवाव्यवस्थया प्राप्तयोर्युगलयोर्व्यवस्थामात्रमिति। तदर्थञ्चास्मिन्वचने पौर्णमास्यमावास्याशब्दौ कर्मवचनावुत कालवचनाविति। तत्र—

कालस्यास्मरणीयत्वान्न यन्त्रेण प्रयोजनम्।
नापि प्रकरणं तस्य तेन नासाविहोच्यते॥
कर्मणः प्रकृतत्वेन मन्त्रापेक्षितयापि च।
तत्पौर्णमास्यमावास्याशब्दाभ्यामभिधीयते॥

सप्तमी च 'पूर्वेद्युरमावास्यायां वेदिम्' इतिवत्प्रधानेऽप्यविरुद्धा। तस्माद्वाक्येन क्रमं बाधित्वा प्रधानार्था मन्त्रा इति। नैवं; यद्यपि कर्मैव शब्दाभ्यां प्रतिपाद्यते, तथापि सप्तमीश्रुत्या न प्रधानत्वसम्भवः। 'पूर्वेद्युरमावास्याया' मिति तु लक्षणा। न चेह तथा, मुख्यार्थसम्भवात्। न चेह सौम्यस्य मन्त्रस्य प्रधानेषु सामर्थ्यमस्ति, सोमस्य प्रधानदेवताया अभावात्। अग्नीषोमीयेऽप्यग्निसहितस्य देवतात्वं, न केवलस्य। अमावास्यायान्तु नास्त्येव सोमः, न च वचनादयथार्थत्वं, लिङ्गं हि वाक्याद्बलीयः, वाक्याद्धि

---

वचोविदः। सुमृलीको न आविश' इति तथाविधसोमदेवत्या। वार्त्रघ्नी इति द्विवचनान्तम्। सुपां सुलुक् पूर्वसवर्णेत्यादिना पूर्वसवर्णतयेकारान्तता। लुग्वा बोध्यः। एवं वृधन्वती इत्यत्रापि ज्ञेयम्। वाक्येन सन्निधिबाधस्य पूर्वाधिकरणोक्तस्यापवादादनन्तरसंगतिं सूचयन् संशयं दर्शयति—किमिति।। ताभ्यामिति पञ्चमी। पूर्वपक्षमाह—कालस्येति। मन्त्रस्य हि विधेयस्य प्रयोजनाकाङ्क्षावशात् स्मरणीयेन सम्बन्धो युज्यते। कालश्च प्रयोगादादेव स्मरणीयो न प्रयोगमध्य इत्यर्थः। यद्वा-एतन्मन्त्रावाच्यतया स्मरणानर्हत्वादित्यर्थः। एवं सत्यपि यदि कालस्य प्रकरणं स्यात्तदा कालकर्मोभयवाचकस्य कालपरत्वमेव स्यान्न तु तदस्तित्याह—नापीति। कर्मपरत्वे उक्तहेतुद्वयव्यतिरेकमाह—कर्मण इति। पौर्णमास्यमावास्याशब्दयोः कर्मपरत्वमभ्युपेत्य सिद्धान्तमाह—यद्यपीति। न प्रधानत्वसम्भवः, न कर्मणः प्राधान्येनान्वयसम्भवः। पूर्वेद्युरित्यादौ कथं तत्सम्भव इत्याशङ्क्य तद्वैषम्यमाह—पूर्वेद्युरिति। तत्र भाव्यस्यान्यतोऽनवगमात्तत्परतया साध्यत्वलक्षणेत्यर्थः। इह तु लिङ्गक्रमाभ्यामाज्यभागरूपभाव्यलाभात्तात्पर्याभावात्कर्मणोऽप्याधारत्वस्य तत्प्रयोगमध्यानुष्ठेयद्वारेण 'मन्द्रं प्रातस्सवन' इत्यादौ दर्शनान्न लक्षणेत्यर्थः। लिङ्गविरोधादपि न प्रधानाङ्गत्वमित्याह—न चैहेति। सौम्यस्य सोमदेवताकस्य। ननु मनोतामन्त्रवत्सोमरूपैकदेशप्रकाशकस्याप्यग्नीषोमप्रकाशकत्वोपपत्तिरत आह—अमेति। अयथार्थत्वं 'ऐन्द्र्या गार्हपत्यमुपतिष्ठत' इति वदन्यार्थस्याप्यन्यप्रकाशकत्वम्। तद्वैषम्यमाह—लिङ्गं हीति। तत्र गार्हपत्यमिति श्रुत्या लिङ्गबाधः, इह त्वमावास्यायामिति न श्रुतिः किन्तु समभिव्याहारात्मकवाक्यगम्या लक्षणेति, वाक्यमेव, तच्च लिङ्गाद्दुर्बलमित्यर्थः। न श्रुतेः न श्रुतिवशात्। विधिवाक्यस्य मन्त्रलिङ्गापेक्षया दौर्बल्यस्य वक्ष्यमाणत्वादत्रापि मन्त्रलिङ्गबाधो-

कर्मणः प्राधान्यं लक्षणाश्रयणान्न श्रुतेः। अथापि विधिवाक्यत्वान्मन्त्ररूपं बाधेत यद्बाधेन नोपपद्येत। तत्तु व्यवस्थामात्रमपेक्षितमल्पञ्च विदधत्सुतरामबाधेनैव वर्तते—पौर्णमासीगतयोराज्यभागयोर्वार्त्रघ्न्यावमावास्यागतयोर्वृधन्वत्याविति। यद्वा कालद्वारेण कर्मणि शब्दप्रवृत्तौ काले मुख्य इति तद्द्वारेण व्यवस्था विधीयत इत्याज्यभागयोरेव मन्त्राः ॥१३॥

## १४

सू. आन—दर्शपूर्णमासयोराम्नायते 'हस्ताववनेनिक्ते उलपराजि स्तृणाती' ति। तथा ज्योतिष्टोमे 'मुष्टीकरोति वाचं यच्छति दीक्षितमावेदयती' ति। तत्र हस्तावनेजनं हस्तसंस्कारार्थं, मुष्टीकरणवाग्यमने च मनःप्रणिधानार्थे। तेन तत्तूभयमपि लिङ्गात्करिष्यमाणकर्माङ्गं सत्किमनन्तरयोरुलपराजिस्तरणदीक्षितावेदनयोरङ्गम्? उत सर्वाङ्गम्? इति संशयः। तत्रानन्तर्यादिकवाक्यत्वादवान्तरप्रकरणाद्वा तन्मात्राङ्गत्वे प्राप्तेऽभिधीयते—

**लिङ्गप्रकरणाभ्यां हि सर्वार्थत्वं प्रतीयते।**
**क्रमश्च दुर्बलस्ताभ्यामतस्सर्वार्थता भवेत् ॥**

न चाख्यातद्वयस्य यच्छब्दाद्युपबन्धरहितस्यैकवाक्यत्वं सम्भवति, येन वाक्येनेव तादर्थ्यं स्यात्। न च श्रुत्यादिविहिताङ्गसंदंशोऽस्ति, येनावान्तरप्रकरणं स्यात्। तस्मात्सर्वार्थता स्यात् ॥१४॥

---

ऽस्त्वित्याशङ्क्याह—अथापीति। मन्त्ररूपं मन्त्रलिङ्गम्। कर्मद्वारिकां व्यवस्थां दर्शयति—पौर्णमासीगतयोरिति। तदङ्गयोरित्यर्थः। वस्तुतस्तु नात्र पौर्णमावास्यादिशब्दः कर्मपर इत्याह—यद्वेति। न च पौर्णमासीकालिकौ यावाज्यभागाविति तत्कालिकाज्यभागलक्षणापत्तिः। लङ्गक्रमाभ्यामेवाज्यभागसम्बन्धलाभान्न पौर्णमासीकाले इमौ मन्त्रावित्येव व्यवस्थोपपत्तेर्व्यवस्थायाः प्राप्तिपूर्वकत्वेनार्थादाज्यभागद्वारकत्वलाभोपपत्तेरिति भावः। प्रधानस्य मन्त्राणाञ्च मिथः परस्परमर्थसम्बन्धः प्रकाश्यप्रकाशभावो नेति सूत्रार्थः। प्रयोजनं स्फुटमेव ॥ १३ ॥

आन—अवनेजनं प्रक्षालनम्। उलपा बल्वजतृणानि। उशीरतृणानीति धूर्तस्वामी। मुष्टीकरोति। करतल इति शेष आर्थिकः। वाचोयमनं मौनम्। आवेदयति 'अदीक्षिष्टायं यजमान' इत्यध्वर्युः कथयतीत्यर्थः। सर्वेत्यनेनानन्तर्यरूपक्रमस्य विनियोजकत्वापवादादनन्तरसङ्गतिसूचनम्। प्रकरणात्क्रमस्य दुर्बलत्वादाह—एकेति। अनन्तरेण शीघ्रमेकवाक्यत्वाग्रगमात्तस्त च प्रकरणाद्बलीयस्त्वादिति भावः। अवान्तरेत्यागतत उपन्यासः। सन्दंशाभावात् याजदानयोरपि मुष्टीकरणमौनयोरार्व्यवदीक्षितावदेनाङ्गत्वं दीक्षाव्यञ्जकत्वादुपपद्यते। अनन्तरेणैकवाक्यतामुक्तां निरस्यति—नचेति। यच्छब्दोपबन्धो "यस्योभयं हविरार्त्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेत्" इत्यादौ। आदिना क्त्वाप्रत्ययादिर्गृह्यते। सूत्रे अचोदनेत्यस्याप्रयोजकमित्यर्थः। प्रयोजनं पूर्वपक्षे स्वकाले विस्मृतमवनेजनादि स्तरणोत्तरं न कार्यं, सिद्धान्ते तु कार्यमिति ॥ १४ ॥

१५

सू. शेषस्तु—दर्शपूर्णमासयोराग्नेयाग्नीषोमीयैन्द्राग्नाः पुरोडाशाः। तत्र 'आग्नेयं चतुर्द्धा करोतो' ति चतुर्द्धाकरणं किं सर्वेषाम्?उताग्नेयस्यैवेति भवति विचारः।

तत्र— अग्निसम्बन्धमात्रेण भवेद् द्रव्योपलक्षणम्।
सम्बन्धश्चाविशिष्टोऽतस्सर्वेषामुलक्षणम् ॥

अग्निस्तावदत्र चतुर्धाकिरणविषयद्रव्योपलक्षणमात्रं न स्वयं कार्ययोगी। तेन नासौ यथाश्रुत एव ग्रहीतव्यः, येन देवमात्मभूतेनैवोपलक्षणं स्यात्, किन्तु यावता विना न शक्नोति द्रव्यं लक्षयितुं तन्मात्रमादर्तव्यम्। सम्बन्धमात्रेण चासौ शक्नोति लक्षयितुम्। सम्बन्धश्चाग्नेरग्नीषोमीयेऽपि विद्यते। तस्मात्तस्याग्नेयशब्देन लक्षितत्वात्स्याच्चतुर्द्धाकरणम्। अथवा[1] देवतात्वमेवास्ति। यद्धि द्वाभ्यां दीयते दीयत एव तदेकस्मा अपि। यद्वा अग्नेरिदमिति सम्बन्धमात्रेणाग्नेयशब्दो भवत्येव, 'सर्वत्राग्निकलिभ्यां ढग् वक्तव्य' इति स्मरणात्। तस्मात्सर्वत्र चतुर्धाकरणमिति प्राप्ते ब्रूमः—

केवलाद्देवतावाची तद्धितोऽग्नेः समुच्चरन्।
नान्ययुक्ताग्निदेवत्यं प्रतिपादयितुं क्षमः ॥

देवताभूतस्तावदिहासावग्निशब्दस्तद्धितेनोपलक्षणमुपादीयते। सम्भवति च तस्य यथाश्रुत्यैवोपलक्षणत्वं, केवलाग्नेयस्यापि सद्भावात्। आतो न शब्दानवगतेन सम्बन्धमात्रेणोपलक्षणत्वं युक्तं, विना कारणेन श्रुतिबाधप्रसङ्गात्। अग्नीषोमीयादौ तु समासादुत्पन्नस्तद्धितो द्वयोस्सापेक्षयोर्देवतात्वमाह। तेन तत्रान्यसापेक्षस्याग्नेर्देवतात्वम्। न च सापेक्षस्य तद्धिते सामर्थ्यमस्ति। तेनाग्नेयशब्दो न शक्नोत्यग्नीषोमीयादिकमभिवदितुम्। यद्यपि च सम्बन्धमात्रेऽविरुद्धस्तद्धितः, तथाप्यत्र देवतार्थतैवाश्रयितव्या, लक्ष-

---

शेषस्तु—ऐन्द्राग्नश्च दर्शे सान्नाय्याभावपक्षे ज्ञेयः। अपवादसङ्गतिं सूचयन् संशयमाह—किं सर्वेषामिति। कार्ययोगी विध्यन्वयी। यथा यदाग्नेयोऽष्टाकपाल इत्यादौ। देवतात्मभूतेन देवतास्वरूपेण। आदर्तव्यमिति। प्रधानभूतसंस्कार्यद्रव्यासङ्कोचाय गुणभूतदेवतात्वत्यागेन सम्बन्धमात्रं तद्धितेन लक्षणीयमिति भावः। लक्षणायां मानाभावादाह—अथवेति। त्यज्यमानद्रव्योद्देश्यत्वस्य प्रत्येकं सत्वात् घटपटावानयेत्यत्र कर्मत्ववदित्यर्थः। अग्नीषोमीयादावितरेतरयोगवशेन सोमसापेक्षस्याग्नेर्देवतात्वादाग्नेयशब्देन तदभिधानस्यासामर्थ्येनासम्भवादाह—यद्वेति। केवलादग्नेः–अग्निशब्दात्। समुच्चरन् उच्चार्यमाण इत्यर्थः। अविरुद्ध इति। अनुशासनाविरुद्ध इत्यर्थः। अपिचेत्यनेन सम्बन्धमात्रे लाक्षणिकत्वमेवेति सूचितम्। लक्षणार्थत्वात् हविरुपलक्षणार्थत्वात्। शाखान्तरवचनेन सर्वपुरोडाशार्थत्वमाशङ्क्य निराकरोति—

---

१. आग्नेयशब्दस्य देवतातद्धितान्तस्यापि प्रकृतेऽग्निसम्बन्धमात्रपरत्वं, तावतापि द्रव्योपलक्षणत्वसिद्धिरित्यभिधाय देवतापरत्वेऽप्यग्नीषोमीयादिसाधारण्यं सम्भवतीत्याह अथवेति।

णार्थत्वात्। प्रसिद्धसम्बन्धं हि लक्षणं भवति, प्रसिद्धिश्च विधिवाक्यादेवावाप्तव्या। विधिवाक्ये चाग्नेर्देवतासम्बन्ध एव पुरोडाशेनावगतो न सम्बन्धमात्रम्। तस्माद् देवतात्वमेवोपलक्षणम्। तच्चाग्नीषोमीयादौ नास्तीत्याग्नेयस्यैव चतुर्द्धाकरणम्। यदपि शतपथब्राह्मणे 'तं चतुर्द्धा कृत्वा पुरोडाशं बर्हिषदं करोति' इति सामान्यवचनं, तदपि अनेनैव विशेषणवचनेनोपसंह्रियत इति तस्यैव चतुर्द्धाकरणं युक्तमिति ॥१५॥

इति पार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां
तृतीयाध्यायस्य प्रथमः पादः ॥

## अथ तृतीयाध्यायस्य द्वितीयः पादः

१

सू० अर्थ -मन्त्रेषु पूर्वंपादे श्रुतिविनियोगः प्राधान्येन चिन्तितः। अधुना लिङ्गविनियोगश्चिन्त्यते। विनियोजकत्वञ्च लिङ्गस्य मन्त्राधिकरणे सिद्धम्,

---

यदपीति। बर्हिषदं बर्हिषि स्थितम्। न चात्र प्राप्तचतुर्धाकरणानुवादेन बर्हिषदत्वमात्रं क्रमोवा विधीयत इति न सामान्यवचनत्वमिति वाच्यम्। चतुर्धाकरणस्यापि तच्छाखीयपुरुषान् प्रति विधानोपपत्तेः। न च तदनुरोधेनाग्नेयशब्दस्यैव सामान्यपरत्वं कुतो नेति शङ्क्यम्, जहल्लक्षणापत्तेः, तदपेक्षया सामान्यशब्दस्यैव विशेषपरत्वौचित्यात्। न चैवंविधोपसंहारे मानाभावः। अन्यथा विकल्पापत्तेरेव लक्षणातात्पर्यग्राहकत्वात्। न च सामान्यशास्त्रानर्थक्यम्, तच्छाखीयान् प्रति बोधकत्वोपपत्तेरित्याशयः। गुणेन चतुर्धाकरणसंस्कारेण संयुक्तः शेषः यागावशिष्टः साधारणः सकलपुरोडाशरूपः प्रतीयेतेति सूत्रार्थः। प्रयोजनं स्पष्टम् ॥ १५ ॥

इति श्रीमत्पदवाक्यप्रमाणाभिज्ञतत्सद्रामचन्द्रात्मजकृतायां
शास्त्रदीपिकाटीकायां प्रभाख्यायां तृतीयाध्यायस्य
प्रथमः पादः।

## तृतीयाध्यायस्य द्वितीयः पादः

अर्थ—पूर्वपादेन सङ्गतिं दर्शयितुमाह—पूर्वेति। प्राधान्यञ्च लिङ्गादिषु शीघ्रप्रवृत्तया च ज्ञेयम्। एतच्च प्रथमनिरूपणे श्रुतिपाद इति व्यपदेशे च हेतुः। तेन पूर्वपादे लिङ्गादिविनियोगविचारेऽपि न क्षतिः, प्राधान्येन व्यपदेशा इति न्यायात्। अधुनेत्यनन्तरमपि प्राधान्येनेत्यनुषञ्जनीयम्। यथा च लिङ्गादिषु लिङ्गप्राधान्याद्वाक्यादिभ्यः पूर्वमुपजीवकत्वेन च श्रुतिविनियोगानन्तरं लिङ्गविनियोगोऽस्मिन् पादे विचार्यत इति पादभेदसङ्गतिश्चेत्यर्थः। ननु लिङ्गविनियोगं सामान्यतोऽनभिधाय कथं तद्विशेषचिन्तनमत आह—विनियोजकत्वञ्चेति। लिङ्गस्य

अर्थप्रकाशनेनोपकुर्वन्तीत्यभिधानात् ।[1] तद्विशेषस्त्विदानीं चिन्त्यते । लिंगं सामर्थ्यं; तच्च मुख्यइव गौणेऽपि कथञ्चिद्विद्यते । तदिह संशयः—किं मुख्य एवार्थे मन्त्राणां विनियोगः ? किं वा गौणेऽपीति । कः पुनर्मुख्यः ? को वा गौणः ? यः शब्दादेवावगम्यते स मुख्यः यथाग्निशब्दाज्ज्वलनः, बर्हिःशब्दाच्च कुशादयः । यस्तु शब्दाभिहितार्थगुणसम्बन्धात्तत्सदृशोऽर्थः प्रतीयतेऽसौ गौणः, यथाग्निशब्दान्माणवकः । स हि ज्वलनगुणपैङ्गल्यादिगुणयोगादवगम्यते, तथा बर्हिःशब्देन तृणान्तरमूलपादि । ननु प्रयोगप्रतीत्यविशेषादुभयत्र वाचकत्वं कस्मान्न भवति ? नाविशेषः, विशेषप्रतीतेः । अग्निरिव माणवक इति सादृश्यप्रत्ययाद्गुणादेव च प्रयोगप्रतीत्युपपत्तेरनेकार्थत्वमन्याय्यम् । परगुणाः परत्र न सम्भवन्तीति चेन्न; प्रत्यभिज्ञानात् । येऽपि प्रतिद्रव्यं गुणभेदमातिष्ठन्ते, तेऽपि सामान्यात्मनैक्यमिच्छन्त्येव । तेनोपपन्नो गौणमुख्यविभाग इति युक्ता चिन्ता । तत्र—

अर्थानां स्मरणार्हत्वान्मन्त्राणाञ्चापि शक्तितः ।
प्रतिप्रधानमावृत्तेर्गुणानामुभयार्थता ॥

उभयेषामपि तावदर्थानामनुष्ठेयत्वात्स्मरणमपेक्षितम् । मन्त्राश्चार्थं प्रति गुणभूतास्समर्थाश्चोभयत्रापि यथाकथञ्चित्स्मृतिमाधातुम् । साक्षादभिधानस्यापि स्मरणमेव फलं नाधिकं, तच्च गौणसामर्थ्यस्याप्यविशिष्टम् । प्रतिप्रधानञ्च गुणावृत्तिर्न्याय्या । तस्मादुभयत्र विनियोग इति प्राप्तेऽभिधीयते—

---

मन्त्रगतार्थप्रकाशनसामर्थ्यस्य । सामर्थ्यमिति । विनियोज्यगतं दृष्टोपकारसामर्थ्यमित्यर्थः । तत्र मन्त्रगतं मन्त्राधिकरणे दर्शितम् । स्रुवाद्यर्थगतं तु द्रवद्रव्यावदानसामर्थ्यम् 'अर्थाद्वे'ति प्रथमाध्यायान्त्यसूत्रे दर्शितमिति ज्ञेयम् । चकरोऽप्यर्थः । शब्दादेवेति । एवकारेण गौणलाक्षणिकयोर्निरासः । अविशेषादिति हेतोरसिद्धिमाह विशेषेति । अक्षादिवन्नानार्थत्वशङ्कामपाकरोति-गुणादेवेति । गुणशब्दश्चात्र सादृश्यप्रयोजकक्रियादिसाधारणधर्ममात्रपरः । येऽपीति तार्किकादय इत्यर्थः । सामान्येति । पैङ्गल्यत्वादिनेत्यर्थः । तथाचाग्निगतगुणसजातीगुणवत्वं गौणीवृत्तिरिति भावः । शक्तितः सामर्थ्यान्मन्त्राणामुभयार्थतेत्यन्वयः । गुणानाम्—अङ्गानाम् । श्लोकं व्याचष्टे—उभयेषामिति । मुख्यगौणरूपाणामित्यर्थः । यथाकथञ्चित् साक्षाद्गुणद्वारा । एवं सहकारिभेदेऽपि न फलभेद इत्याह—साक्षादिति । अभिधानस्य अभिधा-

---

१. मन्त्राणां क्रमप्रकरणाभ्यां क्रत्वङ्गत्वं भवदृष्टेनार्थप्रकाशनेनोपकारेण भवतीति मन्त्राधिकरणे व्युत्पादनाल्लिङ्गस्य विनियोजकत्वं तत्रैव सिद्धमित्यर्थः ।

गौणे सदपि सामर्थ्यं न प्रमाणान्तराद्विना।
आविर्भवति मुख्ये तु शब्दादेवाविरस्ति तत्॥
तात्पर्यञ्च स्वतो मुख्ये गौणार्थपरता पुनः।
प्रमाणान्तरविज्ञेया तदभावोऽत्र सिध्यति॥

न ह्यग्निरित्येतावता प्रमाणान्तरमन्तरेण गौणे सामर्थ्यं तात्पर्यं वा कथञ्चिदपि लौकिकाः प्रतिपद्यन्ते। मुख्यते तु श्रवणादेव शब्दस्योभयमवगच्छन्ति। न चेह प्रमाणान्तरमस्ति, येन मन्त्राणां गौणे सामर्थ्यं तात्पर्यं वाभिव्यज्येत। न चानाविर्भूते सामर्थ्ये तात्पर्ये च शब्दार्थः प्रतीयते। तेन गौणोऽर्थो मन्त्रान्न प्रतीयत एव। कथमप्रतीयमाने विनियोगः स्यात्? मुख्यस्त्वर्थः शब्दादेवावगम्यत इति युक्तस्तत्र विनियोगः। यस्य तु मुख्योऽर्थः प्रकरणे नास्ति, तस्योत्कर्षः, यथा पूषाद्यनुमन्त्रणमन्त्राणाम्। यस्य तूत्कर्षोऽपि न सम्भवति, तस्य जपमात्रेणोपयोगो[1] न तु गौणत्वम्, अत्यन्ताप्रामाणिकत्वात्। अपि च प्रथमावगतमुख्यविनियोगेनैव कृतार्थत्वान्मन्त्रस्य, न तद्वशेन गौणे विनियोगः। अर्थोऽपि गौणः, ध्यानाद्युपायान्तरेणापि स्मृतिसिद्धेर्नात्माभिधायिनमन्त्रम-

नानुकूलव्यापारस्य शक्तिरूपस्य। सिद्धान्तमाह—[2]गौणे इति। गौणार्थविषय इत्यर्थः। सदपि स्वरूपतो विद्यमानपि। सामर्थ्यं गौणार्थविषयप्रकाशनयोग्यतारूपम्। प्रमाणान्तरात् मुख्यानन्वयिपदसमानाधिकरणवाचनिकविनियोगादिरूपात्। आविर्भवति ज्ञायते। शब्दादेव शब्दश्रवणादेव। आविरस्ति ज्ञायते। शब्दसामर्थ्यञ्च ज्ञातमेवोपयुज्यते न स्वरूपसदिति भावः। ननु गौणार्थतात्पर्यग्रहादेव क्वचित्पूर्वंगृहीतस्य गौणसामर्थ्यस्योद्बोधः स्यादित्याशङ्क्याह—तात्पर्यञ्चेति। स्वतः श्रवणादेव। प्रमाणान्तरेति। पूर्वोक्तेत्यर्थः। मुख्योऽर्थः पूषदेवतारूपः प्रकरणे दर्शप्रकरणे उत्कर्षः दर्शप्रकरणादाकृष्य पूषयागाङ्गत्वम्। न सम्भवतीति। अनुमन्त्रणसमाख्यावत्सामान्यसम्बन्धबोधकप्रमाणाद्यभावादिति भावः। ननु मन्त्रस्य प्रयोजनाकाङ्क्षा पदार्थानाञ्च स्मारकाकाङ्क्षावशेन मन्त्रो यच्छक्नुयात्प्रकाशयितुं तत्प्रकाशयेदिति श्रुतिकल्पनावशेन गौणसामर्थ्यस्याप्याविर्भावादुभयत्र विनियोगस्स्यादत आह—अपि चेति।[3] तथा चान्यतराकाङ्क्षापि नास्ति दूरादुभयाकांक्षेत्यर्थः। तर्हि मुख्यस्यापि प्रकारान्तरेण स्मृतिसिद्धे-

१ यद्यपि जपमन्त्रत्वे सत्यदृष्टार्थत्वापत्तेस्तदपेक्षया गौणत्वमेव न्याय्यं, तथापि प्राकरणिकसर्वार्थेषु गौणत्वस्य कथञ्चिद्वक्तुं शक्यतया सर्वत्र विनियोगापत्तेरप्रामाणिकावृत्तिकल्पनानेकनियमादृष्टकल्पना च स्यात्। ततो वरं जपमन्त्रत्वकल्पनमिति भावः।

२ मन्त्रस्यार्थे विनियोगः, न तत्प्रकाशनस्वरूपयोग्यत्वात्, किन्तु तत्प्रकाशनफलोपपत्त्या-द्वाच्यः। गौणार्थप्रकाशकत्वस्य च प्रमाणान्तरसापेक्षत्वादसति प्रमाणान्तरे गौणार्थप्रकाशनसामर्थ्यस्यैवानाविर्भावात्तत्प्रकाशनस्वरूपयोग्यत्वसत्त्वेऽपि न तत्र विनियोग इति सिद्धान्तयति गौणे सदपीति।

३ मन्त्रस्य प्रयोजनापेक्षया विनियोगः कल्प्यते। तस्यामवस्थायां झटिति प्रतीयमानो मुख्यार्थ एव मनसि विपरिवर्तते, न गौणार्थः। ततश्च प्रथमप्रतीततया मनसि विपरिवर्तमानमुख्यार्थविनियोग एव प्रथमं कल्प्यते। तावतैव तस्य शान्ताकांक्षत्वान्न गौणेऽप्यर्थे पृथग्विनियोगः, तस्य तदा विपरिवृत्त्यभावादेव नोभयसाधारणविनियोगकल्पनेति भावः।

पेक्षते, अतोऽप्रमाणकस्तत्र विनियोगः। मुख्यविनियोगस्तु मन्त्राकाङ्क्षावशाद्भवतीति तत्रैव विनियोगः॥ १॥

२

**सू. वचनात्**—अपवाद आरभ्यते। अग्नौ श्रूयते 'निवेशनस्सङ्गमनो वसूनामित्यैन्द्रया गार्हपत्यमुपतिष्ठते' इति। तत्र संशयः—किमनेन मुख्यस्येन्द्रस्य प्रकाशनं कर्तव्यम्? उत गौणस्य गार्हपत्यस्येति तत्र—

पूर्वाधिकरणन्यायान्मुख्यस्येति प्रतीयते।
विनियोज्यानुसारेण विनियोगस्तु वर्ण्यते॥
न खल्विन्द्राभिधानस्य मन्त्रस्याग्निप्रकाशने।
शक्तिरस्ति न चाशक्तोऽशक्यार्थे विनियुज्यते॥

---

मन्त्राकाङ्क्षाभावात्तत्रापि विनियोगो न स्यादित्याशङ्क्याह—मुख्येति। प्रयोजनं विकृतौ मन्त्राणामूहः सिद्धान्ते, पूर्वपक्षे [1] नेति। सूत्रार्थस्तु—अर्थाभिधानरूपद्वारसंयोगान्मन्त्रेषु शेषभावः कर्माङ्गत्वं तस्मादुत्पत्तिसम्बन्ध औत्पत्तिकेन स्वभावसिद्धेन मुख्यार्थेनैव सम्बन्धस्तेनार्थेन नित्यसंयोगादिति॥१॥

वचनात्—लिङ्गपादे कथं श्रौतविनियोगचिन्तेत्याशङ्क्याह—अपवाद इति। मुख्य एव विनियोग इत्यस्येत्यर्थः। अग्नौ चयने। निवेशन इति। 'विश्वारूपाभिचष्टे शचीभिः देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे वसूनाम्' इति मन्त्रशेषः। मुख्यस्येति सावधारणम्। मुख्यस्यैवेत्यर्थः, पूर्वाधिकरणे तथैव सिद्धान्तात्। अस्य च तदपवादत्वेन तत्सिद्धान्तस्य पूर्वपक्षकोटित्वात् यथाश्रुतस्य प्रकृतसिद्धान्तकोट्यविरुद्धत्वाच्च। न च गौणस्यैवेति सिद्धान्तकोटिरिति वाच्यम्। मुख्यव्यवच्छेदांशस्य बलाबलाधिकरणविषयत्वस्य पौनरुक्त्यपरिहारावसरे वक्ष्यमाणत्वेन तस्यात्राविवक्षणात्। न्यायादिति। तात्पर्यग्राहकं विना गौणसामर्थ्याप्रतीतिरूपादित्यर्थः। ननु विनियोग एव गौणार्थतात्पर्यग्राहकोऽत आह—विनियोज्येति। निनियोज्यशक्त्यनुसारेणेत्यर्थः। विनियुज्यतेऽनेनेति विनियोगो गार्हपत्यशब्दः। वर्ण्यते गौण्या व्याख्यायते। तुशब्देन विनियोगानुसारेण विनियोज्यशक्तिवर्णनव्यवच्छेदः, अन्योन्याश्रयात्। तथाहि विनियोगे योग्यताज्ञानस्य हेतुत्वाद्गौणसामर्थ्यरूपयोग्यताज्ञाने सति विनियोगः। तस्मिंश्च सति तात्पर्यग्रहाद्गौणसामर्थ्यप्रतीतिरिति। तस्मादैन्द्राग्नेति तद्धितश्रुतिरूपतात्पर्यग्राहकवशाद् गार्हपत्यपदमेव गौण्या व्याख्येयमित्यर्थः। उत्तरार्धं व्याचष्टे—न खल्विति। अभिधीयतेऽनेनेत्यभिधानम्। नन्वनुवादत्वान्मन्त्र एव गौणी युक्ता, न तु विधौ। 'न विधौ परश्शब्दार्थ' इति

---

१ पूर्वपक्षे प्राकृतानां मन्त्राणां गौण्या वृत्या वैकृतद्रव्यदेवतादिप्रकाशकत्वसम्भवादूहो न, सिद्धान्ते तु मुख्यार्थत्वायोहसिद्धिः। अत एव वार्तिककारैर्मुख्यत्वं परिगणितमूह्यानेषु—मुख्ये दृष्टार्थता स्वार्थसमवेतार्थतादिभिः। प्रयुक्ताः प्रकृतौ मन्त्रा गताः कार्यातिदेशतः॥ विकारेष्वनिषिद्धोहाः कार्यापन्नेषु पञ्चधा। अर्थान्तरेष्वपूर्वार्थद्वारेणोहं व्रजन्ति ते॥ इति।

तेन मन्त्रानुसारेण विनियोगार्थवर्णना ।
इन्द्रो हि गार्हपत्येन गौण्या वृत्त्याभिधीयते ॥
यज्ञसाधनसाधर्म्याद्यद्वा गृहपतेर्यतः ।
तेनायं गार्हपत्यस्स्यादिन्द्रोऽवयवयोगतः ॥

द्वितीया वा सप्तम्यर्थं लक्षयति-गार्हपत्ये स्थित्वोपतिष्ठत इति । यद्वा उपतिष्ठत इत्यत्र द्वे क्रिये विद्येते-समीपस्थानमात्मनेपदानुमितञ्चाभिधानम् । तत्रैन्द्रमन्त्रकरणकेऽभिधाने गार्हपत्यस्य कर्मत्वं न सम्भवतीति समीपस्थानविशेषणं गार्हपत्यो भवति गार्हपत्यमुपेत्याभिधत्त इति । तस्मान्मुख्य एव विनियोगोऽत्रापीति प्राप्तेऽभिधीयते—

---

न्यायादत आह–तेनेति । विनियोगस्य गार्हपत्यपदस्यार्थवर्णनेत्यर्थः । मन्त्रलिङ्गस्योपजीव्यत्वेन प्राबल्याद्विधेरेवान्यथानयनमत्रोचितमिति भावः । तदेव दर्शयति–इन्द्रो हीति । गार्हपत्येनेति शब्दपरम् । अथवा गार्हपत्येन साधर्म्यादिति सम्बन्धः । साधनेति भावप्रधानम् । नन्वैन्द्र्येति पदस्येन्द्रपदयोगमात्रेणापि सम्भवान्न गौणतायां तात्पर्यग्राहकत्वमित्याशङ्क्य मुख्यवृत्त्यैव गार्हपत्यपदेनेन्द्राभिधानमित्याह–यद्वेति । यतो यस्मादयमिन्द्रो गृहपतेर्यजमानस्य सम्बन्धी तेन हेतुना अवयवयोगतः पत्युत्तरपदाद्विहितण्यप्रत्ययावयवशक्त्या गार्हपत्यपदवाच्यः स्यादिति योजना । रूढिबलीयस्त्वेन योगासम्भवादाह–द्वितीयेति । मुख्यप्रातिपदिके गौण्यपेक्षया जघन्यद्वितीयाया लक्षणा युक्तेति भावः । सप्तम्यर्थः सामीपिकाधारत्वम् । सर्वतस्समञ्जसं पक्षमाह—यद्वेति । उपपूर्वस्य तिष्ठतेरभिधानवाचकत्वाप्रसिद्धेर्लक्षणाङ्गीकारे च पूर्वोक्तपक्षादविशेषापत्तेराह–आत्मनेपदेति 'उपान्मन्त्रकरण' इत्यात्मनेपदविधिवशेन समीपस्थितेरवगतस्य मन्त्रकरणकत्वस्याभिधानार्थत्व एवोपपत्तेः । समीपस्थानम् अभिधानार्थं आत्मनेपदबोधितमन्त्रकरणकत्वादित्यनुमानादभिधानक्रियावगतिरिति भावः । एवञ्च फलिसंस्काराणां यागफलोत्पत्तियोग्यताजननेन यागाङ्गतावत्समीपस्थानफलाभिधानकरणस्यापि मन्त्रस्य समीपस्थानकरत्वोपपत्तिरित्याशयः । तत्र तयोः क्रिययोर्मध्ये । ननु कर्मत्वेन विशेषणता वाच्या, न चासौ सम्भवति, तिष्ठतेरकर्मकत्वादत आह–उपेत्येति । उपसर्गवशेन[1] सामीप्यरूपफलांशेन सकर्मकत्वविवक्षणात्फलाश्रयत्वेन गार्हपत्यस्यानर्थक्यतदङ्गन्यायेन समीपस्थितिक्रियायामेव कर्मत्वेनान्वय

---

१ गार्हपत्यमुपेत्य समीपे स्थित्वाभिदधीतेत्येवप्राप्त्यङ्गकं समीपस्थानमिहोपस्थानं, न समीपस्थानमात्रम् । तेन समीपस्थानस्याकर्मकत्वेऽपि तदङ्गभूतायाः प्राप्तेस्सकर्मकत्वात्तदपेक्षया गार्हपत्यस्य कर्मत्वाद्विशेषणत्वं सम्भवति । यथा 'जलधराद्विद्योतते विद्युत्' इत्यत्र निस्सरणाङ्गके विद्योतने द्युतेः वृत्त्या द्योतनाङ्गभूतनिस्सरणेऽपादानत्वाज्जलधरस्य विशेषणत्वं तद्वदिति भावः ।

अग्नौ वचनसामर्थ्याद्विनियोगः प्रयीयते ।
न चात्यन्तासमर्थत्वं गौणसामर्थ्यसम्भवात् ॥
यत्र मानान्तरं नास्ति तत्र गौणो न गम्यते ।
प्रमाणान्तरसद्भावे गौणे शब्दः प्रवर्तते ॥
पूर्वाधिकरणेऽप्येतद्वर्णितं विद्यतेऽत्र च ।
विस्पष्टं वचनं तेन गार्हपत्यार्थता स्फुटा ॥
अवश्यं कल्पनीयं हि मन्त्रस्य ब्राह्मणस्य वा ।
गौणत्वं तच्च मंत्रस्य प्राप्तार्थस्यैव युज्यते ॥
अप्राप्तार्थे विधौ नैव गौणत्वमुपपत्तिमत् ।
न चावयवयोगेन वृत्ती रूढ्याग्निवेदनात् ॥
अभिधानक्रियायाश्च प्रधानत्वात्तदन्वयः ।
गार्हपत्यस्य नान्यार्थसमीऽस्थिगतिगामिता ॥

तदिहास्ति तावद् गार्हपत्ये विनियोग इति स्थितम् । सति च तस्मिन् लिङ्गा-दिन्द्रार्थतापि भवति नेति बलाबलाधिकरणे चिन्तयिष्यते ॥ २ ॥

३

**सू. तथा**—दर्शपूर्णमासयोराम्नायते 'हविष्कृदेहीति त्रिरवघ्नन्नाह्वयती' ति । तत्र संशयः–किमयं हविष्कृदेहीति मन्त्रो गौणेऽवघाते प्रयोक्तव्यः ? किं वा मुख्ये हविष्कृदाह्वाने ? इति । तदर्थमिदं विचार्यते-किमस्मिन्वचनेऽवघ्नन्नित्यवघातमुद्दिश्य[1]

---

इत्यर्थः । सिद्धान्तमाह अग्नाविति । गार्हपत्य इत्यर्थः । पूर्वं योग्यताज्ञानाभावेऽप्ययोग्यता-निश्चयाभावमात्रेण विनियोगावगतौ तद्वशेन पश्चाद्गौणसामर्थ्यविगमेन अन्योन्याश्रयाप्र-सक्तेरिति भावः । वह्निना सिञ्चेदित्यादिवैलक्षण्यमाह– न चेति । प्रमाणान्तरम् मन्त्रातिरि-क्तम् विनियोजकं वचनम् । एवञ्च प्रधानभूताभिधानक्रियामेव गार्हपत्यान्वयसम्भवेना-नर्थक्यतदङ्गन्यायाभावान्न गुणीभूतोपस्थानान्वय इत्याह-अभिधानेति । अन्यार्थेति । अभि-धानार्थेत्यर्थः । बलाबलाधिकरणपौनरुक्त्यनिरासायाह–तदिहेति । सूत्रे अयथार्थमिति क्रिया-विशेषणतया नपुंसकत्वम् । प्रयोजनन्तु स्पष्टम् । २ ॥

तथा–गौणविनियोगापवादादनन्तरसङ्गतिं सूचयन्नाह- तत्रेति । गौण इति । हवि-ष्कर्त्र्यां पत्न्यां मुख्यः, अवघाते तु हविस्साधनत्वसाम्याद् गौण इत्यर्थः । न लक्षणा अवघात-काललक्षणा । कथमित्यनन्तरं सङ्गच्छत इति शेषः । तटस्थोक्तशङ्कासमाधानं ( शङ्कितैव ) दूष-

---

१ किमवघातेन मन्त्रस्य सम्बन्धः उताह्वानेन इति संशयनिष्कर्षः । यत्र पूर्वपक्षे मन्त्र-स्यावघातसम्बन्धः, सिद्धान्ते तु आह्वाने । आह्वानसम्बन्धे च मन्त्रस्यावघाते विध्यभावेन गौणार्थे विनियोजकवचनाभावन्न गौणे विनियोगः, किन्तु मुख्ये इति फलफलिभावः ।

मन्त्रो विधीयते-हविष्कृदेहीत्यवघ्नन्निति ? किं वा मन्त्रस्याह्वानेन सम्बन्धः, अवहन्तिस्तु काललक्षणार्थो हविष्कृदेहीति त्रिराह्वयत्यवघातकाले ? इति । तत्र—

पूर्वाधिकरणन्यायाद्विधौ युक्ता न लक्षणा ।
मन्त्रस्य त्वयथार्थत्वं वचनान्नैव दुष्यति ॥

त्रिरिति तर्हि कथं विधीयत इति चेत् । न; प्राप्तावघातोद्देशेन मन्त्रस्य त्रिरभ्यासस्य च विधौ वाक्यभेदात् । पाठप्राप्तानुवादत्वाददोषः । मन्त्रसमाम्नाये हि मन्त्रं त्रिरभ्यस्तमेव केचिदामनन्ति । आह्वयतिरपि एहीति शब्दोच्चारणसाम्याद् गौणः । तस्मादवघाताङ्गमन्त्र इति प्राप्तेऽभिधीयते—

त्रिरभ्यासो न पाठेन नित्यप्राप्तो यतः क्वचित् ।
द्विः पठ्यते सकृच्चापि तस्मान्नायमनूद्यते ॥
न पाक्षिकानुवादत्वं नित्यान्वयविरोधतः ।
तस्मादत्र त्रिरभ्यासो विधातव्यस्तथा सति ॥
मन्त्रस्य न विधिश्शक्यो वाक्यभेदप्रसङ्गतः ।
आह्वानेन तु मन्त्रस्य योगो हन्तेस्तु लक्षणा ॥

नन्वेवमपि आह्वानमनूद्य त्रिरभ्यासो हन्तिकालश्च विधीयत इति वाक्यभेदः स्यात् । न; अर्थप्राप्तत्वात् । अवघातकाल एव सहायाह्वानमर्थप्राप्तम् । अतोऽनुवादमात्रमवहन्तिः । अनुवादत्वादेव लक्षणापि न दोषः । तवापि चाविशिष्टं ब्राह्मणे जघन्यवृत्त्याश्रयणम्, आह्वयतेर्गौणत्वात् । अपि च नात्रैन्द्र्येतिवच्छ्रौतो विनियोगः, किन्त्वितिकरणावमृष्टस्य मन्त्रस्यावघातस्य च समभिव्याहारात् सम्बन्धमात्रं गम्यते । तत्र सति सम्भवेऽङ्गाङ्गिभावस्स्यात् । स तु वाक्यभेदान्मन्त्रलिंगविरोधाच्च न सम्भवतीति एककालतैव सम्बन्ध इति गम्यते । न खल्वेहीति परप्रेषणरूपस्य मध्यमपुरुषस्य हविष्कृदिति च सम्बोधनरूपस्याचेतनेऽवघाते सामर्थ्यमस्ति । तस्मात् त्रिरावृत्तिमात्रविधानादाह्वानांगं मन्त्रो नायथार्थोऽवघाते ॥ ३ ॥

---

यति–प्राप्तेति । मन्त्रस्येत्यनन्तरं तदुद्देशेनेति शेषः । यथाश्रुतेऽवघातोद्देशेन त्रिरभ्यासविधेः फलीभूतवैतुष्यविरोधेनासम्भवात् । पूर्वपक्षी शङ्कासमाधानमाह–पाठेति । नन्वाह्वयतीत्यचेतनेऽनुपपन्नमत आह–शब्दोच्चारणेति । आह्वानकर्तृवत्तदकर्तप्ययं एहीति शब्दोच्चारणवानिति साम्यादित्यर्थः । यतो यस्मात् । क्वचित् शाखाविशेषे मन्त्रो द्विःपठ्यते, क्वचिच्च सकृदित्यन्वयः । अयं त्रिरभ्यासः । नित्यान्वयेति । नित्यान्वयबोधविरोधादित्यर्थः ।। तस्मात् नित्यप्राप्त्यभावात् । लक्षणार्थे लक्षणेति प्रयोगः । अर्थप्राप्तत्वादित्यत्राह्वानस्येत्यादिः पूरणीयः एवं तावच्छ्रौतविनियोगत्वमभ्युपेत्योक्तम्, वस्तुतस्तु तदेवासिद्धमित्याह–अपिचेति । लिङ्गविरोधमेव प्रपञ्चयति–न खल्विति । आह्वानम् आह्वानमन्त्रः । तथा अयथार्थमिति सूत्रार्थः । प्रयोजनं स्पष्टम् ॥ ३ ॥

४

**सू. तथा**—'उत्तिष्ठन्नन्वाह, अग्नीदग्नीन् विहरेति', 'व्रतं कृणुतेति वाचं विसृजतीति'। अत्रापि पूर्ववत् संशयपूर्वोत्तरपक्षाः। वाक्यभेदस्तु इहाङ्गाङ्गित्वपक्षेऽपि नास्तीति तदेव युक्तमिति विशेषाशङ्का। श्रुतिविनियोगाभावात्तु मन्त्रलिङ्गविरोधादत्रापि कालार्थ एव संयोगः। कालश्चेह विधीयते, न पूर्ववदनूद्यत इति विशेषः॥ ४॥

५

**सू. सूक्त**—दर्शपूर्णमासयोः श्रूयते-'सूक्तवाकेन प्रस्तरं प्रहरती' ति। तत्र संशय :—किं प्रस्तरप्रहरणस्य सूक्तवाकस्य च कालार्थस्संयोगः? अथवाङ्गाङ्गिभावः? इति।

**तत्र द्वयोः कृतार्थत्वान्नाङ्गाङ्गित्वम् प्रकल्प्यते।**
**कालार्थस्तेन संयोगस्तयोर्देशादिवद्भवेत्॥**

यथा 'दर्शपूर्णमासाभ्यामिष्टवा सोमेन यजेत' इत्युभयोः कृतार्थत्वात् कालार्थः संयोगः, तथेहापि सूक्तवाकस्येष्टदेवताभिधानेन कृतार्थत्वात् प्रहरणस्य च नानाकर्मोपयुक्तप्रस्तरप्रतिपादनेन प्रयोजनवत्वादङ्गाङ्गित्वापेक्षाभावात् कालार्थस्संयोगः। तत्रापि निर्ज्ञातकालत्वात् सूक्तवाकः प्रस्तरप्रहरणस्य कालं लक्षयति। तृतीया चेत्थम्भूतलक्षणे[1]

तथा—आतिदेशिकीं सङ्गतिं दर्शयति—पूर्ववदति। आद्यस्योत्थाने द्वितीयस्य च वाग्विसर्गे विनियोग उत्थानकाले पूर्वमन्त्रो द्वितीयमन्त्रकाले च वाग्विसर्गः। विनियोगस्तु लिङ्गादग्निविहरणप्रैषे व्रतकरणप्रैषे चेत्येवमित्यर्थः। तदेव युक्तमिति। एतच्चाध्वर्यूत्थानमेवाग्नीन्धनादिहेतुत्वादग्नीच्छब्देनोच्यते। आमन्त्रणविभक्तिरपि चैतन्यारोपात्। एवं विसृज्यमाना वागेव व्रतभक्षणकर्तृत्वेनोपचारात्प्रतिपाद्यत इति भावः। उत्थानविसर्जने तथा मन्त्राङ्गिभूते इति सूत्रार्थः॥ ४॥

सूक्त—इह कालार्थसम्बन्धापवादादनन्तरसङ्गतिः। कृतार्थत्वात् स्वर्गफलवत्वात्। इष्टेति। यागसम्बन्धीत्यर्थः। नानेति। स्रुग्धारणादीत्यर्थः। निर्ज्ञातेति। अनूयाजाङ्गशाज्यानन्तरपाठादनूयाजानन्तरकालस्तस्य निर्णीत इत्यर्थः। प्रहरणन्तु बर्हिषि प्रस्तरासादनानन्तरं विहितमपि न तदेव शक्यं कर्तुम्। स्रुग्धारणादिकार्यानिष्पत्तेरतो न निर्णीतकालमिति भावः। ननु काललक्षकत्वे तृतीयानुपपत्तिरत आह—तृतीया चेति। तथा च सूक्तवाकोपलक्षिता प्रहरणक्रियेति बोधः। उपलक्षणत्वञ्च समानकालीनतयेत्यर्थः। कारकविभक्तिप्रबलत्वमाशङ्क्याह-

१ अनेन सूत्रेण किञ्चित्प्रकारविशिष्टस्य यज्ज्ञापकं तत्र तृतीयाविधानादिहापि प्रह्रियमाणत्वावस्थाप्राप्तस्य प्रस्तरस्य ज्ञापकस्सूक्तवाक इत्याश्रयणात् तृतीयोपपद्यते। प्रह्रियमाणावस्थप्रस्तरज्ञापकत्वञ्च सूक्तवाकस्य सूक्तवाकप्रयोगकाले प्रस्तरप्रहरणे सति भवति। नान्यथा। तेन सूक्तवाककाले प्रस्तरं प्रहरेदित्येव कालार्थस्संयोग एवायमिति भावः।

भविष्यति। न हि कथञ्चिदपि देवताभिधायिनस्सूक्तवाकस्य प्रहरणांगता सम्भवति, प्रहरणे देवताभावात्। अतः कालार्थ एव संयोगः। एवं प्राप्ते ब्रूमः—

श्रुत्वा प्रहरणाङ्गत्वं सूक्तवाकस्य गम्यते।
तेन तद्देवतायोगादेष होमो भविष्यति॥

तृतीयाश्रुत्या सूक्तवाकस्य करणत्वं गम्यमानं न शक्यमुत्स्रष्टुम्। न चेत्थम्भूतलक्षणेयं तृतीया, कारकविभक्तेर्बलीयस्त्वात्। किं बलीयस्त्वम्? सर्वो हि सम्बन्धः क्रियागर्भ एव, तेन सूक्तवाकप्रस्तरप्रहरणयोर्लक्षणक्रियागर्भोऽयं सम्बन्धः। न चेह लक्षणक्रियोपात्ता, तामनुपात्तामपेक्ष्यायं सम्बन्धः प्रत्येतव्य इति विप्रकृष्यते। क्रियाकारकसम्बन्धस्तु मान्यापेक्ष इति बलीयस्त्वं, तेन करणमेव सूक्तवाकः। यद्यपीष्टदेवताप्रकाशनेनासौ कृतार्थः, तथापि विनियुज्यते वचनात्। किं हि वचनं न कुर्यात्। कथं पुनर्देवताभिधायिनः प्रहरणाङ्गता? श्रुतिविनियुक्तमन्त्राङ्गत्वबलादेव तदभिधेयाभिरिष्टदेवताभिस्संयोगः प्रहरणस्य कल्प्यते। तेनायं प्रहरतिरिष्टदेवतासंस्कारार्थो होमो भविष्यति। तेनोपपन्नमिष्टदेवताप्रकाशनं कुर्वत एव सूक्तवाकस्य प्रहरणाङ्गत्वम्॥ ५॥

---

न हीति। सिद्धान्तमाह—श्रुत्येति। अयोग्यतानिश्चयाभावेन शीघ्रप्रवृत्ततृतीयाश्रुत्या कारणत्वबोधे तदन्यथानुपपत्त्या सूक्तवाकप्रकाश्याग्न्यादिदेवतासम्बन्धस्य प्रहरणे कल्पनान्न केवलप्रक्षेपरूपता तस्य, किन्तु होमरूपता। यथा 'इन्द्र ऊर्ध्वोऽध्वर इत्याघारमाघारयति' इत्याघारणस्येत्यर्थः। एष इति होमशब्दाभिप्रायं पुंस्त्वम्। सर्वो[1] हीति। सकलपदार्थान्वयः क्रियाद्वारक एवेत्यर्थः। लक्षणक्रियेति। न तु प्रहरणभावनागर्भः। अकारकत्वेन साक्षात्तदन्वयाभावादित्यर्थः। अस्तु तर्हि लक्षणक्रियाद्वारैव प्रहरणक्रियान्वयः,तत्राह—न चेहेति। उपात्ता शब्दवाच्या। अपेक्ष्य लक्षयित्वा। न चेत्थम्भूतलक्षणे तृतीया इत्यनुशासनाल्लक्षणक्रियायास्तृतीयावाच्यत्वं शङ्क्यम्, लाक्षणिकत्वेन तदुपपत्तावनेकार्थत्वकल्पनानुपपत्तेरिति भावः। संस्कारार्थ इति। उद्देश्यांशेन स्मरणरूपसंस्कारार्थ इत्यर्थः। प्रयोजनं पूर्वपक्षे—सूक्तवाकसमकालं प्रहरणम्, सिद्धान्ते त्वन्त इत्यादि। सूत्रं स्पष्टार्थम्॥ ५॥

---

१. क्रियागर्भः क्रियाप्रयुक्त इत्यर्थः। यथा राज्ञः पुरुष इति राजपुरुषयोस्संबन्ध एकस्यां दानक्रियायामुभयोर्दातृप्रतिगृहीतृत्वभावात्तया दानक्रिया प्रयुज्यते। तद्वत्सर्वोऽपि संबन्धः क्रियाप्रयुक्तः। अतएव—'न क्रियागर्भसंबन्धादृते संबन्धनं क्वचिदि'ति भट्टपादैरुक्तम्। तेन यद्यत्र तृतीया इत्थंभूतलक्षणे स्यात्, तदा तृतीयया सूक्तवाकस्य प्रस्तरस्य च लक्ष्यलक्षकभावः प्रत्याय्यः। स च लक्षणक्रियाप्रयुक्तः, तां विना तद्भावस्यासम्भवात्। ज्ञानक्रियैव लक्षणक्रियापदेनोच्यते। न चात्र ज्ञानात्मिका क्रियोपात्ता। एवञ्च लक्षणक्रियां कथञ्चिद्धृदयमागमय्य ज्ञाप्यज्ञापकभावात्मको लक्ष्यलक्षणभावः प्रत्येतव्य इति तत्प्रतीतिर्विलम्बेन जायते। कारकभावेन संबन्धस्तु शब्दोपात्तक्रियायास्साक्षादेव संभवतीति क्रियान्तरानपेक्षत्वात्क्रियाकारकसम्बन्धश्शीघ्रं प्रतीयते। एवञ्च शैघ्र्यमान्द्यकृतं बलाबलमित्यर्थः।

६

सू. कृत्स्न—प्रहरणाङ्गं सूक्तवाक इति स्थितम्। इदानीमिदं संदिह्यते-किं कृत्स्नस्सूक्तवाकः पौर्णमास्याममावास्यायाञ्च प्रयोक्तव्यः ? उतेष्टदेवतानुरोधेन विभज्य प्रयोगः ? इति। तत्र[1] सूक्तवाकशब्दस्य समस्तानुवाकवचनत्वेनाध्येतॄणां प्रसिद्धेराग्नेयादिभावनानां षण्णामप्यन्योन्यनिरपेक्षाणामेव कथम्भावात्मकप्रकरणवत्त्वादेकैकस्य कर्मणस्सकलस्सूक्तवाकोऽङ्गं प्रयाजादिवत्। तत्र सत्यप्येवमेककालवर्तिनां त्रयाणां तन्त्रेण प्रयाजादिवदुपकरोतीति न भेदेन प्रयोक्ष्यते। समुदायद्वये तु कालभेदात्सकलस्यैवावृत्त्या भवितव्यम्। नन्विष्टदेवताप्रकाशनार्थो मन्त्रोऽयं, प्रहरणमपीष्टदेवतासंस्कारार्थमित्युक्तं, तत्रामावास्यादेवतापदानि पौर्णमास्यां न प्रयोगार्हाणि, प्रयोजनाभावात्, इतराण्यपीतरत्रेति विभाग एव प्राप्नोति। नैवम्; वचनाद्धि सकलप्रयोगो गम्यते। तत्राविद्यमानार्थान्यपि पदान्यदृष्टाय प्रयोक्ष्यन्ते, वचनादिति। उच्यते–विभज्य[2] प्रयोगः प्रयोजनवशादित्युक्तो हेतुः, न हीन्द्राग्न्यादिशब्दानां पौर्णमास्यां प्रयोजनं, नाप्यग्नीषोमादिशब्दानामितरत्र प्रयोजनम्। यत्तु वचनादित्युक्तम् तन्न; सूक्तवाकशब्दस्यावयवव्युत्पत्त्येष्टदेवताप्रकाशकमन्त्रवचनत्वात्सूक्तं वक्तीति सूक्तवाकः। तेन यस्मिन्प्रयोगे

---

कृत्स्न—उपजीवकत्वसङ्गतिप्रदर्शनार्थमाह–प्रहरणाङ्गमिति। इष्टेति। पौर्णमास्याम् इष्टा या देवतास्तत्प्रकाशकभागस्य तत्र प्रयोगः, एवममावास्यायामिति विभाग इत्यर्थः। समस्तेति। 'इदं द्यावापृथिवी भद्रमभूत्' इत्यारभ्य 'नमो देवेभ्य' इत्यन्तेत्यर्थः। नन्वाग्नेयादीनां सहितानां फलान्वयात्सहितानामेवेतिकर्तव्यताकांक्षेति सूक्तवाकस्य विभागेन तदङ्गत्वं स्यात् प्रायणीयोदयनीययोः 'एकादशिनानालभेरन्' इत्यत्र 'पञ्च प्रायणीये पशवः, षडुदयनीये' इति विभागवदित्याशङ्क्याह–आग्नेयादीति। उत्पत्तौ पृथक्करणत्वावगमात् फलवाक्ये करणानां द्वन्द्वेनैकपदोपादानेन च साहित्यावगमः, न तु सहितानां करणतेति प्रत्येकमेवाङ्गाकाङ्क्षेत्यर्थः। प्रायणीयोदयनीययोस्तु प्राप्तैकादशिनोद्देशेन देशरूपतया विधीयमानत्वात्साहित्यविवक्षा। इह त्वाग्नेयादीनामङ्गविधावुद्देश्यत्वान्न तद्गतसाहित्यविवक्षेति वैषम्यमिति भावः। लिङ्गविरोधमाशङ्कते–नन्विति। ऐन्द्रीन्यायेन लिङ्गबाध इति समाधत्ते–नैवमिति। सूक्तमिति। सुष्ठु आज्यभागादिषु उक्तं निर्दिष्टमग्न्यादिकमित्यर्थः। तथा चैकप्रयोगवृत्तिया-

---

१. सूक्तवाकशब्दस्यावयवव्युत्पत्तिपर्यालोचनया हीष्टदेवतानुरोधेन विभागो वाच्यः। स च न सम्भवति; अध्येतॄणां कृत्स्ननिगदे सूक्तवाकप्रसिद्धेर्योगाश्रयणे तदनुपपत्तेः। तेन प्रसिद्धिबलात् कृत्स्ने निगदे सूक्तवाकशब्दस्य रूढिरेव। विभज्य विनियोगे च सूक्तवाकशब्दस्य तदेकदेशे लक्षणा स्यात्। तस्मात् कृत्स्नविनियोग इति पूर्वपक्षाशयः।

२. दृष्टप्रयोजनसम्भवेऽदृष्टस्यान्याय्यत्वात् प्रकृतप्रत्यभिज्ञानाच्चेष्टदेवतासंस्कार एव प्रयोजनं न्याय्यमिति विभाग एव मन्त्रस्य श्रेयानिति सिद्धान्ताशयः।

यावत्यो देवता इष्टा एका बह्व्यो वा प्राकृत्यो वैकृत्यो वा तत्र तावद्देवतापदप्रयोगादेव सम्पूर्णस्सूक्तवाकः, तदतिरिक्तानिष्टदेवतापदप्रयोगे प्रत्युत सूक्तवाकत्वं हित्वा दुरुक्तवाक एव स्यात्तस्मादिष्टदेवतानुरोधेन निष्कर्षः ॥ ६ ॥

७

सू. लिंग—'ऐन्द्राग्नमेकादशकपालं निर्वपेदि' त्यारभ्येन्द्राग्न्यादिलिङ्गा इष्टयस्समाम्नाताः। तेनैव लिङ्गक्रमेण काम्ययाज्यानुवाक्याकाण्डमित्येवं समाख्यातम्। मन्त्रकाण्डसमाम्नानम् 'इन्द्राग्नो रोचनादिव' इत्यादि। तदिह मन्त्रकाण्डे संशयः—किं यत्र यत्र सामर्थ्यमस्ति तत्र तत्र सर्वत्र विनियोक्तव्या मन्त्राः क्रमसमाख्ये बाधित्वा? उत तद्वशेन काम्येष्टिष्वेव? इति। तदर्थञ्च किं लिङ्गमपि श्रुत्यादिवन्निरपेक्षमेव विनियोजकम्? उत क्रतुसम्बन्धबोधकप्रमाणमन्यदप्यपेक्ष्य व्यापारविशेषमात्रे लिङ्गस्य प्रामाण्यमिति। तत्र–

लिङ्गस्याप्यनपेक्षस्य मन्यते विनियोक्तृताम्।
तद्बलीयः क्रमाख्याभ्यामिति सर्वार्थता भवेत्॥

स्वाध्यायविध्यध्यापितस्य तावन्मन्त्रस्यावश्यं प्रयोजनेत भवितव्यम्। तत्र मन्त्रस्वरूपमेव दृष्ट्वास्यार्थस्य प्रकाशकोऽयम्, अतोऽत्र विनियोक्तव्य इति बुद्धिरुत्पद्यते। न च निष्प्रयोजनस्य प्रकाशनमर्थवदिति तद्द्वारेण तत्सम्बन्धिकर्मापूर्वार्थत्वमपि तत एव गम्यते, किमत्र प्रमाणान्तरेण। तच्च क्रमसमाख्याभ्यां प्रबलमिति तद्बाधेन लिङ्गात् सर्वार्थतेति प्राप्ते ब्रूमः–

सत्यं प्रयोजनापेक्षा मन्त्रस्यास्ति तथापि तु।
नैव सामर्थ्यमात्रेण विनियोगोऽस्य सम्भवी॥

न हि अपेक्षितमपि प्रयोजनं प्रमाणमन्तरेण लब्धुं शक्यम्। न च सामर्थ्यमात्रेण प्रयोजनं किञ्चित् समर्थ्यते। अग्न्यादिस्वरूपमात्रप्रतिपादनं सामर्थ्यादवगम्यते। न च नावताऽत्र प्रकाशने फलमस्ति, कर्मापूर्वसाधनरूपप्रकाशनार्थता तु न कर्मसम्बन्धप्रमाणमन्यदन्तरेण सामर्थ्यमात्रात् सिध्यति। 'पूषा प्रपिष्टभाग' इत्यत्र तु भागशब्दस्य

---

वद्देवताप्रकाशकपदसमुदायविशेषे साधारणपदोपेते सूक्तवाकशब्द इति वचनस्य लिङ्गोपोद्बलकत्वमेव, न तु तद्बाधकत्वमिति भावः। निष्कर्षो विभागः। सूत्रप्रयोजने स्पष्टे ॥ ६ ॥

लिङ्गक्रम—पूर्वत्र श्रुतेर्दुर्बलं लिङ्गानुसारित्वेन स्मृतं लिङ्गस्यापि दुर्बलक्रमानुसारित्वमिह चिन्त्यत इति प्रसङ्गसङ्गतिः। इन्द्राग्न्यादिलिङ्गं मन्त्रप्रकाश्यं चिह्नं यासु ता इत्यर्थः। क्रमेण पाठक्रमेण। व्यापारविशेषेति। द्वारभूतोपकारविशेषमात्रे इत्यर्थः। तत एवेति। प्रयोजनापेक्षासहकृतलिङ्गादेवेत्यर्थः। तच्च लिङ्गञ्च। साधनरूपेति। साधनस्वरूपेत्यर्थः। ननु 'पूषा प्रपिष्टभाग' इत्यत्र दर्शकर्मापूर्वसम्बन्धानवगमेऽपि कथं पूष्णः पिष्टद्रव्यस्य च स्वरूपतः सम्बन्धमात्रेण पर्यवसानमत आह—पूषेति। तथा च वाक्यादेव तत्र यागापूर्वस-

त्यागवचनत्वात् क्रतुसम्बन्धसिद्धिरिति वक्ष्यामः। न चाग्निसूर्यादीनां स्रुवादिवत् क्रत्वव्यभिचारः, येन क्रतुरुपस्थाप्येत, लोकेऽपि तत्सद्भावात् इन्द्रादीनाममपि मन्त्रार्थवादेतिहासादिभिः कर्मणोऽन्यत्रापि प्रतीतेः। तस्मात् क्रतुसम्बन्धप्रमाणमन्यदपेक्षितव्यम्। न च मन्त्रकाण्डस्य क्रमसमाख्याभ्यामन्यत् प्रमाणमस्ति। ते च काम्येष्टिष्वेवेति तत्रैव विनियोगः, न कर्मान्तरेषु। न च कर्मान्तरेषु स्मरणापेक्षयैषां मन्त्राणां तत्र विनियोगः, तेषामुपायान्तरेणापि स्मृतिसिद्धेरेकान्ततो मन्त्रानपेक्षणात्। यत्र त्वेकान्ततस्तत्र भवत्येव सामर्थ्यमात्रादपि तादर्थ्यम्, यथार्थज्ञानस्यानुष्ठानाङ्गत्वम्। न हि तद्विनानुष्ठानं सिध्यति। यथा चात्मज्ञानस्य साम्परायिकफलकर्मानुष्ठानौपयिकत्वम्। इह त्वेकान्ताभावान्न कर्मान्तरेषु विनियोगः। क्रमसमाख्याबलात्तु काम्येष्टिष्वेव यथाक्रमं यथासमाख्यञ्च याज्यानुवाक्यत्वेन विनियोगः सम्भवताम्, असम्भवतामपि तास्वेव सामिधेन्यादौ क्रमसहितेन लिङ्गेन विनियोगः॥ ७॥

---

म्बन्धावगम इति भावः। ननु 'यस्य पर्णमयी जुहूर्भवति' इत्यनारभ्याधीतवाक्येन क्रत्वव्यभिचारिजुहूद्देशेन पर्णताविधिवत्तथाभूताग्न्यादिप्रकाशनलिङ्गादपि प्रमाणान्तरं विनापि विनियोगस्स्यादित्याशङ्क्याह—न चेति। जुह्वाः क्रतोरन्यत्र न सम्बन्धप्रसिद्धिः, अग्न्यादेस्तु पाकदाहादिलौकिकक्रियास्वपि सम्बन्धप्रसिद्धेर्न क्रत्वव्यभिचार इत्यर्थः। इन्द्रादेरलौकिकत्वादाह—इन्द्रेति[1]। यथा वेदात्क्रतुसम्बन्धस्तथा मेर्वादिस्थानगतत्वादेव नियन्तृत्वादिसम्बन्धोऽपि प्रसिद्ध इति न क्रत्वव्यभिचार इत्यर्थः। मन्त्रकाण्डस्येत्यनन्तरं क्रतुसम्बन्धे इति शेषः। एकान्ततो नियमतः। एकान्तत इति। अपेक्षानियम इत्यर्थः। साम्परायिकेति। पारलौकिकेत्यर्थः। देहातिरिक्तात्मज्ञाने तत्राप्रवृत्तेरिति भावः। यथाक्रममिति। प्रथमपठितायामिष्टौ प्रथमपठितयाज्यानुवाक्यायुगलमङ्गम्। द्वितीयस्थानपठितायां द्वितीयस्थानपठितं याज्यानुवाक्यायुगलमिति क्रमानुसारेणेत्यर्थः। सम्भवतां प्रधानदेवताप्रकाशकानाम्। असम्भवतां[2] तदप्रकाशकानाम्। तास्वेवेति। तास्वेवेष्टिषु यास्सामिधेन्यस्तदादावित्यर्थः। आनर्थक्यात्तदङ्गेष्विति न्यायादिति भावः। समाम्नानं मन्त्रकाण्डम् लिङ्गक्रमसहितसमाख्यानात्काम्ययुक्तम्। काम्येष्वङ्गमिति सूत्रार्थः। प्रयोजनन्तु स्पष्टम्॥ ७॥

---

१. मन्त्रार्थवादादिषु स्वर्गाधीश्वरत्वलोकपालत्वासुरजेतृत्वादिना प्रतिपाद्यमानत्वेनेन्द्रादीनामपि कर्मणो बहिरपि सम्भवावगमाल्लोके सम्भवोऽस्तीत्यर्थः।

२. असम्भवश्च क्वचित्प्रधानदेवताप्रकाशकत्वाभावाद्यथा सोमारौद्रेष्टिक्रमे आम्नातानां मानवीनामृचाम्। प्रधानदेवताप्रकाशनसामर्थ्येऽपि बहुत्वात् क्वचिदसम्भवः। यथा 'अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेत्' इति क्रमे समाम्नातानां 'कृणुष्वपाज' इत्यादीनामित्यवगन्तव्यम्।

८

सू. अधि—ज्योतिष्टोमे काश्चिदाग्नेय्य ऋचः 'अग्न आयाहि वीतय' इत्यादयो विशेषरूपेणासंयुक्ताः पठिताः। स्तोत्रादौ च वाक्यान्तरेण विनियुक्ताः। प्रदेशान्तरे च 'आग्नेय्याग्नीध्रमुपतिष्ठत' इति श्रुतम्। तत्र विचारः–किं प्रकृताभिर्वाआग्नेयीभिरिदमुपस्थानं कर्त्तव्यम्? उत प्रकृताभिरेवेति।

**तत्राग्नेयीतिशब्देन सर्वासामभिधानतः।**
**अविशेषो न काचिद्धि प्रकृतग्रहणे प्रमा॥**

प्रकरणाद्विशेषोऽवगम्यत इति चेन्न; प्रकरणस्याविशेषकत्वात्। यदि त्वाग्नेयीसंस्कारार्थमिदमुपस्थानं स्यात्, ततोऽपूर्वासम्बन्धिनः संस्कारायोगात् तत्साधनभूताः प्रकृता गृह्येरन्। उपादीयते त्विहाग्नेयी तृतीयानिर्देशात्। अतः शब्दार्थमात्रस्यैवाङ्गत्वोपपत्तेर्न प्रकृतनियमः। सन्निधानादिति चेन्न, तदभावात्। प्रदेशान्तरे हि स्तोत्रादावाग्नेय्यो विहिताः, न तूपस्थानविधौ कस्याश्चिदाग्नेय्यास्सन्निधिरस्ति, यतस्तद्विषयोऽयमाग्नेयीशब्दस्स्यात्। अस्तु वा सन्निधानं, तथापि स्तोत्रादिकार्यान्तरार्थत्वान्निराकाङ्क्षा नात्र सम्बन्धुमर्हन्ति। न ह्यन्यार्थेन सन्निहितेनान्यो विशेष्यते। यथाऽश्वेन गच्छति श्वेतेन पटेन प्रावृत इति पटसम्बन्धेन निराकाङ्क्षेण सन्निहितेनापि श्वेतगुणेनाश्वो न विशेष्यते, तथेहापि। न चाग्नेयीशब्दस्याप्यस्ति विशेषापेक्षा, यथाश्रुताग्नेयीशब्दस्याश्वमात्रस्येव वाक्यार्थसमवायोपपत्तेः। तेनोभयोर्निराकाङ्क्षत्वात् सत्यपि

---

अधि–क्रत्वपूर्वसम्बन्धबोधकप्रमाणस्य लिङ्गसहायत्वमिव श्रुतिसहायत्वमपि प्रसङ्गादुच्यत इति संगतिः। असंयुक्ता इति। द्वारविशेषेणासम्बद्धा इत्यर्थः। एतच्च क्रत्वपूर्वसम्बन्धक्लृप्तेः सिद्धान्तोपयोगितया सूचनायोक्तम्। स्तोत्रादौ चेति पूर्वपक्षोपयोगितयोक्तम्। प्रदेशान्तर इति च सन्निहितत्वव्यावर्त्तनेन पूर्वपक्षोपपत्यर्थमेव। आग्नेय्येति। आग्नीध्रशब्देनाग्नीध्रस्थानमण्डपः तत्संस्कारत्वेनाग्नेयीकरणकोपस्थानमत्र विधीयते। तत्साधनभूताः स्वरूपमात्रे आनर्थक्यादपूर्वसाधनभूताः उपादीयते उपास्थानार्थत्वेन विधीयते। सन्निधानादिति।[1] 'राजा राजसूयेन स्वाराज्यकामो यजेत' इत्यादौ प्रकृतयागोपादाननियमवदिति भावः। एवमपीतरापेक्षया प्रकृतानां सन्निधानमस्त्येवेत्यत आह–अस्तु वेति। राजसूयवाक्ये हि प्रकृतयागानां फलसाकांक्षत्वादुपादानं, न त्विह तथेति भावः। एतदेव लौकिकोदाहरणप्रदर्शनेन व्युत्पादयति–यथेति। बाधितेति। सङ्कोचलक्षणबाधयुक्ता स्यादित्यर्थः। दुर्बलप्रमाणेन हि प्रबलप्रमाणस्यापेक्षित एव सङ्कोचः क्रियते, नानपेक्षित इति न्यायस्य सर्वत्रोपगमादिति भावः। यौगि-

---

१. यथा 'सप्तमं पदमध्वर्युरञ्जलिना गृह्णाति' इत्यत्र पदशब्दस्य सामान्यवचनस्यापि सन्निधानात्सोमक्रयणीपदपरत्वं तद्वदिहापि सन्निधानात् प्रकृताग्नेयीमात्रपरत्वं कुतो न भवतीति शङ्कितुराशयः।

सन्निधौ न मिथस्सम्बन्धः। अपेक्षितसन्निधिर्हि सम्बन्धकारणं न सन्निधिमात्रम्। एवं सत्यपि यदि विशेष्येत श्रुतिजनिताविशेषप्रत्ययबाधाच्छ्रुतिरेव बाधिता स्यात्। ननु यौगिकत्वादाग्नेयीशब्दस्सन्निहितामेव व्यक्तिमवलम्बते। नैवम्; अवयवार्थसमन्वितव्यक्तिमात्रवचना यौगिका न सन्निहितवचनाः। प्रमाणान्तरेण तु विशेष्यमाणास्तत्रैव व्याप्रियन्ते। यथा वैश्वदेव्यामिक्षेति तद्धितस्सन्निहितामिक्षिमेवाभिधत्ते। न ह्यत्र विशेषकमस्ति। सतोऽपि सन्निधेरन्यार्थत्वेनाविशेषकत्वात्। न चात्र सोमस्येवैन्द्रवायवत्वमृगनुवादेनाग्नेयीत्वं विधीयते, येनानुवादस्य सन्निहितगामित्वात् सन्निहिता ऋचः प्रतीयेरन्। आग्नेयीनां तु सतीनामुपस्थानं प्रत्युपादानम्। तस्मात् सत्यपि सन्निधावविशेषः। न च सन्निधिरप्यस्ति प्रदेशान्तरगतत्वादित्युक्तम्। तस्मादाग्नेयीमात्रग्रहणमिति प्राप्तेऽभिधीयते—

प्रकृता एव गृह्येरन् प्रसिद्धक्रतुसङ्गमाः।
तासां कार्यविशेषो हि सुखायात्रोपदिश्यते॥

आग्नीध्रोपस्थानस्य हि द्वे रूपे—आग्नीध्रोपस्थानता ज्योतिष्टोमापूर्वसाधनौपयिकव्यापारता च। द्वयमपि शास्त्रेणैवावगन्तव्यम्, अन्यतरेणाप्यन्यतरस्य सिध्यभावात्। न हि ज्योतिष्टोमगतो यो व्यापारः स आग्नीध्रोपस्थानात्मक एवेति नियमस्समस्ति, नापि आग्नीध्रविषयमुपस्थानं ज्योतिष्टोमगतव्यापार एवेत्येषोऽपि नियमस्समस्ति। ज्योतिष्टोमानौपयिकस्यापि स्पर्शादिवदभिधानस्याग्नीध्रविषयस्य सम्भवात्। तेनैकेन शास्त्रसिद्धेनान्यतरस्यार्थापत्त्यानुमानेन वा सिध्यभावाद्द्वे अपि रूपे शास्त्रोऽवगन्तव्ये। तद्यद्यप्रकृताभिरुपस्थानं विधीयेत ततस्तस्योपस्थानरूपमेव श्रुतेर्लभ्यते, न तु ज्योतिष्टोमव्यापारत्वम्, अश्रुतत्वात्। न च कर्मानौपयिकेनोपस्थानमात्रेण फलमस्तीत्यनर्थकं[1]

---

कत्वादिति। सास्य देवतेति सर्वनामार्थविहिततद्धितान्तत्वादित्यर्थः। अग्निदेवताशम्बन्धित्वेनैव व्यक्तिप्रतीतेस्सन्निहितत्वादेरबोधाच्च नैवमित्याह—नैवमिति। कथं तर्हि व्यक्तिविशेषलाभः,- तत्राह—प्रमाणान्तरेति। आमिक्षादिपदसमभिव्याहारेत्यर्थः। सतोऽपीति। अपिना अभ्युपेत्यवादत्वसूचनम्। अन्यार्थत्वेन स्तोत्रार्थत्वेन। अभ्युपेत्यवादत्वं प्रकटयति—न चेति।

सिद्धान्तमाह—प्रकृता एवेति। प्रकृतानां हि प्रकरणेन क्रत्वपूर्वसम्बन्धावगमात्किद्वारेणेति द्वारविशेषमात्रापेक्षायामाग्नीध्रोपस्थानरूपद्वारविशेषमात्रबोधने लाघवम्। तावतेवोपस्थानस्यापूर्वसाधनरूपत्वस्य सिद्धे, न ह्यक्रतुसाधनं क्रतुसाधनद्वारं सम्भवतीति। अप्रकृतानां तु क्रतुसम्बन्धासिद्धेः। क्रत्वपूर्वसाधनीभूतोपस्थानरूपव्यापारबोधने उपस्थानरूपता क्रत्वपूर्वसाधनरूपता च व्यापारस्य बोधनीयेति गौरवमित्यर्थः। एतदेव विवृणोति—आग्नीध्रोपस्थानस्येत्यादिना। ज्योतिष्टोमापूर्वसाधनस्य सम्पादनस्यौपयिक उपाय इत्यर्थः। ज्योतिष्टोमगत इति। ज्योतिष्टोमापूर्वसाधनीभूत इत्यर्थः। ननु 'व्रीहीनवहन्ति' इत्यादौ यथावघातरूपता दर्शपूर्णमासापूर्व-

---

१. फलं क्रतूपकार इत्यर्थः।

वाक्यं स्यात् फलं वा कल्प्येत। नन्ववघातादिवदुपस्थानस्य प्रकरणात् क्रतुव्यापारता सिध्यति[1]। सत्यं सिध्यति, न तु श्रुनिमकल्पयित्वा प्रकरणस्य स्वतः प्रामाण्याभावात्। न चाकल्पनयोपपत्तौ कल्पना युक्ता। तथा विधेरपि गौरवं स्यात्। श्रुतिसिद्धमुपस्थानरूपत्वं प्रकरणकल्पितञ्च क्रतूपकारव्यापारत्वमुभयमपि ह्यनेनैव विधिना विधातव्यम्, आग्नेय्या क्रतुं प्रत्याग्नीध्रोपस्थानरूपं व्यापारं कुर्यादिति। न हि प्रकरणं विधायकं, श्रुतिवत् सम्बन्धप्रमाणत्वात्। यथा 'व्रीहीनवहन्ती' ति श्रुतिसमर्पितव्रीह्यवघातसम्बन्धं प्रकरणकल्पितं क्रत्वपूर्वसाधनावघातसम्बन्धञ्च विधिरेव।वहन्तीति विधत्ते। तद्वदिहापि प्रकरणकल्पितं क्रतुसम्बन्धमयमेव विधिर्विदध्यात्, श्रूत्युक्तञ्चोपस्थानरूपमिति गौरवं स्यात्। तदिदमवघातादिषु गत्यभावादङ्गीकृतम्। इह प्रकृतग्रहणेन गतौ सत्यां न गौरवाश्रयणमवकल्पते। तथा हि-प्रकृतानां प्रागेव क्रतुगतो व्यापारः कर्तव्यत्वेनावधारितः। तस्यावधारितव्यापारस्याग्नीध्रोपस्थानात्मकविशेषरूपमेवात्र विधीयतेय आग्नेय्या क्रतौ व्यापारः कर्तव्यस्स आग्नीध्रोपस्थानरूप इति। तेन प्रागेव कल्पितं विहितञ्चाग्नेय्याः क्रतुव्यापारमनूद्य विशेषमात्रं श्रुत्युपात्तमिह विधीयते। न त्विह क्रतुव्यापाररूपं कल्प्यते, नापि विधीयत इति लाघवात् प्रकृतग्रहणमेव युक्तम्। नन्वेवम् 'अग्निमुपनिधाय स्तुवीते' त्यत्रापि प्रसिद्धक्रतुसम्बन्धानामाहवनीयादीनामेवोपधानं स्यान, लौकिकाग्नेः। नैष दोषः; देशविशेषनिबद्धा ह्याहवनीयादयो नाहत्यवचनमन्तरेणान्यत्र नेतव्याः। श्रूयते हि तेषामायतनाद् बहिर्गमने दोषः प्रायश्चित्तञ्च—'विवा एष इन्द्रियेण वीर्येणर्ध्यते यस्याहिताग्नेरग्निपक्षायती' त्यादि। तस्माल्लौकिकग्रहणम्। इह

---

साधनता च बोध्यते, तथात्रापीति शङ्कते—नन्विति। आदिना प्रोक्षणादिसङ्ग्रहः। अवहन्तीत्यादावपि प्रकरणेन श्रुतिकल्पनादस्त्येव कल्पनागौरवमित्याह—सत्यमिति। प्रकृतेऽपि तर्हि तथैवेत्याशङ्क्याह—न चेति। न केवलं प्रकरणेन श्रुतिकल्पनागौरवमात्रं, किन्त्वन्यदपीत्याह—तथेति। सम्बन्धेति। क्रतुसम्बन्धबोधकत्वादित्यर्थः। एतदपि गौरवम् 'अवहन्ति' इत्यादिष्वस्त्येवेति दर्शयति यथेति। किमिति तर्हि तत्र कल्पनागौरवाश्रयणमित्याशङ्क्याह— तदिदमिति। अवधारित इति। प्रकरणपाठानुमितेन वाक्येनेति भावः। इह अस्मिन् वाक्ये। उक्त न्यायास्य साप्तमिकाधिकरणविरोधं शङ्कते—नन्विति। उपनिधाय स्तोत्रदेशसमीपे स्थापयित्वा' उक्तन्यायस्य तत्र प्रत्यक्षवचनेनायतनात् बहिर्निर्गमे दोषप्रायश्चित्तबोधकेन बाध इति समाधत्ते—नैष दोष इति। आहत्येति। विशेषत इत्यर्थः। दोषबोधकं वचनमाह—विवा इति। वीत्युपसर्गस्य ऋध्यत इत्यनेनान्वयः। इन्द्रियवीर्यसमृद्धिरहितो भवतीत्यर्थः। वै निश्चये। अपक्षायति आयतनाद्बहिर्निर्गच्छति। आदिपदेन प्रायश्चित्तवाक्यमुपलक्ष्यते। 'तं सम्भरेदिदं त एकमि'त्यादि। ननु ऋग्विशेषोपादानेन शीघ्रप्रवृत्तस्तोत्रादिकार्यविशेषबोधकेन विधिना नैराकांक्ष्यात् कथं प्रकृत-

---

१. ततश्च श्रुतमात्रविधानोपपत्तेर्न गौरवमिति भावः।

तु प्रकृतानामेव लाघवादित्युक्तम्। ननु प्रकृतानां कार्यविशेषोऽपि स्तोत्रादिर्ज्ञात एव। सत्यं; सामान्यरूपमपि तावत् प्रकरणपाठमात्रज्ञातं तन्मात्रेण नः प्रयोजनं, विशेषरूपन्तु वाक्यान्तरेण विहितं विशेषान्तरेणानपेक्षितत्वादनादृत्य सामान्यरूपमपेक्षितं गृह्यते। तस्मात् प्रकृताभिरुपस्थानम्। पूर्वं लिंगस्य सामान्यसम्बन्धापेक्षितत्वमुक्तं तत्प्रसंगात् श्रुतेरपि सति सम्भवे सामान्यसम्बन्धमन्यतस्सिद्धमपेक्ष्य विशेषमात्रपरत्वं सम्भवतीति प्रतिपाद्यत इति लिंगाधिकारेऽपि श्रुतिविनियोगश्चिन्तितः॥ ८॥

९

सू० लिङ्ग—भक्षमन्त्रः श्रूयते—'भक्षे हि मा विश' इत्यादिः। तस्य कश्चिदंशो भक्षणं प्रतिपादयति, ग्रहणावेक्षणसम्यग्जरणप्रकाश्चान्येऽशाः। तत्र संशय :—किं

---

ग्रहणमित्याशयेन शङ्कते—नन्विति। लाघवार्थैतद्विध्यपेक्षावशान्निराकांक्षाणामपि प्रकृतानामाकांक्षोत्थापनादुपस्थानसम्बन्धोपपत्तिरित्याशयेन समाधत्ते—सत्यमिति। नन्वेवमपि एकविशेषान्वितस्यापरविशेषान्वये विनियुक्तविनियोगविरोधो नैराकांक्ष्यञ्चेत्याशङ्क्याह-विशेषरूपन्त्विति। 'पुरोडाशकपालेन' इत्यादौ विनियुक्तवाचकशब्दोपादानेऽपि अधिष्ठानलक्षणया विरोधः परिह्रियते, किमुतात्र तादृशशब्दाभाव इति भावः। प्रसङ्गत्या शङ्कामपाकरोति—पूर्वमिति। अधिकारे प्रकरणे मन्त्रविधिः, अतदाख्येषु अप्रकृतमन्त्रेष्वपि, शिष्टत्वात्सामान्यशब्देन विधानादिति पूर्वपक्षसूत्रार्थः॥ ८॥

लिङ्ग-भक्षेति। सोमशेषभक्षेत्यर्थः। आदिपदेन 'दीर्घायुत्वाय शन्तनुत्वाय रायस्पोषाय सुप्रजास्त्वाय एहि वसो पुरोवसो प्रियो मे हृदोऽस्यश्विनोस्त्वा बाहुभ्यां सघ्यासं, नृचक्षसं त्वा देवसोम सुचक्षा अवख्येषम्, हिन्व मे गात्रा हरि वो गणान्मे मा वितीतृषः शिवो मे सप्तर्षीनुपतिष्ठस्व मा मे वाङ्नाभिमतिगाः। मन्द्राभिभूतिः केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु, वसुमद्गणस्य रुद्रवद्गणस्यादित्यवद्गणस्य सोमदेवते मतिविदः प्रातस्सवनस्य माध्यन्दिनस्य सवनस्य तृतीयसवनस्य गायत्रच्छन्दसस्त्रिष्टुप्छन्दसो जगच्छन्दसोऽग्निहुत इन्द्रपीतस्य नराशंसपीतस्य पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामि' इति मन्त्रशेषसंग्रहः। सिद्धान्तकोटिसिध्यर्थं मन्त्रार्थान् विभज्य दर्शयति—कश्चिदिति। मन्द्रेत्यादिरन्तभागस्तृप्तिफलकभक्षणप्रकाशक इत्यर्थः। अन्य इति। भक्षेत्यादिः। सघ्यासमित्यन्तो ग्रहणस्य। नृचक्षसमित्यादिरवख्येषमित्यन्तोऽवेक्षणस्य। हिन्वेत्यादिरतिगा इत्यन्तस्सम्यग्जरणस्य प्रकाशक इत्यर्थः। मन्त्रार्थस्तु—हे भक्ष एहि मां विश प्रविश। किमर्थं तत्राह—दीर्घायुत्वाय, तथा शंतनुत्वाय सुखिदेहत्वाय। तथा रायस्पोषाय धनपोषणाय, वर्चसे, तेजसे सुप्रजास्त्वाय शुभसन्तानत्वाय। हे वसो निवासहेतो। पुरोवसो निवासहेतुषु अग्रगण्य एहि। मे मम हृदो हृदयस्य प्रियोऽसि। त्वा इति त्वाम्। अश्विनोर्देवभिषजोर्हस्ताभ्यां सघ्यासं गृह्णामि। वैद्यहस्तगृहीतस्य हितकारित्वात् हे देवरूप सोम नृचक्षसं नॄन् चष्टे पश्यति तादृशं, नृषु ख्यायत इति वा प्रसिद्धं त्वां सुचक्षाः शोभनो द्रष्टाहम् अवख्येषम् अवेक्षे। हे हरिवः हरितवर्ण सोम मे गात्राणि हिन्व प्रीणय। मे

सर्वोऽयं भक्षणे विनियोक्तव्यः ? उत ग्रहणादिष्वपि यथासामर्थ्यं विभज्य विनियोगः ? इति। तदर्थञ्च किमर्थप्राप्तेषु मन्त्रस्य लिङ्गं विनियोजकं न वा ? इति। तत्र—

सर्वस्य भक्षणाङ्गत्वं ग्रहणादेरचोदनात्।
अक्रत्वर्थो न मन्त्रस्य द्वारीभवितुमर्हति॥
भक्षानुवाकसंज्ञा च भक्षणाङ्गत्वबोधिनी।
सामर्थ्यं चास्ति मन्त्रस्य भक्षणे तद्विशेषणात्॥

यद्यपि चावख्येषमित्येवमादेरवेक्षणादौ मुख्यं सामर्थ्यं क्लृप्तं तद्विशेषितभक्षण-प्रतिपादने तु लक्षणया तदेकवाक्यत्ववशेन कल्प्यम्, दुर्बलञ्च वाक्यं लिङ्गात्, तथापि मुख्यस्य ग्रहणादेरर्थप्राप्तस्याचोदितत्वेनाक्रत्वर्थत्वात् तादर्थ्ये मन्त्रस्य क्रत्वपूर्वानुपयो-

---

गणान् पुत्रादीन् इन्द्रियाणि वा मा वितीतृषः तत्पानतृष्णारहितान् मा कुरु। शिवः कल्याण-रूपः सन् मे सप्तर्षीन् चक्षुर्नासाश्रोत्रद्वन्द्वगताः षट् आस्यगतश्चैक इति सप्त प्राणान् उपतिष्ठस्व भजस्व। मे वाचं नाभिश्चातिक्रम्य मा गा इति वमनविरेचनप्रतिषेधः। मन्द्रा हर्षहेतुः। अभिभूतिः विघ्नाभिभवकर्त्री। यज्ञानां केतुस्तद्वत् प्रकाशिका वाक्। सोमस्य जुषाणा सोमं सेव-माना तृप्यतु। अष्टसंख्यवसुमान् गणो यस्य। एवमेकादशरुद्रवान् द्वादशादित्यवांश्च गणो यस्य तद्गणगतस्येत्यर्थः। हे सोमदेव मतिविदः श्रद्धायुक्तयजमानबुद्धिवेत्तुस्तव। कीदृशस्य ? प्रातः सवनादित्रयसम्बन्धिनः, सवनत्रयस्य कीदृशस्य ? क्रमाद् गायत्रादिच्छन्दोयुक्तस्य। अग्नौ हूयते अत्र तादृशस्य। तथेन्द्रेण पीतः सोमो यत्र तादृशस्य। नरैः शस्यन्त इति नराशंसाः पितृविशे-षास्तैः पीतः सोमो यत्र तादृशस्य। अयमेवार्थः पितृपीतस्येत्यनेन स्पष्टीकृतः : पुनः कीदृशस्य सोमस्य ? मधुमतः तद्वदास्वाद्यस्य। उपहूतस्य अनुज्ञातस्य। उपहूतः अनुज्ञातोऽहं तव शेषमर्थात् भक्षयामीति। वसुमद्गणादेर्यथाक्रमं प्रातस्सवनादिनान्वयमाहुः। विभज्येति। तत्तदनुष्ठाने तत्तद्भागस्याङ्गत्वमित्यर्थः। अर्थप्राप्तेष्विति। अनवेक्षितस्य ग्रहणायोगादगृहीतस्य च भक्षणा-योगाद्भक्षणविधित एवार्थात्तयोः प्राप्तिः। तृप्तिसम्यग्जरणयोस्तु भक्षानुनिष्पादितयार्थात् प्राप्तिरि-ति। सर्वस्येति। मन्त्रस्येति शेषः। अचोदनात् अविधानात्। ततः किं तत्राह—अक्रत्वर्थ इति। क्रत्वनङ्गभूतो ग्रहणादिर्मन्त्रस्य क्रत्वङ्गतायां द्वारीभवितुं नार्हतीत्यर्थः। तथा च ग्रहणादि-प्रकाशनद्वारा क्रत्वङ्गता मन्त्रस्यानुपपन्नेत्यर्थः। एवञ्च क्रतुसम्बन्धाभावादाग्नेयीश्रुतिस्वारस्यभ-ङ्गवदिह लिङ्गस्वारस्यभङ्ग इति पूर्वपक्षकरणादातिदेशिकी सङ्गतिर्बोध्या। ग्रहणाङ्गत्वासम्भव-मात्रेण कथं भक्षणाङ्गत्वमत आह—भक्षेति। सर्वस्येत्यनुषज्यते। संज्ञा समाख्या। तथा हि सकलस्य भक्षप्रकाशकत्वमवगम्यते, एकदेशस्य तदङ्गीकारे च तदसामञ्जस्यापत्तिरिति भावः। ननु सकलमन्त्रस्य भक्षाप्रकाशकत्वात् कथं समाख्या ? कथञ्च तया विनियोगस्तत्राह—सामर्थ्य-ञ्चेति। भक्षणे भक्षणप्रकाशने। तद्विशेषणादिति। भावे ल्युट्। तस्य भक्षणस्य विशेष-

गितयानर्थक्यापत्तेरसम्भवति लिङ्गविनियोगे सवित्रादिपदानामिव लक्षणया वाक्यवशेन प्रागूर्ध्वकालवर्तिग्रहणादिविशिष्टचोदितभक्षणार्थता युक्ता—गृहीत्वावेक्ष्य सम्यग्जरणाय भक्षयामीति। एवञ्चानन्यविषयत्वाद्भक्षानुवाकसमाख्याप्युपपन्नतरा भवति। तस्मात् सर्वानुवाको भक्षाङ्गमेकं वाक्यमिति प्राप्ते ब्रूमः—

**ग्रहणादौ विभागेन विनियोगोऽस्य लिङ्गतः।**
**वाक्यसंज्ञे हि नेशाते कर्तुं लिङ्गस्य बाधनम्॥**
**ग्रहणादि च शास्त्रेण साक्षाद्यद्यप्यचोदितम्।**
**तथापि चोदितार्थेन कर्तव्यत्वात् प्रकाशते॥**

न ह्यसति ग्रहणादौ चोदितो भक्षश्शक्यते कर्तुमित्यर्थात्तदपि कर्तव्यम्, भक्षचोदनयैव वा चोदितमित्यपि शक्यं वक्तुम्। तच्चास्मृतमशक्यमनुष्ठातुमिति स्मारकापेक्षत्वाद्भक्षद्वारेण च क्रतूपयोगित्वाच्छक्नोति स्मारकं मन्त्रं ग्रहीतुम्। एवं सम्भवति लैङ्गिके विभज्यविनियोगे वाक्यसमाख्याभ्यामेकवाक्यत्वापादनेन भक्षार्थता सर्वस्य न युज्यते, समाख्या च भक्षणसम्बन्धमात्रं प्रतिपादयन्तो सम्बन्धस्य साक्षाद्वा ग्रहणादिद्वारेण वोभयथाप्युपपत्तेर्नानुपपन्ना। सम्यग्जरणपर्यन्तञ्च भक्षणं स्वरसतो लोकसिद्धं तादृशमेव च द्रवद्रव्यस्य भक्षणमिति सम्यग्जरणान्तमेव सोमप्रतिपत्त्यर्थतया विधीयते।

---

णात् ग्रहणाद्यर्थोपरक्ततया बोधनात्। सवित्रादीति। 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि' इति मन्त्रगतसवित्रादिपदानामिव विशिष्टनिर्वापप्रकाशनेन सामर्थ्यमित्यर्थः। लक्षणयेति। गृहीत्वा सम्यग्जरणायेति क्त्वाचतुर्थ्यर्थ्यलक्षणयेत्यर्थः। वाक्यवशेन 'भक्षेहि भक्षयामि' इत्युपक्रमोपसंहारयोरेकविषयत्ववशादेकवाक्यतावशेन। ऊर्ध्वकालेति जरणाभिप्रायम्। विशिष्टप्रकाशनं विवृणोति—गृहीत्वेति। उपपन्नतरेति। अन्यथा त्वेकदेशसम्बन्धाभिप्राया असमञ्जसा स्यादिति भावः। वाक्यसमाख्ययोर्लिंगाद्दुर्बलत्वात्तद्बाधेन 'स्योनं ते' मन्त्रवद्विभज्यविनियोग इति सिद्धान्तयति—ग्रहणादाविति। नेशाते। न समर्थे भवतः। यदुक्तं ग्रहणादेरविहितत्वेनानङ्गत्वात्तत्प्रकाशनानर्थक्यमिति तत्परिहरति—ग्रहणादि चेति। साक्षात् प्रत्यक्षेण शास्त्रेणेत्यन्वयः। चोदितार्थेन विहितभक्षार्थत्वेन। तथा च भक्षविध्यन्यथानुपपत्तिकल्पितेन विधिना ग्रहणादेरपि विधिरित्यर्थः। नन्वगृहीत्वापि भक्षणसम्भवान्न ग्रहणस्य नियतकरणमिति तत्प्रकाशकमन्त्रस्य नित्यत्वानुपपत्तिरत आह—भक्षेति। 'ऐन्द्रवायवं भक्षयति' इत्यादिभक्षविध्येकवाक्यता मन्त्रवर्णवशेन बाहुभ्यां गृहीत्वाऽवेक्ष्य सम्यग्जरणायेति पदकल्पनया नियमविधिस्वीकारान्न नित्यानित्यसंयोगविरोध इत्याशयः। न युज्यत इति। अदृष्टार्थतापत्तेरिति भावः। सम्यग्जरणस्य कृत्यसाध्यत्वेनाननुष्ठेयस्य स्मारकानपेक्षणात् कथं मन्त्रप्रकाश्यतेत्याशङ्क्याह-सम्यगिति।[1] स्वरसतः दृष्टार्थत्वात्। एवकारेण वमनविरेकयोर्दोषप्राय-

---

१. यद्यपि वमनाद्यर्थमपि लोके भक्षणमस्ति, तथापीह सोमवमनविरेकयोः प्रायश्चित्तविधानाद्भक्षणस्य देशविशेषनिक्षेपात्मकप्रतिपत्तिरूपत्वाच्च सम्यग्जरणपर्यन्तत्वमिति भावः।

अतो जरणमपि कर्तृव्यम् । तत्त्वासनविशेषादिव्यापारसाध्यमिति युक्तस्तत्र मन्त्रविनियोगः । तस्माद् विभज्यविनियोगः ॥ ९ ॥

१०

**सू० गुण**—मन्द्राभिभूतिरित्यादि तृप्यत्वित्यन्तं तृप्तौ विनियोक्तव्यम्? उत वसुमद्गणाद्येकं वाक्यं । वाक् तृप्यत्विति भक्षयामीत्येकं भक्षणं तृप्तिविशिष्टं प्रकाशयत्विति । पूर्ववल्लिगात्तृप्तिप्रकाशने प्राप्तेऽभिधीयते—

[1]तृप्तिर्भक्षानुनिष्पन्ना न व्यापारान्तरार्थिनी ।
तेन स्मृत्यनपेक्षत्वान्न मन्त्रोऽत्र प्रयुज्यते ॥

न हि तृप्ति प्रकाश्य किञ्चित् कर्तव्यम्, तत्रादृष्टार्थं तत् प्रकाशनं स्यात् । तृप्तिविशिष्टभक्षणप्रकाशने तुत्साहजननाद्दृष्टार्थता । तस्माल्लिगासम्भवाद् वाक्येन भक्षणार्थत्वम् ॥१०॥

११

**सू० लिङ्ग**—भक्षमन्त्र एवोदाहरणम् । तत्रेन्द्रपीतस्येति श्रूयते । सन्ति चैन्द्राण्यनैन्द्राणि च ज्योतिष्टोमे प्रदानानि । तत्र संशयः-किमैन्द्रेष्वेवायं मन्त्रः अनैन्द्राणाममन्त्रकं भक्षणम्? उत तेष्वप्यूहेन मन्त्रः, अथवा सर्वत्र यथाम्नातमेव मन्त्र इति । तदर्थञ्च किमैन्द्राणामनैन्द्राणाञ्च प्रकृतिविकारभावोऽस्ति न वेति । तथेदमपरमपि चिन्त्यम् इन्द्रपीतस्येति तत्पुरुषः सोमविशेषणम्-इन्द्रेण पोतस्य सत इति, किं वा बहुव्रीहिः सवनविशेषणम्-इन्द्रेण यस्मिन् पीतस्सोमस्तस्य प्रातस्सवनस्येति ।

---

श्रितान्मानं सूचितम् । स्वतः कृत्यसाध्यत्वेऽपि तदनुकूलव्यापारद्वारा कृतिसाध्यत्वान्नानुपपत्तिरित्याह—तत्त्विति । प्रयोजनं पूर्वपक्षे ग्रहणादेरनैयत्यम्, सिद्धान्ते तु नियतत्वमित्याद्यूह्यम् ॥९॥

गुण—सम्यग्जरणवत् तृप्तेरपि लिंगान्मन्द्रादितृप्यत्वन्तेन प्रकाश्यता प्राप्ताऽपोद्यत इत्यापवादिकी सङ्गतिरिति सूचयन्नाह—मन्द्रेति । न व्यापारान्तरेति । तृप्त्यनुकूलबहुभक्षणरूपव्यापारस्य 'अल्पं भक्षयति' इत्यनेन निषेधान्न सम्यग्जरणन्याय इत्यर्थः । अत एव न तृप्तिफलत्वमपि, येन स्वर्गस्य 'अगन्म सुवः' इत्यादिमन्त्रप्रकाश्यत्ववदस्य तद्भवेत् । सोमप्रतिपत्तिरेव फलत्वेन तृप्तेः फलत्वस्यासम्भवाच्च । किञ्च स्वर्गस्यादृष्टफलत्वात्तन्निश्चयरूपश्रद्धोत्पादनार्थं मन्त्रापेक्षा, इह तु दृष्टत्वान्न तदपेक्षेति वैषम्यमित्याशः । सूत्रार्थस्तु गुणस्य भक्षविशेषणीभूतः तृप्त्याख्यस्याभिधानान्मन्द्रादिर्भक्षयाम्यन्त एक एव मन्त्रस्स्यात् । कुतः? तयोर्भागयोर्विशिष्टार्थप्रतिपादकत्वादिति ॥ १० ॥

लिङ्ग—भक्षमन्त्रस्य लिङ्गम् किं सर्वत्र भक्षे, उत क्वचिदिति प्रसंगाच्चिन्त्यत इति दर्शयति—भक्षेति । प्रदानानि यागाः । ऊहेन इन्द्रपदस्थाने मित्रावरुणादिपदपाठरूपेण । तदर्थं-

---

१. तृप्तिर्यदि पुरुषप्रयत्नसाध्या स्यात्तदा तृप्तिप्रकाशनेन मन्त्रस्य तृप्तौ विनियोग उपपद्यते । न च पुरुषप्रयत्नसाध्या तृप्तिः, भक्षणे सति तस्याः स्वयमेवोत्पत्तेः । अतस्तृप्तिप्रकाशनस्यानर्थक्यान्न तत्र मन्त्रस्य विनियोग इत्यर्थः ।

तत्र तत्पुरुषे स्वार्थलाभस्स्यादुत्तरे पदे ।
बहुव्रीहौ द्वयोरन्यपरत्वाद् दुर्बलत्वधीः ॥
ऐन्द्रानैन्द्रप्रदानानि ह्यंशा एकस्य कर्मणः ।
प्रकृतिर्विकृतिश्चेष्टा न चात्मैवात्मनः क्वचित् ॥

तेन समासबलीयस्त्वेन तत्पुरुषाश्रयणाद्यथाम्नातमन्त्रस्यानैन्द्रेष्वसामर्थ्यात्सिमाने च कर्मणि प्रकृतिविकारभावासम्भवेनोहायोगादनैन्द्राणाममन्त्रकं भक्षणमित्येकः पक्षः, अपरस्तु सत्यपि कर्मैकत्वे प्रदानानां भिन्नत्वादविरुद्धः प्रकृतिविकारभावः । मानग्रहणमन्त्राच्चैन्द्रप्रदानविषयः सोमः । 'इन्द्राय वसुमते सोमं गृह्णामी' त्यादयो मन्त्रा नानैन्द्रप्रदानेषु समर्थाः । भवति चाङ्गवशेन प्रधानस्य विषयव्यवस्था, यथाहवनीयादिवशेनाग्निहोत्रादेराहिताग्निविषयत्वम् । अतो यत्र मन्त्रस्तत्र मानग्रहणे, यत्र ते तत्र सोमः, यत्र सोमस्तत्राभिषवादयो भक्षस्तन्मन्त्रश्च । प्रदानान्तराणि त्वधर्मकाणि चोदकेनैतान् धर्मानाहरन्ति । तत्र देवताविशिष्टभक्षप्रकाशकत्वेनोपकृतवतो भक्षमन्त्रस्य कार्यवशेन विकृतिमागतस्य यथादेवतं विकारो विज्ञायते । तस्मादनैन्द्रेष्वप्यूहेन मन्त्रवद् भक्षणम् । एवमूहेऽवस्थितमधिकरणमपरिसमाप्तं कृत्वान्तरा तत्प्रसङ्गादूहविषयश्चिन्त्यते ॥ ११ ॥

---

न्वेति । ऊहानूहपक्षसिध्यर्थमित्यर्थः । प्रकृतिविकारभावे ह्यतिदेशप्राप्तस्य विकृतावूहस्यात्तदभावे तु प्रकृतौ यत्र सामर्थ्यं तत्रैव मन्त्रः, अन्यत्रामन्त्रकं भक्षणम् । सर्वत्रासामर्थ्ये सर्वत्र समन्त्रकं वेति स्यादिति भावः । तथेदमिति । तत्पुरुषे ऊहामन्त्रकपक्षौ, बहुव्रीहौ तु सर्वेषां समन्त्रकं भक्षणमिति पक्षसिद्धिः । आद्यपक्षमुपपादयति—तत्रेति । स्वार्थलाभः कार्यान्वयिप्रधानभूतार्थाभिधानलाभः । द्वयोः पूर्वोत्तरपदयोः । अन्यपरत्वात् स्वार्थभिन्नार्थपरत्वात् । एवं सिद्धान्तपक्षं निराकृत्य ऊहपक्षं निराकर्तुमाह—ऐन्द्रेति । अंशा अभ्यासाः । तथा चांशत्वेन तुल्यत्वान्न प्रकृतिविकारभाव इति भावः । तर्हि अंशी प्रकृतिः, अंशा विकृतयस्सन्त्विति शङ्कामपाकरोति—न चात्मैवेति । अंशव्यतिरिक्तस्यांशिनोऽभावादित्यर्थः । तुल्यत्वेन प्रकृतिविकृतिभावासम्भवमुक्तं निरस्यति—मानेति । 'इन्द्राय त्वा वृत्रघ्न' इत्यादिर्माननमन्त्रः । मानं 'दशमुष्टिर्मिमीत' इति । तथा चैन्द्रलिङ्गान्मन्त्रस्य तत्प्रकाश्यसोमग्रहणादिकमपीन्द्रयागविषयमेवेति सोमसंस्कारादिसकलेतिकर्तव्यतायोगादैन्द्रं प्रदानं प्रकृतिरिति भावः । आहिताग्नीति । 'वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः' इति त्रैवर्णिकविषयत्वमित्यर्थः । चोदकेन एककर्मांशत्वरूपसादृश्यकल्पितेनातिदेशेन । उपकृतवत इति । प्रकृताविति शेषः । कार्यं देवताविशिष्टभक्षप्रकाशनरूपं प्रयोजनम् । विकारः ऊहः । अन्तरा चिन्तान्तरकरणे सङ्गतिलाभरूपं बीजमाह—तत्प्रसङ्गादिति ।[1] सूत्रममन्त्रकत्वपक्षसाधकं स्पष्टार्थम् ॥ ११ ॥

---

१ ऊहशास्त्रेर्लिङ्गविनियोगविषयत्वाभावादत्रासङ्गतिशङ्कायां तत्परिहारार्थं पुनरभ्युन्नीतयागादिषु पूर्वशेषसहितस्य विनियोगः, न तु पश्चाद्गृहीतमात्रस्य, संसर्गिद्रव्ये तन्मात्रस्य निष्कर्षासम्भवादित्येवं सामर्थ्येन विनियोगपर्यवसायिन्यूहकोटिरिति द्योतनायान्तरोहविषयचिन्तेति ध्येयम् ।

## १२

**सू० पुनः**—सवनमुखीयेषु चमसेष्वैन्द्रेषु सर्वेषु हुतेषु ये होत्रकाणां मैत्रावरुणादीनां चमसाः, तेष्वभक्षितेषु सशेषेष्वेव पुनस्सोमोऽभ्युन्नीय देवतान्तरेभ्यो मित्रावरुणादिभ्यो हुत्वा भक्ष्यते। तस्मिन् भक्ष्यमाणे भवति संशयः–किं पूर्वप्रकृतप्रदाने देवताभूत इन्द्रोऽप्युपलक्षणीयः ? इन्द्रमित्रावरुणपीतस्येति ? किं वा नेति ? तदर्थञ्च किम् ऐन्द्रोऽपि शेषो देवतान्तरसम्बन्धी जातः, न वेति ? तत्रोन्नयनकाले देवतान्तरसङ्कल्पो न क्रियते। यदि क्रियेत तत उन्नीयमानस्यैव देवतान्तरसम्बन्धः, न पूर्वस्थितस्य शेषस्येति। तस्य पूर्वदेवतासम्बन्धो नापेयात्। उन्नयनमात्रन्तु तदा क्रियते, देवतानिर्देशस्तु प्रदानकाले। तदा च पूर्वशेषस्याभ्युन्नीयमानस्य चोभयस्य चमसस्थत्वेन देवतान्तरसम्बन्धात्पूर्वदेवतापेतसम्बन्धत्वान्नोपलक्षणीया इति प्राप्ते ब्रूमः–यद्यप्युन्नयनकाले न देवतासङ्कल्पः, तथाप्युन्नयनं तावत् करिष्यमाणयागार्थमित्यसन्दिग्धम्। अतश्चाभ्युन्नीतस्य करिष्यमाणयागार्थतावगता न पूर्वशेषस्य, प्रमाणाभावात्। यश्च करिष्यमाणयागार्थः, तस्यैव तदीयदेवतासम्बन्धः, नान्यस्य। तस्मात् पूर्वशेषस्य देवतासम्बन्धानपायात्साप्युपलक्षणीया॥ १२॥

## १३

**सू० पात्नी**—द्विदैवत्यानामैन्द्रवायवादीनां शेषा आदित्यस्थालीमागत्य ततोऽप्याग्रयणस्थालीमागच्छन्ति, पात्नीवतश्चाग्रयणपात्राद् गृह्यते। तस्मिन् भक्ष्यमाणे भवति संशयः–किमिन्द्रवाय्वादयोऽप्युपलक्षणीयाः ? उत पत्नीवानेव ? इति। तदर्थञ्च किं द्विदैवत्यशेषोऽपीन्द्रवाय्वादिभ्योऽपनीय पत्नीवते गृहीतः ? किं वा नेति ? तत्राग्रयणमात्रस्य पात्नीवतत्वं नान्यस्य तत्संसृष्टस्यापि। तस्माद् द्विदेवत्यशेषस्यापात्नीवतस्य पूर्वदेवतासम्बन्धानपायादिन्द्रवाय्वादीनामप्युपलक्षणम्। नैतदेवम्; न ह्यत्राग्रयणं पात्नी-

---

पुनः—पुनरभ्युन्नीतेष्वित्युदाहरणार्थं दर्शयति–सवनेति। सवनसम्बन्धिचमसेषु प्रथमं हूयमाना नव सवनमुखीया इन्द्रदैवत्यास्तेषु च पञ्च चमसा मैत्रावरुणब्राह्मणाच्छंसिनेष्टृपोत्राग्नीध्राख्यहोत्रकसम्बन्धिनः। तेषु इन्द्राय हुतेषु अभक्षितेष्वेव सशेषेषु द्रोणकलशात्सोमरसमानीय मित्रावरुणादिदेवतान्तरार्थं हुत्वा तेषु शेषभूतः सोमरसो भक्ष्यत इत्यर्थः। उपलक्षणीयः पानकर्तृत्वेन निर्देष्टव्यः। तदर्थञ्चेति। आद्यपक्षे पूर्वदेवतासम्बन्धस्यापायादनिर्देशः, द्वितीये निर्देश इति। प्रमाणाभावादित्युपलक्षणम्। विनियुक्तविनियोगासम्भवादित्यपि ज्ञेयम्। सूत्रं स्पष्टम्॥१२॥

पात्नी–शेषाः हुतसोमरसशेषाः। आदित्येति। 'आदित्यस्थाल्यां सम्पातमवनयती' ति वचनादित्यर्थः। ततोऽपीति। तृतीयसवने आदित्यस्थालीतः आग्रयणस्थालीं प्रत्यायान्तीत्यर्थः। पात्नीवतश्चेति। आग्रयणाद् गृह्यते यः स पत्नीवद्देवत्ययागार्थ इत्यर्थः। तत्संसृष्टमिति।

वतं श्रूयते। 'पात्नीवतमाग्रयणाद् गृह्णाती' त्यपादानमात्रमाग्रयणम्। अतो यत्ततोऽपेतं तत्पात्नीवतम्, आग्रयणांशवच्चानाग्रयणमपि तत्संसृष्टं द्विदेवत्यं ततोऽपेतमिति पात्नीवतमेव। अतः पूर्वदेवतासम्बन्धापेतस्स भूतपूर्वत्वादुपलक्ष्येत। न च प्रकृतौ भूतपूर्वोपलक्षणं कृतमित्यनुपलक्षणमिन्द्रवाय्वादीनाम्॥ १३॥

## १४

सू० त्वष्टा—तस्मिन्नेव पात्नीवते आध्वर्यवो होममन्त्रः 'अग्नाइ३ पत्नीवान्सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहे' ति। तत्र संशयः—किं त्वष्टापि देवता साऽप्युपलक्षयितव्या? उत न देवता नोपलक्षयितव्या? इति। तत्र मन्त्रवर्णेनाग्नेः पत्नीवतस्त्वष्ट्रा सह पानं गम्यते। न च तदुपपद्यते, यदि त्वष्टा न पिबेत्। न चादेवतायाः पानं सम्भवतीति त्वष्टाऽपि देवतोपलक्षयितव्येति प्राप्ते ब्रूमः—शब्दतस्तावदग्नेरेव पानं गम्यते, त्वष्टुस्सहभावमात्रम्। न च सहभावस्तत्क्रियासम्बन्धाव्यभिचारी, विनापि तेन दर्शनात् 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी'ति। यद्यपि च पानं स्यात्तथापि देवतात्वमप्रमाणकम्। न हि देवता पिबति, उद्देशमात्रलक्षणत्वात्तस्याः। विस्पष्टञ्च चोदनायां तद्धितेन निरपेक्षस्य पत्नीवतो देवतात्वं गम्यमानं न मान्त्रवर्णिक्या देवताया बाधविकल्पसमुच्चयान् सहते। अतो नोपलक्षणीयस्त्वष्टा॥ १४॥

## १५

सू० त्रिंशच्च—तस्मिन्नेव पात्नीवते याज्यामन्त्रः 'एभिरग्ने सरथं याह्यर्वाङ्ना-

---

वृक्षात् पर्णं पततीति यथा वृक्षसंसृष्टपर्णपतनेऽपि प्रयुज्यते, न तु तदवयवपर्णपतन एव, तथात्रापीति भावः। प्रकृतौ ऐन्द्रप्रदाने। सूत्रं स्पष्टार्थम्॥ १३॥

त्वष्टा—आध्वर्यवः अध्वर्युप्रयोज्यः। अग्नाई इति सम्बोधनम्। सजूरिति। त्वष्ट्रा देवेन सहेत्यर्थः। विनापीति। क्रियासम्बन्धं विनापीत्यर्थः। सहैवेति। दशभिः पुत्रैः सहिताया गर्दभ्या एव भारवहनेऽन्वयः, न तु पुत्राणाम्, तथेहापीत्यर्थः। उद्देशेति। उद्देशश्चतुर्थ्यन्तशब्दनिर्देशः। मात्रपदेन तद्व्यतिरिक्तहविर्भावत्वव्यावृत्तिः। ननु मन्त्रवर्णोक्तपानस्य देवतासम्बन्धोपलक्षणत्वं विना निरालम्बनत्वापत्तेर्देवतात्वगमकता भविष्यतीत्याशङ्क्याह-विस्पष्टञ्चेति। चोदनायां 'पात्नीवतं गृह्णाती' विधौ। बाधेति। मन्त्रवर्णेन त्वष्टृसहितस्य पत्नीवतो देवतात्वे निरपेक्षपत्नीवद्दैवत्यत्वस्य बाधः। तद्धितेन पत्नीवत इव मन्त्रेण त्वष्टुरपि देवतात्वकल्पने विकल्पः। अथवा समुच्चय इत्यर्थः। मन्त्रवर्णस्य तद्धितापेक्षया दुर्बलत्वात् नैतत्सम्भव इत्याशयः। न चैवं सत्यग्नेरपि देवतात्वं न स्यादिति शङ्क्यम्। पत्नीवच्छब्दस्य यौगिकत्वेन विशेष्यं प्रति नित्यसापेक्षतयाग्नेर्विशेष्यत्वेनान्वयेऽपि तद्धिताविरोधात्। तस्मात्त्वष्ट्रा सहेति स्तुतिमात्रार्थमिति। प्रयोजनं स्पष्टं सूत्रञ्च॥ १४॥

त्रिंशच्च—एभिरिति। आ एभिरिति छेदः। आङश्च याहीत्यनेनान्वयः। हे अग्ने! त्वम् एभिरुत्तरार्धे वक्ष्यमाणैस्त्रयस्त्रिंशद्देवैस्सह सरथं समानरथं यथा स्यात्तथा आयाहि नाना-

नारथं वा विभवो ह्यश्वाः, पत्नीवतस्त्रिशतं त्रींश्च देवाननुष्वधमावह मादयस्वे' ति। तत्र संशयः-किं त्रयस्त्रिंशदुपलक्षयितव्या उत नेति। पूर्वत्राग्नेरेव पानं त्वष्टुस्तु सहत्व-मात्रमित्यदेवतात्वमित्युक्तम्। इह तु विपरीतम्, अग्नेर्मादयितृत्वादितरे माद्यन्तीति गम्यते। अतस्तेषामेव देवतात्वं चोदनया च पत्नीवन्मात्रस्य देवतात्वमुक्तं न तद्विशेषस्य। तत्र यथाग्नेः पत्नीवन्निति मन्त्रगतसामानाधिकरण्यादग्नेः पत्नीवत्त्वेन देवतात्वमेवं त्रयस्त्रिंशतोऽपि देवतानां पत्नीवतस्त्रिशतं त्रींश्च देवानिति सामानाधिकरण्यात्, असति च प्रमाणान्तरे द्विवचनबहुवचनान्तानां वृत्तिर्नेष्यते। अस्ति चेह प्रमाणं मन्त्रगतसामानाधिकरण्यम्। अतः पत्नीवन्तो देवता अस्येति चोदनार्थो भविष्यति। तस्मात् त्रयस्त्रिंशदुपलक्षणीया इति प्राप्ते ब्रूमः-यत एवाग्नेर्मादयितृत्वमत एव तस्यैव देवतात्वं मन्त्रवर्णाद् गम्यते। न ह्यसौ यजमानस्य द्रव्येण त्रयस्त्रिंशतं मादयितुं शक्नुयात्, न यदि यजमानोऽग्नये दद्यात्। अतोऽग्नेरेव यजमानसंकल्पविषयत्वाद्देवतात्वमितरे त्वग्निदत्तेन कामं माद्यन्तु, न तु यजमानस्तेभ्यो ददातीत्यदेवतात्वम्। एवञ्च यद्यपि पत्नीवन्तस्ते भवेयुस्तथापि तेषां मन्त्रवर्णाद्देवतात्वमनवगतमिति प्रमाणान्तराभावान्न चोदनायां बहुवचनान्तेन विग्रह इत्येक एवाग्निः पत्नीवानिह देवतेति तस्यैवोपलक्षणम्॥ १५॥

## १६

सू० वषट्—अनुवषट्कारदेवताया अग्नेरसंदिग्धं देवतात्वमित्युपलक्षणं, प्रकृतौ त्वसौ विद्यमानापि नोपलक्षिता, प्रधानदेवतेव त्विन्द्र उपलक्षितः। विकृतावपि तत्कार्यापन्ना प्रधानदेवतैवोपलक्षणीया नानुवषट्कारदेवतेति॥ १६॥

---

रथं यथा स्यात्तथा वा तेभ्यः अर्वाक् पूर्वं आयाहि। हि यतः तवाश्वाः विभवः समर्थाः। आगत्य च त्रिशतं त्रींश्च त्रयस्त्रिंशत इत्यर्थः। पत्नीवतो देवान्। स्वधां सोमाख्यमन्नमनु लक्षीकृत्यावह ततो मादयस्व तर्पयेत्यर्थः। आतिदेशिकसङ्गत्या विचारे बीजभूतामधिकाशङ्कां दर्शयति पूर्वत्रेति। मन्त्रवर्णसामाधिकरण्यात्। मन्त्रवर्णे सामानाधिकरण्यनिर्देशाद् पत्नीवच्छब्दस्य विशेष्यापेक्षायाम् 'अग्नाई' इति मन्नतेणाग्नेरिवानेन मन्त्रेण त्रयस्त्रिंशद्देवानानपि पत्नीवत्त्वेन देवतात्वेन कश्चिद्विरोध इति भावः। त्रयस्त्रिंशद्देवाश्च श्रुतावुक्ताः-अष्टौ वसवः, एकादश रुद्राः, द्वादशादित्याः, प्रजापतिश्च वषट्कारश्चेति। एवञ्चेति। न हि पत्नीवन्मात्रस्य देवातात्वं किन्तु यजमानकर्तृकत्यागोद्दश्यत्वेन। तच्चाग्नेरेव अग्नाईत्वाध्वर्यत्रमन्त्रे पानावगमात्। याज्यामन्त्रेऽपि साक्षादावाहनोक्तेरिति भावः। प्रयोजनं स्पष्टम्। त्वष्टृवत् त्रिशत् त्रयस्त्रिंशदपि नोपलक्षणीयाः, कुतः, परार्थत्वात्। अग्निस्तुत्यर्थत्वात्। ईदृशोऽग्निर्यः स्वीयभागेनान्यानपि तर्पयतीति च सूत्रार्थः॥ १५॥

वषट्—अनुवषट्कारेति। 'सोमस्याग्ने वीहीत्यनुयजति' इत्यनेन प्रधानानन्तरं यागान्तरं विहितमनुवषट्कारः। तत्र चाग्निर्मान्त्रवर्णिकी देवता। हे अग्ने सोमस्य शेषं वीहि भक्षयेति मन्त्रलिङ्गात्। प्रकृतौ। ऐन्द्रप्रदाने। तत्कार्यापन्ना प्रधानभूतसोमयागापूर्वसाधनीभूता।

१७

सू० छन्द—एवमूहं विचार्याधुना स्थितादुत्तरमुच्यते। नास्त्यूहः, समानविधानत्वात्प्रदानानाम्, न हि ऐन्द्रप्रदानविषयस्सोमः। स हि 'सोमेन यजेते' ति कर्मोत्पत्तौ श्रुतः कर्माङ्गं, न प्रदानविशेषस्य। तदेव सर्वप्रदानेष्वभ्यस्यत इति सर्वाणि समानविधानानि। मानग्रहणमन्त्रौ तु लिङ्गादैन्द्रप्रदानविषयौ कामं भवेतां न तु सोमः। स ह्युत्पत्तावेव श्रुत्या कर्मणा सम्बद्धो नाभ्यासविशेषविषयश्शक्यः कर्तुम्। अतस्समानविधानत्वादनूहः। भक्षमन्त्रस्तु लिङ्गादैन्द्रेष्वेवेत्यनैन्द्राणाममन्त्रकमेव भक्षणमिति। एवं प्रथमपक्ष एव स्थितमधिकरणम्। एवं स्थिते पुनः कृत्वा चिन्ता॥ १७॥

१८

सू० ऐन्द्र—यदा नैन्द्राणाममन्त्रकं भक्षणं तदा यत्रान्यसहित इन्द्रो देवता यथैन्द्राग्नादिषु, तत्र मन्त्रो भवति नेति विचारः। तदर्थञ्च किमत्र देवताव्यापारः पानमुपलक्षणम्? उत यजमानव्यापारो दानमिति। तत्र पीतस्येति पानश्रवणात्तदेवोपलक्षणं मिश्रोद्देशेनापि दत्तः सोमोंऽशतः प्रत्येकमुभाभ्यां पीयते। तेन पानेऽन्योन्यनिरपेक्षत्वाद् द्वाभ्यामपि पीत इन्द्रपीत इति शक्यं वक्तुं डित्थमातृवत्।

**तस्मान्मन्त्रवदेव स्यादैन्द्राग्नादिषु भक्षणम्।**
**स्यादेवं यदि पानं स्यात्तत्तु नास्तीति वक्ष्यते॥**

तेन देवताधिकरणन्यायेन पानाभावात् पिबतिरत्र दानलक्षणार्थः। दानञ्च मिश्रविषयं, नान्यतरेण व्यपदेष्टुं शक्यमिति चतुर्धाकरणवदैन्द्राग्नादिषु मन्त्राभावः॥ १८॥

---

सूत्रार्थस्तु—वषट्कारशब्देनानुवषट्कारः, तेन च तद्देवता लक्षितलक्षणयोच्यते। सा नोपलक्षणीया अध्वर्य्वादिपानकर्तृवदिति॥ १६॥

छन्द :—स्थितादिति। अनैन्द्रेषहेन मन्त्र इति स्थितात्पक्षादित्यर्थः। सूत्रार्थस्तु—सर्वगामित्वात् धर्माणां सर्वप्रदानसाधारणत्वादनूह इति तुशब्दार्थः। कथं तर्हि षोडशिसंस्थायाम् 'अनुष्टुप्छन्दस इति भक्षमन्त्रं नमति' इत्यन्यथाभावरूपनमनोक्तिस्तत्राह – छन्दःप्रतिषेध इति। षोडशिनस्तृतीयसवनस्थत्वेन जगतच्छन्दस इति प्राप्तौ तत्प्रतिसेधरूपमप्राप्तमेवानुष्टुप्छन्दस इत्यन्यथाभावरूपं नमनं विधीयत इति॥ ७॥

ऐन्द्र—उपलक्षणं सोमविशेषणतया प्रकाश्यम्। दानमितीति। तथा चेन्द्रोद्देशेन त्यक्तस्येतीन्द्रपीतपदार्थ इत्यर्थः। डित्थेति। डित्थडवित्थयोर्मातरि डित्थमातेति प्रयोगवदित्यर्थः। मातृत्ववत्पानस्यापि प्रत्येकपर्याप्तित्वादिति भावः। वक्ष्यत इति। नवम इत्यर्थः। मिश्रविषयम् मिलितोद्देश्यकम्। अन्यतरेण एकैकेन। चतुर्धेति। 'आग्नेयं चतुर्धा करोति' ति विहितं चतुर्धाकरणमग्नीषोमीयपुरोडाशे यथा न भवति तथेत्यर्थः। सूत्रप्रयोजने स्पष्टे॥ १८॥

१९

सू० छन्द :—तत्रैव मन्त्रे 'गायत्रच्छन्दस' इति श्रूयते। तत्र विचारः—किं यत्र प्रदाने गायत्रमेव छन्दस्तत्र स्यात्? उत यत्र छन्दोऽन्तरमपीति। पूर्ववत्केवलं गायत्रच्छन्दो-विषयत्वं मन्वानस्योत्तरम्—केवलगायत्रच्छन्दःप्रदानं न विद्यते। सर्वत्र बहुमन्त्रसमवायेन छन्दोऽन्तराणामवश्यंभावात्। अतस्सापेक्षत्वेऽप्यत्र नित्यसापेक्षत्वात्समासोपपत्तिः। न चात्र सापेक्षत्वमपि, सर्वमन्त्राणामन्योन्यनिरपेक्षाणामेव कर्मसम्बन्धात्। अतस्सत्यपि छन्दोऽन्तरे गायत्रच्छन्दसस्तदनपेक्षत्वात्पूर्वाधिकरणपूर्वपक्षवत्समासाविधानान्नानाच्छन्द-स्कोऽपि भवति मन्त्रः॥ १९॥

२०

सू० सर्वेषां—स्थितादुत्तरम्—

यदि तत्पुरुषोऽयं स्यात्स्यादनैन्द्रेष्वमन्त्रकम्।
भक्षणं लक्षणादोषान्नायं तत्पुरुषो मतः॥

तत्पुरुषत्वे हि सम्बुध्यन्तेन सोमशब्देन ते इति प्रत्यक्षविषयेण युष्मच्छब्देन च निर्दिष्टस्य हुतशिष्टस्य पात्रस्थस्य सोमस्य भक्षणार्थमुद्धृतस्यैन्द्रपीतशब्द इन्द्राय दत्त-स्येत्येवं विशेषणं स्यात्। न चासाविन्द्राय दत्तः। पूर्वसङ्कल्पितो हि हुताहुतसमुदाय-स्तस्मै दत्तः, तदवयवस्त्वयमुपचारादेवाभिधीयते, न चासौ युक्तः। तस्माद्बहुव्रीहिः— इन्द्रेण यस्मिन्सवने पीतस्सोमः, तस्य सवनस्य सम्बन्धी यस्सोमः, तस्य भक्षयामीति। सर्वे च सोमा एवंविधसवनसम्बन्धिन इति सर्वेषां यथाम्नातमन्त्रकं भक्षणम्॥ २०॥

इति शास्त्रदीपिकायां तृतीयाध्यायस्य द्वितीयः पादः॥ २॥

---

छन्द :—केवलेति। केवलं गायत्रं छन्दो यत्र तादृशं प्रदानं सोमयागः। नित्येति। नियमेन सापेक्षस्यैव यागरूपान्यपदार्थसम्बन्धित्वादित्यर्थः। निरपेक्षाणामिति। स्वस्वावान्तर-कार्ये इत्यर्थः। सूत्रप्रयोजने स्पष्टे॥ १९॥

सर्वे० स्थितादिति। अनैन्द्राणाममन्त्रकं भक्षणमिति स्थितात्पक्षादुत्तरं सिद्धान्त इत्यर्थः। भक्षणमित्यस्य पूर्वार्धेनान्वयः। लक्षणादोषमेवोपपादयति—तत्पुरुषेत्यादिना। तथा च दत्तार्थकपीतपदेन तदवयवलक्षणा तत्पुरुषेऽधिकेति बहुव्रीहिरेव प्रकरणानुग्रहात्स्वरानुग्रहाच्च स्वीकार्य इत्युपसंहरति—तस्मादिति। सूत्रार्थस्तु—सर्वेषामैन्द्रानैन्द्रभक्षाणामैकमन्त्र्यम् एकरूप-मन्त्रवत्त्वं न त्वनैन्द्राणाममन्त्रकत्वं विकृतमन्त्रत्वं वेति तुशब्दार्थः। हि यस्मात्पानस्य लक्षणा-रूपभक्तिसम्बन्धाद्दानलक्षकत्वेन तस्य च तत्पुरुषे बाधाद् बहुव्रीहिणा सवनस्याधिकार इन्द्रपीत-पदेनेति। ऐतिशायनग्रहणं पूजार्थम्॥ २०॥

इति श्रीमत्तत्सद्रामभट्टात्मजवैद्यनाथकृतायां शास्त्रदीपिकाटीकायां
प्रभाख्यायां तृतीयाध्यायस्य द्वितीयः पादः॥

## अथ तृतीयाध्यायस्य तृतीयः पादः

### १

सू० श्रुतेः—पूर्वयोः पादयोः श्रुतिलिङ्गविनियोगौ चिन्तितौ। इदानीं वाक्यविनियोगश्चिन्त्यते। 'प्रजापतिरकामयत प्रजास्सृजेयेति स तपोऽतप्यत तस्मात्तेपानात्त्रयो देवा असृज्यन्ताग्निर्वायुरादित्यः, ते तपोऽतप्यन्त तेभ्यस्तेपानेभ्यस्त्रयो वेदा असृज्यन्ताग्नेः ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेद' इत्युपक्रम्य श्रूयते ज्योतिष्टोमे—'तस्मादुच्चैर् ऋचा क्रियते, उपांशु यजुषा, उच्चैस्साम्नेति'। तत्र संशयः—किमुच्चैष्ट्वादय ऋगादिजातानां धर्माः, मन्त्राणामित्यर्थः,। ऋचा मन्त्रेणोच्चैरिति ? किं वा वेदधर्माः, ऋग्वेदेनोच्चैरिति ? उपक्रमे वेदश्रवणादुपसंहारे चर्गादिश्रवणात् संशयः। वेदशब्दो हि मन्त्रब्राह्मणसमुदायात्मनो ग्रन्थविशेषस्य वक्ता नैकस्य मन्त्रवाक्यस्य ब्राह्मणवाक्यस्य वा वाचकः, प्रयोगाभावात्। न ह्येकं द्वे त्रीणि वाक्यान्यधीत्य 'वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम्' इत्येतच्छास्त्रार्थमनुष्ठितं मन्यन्ते। तस्मात्समु-

---

श्रुते :—इह विचार्यस्य वाक्यप्रमाणकविनियोगस्य श्रुतिलिङ्गोपजीवकत्वात्तद्विचारानन्तर्यमिति सूचनायाह—पूर्वेति। वाक्येति च प्रकरणादित्रयोपलक्षणम्, तेषामपीह विचार्यत्वात्। तत्र वाक्यं नानाङ्गत्वकल्पनानुकूलपदसमभिव्याहारः। यथा 'उच्चैर् ऋचा क्रियत' इत्यादावुच्चैस्त्वादेर्ऋग्वेदविहितकर्माङ्गत्वकल्पनानुकूल उपक्रमगतो वेदपदसमभिव्याहारः। तेन च मन्त्रद्वारकं लिङ्गमानर्थक्यतदङ्गन्यायेन कल्प्यत इति ज्ञेयम्। लिङ्गप्रकरणादावशब्दरूपे च नातिप्रसङ्गः। श्रुतौ तु शब्दशक्त्यैवाङ्गत्वावगमकत्वान्न तत्कल्पनेति तद्वारणमिति। तेपानादिति। तपःकुर्वाणादित्यर्थः। सूत्रस्थजातपदं मन्त्रार्थकमित्याह—मन्त्रेति। मन्त्रकार्यसम्बन्धिनो धर्मा इत्यर्थः। वेदधर्माः वेदविहितकर्मधर्माः। पूर्वपक्षवचनव्यक्तिं दर्शयति—ऋचेति। ऋङ्मन्त्रेण यत्कार्यं तदुच्चैरित्यर्थः। सिद्धान्ते वाक्यार्थमाह—ऋगिति[1]। ऋग्वेदेन यत्क्रियते विधीयते तदुच्चैरित्यर्थः। विधेस्स्पष्टत्वात्संशयबीजमाह—उपक्रम इति। तथा चोपक्रमेणैकवाक्यत्वावश्यंभावे तद्गतवेदपदाद्विप्रतिपत्तिरित्यर्थः। एकैकऋगादिमन्त्रेऽपि वेदपदस्याविरोधान्न विप्रतिपत्तिरित्याशङ्क्याह—वेदशब्दो हीति। न चैवं सति द्वित्रिवाक्यश्रवणे शूद्रस्य दोषो न स्यादिति शङ्क्यम्, उपादेयत्वस्थले वेदात्वावच्छिन्नावयविनस्तदाच्छिप्तावयवानाञ्च साधनतयावगतानां साहित्यस्य विवक्षितत्वेऽपि निषेधेऽनुवाद्यतया साहित्याविवक्षणेन वेदावयवश्रवणेऽपि दोषोपपत्तेः। अतएव वृन्ताकदानेऽवयविनियमः, तद्भक्षणनिषेधेऽवयवमात्रस्यापि वर्जनमुपप-

---

१. ऋग्वेदेन यत्क्रियते विधीयते तदुच्चैस्त्वगुणकं कर्तव्यमित्युक्ते कर्मणस्साक्षादुच्चैस्त्वानन्वयादृग्वेदविहितकर्माङ्गमन्त्रेषूच्चैस्त्वं पर्यवस्यतीति भावः।

दायो वेदः। न तु वेदयतीति व्युत्पत्त्या एकैकमेव वाक्यं वेद इति मूर्खप्रलपितमेतदनुसर्तव्यम्। ऋगादिशब्दास्तु मन्त्रवचनाः स्थापिताः, तेनोपक्रमोपसंहारयोर्विप्रतिपत्तेरेकवाक्यत्वाच्चोभयोरेकविषयत्वेऽवश्यंभाविनि किमुपसंहारस्थविध्युद्देशवशादुपक्रमस्थार्थवादगतो वेदशब्दो वेदैकदेशमन्त्रपरो भवतु? किं वोपक्रमगतार्थवादवशादुपसंहारस्थमृगादिपदमृगादिप्रायवेदपरं भवत्विति संशयः। तत्र–

गुणात्वादनुवादत्वादर्थवादस्य लक्षणा।
मुख्यस्यापि प्रधानत्वादप्राप्तविषयत्वतः॥
विध्युद्देशो जघन्योऽपि स्वार्थहानिं न गच्छति।
मुख्यापि दीक्षणीया हि लभते न स्वधर्मताम्॥
जघन्यस्यापि सोमस्य प्रधानत्वात् स्वधर्मता।
वक्ष्यते तद्वदत्रापि विध्युद्देशस्य सा भवेत्॥

प्रधानत्वादप्राप्तविषयत्वाच्च विध्युद्देशे यथाश्रुतादन्यथात्वमप्रामाणिकम्, अर्थवादस्तु प्रमाणान्तरप्राप्तार्थत्वात्तद्वशेन लक्षणयापि नीयमानो न दुष्यतीति जाताधिकारा उच्चैस्त्वादय इति प्राप्ते ब्रूमः–

लब्धात्मनः प्रधानस्य बलीयस्त्वं गुणाद्भवेत्।
विध्युद्देशस्त्वलब्धात्मा लब्धात्मानं न बाधते॥

'य इष्ट्या पशुना सोमेन वा यजेते' ति वचनात् सोमस्यापि कालो न लब्धात्मा,

---

न्नमित्यूह्यम्। मूर्खः[1] प्राभाकरोऽभिमतः। स्थापिता इति। 'तेषामृग्यत्रार्थवशेन पादव्यवस्था' इति सूत्र इत्यर्थः। ऋगादिप्रायेति। ऋगादिबहुलेत्यर्थः। गुणत्वादिति। विध्यङ्गत्वादित्यर्थः। मुख्यस्य प्रथमस्याप्यर्थवादस्येत्यन्वयः। मुख्यस्याप्यङ्गत्वेन दौर्बल्ये दृष्टान्तमाह—मुख्यापीति। प्रथमानुष्ठेयापीत्यर्थः। स्वधर्मतां स्वसम्बन्धित्वेन धर्मः पर्वकालरूपाङ्गसम्पादनं यस्यास्तताम्। वक्ष्यत इति। 'अङ्गगुणविरोधे च तादर्थ्यात्' इति द्वादशाध्यायाधिकरणे 'य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेत' इति विहितपर्वकालत्वं प्रधाने सोम एव सम्पाद्यम्, न तु मुख्यायामप्यङ्गभूतायां दीक्षणीयायामिति वक्ष्यते। तद्वदिहापि स्यादित्यर्थः। तथा च 'मुख्यं वा पूर्वचोदनात्' इति मुख्यप्राबल्यन्यायस्याङ्गगुणविरोध इति न्यायोऽपवादक इति भावः। सेति। स्वमुख्यार्थमन्त्रकार्याङ्गविधायकतारूपा स्वधर्मतेत्यर्थः। अप्राप्तेति प्रापकप्रमाणरूपतात्पर्यग्राहकाभावप्रदर्शनम्। जाताधिकारा इति। मन्त्रजातमधिकृत्य विधेया इत्यर्थः। अङ्गगुणविरोधन्यायवैषम्यं प्रतिपादयन् सिद्धान्तमाह–लब्धात्मन इति। गुणनैरपेक्ष्येण पर्यवसितविधानस्येत्यर्थः। प्रकृते तु नैवमित्याह–विध्युद्देशस्त्विति। अलब्धात्मा अर्थवादनैरपेक्ष्येण पर्यवसितः। लब्धात्मानं निश्चितार्थम्। एतदेव व्युत्पादयति–य इष्ट्येत्यादिना। कथं

---

१. प्राभाकरास्तु वेदयतीति व्युत्पत्त्या यौगिक एव वेदशब्दो न तु रूढः, ततश्चैकैकमेव वाक्यं वेदशब्दार्थ इत्याहुः, तदुपालभते।

युक्तं यद्दीक्षणीयाकालं बाधते। विध्युद्देशस्त्विह मन्त्रविषयत्वेनालब्धात्मा कथमिवार्थवादं बाधेत। तथा हि—वेदशब्द उपक्रमगतोऽसञ्जातप्रतिपक्षत्वाद्यथाश्रुतार्थपर एव तावदवधार्यते। तस्मिंश्चावधारिते सत्युपसंहारगतमृगादिपदमुपसञ्जातप्रतिपक्षविज्ञानत्वाद्यथाश्रुतार्थं सत्तदेकवाक्यतामप्रतिपद्यमानं तदनुगुणवेदपरतयैवात्मानं लभते नान्यथा, येन बाधकं स्यात्। उपक्रम एव वेदानां किञ्चिद्विधास्यत इत्यवगतम्, किं नु तद्विधेयमित्येतावदनवगतमपेक्षितञ्च। अतो विध्युद्देशगतोऽपि ऋगादिशब्दोऽवगतविषयत्वादनुवाद इति लक्षणां सहते। तस्माद्वेदधर्मः—ऋग्वेदेन यत्क्रियते विधीयते तदुच्चैरिति। तदिहोपक्रमोपसंहारैकवाक्यतया वेदधर्मत्वमवधारितमिति वाक्यविनियोगः। एकदेशिनां त्वेकैकमेव वाक्यं वेदशब्दवाच्यमित्यभ्युपगमादुपसंहारवशेन मन्त्रवाक्यपरोऽपि वेदशब्दो व्याख्यायमानः श्रुत्यर्थान्न च्यवत इति सिद्धान्तो दुर्लभस्स्यात्। अत यदुच्यते विधेयतया न विधायकवद् वेदकत्वमिति, तदयुक्तम्; यद्यपि हि विनियोगापेक्षं मन्त्रवाक्यं न विधायकवदनपेक्षवेदकं तथापि तावद् वेदयति, तावच्च वेदशब्दप्रवृत्तौ निमित्तमित्यविशेषः। यथा शुक्लमानयेति यत्स्वभावशुक्लमुदकं यच्च पाकापेक्षं पार्थिवं तत्रोभयत्राप्यविशेषेण शुक्लशब्दः प्रवर्तते, तथा वेदशब्दोऽपि। न हि विधिवाक्यमपि निरपेक्षं वेदयति, पदार्थव्युत्पत्तिन्यायविचारादिसापेक्षत्वात्। तस्मात्साधारणो वेदशब्दः कांस्यभोजिवदुपसंहारवशान्मन्त्रपरस्स्यादित्यधिकरणविरोधस्स्यादित्यास्तां तावत्॥ १॥

---

मन्त्रविषयत्वेनालब्धात्मकत्वं तदुपपादयति—तथाहीति। असञ्जातप्रतिपक्षत्वात् असञ्जातविरोधप्रतिसन्धानत्वात्। यथाश्रुतेति। वेदरूपशक्यार्थपर एवेत्यर्थः। उपसञ्जातेति। उत्पन्नविरोधप्रतिसन्धानत्वादित्यर्थः। ततश्चोक्तहेतोर्लक्षणयैव विध्यर्थपर्यवसानमिति भावः। एतेनैव परप्राबल्यन्यायस्यापि नायं विषय इत्यपि सूचितम्। तदुक्तमपच्छेदाधिकरणे—'पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम्। अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत्'॥ इति। यदुक्तमप्राप्तार्थत्वान्न विधौ लक्षणेति तत्परिहरति—उपक्रम एवेति। वेदस्तुत्या हि वेदस्य विधिसम्बन्धोऽवगम्यते, अन्यथा तदानर्थक्यात्। तथा चानुवादकत्वेन ऋगादिपदस्य वेदपरत्वावगमाद्युक्ता लक्षणेत्यर्थः। पूर्वोक्तप्राभाकरोक्तेर्मूर्खप्रलपितत्वे एतदधिकरणविरोधमत्र हेतुमाह—एकदेशिनान्त्विति। तावच्च वेदकत्वमात्रञ्च। निरपेक्षवेदकत्वमसम्भवादपि न निमित्तमित्याह—न हीति। साधारणः समुदायतदवयसाधारणार्थः। कांस्येति। यथा कश्चिद् गुरुः कांस्याकांस्यभोजी शिष्यस्य कांस्यपात्रे गुरूच्छिष्टभोजननियमवतोऽनुसारात्कांस्यभोज्येव भवति तद्वदित्यर्थः। एवञ्चात्ताधिकरणन्यायोऽपि[1] पूर्वपक्षानुगुणस्स्यादिति भावः। प्रयोजनं पूर्वपक्षे यजुर्वेदविहितकर्माङ्गभूते ऋङ्मन्त्रे उच्चैस्त्वम्, सिद्धान्ते तूपांशुत्वमिति। सूत्रं स्पष्टम्॥१॥

---

१. 'अक्ताश्शर्करा' इत्युपक्रमस्थस्यापि विधिवाक्यस्य 'तेजो वै घृतम्' इत्यर्थवादानुसारेण नयने कैमुतिकन्यायेनैवात्रोपसंहारस्थस्य विध्युद्देशस्यार्थवादानुसारेण नयनसिद्धेर्व्यर्थमिदमधिकरणमिति शङ्का यद्यपि समुदियात्, तथापि तत्रार्थवादानुसारेण विध्युद्देशनयनेऽपि

२

**सू० गुण**—याजुर्वेदिकमाधानं, तस्य सामवेदे 'वारवन्तीयं गायन्ति' इत्यङ्ग विधिः। तत्र वारवन्तीयस्य किं सामवैदिकः स्वरः? उत याजुर्वेदिकः? इति संदेहे—प्रधानविधिनिबन्धनस्य स्वरस्य प्रधानैकवाक्यतापेक्षित्वेन विलम्बितत्वात्स्ववेदनिबन्धन एव स्वरोऽनपेक्षतया शीघ्रं प्रतीयमानो युक्त इति प्राप्ते–प्रधानधर्मत्वादुपांशुत्वमेव बलीयः। साङ्गं ह्याधानं विधिना विधीयते। अतस्तादृशस्यैव याजुर्वेदिकत्वादुपांशुत्वं धर्मः। न चाङ्गेष्वक्रियमाणं तत्साङ्गस्य कृतं भवति। तेनाङ्गस्थोऽप्यसौ प्रधानार्थो धर्म इति विलम्बितप्रतीतिरपि बलीयान्, इतरथा प्रधानस्यैव वैगुण्यापत्तेः। अतोऽङ्गधर्ममुच्चैष्ट्वं बाधित्वा प्रधानधर्म उपांशुत्वं स्यादिति सिद्धान्तितम्। एवन्तु 'अङ्गगुणविरोधे च तादर्थ्या'दित्यनेन गतप्रायं स्यात्। न चोदाहरणमपि युक्तम्। 'वारवन्तीयं गायती'त्यस्याङ्गविधेरपि याजुर्वेदिकत्वादित्यन्यथा व्याख्यातम्। यस्य मन्त्रस्य वेदान्तरे समाम्नानमुत्पत्तिः वेदान्तरे च विनियोगविधिः, तस्य किमुत्पत्तिवेदनिबन्धनस्स्वरोऽथवा विनियोगवेदनिबन्धनः? इति संशयः। तत्र–

**उत्पत्तेः पूर्वभावित्वात्तन्निबन्धन एव हि।**
**स्वरः प्रथमभावित्वाद्युक्तो नान्यो विलम्बितः॥**

---

गुण–याजुर्वैदिकमिति। 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादियजुर्वेदविहितमित्यर्थः। वारवन्तीयं सामविशेषः। सामवैदिकः स्वर उच्चैस्त्वम्, याजुर्वैदिक उपांशुत्वम्। सन्देह इति। ऋचा क्रियत इत्यादिना ऋग्वेदादिकरणकव्यापारोऽभिधीयते। स चोत्पत्तिविधिरूपः किं वा प्रयोगविधिरूप इति सन्देहादिति भावः। एवञ्च प्रसङ्गाख्या अनन्तरसङ्गतिस्सूचिता। प्रधानेति। प्रधानभूतयाजुर्वेदिकाधानप्रयोगविधिप्रयुक्तोपांशुस्वरस्येत्यर्थः। स्ववेदेति। सामविनियोजकसामवेदप्रयुक्तोच्चैस्स्वर इत्यर्थः। प्रधानेति। नन्वस्तु प्रधाने उपांशुत्वम्, अङ्गे तूच्चैस्त्वस्य को विरोध इत्यत आह–साङ्गं हीति। स्वरस्य प्रयोगविध्यन्वयित्वेन तद्विधेयत्वात्प्रयोगस्य च साङ्गप्रधानसम्बन्धितया साङ्ग एव प्रधाने उपांशुत्वविधानादस्ति विरोध इति भावः। विधिना प्रयोगविधिना। तत् उपांशुत्वम्। नन्वङ्गे क्रियमाणमुपांशुत्वमङ्गधर्म एवेत्याशङ्क्याह–तेनेति। प्रधानार्थतयोपांशुत्वविधिरेव हि प्रधान इवाङ्गेष्वपि तत्प्रापक इति स्थानभेदेऽपि न शेषिभेद इत्यर्थः। सिद्धान्तितमिति। भाष्यकृतेति शेषः। एवन्त्विति। व्याख्यान इति शेषः। उच्चैस्त्ववदुपांशुत्वस्याप्यङ्गधर्मत्वमिति विशेषाशङ्कासत्वात्प्रायशब्दः। व्याख्यातमिति। वार्तिककृतेति शेषः। उत्पत्तिरिति तद्वेदविहितत्वस्य सम्पादनायोक्तम्। पूर्वेति। अज्ञातस्य विनियोगायो-

---

सामान्यशब्दस्य विशेषे पर्यवसानमात्रम्, न लक्षणा। प्रकृते त्वर्थवादानुसारेण विध्युद्देशनयने तत्रत्यऋगादिशब्दानां तत्प्रायवेदे लक्षणा स्यात्। सा च न युक्ता, गुणस्य मुख्यार्थत्वाय प्रधानस्य लक्षणाया अयुक्तत्वात्। एवञ्च तत्र कांस्यभोजिन्यायेन विधिवाक्यस्यार्थवादानुवर्तित्वेऽपि प्रकृते न तदनुवर्तित्वमिति पूर्वपक्षानुगुण इति बोध्यम्।

नैतदेवम्;

न खल्वाम्नानमात्रेण मन्त्रस्य स्यात् प्रयोज्यता ।
तेन क्रियत इत्येवमतो वक्तुं न शक्यते ॥
तेन तु क्रियते मन्त्रो यत्र वेदे विधीयते ।
विध्यायत्तं ह्यनुष्ठानं तत्र चापेक्षितस्स्वरः ॥

प्रयोज्यतयावधारितस्य मन्त्रस्य स्वरापेक्षा भवति, न स्वरूपावगतिमात्रेण । तस्माद्वारवन्तीयादेस्सामवेदेनाक्रियमाणत्वादनपेक्षितत्वाच्च न तन्निबन्धनमुच्चैष्ट्वम्, यजुर्वेदेन तु क्रियमाणत्वात्स्वरापेक्षणाच्च तदीयमुपांशुत्वमेव स्यात् ॥ २ ॥

३

सू० भूयः—यजुर्वेदे सामवेदे च ज्योतिष्टोमस्समाम्नातः । तस्य कतरवेदस्वरस्स्यादिति विचारः । यत्र विधीयते, तदीय एव स्वरः, न यत्र गुणार्थं श्रवणम् । अतः क्वास्य विधिरित्यनियमे प्राप्ते ब्रूमः-यजुर्वेदे द्रव्यदेवतमस्य श्रूयते । तेन च व्यवच्छिन्नं कर्मस्वरूपं गम्यमानं सुखेन विधीयते । वेदान्तरे तु नामयुक्तं क्रियामात्रं श्रूयत इति न विध्यवगतिस्समाप्यते । अतो यजुर्वेदेनासौ क्रियत इत्युपांशुधर्मता ॥ ३ ॥

४

सू० असं—श्रुतिलिङ्गवाक्यैरुक्तो विनियोगः, अधुनाधिकरणत्रयेण प्रकरणस्थानसमाख्याभिर्विनियोगोऽभिधीयते । दर्शपूर्णमासयोः श्रूयते 'समिधो यजति, तनू-

---

गादिति भावः । प्रथमभावित्वात् प्रथमोपस्थितत्वात् । न शक्यत इति । क्रमोऽनुष्ठानवाचित्वादिति भावः । सूत्रार्थस्तु गुणप्रधानयोर्व्यतिक्रमे धर्मविरोधे गुणस्य प्रधानार्थत्वान्मुख्येन निमित्तेन वेदसंयोग एव स्वरप्रयोजक इति । वार्तिकमते गुणमुख्यशब्दावुत्पत्तिविनियोगपरौ ज्ञेयाविति ॥ २ ॥

भूयः—प्रसङ्गसङ्गतिमभिप्रेत्याह—यजुरिति । यद्यपि ऋग्वेदेऽपि समाम्नातः, तथापि ऋक्सामवेदयोस्स्वरैक्यात्तदनुक्तिः, सूत्रेऽपि चोभयेत्युक्तिरिति बोध्यम् । कतरेति । किं विकल्पेन स्वरद्वयमुतैक एव कश्चिन्नियत इत्यर्थः । एतद्विचाराङ्गत्वेन विचारान्तरमाह—यत्रेति । क्रियत इत्यनेन तद्वेदविहितत्वस्यैव स्वरनिमित्तत्वोक्तेरिति भावः । अनियम इति । विनिगमकाभावादत्रैव विधिरिति नियमाभावे प्राप्त इत्यर्थः । न तु कदाचिदेकत्र कदाचिच्चान्यत्रेति विधेरनियमो व्याख्येयः । विधानरूपे च स्तुतिविकल्पायोगादित्यवधेयम् । व्यवच्छिन्नम् इतरव्यावृत्त्या ईदृशमिति परिच्छिन्नम् । समाप्यते निराकांक्षा भवति । न चैवं सति तच्छ्रवणवैयर्थ्यं शङ्क्यम्, स्तोत्रादिविधानार्थमनुवादार्थत्वादिति भावः । सूत्रन्तूभयत्र श्रुतिः श्रवणं यस्य तत्कर्म भूयस्त्वेनाङ्गबाहुल्येन अमुकवेदविधेयमिति ज्ञेयम् । अङ्गबाहुल्यञ्च कर्मस्वरूपपरिचायकद्रव्यदेवतादिपोष्कल्यरूपं बोध्यम्, न तु बहुत्वम् अनुपयोगाद्व्यभिचाराच्चेति । प्रयोजनं स्पष्टम् ॥३॥

असं—वाक्यविनियोगानन्तरमेव तदुपजीवकानन्तरप्रमाणनिरूपणे कर्तव्येऽपि वाक्य-

नपातं यजती''त्यादि। तद्दर्शपूर्णमासाङ्गं न वेति संशयः। यदि प्रकरणं नाम प्रमाणं भवेत्ततोऽङ्गम्, इतरथा नाङ्गमिति। तत्र प्रकरणगताज्ञानसंशयविपर्ययाणामन्यतमेन पूर्वः पक्षः। यावदध्येतन्न कथ्यते तावदज्ञानं भवति। सदपि चावसराभावान्नोक्तं स्यादिति संशयः। अथवा नैवाक्षरश्रवणसामर्थ्यानुसरणपदान्तरसमभिव्याहारात्मकेभ्यः श्रुतिलिङ्गवाक्येभ्योऽन्यः शब्दप्रमाणप्रकारोऽस्ति, तस्मान्न प्रकरणं प्रमाणमिति विपर्ययः। तथा हि स्वर्गकामस्य दर्शपूर्णमासौ कर्तव्याविति निरपेक्षं समाप्तं वाक्यम्, तथा 'समिधो यजती' त्याद्यपि। नन्विदं फलाभावात्साकांक्षम्, सत्यं साकांक्षम्; सा त्वाकाङ्क्षा 'स स्वर्गस्स्यादि'ति वा 'फलमात्रेयो निर्देशादि'ति वा, दर्शपूर्णमासफलानुषङ्गेण वा निवर्तते, न क्रत्वङ्गत्वम्, क्रतोरनाकाङ्क्षत्वादिति प्राप्ते ब्रूमः–

क्रतोरप्यस्ति कथमितीतिकर्तव्यताकाङ्क्षा, तथा प्रयाजादेः प्रयोजनाकाङ्क्षेत्युभयोः साकाङ्क्षयोस्सन्निहितयोरप्रत्यक्षमप्येकवाक्यत्वं फलान्तरकल्पनाल्लघीयः। तथोभयोर्निराकांक्षत्वम्। फलान्तरकल्पने त्वितिकर्तव्यताकांक्षा क्रतोरनिवृत्तैव स्यात्। अस्ति चासावाकांक्षा। यदि हि यागं कुर्यादिति वाक्यार्थस्स्यात्, यागक्रियाया निर्ज्ञातप्रकारत्वात्स्यान्निराकांक्षत्वम्। यागेन स्वर्गं कुर्यादिति तु वाक्यार्थः। तत्र न ज्ञायते केन प्रकारेण यागेन स्वर्गः कर्तव्य इति, तेनास्ति प्रकाराकांक्षा। ननु यागानुष्ठानमेव प्रकारः,

---

प्रसङ्गागततद्विशेषजिज्ञासानिवृत्तावसरसङ्गत्येदानीमनन्तरप्रमाणनिरूपणं क्रियत इति सूचयन्नाह–श्रुतीति। वाक्यपादत्वव्यवहारस्तु वाक्यव्युत्पादनबाहुल्यात्प्राधान्यमभिप्रेत्येत्याशयः। अङ्गेन वेत्यध्यायसङ्गतिकथनम्। उक्तसंशयबीजमाह–यदीति। प्रकरणाख्यप्रमाणानवतारस्य त्रेधा सम्भवमाह–तत्रेति। विपर्ययश्च प्रकरणमप्रमाणमित्येवं वक्ष्यति। आद्यपक्षद्वयेन पूर्वपक्षस्य मन्दत्वात्तृतीयपक्षानुसारेण तमाह–अथवेति। 'सः स्वर्गस्स्यात्सर्वान् प्रत्यविशिष्टत्वादि'ति विश्वजिदधिकरणसूत्रम्। द्वितीयन्तु रात्रिसत्रस्य प्रतिष्ठाफलकत्वसाधकम्। अर्थवादे 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इति रूपे निर्देशादिति। फलस्य सर्वथा अनिर्देशे स्वर्गः कल्प्यः, निर्देशे तु तदेवेति। प्रकृते च 'वर्म वा एतद्यज्ञस्य क्रियते, वर्म यजमानस्य भ्रातृव्यस्याभिभूत्यै इत्यार्थवादिकशत्रुपराभवः फलं कल्प्य इत्यर्थः। अर्थवादे निर्देशस्यासार्वत्रिकत्वादत्यन्तानुपस्थितस्वर्गकल्पनायाश्चायुक्तत्वादाह–दर्शेति। प्रकृताभिप्रायमिदम्। यत्र यत्प्रधानं तदुपलक्षणं बोध्यम्। एवं सति क्रतूपकार एव कल्प्यतामित्याशङ्क्याह–नेति। क्रतोरपेक्षां विना तदुपकारकल्पनायोगादिति भावः। क्रतोरनाकांक्षत्वे स्यादेवं तत्त्वसिद्धमित्याह–क्रतोरपीति। यागेन स्वर्गं कुर्यादित्युक्ते हि कथं कुर्यादिति याकांक्षा जायते सेतिकर्तव्यताकांक्षेत्यर्थः। अप्रत्यक्षमपीति। 'येन कर्मणेर्त्सेत्तत्र जयाञ्जुहुयात्' इतिवद्यत्तत्पदानुपादानेऽनवगम्यमानमित्यर्थः। लघीय इति। अनुपस्थितानाकांक्षसम्बन्धापेक्षयोपस्थितसाकांक्षसम्बन्धे उपस्थित्याकांक्षयोरकल्पनादतिलाघवमित्यर्थः। हेत्वन्तरमाह–तथेति। तथा सतीत्यर्थः। यागेनेति। स्वर्गकामाधिकरणन्यायेन भावनायाः पुरुषार्थभाव्यकत्वनियमादिति भावः। न ज्ञायत इति।

अनुष्ठितो ह्यसौ फलं साधयति, किमत्र न ज्ञायते ? यदि मतं न यागः फलं साधयत्यननुगृहीतः,सर्वसाधनानामनुग्रहापेक्षत्वदर्शनात् चक्षुरादीनामालोकानुग्रहवत्। अतः किमस्यानुग्राहकमित्यनुग्रहापेक्षायां प्रयाजविधिरिति। तदयुक्तम्;अननुगृहीतस्यापि केवलस्य कर्मणः संयोगविभागारम्भकत्वदर्शनात्। कश्चायमनुग्रहो नाम ? सामर्थ्योद्बोध इति चेत्, कोऽयमुद्बोधो नाम ? कार्यारम्भाभिमुख्यमिति चेत्-नैवम्; समर्थमेव [1]कर्म प्रागनुष्ठानादलब्धात्मकत्वात्कार्यारम्भानभिमुखम्, अनुष्ठानात्तु लब्धात्मकत्वाद्भवत्येव कार्याभिमुखम् किमत्रान्यापेक्षया ? सहायापेक्षणमनुग्रहापेक्षणमिति चेन्न, असहायेनापि कर्मणा संयोगविभागोत्पत्तिदर्शनात्। अपि चाग्नेयादीनि परस्परं सहाया भवन्तु, किमन्यदपेक्षन्ते ? तस्माद्वक्तव्यमेतत् केयमितिकर्तव्यतापेक्षा नामेति। तदभिधीयते—प्रकाराकांक्षेयम्। इतिशब्दः प्रकारवचनः, कर्तव्यताप्रकारः क्रियाप्रकार इति यावत्। सामान्यस्य भेदको विशेषः प्रकार इति तद्विदः। किं पुनरिह सामान्यात्मनावगतं विशेषरूपमपेक्षते ? क्रिया भावनेति यावत्। यागेन स्वर्गं कुर्यादित्यस्यायमर्थः—यथा व्यापृते यागात्स्वर्गो भवति, तथा यागं प्रति व्याप्रियेतेति। तत्र न ज्ञायते कोऽसौ व्यापारविशेषः, येन यागा-

---

स्वर्गस्यालोकिकत्वादिति भावः। फलं साधयतीति। शास्त्रप्रामाण्यादिति भावः। सिद्धान्त्येकदेशिमतं निराकर्तुं पूर्वपक्षिमुखेनोपन्यस्यति-यदीति। अनुग्रहाकांक्षाया अनियमान्न तदाकांक्षयैकवाक्यत्वमिति दूषयति-तदयुक्तमिति। कार्येति। कार्योत्पत्तिरूपफलोपधानमित्यर्थः। ननु कर्मणोऽपि प्रतिबन्धकाभावादिसहायापेक्षास्तीत्यत आह-अपि चेति।[2] प्रकारेति। यद्यपि 'तेनास्ति प्रकाराकाङ्क्षेति' पूर्वमेवोक्तम्, तथापीतिकर्तव्यताशब्दार्थप्रदर्शनार्थं पुनरभिधानम्। कर्तव्यतेति। कृतिविषयस्य हि भावो विषयतया कृतिरेवेति भावः। तर्हि प्रकारवती क्रियेतिकर्तव्यताशब्दार्थः स्यात्, न क्रियाप्रकार इत्याशङ्क्याह-क्रियाप्रकार इति। मयूरव्यंसकादेराकृतिगणत्वात्पूर्वपदार्थप्राधान्यमिति भावः। धात्वर्थयागादेर्विशेषरूपेणैवावगतत्वादाह-किं पुनरिति।। उत्तरमाह-क्रियेति। धात्वर्थस्य व्यावृत्त्यर्थमाह-भावनेति। ननु यागेन स्वर्गं कुर्यादिति यागरूपसाधनस्य स्वर्गरूपसाध्यसम्बन्धावगतिर्निराकाङ्क्षैवेत्याशङ्क्याह[3]-यागेनेति। करणस्य कर्तृव्यापारविशेषानुपकृतस्य फलानुत्पादकतया तदाकाङ्क्षाया नियमात्सामान्यतश्च

---

१. यथा कुठारादावुत्पन्ने पश्चात् तैक्ष्ण्यादिना कार्याभिमुख्यं संपाद्यते, एवमिहोत्पन्ने यागे पश्चात्कार्याभिमुख्यं न संपाद्यते, उत्पत्तिदशायां कार्याभिमुखस्यैवोत्पत्तेः। एवञ्चेहोत्पत्तेः प्रागेव परं कार्यारम्भानभिमुखत्वम्, न तूत्पत्त्यनन्तरमिति। प्रकृते कार्याभिमुख्यमुद्बोधश्चेत्तद्धेतुर्व्यापारोऽनुष्ठानमेव नातिरिक्तापेक्षेति परिहरति।

२. सहायशब्दस्य सहकार्यर्थकत्वात्प्रयाजादीनां सहायत्वाभ्युपगमे आग्नेयादिषट्कवत्तेषामपि प्राधान्यमेव स्यात्, नाङ्गत्वमित्यपि दूषणं बोध्यम्।

३. भावना नाम भवितुर्भवनानुकूलप्रयोजकव्यापारः। तेन स्वर्गोत्पत्त्यनुकूलव्यापार एव स्वर्गभावनेत्युच्यते। करणत्वञ्च फलोद्देशप्रवृत्तकर्तृव्यापारगोचरत्वम्। तथा च यागकर-

त्स्वर्गो भवतीति। सेयं जिज्ञासेतिकर्तव्यताकांक्षेत्युच्यते । ननु यागानुष्ठानमेवासौ व्यापारः किमत्र न ज्ञायते। यथा क्रियानुष्ठानमेव संयोगविभागसम्पादनम्, तन्न; न हि मृत्पिण्डसम्पादनमेव घटसम्पादनम्। अतो नायमेकान्ततो यत्स्वरूपसम्पादनमेव कार्यसम्पादनमिति।

नन्वत्र यागानुष्ठानमेव शब्देनोच्यते, मैवम्; न ह्येवं शब्दोऽस्ति यागानुष्ठानमेव व्यापार इति। ननु यजेतेति यागविषयैव कृतिश्शब्देनोच्यते। किमिदं विषय-

---

कर्तृव्यापारस्य भावनाख्यस्य निर्विषयस्यायोगात्करणविषयत्वावगमात्तद्विशेषव्यापारकाङ्क्षायां तेषां करणोपकारकत्वावगमः कुठारेण छिन्द्यादित्यादाविवानिर्ज्ञातप्रकारस्य कथमित्याकाङ्क्षायामुद्यमननिपतनादिरूपकर्तृव्यापारविशेषाणां हस्तेनोद्यम्य निपात्येति शब्देन कुठाररूपकरणोपकारकत्वावगम इति भावः।

ननु सिद्धे कुठारादावन्वयव्यतिरेकवशाद्व्यापारान्तरापेक्षयामप्यसिद्धयागादेरर्थाक्षिप्तानुष्ठानेनैव नैराकाङ्क्ष्यमिति शङ्कते—नन्विति। दूषयति—न हीति। मृत्पिण्डासिद्धिदशायां मृत्पिण्डेन घटं कुर्यादित्युक्ते मृत्पिण्डसम्पादनातिरिक्तदण्डचक्रादिव्यापारस्याप्यपेक्षणावगमान्नायं नियम इत्यर्थः। ननु लोके दृष्टानुसारात् द्वैविध्यस्यापि दर्शनेऽप्यत्रावश्यकेन यागानुष्ठानेनैवाकाङ्क्षाशान्तिस्स्यादिति शङ्कते—नन्विति। उच्यते तात्पर्यविषयीक्रियते। न हीति। असिद्धस्य करणत्वायोगादनुष्ठानस्य शब्दतात्पर्यविषयत्वेऽपि तन्मात्रेण स्वर्गसम्पादनसिद्धौ मानाभाव इत्यर्थः। एवञ्चाकाङ्क्षायोग्यतासन्निधिरूपसामग्रीवशादियत्तानियामकप्रमाणाभावाच्च सर्वस्यैव प्राकरणिकस्येतिकर्तव्यतात्वेनान्वयः प्रमाणानुमतस्सिध्यति। अपूर्वे तु दर्विहोमादौ द्रव्यदेवतादिसन्निपत्योपकारकेतिकर्तव्यतयैव नैराकाङ्क्ष्यम्, व्यापारान्तरग्राहकप्रमाणाभावादित्यष्टमे वक्ष्यते। ननु 'स्वर्गकामो यजेत' इत्यस्य स्वर्गकामस्य यागविषयकं कार्यमित्यर्थः। कार्यविषयत्वञ्च यागे कृतिद्वारकमिति प्राभाकरश्शङ्कते[1]—नन्विति। यागे कृतिविषयत्वं दुर्वचमित्याह[2]—किमिदमिति। साध्यत्वमुद्देश्यरूपम्, उत कृतिव्याप्यतारू-

---

णकस्वर्गकर्मकभावनां विदधतो यागेन स्वर्गं कुर्यादित्यस्य यागात्स्वर्गो यथा भवति तथा यागे व्याप्रियेतेत्यर्थः पर्यवस्यति। एवञ्च स व्यापारो यागगोचरत्वेन स्वर्गोत्पत्त्यनुकूलत्वेनावगतोऽपीदृशोऽयमसौ व्यापार इत्येवं विशिष्यानवगतः, तेन कोऽसौ व्यापार इत्यस्ति व्यापारविशेषापेक्षेति भावः।

१. 'स्वर्गकामो यजेत' इति वाक्यस्य स्वर्गकामस्य यागविषयकं कार्यमित्यर्थः। यागस्य च कार्ये विषयत्वं कार्यविशेषणीभूतकृतिविषयत्वमेव। ततश्च यागविषयैव कृतिः शब्दार्थः, न तु यागकरणिका स्वर्गकृतिः। अतः उक्तरीत्याकांक्षोपपादनमयुक्तमिति शङ्कते।

२. यागस्य कृतौ विषयत्वमेव दुर्वचम्। अतो न यागविषयकं कार्यं लिङाद्यर्थः, किन्तु यागकरणिका स्वर्गादिकृतिरित्याशयः।

त्वम्? साध्यत्वमिति चेत्-न; स्वर्गो ह्यत्र साध्यतया सम्बध्यते, न यागः। न ह्येवं सम्भवति स्वर्गं कुर्याद्यागमिति। अथ यागविषयया कृत्या स्वर्गं कुर्यादिति, स्यादेवं यदि कुर्यादिति प्रत्ययेन कृतिद्वयमुपात्तं स्यात्। कुर्यादित्येतावत्प्रत्ययार्थः। कृत्या साधयेदिति कृत्यन्तरारोपेण व्याख्यातॄणामर्थकथनमात्रम्। कुर्यादित्यस्मिंश्च स्वर्गस्य साध्यात्वान्न यागस्य साध्यत्वम्। अथ विशेषणत्वं विषयत्वम्, सत्यम्; विशेणमेव यागः, केन तु सम्बन्धेनेति निरूपयामः। न तावन्नीलोत्पलादिवत्ताद्रूप्येण, यागभावनयोर्भेदादतः कारकत्वेन सोमादिवद्यागस्य क्रियाविशेषणत्वम्। तत्र च साध्यत्वाभावात्साधनत्वेनैव सम्बन्धः। तेन यागकरणिका स्वर्गकृतिरेव शब्दार्थः, न तु यागानुष्ठानम्। एवञ्च नाम्नां सामानाधिकरण्यं सम्भवति, नान्यथा। अतः किंरूपेयं कृतिरित्यस्त्यपेक्षा। तत्र तदाकांक्षानुवृत्तौ 'समिधो यजती' ति वचनादेवं ज्ञायते—अयमसौ व्यापारः, येन यागात्स्वर्गो भवतीति। सम्भवति च समिदादिक्रियाणां यागविषयत्वमदृष्टद्वारम्। अवघातादीनान्तु दृष्टद्वारम्। अननुष्ठितश्च यागोऽसत्त्वान्न फलं साधयितुं क्षम इत्यर्थाद्यागानुष्ठानं गम्यते, न शब्दात्। तेनायं वाक्यार्थः—यागेन फलं कुर्यात् कथं केन प्रकारेण यागात्स्वर्गो भवतीति। तत्राह 'समिधो यजति' 'व्रीहीनवहन्ती' त्यादि। तदयमर्थो भवति—समिदादिभिरदृष्टद्वारमवघातादिभिश्च द्रव्यदेवतासंस्कारद्वारम्, द्रव्यदेवतेन च स्वरूपसम्पादनेन यागे व्याप्रियेत। एवम्भूतोऽसौ व्यापारः, येन यागा-

---

पम्। आद्ये आह—स्वर्गो हीति। स्वर्गस्योद्देश्यतायाः आवश्यकत्वाद्यागस्यापि तदङ्गीकारे वाक्यभेद इत्यर्थः। द्वितीयं दूषयितुमुपन्यस्यति—अथेति। अत्रापि पक्षे किं यागविषयककृतिरेका स्वर्गोद्देश्यका चापरेति कृतिद्वयमुतैकैव कृतिरिति विकल्पं मनसि निधायाद्यं दूषयति—स्यादेवमिति। कथं तर्हि कृत्या साधयेदिति व्यवहारस्तत्राह—कृत्येति। द्वितीयं दूषयति—कुर्यादितीति। करोतेरेकर्मकत्वेन तत्पर्यायाख्यातस्यापि तथात्वेन वाक्यभेदप्रसङ्गादिति भावः। ताद्रूप्येण अभेदेन। यागेति। 'यतो धातोर्यज्यादिकादि'त्यादिग्रन्थेन भावार्थाधिकरणे यागातिरिक्तव्यापारस्यैव भावनात्वाभिधानादित्यर्थः। तत्र च कारकत्वपक्षे च। नाम्नामिति। तृतीयान्तनाम्नामुद्भिदादीनामित्यर्थः। अत इति। स्वर्गकृतेरनिर्ज्ञातप्रकारत्वादित्यर्थः। अनुवृत्तावित्यनेन सन्निधिरुक्तः। ननु चैत्र भुङ्क्ष्वेति प्रक्रम्य अयमोदन इदं दधि सर्पिः शाक इत्युक्तौ दृष्टोपकारिणां भोजनेतिकर्तव्यतात्वेनान्वयावगमवदिहापि द्रव्यदेवतादेरेवोपकारयोग्यताज्ञानात्तथावगमेऽपि समिदादेः कथमितिकर्तव्यतात्वेनावगम इत्याशङ्क्याह—सम्भवति चेति। यागविषयत्वं यागोपकारकत्वम्। तथाचादृष्टद्वारोपकारकत्वसम्भवादयोग्यतानिश्चयाभावेनान्वयोपपत्तिरिति भावः। नन्वेवंसति यागानुष्ठानप्रतीतेरपलापस्स्यादित्याशङ्क्याह—अननुष्ठितश्चेति। कुर्यादित्यन्तेन प्रधानवाक्यार्थप्रदर्शनम्, कथमितीतिकर्तव्यताकाङ्क्षायाः। कथमित्यस्य व्याख्यानं केनेति। अङ्गप्रधानवाक्ययोरेकवाक्यतां दर्शयति—तदयमिति। तत्तस्मादुक्ताकांक्षावशादित्यर्थः। द्वारमिति व्याप्रियेतेति क्रियाविशेषणम्। अवघातादीत्यादिरादसङ्गृहीतातमप्रयाजादेर्देवतास्म-

त्स्वर्गो भवति, यागः फलारम्भाभिमुखो भवति कार्यारम्भाभिमुख्यकरणमेवोपकार इति समिदादेः क्रतूपकारः फलम्। नन्वेवं समिदादिभिरदृष्टं कुर्यादित्यत्रापि क्रियाविशेषापरिज्ञानादाकांक्षा स्यात्। कस्य चैतदनिष्टम्? अत एवावान्तरप्रकरणमिष्यते। नन्वेवं सौमिकधर्मातिदेशस्स्यात्। भवन्मते वा पितृयज्ञस्य साधिकारस्य किमिति सौमिकधर्मातिदेशो न भवति? वाचनिककालबाधप्रसङ्ग इति चेत्—इहापि समानम्। अपि च सत्यप्याकांक्षा वाचनिकेन जौहवाज्यादिद्रव्येण तत्संस्कारैर्मान्त्रवर्णिक्या च देवतया वेदिर्बर्हिराज्येध्मादिभिस्तत्संस्कारैश्चाङ्गप्रधानसाधारणैः 'अभिकामं जुहोति'

---

रणरूपः संस्कारो द्वारभूतो ज्ञेयः। न च श्रुतिविनियोज्यस्यावघातादेः कथमत्रोपादानम्, श्रुत्या ह्यसंयुक्तस्यैव 'असंयुक्तं प्रकरणात्' इति सूत्रेण प्रकरणग्राह्यत्वोक्तेरिति वाच्यम्। श्रुतेर्व्रीह्यादिद्वारसम्बन्धमात्रे व्यापारादपूर्वसम्बन्धस्य च प्रकरणाधीनत्वादविरोधात्। अतएव प्रकरणविरोध्यसंयुक्ताभिप्रायमसंयुक्तपदं वार्तिके व्याख्यातमित्यप्यवधेयम्। स्वरूपेति। यागस्वरूपेत्यर्थः। आख्यातवाच्यव्यापारसामान्यस्य समिदादिव्यापारविशेषात्मकतां दर्शयति—एवंभूत इति। ईदृग्रूप इत्यर्थः। असौ सामान्यतः प्रत्यायावगतः। ननु समिदादिना यागस्य क उपकारः क्रियते तत्राह—फलारम्भेति। फलमारभ्यतेऽनेनेति फलारम्भोऽपूर्वम्, तदाभिमुख्यञ्च तज्जननानुकूला शक्तिस्तद्रूप एवोपकार इत्यर्थः। इयमेव च शक्तिर्योग्यतेति अखण्डकरणोपकर इति च शास्त्रे व्यवह्रियते। विकृतौ च प्रकृतिवच्छब्देनातिदिश्यत इति बोध्यम्। तत्र चायं विशेषः—आरादुपकारकाङ्गैः प्रधानोत्पत्त्यपूर्वे परमापूर्वजननानुकूला शक्तिरुत्पाद्यते। सन्निपातिभिस्तु प्रधानपूर्वभाविभिरुत्पत्त्यपूर्वजननानुकूला शक्तिरुत्पाद्यते। प्रधानसमकालिकैस्तदुत्तरवर्तिभिश्च प्रक्षेपस्विष्टकृदादिभिस्तु उत्पत्त्यपूर्व एवारादुपकारवदिति। प्राभाकरश्शङ्कते—नन्विति। प्रधानस्य हि प्रकरणं नाङ्गानाम्। इतिकर्तव्यताकाङ्क्षामात्रस्य प्रकरणत्वे तु तेषामपि तदापत्तिरिति भावः। स्वमते त्वधिकारापूर्वेतिकर्तव्यताकाङ्क्षैव प्रकरणमिति नातिप्रसङ्ग इति तात्पर्यम्। इष्टापत्त्या परिहरति—कस्येति। एवं सति परस्पराङ्गत्वमङ्गानामापद्येतेति शङ्कां निरस्यति—अत एवावान्तरेति। वाचनिकाङ्गसन्दंश एव तदुद्भवः। अन्यत्र तु प्रधानाकाङ्क्षयाङ्गाकाङ्क्षातिरोधानान्नातिप्रसङ्ग इति भावः। नन्वेवमिति। 'अव्यक्तासु तु सोमस्स्यात्' इत्याष्टमिकन्यायात् समिदादेश्च स्वार्थविहितदेवताराहित्येनाव्यक्तत्वादिति भावः। प्रतिबन्द्या परिहरति—भवन्मते वेति। साधिकारत्वञ्च विश्वजिन्न्यायेन फलकल्पनाद्बोध्यम्। वाचनिकेति। 'अमावास्यायामपराह्णे' इति वाचनिककालस्य दीक्षोपसदाद्यङ्गसहिते पितृयज्ञेऽसम्भवेन तद्बाधप्रसङ्गादिति तेषां समाधानम्। एतदेवात्रापीत्याह—इहापीति। साङ्गयोर्दर्शपूर्णमासयोः पौर्णमास्यमावास्याविधानात्सौमिकतन्त्रानुष्ठाने तद्बाधस्स्यादिति भावः। वास्तवं समाधिमाह—अपिचेति। 'यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्' इति वचनविहितमाज्यम्, तत्संस्काराश्च ग्रहणादयः, मन्त्रवर्णेन 'समिधो अग्न आज्यस्य' इत्यनेन प्रकाश्यमाना समिद्रूपा देवता, वेद्यादिसंस्कारा उद्धननलवनपरिसमूहनाभिघारणादयः क्रमेण ज्ञेयाः। अङ्गेत्यादि-

'समानत्र होतव्या' इत्यादिभिश्च वाचनिकैरङ्गैर्निवर्तत इति न सौमिकधर्मातिदेशाद्याशङ्कनीयम्। सर्वे ह्यग्न्यन्वाधानादयस्सन्निपातिनोऽङ्गप्रधानसाधारणाः तेनोपांशुयाजवत् प्रयाजादयोऽपि कृत्स्नविधानाः। न च कृत्स्नविधानेष्वतिदेशोऽस्ति। सन्निपत्योपकारकसामग्री च कृत्स्नविधानतेत्यष्टमे वक्ष्यते। अत एव हि पितृयज्ञस्यापूर्वत्वम्। अन्यथा साधिकारत्वाद् दुर्वारस्सोमधर्मातिदेशस्स्यात्। तस्मादस्तीतिकर्तव्यताकांक्षा, तदनुवृत्तिश्च प्रकरणम्।

**अतः प्रधानवाक्यस्य प्रकाराङ्क्षतावशात्।**
**फलाकांक्षं प्रयाजादि तदङ्गत्वं प्रपद्यते॥ ४॥**

## ५

**सू० क्रम** :—दशपूर्णमासयोरुपांशुयाजक्रमे 'दब्धिर्नामासी'ति मन्त्रः **पठ्यते**। स किमुपांशुयाजाङ्गं न वेति संशयः। श्रुतिवाक्ययोरुभयोरभावाल्लिङ्गप्रकरणयोश्चाग्नेयादिष्वविशेषादुपांशुयाजस्य विशेषाभावात्क्रमस्य चाप्रमाणत्वादनङ्गमिति प्राप्ते क्रमादुपांशुयाजस्येत्युच्यते। स्थानसामान्यात्कर्मणां[1] मन्त्राणाञ्च क्रमेण समाम्नातानां यस्य कर्मणः क्रमे यो मन्त्रस्समाम्नातस्तस्मिन्नवगते स्थानसामान्यात्तत्कर्मोपतिष्ठते कर्मोप-

वेद्यादिविशेषणम्। समानत्र एकस्मिन्नेवाहवनीयप्रदेशविशेषे पञ्चापि प्रयाजा होतव्या इत्यर्थः। सन्निपत्योपकारकाङ्गसाकल्यस्य कृत्स्नविधानत्वरूपस्यापूर्वत्वप्रयोजकत्वाद्वक्ष्यमाणावष्टम्भेन तदाह—सर्वे हीति। अतएव हीति। कृत्स्नविधानत्वादेवेत्यर्थः। अन्यथा वाचनिककालबाधप्रसंगप्रकारेण। दुर्वार इति। कालवशेन हि प्रधानसाहित्यबाधेऽपि नाङ्गबाधस्स्यादिति भावः। उक्तमर्थं कारिकया सङ्गृह्णाति—अत इति। प्रयोजनं पूर्वपक्षे प्रयाजादीनां विश्वजिद्वत्स्वातन्त्र्येण फलार्थं प्रयोगः। सिद्धान्ते तु दर्शप्रयोगान्तरे एव तत्सादृगुण्यार्थम्। तथा विकृतावतिदेशानतिदेशावित्यूह्यम्। सूत्रं स्पष्टार्थम्॥ ४॥

क्रमः—उपांशुयाजक्रम इति। आग्नेयानन्तरमुपांशुयाजपाठः। एवमाग्नेयानुमन्त्रणोत्तरं दब्धिरित्याद्यनुमन्त्रणमन्त्र इति यथासंख्यपाठरूपक्रम इत्यर्थः। इतिना च 'अदब्धो भूयास' मिति शेषभागग्रहणम्। अस्य च 'मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरन्। शेषिणं तन्मना भूत्वा स्यादेतदनुमन्त्रणम्'॥ इत्युक्तलक्षणानुमन्त्रणसमाख्या। दब्धिर्हिंसक इत्यर्थः। अदब्धः अहतः। उपांशुयाजाङ्गं नेति। उपांशुयाजमन्त्राङ्गं न वेत्यर्थः। अप्रमाणत्वादिति। श्रुत्यादिवदंगत्वाबोधकत्वादित्यर्थः। क्रमादिति व्याचष्टे—स्थानेति। प्रथमद्वितीयादीत्यर्थः।

---

१. द्वितीयस्थाने पठितस्य दब्धमन्त्रस्य स्थानसाम्येन द्वितीयस्थानपठितोपांशुयाजोपस्थापकत्वात्तस्यापि स्थानसाम्येन मन्त्रोपस्थापकत्वाच्च स्थानसाम्यादुपस्थितयोरुपांशुयाजमन्त्रयोः परस्पराकांक्षादिवलेनांगांगिभावसम्भवात्तयोः क्रमेण समाम्नानमाकांक्षालक्षणं प्रकरणं तद्वारा वाक्यलिंगश्रुतीश्च कल्पयित्वांगत्वं बोधयितुं शक्नोतीति भवति क्रमो विनियोगे प्रमाणम्।

लब्धावपि मन्त्रः। तयोरेवं समानस्थानाम्नानं तन्नूनं सम्बन्धार्थमित्येवमाकांक्षा परिकल्प्यते। तेनैकवाक्यता परिकल्प्यते। एवं काम्येष्टीनां याज्यानुवाक्यानाञ्च। क्रम इति देशसामान्यमुच्यते। स च द्विविध :- पाठसादेश्यमनुष्ठानसादेश्यञ्च। पाठसादेश्यमपि द्वेधा—यथासंख्याम्नानं सन्निध्याम्नानञ्च। यथासंख्यस्य दर्शितमुदाहरणम्। सन्निधिसमाम्नानस्यापि सान्नाय्यपात्रशुन्धनक्रमाच्छुन्धध्वमिति मन्त्रस्य तदङ्गत्वम्, अनुष्ठानसादेश्यात्पशुधर्माणामग्नीषोमीयाङ्गत्वं वक्ष्यते[1]॥ ५॥

६

सू० आख्या—दर्शपूर्णमासादिष्वाध्वर्यवहौत्रौद्गात्रादिसमाख्याताः पदार्थाः किमध्वर्य्वादिभिरेव कर्तव्या उतानियमेनेति। श्रुत्यादिभिर्नियमाभावात्समाख्यायाश्च पदार्थमात्रविषयत्वेनाविधायकत्वेनाप्रमाणत्वादनियम इति प्राप्त उच्यते—अनादिस्तावदपौरुषेयी समाख्या। तेनाध्वर्यवादिशब्दाः पदार्थानां वाचका इति तावत्प्रमाणम्। सम्बन्धनिमित्ता च समाख्या नासति सम्बन्धेऽवकल्पत इत्यस्ति नूनं कर्तॄणां पदार्थाना-

---

मन्त्र इत्यत्रोपतिष्ठत इत्यनुषङ्गः। सम्बन्धार्थमिति। लोके चैत्रमैत्राभ्यां दधिपयसी देये इत्युक्ते यथासंख्येनान्वयप्रतीतिदर्शनादिति भावः। कथं सम्बन्धार्थमित्याकाङ्क्षायां प्रकरणादिपूर्वप्रमाणकल्पनयेत्याह—आकाङ्क्षेति। उपांशुयाजविषयिष्यसाधारणीत्यर्थः। ननु 'लिंगक्रमसमाख्यानादि'ति वक्ष्यमाणेन पौनरुक्त्यमित्याशङ्क्यात्रैव व्युत्पादितस्य क्रमस्य लिङ्गेनापेक्षामात्रं तत्रोच्यत इत्याशयेन तत्राप्यमुं न्यायमतिदिशति—एवमिति। सूत्रं व्याकुर्वन्नेव क्रमसामान्यलक्षणं तद्विशेषविभागार्थमाह—क्रम इतीति। एवञ्च क्रमश्च विनियोगे प्रमाणम्, कुतः? देशसामान्यरूपात्तस्मादाकाङक्षादिकल्पनेनांगत्वबोधादिति सूत्रार्थ इति भावः। अनुष्ठानसादेश्यं एकप्रदेशेऽनुष्ठानम्। सन्निधिसमाम्नानस्यापीत्यमन्तरमुदाहरणमित्यनुषज्यते 'शुन्धध्वं दैव्याय कर्मणे देवयज्यायै' इति शुन्धनमन्त्रः। प्रयोजनं स्पष्टम्॥ ५॥

आख्या—पदार्था इति। शाखाच्छेदनपुरोनुवाक्यास्तोत्रादयः क्रमेण बोध्याः। पदार्थमात्रेति। पदार्थमात्रोपस्थापकत्वेनेत्यर्थः। मात्रपदेनांगांगित्वव्यवच्छेदः। ननु समाख्यया कर्तृपदार्थयोस्सम्बन्धसामान्यावगमादाकाङ्क्षावशेनांगांगिभावावगतिस्स्यादत आह—अविधायकत्वेनेति। एकस्मिन् पदे उद्देश्यविधेयभावासम्भवेन विधेयासमर्पकत्वादिति भावः। न तु विधिवद्विधायकत्वाभावेनेत्यर्थः। तस्य श्रुत्यादिसाधारण्येनोपन्यासानर्हत्वादिति बोध्यम्। अनादिरिति। एवञ्च सम्बन्धे सति समाख्याप्रवृत्तिः, तस्याञ्च सत्यां सम्बन्ध इत्यन्योन्याश्रयनिरासः। पदार्थानाञ्चेत्यादिहोतृचमसादिसमाख्याभिप्रायम्। आध्वर्यवादिपदस्य अध्वर्योः कर्मेत्यर्थेऽञ् विधानेनाध्वर्युसम्बन्धिकर्मवाचकत्वात्। परन्तु अध्वर्युकर्तृकत्वस्यात्रापि कल्पने

---

१. यस्मिन्दिनेऽग्नीषोमीयः पशुरनुष्ठीयते, तस्मिन्दिने आम्नानात्पशुधर्माणामग्नीषोमीयार्थत्वमिति 'तुल्यस्सर्वेषां पशुविधिः' इत्यधिकरणे वक्ष्यत इत्यर्थः।

ञ्च कश्चित्सम्बन्ध इति निश्चिते ततः कर्तॄणां कार्यापेक्षत्वात्पदार्थानाञ्च कर्त्रपेक्षत्वात्समाख्यया च मिथःपर्युपस्थापितानां योग्यतया क्रियाकर्तृसम्बन्धमेव प्रयोगविधिर्विधत्त इति सिद्धस्समाख्याया नियमः ॥ ६ ॥

७

**सू० श्रुति**—इदानीं श्रुत्यादीनामेकविषयसमवायेन विरोधे सति बलाबलं विचार्यते। प्रथमं तावच्छ्रुतिलिङ्गयोश्चिन्त्यते। एवं श्रूयते 'ऐन्द्रचा गार्हपत्यमुपतिष्ठत' इति। तत्र संशयः—किमिन्द्रस्यैवोपस्थानं कर्तव्यमुतेन्द्रस्य वा गार्हपत्यस्य वा? अथवा समुच्चयः? अथवा गार्हपत्यस्यैव? इति। यदि लिङ्गं बलीयस्तत इन्द्रोपस्थानम्, अथ तुल्यबलत्वं ततो विकल्पः, अथ तुल्यबलत्वेऽप्यविरोधस्ततस्समुच्चयः, श्रुतिबलीयस्त्वे तु गार्हपत्यस्यैवेति। यश्शब्दस्य श्रवणादेव विनियोगः प्रतीयते स श्रौत इत्युच्यते। श्रवणं श्रुतिः, गार्हपत्यमिति च ब्राह्मणगतद्वितीयान्तशब्दश्रवणादेव गार्हपत्यस्य प्राधान्यमुपस्थानं प्रति गम्यते। ऐन्द्रचाश्च तृतीयान्तायाः करणत्वमिति श्रौतोऽयं विनियोगः। मन्त्रगतात्तु इन्द्रपदादिन्द्रस्वरूपमात्रं श्रुत्यावगम्यते, न तु मन्त्रं प्रतीन्द्रस्य प्राधान्यम्, मन्त्रस्य वा करणत्वं केनचिच्छब्देनोच्यते, किन्तु मन्त्रस्येन्द्राभिधानसामर्थ्यमालोच्य

---

वेति बोध्यम्। प्रयोगविधिरिति समाख्ययोपस्थितिमात्रम्। अंगत्वावगमस्तु कल्पितप्रयोगवाक्येनेति नोक्तदोष इति भावः। आख्याप्येवम् अंगत्वे प्रमाणम्। तदर्थत्वात्सम्बन्धार्थत्वादिति सूत्रार्थः॥ ६॥

श्रुति—श्रुत्यादिप्रमाणव्युत्पादनं विना तेषां बलाबलनिरूपणायोगादुपजीवकत्वसङ्गत्या तेषां बलाबलं चिन्त्यत इति सूचयन्नाह—इदानीमिति। एकस्मिन् विषये शेषरूपे समवायो भिन्नशेषिसम्बन्धबोधकत्वेन मिलनं तेनेत्यर्थः। यथा 'ऐन्द्रचा गार्हपत्यम्' इत्यत्रैन्द्रीरूप एकस्मिन् शेषे श्रुतिलिंगयोर्गार्हपत्येन्द्ररूपभिन्नशेषिसम्बन्धबोधकत्वेन मिलितयोर्विरोधः। अत्रैव श्रुतिवाक्ययोरविरोधाद्भिन्नेति शेषिविशेषणम्। श्रुतिवाक्याभ्यान्त्वेक एव शेषी गार्हपत्यो बोध्यत इति तद्वारणम्। 'व्रीहीन् प्रोक्षति' इति श्रुतेः 'बर्हिर्देवसदनं दामि' इति लिंगस्य च विरोधाभावादेकस्मिन्निति विषयविशेषणमिति दिक्। प्रथममिति। पाठक्रमादित्यर्थः। किमिति। अत्र च किमिन्द्रशेषत्वमेव किं वा इन्द्रशेषत्वं गार्हपत्यशेषत्वञ्च विकल्पेन? अथवा समुच्चयेनोभयशेषत्वम्? उत गार्हपत्यशेषत्वमेवेति संशयोपन्यासे कर्तव्येऽपि फलमुखेन तदुपन्यासे तात्पर्यम्, शेषत्वविचारस्यैवाध्यायार्थत्वात्, बलाबलविचारस्यापि तदर्थत्वेनैव कर्तव्यत्वात्। ननु गार्हपत्यपदेन्द्रपदरूपश्रुतेरुभयत्र सत्वात्कथं बलाबलचिन्तेत्याशङ्क्याह—य इति। अङ्गाङ्गित्वरूपे विनियोगे एकत्र श्रुतिः, इन्द्राङ्गत्वे तु न सा, किन्तु लिङ्गमेवेति भावः। द्वितीयान्तेति। क्रियाजन्यफलशालित्वस्य तदर्थत्वादिति

नूनमनेन मन्त्रेणेन्द्र उपस्थेय इति श्रुतिः कल्प्यत इति लौङ्गिकोऽयं विनियोगः। गृह्णीम एतदिन्द्रार्थत्वं लिङ्गादिति। ननु गार्हपत्यार्थत्वं मन्त्रस्य श्रौतम्। कथम्?

**शेषशेषित्वमात्रं हि श्रुत्यैन्द्रीगार्हपत्ययोः।**
**उक्तमन्योन्यविषयनियमस्त्वेकवाक्यतः॥**

गार्हपत्यमिति हि शेषितामात्रमनिर्धारितशेषविशेषं श्रुत्योक्तम्, ऐन्द्रीविषयन्तु तदिति वाक्यादवगन्तव्यम्। तथैन्द्रयेत्यनवगतशेषिविशेषं शेषत्वं श्रुतं वाक्याद्गार्हपत्यविषयं भवति। यत्तु श्रुत्युपात्तं सामान्यरूपं न तल्लिगेन विरुध्यते। सम्भवति हि गार्हपत्यस्य काञ्चिदाग्नेयीं प्रति प्राधान्यम्, ऐन्द्रयाश्चेन्द्रं प्रति शेषत्वम्। अन्योन्यान्वयस्तु वाक्यावगतो लिङ्गेन विरुध्यते। तेन लिङ्गवाक्ययोरेव विरोधः, न श्रुतिलिङ्गयोः। अत्राभिधीयते—

**सत्यं वाक्यविरोधोऽस्ति श्रुतिश्चापि विरुध्यते।**
**सहिते हि विरुध्येते न तु लिंगेन केवले॥**

यथैव हि श्रुतिमात्रमविरुद्धम्, एवं वाक्यमपि श्रुतिमनादृत्यालोच्यमानमविरुद्धमेव। यदि हि गार्हपत्यशब्द इन्द्रं लक्षयेत् द्वितोया वा सप्तम्यर्थम्, ततो लिङ्गाविरोधेन गार्हपत्यपदमैन्द्रयोपतिष्ठत इत्येतैकवाक्यतां गच्छति। यस्तु द्वितीयान्तगार्हपत्यशब्दश्रवणादेवार्थः प्रतीयते गार्हपत्यप्राधान्यम्, स लिङ्गेन विरुध्यते। अतो न केवलं वाक्यं न केवला श्रुतिर्लिङ्गेन विरुध्यते, वाक्यसहिता तु श्रुतिर्विरुध्यते। कथं पुनरेवमुभयविरोधस्सन्नयं श्रुतिविरोध एव व्यवह्रियते, न वाक्यविरोधः? श्रुतेः प्राधान्यात्। विनियोगो हि प्रमेयः, स च साध्यसाधनरूपः श्रुत्यैवोक्तः, वाक्यन्तु प्रतियोगिविशेषसमर्पणेन श्रुतिमनुगृह्णद्गुणभूतम्। प्रधानेन च विरोधो लक्ष्यते न गुणेन। अयं चापरो विशेषः, येन श्रुतेरेवात्र लिङ्गेन विरोधो न वाक्यस्य। यस्य हि लिङ्गे बलीयसि बाधस्तल्लिगेन विरुध्यते, न चात्र लिङ्गे बलीयसि वाक्यं शक्यते बाधितुम्। तद्-

---

भावः। नेदं श्रुतिलिङ्गोदाहरणमिति शङ्कते—गृह्णीम इति। श्लोकं व्याचष्टे-गार्हपत्यमित्यादिना। यथा केवला श्रुतिर्न लिङ्गेन विरुध्यते। तथा वाक्यमपि केवलं न लिङ्गेन विरुध्यत इति लिङ्गवाक्यविरोधोऽप्यत्र न स्यात्। ऐन्द्या गार्हपत्यसमीपे स्थित्वा इन्द्रमुपष्ठित इति लिङ्गाविरोधेनैव वाक्योपपत्तेः। एवञ्च श्रुतिवाक्ययोर्मिलितयोर्लिङ्गेन विरोध इति वक्तव्यमित्याह—सत्यमित्यादि। तर्हि कथं श्रुतिलिङ्गयोर्विरोध इत्युच्यते, न लिङ्गवाक्ययोर्विरोध इति शङ्कते—कथं पुनरिति। समाधत्ते—श्रुतेरिति। 'प्राधान्येन व्यपदेशा भवन्ति' इति न्यायाद्यथा राजैव विरोधव्यपदेशः, न तु राजभटैन। तथा प्रकृतेऽपीत्यर्थः। एवं व्यपदेशमात्रसमर्थनेऽपि वस्तुतः श्रुतिमात्रेण विरोधो न समर्थितः स्यात्, अतस्समाध्यन्तरमाह—अयञ्चेति[1]। येन हि यद्बाध्यते तेन

---

१. ययोर्हि प्रबलदुर्बलभावे सति बाध्यबाधकभावो भवति, तयोरेव विरोधः, नान्यस्य, विरोधस्थले प्रबलेन दुर्बलस्य बाधावश्यम्भावात्। यत्र च वाक्यस्य नाप्रामाण्यप्रसक्तिः, तत्रैव

बाधे हि पृथग्भूते गार्हपत्येन्द्रीपदे न कञ्चिदर्थं प्रतिपादयतः, पदमात्रस्याप्रामाण्यात्। तत्र श्रुतेरत्यन्तबाधो वाक्यस्य च। यत्र तु पृथग्भूतस्याप्यर्थप्रतिपादकत्वं न विहन्यते, यथा स्योनादिषु, तत्रैव वाक्यबाधो नैवञ्जातीयकेषु। ततश्चासम्भवति वाक्यस्य बाधे श्रुतिरेव बाध्येतेति श्रुतिलिङ्गयोरेवैष विरोध इति युक्तो विचारः किं बलीय इति। तदर्थञ्च किं श्रुतिवल्लिङ्गाद्यपि स्वतः प्रमाणमुत श्रुतिकल्पनेनेति।

तत्र स्वतः प्रमाणत्वं लिङ्गादेः श्रुतिवन्मतम्।
सामर्थ्यालोचनादेव तादर्थ्यं हि प्रतीयते॥
गार्हपत्यार्थता श्रुत्येत्युभयोस्तुल्यकक्षता।
तेन द्वयोरुपस्थानं विकल्पेन भविष्यति॥
समुच्चयेन वा मन्त्रः प्रयुज्येत द्वयोरपि।
प्रतिप्रधानमावृत्तिर्गुणानां न विरुध्यते॥
यद्यपि स्याद्बलीयस्त्वं श्रुतेर्लिङ्गात्तथापि तु।
अविरोधादबाधस्स्यात्सम्भवो हि समुच्चयः॥
यद्वा सामर्थ्यरूपत्वाल्लिङ्गं स्यात् प्रबलं श्रुतेः।
वस्तुशक्त्यनुसारी हि सर्वश्शब्दः प्रवर्त्तते॥
अत्राभिधीयते सत्यं यद्यत्यन्तमशक्यता।
गार्हपत्ये तु सामर्थ्यं गौणं मन्त्रस्य विद्यते॥
गुणाद्वाप्यभिधानं स्यादित्यत्रैतद्धि साधितम्।
तन्न तावद् बलीयस्त्वं लिङ्गस्य न च तुल्यता॥

---

तस्य विरोध इत्युच्यते नान्येन। इह तु वाक्यबाधेऽप्रामाण्यमेव प्रसज्येतेति न तेन विरोधश्शक्यो वक्तुम्। श्रुतिबाधे तु नाप्रामाण्यप्रसंग इति तद्बाधात् श्रुत्यैव लिंगस्य विरोध इत्यर्थः। कथं तर्हि 'स्योनं त' इत्यादिमन्त्रे वक्ष्यमाणो लिङ्गेन वाक्यस्य विरोधः, तत्राह—यत्रेति 'तस्मिन् सीद' इत्यादेर्भिन्नार्थसाधनप्रतिपादकत्वेनैकवाक्यत्वबाधेऽप्यप्रामाण्याप्रसक्तेरित्यर्थः। द्वयोरिति। इन्द्रगार्हपत्ययोरित्यर्थः। ःबलेन दुर्बलस्य बाध एव युक्त इत्याशङ्क्याह—यद्यपीति। एवञ्च मन्त्रावृत्त्या समुच्चयसम्भवात् श्रुतिप्राबल्येऽपि न लिङ्गबाध इत्यर्थः। तत्र तावदन्त्यपक्षस्य सूचीकटाहन्यायेन गतार्थत्वेन परिहारमाह—सत्यमिति। लिङ्गस्य द्वैविध्यादेका-

---

वाक्यस्य बाधः। यथा—'स्योनं ते' इत्यत्र। तत्र वाक्यस्य बाधेऽपि तदवयवयोः पृथग्भूतयोरपि स्वस्वार्थप्रतिपादनसंभवेनाप्रामाण्याभावात्। अप्रामाण्यप्रसक्तौ तु वेदाप्रामाण्यप्रसङ्गादेव न बाधसंभवः। ततश्च प्रकृते लिङ्गेन वाक्यबाधे श्रुतिवाक्ययोरुभयोरप्रामाण्यापत्त्या लिङ्गे बलवत्यपि वाक्यस्य बाधितुमशक्यत्वान्न लिङ्गवाक्यविरोधः। श्रुतिबाधे तु नाप्रामाण्यापत्तिः। श्रौतार्थपरित्यागेऽप्यर्थान्तरे प्रामाण्योपपत्तेः। तस्माल्लिङ्गे बलीयसि श्रुतिर्बाधितुं शक्यत इति श्रुतिविरोध एवायमिति भावः।

विनियोगः श्रुतेः पार्श्वे लिङ्गस्यारादसौ स्थितः।
यावदेव हि मन्त्रार्थो मन्त्रेण प्रतिपाद्यते॥
तावदेव श्रुतिर्मन्त्रं गार्हपत्यार्थतां नयेत्।
मन्त्रार्थं मन्त्रतो बुद्ध्वा पश्चाच्छक्तिं निरूप्य च॥
मन्त्राकाङ्क्षावशेनेन्द्रशेषत्वे श्रुतिकल्पना।
श्रुत्या प्रत्यक्षया पूर्वं गार्हपत्याङ्गतां गते॥
निराकाङ्क्षीकृते मन्त्रे निर्मूला श्रुतिकल्पना।
तेन शीघ्रप्रवर्तिन्या श्रुत्या लिङ्गस्य बाधनम्॥
प्रत्यक्षे चानुमाने च यथा लोके बलाबलम्।
शीघ्रमन्थरवृत्तित्वात्तथेह श्रुतिलिङ्गयोः॥
अविरोधादबाधो यो वर्णितः स न युज्यते।
लिङ्गस्य हि प्रमाणत्वं मन्त्राकाङ्क्षानिबन्धनम्॥
ताञ्च श्रुतिर्निकृन्तन्ती नाविरोधेन गच्छति।
विरोधे च श्रुतिर्लिङ्गं बलीयस्त्वेन बाधते॥

लिङ्गवाक्ययोर्विरोधे 'स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्प-

---

भावेऽपि अपरसाहाय्येन श्रुत्या विनियोगसम्भवान्न मुख्यसामर्थ्यावश्यकतेत्यर्थः। न चेति। न श्रुतितुल्यतेत्यर्थः। एतदेवोपपादयति—विनियोग इति। श्रुतेः पार्श्वे समीपे विनियोगोऽङ्गत्वबोधः, लिङ्गस्यासौ विनियोग आरात् दूरे स्थित इत्यन्वयः। पश्चादिति पाठे तु श्रुतेः श्रुतिसम्बन्धिविनियोगात्पश्चादनन्तरम् आराद्दूरे स्थित इत्यर्थः। एतदेव विशदयति—यावदेवेति। अयमर्थः—मन्त्रार्थावगतेः श्रुत्यर्थाङ्गत्वावगतेश्चैकः कालः। मन्त्रार्थावगमोत्तरं तदङ्गत्वयोग्यतारूपलिङ्गज्ञानम्, ततो मन्त्राकाङ्क्षाप्रतिसन्धानम्, ततः श्रुतिकल्पनम्, ततोऽङ्गत्वबोध इति विप्रकर्ष इति। न च लिङ्गादुपस्थितस्यैव साध्यसाधनभावस्य प्रयोगविधिना विधानसम्भवाच्छ्रुतिकल्पनमसिद्धमिति वाच्यम्। सिद्धान्ते शब्दाध्याहाराङ्गीकारेण शब्दानुपस्थितस्य साध्यसाधनभावस्य प्रयोगविधिविधेयत्वायोगात्तत्प्रतिपादकश्रुतिकल्पनस्यावश्यकत्वात्। नन्वेवं विलम्बितप्रवृत्तिकस्यापि लिङ्गस्य कुतो बाधः, तत्राह—श्रुत्येति। निर्मूला मन्त्राकाङ्क्षारूपमूलरहिता। तेन आकाङ्क्षारूपमूलोच्छेदेन। अपवृत्तस्य लिङ्गविनियोगस्य कथं बाध इत्याशङ्कां लौकिकदृष्टान्तेनाप्राप्तबाधत्वव्युत्पादनेन[1] परिहरति—प्रत्यक्षे चेति। अविरोधं पूर्वोक्तं परिहरति—अविरोधादिति। गच्छति प्रवर्तते।

लिङ्गवाक्ययोः। स्योनमिति। आज्येनोपस्तृतायां पात्र्यां पुरोडाशस्स्थाप्यते। तत्रायं

---

१. यथा वह्न्यौष्ण्यप्रत्यक्षेण शीघ्रप्रवृत्तिकेन मन्थरप्रवृत्तिकं तदनौष्ण्यानुमानं स्वप्रवृत्तिप्रतिबन्धादेव बाध्यते, तद्वल्लिङ्गस्यापि शीघ्रप्रवृत्तश्रुत्या वृत्तिप्रतिबन्धाद्बाध इत्यप्राप्तबाध इति बोध्यम्।

यामि। तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमान' इति। तत्र संशयः- किं सकलोऽयं सदनकरणे पुरोडाशप्रतिष्ठापने च विकल्पेन समुच्चयेन वा प्रयोक्तव्यः? उत सकलो वा विभज्य वा, अथवा विभज्यैव स्योनादिः कल्पयाम्यन्तः सदनकरणे, तस्मिन् सीदेति प्रतिष्ठापने? इति। तत्र यदि वाक्यं बलीयस्ततः सकलमेवोभयत्र, तुल्यबलत्वे सकलं वा विभज्य वा, लिङ्गबलीयस्त्वे तु विभज्यैवेति। तत्र-

यावन्ति हि प्रयुज्यन्ते पदानि सति संभवे।
तेषां स्यादेकवाक्यत्वं वाक्यभेदो न युज्यते॥
तस्मिन्सीदेति पूर्वोक्तसापेक्षत्वाच्च गम्यते।
वाक्यैकत्वमतः सर्वमुभयत्र प्रयुज्यते॥
यद्वा तुल्यबलत्वं स्यादुभयोर्लिङ्गवाक्ययोः।
श्रुत्या प्रत्यक्षया लिङ्गं कल्प्यश्रुतिनिराकृतम्॥
कल्प्यश्रुतित्वमिह तु समानमुभयोरपि।
तेन तुल्यबलत्वं स्यादिति प्राप्तेऽभिधीयते॥

---

मन्त्र:—हे व्रीहीणां मेध सारभूत पुरोडाश ते सदनं स्थानं स्योनं श्लक्ष्णतया सुखहेतुं कृणोमि करोमि घृतस्य धारया सुशेवं सुखशयनं कल्पयामि तस्मिन्नमृतरूपे सीद तिष्ठ सुमनस्यमानः सन्तुष्टस्सन् प्रतितिष्ठ प्रतिष्ठां प्राप्नुहीति तदर्थः। उतेति। साकल्यविभागयोर्विकल्प इत्यर्थः। विभज्यैवेत्यस्य विवरणम्—स्योनादिरिति। विकल्पत्रये क्रमेण हेतुत्रयं दर्शयति—यद्रीत्यादि विभागो लिङ्गवशाद्भवेत्। वाक्यप्राबल्ये तु लिङ्गबाधान्न स इति भावः। उभयत्रेति सामान्योक्त्या विकल्पसमुच्चयोः क्रोडीकारः। न च मन्त्रवाक्यस्य सादनविशिष्टसदनप्रकाशने सदनं विशिष्टसादनप्रकाशने च तात्पर्ये तदनेकत्वादेकवाक्यत्वानुपपत्तिरिति वाच्यम्, उच्चारणभेदेन तात्पर्यभेदोपपत्तेः। अनेन मन्त्रेण सदनसादने प्रकाशयेदिति चैकैव मूलश्रुतिः कल्पनीयेति। वस्तुतस्तु—अनेन मन्त्रेण सदनं प्रकाशयेदित्येकैव श्रुतिः कल्प्यते। न च विनिगमकाभावः, मुख्यतयासञ्जातविरोधित्वेन सदनकरणस्यैव मुख्यविशेष्यत्वम्, सादनस्य तु तस्मिन् सीदे' ति सापेक्षत्वबोधात्सदनविशेषणत्वमिति नियामकसत्वात्। तस्मात्सदने सकलो मन्त्रः प्रयोक्तव्य इत्येव पक्षो निष्कृष्ट इति ज्ञेयम्। तुल्येति। एकस्यार्थस्य द्विः प्रकाशनवैयर्थ्यात्सकलं च विभज्य चेति समुच्चयो नोक्तः। न युज्यत इति। पूर्वार्द्धेन सदनं प्रकाशयेदुत्तरार्द्धेन सादनं प्रकाशयेदिति श्रुतिद्वयकल्पनागौरवादिति भावः। नन्वाख्यातभेदे कथमेकवाक्यत्वमत आह—तस्मिन्निति। तस्मिन्निति विभागे साकांक्षत्वात् 'येन कर्मणेर्च्छेत्तत्र जयान् जुहुयात्' इत्यादिवदेकवाक्यत्वमावश्यकम्, अन्यथा साकांक्षतया बोधकत्वासम्भवेन लिङ्गस्यैवासम्भवापत्तेरिति भावः। उभयत्रेति। विकल्पेन समुच्चयेन वेत्यर्थः। द्वितीयपक्षहेतुभूतं तुल्यबलत्वमाह—यद्वेति। एतदेवोपपादयति—कल्प्येति। कल्प्या श्रुतिर्येन तथात्वमित्यर्थः। उपसंहरति—तेनेति। एवञ्च वाक्यस्वारस्यात्सकलप्रयोगः लिङ्गस्वारस्याच्च विभज्येति द्वितीयपक्षः पर्यवसित इति

सत्यं कल्प्या श्रुतिः किन्तु लिङ्गादह्नाय कल्प्यते।
वाक्येन प्रथमं लिङ्गं कल्पयित्वा ततः श्रुतिः॥
कल्पनीयेत्यतो वाक्याच्छ्रुत्यर्थो विप्रकृष्यते।
सन्निकृष्टस्तु लिङ्गस्य तेनैतत् प्रबलं ततः॥

स्योनं[1] ते सदनं कृणोमीत्यस्य हि सदनकरणसामर्थ्यमनन्यापेक्षं स्वरूपत एव प्रत्यक्षमवगम्यते। ततश्च तत्र श्रुतिमनुमाय शीघ्रं विनियुज्यते, पुरोडशप्रतिष्ठापने त्वस्य न स्वरूपतस्सामर्थ्यं गम्यते। 'तस्मिन् सीदे' त्यनेन प्रतिष्ठापनमुच्यते तदेकवाक्यतापेक्षया तु पूर्वार्धस्यापि स्वार्थविशिष्टपुरोडाशप्रतिष्ठापनसामर्थ्यं लाक्षणिकं कल्पयित्वा ततः श्रुतिकल्पनमिति विप्रकर्षान्न तत्र विनियुज्यते। एवं तस्मिन्सीदेत्यस्यापि स्वार्थे सामर्थ्यं क्लृप्तमिति तत्रैव विनियोगो न सदनकणे, कल्प्यसामर्थ्यात्वात्। एवमर्थभेदेन नानावाक्यत्वोपगमान्नैकवाक्यतासम्भवः। तस्माद्विभज्य विनियोगः।

वाक्यप्रकरणयोर्विरोधे चिन्त्यते। दर्शपूर्णमासयोस्सूक्तवाकनिगदः। तत्र "अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम्, इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्रातामि" त्यादि श्रुतम्। तत्राग्नीषोमादिदेवतापदं

---

भावः। अह्नायेति। वाक्यापेक्षया शीघ्रमि ? त्यर्थः। कथं तत्राह—वाक्येनेति। लिङ्गम् सदनविशिष्टसादनप्रकाशनरूपम्। श्रुत्यर्थः—अङ्गाङ्गिभावः। एतदेव प्रपञ्चयति—स्योनं त इत्यादिना। लाक्षणिकमिति। विशेषणप्रकाशनद्वारेत्यर्थः। वस्तुतस्तु—'अर्थैकत्वादेकं वाक्यम्' इत्यत्रैकवाक्यताया निरासान्न तत्सम्भव इत्याह—एवमिति।

वाक्यप्रकरणयोः। निगद इति। अस्तीति शेषः। अग्नीषोमौ इदं हविः—प्रस्तररूपम्, अजुषेतां—पूर्वपूर्वप्रयोगे असेवेताम्, अवीवृधेतां वृद्धिमन्तावभवताम्, ज्यायो-ज्येष्ठं

---

१. ननु वाक्याच्छ्रुतिरेव कल्प्यताम्, किमन्तरा लिङ्गकल्पनेन ? तथा सति कथं सन्निकर्षविप्रकर्षौ इति चेदाह-स्योनं त इत्यादि। अयमर्थः—यथा 'ऐन्द्र्या' इत्यत्र सामर्थ्यमनालोच्य प्रवर्तमानः प्रत्यक्षविनियोगोऽस्ति तथात्र नास्ति, किन्तु कल्प्यः। विनियोज्यसामर्थ्यानुसारेण च विनियोगः कल्प्य इति पूर्वमुक्तम्। तेन विनियोज्यस्य सामर्थ्यं पर्यालोचनीयम्। तस्मिश्च पर्यालोच्यमानेऽत्र पूर्वार्धस्य सदनकरण एव सामर्थ्यं प्रत्यक्षमवगम्यते, न सादन इति सादने तस्य विनियोगसिध्यर्थं सदनकरणपूर्वकत्वावच्छिन्नसादनविशेषसमर्पकतया गौणसामर्थ्यात्मकं लिङ्गं कल्प्यम्। एवमुत्तरार्धस्यापि सादन एव प्रत्यक्षं सामर्थ्यमवगम्यते सदनकरणे तु सादनकरणार्थत्वरूपविशेषसमर्पकतया गौणं तत्कल्प्यम्। तस्माद्वाक्येन लिङ्गं कल्पयित्वैव श्रुतिः कल्प्येति समभिव्याहारमात्रात्प्रथमप्रतीयमानेनापि वाक्येन श्रुतिकल्पना विप्रकृष्यते। लिङ्गेन तु प्रथमावगतेन प्रत्यक्षसामर्थ्यरूपेण साक्षादेव श्रुतिः कल्पयितुं शक्येति युक्तौ सन्निकर्षविप्रकर्षाविति।

लिङ्गात्पर्वद्वये विनिष्कृष्य प्रयोक्तव्यमिति स्थितम्। तदेव ववयभूतानीदं हविरजुषेतामित्यादीनि यानि तानि ततो विच्छिद्यान्यत्रापि किं प्रकरणाविशेषात्प्रयुज्येरन् ? उत देवतापदेनैकवाक्यतया तद्वदेव व्यवस्थितानि ? इति। नन्वारादुपकारकाणामेव प्रकरणं विनियोजकं न सन्निपातिनाम्, 'असंयुक्तं प्रकरणादि'ति ह्युक्तम्। सन्निपातिनश्च सर्वे श्रुत्यादीनामन्यतमेन संयुक्ता भवन्ति, सन्निपाती च सूक्तवाकः, श्रुत्या प्रहरणसाधनत्वाल्लिङ्गेन च देवतास्मरणार्थत्वात्। तदन्तर्गताश्च 'इदं हविरजुषेतामि' त्यादयः। संयुक्तत्वान्न प्रकरणं तेषां विनियोजकम्। सम्भवति च विनियोजकत्वे विरोधो नासति। तस्मान्नात्र वाक्यप्रकरणयोर्विरोध इत्यनुदाहरणत्वम्। स्यादेतदेवं यदि सन्निपातिनां प्रकरणं न विनियोजकं स्यात् न च तथा, अवघातादीनामपि प्रकरणादेव क्रतुभावनेतिकर्तव्यताभूतानां क्रत्वर्थत्वम्। असंयुक्तमिति च न प्रकरणग्राह्यस्य विशेषणं किन्तु पूर्वपक्षवादी श्रुत्यादीनामेव विनियोजकत्वं तदसंयुक्तस्य नास्ति विनियोग इति मन्यते, तं प्रत्युच्यते—श्रुत्याद्यसंयुक्तमपि प्रकरणेन विनियुज्यत इति। यद्वा प्रकरणविरोध्यर्थासंयोगाभिप्रायमसंयुक्तग्रहणम्, तदप्येतदधिकरणसिद्धबलाबलाङ्गीकारेणोक्तम्। अतो युक्तमुदाहरणम्। ये त्वारादुपकारकेष्वेव प्रकरणस्य व्यापारस्सन्निपातिनान्तु

---

महः-तेजः, अक्रातां-कृतवन्तावित्यर्थः। स्थितमिति। 'कृत्स्नोपदेशादुभयत्र सर्ववचनमि'-त्यत्र द्वितीयपादे सिद्धान्तितमित्यर्थः। तदन्तर्गता इत्यारभ्य इत्यादय इत्यन्तं पृथग्वाक्यम्। उक्तार्थस्य प्रकृतोपयोगमाह—तस्मादिति। उदाहरणतां समर्थयति—स्यादेतदिति। न च तथा न विनियोजकमिति नेत्यर्थः। क्रत्वपूर्वाङ्गत्वं विना भाव्याकाङ्क्षाया अनिवृत्तेस्तस्य च प्रकरणाधीनत्वादिति भावः। न च सिद्धरूपाणां मन्त्रादीनामक्रियात्मकतया कथं तद्विशेषरूपेतिकर्तव्यताकाङ्क्षारूपप्रकरणविषयतेति वाच्यम्। उच्चारणदेवताप्रकाशनादिक्रियायोगेन तेषामपि प्रकरणविषयत्वोपपत्तेः। तदुक्तम्—

'नावान्तरक्रियायोगादृते वाक्योपकल्पितात्।
गुणद्रव्ये कथंभावैर्गृह्णन्ति प्रकृताः क्रियाः'॥ इति॥

अवघातादीनान्तु क्रियारूपत्वात्स्वत एव प्रकरणग्राह्यतेत्याह—अवघातेति। कथं तर्हि सूत्रे असंयुक्तमित्युक्तं तत्राह—असंयुक्तमितीति। विशेषणं संयुक्ताद्व्यावर्तकम्। अप्यर्थाध्याहारक्लेशादाह—यद्वेति। अस्यार्थस्यैतदधिकरणसिद्धत्वात्तत्रोक्तिवैयर्थ्यमित्याशङ्क्यानुवादतया वस्तुकथनमात्रमित्याह—तदपीति। ये त्विति। प्राभाकरा इत्यर्थः। एवं हि तन्मतप्रक्रिया—स्वसन्निहितसकलग्राहकेण प्रधानापूर्वेण ग्रहणं नाम तदन्वितत्वेनाभिधानम्। व्यवहारेण सर्वेषां पदानां कार्यान्विताभिधायकत्वव्युत्पत्तेः। एवञ्चारादुपकारकस्य प्रयाजादेस्तदन्वयो न करणतया सम्भवति, संनिहितधात्वर्थाविरोधात्। ततश्च करणेतिकर्तव्यतात्वेन तात्पर्यावसानमितिकर्तव्यताकाङ्क्षालक्षणप्रकरणाधीनमिति तेषां तद्विनियोज्यता। सन्निपातिनां तु करणोपकारं विना प्रधानापूर्वान्वयानुपपत्तिरूपोपादानप्रमाणेन करणाङ्गत्वं

ग्राहकग्रहणाख्येन प्रमाणेन तार्तीयश्रुत्याद्यतिरिक्तेनापूर्वार्थत्वम् द्वारैदमर्थ्यन्तु श्रुत्यादिभिरौपादानिकं क्रत्वर्थत्वम्, प्रकरणस्य तु न कश्चिद् व्यापार इति मन्यन्ते, तेषामेवायं सूक्तवाकपदानां श्रुत्या प्रहरणविनियुक्तानां प्रकरणाविषयत्वान्नेदं वाक्यप्रकरणविरोधोदाहरणं युक्तमित्युपालम्भो नास्माकम्। तत्र द्वयोरपि वाक्यप्रकरणयोः प्रमाणत्वात् श्रुतिकल्पनाधीनत्वसाम्यादन्यस्य च विप्रकर्षकारणस्याद्याप्यकथितत्वात्तुल्यबलतां मन्यते। यद्वा प्रधानाकाङ्क्षा प्रकरणम्। प्रधानार्थञ्च सर्वमिति तन्निबन्धन एव विनियोगो बलीयानिति प्राप्तेऽभिधीयते—

**येनैकवाक्यता तत्र सामर्थ्यं कल्प्यते मनाक्।**
**सामर्थ्याच्च श्रुतिः श्रुत्या विनियोगोऽपरत्र तु॥**
**पूर्णयोरैकवाक्यत्वं कल्प्यं स्यात्प्रक्रियावशात्।**
**ततो लिङ्गं श्रुतिः पश्चाद्विनियोगस्ततः परः॥**

'अग्नीषोमाविदं हविरजुषेतामि'त्यग्नीषोमपदस्येदंहविरित्यादेश्चैकवाक्यत्वं क्लृप्तम्, एकवाक्यतयाग्नीषोमप्रकाशनसामर्थ्यमिदं हविरित्यादेः शीघ्रं कल्प्यते। ततश्च श्रुतिस्तया विनियोग इति सन्निकर्षः। इन्द्राग्नीपदेन त्वत्रत्यस्येदं हविरित्यादेरेकवाक्यत्वं न प्रत्यक्षतो गम्यते, किन्तु प्रकरणात्तावद्दर्शपूर्णमासाभ्यामिदं हविरित्यादेरेकवाक्यता कल्प्यते—अनेन दर्शपूर्णमासयोरुपकुर्यादिति। ततः कोऽस्योपकार इति तदीयदेवतापदैकवाक्यतया तत्प्रकाशनसामर्थ्यं चिरेण कल्पयित्वा ततः श्रुतिकल्पनेन विनियोग इति विप्रकर्षाद्दुर्बलं वाक्यात्प्रकरणम्।

अथ स्थानप्रकरणयोर्विरोधे चिन्त्यते—राजसूये बहवः पश्विष्टिसोमयागास्सर्वे फलवन्तस्समप्रधानाः। तत्राभिषेचनीयो नाम सोमयागस्तत्सन्निधौ विदेवनादयस्स-

---

श्रुत्यादिभिर्व्रीह्याद्यङ्गताद्वारमिति श्रुत्यादिकमेव करणाङ्गत्वनिर्वाहकं न प्रकरणमिति। इदमिति। भाष्यकारोदाहृतमित्यर्थः। उपालम्भः भाष्यानुपपत्तिशङ्कारूपः। पूर्वपक्षमाह—तत्रेति। अकथनमात्रेणापह्नवायोगादाह-यद्वेति। सर्वस्य साक्षात्परम्परया वा प्रधानार्थत्वावश्यम्भावात्तस्य च प्रधानाकाङ्क्षारूपप्रकरणाधीनत्वादुपजीव्यतया प्रकरणस्यैव प्राबल्यमिति भावः। येनेति। येनाग्नीषोमावित्यादिपदेनैकवाक्यता इदं हविरित्यादेः प्रत्यक्षेति शेषः। तत्र सामर्थ्यं स्वार्थविशिष्टतदर्थप्रकाशनरूपम्। मनाक् शीघ्रम् कल्प्यते, ततः श्रुतिः, तया विनियोग इति सन्निकर्ष इत्यर्थः। अपरत्र तु इन्द्राग्न्यादिपदे तु। पूर्णयोः निराकाङ्क्षयोः। प्रक्रियावशादित्येतद्व्याचष्टे—अत्रत्यस्येति। अग्नीषोमावित्येतत्समभिव्याहृतस्येत्यर्थः। तदीयदेवतेति। तदीयसर्वदेवतेत्यर्थः। चिरेणेति। प्रकरणेनेदं हविरित्यादेः प्रधानैकवाक्यता। ततस्तदीयसर्वदेवतापदैकवाक्यत्वकल्पनपूर्वकं सर्वदेवताप्रकाशनसामर्थ्यरूपलिङ्गकल्पनम्, ततः श्रुतिकल्पनेन विनियोग इत्यर्थः।

स्थानप्रकरणयोः। विदेवनेति। 'अक्षैर्दीव्यति' इति विहितं द्यूतम्। आदिना 'शौनःशेपमाख्यापयति' इति विहितं शौनश्शेपाख्यानम्। 'अभिषिच्यत' इति विहितोऽभि-

माम्नातास्ते किं सर्वस्य राजसूयस्याङ्गमुताभिषेचनीयस्यैवेति। यदि सन्निधिर्बलवान् तदा भिषेचनीयाङ्गम्। अथ प्रकरणं ततो राजसूयस्यैवेति। तत्र सन्निधिविशेषादभिषेचनीयाङ्गत्वे प्राप्त उच्यते—प्रकरणाविशेषात्सर्वार्थता। नन्वभिषेचनीयस्यापि फलवत्त्वादस्त्येव प्रकरणम्, यद्यप्यस्ति तथाप्यन्येषामप्यस्तीति तादर्थ्यमपि युक्तम्। यदि परमविशेषतस्सर्वेषामाकाङ्क्षायामपि पाठसन्निधिविशेषादभिषेचनीयस्य विशेषत आकाङ्क्षां कल्पयित्वा तादर्थ्यं स्यात्ततश्च विप्रकर्षः[1]। सर्वार्थता क्लृप्ताकाङ्क्षातस्सुखं गम्यते, अभिषेचनीयाङ्गत्वं त्वाकाङ्क्षाकल्पनयेति। एतेनाग्नेयादीनां धर्मसाधारण्यं व्याख्यातम्। अपि च नास्त्यभिषेचनीयस्य प्रकरणम्, प्राकृतैनेत्थम्भावेन कथम्भावाकाङ्क्षापूरणात्। नन्वन्येषामपीष्टिपशुसोमानां विकृतित्वान्नास्त्येव प्रकरणम्, सत्यम्; प्रातिस्विकेन रूपेण नास्ति, राजसूयात्मना त्वस्त्येव। कथम्? श्रुत्यादिविहिताङ्गसन्दंशात्। तद्वशेन हि निवृत्ताप्याकाङ्क्षा पुनरुत्पत्स्यते पवित्रादारभ्य क्षत्रस्य धृति यावदङ्गविधिषु प्रायेण "राजसूयाय ह्येना उत्पुनाति राजसूयेनेजानः सर्वमायुरेती" ति राजसूयपरामर्शात्तावन्तं देशमनुवृत्तो राजसूयकथंभावश्शक्नोति तन्मध्यपतितानि विदेवनादीनि ग्रहीतुम्। अतः प्रकरणाद्राजसूयार्था विदेवनादयः।

---

षेक इत्यर्थः। ततश्चेति। विशेषत आकांक्षाकल्पनात इत्यर्थः। तदाह—सर्वेति। सुखं शीघ्रम्। अभिषेचनीयाङ्गत्वम् तन्मात्राङ्गत्वम्। एतेन स्थानात्प्रकरणस्य बलीयस्त्वन्यायेन। धर्मेति। किञ्चित्सन्निध्याम्नातप्रयाजाद्यङ्गेत्यर्थः। किमर्थं तर्हि तद्विहाय दूरस्थाभिषेचनीयोदाहरणमित्याशङ्क्याह—अपिचेति। आग्नेयादेरनिवृत्ताकाङ्क्षत्वात्तन्मात्राङ्गता सम्भाव्येतापि न त्विहेत्यभ्युच्चययुक्तिसूचनार्थमिदमुदाहृतमिति भावः। विकृतित्वादिति। 'क्लृप्तोपकारसाकाङ्क्षाः प्रथमं प्राकृतैस्सह। सम्बध्यते समीपस्थं विकाराः प्रोज्झ्य चोदितम्'॥ इति न्यायादिति भावः। क्लृप्त उपकारो—दृष्टादृष्टरूपः, प्रकृतौ येषामङ्गानां तत्साकाङ्क्षा विकाराः—विकृतयः, प्रथमं प्राकृतैरङ्गैस्सम्बध्यते समीपस्थमङ्गं प्रोज्झ्य त्यक्त्वेति तदर्थः। तथाच प्रकरणात्सर्वार्थत्वमिति सिद्धान्तानुपपत्तिरिति शङ्काभिप्रायः। राजसूयात्मनेति। राजसूयत्वसामान्यरूपेणेत्यर्थः। नन्विष्टिपशुसोमानामेव राजसूयपदार्थत्वात्तेषाञ्च प्रत्येकं निराकाङ्क्षत्वात्समुदायस्य चातिरिक्तस्याभावात्कथमाकाङ्क्षेति पृच्छति—कथमिति। उत्तरमाह—श्रुत्यादीति पवित्राख्यः सोमयागः। एवं क्षत्रस्य धृतिर्यागविशेषः अन्तेऽनुष्ठेयः। एनाः आपः। तथाच राजसूयत्वेन रूपेणाकाङ्क्षोत्थानं सन्दंशवशादस्तीति सिद्धान्तोपपत्तिरिति भावः। प्रयोजनं पूर्वपक्षे पवित्राख्यसोमयागविकृतौ विदेवनाद्यप्रवृत्तिः, सिद्धान्ते तु प्रवृत्तिरिति ज्ञेयम्।

---

१ सन्निधेर्हि आकांक्षाकल्पकत्वेनाङ्गत्वबोधकत्वं न साक्षात्। आकांक्षाविरहे सन्निहितेनाप्यन्वयायोगात्ततश्च सन्निधानादभिषेचनीयांगत्वस्वीकारे तेन विशिष्याकांक्षा कल्प्या। तथात्वे च क्लृप्ताकांक्षालक्षणप्रकरणेन झटिति विनियोगाद्विप्रकृष्टस्य सन्निधेर्बाध इत्यर्थः।

क्रमसमाख्ययोर्विरोधे-पौरोडाशिकसमाख्याते दर्शपूर्णमासकाण्डे सान्नाय्यपात्र-शुन्धनक्रमे समाम्नातः 'शुन्धध्वमि' ति मन्त्र उदाहरणम् । स किं पुरोडाशपात्राङ्गमुत सान्नाय्यपात्राङ्गमुतोभयाङ्गमिति विचारः । यदि समाख्या बलवती पुरोडाशाङ्गम्, अथ तुल्यबलत्वमुभयार्थता, क्रमबलवत्त्वे तु सान्नाय्यार्थता । तत्र —

**विशेषाग्रहणात्तुल्यबलत्वमुभयोर्भवेत् ।**
**सम्बन्धवाचिनीत्वेन समाख्या वा बलीयसी ॥**
**नैतदेवं समाख्या हि न सम्बन्धाभिधायिनी ।**
**यद्यपि त्वभिधात्री स्यात्प्रमाणं न तु तत्र सा ॥**

न हि यौगिकैश्शब्दैस्सम्बन्धोऽभिधीयते । दण्डीति प्रकृत्या दण्ड-स्वरूपमुक्तम्, प्रत्ययेनापि पुरुषः, दण्डयुक्तस्तु पुरुषो न कस्यचिद्वाच्यः । तयोस्सम-भिव्याहारादेव परस्परयोगो वाक्यार्थ इव पदार्थानां लभ्यमानो नाभिधानं प्रयोजयति तथा पाचकादिष्वपि । आह च

**'पाकं हि पचिरेवाह कर्त्तारं प्रत्ययोऽप्यकः ।**
**पाकयुक्तःपुनः कर्ता वाच्यो नैकस्य कस्यचित्' ॥ इति ॥**

एवं पौरोडाशिकशब्देऽपि प्रकृतिप्रत्ययाभ्यां पुरोडाशस्वरूपं काण्डस्वरूपञ्चोक्तम् । तयोश्च सम्बन्धोऽनभिहित एव कल्पयितव्यः, क्रमे तु देशसामान्यलक्षणस्सम्बन्धः प्रत्यक्ष इति बलीयस्त्वम् । अथापि समाख्या सम्बन्धमभिदध्यात्तथापि न सा तत्र प्रमाणम्, पदस्य पदार्थे प्रमाण्याभावात् । अतस्सम्बन्धनिमित्तां समाख्यामुच्चरन्तीमुपलभ्य नूनमस्त्यनयोः कश्चित्सम्बन्ध इति सम्बन्धसामान्यं कल्प्यम्, ततोऽपेक्षा, तत एकवाक्यत्वम्, ततः सामर्थ्यम्, तत श्रुतिः,

---

क्रमसमाख्ययोः । पौरोडाशिकेति । पौरोडाशिकमिति समाख्यावतीत्यर्थः । शुन्धनं प्रक्षालनम्, तस्य क्रमे । यादृशस्थाने शुन्धनविधिस्तादृशस्थाने मन्त्रसंहितायामित्यर्थः 'शुन्धध्वं दैव्याय कर्मणे देवयज्यायै' इति मन्त्रः । पात्रपदं तच्छुन्धनपरम् । विशेषेति । समाख्ययैव सम्बन्धलाभादाकाङ्क्षादिकल्पनायाश्चोभयत्र साम्यादिति भावः । एवं द्वितीयपक्ष उपपादितः । प्रथमपक्षमुपपादयति—सम्बन्धेति । समाख्यागम्यसम्बन्धस्याङ्गाङ्गित्वपर्यव-सानाच्छ्रुतिवद्विनियोगबोधकत्वादिति भावः । न हीति ।

'सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते ।
न हि सम्बन्धवाचित्वं सम्भवत्यतिगौरवात्' ॥

इत्यरुणाधिकरणवार्तिकेन तन्निरासादिति भावः । कथं तर्हि सम्बन्धप्रतीतिः ? तत्राह—समभिव्याहारादेवेति । कल्पयितव्य इति वैशिष्ट्यान्यथानुपपत्त्या सामान्यतः कल्पनीय इत्यर्थः । देशेति । स्थानसादृश्यरूप इत्यर्थः । सम्बन्धस्य वाच्यत्वमभ्युपेत्याप्याह—अथापीति । तथाच वस्तुसिद्धेः प्रमाणाधीनत्वेन समाख्यया-

ततो विनियोगः। क्रमस्तु सम्बन्धमात्रस्य प्रत्यक्षप्रमितत्वात्तत आरभ्य श्रुत्यर्थं गच्छन्नेकं पदमगतां समाख्यां जयति। तदेवं श्रुत्यादीनां पूर्वपूर्वेणोत्तरोत्तरं श्रुत्यर्थं यावदगतमलब्धप्रामाण्यावस्थमेव मूलच्छेदान्निराक्रियते, सोऽयमप्राप्तबाधः। यत्तु शास्त्रप्रदेशेषु तत्र तत्रोच्यते–इदमनेन बाध्यते, प्राकृतं वैकृतेन, सामान्यं विशेषेणेत्यादि तद्बाधकविषयं प्राप्तं बाध्यते, उताप्राप्तमिति। न तावत्तत्र श्रुतिलिङ्गादिवदप्राप्तबाधसम्भवः। तथा च तद्वदेव प्रापकस्य शास्त्रस्याभावेऽभ्युपगन्तव्यः, ततश्च तस्यैकत्वात्कुशेष्विवाङ्गान्तरेष्वपि चोदको न स्यात् पदहोमवच्च होमान्तरेष्वप्याहवनीयो न स्यात्। अथ प्राप्तम्, तत्र श्रुत्यादिवैषम्याप्रसङ्गात्। एकरूपेण हि बाधेन भवितुं युक्तं न विचित्रेण। न च शक्यं शास्त्रेण प्राप्तं बाधितुम्। उच्यते—प्राप्तस्यैव तेषु बाधः नावश्यमेकरूपेणैव तेन भवितव्यम्, वैचित्र्यमेव प्रमाणबलेन युक्ततरं स्यात्। प्राप्तमपि शक्यमेव बाधितुमिति दशमाद्ये वक्ष्यते। अथ तत्र तत्रेत्यादिभाष्यस्य श्रुत्यादिविषयत्वं

---

सम्बन्धसिध्यभावात्तत्कल्पनमावश्यमित्याह—अत इति। ततस्सामर्थ्यमिति विशेषतः पुरोडाशपात्रशुन्धनप्रकाशनरूपमित्यर्थः। सकलाधिकरणार्थमुपसंहरति—तदेवमिति। मूलच्छेदात् कल्पनामूलभूतप्रयोजनाकाङ्क्षोच्छेदात्। प्रभाकरोक्तं प्राप्तबाधत्वं निराचिकीर्षुराह-सोऽयमिति। अत्र परेषां प्राप्तबाधत्वाभ्युपगमे हेतुभूतो भाष्यग्रन्थः–'अथ यत्तत्र तत्रोच्यते इदमनेन बाध्यते इदमनेनेति, तत्किं बाधकविषयं प्राप्तमुताप्राप्तमिति। किञ्चातः? यद्यप्राप्तः किं बाध्यते? अथ प्राप्तं कथं शक्येत बाधितुम्? प्राप्तं बाधकविषयं पूर्वविज्ञानमिति ब्रूम इत्यादिः, तमिमं भाष्यग्रन्थं श्रुतिलिङ्गादिव्यतिरिक्तसामान्यविशेषादिबाधविषयत्वेन व्याकुर्वंस्तद्विरोधशङ्कामपाकरोति–यत्त्वित्यादिना। शास्त्रप्रदेशेषु तत्तदधिकरणेषु। अनेन तत्र तत्रेति वीप्साया अधिकरणभेदाभिप्रायत्वं तच्छब्दस्य परोक्षाभिधायित्वस्वारस्यञ्च दर्शितम्। इदमनेनेत्यस्य व्याख्यानम्–प्राकृतमित्यादि। प्राकृतं कुशादि वैकृतेन 'शरमयं बर्हिर्भवति' इति विकृतिविहितेन शरादिना। सामान्यम् आहवनीयादि। विशेषेण 'पदे जुहोति' इति विशेषविहितेन पदादिना। भाष्येऽन्तिमकल्पस्यादौ निरासे बीजमाह– श्रुतिलिङ्गादिवदिति। श्रुत्यादिसारूप्येणान्तिमपक्षाशंकाया उत्कटतया प्रथमं तदुपन्यास इति भावः। श्रुत्यादिवच्छास्त्रप्रतिबन्धसम्भवात्कं बाध्यत इति भाष्यानुपपत्तिमाशंक्य तदाशयमाह–तद्वदेवेति। श्रुतिलिङ्गादिवदेवेत्यर्थः। तस्य प्रापकशास्त्रस्यातिदेशरूपस्य एकत्वात् अङ्गान्तरसाधारणत्वात्। चोदकः—अतिदेशः। आद्यपक्षनिरासे अभ्युच्चययुक्तिं दर्शयति–श्रुत्यादीति। लोके प्राप्तबाधस्य बहुशो दर्शनादाह–शास्त्रेति। शास्त्रस्याप्रामाण्यायोगादिति भावः। सिद्धान्तभाष्यार्थमाह–प्राप्तस्यैवेति। बाधकशास्त्रविषयं प्रति प्राप्तं पूर्वविज्ञानसामान्यशास्त्रादिजनितं ज्ञानं बाध्यत इति भाष्ययोजना। नन्वेवंसति प्रापकशास्त्राप्रामाण्यं स्यादित्याशङ्कामपाकर्तुमाह–दशमाद्य इति। 'अपवादविषयं परिहृत्य तत उत्सर्गो निविशत' इति न्यायेन सामान्यादिशास्त्रस्यापवादातिरिक्त एव तात्पर्यात्तात्पर्यविषयाबाधेन नाप्रामाण्यम्, आपातबोधे मिथ्यात्वबुद्धिरेव

'स्थिते चाप्राप्तबाधत्वे प्राप्तबाधेऽपि नोत्तरमि'ति वार्तिकेन दूषितम्। केचनास्य दूषणस्य 'सामान्यतः प्राप्तिं मन्वाना विशेषमपश्यन्तः स्मृतिप्रमोषनिमित्तं प्राप्तिज्ञानं व्यपदिशन्ति, विशेषावगमात्तेषां निवर्तत' इत्यनेन न कश्चिदपि परिहारक्लेशः। न हि विप्रकृष्टप्रमाणं सन्निकृष्टप्रमाणात्प्राक् प्राप्तं सद् व्यवहारमपि निवर्तयति, यतस्तन्निवर्तकता सन्निकृष्टस्य स्यात्। अतो नेदमुपदेशबाधविदामभिधानम्, किं त्वतद्विदामेव तु तादृशामीदृशमभिधानमित्युपरम्यते।

श्रुत्यादीनामतः षण्णामेकार्थोपनिपातिनाम्।
पूर्वं पूर्वं बलीयस्स्याद्दुर्बलं चोत्तरोत्तरम्॥

इति बलाबलाधिकरणम् ॥ ७ ॥

८

सू० अहो—एवं विरोधे श्रुत्यादेर्बलाबलमुदीरितम्। अतः परं विरोधः क्व ? क्व

---

च तस्य बाध इति दशमाद्याधिकरणे व्युत्पादितमित्यर्थः। ननु भाष्यस्य तत्रेति तच्छब्दवशेन प्रकृतविषयत्वावगमाद्वीप्सायाश्च श्रुत्याद्यनेकविषयत्वेनोपपत्तेर्बाधव्युत्पादनान्ते च तदेतेषामित्यादिना श्रुतिलिङ्गाधिकरणोपसंहाराच्छ्रुत्यादिविषयत्वस्वारस्याद्गुरुमतव्याख्यैव युक्तेति शङ्कां तद्दूषणवार्तिकोपन्यासेन निरस्यति—स्थिते चेति। अस्य पूर्वार्द्धम्—'बाधस्योक्तप्रकारत्वात् प्रश्नस्तावन्न युज्यत' इति। अस्यार्थः—नैतद्भाष्यं श्रुत्यादिविषयम्, श्रुत्यादिना लिङ्गादिविरोधस्यार्थविप्रकर्षादिति हेतुव्युत्पादनेन निर्णीतप्रकारत्वात् किं प्राप्तमप्राप्तं वेति प्रश्नानुपपत्तेः। एवं कल्पनामूलोच्छेदकथनेनाप्राप्तबाधत्वे स्थिते सिद्धे सति प्राप्तबाधोऽयमित्युत्तरासङ्गतेश्चेति। अत्रोत्तरार्धोक्तस्योत्तरासङ्गतिरूपदूषणस्य परैः परिहारः कृतः,तमनूद्य दूषयति-केचनास्येति। सामान्यत इत्यादिर्निवर्तत इत्यन्तो गुरुग्रन्थः। केचनास्य दूषणस्य इत्यनेन ग्रन्थेन परिहारक्लेश इत्यन्वयः। सामान्यत इत्यादेरयमर्थः—सामान्यतः लिङ्गविनियोज्यमन्त्रसादृश्यात् प्राप्तिं लैङ्गिकविनियोगं स्मरन्तः विशेषं भेदग्रहणस्मरणयोस्तदर्थयोश्चापश्यन्तः स्मृतेः प्रमोषस्तत्तानुल्लेखो निमित्तं यत्र तथेति क्रियाविशेषणम् प्राप्तिज्ञानं लिङ्गविनियोगविशिष्टज्ञानमिति व्यवहरन्ति जना इति शेषः। विशेषावगमात् विरुद्धश्रुतिदर्शनकृतात् प्राप्तिस्मरणमेवेदं न विशिष्टज्ञानमिति भेदग्रहात् निवर्तते व्यवहार इति शेषः। तथाच वस्तुतः प्राप्तिज्ञानतद्बाधयोरभावेऽपि भेदाग्रहनिमित्तव्यवहारस्य प्राप्तस्य बाध इति दूषणपरिहारः। कथमयं न परिहारः, तत्राह— न हीति। शीघ्रप्रवृत्तया श्रुत्या विशेषदर्शने सति लिङ्गात्प्राप्तिव्यवहारस्यासम्भवादित्यर्थः। न च श्रुतिमनालोचयतस्तत्सम्भव इति वाच्यम्, विरोधिद्वयोपस्थितौ विप्रकर्षहेतुकबाधनिरूपणादिति। दूषणमुपसंहरति—अत इति। उपदेशेन सद्गुरूपदेशेन बाधविदामित्यर्थः। इति बलाबलाधिकरणम् ॥ ८ ॥

अहो० अतःपरमिति। तथा च बलाबलविषयशोधनार्थया तच्छेषतया सङ्गति-

नास्तीति विचार्यते। प्रथमं तावत्प्रकरणस्य श्रुत्यादिभिस्सह चिन्ता। ज्योतिष्टोम-प्रकरणे 'तिस्र एव साह्नस्योपसदो द्वादशाहीनस्ये' ति श्रुतम्। तत्र साह्नशब्देन सहाह्ना समाप्यमानत्वाज्ज्योतिष्टोमोऽभिधीयत इति त्र्युपसत्त्वं तावत्तदङ्गम्, द्वादशोपसत्त्वमपि किं तस्यैवाङ्गम्? उत द्वादशाहादेरहर्गणस्येति संशयः। तदर्थञ्च किमहीनश्रुत्या प्रकरणं विरुध्यते नेति।

**तत्र प्रकरणाज्ज्योतिष्टोमाङ्गत्वं प्रतीयते।**
**तत्रैवाहीनशब्दोऽपि न हीन इति वर्तते॥**

खप्रत्ययान्तो ह्यहर्गणवचनस्स्यात्। नञ्समासस्त्वयं प्रकरणाविरोधादङ्गी-क्रियते न हीयत इत्यहीनः। न ह्यसौ केनचित्क्रतुना हीयते। सर्वे क्रतवस्तं प्रकृतित्वेना-पेक्षमाणा न जहति, तेन श्रुत्यविरोधाज्ज्योतिष्टोमाङ्गत्वे प्राप्ते ब्रूमः—

**साह्नादर्थान्तरं तावदहीन इति गम्यते।**
**रूढिश्चेयं द्विरात्रादौ सा च योगाद्बलीयसी॥**
**तत्रापि यौगिकत्वं चेन्न सत्रेष्वप्रयोगतः।**
**मध्योदात्तं पदञ्चेदमतः खप्रत्ययान्तता॥**

साह्नशब्देन ज्योतिष्टोममभिधाय पुनरहीन इत्युच्यमानं संज्ञाभेदादेव तावदर्थान्तरं गम्यते। रूढ्या च द्विरात्रादिवचनत्वान्न योगेन ज्योतिष्टोमे

---

रित्यर्थः। प्रथममिति। विषयबाहुल्यादिति भावः। सहेति। 'तं सहाह्ना संस्थापयन्ति' इति-वाक्यशेषादिति भावः। त्र्युपसत्त्वं त्रिसंख्योपसन्नामकेष्टिविशेषकत्वम्। तस्यैवेति। विकल्पेनेति भावः। द्वादशेति। द्वादशाह आदिः प्रकृतिर्यस्य द्व्यहत्र्यहादेरित्यर्थः। षष्ठीश्रुतेरुभयथाप्यु-पपत्तेराह—अहीनेति। तत्रैव ज्योतिष्टोम एव। अबाधेनोपपत्तौ बाधायोगादिति भावः। खप्रत्ययेति। 'अह्नः खः क्रतौ' इति सूत्रेण 'तस्य समूह' इत्यधिकारपठितेन खप्रत्ययविधानादि-त्यर्थः। प्रकरणेति। खप्रत्ययान्तत्वे प्रकरणविरोधप्रसङ्गादित्यर्थः। तथाचोभयविधयोगार्थ-सम्भवेऽपि प्रकरणाबाधाय नञ्समासान्तत्वमेव युक्तमिति भावः। हीयत इत्यस्य न्यूनत्वार्थता भ्रमनिरासायाह— न जहतीति। 'ओहाक् त्यागे' इति धात्वनुसारादिति भावः। अर्थान्तरमिति। अन्यथाऽहीनपदोच्चारणवैयर्थ्यादिति भावः। द्वादशत्वविधानार्थं शब्दान्तरेण निर्देशसम्भवा-न्मुख्ययुक्तिमाह—रूढिश्चेयमिति। तत्रापि द्विरात्राद्यहर्गणेऽपि। सत्रेष्विति। आसीरन्नु-पेयुरिति शब्देन विहितानि कर्माणि सत्रपदेनोच्यन्ते। यौगिकत्वमात्रोक्तौ तेष्वप्यहीनपदप्रयोगः स्यादित्यवश्यं रूढिरङ्गीकार्येति भावः। न केवलं रूढिबलीयस्त्वेन नञ्समासान्तत्वनिरासः, किन्तु स्वरविशेषादपीत्याह—मध्योदात्तमिति। अहीनपदे मध्य ईकारः स उदात्तः तत्र तादृशं तच्च खप्रत्ययान्तत्वे भवति। नञ्समासे त्वाद्युदात्तत्वं स्यादित्यर्थः। एतच्च व्याख्यानं ग्रन्थे-ऽनुपदमेव स्फुटीकरिष्यते। क्रमेण व्याचष्टे—साह्नेति। संज्ञाभेदादेवेति च्छेदः। उत्पद्यत इति च शेषः। तावता संज्ञाभेदमात्रेण अर्थान्तरं तावदर्थान्तरमित्यर्थः। एकवाक्यत्वे उच्यमानम् अर्थान्तरमित्यनन्वयापत्तेः। अथवा अहीन इति शब्देनोच्यमानमर्थान्तरमित्यर्थ इत्येकमेव

वर्त्तितुमर्हति । ननु द्विरात्रादावप्यह्नां समूह इत्येव योगेनैव वृत्तिः। न; सत्रेष्वप्रयोगात् । किञ्च नञ्समासत्वेऽव्ययपूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तत्वं स्यात्, मध्योदात्तं त्विदं पदम्। अतः खप्रत्ययान्तम्। तथा सत्यायन्नादिषूपदेशिवद्वचनं स्वरसिध्यर्थमित्येवमीनादेशस्यैवापदेशित्वात्प्रत्ययाद्युदात्तत्वेनेकारस्वरस्सिद्धो भवति। तस्मादहीनश्रुतेरहर्गणवचनत्वात्तद्विषयमेव द्वादशोपसत्त्वं षष्ठीश्रुत्या गम्यते। तत्तु पृथग्विधीयते, वाक्यान्तरप्राप्तं वा त्र्युपसत्वस्तुत्यर्थमनूद्यते। सर्वथा तावद्द्वादशाहीनस्येत्येतदहर्गणविषयमिति सिद्धम्।

**इत्यहीनाधिकरणम् ॥ ८ ॥**

**९**

सू० द्वित्व० ज्योतिष्टोमे श्रूयते 'युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्, एते असृग्रमिन्दव इति बहुभ्यो यजमानेभ्य' इति। तत्र सन्देहः--किमेते प्रतिपदौ ज्योतिष्टोमस्य ? उत द्विबहुयजमानकेषु कुलायाहीनादिषूत्क्रष्टव्ये इति। तदर्थञ्च किं ज्योतिष्टोमे द्वौ बहवश्च यजमानास्सम्भवन्ति ? उत नेति। तत्र—

---

वाक्यम्। अव्ययेति। 'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्या' इत्यनेन तत्पुरुषे अव्ययस्य नञः पूर्वपदभूतस्य प्रकृतिस्वरत्वं विधीयते। प्रकृतिस्वरत्वं नाम समासाभावदशायां यः स्वाभाविकः स्वरः 'निपाता आद्युदात्ता' इत्यादिविहित उदात्तस्वरस्तद्वत्त्वेनेत्यर्थः। ननु खप्रत्ययान्तत्वेऽपि प्रत्ययत्वनिमित्तमाद्युदात्तत्वमिनादेशात्पूर्वमेव स्यान्न तदुत्तरं तस्याप्रत्ययत्वादिति कथं मध्योदात्तत्वमत आह—तथा सतीति। खप्रत्ययान्तत्वे सतीत्यर्थः। आदिना 'आयनेयीनीयिय' इत्यादिसूत्रचतुष्टयनिहिता गृह्यन्ते। तेषु उपदेशिवद्वचनं उपदेशी स्थानी खप्रत्ययस्तद्वद्भाववचनं स्वरसिद्धयर्थं कर्तव्यमित्यर्थः। षष्ठीति। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वादिति भावः। ननु द्वादशाहे 'द्वादशोपसद' इति प्राकरणिकेन वाक्येन द्वादशोपसत्त्वविधानात्तत एव चातिदेशेनाहर्गणान्तरेष्वपि तत्सिद्धेरिदं वाक्यमनुवादकम्, उपसत्त्रित्वविध्यर्थवाद इति कथमेतदुदाहरणमित्याशङ्क्याह–तत्त्विति। शाखान्तरगतत्वेन वैयर्थ्याभावादिति भावः। सर्वशाखोपसंहारन्यायेनैकेनैव विधिनानुष्ठानसिद्धेरनेकादृष्टकल्पनापादकविध्यर्थत्वायोगादनुवादकत्वपक्षमाह—वाक्यान्तरेति। शङ्कापरिहारं दर्शयति—सर्वथेति। तथा च किमहीनश्रुत्यविरोधाज्ज्योतिष्टोमे अप्राप्ता द्वादशोपसत्ता विधीयते ? उत श्रुत्याहर्गणप्राप्ता स्तुत्यर्थमिहानूद्यत इत्यधिकरणार्थं इति भावः। पूर्वपक्षे ज्योतिष्टोमे उपसत्त्रित्वद्वादशत्वयोर्विकल्पः। सिद्धान्ते तु नेति प्रयोजनं बोध्यम्। अहीनो अहीनशब्दः प्रकरणवशाद्गौणः, न हीयत इत्यवयवार्थरूपगुणयोगनिमित्त इति सूत्रार्थः। इत्यहीनाधिकरणम् ॥ ८ ॥

द्वित्व० 'स्वर्पती इति' इत्यादिकामृचं द्वयोर्यजमानयोः निमित्तयोस्सतोः प्रतिपदं बहिष्पवमानाख्यस्तोत्रे प्रथमां कुर्यादित्यर्थः। बहिष्पवमानस्तोत्रावान्तरप्रकरणात् ज्योति-

हीनाङ्गस्यापि नित्यस्य प्रयोगो येन वक्ष्यते।
तेनैकत्वं विहाय द्वौ बहवो वा प्रयुञ्जते॥

यद्यपि नित्यवाक्येऽपि 'वसन्ते वसन्ते ज्योतिषा यजेत' त्याख्यातोपात्तगुणभूतोपादेयकर्तृगतमेकत्वं विवक्षितम्, तथापि नित्येऽशक्तिकृताङ्गत्यागाभ्युपगमाद्यदेको न शक्नुयात्तदाङ्गान्तरवदेकत्वं विहाय द्वौ बहवो वा यजेरन्, तदाश्रयणेन प्रतिपद्विधानं प्रकृतावेवोपपन्नमिति नोत्कर्षः।

नैतदेवमशक्याङ्गमुपादेयं हि लुप्यते।
अनुपादेयमेकत्वं यजमानस्य कालवत्॥

'सोमेन यजेत' 'वसन्ते वसन्ते ज्योतिषा यजेत' इत्युत्पत्तिप्रयोगचोदनयोः श्रुतमेकत्वमपरित्यज्याङ्गान्तरस्यैव त्यागो युक्तः। किञ्च यत्खलूपादेयमङ्गं यजमानस्य कर्तव्यतया चोद्यते, तद्विषय एव यथाशक्त्युपबन्धः। यत्त्वनुपादेयं कालवन्न तत्रैवमुपबन्धः। तदपेक्षस्तु विधिः तद्वन्तमधिकृत्य प्रवर्तते। अनुपादेयञ्च यजमानस्यात्मीयमेकत्वम्, अत एको यथा शक्नुयादित्युपबन्धादङ्गान्तरं दक्षिणापरिमाणादि परित्यज्यैक एव प्रवर्तत इति प्रकृतौ द्वित्वबहुत्वयोरभावात्। षष्ठीश्रुत्या तत्संयुक्तयोः प्रतिपदोस्तद्वत्सु कुलयादिषूत्कर्षः। न च पत्न्यभिप्रायं द्वित्वबहुत्वं युक्तम्, यजमानशब्देन वेदे पुंस एव सर्वदाभिधानात्। पत्न्यास्तु पत्नीशब्देनैवाभिधानात्। बहुभ्य

---

ष्टोमस्येति। स्तोत्रद्वारा प्रकरणात् ज्योतिष्टोमसम्बन्धिन्याविस्यर्थः। राजपुरोहितौ यजेयातामिति विहित एकाहः क्रतुः कुलायाख्यः। एको द्वौ बहवो वा अहीनेन यजेरन्निति वचनादहीनानां द्विबहुयजमानकर्तृत्वं ज्ञेयम्। आदिना सत्रसङ्ग्रहः। येन हेतुना। वक्ष्यते 'सर्वशक्तौ प्रवृत्तिस्स्यात्' इति सूत्रे षष्ठाध्याय इत्यर्थः। तेन हेतुना। प्रयुञ्जत इत्यस्य ज्योतिष्टोमेऽपीति शेषः। एवंचाधिकाशङ्कासत्वात्पूर्वाधिकरणेनागतार्थत्वमातिदेशिकसङ्गतिश्च सूचिता। अनुपादेयमिति। यद्यपि देशकालनिमित्तफलसंस्कार्यपञ्चकमेव कृतिविषयत्वकृत्याश्रयत्वान्यतरत्वरूपोपादेयत्वशून्यम्, न तु कर्ता तदेकत्वं वा, कर्तरि कृत्याश्रयत्वात्तद्विशेषणत्वेन चैकत्वेऽपि तत्सत्वात्। अत एवाख्यातोपात्तगुणभूतकर्तृगतमेकत्वं विवक्षितमिति पूर्वफक्किकायामुक्तम्, तथापि कृत्यसाध्यत्वमात्रमनुपादेयपदेनात्र विवक्षितम्, तावतैव कालवदिति दृष्टान्तोपपत्तेः, प्रयोगविध्यविषयत्वेन यथाशक्त्युपबन्धाविषयत्वोपपत्तेश्चेत्यूह्यम्। अभ्युच्चयरूपत्वात् श्लोकासङ्गृहीतामप्युपपत्तिमाह—सोमेनेति। उत्पत्तिश्रुतस्यापि सोमत्वादेस्त्यागेन प्रतिनिध्युपादानादभ्युच्चयवादोऽयम्। अशक्तौ कस्य त्याग इति सन्देहे अनुपसञ्जातविरोधित्वेनोत्पत्तिश्रुतं न त्याज्यम्, दक्षिणाबाहुल्यादिकमेव त्याज्यम्। तथा प्रयोगविध्यसङ्गृहीतं त्याज्यम्, एकत्वं तु नित्येऽपि प्रयोगे श्रुतमिति न त्याज्यमिति भावः। तदपेक्षः कर्तृतदेकत्व-

इति विरूपैकशेषस्य प्रमाणमन्तरेण दुरुपपादत्वात्। अपि च यजमानयोरिति यजमानशब्दस्य कर्तृवचनत्वात्कर्तृद्वित्वं प्रतीयते। न च पत्न्यभिप्रायेण कर्तृद्वित्वं सम्भवति, दम्पत्योर्हि व्यासक्तं कर्तृत्वमग्नीषोमयोरिव देवतात्वम्। अतस्तत्रैक-वचनमेव स्यात्, यथा फलवाक्ये 'स्वर्गकामो यजेते'ति। अधिष्ठानाभिप्रायत्वे लक्षणा स्यात्। तस्मादुत्कर्षः इति प्रतिपदधिकरणम्॥ ९॥

१०

सू॰ जाघ॰--दर्शपूर्णमासयोः पत्नीसंयाजान्प्रकृत्य श्रूयते—'जाघन्या पत्नीस्सं-याजयन्ति' इति। तत्र चिन्ता--किमिदं विधानं पशावुत्कृष्यते ? उत नेति। यदि जाघनीं कृतार्थामुद्दिश्य पत्नीसंयाजास्संस्कारा विधीयन्ते, ततो वाक्यवशेनोत्कर्षः। अथ पत्नीसंयाजानां जाघनी द्रव्यं विधीयते, ततोऽनुत्कर्षः। तत्रारादुपकारकात्सामवायिकस्य गरीयस्त्वाज्जाघनीशब्दस्य चोत्तरार्धादिशब्दवदेकदेशवचनत्वादेकदेशद्रव्याणाञ्च विद्यमानैकदेशसंयोगाद्यत्र परप्रयुक्तपश्वनुनिष्पन्ना जाघनी विद्यते, तत्र तस्यास्संस्कार-त्वेन पत्नीसंयाजविधानमिति प्राप्तेऽभिधीयते—

जाघनी हि गुणत्वेन तृतीयोक्त्यात्रगम्यते।
पत्नीसंयाजयागाश्च द्रव्यापेक्षाव्यवस्थिताः॥
तेनैतेषां गुणत्वेन जाघन्यत्र विधीयते।
न च सापेक्षवृत्तित्वमुत्तरार्धादिशब्दवत्॥

---

कालाद्यपेक्षः। तद्वन्तमिति। एकत्वादिमन्तं यजमानमित्यर्थः। विरूपेति। बहुभ्य इतीत्यनेनो-पलक्षितयजमानपदाभिप्रायमिदम्। बह्वर्थके बहुपदे एकशेषस्यैवाप्रसङ्गादिति ज्ञेयम्। प्रकरण-रूपप्रमाणबलेन विरूपैकशेषोपपत्तेराह—अपि चेति। कर्तृवचनत्वादिति। 'कर्तरि कृत्' इत्यनु-शासनाच्छानचः कर्तृवाचितेत्यर्थः। अत इति। कर्तृत्वस्योभयपर्याप्तस्यैकत्वादित्यर्थः। नन्वग्नी-षोमौ देवते इतिवत् द्विवचनोपपत्तिरत आह--अधिष्ठानेति। कर्तृत्वाश्रयेत्यर्थः। कर्तृत्व-पर्याप्त्यधिकरणं हि मुख्योऽर्थः, तच्च मिलितम्, न प्रत्येकमिति द्वित्वान्वयार्थं प्रत्येकलक्षणापत्ति-रित्याशयः। सूत्रार्थस्तु—द्वित्वबहुत्वयुक्तं प्रतिपद्विधानमपकृष्येतेति पूर्वसूत्रस्थस्यानुषङ्गः। कुतः ? तस्य ज्योतिष्टोमस्य द्वित्वाद्यचोदनादिति। इति प्रतिपदधिकरणम्॥ ९॥

१०

जाघनी॰ पत्नीति। पत्नीदैवत्ययागा इत्यर्थः। गरीयस्त्वादिति। प्रायेण दृष्टार्थ-त्वात् क्वचित्तदभावेऽपि प्रधानसंबन्धस्य प्रत्यक्षत्वादारादुपकारिषु तदभावाज्ज्येष्ठत्वमिति भावः। जाघन्येति तृतीयाविरोधमाशङ्क्याह—जाघनीति। जघनावयववचनत्वादित्यर्थः। विद्यमानै-केति। विद्यमानेनैकदेशान्तरेण संयोगात्सापेक्षत्वादित्यर्थः। 'एकदेशद्रव्यं चोत्पत्तौ विद्यमान-संयोगादिति' चातुर्थिकसूत्रोक्तन्यायोऽयम्। परेति। परेण यागान्तरेण प्रयुक्त इत्यर्थः। न च सापेक्षेति[1]। उत्तरार्धशब्दस्य केवलयौगिकत्वेनैकदेशिसापेक्षार्थबोधकत्वमेव। जाघनीशब्दस्त्ववय-वविशेषजातिवचनः, न तादृश इत्यर्थः। सूत्रार्थप्रयोजने स्पष्टे। इति जाघन्यधिकरणम्॥१०॥

---

१. यद्यपि जाघन्युत्तरार्धशब्दयोरुभयोरवयवशब्दत्वं तथाप्युत्तरार्धादिशब्द उत्तरार्ध-

उत्तराधादिशब्दा हि परापेक्षयैव स्वार्थं बोधयन्तो युक्तं यत्परप्रयुक्तमेकदेशिनमपेक्षन्ते, जाघनीशब्दस्त्ववयवविशेषवचनो न किञ्चदपेक्षते । अतो निर्मूला स्यादस्योत्कर्षकल्पनेति दर्शपूर्णमासयोरेव निवेशः । इति जाघन्यधिकरणम् ॥ १० ॥

११

सू० सन्त० ज्योतिष्टोमेऽधिषवणफलके प्रकृत्य 'न संतृणत्त्यसन्तृण्णे हि हनू' इत्यसन्तर्दनं विधाय, पुनः श्रुतम्—'अथो खलु दीर्घसोमे सन्तृद्यात् धृत्या' इति। तत्र संशयः—किमिदं प्रकृतावेवाथवोत्कृष्यत इति । यदि दीर्घसोमशब्दः प्रकृतावपि वर्तते, ततोऽनुत्कर्षः, अथ न वर्तते, ततो वाक्यादुत्कर्षः । यद्युत्कर्षस्तदापि किं द्विरात्रादिष्वेवोत्कर्षः ? अथवा संस्थान्तरेषु द्विरात्रादिषु चाविशेषेणाग्निष्टोमाधिकमात्र इति । तत्र प्रकृतेरपीष्टिपशुबन्धाद्यपेक्षया दीर्घसोमत्वोपपत्तेस्तत्रैव निवेशः । नन्वसन्तर्दनं तत्र विहितं क्रयवद्विकल्पो भविष्यति । ननु च तत्र समुच्चय एव, सत्यम्; विधानविकल्पाभिप्रायमिदं न प्रयोगाभिप्रायमित्यदोषः । नैतद्युक्तम्; न हि विधेर्विकल्पः सम्भवति, वस्तुनि विकल्पासम्भवात् । तेन यद्यप्येककार्याणां सन्निपातिनां भेदाभावादेकमेव क्रयकर्म, तच्चैकेनैव विधीयतेऽन्ये गुणविधयः, तत्र विशेषो न गृह्यते, सर्वत्र गुणश्रवणात्तथाप्यज्ञानमेव शक्यं वक्तुम्,

---

सन्त-अधिषवणेति । सोमकण्डनाधारभूते फलके । असन्तर्दनम् असंश्लेषणम् । सन्तृद्यादिति । द्वयोरसमीभूतयोर्दृढसंश्लेषार्थं संश्लेषप्रदेशी तक्षणेन तनूकृत्यैकस्योपर्यपरं संश्लेषयेदित्यर्थः । धृत्यै धारणाय । संस्थान्तरेष्विति । ज्योतिष्टोमस्यैवाग्निष्टोमातिरिक्तोक्थ्यादिसंस्थास्वित्यर्थः । क्रयणवदिति सौत्रं दृष्टान्तं व्याकुर्वन्नुत्तरमाह—क्रयवदिति । एकहायनीसाधनकक्रयसत्वेऽपि वासः प्रभृतिद्रव्यसाधनका अपि क्रया यथा विकल्पेन प्रकृतावेव भवन्ति, तथा सन्तर्दनासन्तर्दनयोरपि विकल्पेन निवेश इत्यर्थः । द्वादशे क्रयाणां समुच्चयस्य सिद्धान्तितत्वादाशङ्कते—ननु चेति । अत्रैकक्रयवादिनां गुरूणां समाधानमाह—सत्यमिति । एक एव क्रयः कदाचिदरुणयेति वाक्येन कदाचिद्वाससेत्यादिनेति रीत्येत्यर्थः । वस्तुनीति । तथासति विधित्वव्याघातापत्तेरिति भावः । गुरोरभिप्रायं दर्शयन् तदीयविकल्पोक्तिदूषणमुपसंहरति—तेनेति । वस्तुविकल्पासम्भवेनेत्यर्थः । अस्य चाज्ञानमेवेत्यादिनान्वयः । प्रमाणावृत्तेः सप्रयोजनत्वनियमाद्यत्र सन्निपातिष्वपि प्रयोजनभेदः प्रोक्षणावघातादिषु तत्र भवतु शब्दान्तरादिभिर्भेदः, क्रये त्वेकप्रयोजनत्वेन भेदासम्भवादेकस्य

---

त्वादिना प्रतियोगिसापेक्षरूपेणाभिधत्ते, तेनाग्नेयादिपुरोडाशज्ञानं विनोत्तरार्धस्य ज्ञातुमशक्यत्वात्सापेक्षवृत्तित्वम् । जाघनीशब्दस्तु जातिवचनः, जातिश्च निरपेक्षा । तेनाग्नीषोमीयपशुज्ञानाभावेऽपि प्राणिमात्रस्य जाघनी ज्ञातुं शक्या इति निरपेक्षवृत्तित्वमिति वैषम्यम् । एवञ्च नियतप्रतियोगिकत्वाभावाच्छागवारणादेव यस्य कस्यचिज्जाघनी क्रयेण सम्पाद्येति भावः ।

न विकल्पाभिधानम् । अपि चारुणावाक्येऽनेकगुणश्रवणात्तत्रैव क्रयविधिरितरे गुणविधय इति विशेषग्रहणान्न विकल्पः । अथवा भिन्नान्येव क्रयकर्माणि गुणाद्गम्यन्ते । न ह्येकेन विहितेऽन्ये गुणविधयस्सम्भवन्ति, उत्पत्तिशिष्टगुणावरोधात् । प्रमाणबलाच्च सन्निपातिनामप्येककार्याणां भेद आपतन्न दण्डेन पराणुद्यते । तथा च गुणकर्मणामाधानादीनामेककार्याणां द्वितीये भेद उक्तः, तथा च 'प्राकाशावध्वर्यवे ददाती' ति दानान्तरमेव प्राकृतकार्यं विधीयत इति वक्ष्यते । तथा च 'शतं ब्राह्मणाः समानं भक्षयन्ती' त्यत्र भक्षान्तरविधावपि प्राकृतकार्यार्थता निबन्धनकारेणैवोक्ता । तस्मात्क्रयवद्विकल्प इति पूर्वपक्षेण दृष्टान्त इति व्याख्येयम् । अतः प्रकृतावेव निवेशः । नैवम्; दीर्घशब्दो हि सोमस्य विशेषणम् । न चेष्टद्याद्यपेक्षया दीर्घत्वं सोमस्य विशेषणं भवति, अव्यभिचारात् । अतस्सोमान्तरापेक्षमेव दीर्घत्वम् । न च प्रकृते तदस्तीत्युत्कर्षः । अन्यः पक्षः—दीर्घसोम इति षष्ठीसमासोऽयं दीर्घस्य यजमानस्य सोम इति । स च प्रकृतावपि सम्भवतीत्यनुत्कर्षः । नैवम्; समानाधिकरणसमासस्य बलीयस्त्वात्, धृत्या इत्यर्थवादानुपपत्तेश्च । न हि यजमानदैर्घ्याद्धारणे कश्चिद्विशेषो भवति । तस्मात्कर्मापेक्षमेव दीर्घत्वमित्युत्कर्षः । स च द्विरात्रादिष्वेव,

---

तस्य विनिगमकाभावात्कदाचित्केनचिद्विधिरिति त्वयोच्यते । तत्र केनास्य विधिरिति न ज्ञायत इत्यज्ञानोपन्यास एव युक्तः, न विकल्पोपन्यास इत्यर्थः । वस्तुतो ज्ञानविकल्पोभयमूलं विशेषाग्रहणमसिद्धमेवेति दर्शयति—अपि चेति । अरुणावाक्येन गुणविधेरनेकगुणविधाने वाक्यभेदापत्तेरसम्भवाद्विशिष्टक्रय एव विधीयते । वाक्यान्तरैस्तु तत्रैकैको गुण इत्यर्थः ! ननूत्पत्तिशिष्टैकहायन्यवरुद्धे क्रये कथमन्यैर्गुणविधिः, तत्राह—अथवेति । ननूक्तं प्रयोजनाभावान्नात्र भेद इति । तत्राह—प्रमाणेति । पर्जन्यवल्लक्षणप्रवृत्तिरिति न्यायादिति भावः । ग्रन्थविरोधमप्याह—तथाचेति । आधानादीनामित्यादिपदेनैन्द्रवायवादिग्रहणानां संग्रहः । 'वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्य' इत्याधानविधिभेदादग्निलक्षणैककार्यस्याप्याधानस्य भेदो भवद्ग्रन्थ एवोक्त इत्यर्थः । एवम् 'ऐन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णाति' इति ग्रहणानामपि भेद उक्तः । नन्वाधानकार्यस्याग्नेर्ब्राह्मणादिसम्बन्धित्वेन भेदान्नैकत्वमत आह—तथेति । प्राकाशौ दर्पणौ । अत्रापि प्राकृतदानोद्देशेन प्राकाशाध्वर्युसम्बन्धविधानमिति पक्षान्तरसत्वादुदाहरणान्तरमाह —तथाचेति । राजसूयान्तर्गते दशपेयाख्ये सोमविकारे एतद्वचनम् । अत्र शतसंख्याब्राह्मणत्वजातिरूपानेकगुणविधेर्भक्षानुवादेनासम्भवाद्विशिष्टभक्षान्तरविधिरिति पक्षेऽपि प्राकृतकार्यार्थतोक्त्यैककार्याणामपि सन्निपातिनां भेदः स्वीकृत इत्यर्थः । अपिना भक्षानुवादेन ब्राह्मणमात्रविधिः, शतसंख्या तु 'दश दशैकैकं चमसमनुप्रसर्पेयुरिति' वचनाद्दशसु चमसेषु प्रचयप्राप्तानूद्यते । न च ब्राह्मणानामपि प्राप्तत्वाद्वचनवैयर्थ्यम्, राजन्यचमसेषु तत्प्राप्त्यर्थत्वादिति पक्षान्तरमपि सूचितम् । कथं तर्हि क्रयणवदिति दृष्टान्तोपपत्तिः, तत्राह—तस्मादिति । पूर्वपक्षमुपसंहरति—अत इति । उत्कर्षमभ्युपेत्य द्वितीयपूर्वपक्षमाह—स चेति ।

न संस्थासु। तत्रापि चोदकप्राप्तस्य दशमुष्टेस्सोमस्य तावत एवाभिषवाद् धृत्या इति च वाक्यशेषानुपपत्तेः। ननु तत्रापि प्रदानविवृध्यार्थात्प्रदेयविवृध्या भवितव्यम्। न; चोदकप्राप्तत्वात्सोमपरिमाणस्य। प्रदेयविवृद्धिस्तु तोयादिना सम्पादनीया। तस्माद्-द्विरात्रादिष्वेवोत्कर्ष इति प्राप्तेऽभिधीयते गृह्णीम एतदुत्कर्ष इति। न तु द्विरात्रा-दिष्वेव, किन्त्वग्निष्टोमाधिकमात्रे दीर्घशब्दोपपत्तेरविशेषेण संस्थासु द्विरात्रादिषु चोत्कर्षः। संस्थासु चास्त्यर्थात्प्रदेयविवृद्धिः। न चोदकप्राप्तपरिमाणविरोधः, दीर्घपर्व-सोमग्रहणेन दशमुष्टित्रिपर्वपरिमाणयोरविरोधात्। अपि च न दशमुष्टित्रिपर्वपरिमित एव प्रकृतौ सोमः। अवशिष्टानामंशूनामुपसमूहनवचनात्तत्र परिमाणाभावः। श्रूयते हि—'यद्वैतावानेव सोमः स्याद्यावन्तं मिमीते यजमानस्यैव स्यान्नापि सदस्यानां प्रजाभ्यस्त्वेत्यवशिष्टानंशूनुपसमूहति सदस्यानेवान्वाभजति' इति। तस्मादस्ति प्रदेयवृद्धि-रर्थात्संस्थासु। सत्याञ्च धृत्या इति वाक्यशेषोपपत्तिः। अतोऽविशेषेण संस्थासु द्विरात्रादिषु चोत्कर्षः। न च संस्थास्वेवेति भ्रमितव्यम्, अविशेषादेव। न च प्रकरणा-द्विशेषः, संस्थानां प्रकरणाभावात्। अतो वाक्येनैव सम्बन्धः, तच्चाविशिष्टमिति सर्वगामिता। इति सन्तर्दनाधिकरणम्॥ ११॥

## १२

सू० संख्या०—ज्योतिष्टोमेऽस्ति प्रवर्ग्यः 'पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्ति' इति। तं प्रकृत्य श्रूयते—'न प्रथमयज्ञे प्रवृञ्ज्यात्' इति। तत्र संशयः-किं ज्योतिष्टोमाङ्गमयं प्रतिषेधः? अथ प्रथमप्रयोगाङ्गम्? इति। यदि प्रथमयज्ञशब्दो ज्योतिष्टोमनाम, ततो

---

तत्रापि। संस्थास्वपि। नन्विति। प्रदानस्य सोमयागाभ्यासस्योक्थ्यादिसंस्थान्तरेष्वाधिक्या-दित्यर्थः। अतिदेशप्राप्तत्रिपर्वत्वदशमुष्टिरूपपरिमाणबाधापत्तेर्न सोमवृद्धिरित्याह—नेति। सोमरसाधिक्यं विना कथमधिकयागनिर्वाहः? तत्राह—तोयादिनेति। अर्थादिति। अधिक-यागरूपप्रयोजनवशादित्यर्थः। प्रकारान्तरेणाप्यविरोधमाह—अपि चेति। अवशिष्टानां त्रिपर्व-मितसोमग्रहणावशिष्टानाम्। अंशूनां सोमखण्डानाम्। उपसमूहनं एकीकृत्योपादानम्। तत्र उपसमूहने। परिमाणेति। दशमुष्ट्यादीत्यर्थः। वचनमेव दर्शयति—श्रूयते हीति। तैत्तिरीय-शाखायामित्यर्थः। सदसि भवास्सदस्या ऋत्विजः। प्रजाभ्यस्त्वेति मन्त्रेणेत्यर्थः। भ्रमितव्य-मिति। गुरुग्रन्थे लिखनादिति भावः। भ्रमबीजमाशङ्कते—न चेति। संस्थानामिति। उक्थ्यादिस्तोत्रेण समापनस्य संस्थागुणस्य फलोद्देशेन विधानात्तत्राग्निष्टोमविकारत्वस्य संस्थाधिकरणे वक्ष्यमाणत्वादिति भावः। सन्तर्दनं प्रकृतौ स्यात् क्रयणवत्सन्तर्दनासन्तर्दनयोर्विकल्प-सम्भवेन अर्थलोपाभावादिति सूत्रार्थः। प्रयोजनं स्पष्टम्॥११॥

संख्या० प्रवर्ग्य इति यागविशेषनाम। उपसदां पुरस्तात् उपसद्भ्यः प्रागित्यर्थः। प्रवृणक्तीति। प्रवर्ग्येण क्रतूपकारं कुर्यादित्यर्थः। दानं दद्यादितिवत्। एतच्च कौषीतकि-ब्राह्मणे ज्योतिष्टोमप्रकरणे वचनम्। प्रवृणक्तीति। प्रथमयज्ञशब्दस्येति शेषः। ननु प्रक-

वाक्यप्रकरणाभ्यां ज्योतिष्टोमाङ्गम् । अथ प्रयोगवचनः, ततो वाक्येन प्रकरणं बाधित्वा प्रयोगाङ्गतेति । तत्र यज्ञशब्दस्य यागवचनत्वात्प्रथमशब्दस्य च तद्विशेषणत्वाद्यागनामता । तत्रापि प्रकरणाज्ज्योतिष्टोमनामता । विस्पष्टञ्च वाक्यान्तरे सामानाधिकरण्यम्—'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोम' इति । प्रवृत्तिनिमित्तस्य च विद्यमानत्वात्, स हि प्रथमं प्रयुज्यते 'य एतेनानिष्ट्वेति' वचनात् । तस्मात्—

**वाक्यात्प्रकरणाच्चायं क्रतोरङ्गं तदुच्यते ।**

**वाक्यादेष प्रयोगाङ्गं प्रयोगः प्रथमो यतः ॥**

प्रथमशब्देन हि यदप्रवृत्तपूर्वस्य कर्तुराद्यं प्रवर्तनं तदुच्यते, न तु क्रतुः कश्चित् । स तु प्रयोगविषयत्वाल्लक्षणया गम्यते । नन्वितरत्रापि यज्ञशब्देन लक्षणया प्रयोगे वर्तितव्यं स्यात्, नायं दोषः; जघन्यो हि यज्ञशब्दो लक्षणयापि नीयमानो न दुष्यति । मुख्यस्तु प्रथमशब्दः श्रुतिवृत्तो ग्रहीतव्यः । 'एष वाव प्रथम' इति, 'य एतेनानिष्ट्वा' इत्यस्यार्थवादत्वान्नाक्लृप्तशक्तिकल्पनया नामधेयत्वमवगमयितुमलम् । तस्मात् प्रयोगाङ्गम्, प्रथमे यज्ञप्रयोगे न प्रवृञ्ज्यादिति । यत्तु 'अग्निष्टोमे प्रवृणक्ती'ति वाक्यान्तरं तदनन्यार्थत्वात्प्रथमप्रयोगविषयमेव प्रतिषिद्धप्रतिप्रसवार्थम् । तेनाग्निष्टोमप्रथमप्रयोगे विकल्पः, स च व्यवस्थितो वचनान्तरात् । तथा हि श्रूयते—'कामन्तु योऽनूचानः स्यात्तस्य प्रवृञ्ज्यात्' इति । तेनाग्निष्टोमप्रथमप्रयोगेऽनूचानस्य नित्यं प्रयोगः, अन्येषां नित्यमप्रयोगः । अतिरात्रप्रथमाहारे तु सर्वेषामेवाप्रयोगः, प्रतिप्रसवाभावात् । इति प्रवर्ग्याधिकरणम् ॥ १२ ॥

---

रणेन प्रकृतपरत्वमात्रम्, न तु तन्मात्रनामतासिद्धिः, अत आह—विस्पष्टञ्चेति । सामानाधिकरण्यं ज्योतिष्टोमपदेन प्रथमयज्ञशब्दस्य । अर्थवादगतसामानाधिकरण्यस्य नामत्वासाधकत्वादाह-प्रवृत्तीति ।। 'य एतेनानिष्ट्वाथान्येन यजेत गर्तपत्यमेव तद्भवती' ति वचनात्सर्वसोमयागापेक्षया प्रथमो ज्योतिष्टोम इति प्राथम्यरूपं प्रवृत्तिनिमित्तमस्तीत्यर्थः । तस्मादित्यनेन वाक्यप्रकरणयोरविरोधाशङ्कया प्रत्यवस्थानादनन्तरसङ्गतिसूचनम् । प्रवर्तनं प्रयोगः । इतरत्रापि प्रथमयज्ञशब्दस्य प्रयोगपरत्वपक्षेऽपि । प्रथमयज्ञशब्दस्य ज्योतिष्टोमे रूढिशङ्कामपाकरोति एष वेति । अनन्यार्थत्वादिति । ज्योतिष्टोमाङ्गत्वस्य वाक्यान्तरेणानारभ्याधीतादिना लाभात्तदर्थत्वासम्भवेनागत्या प्रतिप्रसवार्थत्वमिति भावः । अनूचानः प्रवक्ता श्रोत्रियः । तस्य तत्कर्तृकप्रयोगे । प्रथमाहारे प्रथमप्रयोगे । प्रतिप्रसवाभावादिति । नचाग्निष्टोमातिदेशादस्त्येवातिरात्रेऽपि प्रतिप्रसव इति वाच्यम् । प्रतिप्रसवस्याग्निष्टोमसंस्थानिमित्तकत्वेन तदभावे तदतिदेशस्याप्यभावात् । सूत्रार्थस्तु-संख्यायुक्तं लक्षणया प्राथम्ययुक्तं प्रवर्ग्यनिषेधविधानं प्रकरणात् क्रत्वङ्गं स्यात् इति । प्रयोजनन्तु स्पष्टम् ।।१२।।

१३

सू० पौष्णं० दर्शपूर्णमासयोः 'पूषा प्रपिष्टभाग' इति पेषणप्रकरणे पूषाभावाद्यत्र पूषा तत्र वाक्यादुत्कृष्यत इति प्राप्तिसूत्रमेतत्। इति पौष्णपेषणाधिकरणम् ॥१३॥

१४

सू० तत्सर्वं० तत्पेषणं किं चरौ पशौ पुरोडाशे च विधीयतेऽथवा चरावेवेति संशयः।

अविशेषेण सर्वत्र स्यादिति प्राप्त उच्यते।
पुरोडाशेऽन्यतस्सिद्धं पशावाकृतिनाशनम्॥
पेषणं तेन न तयोर्विधातव्यं चरौ पुनः।
अविघातकमप्राप्तमिति तत्र विधीयते॥

पुरोडाशे हि चोदकादेव सिद्धं पेषणमिति न विधातव्यम्। नन्वन्यदिदं पेषणं श्रपणोत्तरकालं वचनबलाद्भविष्यति, न; अश्रवणात्। न हि पाकोत्तरकालमिद-मन्यत्पेषणमिति वचनमस्ति। पेषणमात्रं श्रुतम्, तच्च प्राप्तं न विधातव्यम्। ननु विधिब-लादेवान्यत्स्यात्। न; तस्याप्राप्तपेषणे चरावर्थवत्त्वादीदृश्याञ्च कल्पनायामसामर्थ्यात्। गौरवञ्चात्यन्ताप्राप्तपेषणान्तरविधौ स्यात्। एवं पशावपि सान्नाय्यविकारेऽत्यन्ता-प्राप्तम्, 'हृदयस्याग्रेऽवद्यति' इति विहितहृदयाद्याकृतिविनाशनञ्च चरौ त्वविघातकम्, पिष्टकचरावपि[1] पाकवैशद्येन चरुशब्दप्रयोगात्। चोदकप्राप्तञ्च तत्प्रयोजनाभावान्नि-वर्तमानं प्रतिप्रसूयत इति लाघवात्तत्रैव पेषणम्।

इति चरावेव पौष्णपेषणाधिकरणम्॥ १४॥

---

पौष्णं० प्राप्तिसूत्रमिति। अग्रिमसूत्रे करिष्यमाणविचारप्रसङ्गार्थं न्यायप्राप्तार्थबोध-कमित्यर्थः ॥१३॥

तत्सर्वं—अविशेषेणेति। पूषदैवत्यत्वाविशेषेणेत्यर्थः। अन्यत इति। अति-देशादित्यर्थः। आकृतिः हृदयादिरूपहविराकारः। अविघातकं चरुत्वाविघातकम्। अप्राप्तं पुरोडाशाकृतिसिद्धिरूपप्रकृतोपकारलोपान्निवृत्तम्। विधिबलादेवेति। अन्यथा तद्वैयर्थ्यादिति भावः। नन्वेवं सति पूषदैवत्यहविर्मात्रवाचकभागशब्दसङ्कोचापत्तिर्दोष इत्यत आह—गौरवं चेति। पेषणान्तरतज्जन्यादृष्टान्तरकल्पनागौरवमित्यर्थः। पेषणस्य चरु-त्वाविघातकत्वं दर्शयति—पिष्टकेति। पाकवैशद्येन अनवस्रावितान्तरूष्मपक्वत्वेन लाघवात् पेषणरूपकर्मभेदतज्जन्यादृष्टभेदयोरकल्पनादिति भावः। १४।

---

१. ओदनशब्दस्यावस्रावितानवस्रावितोभयसाधारणत्वाच्चरुशब्दस्य चानवस्रावितमात्रे प्रयोगादोदनो न चरुशब्दार्थः। तथात्वे पिष्टकचरौ चरुशब्दस्य लक्षणाप्रसङ्गात्। किन्तु अनवस्रावितान्तरूष्मपक्वविशेषवचनश्चरुशब्दः, स च तण्डुलप्रयोज्यत्वलक्षणः। तमेव पाकविशेषं दर्शयितुं पाकवैशद्येनेति वैशद्यपदप्रयोगः। एवञ्च पेषणस्य न चरुत्वविघातक-त्वमिति भावः।

**सू० एक०** चरावेव पेषणमिति स्थितम् । तत्र संशयः किं यत्रान्यसहिता पषा देवता तत्राप्येतत्पेषणम् ? उत यत्रैव केवला इति । तदर्थञ्च किं देवताप्रयुक्तमिदं पेषणम् ? उत तद्दैवत्ययागापूर्वप्रयुक्तमिति । तत्र

यज्ञप्रकरणाभावाद्वाक्ये चाश्रवणादिदम् ।
पेषणं देवताधर्मो नापूर्वस्यान्यधर्मवत् ॥

अन्ये हि धर्माः श्रुत्यादिभिः प्रकरणाद्वा यज्ञापूर्वसंयोगिनो गम्यमाना युक्तं यत्तस्यैव फलवतोऽङ्गं भवन्ति, न निष्फलाया देवतायाः । पेषणं त्विदं न यज्ञाङ्गम्, प्रकरणाभावात्, वाक्ये च पूषमात्रश्रवणात् । अतस्तत्स्वरूपप्रयुक्तं सद्द्विदैवत्येऽपि विद्यत इति तत्रापि पेषणं स्यादिति प्राप्तेऽभिधीयते—

देवता निष्फला नैव पेषणस्य प्रयोजिका ।
उपादानञ्च यागस्य भागशब्देन विद्यते ।
मुख्योर्थासम्भवाद्यागलिलक्षयिषयात्र हि ॥
श्रुयते भागशब्दोऽयं नानुपादानमस्त्यतः ।

स च यागो द्विदेवत्यो द्वयव्यासक्तत्वान्नैकेन पूष्णा वा शक्यते व्यपदेष्टुम्, ऐन्द्राग्नाविव ग्रहपुरोडाशावाग्नेयेन्द्रपीतशब्दाभ्याम् । यद्यपि चात्र तद्धितसमासानन्तर्गतत्वात्पूष्णो न वृत्त्यसामर्थ्यम्, तथापि भागशब्दार्थस्यैव द्विदेवत्ये पूषविशिष्टत्वाभावान्न तत्र पेषणम् । एकदेवत्ये तु तदिति सिद्धम् ।

इत्येकदेवत्ये पौष्णपेषणाधिकरणम् ॥ १५ ॥

इति शास्त्रदीपिकायां तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

१५

एक—मुख्यार्थेति । पूष्णः स्वामित्वाभावेन पूषस्वामिकत्वरूपमुख्यार्थासम्भवात् प्रविष्टो भागः स्वोद्देशेन त्यक्तो यस्येत्येवं यागलक्षणेच्छया भागशब्दप्रयोग इत्यर्थः । अनुपादानंयागस्य शब्देनाप्रतिपादनम् । नन्वाग्नेय इति तद्धितवृत्तौ इन्द्रपीतेति समासवृत्तौ चान्यसापेक्षत्वे सामर्थ्यविघातापत्तेरस्तु केवलाग्नेरिन्द्रस्य च प्रत्ययः, पूष्णस्तु सापेक्षत्वे तद्धितसमासयोरनुपपत्त्यभावात्कथं केवलपूषभागप्रत्यय इत्याशङ्क्ते—यद्यपीति । समासक्ते—तथापीति । भागशब्दार्थस्यैवेति । भागशब्दलक्ष्यार्थस्य यागस्येत्यर्थः । पूषविशिष्टस्येति । पूष्णो हि यागे विशेषणत्वं देवतात्वरूपप्रसिद्धसम्बन्धेनैव वाच्यम् । देवतात्वञ्च द्विदैवत्ये, न पूष्णः, किन्तु द्वयोः पर्याप्तमिति तद्व्यावृत्तिरित्यर्थः । सूत्रप्रयोजने स्पष्टे ।

इत्येकदेव पौष्णपेषणाधिकरम् ॥ १५ ॥

इति श्रीमत्पदवाक्यप्रमाणज्ञश्रीमत्तत्सदुपाख्यरामभट्टात्मज-
वैद्यनाथकृतौ शास्त्रदीपिकाटीकायां प्रभाख्यायां
तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥

## अथ तृतीयाध्यायस्य चतुर्थः पादः

१

सू० निवी० दर्शपूर्णमासयोः श्रूयते—'निवीतं मनुष्याणां प्राचीनावीतं पितॄणामुपवीतं देवानामुपव्ययते' इति। निवीतं मनुष्याणामिति किमयं विधिः ? उतार्थवादोऽयमुपवीतविधेरिति। अस्यार्थवादत्वमौदुम्बराधिकरणन्यायेन सिद्धम्। यदा विधिः, तदा विचार्यते। क्त्वाचिन्तेयम्। तत्र षष्ठीश्रुत्या शुद्धमनुष्यधर्म इत्येकः पूर्वः पक्षः, श्रुतिप्रकरणयोरविरोधात्क्रतुयुक्तपुरुषधर्मो लोहितोष्णीषादिवदित्यपरः, प्रकरणाच्छुद्धक्रतुधर्मः प्रयाजादिवत्। मनुष्यग्रहणं तु कर्तृसम्बन्धानुवाद इत्यन्यः, अनुवादस्यानर्थक्यात्प्राचीनावीतोपवीतावैषम्यात्प्रकरणाविरोधाय प्रकरणे यन्मनुष्यप्रधानकं कर्मान्वाहार्यदानादि तस्य धर्म इत्यपरः, प्राचीनावीतोपवीतयोः स्वतन्त्रपितृदेवताप्रधानकर्मविषयत्वात्तद्वैषम्यान्निवीतमपि स्वतन्त्रं यन्मनुष्यप्रधानं यदा तिथ्यादिकर्म तद्धर्म इत्यपरः। सर्वेषामेतेषामशोभनत्त्वात्पुरुषार्थत्वे च फलकल्पनाद्विध्येकवाक्यत्वात्प्रकरणाविरोधाच्चार्थवादत्वमेव पूर्वोक्तं ज्याय इति क्त्वाचिन्तोद्घाटनम् इति निवीताधिकरणम् ॥१॥

---

## चतुर्थः पादः

१

निवीतम्—अत्रापि प्रकरणस्य श्रुत्यादिविरोधाविरोधविचार एव, परन्तु प्रकरणेन क्रत्वर्थत्व प्रायेण कथ्यत इति पादभेदः। दक्षिणस्कन्धावलम्बितरूपे प्राचीनावीते शुद्धपितृधर्मत्वादिवक्ष्यमाणपक्षासम्भवादाह—निवीतमिति। निवीतं गललम्बितम्, परिकरबन्धो वा। क्त्वाचिन्तया मनुष्यधर्मत्वादिविचारस्यावतारार्थं विध्यर्थवादत्वचिन्तनम् भाष्यानुसारेणाह— किमिति। औदुम्बरेति। विध्यश्रवणविध्यन्तरैकवाक्यत्वरूपहेतुसाम्यादिति भावः। विचार्यत इति। निवीतं शुद्धमनुष्यधर्म इत्यादिविचारविषयीक्रियत इत्यर्थः। तत्र विधित्वे सति। षष्ठीति। षष्ठ्यर्थस्वामित्वस्य शेषित्वपर्यवसन्नत्वात् दध्नेन्द्रियकामस्येत्यादिवन्मनुष्याणां शेषित्वावगमादिति भावः। श्रुत्येति प्रकरणात्प्राबल्यसूचनम्। शुद्धेति। क्रतुरहितमनुष्यगतस्वतन्त्रफलार्थं इत्यर्थः। क्रतुयुक्तेति। क्रत्वङ्गभूतपुरुषसंस्कारकमित्यर्थः। तथाच पुरुषसंस्कारद्वारा क्रतूपकारकत्वान्न फलान्तरकल्पनागौरवमिति भावः। अत्रापि पक्षे निवीतस्य याजमानत्वाय त्रिः, यजमानास्तु तत्प्रधानत्वादिति न्यायात्। ततश्चाध्वर्यवसमाख्याविरोध इत्यतः पक्षान्तरमाह—प्रकरणादिति। कर्तृसम्बन्धेति। अर्थप्राप्तकर्तृसंबन्धेत्यर्थः। एतत्पक्षेऽनुवादानर्थक्यदोषस्य पक्षान्तराभ्युपगमे हेतुत्वात्पञ्चम्युपपत्तिः। एवं वैषम्यदोषस्यापीति। क्वचित्तु वैषम्यप्रसङ्गादिति पाठः। प्राचीनावीतोपवीतयोर्हि पितृदेवप्रधानकर्माङ्गत्वं यथा, तथा निवीतस्याप्युचितमिति। प्रकरणाबाधाय प्रकरण इत्युक्तम्। अन्वाहार्यः चरुः। सिद्धान्तमाह—सर्वेषामिति। तत्राद्यपक्षे पूर्वमनुक्तं दोषमाह—पुरुषार्थत्व इति। प्रकरणबाधस्योपलक्षणं बोध्यम्। सर्वसाधारणं दोषमाह—विधीत्यादि। अन्त्यपक्षे चायमसाधारणो हेतुर्ज्ञेयः। तत्र विध्येकवाक्यत्वप्रकरणयोर्बाधात्। सूत्रन्त्वाद्यपक्षे शब्दस्य षष्ठ्यन्तस्य तत्प्रधानत्वात् मनुष्यप्रधानत्वादिति हेतूक्तिपरम्।

इति निवीताधिकरणम् ॥ १ ॥

२

सू० उप—दर्शपूर्णमासयोरुपवीतं श्रुतम् 'उपव्ययत' इति। तत्र संशयः—किमिदं सर्वदैवकर्माङ्गम्? उत दर्शपूर्णमासाङ्गमिति। तत्र मृताग्निहोत्रे 'प्राचीनावीती दोहयेद्यज्ञोपवीती हि देवेभ्यो दोहयति' इति सिद्धवद्दैवाग्निहोत्रे यज्ञोपवीतानुवादलिङ्गेन प्रकरणं बाधित्वा सर्वार्थत्वमवगम्यते। न च दर्शपूर्णमासस्थस्यैवायमनुवादः, विप्रकृष्टत्वाद्देवेभ्य इति च बहुवचनानुपपत्तेः। वैकल्पिकेन्द्रमहेन्द्रदेवत्यत्वात्सान्नाय्यस्य। अग्निहोत्रे त्वग्निसूर्यप्रजापत्यभिप्रायमुपपन्नं बहुवचनमिति तद्गतस्यैवायमनुवादः। स च दर्शपूर्णमासप्रकरणोल्लङ्घनेन सर्वार्थत्वे घटत इति प्राप्ते ब्रूमः—प्रकरणाद्दर्शपूर्णमासाङ्गम्। अग्निहोत्रगतन्तु लिङ्गं यथाप्राप्ति वर्णयितव्यमिति सन्निकृष्टाभावाद्विप्रकृष्टमपेक्ष्य प्रवर्तते। बहुवचनञ्च प्रकृतिविकृतिदेवताभिप्रायमित्यविरुद्धम्। सोऽयं लिङ्गप्रकरणविरोधाविरोधविचारः। इत्युपवीताधिकरणम् ॥ २ ॥

३

सू० विधिर्वा—'उपव्ययत' इत्येतदुदाहरणम्। किमसौ विधिः? उतानुवाद इति। 'नित्योदकी नित्ययज्ञोपवीती' इति स्मृतिप्राप्तत्वादनुवाद इति प्राप्ते, विधिरपूर्वत्वादित्याह। पुरुषार्थतया हि स्मृतितः प्राप्तिः, अयन्तु क्रत्वर्थतया विधिः, अप्राप्तत्वात्। अथवैवमधिकरणम्—'उपव्ययत' इति स्मृतिप्राप्तानुवादः। स्मृतिश्चाविशेषेण

---

उपवीतम्—अत्रोपवीतस्तावकत्वेन प्रकरणे निवेशस्योक्तस्याक्षेपात्सङ्गतिः। मृतस्य यजमानस्यादाहे वाचनिकं सायम्प्रातरग्निहोत्रं मृताग्निहोत्रम्। तत्र प्राचीनावीतविधेः स्तुतिः। हि यास्माद्यज्ञोपवीती देवेभ्यो दोहयति जीवदवस्थायाम्, मृतावस्थायां तु प्राचीनावीतमुचितम् इति। सर्वार्थत्वमिति। सकलदैवकर्माङ्गमित्यर्थः। विप्रकृष्टत्वात् दूरस्थत्वात् अनुवादस्य सन्निहितगामित्वात्। इदमुपलक्षणम्-स्तुतेरसामञ्जस्यमपि ज्ञेयम्। अग्निहोत्र एव हि अवस्थाभेदेनार्थवादो युज्यते, न तु कर्मान्तरगतयज्ञोपवीतानुवादेनेति। द्वादशाहीनस्येतिवद् दूरस्थानुवादसम्भव इत्यत आह—देवेभ्य इति। प्रकृतङ्गति दर्शयति—सोऽयमिति। एतच्चोपवीतं ब्रह्मसूत्ररूपमेव, स्मृतिप्राप्तमपि यजुर्भ्रेषनिमित्तप्रायश्चित्तप्राप्त्यर्थं पुनर्दर्शपूर्णमासाङ्गत्वेन विधीयते। न च 'यज्ञोपवीत्येवाधीयीताध्यापयेद्वा यजेत याजयेद्वा' इति श्रुत्यैव तत्सिद्धेरेतद्विधिवैयर्थ्यम्, 'अजिनं वासो वे' त्यादिवाक्यशेषेण तस्याः श्रुतेर्वासोविन्यासविषयत्वात्। एवञ्च प्रकृते पूर्वपक्षे यजुर्भ्रेषनिमित्तप्रायश्चित्तप्राप्तिः, सिद्धान्ते तु नेति प्रयोजनं बोध्यम्। सूत्रं स्पष्टार्थम्। इत्युपवीताधिकरणम् ॥ २ ॥

३

विधिर्वा—उपवीतस्य दर्शाङ्गत्वाक्षेपात्सङ्गतिः। नित्यमुदकमाचमनार्थं यस्य स नित्योदकी। अप्राप्तत्वादिति। यद्यपि यज्ञोपवीतिना कर्तव्यमिति स्मृत्या क्रत्वर्थतयापि प्राप्तिरस्ति, तथापि यज्ञोपवीतनाशे यजुर्वेदविहितभ्रेषनिमित्तप्रायश्चित्तप्राप्त्यर्थतया विधिसम्भवो

स्थितेति सर्वकर्मार्थतया प्राप्तमनूद्यत इति पूर्वः पक्षः। संयोगभेदाद्विधिः। अतश्च प्रकरणाद्दर्शपूर्णमासाङ्गमिति सिद्धान्तः। एवं वा–मृताग्निहोत्रे श्रूयते– 'यज्ञोपवीती हि देवेभ्यो दोहयति' इति। किमयं दैवाग्निहोत्राङ्गतया यज्ञोपवीतस्य विधिः? उत दर्शपूर्णमासादिषु प्राप्तस्य प्राचीनावीतस्तुत्यर्थोऽनुवाद इति। तत्र प्राचीनावीती दोहयतीत्यग्निहोत्रस्य मृतावस्थायां वचनाद्यज्ञोपवीती हि देवेभ्यो दोहयतीति तस्यैव जीवदवस्थायामुपवीतं गम्यते। तच्चाप्राप्तमित्यनुवादस्वरूपस्यापि हिशब्दपरित्यागेन विधित्वं गम्यते। स्थितं तावदपर्यवसितम्। इत्युपवीतविध्यधिकरणम् ॥३॥

## ४

**सू० उदक्त्वं**—तत्रैव श्रूयते 'ये पुरोदञ्चो दर्भा, तान् दक्षिणाग्रांस्तृणीयात्' इति। ये पुरोदञ्च इति किं विधिः? उतानुवाद इति। प्राप्त्यभावाद्यच्छब्दोपबन्धस्यापि व्यवहितकल्पनया वाक्यभेदेन च विधित्वं गम्यते। ये पुरा जीवदवस्थायां दर्भाः, ते उदञ्चः कार्या इत्येकं वाक्यम्, तान् दक्षिणाग्रानिति च मृतावस्थायां वाक्यान्तरमिति प्राप्ते ब्रूमः—यच्छब्दोपबन्धाद्विध्यभावाद्विध्यन्तरैकवाक्यत्वाच्चानुवादकत्वम्। अस्ति च प्राप्तिः, 'अग्रवन्त्युदगग्राणि' इति स्मृतेः। न चेदमेव स्मृतेर्मूलम्। अस्याग्निहोत्रविषयत्वात्स्मृतेश्चाविशेषेण सर्वविषयत्वादवश्यं मूलान्तरं कल्पनीयम्, तस्मिंश्च कल्पिते तत एवाग्निहोत्रेऽपि प्राप्तेरयमनुवाद इति स्थितादुत्तरम्—'यज्ञोपवीती हि देवेभ्यो दोहयति' इति हिशब्दोपबन्धात्प्राचीनावीतविधिशेषत्वादनुवादत्वं तावद्गम्यते। तद्यदि कथञ्चिदपि प्राप्तिर्न स्यात्, ततो भङ्क्त्वा रूपं विधित्वमध्यवसीयेत। अस्ति च दर्शपूर्णमासादिषु प्राप्तिरिति तदपेक्षात्वादनुवादोपपत्तौ न रूपभङ्गो युक्तः,तस्मादनुवादः। इत्युदक्त्वाधिकरणम् ॥ ४ ॥

---

बोध्यः। संयोगभेदादिति। कर्मप्रकरणाभावेन स्मृतितः पुरुषार्थतयैव प्राप्तेः क्रत्वङ्गत्वसिध्यर्थो विधिरित्याशयः। अव्यवहितमृताग्निहोत्रविषय एव विचारस्य युक्तत्वात्तथैवाह–एवञ्चेति। तस्यैवेति। अग्निहोत्रस्यैवेत्यर्थः। हिशब्देति। अनुवादद्योतकत्वायोगात्तमुपेक्ष्येत्यर्थः। दोहयतीत्याख्यातसत्वेऽनुवादत्वे सिद्धान्तिते 'ये पुरोदञ्च' इत्यत्राख्यातासमेत्वेन विधित्वपूर्वपक्षायोगादेकसूत्रेणोभयसिद्धान्तसम्भवाच्चान्तरागर्भिणीन्यायेन विचारान्तरमित्याह—स्थितमिति। इत्युपवीतविध्यधिकरम् ॥३॥

## ४

उदक्त्वम्।तत्रैवेति। मृताग्निहोत्र एवेत्यर्थः। उदञ्च उदगग्राः। प्राप्त्यभावादिति। अग्रवन्त्युदगग्राणीति स्मृतेर्मूलसापेक्षत्वादस्या एव तन्मूलत्वमिति न स्मृतिप्राप्तानुवादत्वमिति भावः। व्यवहितकल्पनां दर्शयति—ये पुरेति।। शेषं स्पष्टम्· इत्युदक्त्वाधिकरणम् ॥४॥

५

सू० विधिस्तु० मृताग्निहोत्र एवं श्रूयते—'अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति, इति। किमयं जीवदग्निहोत्रे विधिः ? उतानुवाद इति। पूर्वेण न्यायेनानुवादः। कुतश्च प्राप्तिः ? आचारात्। सर्वमभ्यर्हितं द्रव्यं प्रच्छाद्यैव देशान्तरं नेतव्यमित्याचारात्प्राप्तम्। अतोऽग्निहोत्रद्रव्यमपि गार्हपत्यादाहवनीयमानीयमानमाच्छादयितव्यम्। तत्केनेति समिद्धारणविधानं तन्नियमादृष्टार्थं भवति—समिधा प्रच्छादयेदिति। सा चोपरि धार्यमाणा प्रच्छादनक्षमा नान्यथेति प्राप्तमुपरिधारणमनूद्यत इति प्राप्ते—ब्रूमः -विधिरपूर्वत्वात्। न ह्याचारादुपरि प्राप्तिः, आच्छादनासमर्थत्वात्। 'स्रुग्दण्डे समिधमुपसङ्गृह्य' इति च श्रवणाद्दण्डप्रदेशेऽसौ धारयितव्येति कुतोऽनया हविषः प्रच्छादनम्। अतोऽप्राप्तत्वाद्धिशब्दपरित्यागेन विधिः, अनुवादानुपपत्त्या हि विधिकल्पनम्। इत्युपरिधारणाधिकरणम्॥ ५॥

६

सू० दिग्वि० 'ज्योतिष्टोमे प्राचीनवंशं करोति' इति विधाय श्रूयते 'प्राचीं देवा व्यभजन्त, दक्षिणां पितरः, प्रतीचीं मनुष्याः, उदीचीं रुद्राः' इति। तत्र 'प्रतीचीं मनुष्याः' इत्यत्र निवीताधिकरणवत्सर्वे पक्षा रचयितव्याः। का पुनर्विशेषाशङ्का ? सोच्यते-निवीतं मनुष्याणामित्यत्र न स्तुतिरप्याञ्जस्येन गम्यत इति दूरापास्तं विधित्वम्। इह तु व्यभजन्तेति पुराकल्पेन पूर्वपुरुषाचरितत्वेन प्रशंसा गम्यते। तथा च सुकरो विधिरित्यतो विधित्वं युक्तमितीमामाशङ्कां निवर्तयितुमिदमधिकरणम्। इति दिग्विभागाधिकरणम्॥ ६॥

७

सू० परुषि० 'यत्परुषि दितं तद्देवानाम्, यदन्तरा तन्मनुष्याणाम्' इति, तथा

---

विधिस्तु—अनुवादापवादात्सङ्गतिः। अधस्तात् स्रुग्दण्डस्येति शेषः। अनुद्रवेत् आहवनीयं प्रति गच्छेत्। समिद्धारणेति। प्राप्ताच्छादनाङ्गत्वेन समिन्मात्रमेव विधेयम्। धारणमुपरि पावश्यार्थंत एवेति ज्ञेयम्। अत एवाह—सा चेति। कथञ्चित्प्राप्तिसामर्थ्यमाशङ्क्याह—स्रुग्दण्ड इति। इत्युपरिधारणाधिकरणम्॥ ५॥

६

दिग्वि० प्राचीनेति। प्राचीनः प्रागायतः पृष्ठवंशो यस्य तं मण्डपमित्यर्थः। श्रूयत इति। सोम इति शेषः। तत्र देवपितृरुद्राणां कर्मानधिकारेण पुरुषधर्मत्वादिपक्षासम्भवान्मनुष्यवाक्ये विचारमाह—तत्रेति। स्तुतिरपीति। तत्प्रतीतौ हि तया विधिकल्पनसम्भव इत्यर्थः। तथाच प्रतीच्यभिमुखत्वं मनुष्याणां विधीयत इत्यर्थः। देवादिसम्बन्धिदिग्विभागोऽपि तद्वत् निवीतवदिति सूत्रार्थः। इति दिग्विभागाधिकरणम्॥ ६॥

७

परुषि—पूर्वत्रेह च तद्वदित्यातिदेशिकी सङ्गतिः स्पष्टा। अत्राद्यं दर्शपूर्णमासयोः पर्व प्रति लुनातीति विधेः शेषः। परुषि पर्वणि। दितं छिन्नम्। अन्तरा मूलपर्वान्त-

'यत्पूर्णं तन्मनुष्याणाम्' इति, तथा 'घृतं देवानाम्, मस्तु पितॄणाम्, निष्पक्वं मनुष्याणाम्' इत्यत्र मनुष्यसंयुक्ता उदाहरणम् । तथा 'यो विदग्धः स नैर्ऋतः, योऽशृतः स रौद्रः' इति । अत्रापि विध्यर्थवादादिपक्षा निवीतवदेव सर्वे योज्याः । विशेषाशङ्का त्वेषा–विधित्वेऽपि न फलकल्पनं लौकिकानामेव क्लृप्तफलानां लवनमानाभ्यञ्जनक्रियाणामन्तरापूर्णनिष्पक्वमिति विशेषनियममात्रविधानान्नियमादृष्टमात्रम्, न निवीतवदत्यन्ताप्राप्तविधानेनादृष्टक्रियाफलकल्पना । यो विदग्ध इत्यपि प्रसिद्धयोरेव नैर्ऋतरौद्रयोर्विदग्धत्वाशृतत्वगुणमात्रविधानाल्लाघवमतो विधिरित्येतां शङ्कां निवर्तयितुमतिदेशः । इति परुषिदिताधिकरणम् ॥ ७ ॥

८

सू० अकर्म० क्रतौ पुरुषे चार्थतः प्रसक्तं पदार्थं प्रतिषेधन्तः क्रतुप्रकरणगताः प्रतिषेधा इहोदाहरणम् । दर्शपूर्णमासयोर्हि 'नानृतं वदेत्' इति हि श्रूयते । तत्र संशयः– किमयं पुरुषधर्मो विधिः? उत क्रतुयुक्तपुरुषधर्मोऽनुवादः ? किं वा शुद्धक्रतुधर्मोऽनुवादः ? अथवा शुद्धक्रतुधर्मो विधिः ? इति । तदर्थञ्च प्रतिषिध्यमाना क्रिया विचारयितव्या किमर्था सती प्रतिषिध्यते—किं क्रत्वर्था ? किं वा पुरुषार्थेति । ततोऽपि पुनर्विचारयितव्यम्-किमाख्यातं कर्त्तारमभिधत्ते ? न वेति । तत्र

---

राले । द्वितीयं वाक्यं सोमे 'उपरि त्रिलात् गृह्णाति'इति ग्रहग्रहणविधेः शेषः । तृतीयं तत्रैव नवनीतेनाभ्यङ्क्ते' इत्यस्य । घृतम् अग्नौ विलीनम् । मस्तु स्वत एव विलीनम्, निष्पक्वं तक्रादिप्रक्षेपान्नितरां पक्वम् । मनुष्येति । निवीतोक्तपक्षाणां तत्रैव सम्भवादिति भावः । दर्शपूर्णमासगतम् 'अविदहता श्रपयितव्यम्' इति विधेश्शेषं विध्यर्थवादविषयत्वेनोदाहरति— यो विदग्ध इति । विशेषो दग्धो विदग्धः । अशृतः अपक्वः । अत्र चाग्न्यादिबाधेन विदग्धाशृतत्वनिमित्तकनिर्ऋत्यादिदेवताविधिः । अथवा निर्ऋत्यादिदेवताके प्राप्ते पुरोडाशे विदग्धत्वादिगुणमात्रविधिरिति पूर्वपक्षो ज्ञेयः । नियमेति नियमादृष्टस्य च विघ्ननिरासद्वारा लवनादिष्वेवोपयोगान्न फलकल्पनं इत्याहुः । सूत्रे वास्यानुकरणात्सप्तम्यलुक् ।

इति परुषि दिताधिकरणम् ॥ ७ ॥

८

अकर्म० अत्र चानुवादापवादात्सङ्गतिः । उभयार्थत्वसम्भवसूचनाय नातिरात्र इत्यादिनिषेधव्यावर्तनाय चार्थं विशेषणम् । प्रकृतसङ्गतिसिद्धान्तयोः सूचनाय न हिंस्यादिति निषेधव्यावर्तनाय च द्वितीयम् । प्रतिषेधास्तद्वाक्यानि । किमित्यादि । अत्र क्रतुयुक्तपुरुषधर्म इत्यन्तरं विधिवचनमित्यनुषङ्गः । उतेत्यस्यानुवाद इत्यनेनान्वयः । अग्रेऽनुवादत्वपक्षनिरासोत्तरमिदानीं क्रतुयुक्तस्य पुरुषस्य वा धर्मः, उत शुद्धक्रतुधर्म इत्येतावदवशिष्यत इति ग्रन्थकृतैवाभिधास्यमानत्वादिति ज्ञेयम् । निषेधस्य च पुरुषार्थत्वं तद्गतानिष्टजनकक्रियाविषयत्वेन तदुपकारकत्वात् । क्रतुगतवैगुण्यजनकक्रियाविषयत्वाच्च क्रत्वर्थत्वमिति ज्ञेयम् । क्रियाप्रतिषेधयोरेकार्थत्वस्यौत्सर्गिकत्वादाह—तदर्थञ्चेति । कर्तृविशेषैरित्यादितृतीयहेतुं व्या

प्रतीतेस्स्मरणात्कर्तृविशेषैरपृथक्श्रुतेः ।
कर्तृवाचित्वमाख्यातप्रत्ययस्यावसीयते ॥

वदेदित्याख्याताात्कर्त्ताऽवगम्यते । यश्च यतोऽवगम्यते, स तस्यार्थः । तथा कर्तरि कृदित्यधिकृत्य 'लः कर्मणि च' इति चकारेण कर्तृवाचित्वं स्मृतम् । पचति देवदत्त इति च कर्तृविशेषवचनैर्देवदत्तादिपदैस्सामानाधिकरण्यात्कर्तृवाचिता। स च प्रत्ययार्थत्वात्प्रकृत्यर्थं वदनं प्रति प्रधानभूत इति वदनं तावत्पुरुषार्थम् । यदर्थं वदनं तदर्थः प्रतिषेधोऽपि न्याय्यः। कुत एतत् ? प्रतिषेधस्यानिष्टबोधकत्वात् । इष्टविपरीतञ्चानिष्टम् । यद्यदा यस्येष्टं तद्विपरीतं तदा तस्यानिष्टं भवति। तद्यदि प्रतिषेध्यभूतां वदनक्रियामनुवदन्वदेदिति शब्दः पुरुषार्थतया तामुपस्थापयेत्ततः प्रतिषेधोऽपीष्टविपरीतसाधनतां बोधयन्ननुवादावस्थापन्नस्यैवेष्टस्य विपर्ययं फलत्वेनावलम्बते नेष्टान्तरस्य, अप्रतिपन्नत्वात् । तदयमर्थः—यत्पुरुषोपकारितया प्रसक्तं वदनं तन्न तथा, किन्त्वपकारमेवास्य साधयतीति । तेन श्रुत्या प्रकरणं बाधित्वा पुरुषार्थः प्रतिषेधः । यस्तु स्मार्तः प्रतिषेधः, तस्याप्येतदेव मूलं भविष्यतीत्येकः पक्षः । श्रुतिप्रकरणयोरविरोधात्क्रतुयुक्तपुरुषधर्मोऽयं जञ्जभ्यमानमन्त्रवचनवत्कर्म कुर्वाणस्यानृतं वर्जयितव्यमिति, सोऽयं स्मृतिप्राप्तानुवादः । स्मृत्यैव हि पुरुषस्योपनयनप्रभृत्यामरणान्निषिद्धमनृतं तन्मध्यवर्तिनोश्च दर्शपूर्णमासयोस्तत एव वर्जनं प्राप्तमित्यनुवादः। न चास्मिन्पक्षे मूलमूलित्वं श्रुतेः, क्रतुविषयत्वात्स्मृतेरायुर्विशेषावस्थानादिति द्वितीयः पक्षः, प्रयाजादिवत्क्रत्वर्थ एवारादुपकारकः प्रतिषेधः, सोऽपि त्वनुवाद एव। पुरुषो हि स्वार्थमेवानृतं वर्जयतीति प्राप्तमेव क्रतावपि वर्जनम् । न हि पुरुषं विहाय क्रतावनृतं सम्भवति । पुरुषे च निषिद्धमिति कुतः क्रतौ प्राप्तिः । तस्मादनुवाद इति तृतीयः पक्षः । अत्राभिधीयते—

क्रत्वर्थत्वेऽपि यत्तावदनुवादत्वमीरितम् ।
तत्र संयोगभेदेन विधिरेव हि गम्यते ॥

---

चष्टे—पचतीत्यादि । कर्तारं विशेषयन्ति व्यावर्तयन्ति इति तादृशानि देवदत्तादिपदानि तैरपृथक्श्रुतेः सामानाधिकरण्यादित्यर्थः। ननु 'दीक्षितो न ददाति' इत्यादौ क्रियाप्रतिषेधयोर्भिन्नार्थत्वदर्शनात्कथमयं नियम इत्याशयेन शङ्कते–कुत इति । फलत्वेनेति । निषेध्यक्रियाफलत्वेनेत्यर्थः। एवञ्च दीक्षितो न ददातीत्यादौ पुरुषार्थतयैव निषेधे विकल्पस्य वस्तुनि सम्भवायोगादगत्या क्रत्वर्थत्वाङ्गीकारेऽन्यत्र रागप्राप्तनिषेधे विकल्पाप्रसक्तेरौत्सर्गिकमेकविषयत्वमेव युक्तमित्याशयः। जञ्जभ्यमानेति । एतच्चानन्तराधिकरणे वक्ष्यते । प्रयाजादिवदिति । प्रयाजादिवदारादुपकारक एवेत्यन्वयः। स्वार्थमेवेति । न हि पुरुषः स्वार्थञ्चानृतं वर्जयिष्यति, क्रत्वर्थञ्च वदिष्यतीति सम्भवति, क्रत्वर्थतयानृतवदनविध्यभावेन विरोधादिति भावः। तत्रेति पूर्वार्धान्वयि । संयोगेति । क्रतुपुरुषरूपशेषिभेदेनेत्यर्थः। एतदेवो-

अनृतवदनस्य पुरुषार्थेन हि स्मार्तेन प्रतिषेधेनैतदवगतमनृतं वदतः पुरुषस्य प्रत्यवायो भवति, वर्जनाच्च स न भवतीति न क्रतोः किञ्चित्तद्भावाभावयोर्वैगुण्यमवैगुण्यं वा। तेन यः प्रत्यवायमभ्युपेत्य क्रतुमविगुणं चिकीर्षति, तस्य नानृतं वर्जनीयं स्यात्। क्रत्वर्थेन तु प्रतिषेधेन क्रतुगत एव प्रत्यवायोऽनृताद्भवतीति बोध्यत इत्यर्थभेदान्नानुवादः। तथातिक्रमेऽपि पुरुषार्थातिक्रमनिमित्तं प्रायश्चित्तम्; क्रत्वर्थत्वे तु क्रतुदोषनिमित्तं प्रायश्चित्तमिति विशेषः। एवमेव कतुयुक्तपुरुषसंस्कारपक्षेऽपि क्रत्वर्थत्वतुल्यत्वात्संयोगान्तरं व्याख्येयम्। तन्न तावदनुवादः। इदानीं क्रतुयुक्तस्य पुरुषस्य वा धर्मः? उत शुद्धक्रतुधर्मः? इत्येतावदवशिष्यते। तत्रोच्यते—

**आख्यातप्रत्ययास्सर्वे क्रियाया अभिधायकाः।**
**तत एव प्रतीतस्य न कर्तुरभिधेयता॥**
**न स्मृतिः कर्तृवाचित्वे संख्यावाचित्वगोचरा।**
**सामानाधिकरण्यञ्च लक्षणातो गवादिवत्॥**

अनन्यलभ्यो हि शब्दार्थो भवति, कर्ता चाख्याताभिहितभावनाऽविनाभावादेव लभ्यमानो नाभिधेयो भवितुमर्हति। स्मृतिरपि नास्याभिधेयतामाह, किन्तु तत्संख्यावाचिताम्। 'लः कर्तरि' इति विभक्तिशास्त्रस्य 'द्व्येकयोर्द्विवचनैकवचने' इत्यस्य च संख्याशास्त्रस्यैकवाक्यत्वात्। अत्र द्व्येकयोरिति द्विवचननिर्देशादसत्यपि भावप्रत्यये भावप्रधानो निर्देशो द्वित्वैकत्वयोरिति द्रष्टव्यम्। द्रव्यपरत्वे हि द्वयोरेकस्य च सन्निपाते बहुत्वोपजननाद् बहुवचनं स्याद् द्व्येकेष्विति। तदयमर्थः—कर्तुरेकत्वे लकारैकवचनमिति। अनभिधेयोऽपि कर्ता धात्वर्थभावनाभ्यामेव प्रतिपन्न इति नानुपपन्नम्। तद्विशिष्टसंख्याभिधानं सामानाधिकरण्यञ्च गौः शुक्ल इतिवल्लाक्षणिककर्त्रभिप्रायमुपपन्नमिति नाभिधेयः कर्ता। तेन श्रुतिविरोधाभावात्क्रत्वर्थ एवायं प्रतिषेधः, स च संयोगान्तरत्वान्नानुवादः। इति कर्त्रधिकरणम्॥ ८॥

---

पयादयति—पुरुषार्थेन हीति। तद्भावाभावयोः अनृतभावाभावयोः। अर्थभेदात् बोधनीयफलभेदात्। अतिक्रमे निषेधातिक्रमे। पुरुषार्थेति। गायत्रीजपाचमनादिरूपमित्यर्थः। क्रतुदोषेति। यजुर्वेदविहितभ्रेषे 'भुवः स्वाहा' इत्यन्वाहार्यपचने होमरूपमित्यर्थः। सिद्धान्तमाह—आख्यातेति। क्रियायाः भावनायाः। नन्वेकस्मिन् कर्तरि लकारैकवचनमित्येकवाक्यतायामपि कथं संख्यामात्रवाचित्वमत आह—अत्रेति। बहुत्वोपजननात् बहुत्वप्राप्तेः। विशिष्टाभिधानस्य विशेषणाभिधानं विनानुपपत्तिमाशङ्क्याह—अनभिधेयोऽपीति। तथा च विशेषणोपस्थितिमात्रेण विशिष्टाभिधानोपपत्तिरिति भावः। प्रयोजनन्तु—सिद्धान्ते ऋत्विग्भिर्यजमानेन च क्रतावनृतं वर्ज्यम्, पक्षान्तरे तु नैवमिति। सूत्रार्थस्तु क्रतुगतमकर्मनिषेधनं संयोगात् सर्वदा पुरुषसंयोगान्नित्यानुवादस्स्यादिति। इति कर्त्रधिकरणम्॥ ८॥

९

सू० अही०—दर्शपूर्णमासयोः श्रूयते—'जञ्जभ्यमानोऽनुब्रूयान्मयि दक्षक्रतू' इति। तत्र संशयः—किमेतन्मन्त्रवचनं शुद्धपुरुषधर्मः? उत क्रतुयुक्तपुरुषसंस्कारः क्रतोरेवाङ्गम्? इति। तत्र-जञ्जभ्यमानधर्मोऽयं वाक्यात्प्रकरणेन तु। क्रत्वङ्गं दुर्बलं तच्च तेनास्य पुरुषार्थता॥ नन्वेवं फलं कल्पनीयम्, नैष दोषः, वाक्यावगतजञ्जभ्यमानपुरुषार्थत्वबलेन तत्कल्पनस्य न्याय्यत्वात्, सत्याञ्च फलाकाङ्क्षायां 'प्राणापानावेवात्मन् धत्ते' इति वाक्यशेषेणैव रात्रिसत्रवत्फललाभात्।

सत्यं यदि विरोधस्स्याद्वाक्यप्रक्रिययोरिह।
ततः फलं प्रकल्प्येत न त्वत्रास्ति विरोधिता॥
जञ्जभ्यमानः पुरुषः क्रतावपि हि विद्यते।
तत्संस्कारमुखेनैव क्रत्वर्थत्वं भविष्यति॥
अवश्यं हि फलं कल्प्यं तदध्याहारतो वरम्।
प्रकृतेनैव सम्बन्ध इति क्रत्वर्थता स्थिता॥

एकदेशिनान्तु नात्र क्रत्वर्थता सिध्येत् निमित्तं हि जृम्भिका। निमित्तञ्चाधिकारि विशेषणम्। अतो जृम्भिकानिमित्तयुक्तस्य पुरुषस्याधिकारिणोऽत्र वाक्ये श्रुतस्य लाभात्कार्यस्य च फलानपेक्षत्वादनपेक्षं संपूर्णं वाक्यं न प्रकृतसम्बन्धमुपेयात्स्वतन्त्रमेव पुरुषार्थं स्यादित्यास्तां तावत्। इति जञ्जभ्यमानाधिकरणम्॥ ९॥

१०

सू० शंयो० दर्शपूर्णमासयोः श्रूयते—'यो ब्राह्मणायावगुरेत्तं शतेन यातया-

---

अही० शुद्धक्रतुधर्मत्वापवादात्सङ्गतिः। तच्च प्रकरणम्। वाक्यावगतेति। कर्तरि कृत् इति शानचः कर्तृवाचितया तत्समभिव्याहाररूपाद्वाक्यात्तदर्थत्वावगमात्तस्य च पुरुषगतफलजनकत्वरूपत्वादिति भावः। आत्मन् आत्मनीत्यर्थः। तथा चात्यन्तानुपस्थितफलकल्पनादोषोऽपि नास्तीति भावः। अवश्यं हीति। प्राणापानधारणस्य फलत्वप्रतीत्यर्थं कामपदाध्याहारावश्यकत्वादिति भावः। प्राभाकरैर्लिङर्थकार्यस्य नियोज्यसाकाङ्क्षत्वात्तत्समर्पकतया स्वर्गकामाद्यन्वय इत्यर्थात्स्वर्गस्य नियोज्यविशेषणतया फलत्वम्। तथा च निमित्ताधिकारे निमित्तवतो नियोज्यत्वाद्वाक्यस्य निराकाङ्क्षत्वात्फलाभावाङ्गीकारादिहापि तथात्वापत्तिरित्याह—एकदेशिनान्त्विति। निमित्तं हीति। 'लक्षणहेत्वोः क्रियायाः' इत्यनेन लक्षणे शानचो विधानादनुवचनक्रियालक्षणत्वस्य च निमित्तत्वपर्यवसन्नत्वादिति भावः। प्रयोजनं सिद्धान्ते फलाधानयोग्यताजनकत्वाद्यजमानस्यैव मन्त्रपाठः, पक्षान्तरे तु नेति। सूत्रार्थस्तु अहीनवत् यथा द्वादशोपसत्त्वम् अहीनस्य द्वादशाहादेर्वाक्येन धर्मः। तथा प्रकृतमन्त्रपाठोऽपि पुरुषधर्मः तदर्थताप्रतीतेरिति। इति जञ्जभ्यमानाधिकरणम्॥ ९॥

१०

शंयौ—क्रत्वर्थत्वापवादात्सङ्गतिः। य इति। ब्राह्मणं हन्तुमुद्योगं कुर्यादित्यर्थः। तं

तस्माद्ब्राह्मणाय नावगुरेत' इति। तत्र संशयः–किमेष प्रतिषेधः क्रत्वर्थः ? उत पुरुषार्थः ? इति। तत्र—

**फलाभावात् क्रतोश्चापि प्रकृतत्वात्तदर्थता।**
**क्लृप्तत्वात्तु फलस्यायं पुरुषार्थो न तु क्रतोः॥**

यातयादिति हि साध्यतया यातना गम्यते, न पूर्वाधिकरणवत् प्राणापानधारणं वर्तमनतया निर्दिश्यते। साध्यत्वाभिधानादेव यातनायास्साध्यत्वम्, न स्वर्गादिवत्कामोपबन्धापेक्षम्। न हि प्रत्यवायः केनचित्काम्यते। तस्मात्फलवत्वात्पुरुषार्थमवगूरणम्, न क्रत्वर्थम्। एकदेशिनान्त्ववगूरणस्य यातनाफलत्वं न सिध्येत्। नञर्थपर्यवसायित्वात्प्रतिषेधविधेः। नञर्थविषयो हि कार्यात्मा विध्यर्थो वाक्यार्थः। कार्यञ्च न फलमपेक्षते, अपेक्षमाणमपि न यातनया सम्बध्यते। कर्तव्यस्य यातनाफलत्वायोगात्। न च तत्साध्यतयाऽत्र यातना गम्यते, किन्त्ववगूरणसाध्यतया। तस्मान्न नियोगफलत्वं यातनायाः। अत एव न नियोज्यविशेषणतयापि स्वर्गादिवत्समन्वयः। नियोगफलं हि साध्यतया नियोज्यविशेषणम्, नान्यत्। अत एव न विषयीभूतनञर्थफलं विधेयस्य, यातनाफलकत्वायोगात्। नावगूरणस्य फलम्, तदनुष्ठानस्य लौकिकत्वेन विधिसंस्पर्शाभावात्। उक्तं हि—'लौकिके चानुष्ठाने यदि लौकिकात्प्रमाणात्प्रत्यवायो नावगम्यते, कुतोऽन्यतः शक्यतेऽवगन्तुमि'ति। अतो न नञर्थविधिपरेण वाक्येन यातनायाः फलत्वं शक्यमवबोधयितुम्, अनुपपत्त्यभावात्। वाक्येनैव तत्प्रतिपादने

---

शतेन संवत्सरशतेन निस्तार्यां यातयात् यातनामनुभावयेदित्यर्थः। ननु साध्यत्वमात्रावगमेऽपि कमिपदाद्यभावात् कथं फलत्वसिद्धिरित्याशङ्क्यां निरस्यति—साध्यत्वेति। प्रतिषेध्यक्रियाफलं ह्यनिष्टरूपं नेष्टरूपमित्यर्थः। तस्मादिति। अवगूरणस्य यातनाफलकत्वे प्रतिषेधस्यार्थाद्यातनानिवृत्तिफलत्वावगमादित्यर्थः। अवगूरणं तत्प्रतिषेधनम्। नञर्थेति। विषयत्वेन नञर्थाभावान्वितस्वार्थबोधेन निराकांक्षत्वादित्यर्थः। एतदेव विवृणोति—नञर्थेति अवगूरणाभावविषयककार्यमित्येवंरूप इत्यर्थः। ततः किम् ? तत्राह—कार्यञ्चेति। कार्यस्य कार्यान्तराभावादित्यङ्गीकारादिति भावः। कार्यस्य फलापेक्षमभ्युपेत्यात्याह–अपेक्षमाणमपीति। कर्तव्यस्य कृतिसाध्यस्य नियोगस्य। प्रतीतिविरोधोऽपीत्याह—न चेति। तत्साध्यतया कर्तव्यनियोगसाध्यतया। अतएव यातनाया नियोगफलत्वायोगादेव। अत एवेति। विधेयस्येत्यादिहेतोरेवेत्यर्थः। अस्तु तर्ह्यवगूरणफलत्वमेव, अर्थवादात्तथा प्रतीतेरित्याशङ्क्याह–नेति। यातनाख्यफलस्यालौकिकत्वेन विध्येकगम्यत्वात्त्वन्मते चोक्तरीत्या विध्यसम्बन्धादित्यर्थः। अत्रैव वृद्धसम्मतिमाह–उक्तं हीति। ननु कार्यरूपनियोगस्य नियोज्यं विनानुपपत्तेरर्थाद्यातनानिवृत्तिकामस्य नियोज्यत्वप्रतीतेरवगोरणाभावे सति यातनानिवृत्तिरित्यवगतावगूरणे सति यातनेति सिध्येदित्याशङ्क्यां निरस्यति—अनुपपत्तीति। निषेधान्तर इवेहापि निवृत्तिरूपविषयबलादेव तद्विषयकर्मप्रवृत्तस्यैव नियोज्यस्य लाभात् त्वया तथाङ्गीकाराच्चेति भावः। ननु यो ब्राह्मणायेत्यादर्थवादवाक्यमेवावगूरणस्य यातनाफलत्वप्रतिपादकमस्त्वत आह—वाक्येनैवेति अर्थवादवाक्येनैवेत्यर्थः।

तु वाक्यभेदस्स्यात्। अवगूरणाभावेनापूर्वं कुर्यात् अवगूरणञ्च प्रत्यवायफलमिति। तस्मान्न फलत्वम्। ननु गम्यतेऽवगूरणसाध्यता यातनायाः। सत्यं गम्यते; किंमूला त्वियमवगतिरिति प्रमाणमस्यां मृगयमाणा न लभामहे। प्रत्यक्षादीनां दविष्ठत्वात् शब्दस्य चान्यपरत्वेन, तत्र प्रामाण्यायोगात्, निर्मूलावगतिरुत्पन्नापि प्रतिभावन्न समीचीना भवति। अथापि वाक्याभेदमङ्गीकृत्य शब्दस्यात्र प्रामाण्यमुच्यते। तथाप्ययुक्तम्। कार्यपरत्वेन हि शब्दानां व्युत्पत्तिः। अवगूरणञ्च यातनाफलसाधनमिति सिद्धरूपो विनियोगः कथमिव शब्देन प्रतिपाद्येत, व्युत्पत्तिविरहात्। कथञ्चावगूरणं क्षणिकं कालान्तरभाविनो यातनां साधयेत्। अपूर्वद्वारेणेति चेत्—न; अन्यद्वारेणान्यस्य साधनायोगात्। योगे वा यागादेरपि तथात्वोपपत्तेरपूर्वाभिधानमुत्सीदेत्। तदिहापि यागादिविषयमिवावगूरणविषयं कार्यात्मकमपूर्वमभिधेयमापद्येत। न चैवमिष्टम्। तस्मादर्थवादमात्रम्, न तु फलं स्यादित्यास्तां तावत् इत्यवगोरणाधिकरणम् ॥ १० ॥

११

सू० प्राग०—दर्शपूर्णमासयोः श्रूयते 'मलवद्वाससा न संवदेत्' इति। किमयं प्रतिषेधः क्रत्वर्थः? उत पुरुषार्थः? इति। प्रकरणात्क्रत्वर्थत्वे प्राप्तेऽभिधीयते—'तामपरुध्य यजेते'ति वचनात्सर्वस्मादेव क्रतुव्यापारान्निवृत्ता रजस्वला। तेन नानया संवादस्य क्रतौ प्रसक्तिः। प्रसक्त्यभावाच्च प्रतिषेधानुपपत्तिः, पुरुषस्य हि स्वातन्त्र्येण प्रवर्तमानस्य रजस्वलया प्रसज्यते संवादः। तेन यत्र प्रसक्तिः, तत्र प्रतिषेध इति पुरुषार्थता। इति लवद्वास सा संवादनिषेधाधिकरम् ॥ ११ ॥

---

प्रतिषेधवाक्यनैरपेक्ष्यमेवकारार्थः। वाक्यभेदमेव दर्शयति—अवगूरणेति। प्रतीयमानं यातनायाः फलत्वमवश्यमङ्गीकार्यमिति शङ्कते—नन्विति। अन्यपरत्वेनेति। प्रशंसापरत्वेनेत्यर्थः। व्युत्पत्तिरर्थबोधकत्वग्रहः। उत्सीदेदिति। कामिनः कामसाधने नियोगायोगात् क्षणिकयागादिक्रियायाश्चापूर्वद्वारापि कामसाधनत्वासम्भवात् स्थायिकार्यं लिङ्वाच्यमिति त्वन्मतस्य भङ्गस्स्यादित्यर्थः। नचैवमिति। नञर्थविषयकार्याभिधानसिद्धान्तविरोधादिति भावः। सूत्रार्थस्तु—शंयौ 'देवा वै शंयुं बार्हस्पत्यमब्रुवन्' इत्युपक्रमात् तदुपलक्षितेऽवगूरणनिषेधे पुरुषार्थत्वमेव, सर्वेभ्यो ब्राह्मणेभ्यः परीदानात् शंयुप्रार्थितवदानात् तस्य च पुरुषार्थत्व एवोपपत्तेरिति। प्रयोजनम् स्पष्टम्। इत्यवगोरणाधिकरणम् ॥१०॥

११

प्राग० अत्र प्रासङ्गिकी सङ्गतिः। मलवद्वासो यस्यास्सा रजस्वला। प्रसक्त्यभावादिति। न च पत्नीव्यतिरिक्तरजस्वलाया अनपरोधात् तत्संवादप्रसक्तिरस्तीति वाच्यम् 'रजस्वला च षण्ढश्च' इत्युपक्रम्य 'होमे प्रदाने भोज्ये च यदेभिरभिवीक्षितम्। दैवे हविषि पित्र्ये वा तद्गच्छत्ययथातथम्' ॥ इत्युक्त्वा 'तानप्यपनयेत्ततः' इति रजस्वलामात्रस्यैव दैवे कर्मणि अपनयोक्त्या तदप्रसक्तेः। अस्याश्च श्रुतेः दर्शपूर्णमासमात्रविषयत्वेन तन्मूलत्वस्य चासम्भवात्। न चैवं सत्यपरोधश्रुतिवैयर्थ्यम्, तस्याः श्रुतेः पत्नीं विना यागाकरणप्रसक्तौ

## १२

सू० अप्र०–अनारभ्य श्रूयते—'तस्मात्सुवर्णं हिरण्यं भार्यम्' इति। अत्र संशयः, किं हिरण्यधारणमिदं क्रत्वङ्गतया विधीयते? उत क्रतुगतहिरण्यानुवादेन धारणं संस्कारो विधीयते? अथवा 'हिरण्यं हस्ते भवति' इति विहितधारणानुवादेन सुवर्णता शोभनरूपता विधीयते, यद्धिरण्यं भार्यम्, तत्सुवर्णमिति, आहोस्विद्धिरण्यधारणं पुरुषार्थतया विधीयत इति। तत्र—

पुरुषार्थत्वपक्षे हि फलं कल्प्यमतः क्रतोः।
अङ्गं स्याद्वैदिकत्वेन क्रियात्वेन च साम्यतः॥

यद्यपि तावद्धिरण्यविशिष्टधारणविधिः, तथापि तस्य फलापेक्षायां वैदिकत्वक्रियात्वसामान्याद्वैदिकमेव कर्मोपतिष्ठत इति तादर्थ्यमेवारादुपस्थितक्रियारूपेणापि युक्तम्, नात्यन्तानुपस्थितफलकल्पना। अथवा धारणस्य स्वभावत एव धार्यमाणसंस्कारत्वात्कृत्य श्रुत्या च हिरण्यस्य प्राधान्यावगमान्निष्प्रयोजनस्य च लौकिकस्य संस्कारायोगात्क्रतुगतहिरण्यानुवादेन धारणसंस्कारविधानम्। अथवा लाघवाद्धारणमप्यनूद्य सुवर्णताविधिः। त्रेधापि तावत्क्रत्वर्थमिति प्राप्तेऽभिधीयते—

न क्रतुस्तद्धिरण्यं वा धारणं वात्र गम्यते।
तस्मान्न क्रतुशेषत्वं विधेस्तु पुरुषार्थता॥

स्वर्गाद्युत्पत्तेरपि क्रियात्वादन्यत्र च वैदिकत्वादुभयमपि तुल्यं पर्युपस्थापकमिति नैकान्ततः क्रतोरुपस्थानम्। येन विशिष्टविधिपक्षेऽपि क्रत्वर्थता स्यात्। न च क्रतुगतहिरण्यप्रतीतिः, येन तदनुवादेन संस्कारविधिस्स्यात्, लोकेऽपि हिरण्यसद्भा-

---

तत्करणविघ्यर्थत्वात्। अपरुध्येत्यंशेऽनुवादत्वादिति। सूत्रे तत्संवादनिषेधः पुरुषधर्म इति शेषः। प्रयोजनम् पुर्वपक्षे—दर्शपूर्णमासयोर्निषेधातिक्रमे यजुर्भ्रेषनिमित्तं प्रायश्चित्तम्। सिद्धान्ते स्मार्तत्वादविज्ञातभ्रेषे निमित्तमिति। इति मलवद्वाससा संवादाधिकरणम्॥११॥

## १२

अप्र० प्राकरणिकस्य क्रत्वर्थत्वपुरुषार्थत्वविचारप्रसङ्गादनारम्याधीतविचारस्य सङ्गतिः। आद्यपक्षे विशिष्टविध्यारादुपकारकत्वदोषस्य यद्यपीत्यभ्युपेत्यवादेन सूचनात् द्वितीयं पक्षमुपपादयति—अथवेति। नियमविधित्वादपि लाघवमिति सूचयितुं स्वभावत इत्युक्तम्। कृत्येति। भार्यमिति कृत्यप्रत्ययस्य कर्मणि विधानादिति भावः। क्रतुगतेति। हिरण्यमात्रेयाय ददाति इति विधानादिति भावः। सुवर्णत्वन्तु नित्यप्राप्तमनूद्यत इत्याशयः। लाघवादिति। धारणस्यात्यन्ताप्राप्तत्वेऽपूर्वविधित्वमिति पूर्वपेक्षया लाघवमित्याशयः। 'हिरण्यं हस्ते भवति' इति प्राप्तं धारणमनूद्यते। हिरण्यानुवादेन सुवर्णत्वमात्रं विधीयत इति भावः। तद्धिरण्यमिति तदिति लुप्तषष्ठीकमव्ययम्। तस्य हिरण्यं तस्य धारणं वेत्यर्थः। अन्यत्र स्वर्गकामादिवाक्ये। उभयमपि क्रियात्ववैदिकत्वोभयमपि। स्वर्गाद्युत्पत्तेरपि तुल्यं पर्युपस्थापकमि-

वात्। न हि क्रत्वर्थं द्रव्यार्जनम्, येन बहिः क्रतुद्रव्यमेव स्यात्। न, पुरुषार्थं हि तदिति चतुर्थे वक्ष्यामः। ननु क्रतुगतहिरण्यप्रतीतिः संस्कार्यत्वादिति चेत्; न, इतरेतराश्रयात्। क्रतुगतहिरण्यानुवादनिश्चये संकार्यत्वम्, तन्निश्चये च निष्प्रयोजनस्य तदयोगात्क्रतुगतहिरण्यप्रतीतिरितीतरेतराश्रयत्वम्। न हि स्वभावतः संस्कार्यता, अदृष्टार्थत्वेऽपि धारणाविरोधात्। कृत्यप्रत्ययश्च कर्मत्वं साध्यतामात्रमाह न शेषित्वम्। अत एव न धारणानुवादेनापि गुणविधिः। क्रतुगतधारणाप्रतीतेरन्यत्रापि धारणसम्भवात्। अतो न क्रत्वर्थम्, विधिवशाच्चावश्यं भवितव्यं फलेन। तत्रार्थवादाभावे 'स स्वर्गस्स्यात्' इति, सद्भावे तु तद्गतमेव फलम्। यथेह भ्रातृव्यस्य दुर्वर्णत्वमात्मनश्च शोभनरूपता। तस्मात्पुरुषार्थत्वम्। इति हिरण्यधारणाधिकरणम् ॥ १२ ॥

१३

स० शेष०—क्रत्वर्थपुरुषार्थविचारप्रसङ्गात्पूर्वाधिकरणेऽनारभ्यवादः प्रस्तुतः। तत्प्रस्तावादेवानारभ्याधीतानां जयादीनां वाक्येनैव कर्माङ्गत्वे सिद्धे तद्विशेषश्चिन्त्यते 'येन कर्मणेर्त्सेत्तत्र जयान् जुहुयात्' इति। किं सर्वेषां लौकिकवैदिककर्मणामङ्गं जयादयः ? उत वैदिकानामेव, येषामाहवनीयोऽस्ति ? इति विचारः।

तत्राविशेषतः सर्वकर्मार्थत्वं प्रतीयते।
तस्मात्कृष्यादिनापीर्त्सेत्तत्राग्नौ जुहुयाज्जयान् ॥

यद्यपि कृष्यादीनामाहवनीयो नास्ति जयादयश्चाहवनीये होतव्याः, तथापि ते स्वयमेव होमत्वादाहवनीयप्रयोजका इति तदर्थमेवाहवनीयं प्रणीय तेषु हूयमाना न दुष्यन्ति।

तस्मात्तदभाववैगुण्यात्सर्वार्थाः स्युर्जयादयः।
नैवं प्रधानवैदेश्याद्वैगुण्यं जायते यतः ॥

यद्यप्याहवनीयाभावकृतं नास्ति वैगुण्यम्, तथापि प्रधानदेशत्वमङ्गानामवगतम्, तदलाभात्कृष्यादिषु क्रियमाणा विगुणा भवेयुः। क्षेत्रे कृषिराहवनीये च होम इति वैदे-

---

त्यन्वयः। संस्कार्यत्वादिति। लौकिकस्य संस्कारानर्थक्यादिति भावः। नहीति। शिरसि रुद्राक्षधारणस्य हस्ते छत्रधारणस्य च धार्यमाणसंस्कार्यत्वाभावादिति भावः। मात्रपदेनेप्सितत्वव्यावृत्तिः। धारणानुवादेन क्रतुधारणानुवादेन। 'स स्वर्गःस्यादि'ति विश्वजिदधिकरणसूत्रभागः। यथेहेति। 'दुर्वर्णोऽस्य भ्रातृव्यो भवति' इति वाक्यशेषादिति भावः। प्रयोजनं स्पष्टम्। अप्रकरणे तु विधिस्तद्धर्मः पुरुषधर्मः ततः प्राकरणिकादिति सूत्रार्थः।

इति हिरण्यधारणाधिकरणम् ॥ १२ ॥

१३

शेषः० सङ्गतिमाह—तत्प्रस्तावादिति। इर्त्सेत् ऋद्धिफलभूयस्त्वं प्राप्तुमिच्छेदित्यर्थः। जयाख्यान् होमान् कुर्यादित्यर्थः। जयादयश्चेति। 'यदाहवनीये' इति वैदिकहोमसामान्य आहवनीयविधानादिति भावः। प्रणीयेति। गार्हपत्यादिति शेषः। वैदेश्यात् विभिन्नदेशत्वात्। अवगतमिति। साङ्गप्रधानविधायकप्रयोगविधिना तत्रैव देशादिविधानादिति भावः। ननु क्षेत्रे आहवनीयनयनान्न वैदेश्यकृतवैगुण्यमित्याशङ्क्याह—क्षेत्र इति। एव-

श्यम्, वैदिकेषु त्वाहनीयादिमत्सु प्रधानसादेश्यं लभ्यत इत्यवैगुण्यात्तत्रैव जयादयः।

इति जयादिसोमाधिकरणम् ।। १३ ।।

## १४

सू० दोषात्० अत्राप्यनारभ्यवादस्यैव क्रत्वर्थपुरुषार्थत्वविचारः। तैत्तिरीयका हि काम्येष्टिकाण्डे 'यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणाँश्चतुष्कपालान्निर्वपेत्' इति समामनन्ति। सेयं दातुरिष्टिः, न प्रतिग्रहीतुरिति वक्ष्यते। सा विचार्यते—किं लौकिकेऽश्वदाने मित्रदायादेभ्यः स्नेहादिना विधिमनपेक्ष्य क्रियमाणे निमित्ते पुरुषार्थतया विधीयते ? उत वैदिके कर्माङ्गभूते ज्योतिष्टोमपौण्डरीकादिविषये क्रत्वर्थतया ? उतोभयत्र ? इति। तदर्थञ्च किं दोषनिर्घातार्थेयम् ? उत न ? इति। तत्राविशेषादुभयत्रेति प्राप्तेऽभिधीयते—

**दोषनिर्घातकार्येयं यत्रासौ तत्र गम्यते।**
**लौकिके स च दोषोऽस्ति वैदिके न विधानतः ।।**

यद्यपि निमित्तावस्थायां दोषवान् योऽश्वप्रतिग्रह इत्यशक्यं विशेष्टुम्। विशिष्टानुवादे वाक्यभेदात्तथापि कर्मणः फलापेक्षायां 'स एवैनं वरुणपाशान्मुञ्चति' इति वाक्यशेषाद्दोषनिर्घात एव फलमवसीयते। तेन यत्र दोषस्तत्रेष्टिः, लौकिके चाश्वदाने 'न केसरिणो ददाति' इति निषेधाद् दोषोऽस्ति। वैदिके तु कर्माङ्गदाने विशेषविधानात्तत्प्रतिषेधाप्रवृत्तेर्नास्ति दोषः।

**तस्मात्कार्यवशादिष्टिर्लौकिके स्यात्तदुच्यते।**
**दोषनिर्घातकार्यत्वे स्यादेवं न तु तत्तथा ।।**

---

मध्यवान्तरदेशभेदाद्वैगुण्यमेवेति भावः। ननु ज्योतिष्टोमाङ्गस्तोत्रादिषु महावेदिरूपमहादेशैक्यादवैगुण्यवदिहापि क्षेत्ररूपतदैक्यान्न वैगुण्यमत आह—वैदिकेष्विति। तत्रागत्या तथात्वेऽपीह कृष्याद्यङ्गताबोधकागतिकप्रमाणाभावाद्विहाराद्बहिराहवनीयनयनादिकल्पकाभावाच्च यत्र प्रधानप्रयुक्ताहवनीयसद्भावस्तत्रैवाङ्गताबोधकवाक्योपपत्तेर्न लौकिककर्माङ्गत्वमिति भावः। सूत्रप्रयोजने स्पष्टे। इति जयादिहोमाधिकरणम् ।। १३ ।।

## १४

दोषात्० सङ्गतिसूचनायाह—अत्रापीति। प्रतिगृह्णीयात् प्रतिग्राहयेत्, अन्तर्भूतण्यर्थत्वात्। वारुणान् वरुणदैवत्यान् चतुर्षु कपालेषु संस्कृताः पुरोडाशाश्चतुष्कपालाः। अविशेषात् वैदिकवल्लौकिकस्याप्यश्वदानत्वाविशेषात्। दुष्टत्वस्य च निमित्तविशेषणत्वायोगादिति भावः। असौ दोषः। वैदिके न नास्तीत्यन्वयः। विधानत इति। विहिते दोषायोगादिति भावः। वाक्यभेदादिति। निमित्तस्यानुवाद्यत्वेन विशेषणविवक्षायां ग्राहकत्ववद्वाक्यभेद इत्यर्थः स एव वरुण एव। कार्यवशात् दोषनिर्घातरूपफलवशात्। न तु तदिति। तद्दोषनिर्घातकार्य-

वरुणग्रहनिर्मोकः फलमत्रावगम्यते।
लौकिकेनाश्वदानेन नासावस्तीति गम्यते ॥

वरुणस्य पाशान्मुञ्चतीति वरुणग्रहाज्जलोदरपर्यायान्निर्मोकः, न तु लौकिकमश्वदानं जलोदरनिदानमिति प्रत्यक्षादिना वैद्यसंहिताभिर्वावगम्यते। नापि प्रतिषेधेन, 'न केसरिणो ददातो'ति पापमात्रकल्पनात्। न चानेनैव तत्प्रतिपादनम्, अस्य प्रसिद्धदोषानुवादेन तन्निर्मोकार्थे प्रायश्चित्तेष्टिविधिपरत्वात्, तत्परत्वे वाक्यभेदात्। अतो योऽत्र दोषो निर्घात्यत्वेन गम्यते, नासौ लौकिकेऽस्तीति न तद्वशेन लौकिकविषयत्वम्। अथ वृणोतीति व्युत्पत्या वरुणशब्दः पापमेव वदेत्ततः प्रसिद्धं परित्यज्य यथाकथञ्चिद्व्याख्यायमाने वैदिकेऽपि त्यागात् दुःखदर्शनात्तदेव वरुणशब्देन शक्यमभिधातुम्। इष्ट्याडम्बरादिविनोदेन तद्दुःखशमनात्स एवैनं वरुणपाशान्मुञ्चतीति चोपपन्नम्। तस्मान्न लौकिकविषयता। नाप्युभयत्र। कुतः ? प्रसिद्धं ह्यश्वदानं निमित्तत्वेनोद्दिश्य नैमित्तिकं कर्म विधीयते। तस्य पूर्वप्रसिद्धावालोच्यमानायां नैमित्तिकस्य वैदिकत्वात्तत्सादृश्याद्वैदिकमश्वदानं शीघ्रमुपतिष्ठते। तेन तत्सम्बन्धिक्रतूपस्थानात्तादर्थ्यं गम्यते। ततश्च नैरपेक्षान्न लौकिकस्य ग्रहः फलकल्पना वा युज्यते। किञ्च—

लौकिके पुरुषार्थत्वं वैदिके क्रतुशेषता।
न चैकस्योभयार्थत्वं वैरूप्यादुपपद्यते ॥

क्रत्वर्थत्वे प्रधानविधिपरत्वादप्रयोजकता, पुरुषार्थत्वे तु स्वातन्त्र्यात्प्रयोजकत्वमिति वैरूप्यम्। न च तदेकस्य विधेयुक्तम्। तस्माद्वैदिक एव स्यात् ॥

इत्यश्वप्रतिग्रहेष्ट्यधिकरणम् ॥ १४ ॥

## १५

सू० अचो० इयमेवेष्टिरुदाहरणम्। किमियं प्रतिग्रहस्य स्वतन्त्रकर्तुः ? उत हेतुकर्तुर्दातुः ? इति। तदर्थञ्च प्रक्रमस्थार्थवादस्योपसंहारस्थविध्युद्देशस्य च

---

त्वं तथाप्रमाणकं सिद्धं न त्वित्यर्थः। असौ वरुणग्रहदोषः। नापीति। प्रतिषेधेन गम्यत इत्यन्वयः। अनेनैव 'वरुणो वा एतं गृह्णाति' इत्यर्थवादेन। तत्परत्वे दोषपरत्वे। नन्वेवंसत्यविशेषादाद्यपक्ष एव स्यादित्याशङ्क्य तं दूषयति—नापीति। उभयत्र लौकिके वैदिके च विधीयत इति शेषः। प्रसिद्धं हीति। निमित्तस्यानुवादत्वादनुवादस्य च प्रसिद्धविषयत्वादित्यर्थः। तेनानारभ्याधीतानां क्रत्वर्थत्वापत्तिर्निरस्ता, तत्र तदनुवादाभावात्। वैरूप्यमपि दर्शयति—किञ्चेति। एकस्य विधेरुभयार्थत्वं पुरुषार्थत्वक्रत्वर्थत्वोभयपरत्वं नोपपद्यत इत्यर्थः। उभयपरत्वेऽपि कथं विधेर्वैरूप्यं तदाह—क्रत्वर्थत्व इति। प्रधानविधिपरत्वात् तच्छेषत्वात्। अप्रयोजकतेति। स्वविषयाननुष्ठापकतेत्यर्थः। प्रधानविधिप्रयुक्तत्वादङ्गानामिति भावः। प्रयोजकत्वमिति भावप्रधानम्। न चेति। तथाचैक एव विधिः क्वचित्स्वविषयानुष्ठानप्रयोजकः क्वचिन्नेति विरुद्धमित्यर्थः। सूत्रप्रयोजने स्पष्टे ॥ १४ ॥

अचो० अत्र प्रतिग्रहस्य निमित्तत्वपूर्वपक्षे तस्याविहितत्वात्पुरुषार्थत्वमिष्टेस्स्यादित्याक्षेप-

विरोधे कस्य बलीयस्त्वमिति चिन्त्यते। विध्युद्देशबलीयस्त्वे प्रतिग्रहीतुः 'यावतोऽश्वान्प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालान्निर्वपेत्' इति वचनात्। अर्थवादबलीयस्त्वे दातुः 'प्रजापतिर्वरुणायाश्वमनयदिति' प्रजापतिर्दाता संकीर्तितः, वरुणः प्रतिग्रहीता 'स स्वां देवतामार्च्छत्' इति। स इति समानविभक्तिनिर्दिष्टः प्रजापतिः स्वां देवतां पूर्ववाक्ये सम्प्रदाननिर्देशाद्वरुणम्, तेन प्रजापतिरश्वं दत्त्वा वरुणग्रहं प्राप्त इत्यर्थः। 'स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत्तन्निरवपत्ततो वै स वरुणपाशादमुच्यत' इति सर्वत्र प्रजापतिरेव दाताऽनुषज्यते। तेन परकृतिसरूपेऽर्थवादे दातुरिष्टिर्वर्णितेत्यन्योऽपि दत्त्वैवं कुर्यादिति दातुरिष्टिरवगम्यते। तदेवं विरोधे किं बलीय इति। तत्र विध्युद्देशस्य प्रधानत्वात्तदनुरोधेनार्थवादो व्याख्येयः। दातुरपि तावद्दोषस्स्यात्किं पुनः प्रतिग्रहीतुरिति। तस्मात्प्रतिग्रहीतुरिति प्राप्तेऽभिधीयते—

असञ्जातविरोधित्वादर्थवादो यथाश्रुतः।
व्याख्येयस्तद्विरुद्धत्वाद्विध्युद्देशस्य लक्षणा॥

प्रतिगृह्णीयादिति हेतुकर्तोच्यते। अस्ति हि तस्यापि हेतुकर्तृत्वम् 'तत्प्रयोजको हेतुश्च' इति चकारात्। तस्मादुपक्रमबलाद्दातुरिष्टिरिति। प्रपञ्चितञ्चैतद्बलीयस्त्वं 'श्रुतेर्जाताधिकारः स्यात्' इत्यत्र। किमर्थं तर्हीदमधिकरणम्! उच्यते—ऋगादिशब्दा वेदेऽपि बहुलं दृष्टप्रयोगाः, गृह्णातिस्तु दातृव्यापारे न क्वचिद्दृष्टः, तेन नासौ तत्परत्वेन व्याख्यातुं शक्यत इति विशेषाशङ्कानिवृत्त्यर्थमधिकरणम्। अथवा भाष्यकारान्तरैः 'सा लिङ्गादार्त्विज्ये स्यात्' इति सूत्रानुसारात्प्रतिग्रहीतुरिष्टिराश्रिता। तन्निवृत्त्यर्थमनेनैव सूत्रेण दातुरिष्टिं प्रतिपादयितुं भाष्यकारोऽधिकरणान्तरं चकार। सूत्रद्वयन्तु पूर्वाधिकरणशेषत्वेन व्याख्येयम्। यज्ञेऽप्यचोदितमिदं कर्मभेदे सति निर्णयाशक्तेः। अत उभयत्र स्यादिति चोद्यम्, तस्योत्तरं सा लिङ्गाद्वैदिकत्वसामान्यादार्त्विज्ये ऋत्विक्सम्बन्धिनि वैदिके दाने स्यादित्यर्थः॥

इत्यश्वप्रतिग्रहेष्टेर्दातृकर्तृकत्वाधिकरणम् ॥१५॥

---

सङ्गतिं सूचयति—इयमेवेति। पर्यदीर्यत वरुणग्रहाख्यजलोदरेण परिदीर्णोऽभूदित्यर्थः। अपश्यत् तन्निवर्तकत्वेन ज्ञातवान् इत्यर्थः। बहुलमिति। ऋग्वेद इति वेदपदसामानाधिकरण्येन बहुशो दृष्टप्रयोगा इत्यर्थः। सूत्रानुसारादिति। सा इष्टिः। लिङ्गात् मैत्रायणीयशाखायां स एवाऽश्वः प्रतिगृह्यत इत्युपक्रमस्थार्थवादलिङ्गात्। आर्त्विज्ये ऋत्विक्कर्तृके प्रतिग्रहे स्यादिति तदर्थावगमादिति भावः। पूर्वसूत्रे तु प्रतिग्रहे अचोदितमिदं कर्म, उपक्रमावगतनिमित्तत्वाद्दानाद्भेदादिति-व्याख्यातम्। अनेनैवेति। ऋत्विजामयमार्त्विजो यजमानस्तत्र तत्कर्तृके दान इत्यर्थादिति भावः। एवमप्यनर्थकप्रायत्वादर्थान्तरमाह—सूत्रद्वयन्त्विति। यज्ञेऽपि यज्ञमात्रेऽपि। भेदे सति लौकिकवैदिकत्वेन द्वैविध्ये सति। उभयत्र लौकिके वैदिके च। प्रयोजनं पूर्वपक्षे प्रतिग्रहीत्रा स्वाग्नौ पृथगिष्टिप्रयोगः कार्यः। सिद्धान्ते यजमानेन प्रयोगमध्य एवेति। दाने अचोदितमिदं कर्म दानप्रतिग्रहयोर्भेदात्प्रतिगृह्णीयादित्यस्य दानार्थकत्वायोगादिति पूर्वपक्षसूत्रार्थः॥ १५॥

१६

सू० पान० अनारभ्य श्रूयते 'सौमेन्द्रं चरुं निर्वपेद्यस्सोमं वमति' इति। तत्रापि तथैव संशयः—किं लौकिके सोमे रसायनाद्यर्थं पीते वान्ते पुरुषार्थतयेयमिष्टिः ? उत वैदिके क्रत्वर्थतया ? अथवोभयत्रेति।

तत्राविशेषादुभयोर्दोषाद्वा लौकिके भवेत्।
दोषो ह्यत्रास्ति वमनाद्व्यृद्धिरिन्द्रियवीर्ययोः॥

भवति हि वमनादिन्द्रियवीर्यवृद्धिः, न वरुणग्रहवदत्यन्ताविद्यमानता। तेन तत्संयोगाल्लौकिके स्यात्, वैदिके तु पानमात्रस्य शास्त्रार्थत्वाद्वमनेऽपि न कश्चिद्दोष इति नात्र प्रायश्चित्तविधिरर्थवान्। एवं प्राप्ते ब्रूमः—

लोके हि वमनायैव पानाद्दोषो न विद्यते।
सम्यग्जरणपर्यन्तं वेदे पानं विधीयते॥

न तावल्लोके दोषोऽस्ति, वमनार्थमेव पानात्। अतो न तद्वशेन लौकिक एवेति शक्यं वक्तुम्। वेदे तु सम्यग्जरणस्यापेक्षितत्वात्सम्यग्जरणपर्यन्तमेव पानं शास्त्रार्थः। तच्च वमनाद्विपद्यत इत्यस्ति दोषः। तेन दोषवशादेव वैदिके स्यात्। यद्यपि दोषश्रवणमर्थवादस्तथापि लोके दोषाभावात्प्रतीकारापेक्षा नास्तीत्यनपेक्षितं प्रायश्चित्तम्।

वेदे तु क्रतुवैगुण्यात्समाधित्सोपजायते।
अपेक्षितार्थता तत्र प्रायश्चित्तविधेर्भवेत्॥
अपेक्षितविधिर्ज्यायाननपेक्षितचोदनात्।
तेन क्रत्वङ्गमेवेष्टिः फलं चैवं न कल्प्यते॥

अश्वदानन्तु वैदिकमेव शीघ्रमुपस्थितमित्यसत्यामपि प्रतीकारापेक्षायां तत्रैव वारुणीष्टिः। लौकिकन्तु प्रतिषिद्धत्वात्प्रतीकारापेक्षं सदप्यनुपस्थितत्वान्नेष्टिं गृह्णातीति विशेषः॥ इति पानव्यापदधिकरणम्॥ १६॥

---

पान० पूर्वाधिकरणस्याक्षेपसमाधानरूपत्वेन तत्पूर्वाधिकरणशेषत्वात्तेनैवातिदेशिकी सङ्गतिः तद्वदिति सूत्रावयवेनोक्ता। दोषो हीति। 'विवा एष इन्द्रियेण वीर्येण व्यृध्यत' इति वाक्यशेषादिति भावः। व्यृद्धिरपक्षयः। विपद्यते विगुणं भवति। तथाचानिष्टसाधनत्वाद्वैदिकवमने दोष इत्यर्थः। न च वैगुण्यरूपदोषस्यार्थवादाप्रतिपाद्यत्वात्तन्निरासद्वारा क्रत्वङ्गत्वायोग इति वाच्यम्। इन्द्रयवीर्यव्यृद्धिशब्देन लक्षणया पानवैगुण्यस्यैवाभिधानात्। नन्वर्थवादस्य स्तुतिपरत्वात्तस्याश्च यथाश्रुतेनाप्युपपत्तेर्न वैगुण्यबोधकत्वमत आह—यद्यपीति। वैदिके। तत्र एवञ्चापेक्षावशादेव वैगुण्यनिरासार्थत्वमित्यर्थः। फलञ्चेति। लौकिकवमनेऽर्थवादोक्तदोषनिरासार्थत्वायोगस्योक्तत्वादनुपस्थितानपेक्षितफलकल्पना स्यादिति भावः। नन्वश्वदानेष्टिरपि लौकिकाश्वदान एव स्यात्तत्रैव निषेधावगतदोषनाशापेक्षणादित्याशङ्क्याह—अश्वदानन्त्विति। पानव्यापत् वमनम्। तद्वत् अश्वदानाद्वैदिकमेव निमित्तमिति सूत्रार्थः। प्रयोजनं स्पष्टम्॥१६॥

१७

सू० तत्सर्व० येयं वैदिके सोमवमने क्रत्वङ्गमिष्टिरवधारिता, सा किं यजमानवमन एव, उतर्त्विग्वमनेऽपीति विचारः ।

तत्राविशेषतस्सर्ववमने स्यात्तदुच्यते ।
सौमेन्द्रं स चरुं कुर्याद्यः सोमं वमतीति हि ॥
यच्छब्दादिष्टिवमने गम्येते तुल्यकर्तृके ।
इष्टौ च क्रतुशेषत्वात्स्वाम्येव हि नियुज्यते ॥
कर्तृत्वेनेति वमनमपि तत्कमर्तृकं ततः ।
निमित्तमृत्विग्वमनं न निमित्तमिति स्थितम् ॥

इति सोमेन्द्रचरोर्यजमानताधिकरणम् ॥ १७ ॥

१८

सू. सर्व० वमनस्य हविःशेषविषयत्वात्तत्प्रसङ्गाद्धविःशेषो हृदयमागत इत्यतः प्रभृत्यापञ्चमपादपरिसमाप्तेर्हविःशेषविषया कथा प्रवर्तिष्यते। प्रथमं तावच्छेषसद्भाव एव प्रतिपाद्यते। दर्शपूर्णमासयोः श्रूयते 'आग्नेयोऽष्टाकपालो भवति'इति । तथा'सकृदुपस्तृणाति, द्विर्हविषोऽवद्यति, सकृदभिघारयति, चतुरवत्तं जुहोति'इति। तत्र संशयः—किं सकलस्य पुरोडाशस्याहवनीये प्रदानम् ? उत द्रव्यवदानमात्रं प्रदायान्यच्छेषयितव्यम् ? इति। यद्याग्नेयचोदना सकलहोमेन विना नोपपद्यते ततस्सकलस्य, अथ द्रव्यवदानमात्रेणापि तदुपपत्तिः, ततस्तन्मात्रस्य होमः। तत्राष्टाकपालशब्दस्यावयवपरत्वे लक्षणाप्रसङ्गाछ्रुत्या पुरोडाशावयव्येवाग्निदेवता सम्बन्धीक्रियते। न च प्रदानमन्तरेण देवतासम्बन्धोपपत्तिरिति सकलस्य प्रदानम्। यद्यपि द्रव्यवदानस्य प्रत्यक्षश्रुतं होमसाधनत्वम्, अष्टाकपालस्य त्वनुमेयम्, तथाप्यनिवार्यमनुमानम्। अन्यथाष्टाकपालसम्ब-

---

तत्स-अत्र प्रासङ्गिकी सङ्गतिः। अविशेषतः पानवैगुण्याविशेषात्। स्वाम्येवेत्यनेन ऋत्विजां यजमानद्रव्यस्वामित्वाभावात्तत्त्यागासामर्थ्यम्। स्वद्रव्येण स्वाग्नौ करणे च क्रत्वङ्गत्वानुपपत्तिरिति सूचितम्। कर्तृत्वेनेति पूर्वान्वितम्। इतिहेतोर्वमनमपि तत्कर्तृकं स्वामिकर्तृकं निमित्तमित्यग्रेतनेनान्वयः। ततः ऋत्विग्वमनं न निमित्तमिति व्यवहितेनान्वयः। अन्यथेतिकरणेन पौनरुक्त्यापत्तेः। यः सोमं वमति, स निर्वपेदितीष्टौ वमनकर्तृकत्वावगमात्तस्य चोपादेयेष्टिविशेषणत्वेन विवक्षितत्वादित्यर्थः। ऋत्विग्वमने तु सामान्यतो विहितं यजुर्भ्रेषप्रायश्चित्तं बोध्यम्। सूत्रं स्पष्टार्थम् ॥ १७ ॥

१८

सर्व० सङ्गतिमाह— वमनस्येति। भाष्यमतं विचारमादौ दर्शयति—किं सकलस्येति। एतन्मते होमस्य यागाभिन्नत्वादाहवनीयेत्युक्तम्। न चेति। पात्रहस्ते देयद्रव्यप्रक्षेपेण दानस्येवाग्न्यादौ प्रक्षेपेणैव यागाभिव्यक्तेः 'अग्निमुखा वै देवा' इत्यर्थवादाच्च प्रक्षेपान्तत्यागस्यैव द्रव्यदेवतासम्बन्धनिर्वाहकत्वादिति भावः। प्रत्यक्षेति। 'चतुरवत्तं जुहोति' इति वाक्येन होमानुवादेन चतुरवत्तविधानादिति भावः। अनुमेयमिति। देवतासम्बन्धरूपलिङ्गेनेत्यर्थः। ननु

न्धस्य श्रुतस्यानुपपत्तेः। उत्पत्तिशिष्टत्वाच्च पुरोडाशस्य द्व्यवदानादुत्पन्नशिष्टाद्बलीयस्त्वम्। अतो बलाद्द्व्यवदानवाक्यमुपायपरं व्याख्येयम्—यत्सकलं जुहोति तद् द्विरवदायेति। न चाभ्यासमन्तरेण सकलपुरोडाशसाधनको यागः शक्यते द्व्यवदानेन कर्तुमित्यर्थादभ्यस्यते सोमयागवत्। कथमिदानीं शेषकार्याणि स्विष्टकृदादीनि? विद्यमानसन्निहितशेषाभावाद्धविरन्तरमाक्षेप्स्यन्ति। यद्वा भवतु यच्छेषकार्यंवशाद् द्व्यवदानमात्रं हुत्वाऽन्यच्छेष्यते तदभावे तु सकलहोमो न्याय्य इत्येतावान् पूर्वः पक्षः। कः पुनरयं पक्षद्वयस्यानुष्ठाने विशेषः? पूर्वपक्षे शेषकार्याणामपि प्रयोजकत्वात्तदर्थावदाननाशेऽपि प्रधानवद्धविरन्तरोत्पादः, सिद्धान्ते त्वप्रयोजकत्वाल्लोप इति। प्रयोजनान्तरमप्युपरिष्टाद्वक्ष्यामः। अत्राभिधीयते—

**यागः प्रधानमेकेन द्व्यवदानेन साधितः।**
**द्रव्यमस्तीति कृत्वासौ नावृत्तिं प्रतिपद्यते॥**
**आग्नेयत्वञ्च कृत्स्नस्य तावतैवोपपद्यते।**
**अग्नये द्व्यवदानं यत्तत उद्धृत्य नीयते॥**

प्रधानभूतो हि यागो न युक्तं यद्द्रव्यवशेनावर्तते। न च सोमयागवदभ्यासम-

---

सकलपुरोडाशस्य देवतोद्देशत्यागाभ्यामेव देवतासम्बन्धोपपत्तिः। चेपांशे प्रत्यक्षश्रुतद्व्यवदानसम्बन्धविरोधादित्याशङ्क्याह—उत्पत्तीति। तथाच प्रथमप्रवृत्तत्वेन प्राबल्यान्न दुर्बलानुसारेण सङ्कोचो युक्त इति भावः। एवं सति द्व्यवदानवाक्यानर्थक्यमाशङ्क्याह—अत इति। प्रबलविरोधादित्यर्थः। बलात् साक्षाद् होमसम्बन्धस्य स्वारसिकस्य त्यागात्। उपायपरमिति। होमसाधनीभूतपुरोडाशसंस्कारपरमित्यर्थः। तदेव दर्शयति-यदिति। कथमिति। शेषशब्दस्यावशिष्टहविर्वाचकत्वात्सकलपुरोडाशहोमे 'शेषात्स्विष्टकृते समवद्यति' इत्याद्यनुपपत्तिरित्यर्थः। विद्यमानेति। तथा च शेषशब्दोऽन्यपरत्वेन व्याख्येय इति भावः। शेषशब्दसामञ्जस्याय पक्षान्तरमाह—यद्वेति। अस्मिन् पूर्वपक्षे सिद्धान्ते चानुष्ठानाविशेषाद्विचारानर्थक्यमित्याक्षिपति—कःपुनरिति। हविरन्तरोत्पादपच इव शेषकार्यबलेन शेषस्थापनपक्षेऽपि शेषकार्यार्थवत्तन्नाशादौ तत्प्रयोजकत्वाद्धविरन्तरोत्पादः, सिद्धान्ते तु नेत्यस्ति विशेष इत्याह—प्रयोजनान्तरमिति। पूर्वपक्षे एकस्माद्धविषः शेषकार्याणि, सिद्धान्ते प्रतिपत्तित्वात्सर्वेभ्य इत्येवंरूपमित्यर्थः। द्व्यवदानेनेति। अवदीयत इत्यवदानम्, द्विरवत्तं हविस्तेनेत्यर्थः। अयं भावः—'चतुरवत्तं जुहोती' त्यनेन होमोपायतया नावदानविधिः, तस्य 'द्विर्हविषोऽवद्यति' इत्यनेन प्राप्तत्वात्, निष्ठाप्रत्ययवैयर्थ्याच्च, किन्तु अवत्तमेव साक्षाद्धोमसाधनत्वेन विधीयते। एवञ्चोत्पत्तिशिष्टपुरोडाशेन तद्बाधे आनर्थक्यापत्तेः, पुरोडाशविधेरेव प्रकृतितत्रबोधकत्वं युक्तम्। 'द्विर्हविष' इति वाक्यन्तु हविरनुवादेन द्विरवदानसंस्कारविधायकं न होमोपायतया, होमस्यानुपादानादिति न युक्तमिति। गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वादिति भावः। न चेति। कृत्स्नस्य होमसम्बन्धाश्रवणात्, किन्तु द्व्यवदानस्यैवेति भावः। नन्वग्निदेवत्यत्वं कृत्स्नपरोडाशस्य श्रुतम्, तत्कृत्स्नहोमं विनानुपपन्नमित्याशङ्क्य

न्तरेणानुपपत्तिः, उत्पत्तिशिष्टं हि पुरोडाशस्याग्नेयत्वमेतावतैवोपपन्नम्, यत्ततो गृहीतं द्रव्यवदानमग्नये दीयते। अग्निदैवत्ययागसाधनता ह्याग्नेयता, साधनत्वञ्च प्रदेयप्रकृतितयाप्युपपन्नं व्रीहीणामिव पुरोडाशद्वारम्, सोमस्येव च रसद्वारम्, पशोरिव हृदयादिद्वारम्। अतो द्रव्यवदानद्वारं पुरोडाशस्य साधनत्वमिति न सर्वप्रदानमिति भाष्याभिप्रायः।

वार्त्तिककारस्तु मन्यते-सत्यं प्रणाड्याप्युपपन्नमाग्नेयत्वम्, यदि प्रणाड्यां किञ्चित्प्रमाणमभविष्यत्। असति तु प्रमाणे साक्षादेव प्रदानं युक्तम्। न चात्र प्रमाणमस्ति, येन व्रीहिपशुसोमवत्प्रणाडीमाश्रयामः। 'चतुरवत्तं जुहोति' इति वाक्यं प्रमाणमिति चेत्; भवेत्तत्प्रमाणं यदि होमानुवादेन चतुरवत्तं साधनं विधीयेत। न त्वेवम्, उत्पत्तिवाक्ये होमस्याप्राप्तत्वात्यागमात्रेण होमाभावेऽपि 'पर्यग्निकृतानारण्यानुत्सृजन्ति' इतिवद्देवतासम्बन्धोपपत्तेः। अतो नेयं वचनव्यक्तिर्यज्जुहोति तच्चतुरवत्तमिति, किन्तु यच्चतुरवत्तमित्युपस्तरणादिवाक्यप्राप्तं चतुरवत्तं द्वितीयया संस्कार्यत्वेनोद्दिश्य तत्संस्कारो होमो विधीयते। होमश्च त्यागपूर्वः प्रक्षेपः। तत्र त्यागस्योत्पत्तिवाक्यप्राप्तत्वादप्राप्तः प्रक्षेपांशस्संस्कारो विधीयते। अतो नानेनोत्पत्तिवाक्यविहितस्य कर्मणः साधनविधानम्, येन पुरोडाशस्य तत्प्रकृतित्वं स्यात्। कर्मान्तरमिदमवघातादिवत्संस्काररूपं विधीयते। यागस्य तु साधनान्तराभावात्पुरोडाश एव साक्षात्साधनमिति सर्वप्रदानम्। नन्वाचारादेव होमः प्राप्तः। न, आचारस्य स्वतःप्रामाण्याभावात्, श्रुतिकल्पनस्य च प्रत्यक्षश्रुतिसद्भावेऽनुपपत्तेः। यदि चाचारप्रमाणको होमस्स्यात्ततस्तस्य प्रकृतिविकृतिसाधारणत्वाद्विकृतिष्वप्यौपदेशिक एव होम इति प्रत्यक्षद्वारत्वादाहवनीयादयः पवमानेष्ट्यादिषूपदेशादेव प्राप्येरन्

---

निरस्यति—उत्पत्तीति। एतदेवोपपादयति—अग्निदैवत्येति। ननु व्रीहीणामुत्पन्नशिष्टानामुत्पत्तिशिष्टपुरोडाशप्रकृतित्वं युक्तम्, प्रकृते तु विपरीतम्, अत आह—सोमस्येवेति। ननु सोमस्योत्पत्तिशिष्टत्वेऽपि न देवतासम्बन्धश्रवणम् पुरोडाशस्य तु देवतासम्बन्धस्यापि श्रवणमस्तीति वैषम्यमाशङ्क्य, तृतीयदृष्टान्तमाह-पशोरिवेति। व्रीहीति। तत्र हि पुरोडाशहृदयादिसोमरसानां प्रदेयत्वबोधकमाग्नेयादिवाक्यमस्ति प्रणाड्याश्रयणे प्रमाणमिति भावः। संस्काररूपमिति। प्रतिपत्तिरूपमित्यर्थः। न चैकदेशस्याविनियुक्तत्वात्कथं प्रतिपत्तिविषयत्वमिति शङ्क्यम्। अवयविविनियोगेनावयवविनियोगस्याक्षेपाद्भक्षादिवदुपपत्तेः। प्रत्यक्षेति। तथाचेयमेव श्रुतिस्तन्मूलमिति भावः। ननु होमस्य यागांशताबोधकश्रुतिराचारात्कल्प्या। चतुरवत्तमिति प्रतिपत्तित्वबोधिका न तन्मूलमिति शङ्कां निरस्यति—यदि चेति। तस्य आचारस्य। अग्नयश्चेत्यादिकमत्रैव सप्तमपादगतं सूत्रम्। तत्र ह्याहवनीयादेरौपदेशिकहोमे तूपदेशत एव प्राप्तिः। अनारभ्याधीतत्वेन विशेषाभावात्। अतिदेशप्राप्तेषु तु पर्णतादिवत्प्राप्तिकालवैषम्येण द्विरुक्तिदोषान्नोपदेशतः प्राप्तिरिति

'अग्नयश्च स्वकालत्वात्' इति न्यायात्। तत्र 'तासामग्निः प्रकृतितः प्रयाजवत्' इति सूत्रकारव्यवहारो नोपपद्यते। तस्माच्चतुरवत्तं जुहोतीति होमविधिः, यागस्तु सकलपुरोडाशद्रव्यक इति समञ्जसम्। अधिकरणन्तु होमविषयं व्याख्येयम्। प्रायेण हविषां होमदर्शनात् 'अग्निमुखा वै देवा' इति चार्थवादात्सकलस्य होमं मन्यते, 'चतुरवत्तं जुहोती'ति वचनत्तावत एव होमः। सकलस्य तु देवतासम्बन्धस्त्यागमात्रादेवोपपन्नः। एवञ्च 'शेषात्स्विष्टकृत' इत्यादि समञ्जसं भवति। नन्वग्न्यादिभ्यो दत्तं कथमिव पुनः स्विष्टकृते दीयते ? त्यक्तस्य हि पुनः स्वीकारे शिष्टाचारविरोधस्स्यात् प्रत्यक्षश्रुत्याचारं बाधित्वा तावन्मात्रं पुनः स्वीक्रियत इत्यदोषः ॥ इति सर्वप्रदानाधिकरणम् ॥ १८ ॥

१९

सू० अप्रयो० सति शेषे शेषकार्याणि स्विष्टकृदादीनि किमेकस्माद्धविषः कार्याणि ? उत सर्वेभ्यः ? इति विचारः। शेषात्स्विष्टकृत इति शास्त्रार्थस्य कृतत्वादेकस्मादेव कूर्याणि, न सर्वेभ्य इति प्राप्त उच्यते–यदि शेषगुणकानि प्रधानकर्माण्येतानि ततस्स्यादेवम्। शेषस्य चाकीर्णकरस्यापेक्षितप्रतिपत्तेः प्रतिपत्तिनियमोऽयं विधीयते। स यस्यैव न क्रियते, तस्यैव प्रतिपत्तिनियमलोपाद्वैगुण्यं स्यात्तस्मात्सर्वेभ्यः। प्रतिपत्तित्वञ्चैषां चतुर्थे वक्ष्यते 'उत्पत्तौ येन संयुक्तं तदर्थं श्रुतिहेतुत्वात्तस्यार्थान्तर-

---

वक्ष्यते। पवमानेष्टिषूपदेशादग्निप्राप्तौ किमनिष्टं तत्राह—तत्रेति। सतीत्यर्थः। तासां पवमानेष्टीनां प्रयाजवदग्निः प्रकृतितः प्राप्यत इति शेष इति षष्ठपादगतसूत्रार्थः। नन्वस्य सूत्रस्य पवमानेषु पवमानेष्टयः कार्याः, अतिदेशप्राप्ताग्निसाधनत्वादिति पूर्वपक्षार्थत्वात्तद्विरोधोद्भावनमयुक्तमित्याशङ्क्य व्यवहार इत्युक्तम्। पवमानेष्टिष्वपि होमस्यौपदेशिकतयाग्नेरप्यौपदेशिकत्वेनैव पूर्वपक्षसम्भवात्प्रकृतित इति सौत्रव्यवहारोऽनुचित एवेत्याशयः। होमविधिः प्रक्षेपविधिः। किन्तर्ह्यत्र विचार्यं तत्राह—अधिकरणन्त्विति। किं सकलस्य द्विर्द्विरवदाय होमः ? उत चतुरवत्तमात्रस्येत्येवं होमविषयविचार इत्यर्थः। पूर्वपक्षं दर्शयति—प्रायेणेति। मन्यत इत्यनेन प्रायदर्शनार्थवादयोरसाधकत्वसूचनम्। सिद्धान्तमाह–चतुरवत्तमिति। तथाच होमरूपप्रतिपत्तिं प्रति प्राधान्यं चतुरवत्तस्यैव नान्यस्येति न प्रधानानुसारेणापि प्रतिपत्तेरावृत्तिशङ्का कार्येत्याशः। समञ्जसमिति। शेषपदस्वारस्याभङ्गाद्धविरन्तराक्षेपकल्पनागौरवाभावाच्चेति भावः। शिष्टाचारेति। त्यक्तस्वीकारवर्जनरूपेत्यर्थः। देवतायाः स्वत्वानङ्गीकारेण परस्वहरणनिषेधासम्भवादाचारानुधावनम्। सूत्रप्रयोजने स्पष्टे ॥

इति सर्वप्रदानाधिकरणम् ॥ १८ ॥

अप्रयो० भाष्यानुसारेणोपजीवकत्वसङ्गत्याधिकरणमिदमिति दर्शयति–सतीति। शास्त्रार्थस्येति। शेषस्योपादेयत्वेन तद्गतैकत्वस्य विपक्षितत्वादित्याशयः। एतद्व्याख्याने वार्तिकोक्तदूषणमाह—प्रतिपत्तित्वञ्चैषामिति। उत्पत्तावित्यादिसूत्रस्यायमर्थः—उत्पत्तिवाक्ये येन यागादिना संयुक्तं यत् द्रव्यं तत्तदर्थं तदङ्गम्, श्रुत्या तस्य हेतुत्वावगमात्। तस्य च द्रव्यस्यार्था-

गमनशेषत्वात्प्रतिपत्तिस्स्यात्' इति । तेनैव च गतार्थत्वान्नेदमधिकरणान्तरम् । प्रयोजनसूत्राणि त्वेतानि पूर्वाधिकरणस्य यदा शेषकार्यवशात्पूर्वपक्षेऽप्यसर्वप्रदानं किं तदा चिन्तायाः प्रयोजनम् ? तत्राह-पूर्वपक्षेऽपि सर्वप्रदाने प्राप्ते स्विष्टकृदादिवशेन शेषस्स्थाप्यते । प्रधानकर्म च तदा स्विष्टकृदादि भवति । तच्चैकस्मादेव सिध्यतीत्येकस्मादेव कर्तव्यम् । सिद्धान्ते त्वपेक्षितप्रतिपत्तेः स्थितस्य शेषस्य प्रतिपत्तिरियमिति सर्वेभ्यः स्यादिति प्रयोजनम् ॥ १९ ॥

२०

**सू० एक०** कृत्वा चिन्तेम्-यदा शेषकार्यवशादेव शेषं स्थापयित्वा एकस्मात्कार्याणि तदा किमनियमो यतः कुतश्चित् ? उत मुख्यात् ? इति । विशेषाभावादनियम इति प्राप्ते, ब्रूमः-मुख्यस्य प्राप्तिनिमित्तत्वाच्छेषस्स्थाप्यते । तस्मिंश्च स्थापिते तत एव शेषकार्याणामुपपत्तेर्निमित्तविधानान्नेतरेभ्यः शेषस्य स्थापनम् । तस्मान्मुख्यादेव कार्याणि ॥ इति स्विष्टकृतिकृत्वाचिन्ताधिकरणम् । २० ॥

२१

**सू० भक्षा०** आग्नेयं चतुर्धा कृत्वा इदं ब्रह्मण इत्यादिभिर्व्यपदेशैर्ऋत्विग्भ्यस्समर्प्यते । तत्र संशयः—किमिदं समर्पणमृत्विजां यथेष्टं विनियोगार्थं परिक्रयाय ? उत द्रव्यप्रतिपत्त्यर्थं भक्षणाय ? इति । तत्र—

**भक्षस्याश्रवणात्तावत्तादर्थ्यं नावगम्यते ।**
**कियत्यप्यानतिस्तावद्भवतीति तदर्थता ॥**

न ह्यश्रुते भक्षे तादर्थ्यमध्यवसातुं शक्यम् । कर्मकरेभ्यश्च दीयते दीयमानश्च कियतीमपि तावदानतिं करोतीति सोमचमसवत्परिक्रयार्थता । मैवम् ;

---

न्तरगमने कार्यान्तरसम्बन्धे उपयुक्तशेषत्वात्प्रतिपत्तिस्स्यादिति । किमर्थानि तर्हि सूत्राणि ? तत्राह—प्रयोजनेति । प्रथमपक्षे सर्वहोमासर्वहोमप्रयोजनस्य स्पष्टत्वात् द्वितीयपक्षप्रयोजनकथनार्थतामाह—यदेति ॥

२०

एक० सिद्धान्तमाह—मुख्यस्येति । मुख्यस्याद्यस्य हविष आग्नेयस्य शेषः स्थाप्यते । प्राप्तिनिमित्तत्वात् सञ्जातप्रथमोपस्थितिरूपनिमित्तवशादित्यर्थः । निमित्तविधानात् शेषकार्यानुपपत्तिक्षयात् । अतएव कपिञ्जलाधिकरणसिद्धान्तसूत्रं 'प्रथमं वा नियम्येत, कारणादिति क्रमस्स्यात्' इति ॥

२१

भक्षा० व्यादेशैरिति । ब्रह्मादिसम्बन्धितया निर्देशरूपैर्मन्त्रैरित्यर्थः । अविहितस्य च ब्रह्मादिसम्बन्धरूपसमर्पणस्य मन्त्रप्रकाश्यत्वानुपपत्त्या मान्त्रवर्णिकविधिकल्पनम् । परिक्रयाय आनत्यर्थम् । तत्फलञ्च यथेष्टं विनियोगः । एवमग्रेऽपि कियत्यपि

**स्वामी हि द्रव्यदानेन परिक्रीणीत न त्विह ।**
**स्वामित्वं कस्यचिद्दत्तं देवतायै हविर्यतः ॥**

सकलस्य हविषो देवतायै प्रत्तत्वादनीशानो यजमानस्तुल्यस्स ऋत्विग्भिः कथं परिक्रीणीत । तस्मान्न परिक्रयः । शेषस्य तु प्रतिपत्यपेक्षत्वाद्योग्यतया च पुरोडाशस्य भक्षणमेव प्रतिपत्तिरवगतेति कर्तृविशेषमात्रापेक्षायां ब्रह्मादयो नियम्यन्ते, तन्नियमस्यापि इष्टमेव प्रयोजनम् । तेषां करिष्यमाणकर्मप्रयोगकौशलम् भक्षणाद्धि सामर्थ्यं भवतीति भक्षणार्थता ॥ इति पुरोडाशविभागाधिकरणम् ॥ २१ ॥

**इति शास्त्रदीपिकायां तृतीयाध्यायस्य चतुर्थः पादः**

---

अल्पापि । सोमेति । 'औदुम्बरः सोमचमसो दक्षिणा' इतिवदित्यर्थः । **कस्यचिदिति** पूर्वान्वितम् । प्रत्तत्वात् दत्तत्वात् । प्रयोजनं पूर्वपक्षे भक्षणानियमः । **सिद्धान्ते नियम** इति । सूत्रे दानपदेनोक्तो व्यादेशः स परिक्रये समर्पणे भवतीत्यर्थः । कुतः ? **भक्षाश्रवणा**दिति ॥ इति पुरोडाशविभागाधिकरणम् ॥ २१ ॥

१

इति श्रीमत्पदवाक्यप्रमाणाभिज्ञतत्सद्रामभट्टात्मज-
श्री वैद्यनाथकृतायां शास्त्रदीपिकाटीकायां प्रभाख्यायां
तृतीयस्य चतुर्थः पादः ॥

## अथ तृतीयाध्यायस्य पञ्चमः पादः

### १

**आज्याच्च॰** शेषकार्याणि किमाज्यादप्युपांशुयाजद्रव्यात्कर्तव्या ? उत नेति संशयः। तत्राविशेषात्कर्तव्यानीति प्राप्ते—

**उच्यते—कृतार्थस्य** प्रतिपत्त्यपेक्षस्य स्थितस्य शेषस्य प्रतिपत्त्यर्थानि शेषकार्याणि, न चाज्यमेवंविधमस्ति। यत्तावत् ध्रुवायामप्युपांशुयाजार्थे गृहीतेऽवशिष्टमाज्यम्, तत्पश्चाद्भाव्युपस्तरणाद्युपयोगीत्यकृतार्थं न प्रतिपत्त्यर्हम्। सर्वान्ते च तेन हविःशेषेण समिष्टयजुर्होमः क्रियत इति। न ततः शेषकार्याणि। यत्तु जुह्वां चतुर्गृहीतमाज्यम्, तदशेषं हुतमिति शेषाभावात् नाज्याच्छेषकार्याणि ॥

**इत्युपांशुयाजाज्यात् स्विष्टकृदादिशेषाननुष्ठानाधिकरणम् ॥ १ ॥**

### २

**साकं॰** साकं प्रस्थायीये श्रूयते—'सह कुम्भीभिरभिक्रामेदि'ति। तत्र किं

---

## अथ तृतीयाध्यायस्य पञ्चमः पादः

### १

आज्याच्च॰ शेषसंस्कारचिन्तनमिह पादार्थः। शेषकार्यपवादाच्च सङ्गतिर्ज्ञेया। पत्नीसंयाजशेषादिडासत्त्वादुपांश्वित्यादिविशेषणम्। एवंविधं कृतार्थं सत्प्रतिपत्त्यपेक्षम्। औषधसान्नाय्ययोस्तु द्व्यवदानमात्रहोमात्तथाविधत्वमिति भावः। आज्यं तावत् ध्रुवास्थमेकं ततश्चतुर्गृहीतं जुह्वामुपांशुयाजार्थमपरम्। तत्रोभयोरपि प्रतिपत्त्यनपेक्षतां दर्शयति—यत्तावदिति। 'समिष्टयजूंषि जुहोति' इति यजुर्मन्त्रविशेषसाधनको होमस्तथोक्तः। अशेषमिति। 'चतुर्गृहीतं जुहोति' इत्युपांशुयाजावान्तरप्रकरणगतवचनादिति भावः। स्विष्टकृदादिविधिस्तु विद्यमानशेषोपक्षीण इति न तद्बलादपि शेषस्थापनमित्याशयः। आज्यादपि शेषकार्याणि भवन्ति, तेषां सर्वहविःसंबन्धादिति सूत्रार्थः। प्रयोजनं स्पष्टम् ॥ १ ॥

इत्युपांशुयाजाज्यात् स्विष्टकृदादिशेषाननुष्ठाधिकरणम् ॥ १ ॥

### २

साकं॰ दर्शपूर्णमासयोः 'साकं प्रस्थायीयेन यजेत पशुकामः' इति फलार्थविहितगुणयोगात्साकं प्रस्थाय्यसंज्ञा। अभिक्रमणाश्रितं दधि-पयः-कुम्भी-साहित्यं च गुण इति 'सह कुम्भीभिः' इति वाक्यगम्यम्। कुम्भीभिरिति बहुवचनं द्वयोश्छान्दसमिति स्थितं द्वितीये। पूर्वपक्षमाह—तत्रेति। अभिक्रमणे कुम्भीसाहित्यमात्रेण फलार्थगुणसम्पत्तेरिति भावः। आहवनीयमभिक्रम्यापि

शषकार्याणि कर्तव्यानि ? उत तेषु नेति। तदर्थं च किं कुम्भीषु शेषो विद्यते ? उत नेति। तत्राभिक्रमणमात्रम्, कुम्भीनं होमः। स त्वभिक्रम्याप्याहवनीयमवदायेव जुह्वां यथाप्रकृति कर्तव्य इति शेषसद्भावात्कर्तव्यं स्विष्टकृदादीति प्राप्ते—

**ब्रूमः**—नेदमप्राकृतकार्यमपूर्वमभिक्रमणं कुम्भीभिर्विधीयते, किं तु यदेव प्राकृतं होमार्थं जुह्वाऽभिक्रमणम्, तत्रैव जुहूमपहाय कुम्भ्यो निवेश्यमाना होमार्थाः विज्ञायन्ते, न ह्यन्यथा होमार्थाभिक्रमणसम्बन्धो युज्यते। तदनेन प्रकारेण कुम्भीभिर्होमो विधीयते, तद्विधौ चाभिक्रमणं प्राप्तमेवानुवदति। तस्मादत्रापि शेषाभावान्न शेषकार्याणि।

इति साकंप्रस्थायीये शेषकर्माननुष्ठानाधिकरणम् ॥ २ ॥

३

सौत्रा० सौत्रामण्यां पयोग्रहाः सुराग्रहाश्च। तत्र श्रूयते—'यथागृहीतान् ग्रहानृत्विज उपाददते, उत्तरेऽग्नौ पयोग्रहान् जुह्वति, दक्षिणाग्नौ सुराग्रहानिति। तत्रापि पूर्ववदेव संशयपूर्वोत्तरपक्षाः। विशेषः—सोमग्रहतुल्यश्रुतित्वात्, तत्र च शेषसद्भावात् इहापि स्यादितीमामाशङ्कां व्यावर्तयितुमतिदेशः॥

इति सौत्रामण्यां शेषकर्माननुष्ठानाधिकरणम् ॥ ३ ॥

---

स्रुवेणावदायैव यथाप्रकृति जुह्वा कर्तव्य इति योजना। नेदमिति। होमार्थाभिक्रमणस्यैव प्रत्यभिज्ञानादिति भावः। जुहूमपहायेति। 'अग्नीधे स्रुचौ प्रदाय' इति वाक्यादिति भावः। होमार्थाः होमोपकारकाः, फलाङ्गत्वेन होमाङ्गत्वायोगात्। न हीति। अभिक्रमणसंबन्धश्च साहित्याक्षिप्ताभिक्रमणकालिकनयनकर्मत्वरूपः। तथाच पूतीकानां यागार्थाभिषवसम्बन्धप्रतिपादनस्य यागार्थतायामिवेहापि होमार्थाभिक्रमणसंबन्धप्रतिपादनस्य होमार्थतायां तात्पर्यमित्याह—तदिति॥

इति साकं प्रस्थायीये शेषकर्माननुष्ठाधिकरणम् ॥ २ ॥

३

सौत्रामण्याम्० सौत्रामणीति पशुयागानां सुत्रामदैवत्यत्वान्नामधेयम्। ग्रहास्तु पश्वङ्गपुरोडाशयागे पुरोडाशस्थाने विधीयन्त इति दशमे वक्ष्यते। यथेति। चतुरवत्तमनवदायैवेत्यर्थः। ननु 'यथागृहीतान्' इत्यनेन शेषनास्तित्वनिश्चयात्कथं संशयस्तत्राह—सोमेति। सोमग्रहेषु यथा 'अल्पं जुहोति' इति विधिवशाच्छेषसत्वम्, तथात्रापि 'उच्छिनष्टि न सर्वं जुहोति' इति श्रुतिवशादिति शङ्का सम्भवतीत्यर्थः। 'ब्राह्मणं परिक्रोणीयादुच्छेषणस्य पातारम्' इत्यादिना प्रतिपत्त्यन्तरविधानाच्च शङ्कानिरास इति भावः। तद्वदित्यनुषङ्गेण सूत्रार्थः॥

इति सौत्रामण्यां शेषकर्माननुष्ठानाधिकरणम् ॥ ३ ॥

४

द्रव्यै० सर्वपृष्ठायां षट् कर्माणि–'इन्द्राय राथन्तराय निर्वपति, इन्द्राय बार्हताय' इत्येवमादीनि। तेषां षट् हवींषि क्रमेण यथादेवतं निरुप्य प्रकृतिवत्सहावघातपेषणे कृत्वा विभागे प्राप्ते, तमकृत्वा वचनात्सर्वैरेकं पुरोडाशं कृत्वा, ततः समन्ततः पर्यवदाय प्रधानानि क्रियन्ते। तत्र किं प्रतिकर्म भेदेन स्विष्टकृदिडमवदेयम्? उत सकृदिति संशयः।

तत्र धर्मबहुत्वेन प्रतिकर्मावसायिभिः।
चोदकैः शेषकर्मापि प्रतिकर्म प्रदिश्यते ॥

तस्मात्प्रतिकर्मावदेयम्। तथा च प्रधानभेदे एकस्मिन्नपि शेषे शेषकार्यावृत्तौ सिद्धवद्धेतुं दर्शयति 'द्विरैन्द्रवायवस्य भक्षयति, द्विर्ह्येतस्य वषट्करोती'ति। तद्वदिहापीति प्राप्ते ब्रूमः :—

सर्वसाधारणः शेषस्तस्मात्सकृदवद्यते।
तावतैव हि सर्वेषां कृतं स्यादविशेषतः ॥

ननु त्यक्तस्य पुनस्त्यागायोगान्न सकलः पुरोडाशः सर्वार्थः। किं त्वेकैकोऽवयव एकैकस्य यागस्य साधनम्, तद्येनावयवेन यो यागः क्रियते, तदुत्तरार्धादवदीयमाने तस्य शेषादवत्तं भवतीति भेद एव न्याय्यः।

नैतदेवम्; अवयवानामेव विशेषाग्रहणात्। न ह्येतद् ज्ञायते-अयमवयवोऽस्य,

---

४

द्रव्यैकत्वे० अत्र शेषकार्यगतसकृत्त्वादिविशेषचिन्तनात्प्रसङ्गसङ्गतिः। 'य इन्द्रियकामः स्यात्तमेतया सर्वपृष्ठया याजयेत्' इति विहितेष्टिः। रथन्तर-बृहत्-वैरूप-वैराज-शाक्वर-रैवताख्यसकलपृष्ठस्तोत्रदेवताभूतेन्द्रदेवताकत्वादुक्तसंज्ञा, पृष्ठशब्देन तद्देवतोपलक्षणात्। आदिना 'इन्द्राय वैरूपायेन्द्राय वैराजायेन्द्राय शाक्वरायेन्द्राय रैवताय' इति चतुष्टयसङ्ग्रहः। वचनादिति। 'समन्तं पर्यवद्यति' इत्येवंरूपादित्यर्थः। प्रतीति। प्रतिकर्म भिन्नैश्चोदकैरतिदेशैः शेषकर्म स्विष्टकृदादि प्रतिकर्म। तत्तत्कर्मोद्देशेन प्रदिश्यते विधीयत इत्यर्थः। न च भेदेनातिदेशेऽपि 'एकद्रव्ये संस्काराणां व्याख्यातमेककर्मत्वमि'त्येकादशाध्यायोक्तन्यायेन तन्त्रता स्यादिति वाच्यम्, तत्तत्प्रधानावदानप्रदेशभेदेन तत्तदुत्तरार्धादिसंस्कार्यभेदेन तन्न्यायाप्रवृत्तेरित्याशयः। ननु कस्योत्तरार्धमित्यपेक्षायां हविष एव सम्बन्धित्वेनान्वयो नावदानदेशस्य, 'गुणानाञ्च परार्थत्वात्' इति न्यायात्। एवञ्च तदेकत्वात्तन्त्रत्वमेव स्यादत आह—तथा चेति। ऐन्द्रवायवस्सोमग्रहः। तथा च यत्र यत्र प्रधानभेदस्तत्र तत्र शेषकार्यभेद इति हेतुत्वाक्षिप्तव्याप्तिबलेन भेद एवोचित इति भावः। सर्वेति। तस्मात् हविष उत्तरार्धात्। ननु पुरोडाशस्यैकस्य सर्वहविष्ट्व एव स्यात्, न त्वेवमिति शङ्कते—नन्विति। यथा हृदयाद्येव हविः तत्प्रकृतिस्तु पशुस्तथा तत्तदवयवा हवींषि पुरोडाशः प्रकृति-

अयमस्येति, विशेषे प्रमाणाभावात् । होमदेशा एव वचनाद्व्यवस्थिताः, न यागदेशाः, तेन यागावस्थायामेवं सङ्कल्पयितव्यम्—योऽस्मिन् पुरोडाशे निर्वापदशायामिन्द्राय राथन्तराय दातुं प्रक्रान्तोंऽशः, तं तस्मै ददामीति, एवं सर्वेषु कृतेषु शेषस्य साधारणत्वादगृह्यमाणविशेषं शेषकार्यं तन्त्रेण सकृत्कर्तव्यम् । ऐन्द्रवायवे तु वचनात्प्रतिकर्म भक्षः, न प्रधानभेदात् । हेतुनिर्देशस्त्वर्थवादमात्रम् ॥

**इति सर्वपृष्ठेष्टौ स्विष्टकृदिडादीनां सकृदनुष्ठानाधिकरणम् ॥ ४ ॥**

**५**

**भट्टपेटिका**

ऐन्द्र० ऐन्द्रवायवे तु किं सकृद्भक्षणम् ? उत द्विरिति ? पूर्ववत्सकृदिति प्राप्ते—वचनाद् द्विरिति सिद्धान्तः । सति वचने पूर्वपक्षासंभवात्पूर्वाधिकरण एव चोपवर्णना परिहारार्थं सूत्रम् नाधिकरणान्तरम् ॥

**इत्यैन्द्रवायवे द्विश्शेषभक्षणाधिकरणम् ॥ ५ ॥**

**६**

**सोमेऽव०** सोमे च बहवो ग्रहाः, चमसाः, पुरुषाश्च । तत्र संशयः—किं न क्वचित्कस्यचिद् भक्षणम् ? उत सर्वत्र सर्वेषामविशेषेण भक्षः ? उत यस्य यत्र प्रत्यक्षवचनम्, तस्य तत्र भक्षणम् ? अथवा समाख्या-वषट्कार-होमा-भिषव-प्रत्यक्षवचनै-

---

रिति भावः अस्य यागस्य । होमदेशाः होतव्यावदानप्रदेशाः पुरोडाशप्रागादिभागाः । वचनात् समन्तमित्यादिकात् । यागदेशाः त्यक्तव्यहविर्देशाः । कथं तर्हि तत्तद्देवतोद्देशेन निरुप्तावयवभागानां तत्तद्यागसाधनतेत्याशङ्क्याह—तेनेति । तद्यागसाधनीभूतावयवाज्ञानेनेत्यर्थः । 'द्विर्ह्येतस्य वषट् करोति' इत्यस्य हेतुविधित्वे भूतकाललक्षणापत्तेरर्थवादत्वमात्रमित्याशयेनाह—ऐन्द्रेति । सूत्रं स्पष्टार्थम् ॥

इति चतुर्थं सर्वपृष्ठेष्टौ स्विष्टकृदिडादीनां सकृदनुष्ठानाधिकरणम् ॥ ४ ॥

**५**

ऐन्द्रवायवे० भाष्यानुसारेणापाततोऽधिकरणान्तरं प्रदर्श्य वार्तिकमतेनाह—सतीति । उपवर्णना दृष्टान्तः । तत्परिहाराय तद्द्वेषस्य कथनाय ॥

इत्यैन्द्रवायवे द्विश्शेषभक्षाधिकरणम् ॥ ५ ॥

**६**

सोमे० क्वचित् ग्रहे चमसे वा । कस्यचिद् ऋत्विजः । यस्य ऋत्विजः । यत्र ग्रहादौ ।

भक्ष इति। वार्तिके तु सर्वत्र सर्वेषां भक्ष इति पक्षमतिमन्दत्वादनुपन्यस्य, त्रयः पक्षा इत्युक्तम्। तदिदमतःप्रभृति 'होमाभिषवाभ्यां चे' त्येवमन्तमेकमधिकरणम्। तत्र—

भक्षणं नास्ति सोमस्य निःशेषं हूयते यतः।
शेषे सत्यपि नैवाऽत्र भक्षणं विध्यभावतः॥

सोमे हि 'यद् ग्रहान् स्थापयति, यच्चमसाञ्जुहोती' ति वचनात्सौत्रामणिसाकंप्रस्थायीयवच्छेष एव नास्ति, कुतो भक्षणम्? 'अल्पं जुहोती' ति वचनमल्पत्वात्सोमपात्राणामनुवादमात्रमिति मन्यते।

यस्त्वग्रबिन्दुनिपातमात्रेण शास्त्रार्थस्य कृतत्वान्नाशेषहोम इत्याह, तस्य सौत्रामण्यादावपि तथैव स्यात्, उपांशुयाजे च जौहवस्य शेषः स्यात्। अथ शेषकार्यवशाच्छिष्येत, ततस्तेषामपि प्रयोजकत्वाच्छेषनाशदोषापहारादावपि स्विष्टकृदादावपि हविरन्तरागमः स्यात्। तस्मादशेषत्वादभक्षणम्। यद्यपि च 'अल्पं जुहोती' ति वचनस्यानन्यार्थत्वाच्छेषः स्यात्, तथाऽपि न भक्षः, वचनाभावात्। 'पुरस्तादैन्द्रवायवं भक्षयति' 'वषट्कर्तुः प्रथमभक्षः' 'हविर्धाने ग्रावभिरभिषुत्याहवनीये हुत्वा प्रत्यञ्चः

---

समाख्यादिकं वक्ष्यते। अतिमन्दत्वादिति। 'पुरस्तादैन्द्रवायवं भक्षयति' इति भक्षानुवादरूपलिङ्गदर्शनस्य प्रापकप्रमाणाभावेनासाधकत्वादित्याशयः। एकमिति। 'वचनानि त्वपूर्वत्वात्' 'चमसेषु समाख्यानात्' 'वषट्काराच्च भक्षयेत्' 'होमाभिषवाभ्याञ्च' इति सूत्रचतुष्टयेन प्रत्यक्षवचन-समाख्या-वषट्कार-होमाभिषवाणां भक्षनिमित्तत्वसिद्धान्तकथनादित्यर्थः। मध्ये 'उद्गातृचमसम्' इत्यादिसूत्रद्वयन्तु प्रसङ्गात्समाख्याप्रत्यक्षवचननिमित्तकभक्षगतविषयविवेकार्थमेवेति नाधिकरणान्तरमिति भावः। हेतुद्वयेनाद्यपूर्वपक्षमाह—भक्षणमिति। चमसमिति द्वितीया तृतीयार्था, सक्तूनितिवत्। एतच्च 'ग्रहैर्जुहोति' इत्यस्याप्युपलक्षणम्। साकं प्रस्थायीयवदिति सप्तमी समर्थाद्वतिः। अनुवादमात्रमिति। ऐन्द्रवायवादिशब्दसामानाधिकरण्याद् गृह्यत इति चम्यत इति च व्युत्पत्त्या ग्रहचमसपदाभ्यां रसाभिधानात्तस्य च देवतोद्देशेन त्यक्तस्य प्रतिपत्त्यपेक्षस्य 'ग्रहैर्जुहोति' इत्यादिभिर्विनियोगभङ्गेन होमरूपप्रतिपत्तिविधानात्कृत्स्नहोम एवेत्यल्पवाक्यमनुवाद इति भावः। स्वमतेऽल्पवाक्यादेव सिद्धान्तो न तु न्यायादिति तस्यानुवादत्वं पूर्वपक्ष उक्तम्। न्यायादेव सिद्धान्त इति गुरुमतन्तु न युक्तमित्याह—यस्त्विति। ग्रहादिकरणकहोमस्य तावतैवोपपत्तेः, सर्वं जुहोतीति वचनाभावादिति भावः। दूषयति—तस्येति। मत इति शेषः। तेषामपि शेषकार्याणामपि। प्रयोजकत्वात् स्वाङ्गहविरनुष्ठापकत्वात्। आद्यहेतुकपूर्वपक्षमुपसंहरति—तस्मादिति। अल्पवाक्यस्यानुवादकत्वादित्यर्थः। पूर्वत्रास्वारस्येन द्वितीयहेतुमाह—यद्यपीति। अनन्यार्थत्वात् विध्यतिरिक्तप्रयोजनशून्यत्वात्। वचनसत्त्वे कथं तदभाव इत्याशङ्क्य तेषां भक्षविधौ न तात्पर्यमित्याह—पुरस्तादित्यादि। पुरस्तात् प्रतिप्रस्थात्रपेक्षया प्रथमम्। हविर्धीयते स्थाप्यतेऽत्रेति, तदाधारः शकटम्। अभिषवः कण्डनम्। प्रत्यञ्चः प्रत्यङ्मुखाः। सदसि

परेत्य सदसि भक्षान् भक्षयन्ती' त्यादौ सर्वत्र गुणान्तरश्रवणात् तत्परो हि विधिर्न भक्षं विधत्ते। 'अथैतस्य हारियोजनस्य सर्व एव लिप्सन्त' इति लिप्सामात्रं श्रुतम्, न भक्षः। **तस्मान्नास्ति भक्ष इति प्रथमः पक्षः।**

शेषस्तावदल्पहोमविधानादस्त्येव। तस्य चासति भक्षे विशेषविधानम् 'पुरस्तादैन्द्रवायवं भक्षयती'त्यनुपपद्यमानं भक्षं गमयति, तच्च लिङ्गं स्थालीपुलाकवदविशेषेण भक्षं गमयतीति, सर्वत्र सर्वेषां भक्ष इति द्वितीयः पक्षः।

स्यादेतद्यदि विशेषविधिरयम्, असत्यां तु भक्षणप्राप्तौ विशेषविधिर्न घटत इति। अयमेव विशिष्टभक्षविधिः, तस्माद्यत्रैन्द्रवायवादौ यस्याध्वर्य्वादेर्भक्षोपदेशः, तत्र तस्य भक्षो नातिप्रसज्यत इति तृतीयः पक्षः।

**सिद्धान्तस्तु**—सत्यमेतद् यथोपदेशं भक्ष इति। 'पुरस्तादैन्द्रवायवस्ये' त्येवमादिभिस्तु भक्षापदेशो येषु, तेष्वेव भक्ष इति न मृष्यामहे, कारणान्तरादेव भक्षप्राप्तेः, पुरस्तादित्यादेस्तु विशेषमात्रपरत्वात्। तच्च कारणान्तरमन्यत्राप्यस्ति। किं पुनः कारणान्तरम्? समाख्या-वषट्कार-होमा-भिषवा यथायथं प्रापकाः, हारियोजने तु वचनम्। तत्र चमसेषु तावत्समाख्यया चमसिनां भक्षः, होतृचमसादिसमाख्या वेदे 'प्रैतु होतुश्चमस' इति मन्त्रे पठिता। सोमचमस इति लौकिकी समाख्या। चमस इत्येषोऽदनार्थस्य चमेरौणादिकोऽधिकरणसाधनोऽसच् प्रत्ययः। तस्मादत्र होत्रादिभिश्चमितव्यः सोमरस इति सिद्धश्चमसेषु चमसिनां भक्षः॥

**इति सोमे शेषभक्षणाधिकरणम्॥ ६॥**

---

तन्नामकमण्डपे। नन्वेकोऽत्र भक्षविधिरन्ये तत्र गुणविधय इति शङ्कानिरासाय सर्वत्रेति। एवमपि कुतो न भक्षविधिः तत्राह—तत्परो हीति। गुणपर इत्यर्थः। तात्पर्यानेकत्वे वाक्यभेदापत्तेरिति भावः। न चागत्यैकत्र विशिष्टविधिरन्ये तत्र गुणविधय इति युक्तम्, उत्पत्तिशिष्टवषट्कारनिमित्तके होमादिवि निमित्तान्वयायोगात् ऐन्द्रवायवसंस्कारके मैत्रावरुणादिसंस्कार्यान्वयायोगात्। सर्वेषामेव विशिष्टविधित्वे चात्यन्तगौरवादतोऽर्थवादा एवैत इत्याशयः। अत्रास्वरसाद्द्वितीयपूर्वपक्षमाह—शेष इति। एवमपि न सर्वत्र भक्ष इत्याशङ्क्याह—तच्चेति अत्रास्वरसेन तृतीयपक्षमाह—स्यादेतदिति। अयं पुरस्तादित्यादिः। न घटत इति। भक्षानुवादेन गुणविधानात् भक्षविधिः तस्मिंश्च सति तदनुवादेन सुराविधिरित्यन्योन्याश्रयादिति भावः। सिद्धान्ते तृतीयपक्षाद्विशेषं दर्शयति—पुरस्तादिति। कारणान्तरात् समाख्यादेर्वक्ष्यमाणात्। विशेषमात्रेति। गुणमात्रेत्यर्थः। अन्यत्रापि पुरुषान्तरे ग्रहान्तरे चमसे चेत्यर्थः। यथायथं व्यवस्थया। तामेवादौ समाख्याप्रमाणिकामाह—तत्रेति। चमसिनां होतृब्रह्मोद्गातृयजमानमैत्रावरुणब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकाग्नीध्राणाम्। प्रत्ययः असच्प्रत्ययः। उद्गात्रादीनामभ्युन्नत्वेऽपि वा 'होतुश्चमसः' इति षष्ठ्या योग्यतावशेन भक्ष्यभक्षकभावसम्बन्धावगमाद्व्यवस्थासिद्धिरित्युपसंहरतित-स्मादिति॥

इति सोमे शेषभक्षणाधिकरणम्॥ ६॥

७

उद्गातृ० संप्रति वषट्कारादिनिमित्तं भक्षणमनुक्त्वा, अधिकरणमसमाप्यैव अन्तरा सामाख्याभक्षप्रसङ्गमेवानुसरति। तत्रैव मन्त्रे 'प्रोद्गातॄणां चमसः' इति श्रूयते। तत्रोद्गतृचमसमुद्गाता एको भक्षयेत्, प्रातिपदिकार्थविरोधिनो बहुत्वस्य पाशवद-न्याय्यकल्पनादिति प्रथमः कल्पः।

युक्तं पाशे बहुत्वस्य प्रकरणेऽत्यन्तासम्भवादिति लक्षणयाऽर्थपरत्वे सम्भ-वति, न वचनस्यात्यन्तबाधनं युक्तम्। तस्मादुद्गातृशब्दः पुरुषान्तरं लक्षयतीति। तत्र चाविशेषात्प्रकरणगतसर्वपुरुषलक्षणात्सर्वेषां भक्ष इति द्वितीयः।

श्रुत्यर्थे सम्भवति न कस्यचिल्लक्षणा युक्ता, गानकारिषु च त्रिष्ववयवयोगेन वर्तमानं प्रातिपदिकं बहुवचनञ्च द्वयमपि श्रुत्यर्थं भवति। तस्मादपसुब्रह्मण्यानां त्रयाणां गानकारिणां छन्दोगानां भक्ष इति तृतीयः पक्षः।

नावयवव्युत्पत्त्यापि त्रिषु तद्वृत्तिः सम्भवति। न हि गानमात्रमुद्गानम्। साम्नो हि द्वितीया भक्तिरुत्पूर्वस्य गायतेरभिधेया, तां चोद्गातैवैको गायतीति बहुवच-नानुपपत्तिः, तस्माल्लक्षणैव न्याय्या। सा च न सर्वेषाम्, किं त्वौद्गात्रप्रवचनसम्ब-न्धान्तरसामान्यात्ससुब्रह्मण्यानां चतुर्णामपि छन्दोगानाम्। अतश्चत्वारोऽपि भक्षयेयुः।

---

७

उद्गातृचमसम्० प्रसङ्गमेवेति। तथा च नैतदधिकरणान्तरम्, किन्तु प्रस्तुताधिकरण एव विशेषचिन्तनमिति भावः। तत्रैवेति। 'प्रैतु होतुश्चमसः प्रब्रह्मणः प्रोद्गातॄणां प्रयज-मानस्य प्रयन्तु सदस्यानाम्' इति प्रैषरूप इत्यर्थः। प्रैतु होत्रादिसमीपे यात्वित्यर्थः। द्वितीयादि-वाक्येष्वेत्वित्यनुषङ्गः। बहुवचनाद्यत्र बहव उद्गातारः सर्वतोमुखादौ तत्रोत्कर्षः, पूषानु-मन्त्रणवत्स्यादित्याशङ्क्याह—प्रातिपदिकेति। 'अदितिः पाशान्' इत्यस्याग्नीषोमीयपशुप्र-करणस्थमन्त्रस्य यथा बहुपाशके नोत्कर्षः, किन्तु पाशप्रातिपदिकार्थस्य प्रधानस्य प्रकरणे सत्वात्तत्रासत्वेन तद्विरोधिबहुत्व एव बहुवचनं छान्दसत्वेनाविवक्षितत्वरूपान्याय्यकल्पना नवमे वक्ष्यते, तथेहापीत्यर्थः। युक्तमिति। पाशे वचनस्य बहुवचनस्यात्यन्तबाधनं युक्तमित्य-न्वयः। अत्यन्तेति। 'पाशान् प्रमुमोक्तु' इति मोचनकर्मभूतस्यान्यासम्भवात् तद्बहुत्वस्याप्य-सम्भव इति भावः। त्रिष्विति। उद्गातृप्रस्तोतृप्रतिहर्तृष्वित्यर्थः। अवयवयोगेन उत्कृष्ट-गानकर्तृत्वरूपेण। श्रुत्या अर्थो यस्य तादृशम्। अपसुब्रह्मण्यानां सुब्रह्मण्यरहितानाम्, तस्य गानकर्तृत्वाभावादिति भावः। भक्तिः भागः। स चोद्गीथाख्यः। तत्रोद्गीथशब्दस्योद्गायते-र्भावे थक्प्रत्ययेन निष्पत्तेरुद्गायतेस्तत्र शक्तिरावश्यिकीति भावः। औद्गात्रेति। उद्गातृ-सम्बन्धिप्रवचनं सामवेदः, तत्सम्बन्धश्च तदध्येतृत्वम् तद्विहितानुष्ठातृत्वं वा शक्यसम्बन्धरूपम-वान्तरसामान्यम्। ऋत्विगन्तरव्यावृत्तमित्यर्थः। भाष्यमतेन सिद्धान्तमुपसंहरति—अत इति।

**नैवम्; सत्यं लक्षणा।** सा तु यथावान्तरसामान्याच्चतुर्णामेव न सर्वेषाम्, एवमेकस्तोत्रसम्बन्धः, सदसि च सन्निधानम्, भक्षणवेलायां च व्यापृतिरित्येतान्यवान्तरसामान्यानि स्तोत्रकारिणां सन्तीति तेषामेव त्रयाणां लक्षणा न्याय्या। किंच 'प्रैतु होतुश्चमसः' इति यत्र भक्षयितारः स्थिताः तत्र नयनं भक्षार्थं प्रेष्यते। सदसि च नयनम्, अतो ये सदसि स्थिताः, तान्सर्वान्प्रति नीयत इति गम्यते। न च सुब्रह्मण्यस्तत्र स्थितः, न च बहुवचनबलात्तस्य सदसि स्थितिराक्षेप्तुं शक्यते, तेष्वेव स्तोत्रकारिषु तदुपपत्तेः। अतो यत्केनचिदनयादुक्तमपसुब्रह्मण्यवादिनोऽप्यन्याय्यवादिन इति, तदेवापन्याय्यम् अपनीतञ्चेति कृत्वा प्राज्ञैरुन्मत्तभाषितवदुपेक्षितव्यम् ॥

**इति उद्गातृचमसभक्षणाधिकरणम् ॥ ७ ॥**

**८**

ग्राव० इदमपरं भक्षस्य कारणम्—'यथा चमसमन्यांश्चमसांश्चमसिनो भक्षयन्तो'त्युक्त्वा 'अथैतस्य हारियोजनस्य सर्व एव लिप्सन्त' इत्यभिधानाद्भक्षणमेव लिप्सतिना विधीयते। तेनैतद्वचनं हारियोजने भक्षस्य कारणमिति स्थिते चिन्त्यते—किं चमसिनामेवात्र भक्षणम्? उत सर्वेषामृत्विजामिति। यदि चमसिनाम्, तदा ग्रावस्तुतः कारणान्तराभावादभक्षणम्, सर्वविषयत्वे तु तस्यापि भक्ष इति। **तत्र—**

**सन्निधेः सर्वशब्दोऽयं चमसिष्वेव वर्तते।**
**तेन तेषामयं भक्षो ग्रावस्तुन्नैव भक्षयेत् ॥**

---

वार्त्तिकमतेनैतद्दूषयति-नैवमिति। एकस्तोत्रेति। तथा चोद्गातृपदेनापूर्वसाधनीभूतस्तोत्रकारिणो लक्ष्या इति भावः। नन्वपूर्वसाधनसामवैदिकाङ्गानुष्ठातार एव लक्ष्या इति न सुब्रह्मण्यव्यावृत्तिरत आह—सदसि चेति। एकस्थानगतत्वेन शीघ्रोपस्थितिकैस्त्रिभिरेव बहुवचनार्थसिद्धेस्तल्लक्षणैवोचितेति भावः। युक्त्यन्तरमप्याह—भक्षेति। व्यापृतिः करिष्यमाणस्तोत्राद्यमः। सुब्रह्मण्यस्तु निवृत्तस्वकार्य इत्यर्थः। अयमाशयः—कर्तृनियमांशेन कर्तॄणां भाव्युपयोगानामेव सामर्थ्योपयोगितया संस्कारौचित्यात् युक्तो भक्ष इति। प्रैषदृष्टार्थत्वबलेनाप्येवमित्याह—किञ्चेति। केनचित् गुरुमतानुसारिणा। सत्रे एक उद्गातैव भक्षयेदिति शेषः। शेषं स्पष्टम् ॥

इति उद्गातृचमसभक्षणाधिकरणम् ॥ ७ ॥

८

ग्रावस्तुतः० वक्ष्यमाणोपोद्घातत्वेन वाचनिकं भक्षमुपपादयति—इदमिति। यथेत्यादिरर्थवादः अन्यचमसेषु तत्तच्चमसिनामेव लक्ष्यत इति भावः। इदमुपलक्षणम्। लिप्सामात्रविधावदृष्टार्थत्वापत्तिरपि ज्ञेया। ग्राव्णां सोमकण्डनसाधनं स्तौतीति ग्रावस्तुत् ऋत्विग्विशेषः।

**उच्यते सर्वशब्दोऽयं कृत्स्नार्थवचनो यतः।**
**तेन सर्वेषु वर्तेत न सङ्कोचोऽस्य युज्यते ॥**

सर्वशब्दोऽयं समस्तवचनोऽपि परमसर्वेण व्यवहारायोगात्केनचिदवच्छेदं सहते। स चावश्यं प्रकृतयागगतत्वेनावच्छेत्तव्यः। चमसिनामपि प्रकृतगामिनामेव ग्रहणात्तेन चेद्विशेषितस्तन्मात्रादेव सिद्धेः, न भूयश्चमसिशब्देन यथाचमससम्बन्धकृतार्थेन श्रुतेः सङ्कोचो युज्यते। तस्माद्ग्रावस्तुतोऽपि भक्षः॥

**इति ग्रावस्तुतोऽपि सोमभक्षणाधिकरणम् ॥ ८ ॥**

**९**

**वषट्०** इदमपरं कारणं वषट्कारो नाम। 'वषट्कर्तुः प्रथमभक्षः' इति वचनम्। समाख्याप्राप्तभक्षानुवादेन प्राथम्यमात्रं विधीयते, न भक्षणमिति चेत्—न, वषट्कर्तृविशिष्टभक्षानुवादेन प्राथम्यविधौ विशिष्टानुवाददोषात्। किञ्च 'प्रथमभक्षः' इति समस्तमिदमेकं पदम्। तस्यैकप्रसरत्वान्नैकांशेन भक्षणमुद्दिश्य अपरेण प्राथम्यं विधीयत इति वचनव्यक्तिद्वयं सम्भवति। तस्माद्वषट्कर्तुर्भक्षणं प्राथम्यविशिष्टं विधीयत इति वषट्कारोऽपि निमित्तम् ॥

**इति वषट्करणस्य भक्षनिमित्तताधिकरणम् ॥ ९ ॥**

---

सर्वेषु प्रकृतयागर्त्विक्षु। केनचिदिति। तावतैवान्वयानुपपत्तिपरिहारादिति भावः। ननु संकोचावश्यकत्वे वाक्योपस्थितेन चमसित्वेनैव सोऽस्त्वित्यत आह—स चेति। अवच्छेत्तव्यः संकोचनीयः। अन्यथा यागान्तरगतानामपि ग्रहणापत्तेरित्यर्थः। एवमपि चमसिशब्दस्यानन्यार्थत्वे तेनापि संकोच्येत, न त्वेवमित्याह—यथेति। यथा चमसशब्दान्वयोपयुक्तेनेत्यर्थः।

इति ग्रावस्तुतोऽपि सोमभक्षणाधिकरणम् ॥ ८ ॥

९

वषट्कराच्च० इदमिति। वषट्कारादिति सूत्रोक्तमित्यर्थः। समाख्येति। होमाभिषवनिमित्तकस्य भक्षस्याध्वर्य्वादिकर्तृकत्वेन वषट्कर्तृकर्तृकत्वाभावात्। वषट्कर्तृकर्तृकश्च भक्षो होतुः होतृचमससमाख्ययैव लभ्यत इत्याशयः। ननु वषट्कारे निमित्ते भक्षोद्देशेन प्राथम्यविधिरस्तु। न च वाक्यभेदः निमित्ताङ्गिनोर्विजातीयत्वेन 'यदि रथन्तरसामा' इत्यादिवत्तदप्रसक्तेरत आह—प्रथमेति। समस्तमित्यनेन विधेयस्य प्राथम्यस्य निमित्तरूपवषट्कारसापेक्षत्वे सामर्थ्यविघाताद् भक्षपदेन समासानुपपत्तिरिति सूचितम्। एवं पदमित्यनेन 'परिपूर्णं पदं पदान्तरेणान्वेति' इति न्यायाद्वषट्कर्तुर्यो भक्ष इति प्राथम्येनान्वयात्प्राक् भक्षस्य वषट्कर्त्रन्वयानुपपत्तिरिति सूचितम्। वचनव्यक्तिद्वयमिति। वषट्कर्तुर्यो भक्ष इत्येका यत्तदयुक्ता स प्रथममित्यपरा तच्छब्दयुक्तेत्यर्थः। यदाहुः 'यत्पदयोगः प्राथम्यमित्युद्देश्यलक्षणम्' इति। पूर्वपक्षे चमसेष्वेव वषट्कर्तुर्भक्षः, सिद्धान्ते ग्रहेष्वपीति प्रयोजनम्।

इति वषट्करणस्य भक्षनिमित्तताधिकरणम् ॥ ९ ॥

१०

**होमा०** अपरमपि कारणं होमाभिषवौ। एवं ह्याह 'हविर्धाने ग्रावभिरभिषुत्य आहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षान् भक्षयन्तो'ति। अत्र हि हविर्धानेऽभिषवः। स च ग्रावभिः प्राग्भावी च होमात्, होमश्चाहवनीये, ततश्च प्रत्यग्गमनमिति सर्वमिदं वचनान्तरादर्थाच्च प्राप्तं, न विधेयम्, भक्षणमेवाभिषवहोमसमानकर्तृकं विधीयत इति तयोरपि कारणत्वम्॥

**इति होमाभिषवयोः भक्षनिमित्तताधिकरणम्॥ १०॥**

११

**प्रत्यक्षोप०** इदानीं पूर्वाधिकरणोक्तानां भक्षकारणानां समवाये किं बाधः? अथ समुच्चयः? इति। चमसेषु हि चमसिनां समाख्यया भक्षणम्। वषट्कर्तुर्वषट्कारेण, होमाभिषवाभ्यामध्वर्योः प्राप्यते, तत्र समाख्यायाश्चमसैकविषयत्वात्, वषट्कारादेर्ग्रहेष्वपि सावकाशत्वात्प्रतिपत्तेश्चैकेनैव भक्षणेन सिद्धेः चमसिनामेव चमसेषु भक्ष इति पूर्वपक्षः।

वाचनिकयोर्वषट्कारहोमाभिषवयोः समाख्यया बाधायोगात्, तस्याश्च निरवकाशत्वेन ताभ्यां बाधासम्भवादवयवशश्च सर्वैर्भक्षैः प्रतिपत्तिसम्भवे, अन्यतरस्यापि बाधो न युक्त इति समुच्चय एवेति सिद्धान्तः॥

**इत्येकादशं वषट्कर्त्रादीनां सोमभक्षणसमुच्चयाधिकरणम्॥ ११॥**

---

१०

होम० वचनान्तरादिति। हविर्धानाधिकरणत्व ग्रावकरणत्वाभिषवाहवनीयहोमा वचनान्तरप्राप्ताः। अभिषवे होमपूर्वत्वम् होमे च भक्षपूर्वत्वम् सदसि प्रत्यङ्मुखगमनमित्येतदर्थं सिद्धमित्यर्थः। भक्षणमेवेति। प्राप्तभक्ष एतद्गुणद्वयविधौ वाक्यभेदादिति भावः। भक्षयेदित्यनुषङ्गेण सूत्रार्थः॥

इति दशमं होमाभिषवयोः भक्षनिमित्तताधिकरणम्॥ १०॥

११

प्रत्यक्षोपदेशात्० प्रसङ्गसङ्गतिं सूचयन्विषयमाह— इदानीमिति। समवायोऽनेकपुरुषाणामेकपात्रे बहूनां भक्षहेतूनां मिलनम् एकपुरुषस्यैव वा। तत्राद्यं तावद्दर्शयति—चमसेषु हीति। ब्राह्मादिचमसेष्वित्यर्थः। चमसिनो ब्रह्मादयः। वषट्कर्तुः होतुः। एवमेकस्यैव होतुः स्वचमसे समाख्यया वषट्कारेण च भक्षप्राप्तिरपि द्रष्टव्या। वषट्कारादेरित्यादिपदेन होमाभिषवपरिग्रहः। अवयवश इति। 'अल्पं भक्षयेत्' इति विधानादिति भावः। चमसानां भक्षणसमाख्यारूपप्रत्यक्षोपदेशाच्चमसिनामेव। अव्यक्तः सामान्यरूपो वषट्कर्तृभक्षस्तु शेषे चमसातिरिक्ते ग्रहादाविति सूत्रार्थः॥

इति वषट्कर्त्रादीनां सोमभक्षणसमुच्चयाधिकरणम्॥ ११॥

## १२

एक० सिद्धेऽनेकेषां भक्षणे, क्रमश्चिन्त्यते—किमध्वर्युः पूर्वं भक्षयेत्? उत वषट्कर्तेति। तत्राध्वर्युहस्ते पात्रस्यावस्थानात्स तावद्भक्षयेत्। ततो वषट्कर्ता चमसिनश्च पश्चात्। 'वषट्कर्तुः प्रथमभक्षः' इति भक्षपरम्, न प्राथम्यमपि विधत्ते, वाक्यभेदात्। अथवाध्वर्योः प्राथम्यस्य न्यायतः स्थितत्वान्न तद्बाधनं युक्तम्, वषट्कर्तुश्चमसिनां चानवगतः क्रम आकांक्षित इति तद्विषयमिदं वचनं वषट्कर्तुश्चमसिभ्यः प्रथमं भक्ष इति नाध्वर्य्वपेक्षिततया। तस्मादध्वर्योः प्रथमभक्ष इति प्राप्ते—

**ब्रूमः—वचनस्याविशेषेण** प्रवृत्तेर्न्यायमात्रेण सङ्कोचायोगाद्विशिष्टविधानाच्च वाक्यभेदाभावात्। 'होतेव नः प्रथमं पाही' ति मन्त्रवर्णात्कारणभूतस्य वषट्कारस्य च प्राथम्यात्तन्निमित्तं भक्षणं प्रथमं कर्तव्यम्।

ये तु वचनाभावेऽपि कारणप्राथम्यादेव वषट्कर्तुः प्रथमं भक्षणम् भवतीति प्रतिपादयितुमिदमधिकरणम्। वचनोपन्यासस्तु क्त्वाचिन्तोद्घटनार्थमित्याहुः। तेषां स्वव्यवहारविरोधः—तार्तीयः क्रमोऽभिधेयः, विधेयश्चेति विस्रब्धं व्यवहरन्ति। अत एवासौ तृतीये चिन्त्यत इत्याहुः। अत्रैवाधिकरणे क्त्वाचिन्ता। 'वषट्काराच्च भक्षयेदि'त्यत्र वषट्कारो भक्षणनिमित्तमित्युक्तम् न क्रमः। स त्विहैव चिन्त्यते। स

---

## १२

एकपात्रे० उपजीवकत्वसङ्गतिसूचनायाह—सिद्ध इति। अध्वर्युहस्त इति। तस्य होमकर्तृकत्वादिति भावः। एवञ्चार्पणप्रत्यर्पणकल्पनागौरवपरिजिहीर्षया न्यायेनैव तद्भक्षणप्राथम्यसिद्धिरित्यर्थः। वाक्यभेदात् गौरवलक्षणात्। प्रथमपदानर्थक्यादाह—अथवेति। यथा परप्रेषणार्थनिगदेषूच्चैस्त्वसाधकन्यायविरोधात्तदतिरिक्तयजुष्षु पाक्षिकप्राप्तोपांशुत्वनियममात्रविधिलाघवाच्चोपांशु यजुषा इति विधिस्तथेहापीति भावः। वचनस्येति। नियामकन्यायप्रवृत्तेः पूर्वमेव शीघ्रप्रवृत्तवचनेन नियमविधिसम्भवादिति भावः। न्यायमात्रेणेत्यनेनोपांशुत्वविधेर्न न्यायमात्रेण यजुःपदसङ्कोचः, किन्तु बलवत्प्रैषलिङ्गेन वाक्यबाधादिति सूचितम्। 'होतेव नोऽस्माकं सोमं प्रथमं पाहि पिब' इतीन्द्रस्तुतिमन्त्रे सिद्धवद्धोतुः प्रथमं पानोक्तिरपि लिङ्गमित्यभ्युच्चयहेतुः। कारणेति च 'कारणानुपूर्व्याच्च' इत्यन्तिमसूत्रोक्तहेतुरुक्तः। ये त्विति। गुरुमतानुसारिण इत्यर्थः। क्त्वेति। वचनं नास्तीति क्त्वाचिन्तया न्यायेन प्राथम्यसाधनमित्यर्थः। न्यायप्राप्त प्राथम्यमनूद्य भक्षमात्रं 'प्रथमभक्षः' इत्यनेन विधीयते। 'वचनाच्चे' त्ययन्त्वभ्युच्चयहेतुरित्यपि तदीयग्रन्थेषूक्तम्। स्वव्यवहारेति। स्वग्रन्थेत्यर्थः। तार्तीयः तृतीयाध्यायप्रतिपाद्यः असाविति निर्दिष्टश्च प्रथमभक्ष इति क्रम एवेत्याह—अत्रैवेति। सोऽपि न्यायहेतुकचिन्ताविषयोऽपि।

चेद्वचनमनादृत्य न्यायादेव चिन्त्यते, सोऽप्यनभिधेयः पाञ्चमिकवदविधेयश्च स्यादिति सिद्धान्तहानिः, पञ्चमे वाऽसौ चिन्त्यः स्यात्। प्रसङ्गादिह चिन्त्यते युष्माकमिवेति चेत् ? तर्हि तथैव ब्रूहि। विधेयत्वादसौ तृतीये चिन्त्यत इति, पाञ्चमिकाद्विशेषाभिधानं प्रलापः। किंच 'यदि वचनादि'ति सूत्रं कृत्वाचिन्तोद्धाटनार्थम्, तर्हि तदधिकरणं समाप्य कर्तव्यम्। 'इदं तु कारणानुपूर्व्यादि'ति सूत्रात्प्रागेव कृतमिति, न कृत्वा चिन्तोद्घाटनं युज्यते।

यदि च न्यायादेव प्राथम्यं लभ्यते, ततो वचनमेवेदं। न्यायानुवादमात्रंस्यात्। तत्र 'वचनादि'ति सूत्रानुपपत्तिः। न च शक्यमिदं न्यायाल्लब्धुम्। यदा वषट्कारः कृतः, तदा भक्षणं कर्तव्यम्। न च तदा भक्षणं क्रियते, अहुतस्य भक्षणासंभवात्। होमे तु कृते तन्निमित्तकमिदमपि भक्षणमुपस्थितमेवेति न विशेषः, प्रत्युत वषट्कारनिमित्तमुपस्थापनं भ्रष्टम्, होमनिमित्तं त्वभ्रष्टमिति, तदेव प्रथमं कृत्वा पश्चादन्यत्कर्तव्यम्। वक्ष्यति हि सहालम्भे सवनीयमुपाकृत्य पश्चादग्नीषोमीयोपाकरणमिति। तस्माद्वचनादेव प्राथम्यं वषट्कर्तुः। अभ्युच्चयमात्रं तु कारणानुपूर्व्यम्।'

इति होतुः प्रथमभक्षणाधिकरणम् ॥ १२ ॥

१३

**वचनादनु०** 'नानुपहूतेन सोमः पातव्यः' इत्यत्रोपहूतशब्देनानुज्ञानमुच्यत इति

---

अनभिधेय इति। आर्थपाठप्रमाणकपाञ्चमिकक्रमवच्छब्दाप्रतिपाद्यः। अविधेयश्च चिन्ताविषयस्स्यादिति योजना। न्यायस्यानभिधायकत्वादविधायकत्वाच्चेति भावः। प्रथमशब्दाभिधेयत्वेऽपि तदभिधेयत्वेन चिन्ताविषयत्वाभावात्। किञ्चेति कृत्वाचिन्तोद्धारणस्याधिकरणान्त एव सर्वत्र दर्शनात्तथैवौचित्याच्चेति भावः। असम्भवदर्थकञ्च सूत्रं स्यादित्याह—यदि चेति। न्यायशैथिल्यमपीत्याह—न चेति। उक्तार्थे वक्ष्यमाणन्यायं प्रमाणयति—वक्ष्यति हीति। 'सह पशूनालभते' इति श्येने विहितं पशूनां साहित्यं प्रधानसन्निकर्षात्सुत्याकाले क्रियते। तत्राश्विनग्रहणेन सवनीयोपाकरणमुपस्थाप्यते 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति' इति तदनन्तरं विधानात्। अग्नीषोमीयोपाकरणोत्थापकन्त्वग्नीषोमप्रणयनम्, तदनन्तरं तद्विधानात् तच्च साहित्यविधानाद् भ्रष्टमिति सवनीयोत्तरमेवाग्नीषोमीय इति 'स्थानाच्चोत्पत्तिसंयोगात्' इति पाञ्चमिकाधिकरणे वक्ष्यतीत्यर्थः। स्वमतमुपसंहरति—तस्मादिति। सूत्रप्रयोजने स्पष्टे ॥

इति होतुः प्रथमभक्षणाधिकरणम् ॥ १२ ॥

१३

**वचनात्०** अनुपहूतेन अननुज्ञातेनेत्यर्थः ॥

इति भक्षस्यानुज्ञापूर्वकत्वाधिकरणम् ॥ १३ ॥

दर्शयितुमुत्तरचिन्तार्थं चैतत्सूत्रम्, 'तदुपहूत उपह्वयस्वे' त्यनेनानुज्ञापयेल्लिङ्गात्। अनुज्ञाप्य भक्षयितव्यं वचनादिति स्थितम्। तल्लौकिकेन शब्देन, मन्त्रेण वेति। 'उपहूत उपह्वयस्वे'ति लिङ्गवन्मन्त्राम्नानात्तेनैव कर्तव्यमिति, इदमपि प्राप्तिसूत्रमेव ॥

इति भक्षस्यानुज्ञापूर्वकत्वाधिकरणम् ॥ १३ ॥

१४

**तत्र०** 'उपहूत उपह्वयस्वे'ति मन्त्रः। स किं समस्त एवानुज्ञानानुज्ञापनयोः अन्यतरत्र प्रयोक्तव्यः इतरत्र लौकिकः शब्दः? उत उभयत्रापि समस्तः? किं वा विभज्य यथायथमिति। तत्रानुज्ञापनपूर्वकत्वादनुज्ञाया मन्त्रांशयोश्च तद्विपरीतत्वान्न विभज्य विनियोगः। तस्मात्समस्तोऽयमन्यतरत्र, उभयत्र वेति प्राप्ते, ब्रूमः—लिङ्गेन वाक्यं बाधित्वा विभाग एव मन्त्रयोः। तत्रापि पाठक्रममर्थक्रमेण बाधित्वा पश्चात्पठितोऽप्युपह्वयस्वेति पूर्वभाविन्यनुज्ञापने प्रयोज्यः। पूर्वपठितोऽप्युपहूतशब्दः पश्चात्तन्यामनुज्ञायाम् ॥

इति चतुर्दशं वैदिकवाक्येन प्रतिवचनाधिकरणम् ॥ १४ ॥

१५

**तदे०** तदुपह्वानं किं सर्वेषां पुरुषाणाम्, उतैकपात्राणामेवेति। अविशेषात् सर्वेषामिति प्राप्ते—

**ब्रूमः**—दृष्टार्थमनुज्ञापनं व्यलीकं भागाधिक्यं च मर्षयितुम्। तच्चैकपात्राणामेवेति तेषामेवानुज्ञापनम् ॥

इति एकपात्राणामनुज्ञापनाधिकरणम् ॥ १५ ॥

---

१४

तत्रः० अनुज्ञातेन पातव्य इति हि वचनार्थः। अनुशब्दोक्तं त्वानन्तर्यमपेक्षावशेन 'उपह्वयस्व'इति मन्त्रार्थाच्चानुज्ञापनं निरूपितमिति तदपि वचनार्थ एवेत्याशयः। अन्यतरत्रेति। अनुज्ञापनपूर्वकानुज्ञान एव प्राधान्यान्मन्त्रोऽङ्गम्, अथवा अनुज्ञाफलकानुज्ञापन एव। कारणानुष्ठाने सत्यर्थात्कार्यसम्पत्तेरित्यर्थः। यद्वा—विनिगमकाभावादुभयोरप्यावृत्त्या समस्तमन्त्रोऽङ्गमित्याह—उभयत्रेति। अर्थक्रमेणेति। अनुज्ञापनपूर्वकत्वादनुज्ञानस्येत्यर्थः ॥

इति वैदिकवाक्येन प्रतिवचनाधिकरणम् ॥ १४ ॥

१५

तदेकपात्राणाम्० व्यलीकं प्रथमपानप्रयुक्तमपराधम्। भागाधिक्यमिति। कदाचिदवर्जनीयतया प्रसक्तमित्यर्थः ॥

इति पञ्चदशं पञ्चदशमेकपात्राणामनुज्ञापनाधिकरणम् ॥ १५ ॥

१६

**याज्या०** होतृप्रवचनाम्नाता याज्याः समाख्यया होतुः प्राप्ताः, तत्र काचिद्धोतुरपनीय यजमानस्य विधीयते। तस्यामपनीयमानायां किं वषट्कारभक्षावपनीयेते ? उत होतर्येवावतिष्ठते याज्यामात्रन्त्वपनीयत इति संशयः। तत्र—

**यजमानस्य याज्येति याज्यापनयचोदना।**
**वषट्कारस्तु याज्यातो भिन्नत्वान्नापनीयते॥**

'याज्याया अधि वषट्करोती'ति याज्यातो वषट्कारस्य भिन्नत्वान्न तदपनयनेऽपनयः। यदपि 'स्वयं वा निषद्य यजती'ति यष्टृत्वं यजमानस्योक्तम्, तदपि याज्यामात्रप्रयोगादेवोपपन्नम्। अतस्तेन प्रयुक्तायाः याज्याया अधि होतैव वषट्कुर्यात्, तन्निमित्तश्च भक्षस्तस्यैवेति प्राप्ते, ब्रूमः—

**यष्टृत्वं यजमानस्य प्रत्यक्षवचनाच्छ्रुतम्।**
**परिपूर्णं च यष्टृत्वं वषट्कारेण जायते॥**
**याज्यामात्रप्रयोगे तु न्यूनं तच्च न युज्यते।**
**अनवानञ्च यष्टव्यं याज्यामात्रं ब्रुवन्नसौ॥**
**अवान्याद्यजमानोऽतो वषट्कुर्यात्स एव नः।**
**भक्षोऽपि यजमानस्य वषट्कारनिमित्तकः॥**
**इति स्वयं यष्टुर्भक्षणास्तित्वाधिकरणम्॥ १६॥**

---

१६

याज्या होत्रिति। ऋग्वेद इत्यर्थः। तत्र ज्योतिष्टोमगतक्रतुग्रहयाज्यासु मध्ये। काचित् अन्तिमा होतुरिति पञ्चमी। विधीयत इति। 'यजमानस्य याज्या' इति वचनेनेत्यर्थः। ननु 'स्वयं वा निषद्य यजति' इत्यनेन साक्षाद्यागकर्तृत्वस्य यजमानातिरिक्तेऽसम्भवेन यजमानस्य नित्यप्राप्तस्य विधानायोगात् यागप्रकाशकत्वं याज्यापाठद्वारकं विधीयते। वषट्कारं विना केवलयाज्याया यागप्रकाशकत्वाच्च वषट्कारस्याप्यनन्यरस्यादत आह—यदपीति। अयं भावः—'यजमानस्य याज्या' इत्येकः पक्षः, 'सोऽभिप्रेष्यति होतरेतद्यज' इति होतुरेव याज्यापाठार्थं यजमानस्य प्रैष इत्यपरः। तत्राद्यपक्षे याज्यापाठाद्यागकर्तृत्वं प्राप्तं 'स्वयं वा' इत्यनेनानूद्यते स्तुत्यर्थम्। होतुश्च निषण्णस्यैव याज्यापाठात्तत्स्थानापत्तिप्राप्तानुवाद एव 'निषद्य' इत्यपीति। प्रत्यक्षवचनादिति। 'स्वयं वे' ति वाक्यमेवाख्यातश्रवणाद्विधायकम्। एवञ्च याज्यान्तेन वषट्कारेण मुख्ययागकर्तृत्वस्य स्वयमित्यनेन विधानम्। 'यजमानस्य याज्या' इति तु प्रैषविधेरर्थवादः। याज्यैवोचितेति प्रैषद्वारापि तत्कर्तृत्वं यजमानस्य सम्पाद्यमिति। यागप्रकाशने चैकश्वासता 'अनवानं यजति' इति विहिता पूर्वपक्षे बाध्येतेत्याह—अनवा

१७

फल० 'यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं बिभक्षयिषेत्, न्यग्रोधस्तिभिनीराहृत्य ताः संपिष्य दधिन्युन्मृज्य तमस्मै भक्षं प्रयच्छेत् न सोममि'ति-राजन्यवैश्यनिमित्तेन सोमविकारः फलचमसः श्रुतः। स किं भक्षमात्रे सोमम् विकुर्यात्? उतेज्यायामिति संशयः। तत्र 'बिभक्षयिषेदित्युपक्रमात् 'भक्षं प्रयच्छेदि'ति चोपसंहारात्तत्रैव विकारः नेज्यायाम्, अश्रवणात्। एवं प्राप्ते ब्रूमः—

**यागार्थद्रव्यसंस्काररूपभक्षणसङ्गतेः ।**
**स्तिभिनीचमसो यागे द्रव्यमित्यवधार्यते ॥**

'यदि सोमं बिभक्षयिषेदि'ति सोमभक्षमनुसंकीर्त्य तत्र फलचमसो निक्षिप्यते, प्रकरणाच्च सोमभक्षो न भक्षान्तरम्। स च यागद्रव्यसंस्कारत्वेन निर्ज्ञातः तत्सम्बन्धित्वेन च श्रूयमाणः फलचमसोऽन्यथा तत्सम्बन्धायोगाद्यजमानचमसयागाभ्याससाधनत्वं प्रतिपद्यते। तदेवं भक्षसम्बन्धकथनव्याजेन तद्द्वारावगतयागसम्बन्धित्वेन विधीयते। तद्विधौ च भक्षसम्बन्धः प्राप्त एवानूद्यते। तस्मादिज्याविकारत्वम्। एतेनाऽभिषवयुक्तपूतीकानां यागसाधनत्वं व्याख्यातम् ॥१७॥

**इति फलचमसाधिकरणम्।**

---

नञ्चेतिं। अवान्यात् श्वासविच्छेदं कुर्यात्। यथा ऋतुयाज्यार्थं वरणमदृष्टार्थं याज्यापनयनेऽपि नापनीयते, तथा वषट्कारनिमित्तो भक्ष इति सूत्रार्थः।

इति स्वयं यष्टुर्भक्षास्तित्वाधिकरणम् ॥ १६ ॥

१७

फल, चमसः भक्षप्रसङ्गात्सङ्गतिः। यदीति। याजयेदिति यागानुवादपरम्। यदिशब्दो राजन्यवैश्यकर्तृकत्वस्य निमित्तत्वबोधकः। तत्र न्यग्रोधाङ्कुराः फलानि वा विधीयन्ते। स यदीति त्वसन्दिग्धेऽपि वचनम्, यदि वेदाः प्रमाणमित्यादिवदिति। विकुर्यात् बाधेत। इज्यायां इज्यायामपि। तत्सम्बन्धित्वेनेति। यागीयद्रव्यसंस्काररूपभक्षसम्बन्धित्वेन श्रूयमाणः फलचमसो यजमानचमसयागाभ्याससाधनत्वं प्रतिपद्यते। अन्यथा यागासाधनत्वे यागीयद्रव्यसंस्कारसम्बन्धायोगादित्यर्थः। अत्रायं निर्गलितार्थः—पेषणदधिमिश्रणपूर्वकयजमानकर्तृकभक्षावच्छिन्नं भावनान्तरं फलचमससंस्कारत्वेन विधीयते। तदन्यथानुपपत्त्या च फलचमसस्य कल्पितवाक्येन यजमानचमससाध्ययागार्थता बोध्यते। तावतैवोपपत्तौ सर्वत्र सोमबाधायोगादिति। ननु भक्षस्य विधानमनर्थकम् प्राप्तत्वात्तस्येत्याशङ्क्याह—तदेवमिति। प्राप्तस्यापि भक्षस्य पेषणाद्यनेकगुणविध्यर्थं शीघ्रप्रवृत्त्या विधिर्व्याजमात्रम्, फलचमसस्य यागसाधनत्वसिध्यर्थं वेति भावः। अत एवाह—तद्विधौ चेति! उक्तविशिष्टविध्यनुपपत्त्या ह्यप्राप्तपेषणादिविशेषणविधिरेव कल्प्यते नतु भक्षणस्य, तस्य प्राप्तत्वेनानुवादोपपत्तेरिति भावः। अथवा—तद्विधावित्यस्य फलचमसस्य भक्षसम्बन्धे वाक्यस्य न तात्पर्यम्, किन्तु यागसम्बन्ध एवेति तात्पर्यम्। अभिष-

१८

अनु० राजसूये-दशपेयः सोमविकारः यत्र राज्ञोऽधिकारः। ज्योतिष्टोमाच्च तत्र दश चमसाः प्राप्ताः। तेषु यजमानचमसस्य राज्ञो भक्षणं प्राप्तम्। तत्रेदं श्रूयते 'दश दशैकैकं चमसमनुप्रसर्पेयुः, शतं ब्राह्मणाः सोमान्भक्षयन्ती'ति। तत्र संशयः किं यजमानचमसं राजन्या दश भक्षयेयुः? उत ब्राह्मणा इति। तदर्थं च किं दश दशेति विधिः, 'शतं ब्राह्मणाः' इत्यनुवादः? उतायमपि विधिरिति। तत्रानुप्रसर्पेयुरिति विधिश्रवणात्प्रतिचमसं दशसंख्या विधीयते। तथा च संख्यामात्रं प्राकृतं निवर्तते, जातिस्तु प्राकृतैवाऽवतिष्ठते। तत्राऽरुणैकहायनीन्यायेन जातिसंख्ययोर्मिथो नियमे सति ब्राह्मणचमसेषु ब्राह्मणा दश, राजन्यचमसेषु राजन्या दश भवन्तीति। 'शतं ब्राह्मणाः भक्षयन्ती'ति वर्तमानापदेशात् प्रचयशिष्टशतसंख्यानुवादः, भूम्ना च ब्राह्मणा-ब्राह्मणेषु ब्राह्मणशब्दः। अनुवादत्वाच्च लक्षणाऽपि न दुष्यति। तस्माद्यजमानचमसे राजानो दश भक्षयेयुरिति।

उच्यते विधिरेवायमर्थवत्त्वाच्छ्रुतेस्तथा।
अन्यथा वचनं व्यर्थं लक्षणा च प्रसज्यते॥
न हि कृत्स्नानुवादस्य किंचिदस्ति प्रयोजनम्।
सम्भवन्त्यां श्रुतौ नैव लक्षणाऽप्युपपद्यते॥
तस्माच्छ्रुतानुवादेन ब्राह्मण्यमिह चोद्यते।
तत्र च न्यायतः प्राप्ता राजजातिर्निवर्तते॥

---

वेति। 'यदि सोमं न विन्देत पूतीकानभिषुणुयात्' इत्यत्रेत्यर्थः। पूतीकाः सोमसदृशलताविशेषाः। प्रयोजनं पूर्वपक्षे यजमानसाध्यो यागस्सोमेनैव, सिद्धान्ते फलचमसेनैवेति ज्ञेयम्। सूत्रं स्पष्टार्थम्॥

इति फलचमसाधिकरणम्॥ १७॥

१८

अनु० प्राप्ता इति। ज्योतिष्टोमातिदेशादित्यर्थः। राज्ञ इति। तत्र तस्यैव यजमानत्वादिति भावः। तत्रेति। दशकर्तृकप्रत्येकचमसानुप्रसर्पणं चमससमाख्योपस्थितं भक्षार्थत्वेन विधीयत इत्यर्थः। एवं दश दशेति वीप्सानुवादः। चमसानाञ्च दशत्वाच्छतकर्तृप्राप्त्या शतवाक्यमनुवादः। राजन्यचमसे ब्राह्मणाभावात् ब्राह्मणाब्राह्मणसमुदाये भूम्ना ब्राह्मणशब्दोऽनुवादः। सिद्धान्तेऽपि सोमशब्दवत्। शतवाक्यस्य तु विधायकत्वं शतसङ्ख्याब्राह्मणत्वोभयविधाने वाक्यभेदापत्तेरयुक्तमिति भावः। वाक्यभेदशङ्कानिरासायाह—तस्मादिति। सोमान्

स्यात्पञ्चमलकारेण विधेश्च समिदादिवत् ।
ब्राह्मणानामतो भक्षो राजन्यचमसे स्थितः ॥

इति ब्राह्मणानामेव राजन्यचमसानुप्रसर्पणाधिकरणम् । १७ ॥
इति शास्त्रदीपिकायां तृतीयस्याध्यायस्य पञ्चमः पादः ॥५॥

## अथ तृतीयाध्यायस्य षष्ठः पादः

१

**सर्वार्थ०** अनारभ्यविचारप्रस्तावागतं शेषविषयं विचारं समाप्य, इदानीं तमेवानारभ्यवादमनुसन्धत्ते । 'यस्य खादिरः स्रुवो भवति, यस्य पर्णमयी जुहूर्भवति'इत्यनारभ्य जुह्वाद्युद्देशेन विधीयमानाः पर्णतादयो जुह्वादीनां क्रत्वव्यभिचारात्, तद्द्वारेण क्रत्वर्थता इति स्थिते, चिन्त्यते—किं प्रकृतिविकृतिसाधारणविधानम् ? उत प्रकृतेरेवेति । तत्र—

जुह्वादिप्राप्तिमात्रं हि पर्णतादेरपेक्षितम् ।
या चौपदेशिकी प्राप्तिः प्राप्तिर्या चातिदेशिकी ॥
सर्वा सा प्राप्तिरूपेण तुल्या तदनुवादतः ।
विधीयमानं पर्णत्वं सर्वार्थमिति गम्यते ॥

---

भक्षयन्तीत्यनुवाद इति भावः । अनुप्रसर्पिषु सामान्यात् दश दशेति सामान्यश्रवणाद्राजचमसे राजन्या एवेति पूर्वपक्षसूत्रार्थः ।

इति ब्राह्मणानामेव राजन्यचमसानुप्रसर्पणाधिकरणम् ॥ १८ ॥
इति श्रीमत्तत्सद्रामचन्द्रसूरिवरात्मजतत्सद्वैद्यनाथकृतायां
शास्त्रदीपिकाटीकायां प्रभाख्यायां
तृतीयस्य पञ्चमः पादः ॥

## अथ तृतीयाध्यायस्य षष्ठः पादः

१

**सर्वार्थम्०** सङ्गतिं दर्शयति—अनारभ्येति । यत्प्रसक्त्या यदागतं तत्समाप्तौ तद् बुद्धिस्थं भवतीति न्यायात् प्रसङ्ग एव सङ्गतिरिति भावः । समानासमानविधित्वचिन्तनात्पादभेद इत्यवगन्तव्यम् । क्रत्वव्यभिचारादिति । जुहूत्वेनोपयोगः क्रतावेवेति नियमादित्यर्थः । तद्द्वारेण जुह्वादिद्वारेणेत्यर्थः । तुल्येति । तथाच प्रापकप्रमाणयोरुपदेशातिदेशयोः शैघ्र्यमान्द्यस्य वैषम्येऽपि पर्णताविधेरपेक्षिता जुहूप्राप्तिः समैवेत्यर्थः । न चातिदेशस्य सर्वाङ्गविषयस्यैकत्वात्प्रकृतौ पर्णताविध्युत्तरमेवातिदेशनो विकृतौ जुहूप्राप्तिरिति पुनस्तत्र पर्णताविधौ तदावृत्ति-

ननु येनाऽतिदेशेन विकृतौ प्राप्यते जुहूः।
तेनैव पर्णताऽपीति व्यर्थं तदुपदेशनम्॥
मैवं प्रत्यक्षसिद्धत्वात्पर्णत्वं नानुमानतः।
चोदकात्प्राप्यते तस्मात्सर्वार्थाः पर्णतादयः॥
मैवं द्विरुक्तिदोषः स्यात्प्राप्तस्य हि पुनर्विधेः।
पृथक्त्वेन पदार्थानां भवेच्चेच्चोदकस्ततः॥
तद्वच्च युज्यते प्राप्तिः प्रकारस्त्वतिदिश्यते।
पदार्थानां खलु प्राप्तिस्तद्विशेषणभावतः॥
समुच्चिताश्च ते सर्वे प्रकृतौ तद्विशेषणम्।
तेन यावज्जुहूप्राप्तिर्विकृतौ तावतैव च॥
प्राप्तैव पर्णताऽपीति व्यर्थस्तस्य पुनर्विधिः।
अवश्यं च जूहूप्राप्तिः प्रतीक्ष्या पर्णताविधेः॥
तया सहैव पर्णत्वं प्राप्तं न तु विधीयते।
प्रकृतावेव पर्णत्वविधिस्तेन व्यवस्थितः॥

इति पर्णताविधेः प्रकृतिगामिताधिकरणम्॥ १॥

---

प्रसङ्ग इति वाच्यम्। पर्णताया उपदेशादेव लभ्यत्वेन तद्व्यतिरिक्ताङ्गानामेवातिदेशकल्पनादित्यनुपदमेव वक्ष्यमाणत्वात्। कल्प्यत्वे हि वैयर्थ्यदोषः, क्लृप्ते तु तद्भिन्नविषयतैव दुर्बलप्रमाणस्योचितेत्याशयेन परिहरति—मैवमिति। अनुमीयत इत्यनुमानम् तस्मादनुमेयादित्यर्थः। सिद्धान्तमाह—मैवमिति। ननु पर्णतातिरिक्तस्यैवातिदेश इत्युक्तमेवेत्याशङ्क्यां निरस्यति—पृथक्त्वेनेति। तर्हि कथमतिदेशस्तत्राह—प्रकारस्त्विति। येन प्रकारेण प्रकृत्या अपूर्वं कृतं स प्रकारस्सर्वाङ्गोपकारसम्पादनात्मकः, तत्र विशेषणीभूतान्यङ्गानि। तत्र विशिष्टोपकारातिदेशे अर्थात्तद्विशेषणभूतानामतिदेशसिद्धिरित्यर्थः। ननु तत्र पर्णताया मास्तु विशेषणत्वमिति शङ्कां निरस्यति—समुच्चिताश्चेति। प्रकृतिवद्विकृतिरित्यतिदेशात्प्रकृतेश्च सर्वोपकारवैशिष्ट्यावगमात्सर्वेषां विशेषणत्वमावश्यकमित्यर्थः। अत एव बर्हिःकार्येऽतिदेशप्राप्तानामपि कुशानां तत्कार्ये विशेषतो विहितैश्शरैर्बाधः प्राप्तबाध इत्युच्यते, अन्यथाप्राप्तबाधस्स्यादिति। आनुमानिकस्याप्यतिदेशस्योपजीव्यत्वेनाबाध्यतामाह—अवश्यञ्चेति। प्रयोजनं पूर्वपक्षे—विकृतौ पर्णतालोपे यजुर्वेदविहितभ्रेषनिमित्तं प्रायश्चित्तम्। सिद्धान्ते त्वातिदेशिकत्वेन यजुर्वेदविहितत्वाभावान्न तत्, किन्त्वविज्ञातभ्रेषनिमित्तमिति। अप्रकरणात् क्रतुविशेषप्रकरणाभावात् सर्वार्थं पर्णतादीति सूत्रार्थः॥

इति पर्णतादिविधेः प्रकृतिगामिताधिकरणम्॥ १॥

२

प्रक० 'सप्तदश सामिधेनीरनुब्रूयादि'त्यनारभ्य श्रुतं साप्तदश्यं किं प्रकृतौ, ? उत विकृताविति संशयः। तदर्थं च किं प्राकरणिकेन पाञ्चदश्येन तुल्यबलम् ? उत ततो दुर्बलमिति। तत्र द्वयोरपि वाक्यसंयोगाविशेषात्तुल्यबलतां मन्यते, न च प्रकरणेन कश्चिद्विशेषः।

वाक्यात्तद्दुर्बलं यस्मात्तस्मात्प्रकृतिगामिता।
पूर्ववत्साप्तदश्यस्य तथा प्राप्तेऽभिधीयते॥

सामिधेनीस्वरूपेण सम्बन्धो वाक्यतो भवेत्।
तन्मात्रसङ्गते चैते संख्ये स्यातामनर्थिके॥

अपूर्वसाधनत्वांशे लक्षिते सङ्गतिर्भवेत्।
तल्लक्षणावबोधश्च शीघ्रं प्रकरणाद्भवेत्॥

प्रकरणे विधीयमानस्य सर्वस्य प्रकृतावपूर्वसाधनत्वं स्वरसत इति पाञ्चदश्यमपि तत्रैव विधीयमानं तादर्थ्येन विधातव्यमिति गम्यते। तादर्थ्यं च तत्साधनरूपसम्बन्धे घटते, न सामिधेनीस्वरूपसम्बन्ध इति स्वरूपातिक्रमेण साधनरूपलक्षणा तत्र लभ्यते। साप्तदश्यस्य तु रूपमात्रं गम्यते, नापूर्वार्थत्वम्, स्वरूपस्य च सामिधेनीस्वरूपेणापि संबन्धो घटत इति नान्वयोपपत्तये लक्षणा। किं तु विधीयमानस्य साप्तदश्यस्यानर्थक्यपरिहाराय प्रतिपन्नक्रतुसंबन्धसामिधेनीलिङ्गवशादविपरिवर्तमानमेव क्रत्वपूर्वं कथंचित् हृदयमागमय्य तादर्थ्यसिद्ध्यर्थं तत्साधनलक्षणाऽऽश्रयणीयेति, क्रतुसंबन्धविप्रकर्षाद्दौर्बल्यम्। अतः पूर्वनिविष्टपाञ्चदश्यावरुद्धत्वात् तेनैव निराकाङ्क्षां प्रकृतिमलभमानं

---

२

प्रकरणाविशेषात्• द्वयोः साप्तदश्यपाञ्चदश्ययोः। वाक्येति। वाक्यप्रमाणकविनियोगाविशेषादित्यर्थः। तुल्येति। तथा च साप्तदश्यपाञ्चदश्ययोर्विकल्प इति भावः। मन्यत इत्यनेन सूचितं प्राकरणिकप्राबल्यं निराचष्टे—न चेति। तुल्यबलयोर्हि विरोधे सति ततो बलवत्तरेण व्यवस्थोचिता न पुनर्दुर्बलेनेति भावः। पूर्ववदित्यापवादिकी सङ्गतिः सूचिता। सामिधेनीमात्रसम्बन्धे वाक्यद्वयस्याविशेषेऽपि तन्मात्रेणानर्थक्यादपूर्वसम्बन्धावश्यकत्वे प्राकरणिकस्य प्रकरणवशेन शीघ्रं तदवगतिः। अनारभ्याधीतस्य तु विलम्बेनेति वैषम्यान्न प्रकरणमित्याह—सामिधेनीति।। स्वरसतः उभयाकाङ्क्षारूपप्रकरणात् तत्रैव प्रकरण एव। तादर्थ्येन प्रकृतापूर्वार्थत्वेन। तत्साधनरूपेति अपूर्वसाधनत्वरूपेण लक्षितसामिधेनीरूपद्वारसम्बन्धे सतीत्यर्थः। प्रतिपन्नेति। प्रतिपन्नः क्रतुसम्बन्धो यस्य तथाभूतं सामिधेनीरूपं लिङ्गं क्रतुज्ञापकं तद्वशादित्यर्थः। एतदेव कथञ्चिदित्यनेनोक्तम्। तत्रापीति। सामिधेनीलिङ्गोपस्थित-

साप्तदश्यं विकृतिषु निवेक्ष्यते, तत्रापि न सर्वासु, किं तु श्रुतसाप्तदश्यासु मित्रविन्दादिष्वेवेति ॥

इति सामिधेनीनां सप्तदशसंख्याया विकृतिगामिताधिकरणम् ॥ २ ॥

३

नैमित्तिकं० 'सप्तदश वैश्यस्ये' ति यद् वैश्यनिमित्तेन नैमित्तिकं साप्तदश्यं विधीयते, तत् प्रकृतौ वा स्यात्, उत विकृताविति । प्रकृतेः पाञ्चदश्यावरोधात्पूर्ववद्विकृतिषूत्कर्षे द्वयोर्वा प्रकरणाधीतत्वात्क्रत्वर्थत्वाच्च विकल्पे प्राप्ते--

अभिधीयते—नैमित्तिकं प्रकृतावेव नित्यं पाञ्चदश्यं विकृत्य निविशते ।

तुल्यप्रकरणत्वात्तन्नोत्कर्षं तावदृच्छति ।
प्रकृतौ निविशेतातस्तत्रापि न विकल्प्यते ॥
पाञ्चदश्येन किं त्वस्य बाधकत्वेन वर्तते ।
नित्यं सामान्यतः पूर्वं सावकाशं विधीयते ॥
नैमित्तिकं विशेषेण पश्चान्निरवकाशकम् ।
नैमित्तिकमतो हेतुत्रयान्नित्यस्य बाधकम् ।

सामान्येन हि सर्वप्रयोगाणां पाञ्चदश्यम् । तद्यावल्लक्षणया वैश्यकर्तृकं प्रयोगम् नास्कन्दति, तावत्तत्रैव साक्षाद्विधीयमानं साप्तदश्यं बलवद्भवति । तथा पूर्वमेव क्रतोः स्वाभाविकं नित्यं विधीयते, तेन तदसंजातप्रतिपक्षत्वान्न कस्यचिद्बाधकतयावगम्यते,

---

तत्तद्विकृत्यपूर्वसम्बन्धस्य सामिधेनीद्वारसम्बन्धस्य च विधाने गौरवात् । श्रुतसाप्तदश्यासु प्रकरणेनापूर्वसम्बन्धे क्लृप्ते द्वारसम्बन्धमात्रविधानेन लाघवादिति भावः । प्रकरणेन विशेषात् पाञ्चदश्यस्य प्राबल्यात्तद्विरोधिसाप्तदश्यं विकृतौ स्यादिति सूत्रार्थः । प्रयोजनं स्पष्टम् ॥

इति द्वितीयं सामिधेनीनां सप्तदश संख्याया विकृतिगामित्वाधिकरणम् ॥ २ ॥

३

नैमित्तिकन्तु० विकृतावित्यनन्तरं संशय इति शेषः । प्रकृतेरिति । निमित्तसापेक्षत्वे विलम्बितात्साप्तदश्यात्पाञ्चदश्यस्य शीघ्रप्रवृत्तेरिति भावः । पूर्ववदित्यापवादिकी सङ्गतिरुक्ता । विकल्पेनापि प्रकरणनिवेशसम्भवे उत्कर्षानौचित्यात्पक्षान्तरमाह—द्वयोर्वेति । विकृत्य बाधित्वा । पूर्वपक्षदूषणपूर्वकं बाधोपपादनं प्रपञ्चयति—तुल्येत्यादिना । तत् नैमित्तिकं साप्तदश्यम् । तत्रापि प्रकृतावपि । पाञ्चदश्येनेति विकल्प्यत इत्यनेनान्वितम् । बाधोपपादकं सार्धश्लोकं व्याचष्टे—सामान्येन हीति । ननु सामान्यशास्त्राद्विशेषशास्त्रस्य प्राबल्ये शीघ्रप्रवृत्तिकत्वं हेतुः, इह तु सामान्यशास्त्रं शीघ्रप्रवृत्तिकम्, स्वर्गकामसामान्यं प्रति प्रधानविधेः प्रत्यक्षविहितत्वेन तदाकाङ्क्षया विनियोगात् । स्वर्गकामवैश्यं प्रति प्रधानविधेः सामान्याक्षेपगम्यत्वेन तदाकाङ्क्षया विनियोजकस्य विशेषशास्त्रस्य विलम्बितप्रवृत्तिकत्वमिति न बाधकत्वं युक्तमित्याशङ्क्यापच्छेदाधिकरणन्यायेन परत्वाद्बाधमाह-तथेति । स्वाभाविकं निमित्तोपस्थितिनिरपेक्षम् ।

नैमित्तिकन्तु निमित्तसंयोगेन विधीयमानं विशेषणतया पश्चात्तनम् भवति, ततश्च तदुत्पन्नप्रतिपक्षविज्ञानावस्थोत्पत्तिकत्वात् तदबाधेनात्मानं नालं लब्धुम्। लब्धव्यश्च तेनात्मा प्रत्यक्षवचनात्। अतः पूर्वंगुणबाधकतयात्मानम् लभते। सावकाशं च नित्यं विप्रराजकर्तृके प्रयोगे। अतो न तेनावश्यं नैमित्तिकविषये निवेष्टव्यम्, नैमित्तिकमनवकाशं नित्याबाधेन न शक्यते विधातुम्, विधीयते च तदिति बाधकत्वम्।

एतेन काम्यस्यापि गोदोहनादेर्गुणस्य नित्यचमसादिबाधकत्वं व्याख्यातम्। पूर्वपक्षस्तु नैमित्तिकेऽतिमन्द इति कृत्वा भाष्यकारः सूत्रितमपि नैमित्तिकमतिक्रम्य, तुल्यन्यायं काम्यमुदाजहार। काम्यस्य हि क्रत्वर्थत्वाभावात्क्रत्वर्थश्चमसस्ततो भिन्नविषयत्वान्न तेन बाधितुं शक्यते, तद्बाधे क्रतोर्वैगुण्यात्फलं न स्यात्, विगुणक्रत्वाश्रितादपि गुणात् फलं स्यात्। यो हि मधुन्येव दत्तदृष्टिर्दुर्बलां शाखामधिरोहति, तस्य विनिपात एव भवति, तद्वदिहापि।

**मधुदृष्टिवदेवास्य गुणकामं प्रपश्यतः।**
**क्रियाफलविनाशात्मा विनिपातः प्रसज्यते॥**

तस्मान्न प्रकृतौ निवेशः सम्भवतीति विकृतिरेव गतिः।

अथवा क्रतवे चमसेन प्रणीय, पुनः पशुकामाय दोहनेन प्रणेतव्यम्, न तु बाधसम्भवः, क्रतुवैगुण्यादिति भवत्येवाधिकाऽऽशङ्का। तन्निराकरणाय काम्योदाहरणम्। निराकरणहेतवश्च नैमित्तिकवत् त्रयोऽप्यत्रानुसंधेयाः।

---

उत्पन्नेति। उत्पन्नं प्रतिपक्षविज्ञानं यस्यामवस्थायां तदुत्पत्तिकत्वादित्यर्थः। तृतीयं बाधहेतुं विवृणोति—सावकाशञ्चेति। एतेन उक्तहेतुत्रयेण। 'अपः प्रणयति' इत्यस्य सन्निधौ 'गोदोहनेन पशुकामस्य प्रणयेत्' इति दोहनपात्ररूपो गुणः पशुरूपफलार्थतया विधीयते। आदिना 'एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य' इत्येकविंशतिसंख्यारूपगुणसङ्ग्रहः। मन्दताबीजं दर्शयन् काम्ये बिशेषाशङ्कां दर्शयति—काम्यस्य हीति। तथात्र नैमित्तिकसमानविषयत्वेन बाधहेतूनां क्लृप्तत्वात्पूर्वपक्षमन्दतेत्याशयः। ननु गोदोहनस्य प्रणयनं कुर्वत एव फलसाधनत्वात्प्रणयनरूपविषयैक्यमादाय बाधस्स्यादित्याशङ्क्यानिष्टापत्त्या बाधं दूषयति—तद्बाधे चेति। मधुदृष्टिवदिति। मधुनि दृष्टिर्यस्य पुंसस्तस्यैवेति षष्ठीसमर्थाद्वतिः। प्रपश्यतः लिप्सोः। क्रिया च फलञ्च तयोर्विनाश इति विग्रहः। क्रियानाशस्तद्वैगुण्यम्। अत्र मधुस्थानीयं गुणफलम्, दृष्टिस्थानीया तल्लिप्सा, शाखास्थानीय आश्रय, शाखादौर्बल्यस्थानीयमाश्रयवैगुण्यम् विनिपातस्थानीयः क्रियागुणोभयफलालाभ इति ज्ञेयम्। काम्यगुणानां विकृतावप्रवृत्तेरष्टमेऽभिधास्यमानत्वात्तद्विरोधेनोक्तपूर्वपक्षासम्भवमाशङ्क्य पक्षान्तरमाह—अथवेति। अन्यं हेतुमाह—

**आसन्नपुरुषार्थत्वमपरं चापि कारणम्।**
**येन काम्यं बलीयः स्यान्नित्यनैमित्तिकादपि ॥**

पुरुषार्थप्रयुक्ता हि सर्वस्य प्रवृत्तिः, काम्यं च फलं प्रत्यासन्नं शीघ्रं प्रयुज्यते गोदोहनम्। क्रत्वर्थस्तु चमसश्चिरेणेति दुर्बलः। अनेनैव च हेतुना नैमित्तिकादपि क्रत्वर्थात्साप्तदश्यात्पुरुषार्थस्यैकविंशत्याद्यनुवचनस्य बलीयस्त्वं भवति। तस्मात्तेन साप्तदश्यम् पाञ्चदश्यं च द्वयमपि बाध्यते। सत्यपि भिन्नविषयत्वे प्रणयनादिद्वारतुल्यतयाऽस्ति विरोधः। ततश्च क्रत्वर्थस्य तस्मिन्प्रयोगे बाधः। प्रयोगान्तरे त्वसाववस्थाप्यते, सामान्येन हि स श्रुतः, पशुकामप्रणयनप्रयोगे तु वाक्यान्तरगतश्चमसः सन्निधिमात्रेण सम्बध्यते। गोदोहनन्तु तत्रैव वाक्ये श्रुतमिति बलीयः।

**तदुक्तम्--'पशुकामप्रयोगे तु क्रमेण चमसाङ्गता।**
**श्रौताद् गोदोहनात्तत्र चमसस्य निराक्रियेति' ॥**

बाधितत्वादेव न तदानीं चमसादेरङ्गत्वमवघातादेरिव कृष्णलादौ। अतस्तल्लोपेऽपि नास्ति वैगुण्यम्, येन क्रियाफलविनाशः, तद्भयाच्च प्रणयनाभ्यासः स्यात्।

**गुणहानिर्हि वैगुण्यं न चास्य गुणता तदा।**
**गोदोहनञ्च न गुणः क्रतोः कामाय चोदनात् ॥**
**किं तु प्रणयनं द्रव्यहीनमङ्गं क्रतोस्तदा।**
**काम्यनैमित्तिके तस्मात्प्रकृतौ नित्यबाधके ॥**

**इति नैमित्तिकसाप्तदश्यस्य प्रकृतिगामिताधिकरणम् ॥ ३ ॥**

**४**

**इष्टयर्थं०** आधानम्, पवमानेष्टयश्च मिथः सन्निहिताः समाम्नाताः। तत्र

---

आसन्नेति। साक्षात्पुरुषार्थसाधनत्वमित्यर्थः। अस्य हेतोरसाधारणविषयमाह–नैमित्तिकादपीति। प्रयुज्यते विधिनानुष्ठाप्यते। चिरेण क्रतुव्यवधानेन। श्रुतिलिङ्गादिन्यायानां प्राप्तबाधमप्याह—पशुकामेति। अत्रार्थे वार्तिकं दर्शयति—पश्विति। श्रौतादिति। गोदोहनेनेति तृतीयोक्तस्य प्रणयननिरूपितस्य गोदोहनकरणत्वस्य फले विधानाश्रयणात्प्रणयने गोदोहनस्य करणत्वं श्रौतमित्याशयः। द्रव्यहीनमिति। अङ्गभूतद्रव्यहीनमित्यर्थः, न तु साधनभूतद्रव्यहीनम्, फलार्थप्रसक्तगोदोहनसाध्यत्वात्। नैमित्तिकं साप्तदश्यं प्रकृतावेव तस्य पाञ्चदश्यस्य विकारो बाधकम्, निमित्तसंयोगविशेषादिति सूत्रार्थः॥

इति नैमित्तिकसाप्तदश्यस्य प्रकृतिगामित्वाधिकरणम् ॥ ३ ॥

**४**

**इष्टयर्थं०** अग्रिमाधिकरणे स्थित इत्यादिग्रन्थेन सूत्रयिष्यमाणोपोद्धातसङ्गतिः।

किमाधानमिष्टयङ्गम् ? उत नेति। तत्र प्रकरणादङ्गत्वम्। ननु फलवत्सन्निधावफलं तदङ्गम्। न चेष्टयः फलवत्यः, आधानं सफलमग्निनिष्पादकतया। अतो विपरीतमङ्गाङ्गित्वम्। सत्यमेवम् ; स त्वेवं पूर्वपक्षवादी मन्यते-अग्नयोऽतिदेशेनेष्टयङ्गम्, आधानञ्चाग्निसंस्कारकमवगम्यमानं प्रकरणादिष्टयङ्गभूताग्निसंस्कारकतयाऽवघातादिवदिष्टयर्थम्, इष्टीनां तु विश्वजिदादिन्यायेन फलकल्पना भविष्यतीति।

सिद्धान्तस्तु फलवदग्निहोत्राद्यर्थत्वादग्नयः फलवन्तः, तदर्थं चाधानम् श्रुतिसंयोगात्। इष्टयोऽपि प्राकरणिकेन वाक्येन फलवदग्न्यङ्गम्, प्रकरणाद्वा आधानस्यैव फलवतोऽङ्गं विज्ञायमाना न कल्प्यफला भवितुमर्हन्ति, विनैव कल्पनया सर्वेषामर्थवत्त्वात्।

यत्त्वातिदेशिकमग्नीनामिष्टयङ्गत्वम्, तद् औपदेशिकेनेष्टीनामग्न्यङ्गत्वेन आधानाङ्गत्वेन वा विरुध्यमानं बाध्यत इति वक्ष्यते। तस्मान्नेष्टयर्थमाधानम्, अनारभ्यवादप्रस्तावादाधानवाक्यस्यानाराभ्यवादत्वमेवावस्थितम्॥

इत्याधानस्य पवमानेष्टयनङ्गताधिकरणम्॥ ४॥

५

तत्प्रकृ०—स्थितेऽनारभ्यवादत्वे संप्रत्येतद्विचार्यते।
किमाधानं प्रकृत्यर्थमग्निमात्रार्थमेव वा॥
तत्र पर्णमयीन्यायात्प्राप्ता प्रकृतिगामिता।
उच्यते श्रुतिसंयोगादाधानस्याग्निशेषता॥
प्रसिद्धक्रतुशेषत्वं प्र[illegible]तावुपदिश[illegible]ते।

---

अतिदेशेनेति। आहवनीयस्यापि द्विरुक्तिप्रसङ्गेन प्रकृतिमात्रे निवेशादिति भावः। अग्निसंस्कारकतयेति। आहवनीयादेः सतः संस्कारकतयेत्यर्थः। श्रुतीति। 'अग्निमाधत्ते' इति द्वितीयाश्रुतीत्यर्थः। प्राकरणिकेनेति। भाष्यकारवचनात्कल्पितेन 'यदाहवनीये जुहोति' इति वाक्यान्तरेण द्वितीयार्थकसप्तमीकेनेत्यर्थः। वार्तिकमतेनाह—प्रकरणाद्वेति। यत्त्वित्यादि क्त्वाचिन्ताप्रकटनम्। वक्ष्यत इति। 'तासामग्निः' इति सूत्र इत्यर्थः। प्रकरणसङ्गतिमाह—अनारभ्येति। प्रयोजनं पूर्वपक्षे दर्शपूर्णमासादिष्वनाहिताग्नेरप्यधिकारः। सिद्धान्ते त्वाहिताग्नेरेवेति भवदेवोक्तं ज्ञेयम्॥

इत्याधानस्य पवमानेष्टयनङ्गताधिरणम्॥ ४॥

५

तत्प्रकृत्यर्थे० श्रुतीति। द्वितीयारूपेत्यर्थः। पर्णतातो वैषम्यमाह—प्रसिद्धेति।

पर्णत्वमन्यथा दोषो द्विरुक्तिः स्यादितीह तु ॥
न कस्यचित्क्रतोरङ्गमिदं श्रुत्याद्यभावतः ।
वाक्यं लक्षणया स्याच्चेन्नाग्न्यङ्गत्वोपपत्तितः ॥

स्यादेतत्—यथाऽनारभ्याधीतमपि पर्णमयीत्वं जुहूस्वरूपपरत्वे सत्यानर्थक्यात्क्रतुसाधनांशे लक्षणया विधीयमानं वाक्यादेव क्रत्वर्थं भवति, एवमाधानमपीति । मैवम्; जुह्वादयो ह्याकृतिविशेषाः विनापि पर्णमयीत्वेन तदाकारसम्भवात्, तत्स्वरूपार्थत्वे विध्यानर्थक्याद्युक्ता तत्र साधनांशलक्षणा, इह त्वाहवनीयादिस्वरूपस्यादृष्टत्वाच्छ्रुत्यवगततत्स्वरूपार्थत्वेऽपि विध्यानर्थक्याभावान्न साधनांशलक्षणया क्रत्वर्थत्वं युक्तमिति विशेषः । एतेन पवमानेष्टीनामप्यकर्मार्थत्वम् व्याख्यातम् ॥

इत्याधानस्य सर्वार्थताधिकरणम् ॥ ५ ॥

६

तासां० प्रासङ्गिकमिदम् । पवमानेष्टिषु किं पवमानेष्टयः कर्तव्याः ? नेति ।

तत्र प्रकृतितस्तासु पवमानेष्टिसंस्कृतः ।
प्राप्नोत्यग्निस्तदर्थेन कार्यास्तास्विष्टयोऽपि ताः ॥

ननु यास्तदर्थाः, तासामप्यन्याः कार्याः, तासामप्यन्या इत्यनवस्थापत्तिः स्यात् ?

उच्यते नैष दोषोऽस्ति सामर्थ्येन व्यवस्थितेः ।
यावतीः शक्नुयात्कर्तुं तस्मिन्नहनि तावतीः ॥
कुर्वतो नाव्यवस्था स्यादिति प्राप्तेऽभिधीयते ।
न तावदतिदेशेन प्राप्तिस्तासामनङ्गतः ॥
न हि ताः प्रकृतेरङ्गमिति प्रागेव दर्शितम् ।
प्रकृतौ चोदनायां यत्कथंभावेन सङ्गतम् ॥

---

प्रसिद्धं क्रतुशेषत्वं यस्य जुहूद्वारा तादृशम् । पर्णत्वमिति पूर्वार्धान्वयि । वाक्यमिति । अग्निपदस्य क्रत्वपूर्वसाधनत्वलक्षणया वाक्यं क्रत्वङ्गत्वे प्रमाणं स्याच्चेदित्यर्थः । नेति पृथग्भूतम् । एतदेव व्याचष्टे—स्यादेतदिति । साधनांशेति भावप्रधानम् । साधनत्वरूपधर्मेत्यर्थः । आहवनीयादेः स्वरूपमाहवनीयत्वम् । व्याख्यातमिति । भाष्यकृन्मत इति शेषः । प्रयोजनं पूर्वपक्षे क्रतूद्देशेनैवाधानानुष्ठानम्, सिद्धान्ते त्वग्न्युद्देशेनैवेति ॥

इत्याधनस्य सर्वार्थताधिकरणम् ॥ ५ ॥

६

तासामग्निः० प्रासङ्गिकमिति । क्रत्वनङ्गानारभ्यवादस्यात्र पादे निरूप्यत्वाभावादिति भावः । तस्मिन्नहनि पौर्णमास्यादिप्रधानकाले । अनङ्गतः प्रकृत्यनङ्गत्वात् । अनङ्गस्याप्यतिदेशमाशङ्क्याह—प्रकृताविति । चोदनायां विध्यन्वितभावनायाम् । कथम्भावेन इति-

तदेव चोदनालिङ्गाद्विकृतावतिदिश्यते ।
चोदकेन ततस्तासां तासु प्राप्तिर्न विद्यते ।
अङ्गत्वे सत्यपि त्वासां नातिदेशोवकल्पते ।
विधीयन्ते यदा ता न प्रकृतौ सन्ति तास्तदा ॥

यदा हि पवमानेष्टयो विधीयमानाः कथंभावापेक्षिण्यः प्रकृतिमालोचयन्ति, तदा प्रकृतेस्तच्छून्यत्वात् न ततस्ताः शक्यन्ते ग्रहीतुमिति तदतिरिक्तामेवेतिकर्तव्यतां गृहीत्वा सन्तुष्टाः पवमानेष्टयो न पुनरात्मानं गृह्णन्ति ।

यत्तूक्तमग्निप्राप्तेरर्थंतस्तासामपि प्राप्तिरिति । अत्रोच्यते– सत्यं प्राप्यन्ते अग्नयः, ते त्वसंभवाद्बाध्यन्ते । ते हीष्टीनां साध्यभूताः कथमिव तासां साधनीभवेयुः । नन्वत एवाग्न्यर्थमन्याः क्रियन्ते, तत्साधनैश्चाग्निभिरन्या इष्टयः करिष्यन्त इत्युक्तम् । न ; सर्वथा तावत्प्रथमङ्काश्चिदिष्टयोऽग्निष्वेव कर्तव्याः । ताभिश्च किमग्नयो जायन्ते न वा ? यदि नेत्याह ? किमर्थं ताः क्रियन्ते । अथ जायन्ते सिद्धेऽर्थे नान्याः कर्तव्याः । अग्न्यर्थमेव हि ताः क्रियन्ते, ते च सिद्धा इति नान्याभिः प्रयोजनम् । तस्मान्न पवमानेष्टिषु पवमानेष्टयः कर्तव्याः ॥

इति पवमानेष्टिषु तासामकर्तव्यताधिकरणम् । ६ ॥

७

तुल्यः—एवं प्रकरणस्य पूर्वैः सह विरोधविचारं सप्रासङ्गिकं समाप्य, अधुना

---

कर्तव्यतात्वेन । चोदनालिङ्गात् विकृतिविधिगतशब्दार्थरूपसादृश्यात् चोदकेनातिदिश्यत इत्यन्वयः । ततः अतिदेशात् । अभ्युपेत्यवादेनाह—अङ्गत्वे सत्यपीति । यदा ता इति छेदः । न प्रकृताविति अपर्यवसितविधित्वेनेष्टीनां प्रकृतावङ्गत्वानवगमादिति भावः । आत्मानमपीत्यपिना आत्मविधिकाले आत्मनः प्रकृत्यङ्गत्वेन निर्ज्ञातत्वं विरुद्धमिति सूचितम् । अर्थतः अग्निसाधनत्वात् । नन्वेकं प्रत्येव साधनत्वं साध्यत्वञ्च विरुद्धम् । इह तु साधनत्वमन्यासां साध्यत्वञ्चान्यासामिति न विरोध इति शङ्कते— नन्विति । अत एव विरोधादेव । इष्टीनामग्न्यर्थत्वात्प्रथमं कृताभिश्चाग्निसिद्धेः न पुनः करणप्रसङ्ग इति परिहरति—सर्वथेति । अग्न्यधिकरणत्वेन विवाद इत्यर्थः । प्रयोजनं स्फुटमेव । सूत्रञ्चाग्निग्रहणमर्थात्तदर्थेष्टिप्राप्त्यर्थम् ॥

इति पवमानेष्टिषु तासामकर्तव्यताधिकरणम् ॥ ६ ॥

७

तुल्यस्सर्वेषाम्० एवमिति । अहीनो वेत्यारभ्य प्रकरणस्य पूर्वैस्सह विरोधाविरोधविचारस्तत्प्रसङ्गाच्छेषकार्यविचारस्तत्समाप्तौ पुनः प्रकरणस्य पूर्वैस्सह विरोधाविरोधचिन्तनमे-

स्थानस्य पूर्वैस्सह विरोधाविरोधौ विचार्येते। पादाद्येन प्रकृतिविकृतीनां समानासमानविधानत्वं विचारितम्। अत्रापि तदेवानुवर्तते। ज्योतिष्टोमे त्रयः पशवः। तत्राग्नीषोमीयः क्रयसन्निधावुत्पन्नो वचनादौपवसथ्येऽहन्यनुष्ठीयते। तस्मिन्नेवाहनि सवनीयाम्नानं 'आग्नेयः पशुरग्निष्टोमे' इत्यादि। तत्रैव पशुधर्मा यूपच्छेदादयः पठिताः, सौत्येऽहनि पुनः सवनीयाम्नानम्, 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाऽऽग्नेयं सवनीयं पशुमुपाकरोती'ति। आनुबन्ध्यस्त्ववभृथान्ते समाम्नातः।

तदिह विचार्यते- किमेते धर्मास्त्रयाणामपि पशूनां साधारण्येन विधीयन्ते? अथाग्नीषोमीय-सवनीययोः? उताग्नीषोमीयस्यैवेति। तदर्थं च किमग्नीषोमीयस्य स्थानं ज्योतिष्टोमिकेन प्रकरणेन, सवनीयावान्तरप्रकरणेन वा विरुध्यते? नेति। तत्सिद्ध्यर्थं च किं सवनीयानामौपवसथ्येऽह्नि प्रकरणमस्ति? नास्तीति चिन्तनीयम्। ततोऽप्येतद्विवेक्तव्यम्-किमौपवसथ्येऽह्नि सवनीयोत्पत्तिः? उत सौत्ये ऽहनीति। तत्र प्रकरणाज्ज्योतिष्टोमगृहीता धर्मास्तदङ्गेषु पशुषु विज्ञायमानास्तत्प्रकरणाविशेषात्सर्वार्था भवन्ति। ज्योतिष्टोमद्वारेण हि पशूनां धर्मविधौ प्रकरणम्, न स्वतः कस्यचित्प्रकरणम्। अग्नीषोमीयस्यापि स्थानमात्रम्। तच्च प्रकरणाद्दुर्बलम्। सवनीयस्यापि सुत्यायामुत्पत्तिः, इतरत्र गुणार्थं श्रवणमिति नास्त्येव विशेषतः प्रकरणम्। आनुबन्ध्यस्य त्वनाशङ्कनीयमेव। तस्मात्सर्वार्थाः।

---

तावत्पर्यन्तमित्यर्थः। अधुनेत्यनेन महाप्रकरणेनावसरसङ्गतिमाह—पादेति। क्रयेति। सोमक्रयसन्निधौ 'यो दीक्षितो यदग्नीषोमीयं पशुमालभेत' इति निहित इत्यर्थः। वचनादिति। 'स एष औपवसथ्येऽहन् द्विदैवत्यः पशुरालब्धव्यः' इत्यस्मादित्यर्थः। औपवसथ्यञ्च चतुर्थमहः। यूपच्छेदादय इत्यादिपदेन पशूपाकरणादिग्रहणम्। सुत्या सोमयागस्तत्सम्बन्धि पञ्चममहः। सवनीयप्रकरणसन्देहापादनाय पुनरिति। आनुबन्ध्यस्तु इति तुशब्दः साक्षात्प्रकरणादिपशुधर्मविनियोजकप्रमाणाभावरूपवैषम्यद्योतकः। अयञ्च मित्रावरुणदैवत्यो गोद्रव्यकः। स्थानमिति। अनुष्ठानसादेश्यरूपमित्यर्थः। नं वेतीत्यनन्तरं विचार्यत इत्यस्यानुषङ्गः। ततोऽपि तदर्थमपि। यत्रोत्पत्तिः तत्र प्रकरणम्। अत उत्पत्तिचिन्तायास्तदर्थता। आद्यपक्षमाह— तत्रेति। तदङ्गेष्विति। 'आनर्थक्यात्तदङ्गेषु' इति न्यायादिति भावः। इतरत्र औपवसथ्यादेः। गुणार्थम् 'वपया प्रातस्सवने चरन्ति पुरोडाशेन माध्यन्दिनेऽङ्गैस्तृतीयसवने' इति पशुयागप्रयोगविप्रकर्षाख्यगुणविधानार्थम्। द्वितीयं पक्षमुत्थापयति—स्यादेवमिति। ननु सौत्येऽहनि तदुत्पत्तेः कथमौपवसथ्ये प्रकरणमित्याशङ्क्याह—सौत्य इति यदाग्नेयमुपाकरोति तदाश्विनग्रहणोत्तरमिति गुणमात्रं विधीयते। त्रिवृतेत्याद्यनुवादः। रशनात्रैगुण्ययूपपरिव्याणानां वाक्यान्तरैरेव प्राप्तत्वात्। गुणाभावादिति। आग्नेयः पशुरिति वाक्ये गुणश्रवणा

स्यादेवमविशिष्टम् प्रकरणम्, यदि ज्योतिष्टोमद्वारं स्यात्, सवनीयस्य तु स्वत एव विशेषतोऽवान्तरप्रकरणमस्ति, सौत्येऽहन्याश्विनग्रहणोत्तरकाले गुणार्थं श्रवणम्, औपवसथ्येऽहनि गुणाभावात् सवनीयानामुत्पत्तिः। अतः प्रकरणात्तदर्थाः।

ये त्ववान्तरप्रकरणं नेच्छन्ति, तेषां सूत्रभाष्यविरोधः। यच्चानिष्टप्रसञ्जनं समिदादिषु सौमिकधर्मप्राप्तिरिति, तत् पितृयज्ञे साधिकारेऽपि तुल्यम्। अथ तस्य 'तस्मात्पितृभ्यः पूर्वेद्युः क्रियते' इति देवताविधेर्नाव्यक्तत्वम्, समिदादिष्वपि मन्त्रवर्णाद्देवताविधिरुपांशुयाजवदस्त्येव। मा प्रापत्सौमिकधर्माः, दार्शपौर्णमासिकधर्मास्तु प्राप्नुयुः वैमृधवदिति चेत्? इदमपि पितृयज्ञे तुल्यम्। अथ तत्र द्रव्यदेवतादिसन्निपातिपौष्कल्यान्नातिदेशः, तत्समिदादिष्वपि तुल्यमिति दर्शितम् प्रकरणाधिकरणे। तस्मादस्त्येवावान्तरप्रकरणम्। यदि चैतन्नेष्यते, ततः स्थानादेव सवनीयार्थता वक्तव्या स्यात्। तच्चाग्नीषोमीयस्याप्यविशिष्टमिति केवलसवनीयार्थत्वपक्षोऽत्यन्तनिर्मूलः स्यात्। ननु तवाप्युभयार्थत्वपक्षो निर्मूलः, यथा न निर्मूलः तथा वक्ष्यामः। तस्मात्सवनीयार्था इति द्वितीयः पक्षः।

गृह्णीम एतत्सवनीयार्था इति। स्थानादग्निषोमीयार्था अपि भवेयुः।

ननु प्रकरणात्स्थानं दुर्बलं तत्कथं ततः।
अग्नीषोमीयशेषत्वं धर्माणां स्यात् तदुच्यते॥

यद्यपि प्राकरणिकेन सवनीयार्थत्वेन धर्मा निराकाङ्क्षाः तथाऽप्यग्नीषोमीयस्य

---

भावात् तद्विध्यर्थमाग्नेयानुवादासम्भवात्। अनेनानुवादमात्रम् वाक्यान्तरेण गुणविधित्वमिति भिन्नवाक्यत्वेनायोगात् 'आग्नेयो ह्यग्निष्टोमः' इत्यर्थवादानर्थक्यापत्तेश्च कर्मविधित्वं युक्तमिति भावः। ये त्विति। गुरुमतानुसारिण इत्यर्थः। सूत्रं 'प्रकरणाविशेषात्' इति तद्व्याख्यानभाष्यञ्च 'तुल्यस्सर्वेषां पशुविधिस्स्याद्यदि प्रकरणे विशेषो न भवेत् सवनीयानां प्रकरणे पशुधर्मा' इत्यादि तदुभयविरोध इत्यर्थः। यच्चेति। अवान्तरप्रकरणाङ्गीकार इति शेषः। साधिकारे साक्षात्फलसाधने। तत्र तैरपि परिहारो यो वक्तव्यः स एव ममापीत्याशयः। तमेवाह—अथेति। ननु मन्त्रवर्णाद्देवताविधिसत्वेऽपि तद्धितचतुर्थीभ्यां तदभावादव्यक्तत्वमेवेत्याशङ्कानिरासाय उपांशुवदित्युक्तम्। तथात्वे ह्युपांशुयाजे साधिकारे सोमधर्मातिदेशो दुर्वारस्स्यात्। अतो मान्त्रवर्णिक्या अपि देवताया असत्वमेवाव्यक्तत्वं सोमसादृश्यमतिदेशप्रयोजकमित्याशयः। दार्शेति। आज्यद्रव्यकत्वसाम्यादुपांशुयाजधर्मा इत्यर्थः। कथमङ्गे प्रधानातिदेशः स्वस्मिन् स्वातिदेशापत्तेरिति शङ्कानिरासाय वैमृधदृष्टान्तः। स्वातिरिक्ताङ्गातिदेशाच्च नोक्तापत्तिरिति भावः। तवापीति। स्थानादवान्तरप्रकरणस्य प्राबल्यादिति भावः। तृतीयं पक्षमाह—गृह्णीम इति। 'आग्नेयः पशुः' इत्यादिवाक्यस्य गुणवाक्येनैक-

पशुधर्मापेक्षित्वात्, तेनापि सम्बध्यन्ते यथोपदेशावगतप्रकृत्यङ्गभावा धर्मा दुर्बलेनाप्यतिदेशेन विकृतेरपि भवन्ति, एवमेतेऽप्युभयार्था इति प्राप्ते ब्रूमः—

अग्नीषोमीयशेषत्वं यदुक्तं सत्यमेव तत्।
सवनीयार्थतां तेषामवजानीमहे कुतः॥
सवनीयस्य धर्मेषु नास्ति प्रकरणं यतः।
न खल्वौपवसथ्येऽह्नि सवनीयो विधीयते॥
यतः प्रकरणं तत्र सवनीयस्य लभ्यते।
प्रचारविप्रकर्षाख्यगुणस्य तु विधित्सया॥
कीर्त्यते सवनीयोऽत्र सौत्ये त्वेष विधीयते।
कर्मणश्च विधिर्यत्र तत्र प्रकरणं भवेत्॥
न तु यत्र गुणार्थेन श्रवणं तत्र विद्यते।
तस्मान्न सवनीयस्य प्रक्रिया गुणसन्निधौ॥

यत्त्वौपवसथ्यवाक्ये गुणो नास्तीत्युक्तम्, अस्ति प्रचारविप्रकर्षः। आग्नेयः पशुरित्याद्यनुकीर्त्य 'यथा वै मत्स्यः' इत्यादिना निन्दित्वा तत्परिहाररूपेण 'वपया प्रातः सवने चरन्ती' त्यादिना प्रचारविप्रकर्षो विधीयते। शक्यते च सौत्येप्युत्पन्नम् कर्मानूद्य प्रचारविप्रकर्षो विधातुम्, उपादेयत्वात्। सुत्यावाक्ये तु कालो गुणः, न चासावनुपादेयत्वादौपवसथ्योत्पन्नदूरस्थाविपरिवर्तमानकर्मानुवादेन विधातुं शक्यत इति तत्र तावत्कर्मोत्पत्तिर्विधातव्या।

नन्वौपवसथ्येऽप्युत्पन्नं कर्म प्रचारोत्कर्षादुत्कृष्टं प्रातःसवने विपरिवर्तत इति, शक्यत एव कालविधिः। नैवम्। ये हि वपाप्रचारात्प्रत्यञ्चः पदार्थाः, तेषामेव 'तदादिवाभिसम्बन्धादि'ति न्यायेनोत्कर्षः स्यात्। अपूर्वत्वाद्वा तेषामपि न स्यात्,

---

वाक्यतामुपपादयति—आग्नेय इत्यादि। 'यथा वै मत्स्योऽविदितो जनमवधूनुते एवमेतेऽप्रज्ञायमाना जनमवधुन्वते' इति सन्ततानुष्ठाननिन्दार्थवादे एतच्छब्दापेक्षितसमर्पणार्थमाग्नेयः पशुरित्यनुवादः। निन्दोन्नीतदोषपरिहारार्थञ्च सवनीयपशो प्रातस्सवनिकवपायागाभ्यासादिगुणविधिरित्येकवाक्यतेत्यर्थः। प्रचारविप्रकर्ष इत्यस्य विप्रकृष्टकालिकः प्रचारः प्रयोग इत्यर्थः। अत एव वार्तिके 'तदिह वपाप्रचार उपादेय' इत्याद्युक्तम्। सुत्यावाक्ये त्विति। सुत्यासन्निहितसवनीयवाक्ये त्वित्यर्थः। कालः आश्विनग्रहणोत्तरकालः। न चेति। सन्निधिकृतप्रत्यभिज्ञाया अभावे विधेयत्वोपादेयत्वयोस्सामानाधिकरण्यनियमस्य प्रकरणान्तराधिकरणे व्युत्पादनादिति भावः। शक्यत एवेति। सन्निधावुक्तन्यायावादादिति भावः। प्रत्यञ्चः अनन्तरानुष्ठेयाः। तदादिवेति। यस्योत्कर्षविधिस्तावन्मात्रस्यैवोत्कर्ष इति पूर्वपक्षे पञ्चमाध्याये सिद्धान्तसूत्रमिदम्। तदादिकस्य पदार्थसंघस्यातिदेशः। अभिसम्बन्धात् तदानंतर्यरूपक्रमसम्बन्धादिति। वस्तुतस्तु न्यायविषयतापि नेत्याह—अपूर्वत्वादिति-अक्लृप्तक्रमत्वादित्यर्थः। क्लृप्तक्रमाणां हि क्रमानुरोधेनोत्कर्षः। स चातिदेशिकेषु भवति। औपदेशिकवपाप्रचारादेस्त्वत्रैव क्रमस्य कल्प्यत्वाद्वाचनिक-

उपाकरणादीनां तु प्राचां पदार्थानां नास्त्येवोत्कर्षः। तस्मादुपाकरणस्य प्रातःसवने विपरिवृत्त्यभावान्न तस्य कालविधिः सम्भवतीत्युत्पत्तिविधिरेवायम्। इतरस्तु गुणविधिरिति, प्रकरणाभावान्न सवनीयार्थत्वम्। स्थानात् त्वग्नीषोमीयार्थत्वम्।

यत्तु महाप्रकरणेन स्थानं बाधित्वा ज्योतिष्टोमगृहीताः सर्वपशूनामित्युक्तम्। तत्रोच्यते—पशुधर्मा हि पशुयागमाकाङ्क्षन्ति, ज्योतिष्टोमस्तु सोमयागः, न पशुधर्मान् गृह्णाति, यदि न कश्चिदपि पशुधर्मान् ग्रहीतुं शक्नुयात्, ततो गत्यभावाज्ज्योतिष्टोमगृहीताः सन्तस्तत्रानर्थक्यात् तदङ्गेष्ववतरेयुः, शक्नोति च स्थानादग्नीषोमीयः ग्रहीतुमिति तदर्था धर्माः॥

**न सर्वेषाममी नापि सवनीयस्य नोभयोः।**
**अग्नीषोमीय एवातो विधेर्धर्मा व्यवस्थिताः॥**
**अन्यत्र त्वतिदेशेन गच्छन्ति न विधानतः।**
**विधिस्तु दैक्ष एवेति सूत्रे विधिरुदाहृतः॥**

**इति पशुधर्माणाग्नीषोमीयमात्रधर्मताधिकरणम्॥ ७॥**

८

**दोहयोः॰** दर्शपूर्णमासयोः सायं दोहः पूर्वेद्युः, प्रातर्दोहश्चापरेद्युः। दोहधर्माः—शाखाहरणादयः पूर्वेद्युः क्रियन्ते। ते किं सायंदोहार्थाः? उतोभयार्था इति सन्देहे

---

मुत्कर्षाद्यालोच्यैत्र तत्कल्पनेति 'नैकोत्कर्षे परोत्कर्ष' इति पंचमे एवोक्तमित्यर्थः। प्राचां—वपायागपूर्वभाविनाम्। आदिशब्देन यूपपरिव्याणयूपाञ्जनादिग्रहणम्। एवं च यूपपरिव्याणपशूपाकरणयोरनुत्कर्षेणासन्निहितत्वात्तत्राश्विनग्रहणोत्तरत्वं न विधातुं शक्यम्। यागेऽपि तद्विधौ वाक्यभेदाच्च। न च याग एव तद्विधिस्तथा सत्यपि परिव्याणोपाकरणयोस्तदप्राप्तेरनुवादासंभवात्। अतश्चाश्विनग्रहणोत्तरकालताविशिष्टयागविधिरेव वाच्यः, तथा च सति परिव्याणादेरप्यंगत्वात्प्रधानकालिकत्वेनानुवादोपपत्तिरित्यभिप्रेत्याह—तस्मादिति। इतरः—औपसथ्याहे श्रुतः। शक्नोतीति। एतेन पशुयागान्वययोग्यतारूपं लिंगमपि दर्शितम्। विधेरिति। उपदेशादित्यर्थः। सूत्रेपि—विधिशब्द उपदेशाभिप्राय इत्याह—विधिस्त्विति। उपदेश इत्यर्थः। दीक्षाकाले विधानाद्दैक्ष इत्यग्निषोमीय उच्यते। प्रयोजनं सामानविध्ये 'प्रास्मा अग्निं भरते' त्यध्रिगुप्रैषगतस्य मेष्यामप्रयोगो यथा व्रीहिमंत्रस्य यवप्रयोगे। सिद्धान्ते तु विकृतित्वात्प्रास्यै इत्यूहेन प्रयोग इति। सूत्रं स्पष्टार्थम्॥

इति पशुधर्माणामग्नीषोमीयार्थताधिकरणम्॥७॥

८

दोहयोः॰ दर्शे इति वक्तव्ये पूर्णमासग्रहणं फलजनने साहचर्यादिति ज्ञेयम्। सायमिति दध्यर्थ इत्यर्थः। आदिना वत्सालम्भादिसङ्ग्रहः। ते किमिति। सायं दोहपदेनात्र दधियागो

पूर्ववदनुष्ठानसादेश्यात्, अवान्तरप्रकरणाद्वा सायं दोहार्था इति प्राप्ते, अभिधीयते-प्रकरणाविशेषादुभयार्थाः। न हि स्थानं प्रकरणस्येष्टे। न च दधियागस्यावान्तरं प्रकरणमत्रास्ति, न च स्थानमपि प्रधानस्य विद्यते, तस्य अपरेद्युरेवानुष्ठानात्, दधिसिध्यर्थास्तु केचिद्धर्माः पूर्वेद्युः क्रियन्ते, न च तदर्थाः शाखाहरणादयः, प्रधानार्थत्वात्। तस्मादुभयार्था दोहधर्माः॥

इति शाखाहरणादीनामुभयदोहधर्मताधिकरणम्॥ ८॥

९

**तद्वत्०** ज्योतिष्टोमे प्रातःसवनसन्निधौ ग्रहधर्माः समाम्नाताः—'उपोप्तेऽन्ये ग्रहाः साद्यन्ते, अनुपोप्ते ध्रुवः' इत्यादयः। ते किं प्रातःसवनिकग्रहार्थाः, उत प्राकरणिकसर्वग्रहार्था इति विचारः। पूर्वत्र स्थानमपि नास्तीत्युक्तम्। इह त्वसन्दिग्धं स्थानमिति विशेषाशङ्का। प्रकरणाविशेषात्तु सर्वार्था इति सिद्धान्तः॥

इति सादनादीनां सवनत्रयधर्मताधिकरणम्॥ ९॥

---

लक्षणयोच्यते। उभयार्थाः दधियागपयोयागोभयार्थाः। पूर्ववदिति। पशुधर्माग्नीषोमीयवदित्यर्थः। एतेनापवादाख्यसंगतिरुक्ता। यद्यपि दधियागस्य न पूर्वेद्युरनुष्ठानम्, तथापि सायंदोहेन साध्यतयोपस्थितिमात्रं दधियागस्य। धर्माणां चानुष्ठानमित्येव तत्सादेश्यमित्याशयः। अवान्तरेति त्वापाततः, सन्दंशाभावेन वस्तुतस्तदभावात्। प्रधानस्येति दधियागस्येत्यर्थः। तथाचानुष्ठेयत्वेनोपस्थितिरेव क्रमः। तस्या एवेतिकर्तव्यताकाङ्क्षारूपप्रकरणोत्थापकत्वात्, न तु यथाकथंचिदुपस्थितिमात्रमिति भावः। केचिद्धर्माः दोहादयः। प्रधानार्थत्वादिति। दोहधर्माणां परेद्युराम्नानेन तत्रैव भाव्याकांक्षायां प्रकरणवशेन यागाङ्गत्वादिति भावः। प्रयोजनं वत्सापाकरणादेः पूर्वेद्युरेवानुष्ठानं पूर्वपक्षे। सिद्धान्ते तु परेद्युरपीति। श्रृतं दुग्धं दोहधर्मैरसंयुक्तं स्यात्। कुतः? दोहयोः कालभेदाद्धर्माणां च सायंदोहकालेऽनुष्ठानादिति सूत्रार्थः॥

इति शाखाहरणादीनामुभयदोहार्थताधिकरणम्॥८॥

९

तद्वत्० उपोप्त इति। कृतपांसूपवापे स्थण्डिल इत्यर्थः। आदिना सम्मार्गादिपरिग्रहः। आतिदेशिकीं संगतिं दर्शयति—विशेषेति। स्थानस्य प्रकरणेन बाधमभिप्रेत्याह—प्रकरणेति। सवनांतरे प्रातःसवनातिरिक्तसवने ग्रहाम्नानमपि तत्संयुक्तं धर्मसंयुक्तमिति सूत्रार्थः। पूर्वसिद्धान्तसूत्रगतषष्ठ्यन्ततत्संयुक्तपदस्य प्रथमान्ततया विपरिणामेनानुषंगात्। प्रयोजनं तु स्पष्टम्॥

इति सादनादीनां सवनत्रयार्थताधिकरणम्॥९॥

१०

**रशना०** अग्नीषोमीये यूपपरिव्याणं विहितं 'परिव्ययति ऊर्वै रशने'ति। सवनीये पुनः परिव्याणान्तरं विहितम्, 'आश्विनं ग्रहं गृहीत्वोपनिष्क्रम्य यूपम्परिव्ययती'ति। परिव्याणसाधनभूता रशना तद्धर्मश्चाग्नीषोमीयक्रमे विहिताः। 'त्रिवृद्भवति, दर्भमयी भवति प्रविष्टान्ता कर्तव्ये'त्यादयः। ते किमग्नीषोमीयपरिव्याणार्थाः ? उत सवनीयपरिव्याणार्था अपीति संशयः। तत्र क्रमादग्नीषोमीयार्था इति प्राप्ते ब्रूमः—

**श्रुत्यैतद्यूपसम्बन्धिपरिव्याणाङ्गताङ्गताः ।**
**नाग्नीषोमीयधर्माः स्युस्तावतैवार्थवत्त्वतः ॥**
**सवनीयपरिव्याणमप्येतद्यूपसङ्गतम् ।**
**तस्मात्तत्रापि रशना सह धर्मैः प्रपत्स्यते ॥**

**इति रशनात्रिवृत्त्वादीनां सर्वपशुधर्मताधिकरणम् ॥ १० ॥**

११

**आरात्०** अतः परं प्रासङ्गिकी कथा। लक्षणसङ्गतिः स्पष्टैव। ग्रहधर्माणां साधारण्यं पूर्वमुक्तम्। ते किमनारभ्याधीतयोरंश्वदाभ्ययोरपि भवन्ति ? उत प्राकरणिकानामेवेति संशयः।

---

१०

**रशना च०** परिव्ययतीति। यूपं परितो वेष्टयतीत्यर्थः। ऊर्क् अन्नमित्यर्थवादः। **परिव्याणांतरमिति।** आश्विनग्रहणोत्तरकालस्थत्वपाठादुपनिष्क्रमणस्यार्थःप्राप्तेरनन्यपरेण विधिना अभ्यासविधानरूपेण भेद इति भावः। त्रिवृदिति—त्रिगुणेत्यर्थः। प्रविष्टान्ता प्रविष्टस्थूलन्तान्ते त्यर्थः तत्रेति। 'रशनया परिव्ययती' त्यनेन सन्निहिताग्नीषोमीयपरिव्याणोद्देशेनैव रशनाविधानात् धर्माणां च रशनाद्वारकत्वादिति भावः। एतद्यूपेति। परिव्ययतीत्यस्य कर्मसाकांक्षत्वेन मृज्यामह इति (?) न्यायेन यूपमिति द्वितीया तस्याप्युद्देश्यकोटावनुप्रवेशात् यूपस्य चोभयापूर्वसाधनत्वेन तद्वारोभयाङ्गत्वं धर्माणामित्याशयः। नन्वग्नीषोमीयापूर्वसाधनत्वस्योद्देश्यतावच्छेदकत्वात्तदङ्गकत्वमेव स्यादित्याशंक्याह—नाग्नीति। लाघवादपूर्वसाधनयूपपरिव्याणत्वेनैवोद्देश्यता। तावतैवानर्थक्यपरिहारादिति भावः। अत एव त्रिवृतेत्यस्य प्राप्तत्वान्न विधिः। अन्यथा विशिष्टविधौ गौरवापत्तेरित्यप्यूह्यम्। प्रयोजनं पूर्वपक्षे-सवनीयपरिव्याणे रशनातद्धर्माभावः। सिद्धान्ते तु तत्रापि तेषामनुष्ठानमिति। रशनापि समानविधानात् त्रिवृतेति लिंगदर्शनादिति सूत्रार्थः॥ इति रशनादीनां सर्वपशुधर्मताधिकरणम् ॥१०॥

११

**आराच्छिष्टम्०** स्थानस्य पूर्वैः सह विरोधचिंतनात्प्रकरणासंगतिमाशंक्याह—अत इति। लक्षणशब्दोऽत्र पादपरः, तत्संगत्यभिधानस्यैव तत्र तत्र दर्शनात्। सा च सामानविध्य-

तत्र प्रकरणादेते तद्वर्तिग्रहमात्रगाः ।
नानारभ्य समाम्नातग्रहार्थाः स्युरसन्निधेः ॥

उच्यते—

ग्रहाणां प्रक्रिया नास्ति यया धर्मव्यवस्थितिः ।
नापि प्रकरणं तेषां विशेषणतयेष्यते ॥

न हि ये सोमप्रकरणगताः, तेषाममी धर्मा इति । किन्तु—

यजेः प्रकरणं तेन प्रकृतेन विशेषणात् ।
धर्मास्तत्साधनानां हि ग्रहाणां शेषतामियुः ॥
ये चानारभ्य विहिता ये च प्रकरणे ग्रहाः ।
सर्वे तत्साधनत्वात्तद्धर्मसम्बन्धमाप्नुयुः ॥

इत्यंश्वदाभ्ययोरपि ग्रहधर्मास्तिताधिकरणम् ॥ ११ ॥

१२

अग्न्य० अग्निप्रकरणे समाम्नाता इष्टकाधर्माः—'अखण्डाम्' 'अकृष्णामि'त्यादयः, किं प्राकरणिकीनामेवेष्टकानाम् ? उताऽनारभ्याधीतानामपि 'चित्रिणीरुपदधाती' त्येवमादीनाम् ? पूर्ववदेव संशयपूर्वोत्तरपक्षाः । पूर्वत्रांश्वदाभ्ययोरनारभ्योत्पन्नयोरपि प्राकरणिकेन वाक्येन विनियोगोऽस्तीति प्रकरणसंस्पर्शाद्युक्तो धर्मसम्बन्धः, चित्रिण्यादीनां तु विनियोगोऽप्यनारभ्यवादेनैवेति, प्रकरणसंस्पर्शाभावान्न तद्धर्मसम्बन्ध इति विशेषाशङ्का । प्रकरणसंस्पर्शाभावेऽपि प्रकृतापूर्वसंस्पर्शात् तत्साधननिवेशिनो धर्मास्तासामपि भवन्तीति सिद्धान्तः ॥

इति चित्रिण्यादीनामपीष्टकाधर्मवत्ताधिकरणम् ॥ १२ ॥

---

चिन्तनात्स्पष्टेति भावः । अनंतरसंगतिरातिदेशवयेवेति स्फुटतरत्वान्नोक्ता । एते ग्रहधर्माः । तद्वर्त्तीति । प्रकरणवर्त्तीत्यर्थः । अन्यथा सुराग्रहार्थतापि स्यादिति भावः । नन्वंश्वदाभ्ययोरपि विनियोगविधेः प्राकरणिकत्वात्प्रकरणवर्त्तित्वमस्तीत्याशंक्याह—नानारभ्येति । समाम्नातावुत्पत्तौ यौ ग्रहौ तदर्था इत्यर्थः । उत्पत्तिविधावेव धर्माकाङ्क्षेति प्रकरणे तदभावान्न तदुपस्थितिरिति भावः । ग्रहाणामिति । पात्राणां ग्रहणानां वेत्यर्थः । ननु सोमयागप्रकरणमेव विशेषकं स्यादित्याशंकामपाकरोति—नापीति । एतदेव व्याचष्टे—न हि ये इति । सोमप्रकरणं तदितिकर्त्तव्यताकांक्षा तद्गतास्तदनुवृत्तौ पठितास्तेषामित्यर्थः । मानाभावादिति भावः । कथं तर्हि सुराग्रहादिव्यावृत्तिरत आह—किंत्विति । प्रकरणं अधिकाराख्यम् विशेषणादिति । सोमयागापूर्वसाधनत्वेन विशेषणे सोमयागस्य तत्कोटिप्रवेशादित्यर्थः । आरादनारभ्यशिष्टमंश्वादिकम् असंयुक्तमितरैर्धर्मैरित्यर्थः । कुतः असन्निधानादिति सूत्रार्थः । प्रयोजनं स्पष्टम् ॥

इत्यंश्वदाभ्ययोरपि ग्रहधर्मास्तिताधिकरणम् ॥ ११ ॥

१२

अग्न्यङ्गं० स्पष्टार्थमेतत् ॥१२॥

१३

नैमि० ज्योतिष्टोमे राजन्यवैश्यनिमित्तेन फलचमसश्चोदितः। स चेज्याविकार इति स्थितम्। सन्त्यभिषवादिसंस्काराः, ते किं नैमित्तिकस्यापि फलचमसस्य समानाः? उत नित्यस्यैव सोमस्य? नैमित्तिकन्तु तद्विकार इति विचार्यते। तत्र—

अपूर्वसाधनत्वांशे संस्कारविधयो यतः।
तस्मान्नैमित्तिकेऽपि स्युः साधनत्वाविशेषतः॥

'सोमभभिषुणोती' त्यस्यायमर्थः—अभिषुतेन यजेतेति। फलचमसेनापि चेज्यते। अतस्तस्याप्यभिषव उपदिष्ट एव भवति।

तेन व्रीहियवा नित्या समानविधयो यथा।
नित्यनैमित्तिके द्रव्ये समानविधिनो तथा॥
उच्यते साधनेनैव नित्यसंस्कारसङ्गतिः।
सरूपेण त्वसौ युक्ता न विरूपेण युज्यते॥

संस्कारा हि निमित्तसंयोगाभावात्क्रतोः स्वाभाविकाङ्गत्वेन विधीयमानास्तदनुरूपमेव द्वारमाश्रयन्ते, व्रीहिवच्च यवा अपि प्राप्तिरूपेण क्रतौ नित्याः एवेति धर्मविधेरवैरूप्याच्छक्नुवन्ति द्वारतामुपगन्तुम्। यदप्यनुष्ठानरूपेणाऽनित्यत्वम्, तद्व्रीहीणामपि तुल्यमेवेति नित्यद्वाराभावादगत्याऽवघातादीनामनित्यद्वाराश्रयणं युक्तम्। आम्नानस्वरूपेण च नित्यत्वाद्व्रीहियवविध्योर्नित्यवदाम्नातसंस्कारविध्येकवाक्यत्वं शाब्दरूपसमानत्वात् युज्यते। शक्यते हि वक्तुम्—अवहतैर्व्रीहिभिर्यवैर्वा यजेतेति। फलचमसस्तु निमित्तसंयोगादाम्नानेनैवानित्यः, कथं नित्यैर्यावत्क्रतुभाविभिरभिषवादिभिरेकवाक्यतामुपेयात्। विरुद्धं खल्वेतदभिषवेण नित्यं ज्योतिष्टोममुपकुर्यादनित्यफलचमस-

---

१३

नैमित्तिकम्०अत्रापवादसङ्गतिः। इज्याविकार इति। यागे सोमबाधको न तु भक्षमात्र इति पंचमचरणोपान्त्याधिकरणे सिद्धांतितमित्यर्थः। तद्विकारः—ततोऽतिदेशेन धर्मग्राहकम्। अपूर्वसाधनत्वांश इत्येतद्व्याचष्टे—सोममिति। सोमेन यजेतेत्यनेनैकवाक्यतया सोमत्वाविक्षया चेति भावः। अत्र दृष्टांतमाह—तेनेति। अपूर्वसाधनमात्रोद्देशेन संस्कारविधानेनेत्यर्थः। नित्याः निमित्तं विना स्वभावतो विहिताः। उत्तरार्धं व्याचष्टे—संस्कारा हीति। प्राप्तिरूपेण विधानरूपेण। नित्यद्वाराभावात् अनुष्ठानतोऽपि यन्नित्यं तत् द्वारकत्वासंभवात्। एवं सत्यभिषवादीनामप्यनित्यफलचमसद्वारकत्वं स्यादित्याशङ्क्य वैषम्यमाह—आम्नानेति। विधानरूपेणेत्यर्थः। अनुष्ठानतोऽनित्यत्वस्यार्थत्वात् शाब्दबोधाविषयत्वेन न वैरूप्यदोषापादकत्वमित्यर्थः। नित्यैरित्यस्य विवरणं यावदिति। न च नित्यत्वस्याप्यार्थत्वन्न शाब्दबोधविषयतेति वाच्यम्। उद्देश्यव्यापकत्वरूपस्य तस्योत्सर्गतः संसर्गतया भानाभ्युपगमादिति भावः। शब्दतो

द्वारमिति, तथा नित्येन फलचमसेन नित्यकर्तव्याभिषवसंस्कृतेन यजेतेति। यद्यभिषुतेन फलचमसेनेत्युच्यते, ततः फलचमसोऽपि नित्याभिषवद्वारमिति नित्यः स्यात्, सोमस्त्वाम्नानतः प्रयोगतश्चानित्यः। राजन्यवैश्यपक्षेऽपि यजमानचमसादेव सोमो निवर्तते, अन्यत्र तु सोमः स्थित एव। तस्मात्तत्रैवाभिषवादिविधिः।

अपि च नित्यं नैमित्तिकञ्च न युगपद्विधीयते, किन्तु नित्यं विधाय पश्चान्नैमित्तिकं विधेयम्, तद्धि निमित्ते सति क्रतोर्विशेषरूपेण चोद्यते-निमित्ते त्वेतद्रूपः क्रतुरिति। एवं च स्वारसिकरूपे प्राक् सिद्धे शक्यते वक्तुम्। तस्माद् यस्यां वेलायां क्रतोः स्वाभाविकं नित्याङ्गं विधीयते, तस्यामेव संस्कारविधयः तद्विशेषणत्वेन स्वार्थं विधाय निवृत्तव्यापारा न भूयः शक्नुवन्ति नैमित्तिकेनापि सम्बद्धुम्, आवृत्तिप्रसङ्गात्। तस्मान्नित्यार्था धर्माः, नैमित्तिकस्य त्वतिदेशेन भविष्यन्ति॥

इत्यभिषवादीनां सोममात्रधर्मताधिकरणम्॥ १३॥

## १४

**प्रति०** मुख्याभावे प्रतिनिधिर्वक्ष्यते। स किं मुख्येन समानविधानः? न वेति। मुख्याभावनिमित्तत्वात् पूर्ववदसमानविधौ प्राप्ते, उच्यते-स्यादेवं यदि द्रव्यान्तरमिह यागस्य साधनत्वेनोपादीयते, व्रीह्यवयवास्त्विह सकलासम्भवाद्विकला उपादीयन्ते, नीवारगतास्तदनुषङ्गादवर्जनीयतया। नीवारोपादानं न साधनतया, साधनत्वे प्रमाणाभावात्। व्रीह्यंशाश्च व्रीहिगता इव नीवारगता अपि संस्कारविध्यन्विता एवेति समानविधानता॥

इति प्रतिनिधिष्वपि मुख्यधर्मानुष्ठानाधिकरणम्॥ १४॥

---

विरोधमभिनीय दर्शयति-अभिषवेणेति। एकवाक्यतया बोधेऽपि विरोधं दर्शयति-तथेति। ननु फलचमसगत नित्यत्वपरिहारेणैव बोधोऽङ्गीकार्य इत्याशंक्य दूषयति-यदीति। नित्यानित्यविधानयोः कालभेदादपि न सकृदुच्चरितसंस्कारविधिसाम्यमित्याह-अपि चेति। एतेनापूर्वसाधनत्वाविशेषात्कथं नैमित्तिकव्यावृत्तिरिति प्रत्युक्तम्। नैमित्तिके अपूर्वसाधनत्वावगमस्योत्तरकालिकत्वेन पूर्वं तेन रूपेणापि तदनुपस्थितेरिति। प्रयोजनं पूर्वपक्षे सोपपदवन्मन्त्रस्य फलचमसे लोपः, प्रकृतावूहाभावात्। सिद्धान्ते तूहं इति। सूत्रं स्पष्टार्थम्॥

इत्यभिषवादीनां सोममात्रधर्मताधिकरणम्॥ १३॥

## १४

प्रतिनिधिः० पूर्ववदित्यपवादसंगतिः सूचिता। विकलाः द्रव्यान्तरमिश्राः। अत्र प्रयोजनं पूर्वपक्षे व्रीहिमंत्रे ऊहः, सिद्धान्ते नेति॥१४॥

१५

**नियः** अथ यत्र श्रुतः प्रनिनिधिः यथा 'यदि सोमं न विन्देत्, पूतीकानभिषुणुयादि'ति। तत्र वचनेन पूतीकानामेव साधनत्वं विधीयते, न नीवारवदसाधनत्वम्। अतो द्रव्यान्तरमिदं सोमाभावे निमित्ते तत्साधनतापन्नं फलचमसवदसमानविधानम्।

**मैवम्;** न ह्यत्र पूतीका यागसाधनत्वेन विधीयन्ते,–सोमाभावे पूतीकैर्यागम् कुर्यादिति, किन्तर्हि ? सोमावयवोपलक्षणतया प्रतिनिधिनियमो ह्ययम्। तेन सोमाभावे पूतीकैर्यागं कुर्यादिति, नाभावे विधिरिति वक्ष्यते। तदेषा वचनव्यक्तिः यत्सकलसोमावयवाभावे विकलावयवानुपाददीत, तान्पूतीकगतान् इति। तस्मादत्रापि सोमावयवानामेव तत्साधनत्वात्पूर्ववत्समानविधानत्वम्॥

इति श्रुतेष्वपि प्रतिनिधिषु मुख्यधर्मानुष्ठानाधिकरणम्॥ १५॥

१६

**संस्था॰** नैमित्तिकं क्रत्वर्थं नित्येन समानविधानं न भवति, नैमित्तिकस्यानित्यत्वात्, तद्द्वारेण धर्माणां नित्यवत्क्रत्वर्थत्वानुपपत्तेरित्युक्तम्। इह काम्याः गुणाश्चिन्त्यन्ते- किमाश्रयभूतया क्रियया समानविधानाः ? उताऽसमानविधानास्तद्विकाराः ? इति। तत्र काम्यस्य फलवत्त्वात्क्रतुवदेव स्वयमितिकर्तव्यताग्राहित्वान्न तद्द्वारेण क्रत्वर्थत्वमङ्गानाम्, येन नैमित्तिकवद्विरोधः स्यात्, अतो न गतार्थमिदम्। संस्थाग्रहणञ्च प्रदर्शनार्थम्। अन्योऽपि दाक्षायणयज्ञादिरुदाहर्तव्यः।

ज्योतिष्टोमस्य चतस्रः संस्थाः—अग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्र इति। अग्निष्टोमस्यैव विधान्तरमत्यग्निष्टोम इति। अत्र षोडशिग्रहणम् 'अत्यग्निष्टोमे

---

१५

**नियमार्थाः॰** आक्षेपसमाधानात्संगतिः। विन्देत लभेत। उपलक्षणतयेत्यनन्तरं विधीयन्ते इत्यनुषङ्गः॥ १५॥

१६

**संस्थास्तु॰** अपवादसंगतिसूचनायाह-नैमित्तिकमिति। प्रकृतोपयोगात् संस्थाप्रपञ्चमाह—ज्योतिष्टोमस्येति। संस्था नाम यज्ञांगस्तोत्रसमाप्तिः। तत्र द्वादशस्तोत्रेषु यज्ञायज्ञीयमग्निष्टोमाख्यस्तोत्रं यत्र समाप्तौ साग्निष्टोमसंस्था। अग्निष्टोमस्तोत्रोत्तरमुक्थ्यस्तोत्रैस्त्रिभिः समाप्तावुक्थ्यसंस्था। तदुत्तरं षोडशिस्तोत्रेण समाप्तौ षोडशिसंस्था। तदुत्तरमतिरात्रस्तोत्रसमाप्तावतिरात्रसंस्थेति। संस्थान्तराण्यपि श्रूयन्त इत्याशंक्य तेषामुक्तान्तर्भावं दर्शयति—अग्निष्टोमस्यैवेति। अग्निष्टोमस्तोत्रानंतरमुक्थ्यस्तोत्राण्यकृत्वा षोडशिस्तोत्रकरणरूपप्रकारान्तरमात्रम्। तत्र सवनीयपश्वादिकं त्वग्निष्टोमस्यैवेति तदन्तर्गतिरित्याशयः। ननु दशमे 'उक्थ्याग्निष्टोमसंयोगादि'त्यधिकरणेऽग्निष्टोमस्य षोडश्यन्तर्भावोक्तेस्तद्विरोध इत्यत आह—अत्रेति। तथा च राजन्यकर्तृकप्रयोगस्थषोडशिसंस्थत्वं संस्थान्तरबाधेन तत्रोक्तम्। विप्रादि

राजन्यस्य गृह्णीयादि' ति। वाजपेयश्च षोडशिन एव भेदः, अप्तोर्यामश्चातिरात्रस्य। एतदभिप्रायं सप्त सोमसंस्था इति स्मरणम्। तत्राग्निष्टोमस्य संस्था क्रत्वर्था, क्रतोस्तु फलं 'ज्योतिष्टोमेन स्वर्गकाम' इति। उक्थ्यादयः संस्थाः ज्योतिष्टोमाश्रिताः फले विधीयन्ते—'पशुकाम उक्थ्यं गृह्णीयात्, षोडशिना वीर्यकामः स्तुवीत' 'अतिरात्रेण प्रजाकामं याजयेदि'ति। ननु ग्रहणादीनामत्र फले विधानम्, न संस्थायाः। उच्यते—उक्थ्यशब्दोऽयं स्तोत्रविशेषवचनः तत्सम्बन्धाद् ग्रहण उपचर्यते। न चेहोपचाराश्रयणं युक्तम्, समाप्तेश्च स्तोत्रसम्बन्धिन्या वाचक एव तत्संस्थाविशिष्टे क्रतौ प्रयोगादुक्थ्यो यज्ञ इति। ननु चाऽऽकृत्यधिकरणन्यायाद्विशेषणभूता संस्थैवाभिधेया, स्तोत्रसम्बन्धात्समाप्तावपि लक्षणेति चेत्? न; तत्सम्बन्धिक्रतुमात्रे प्रयोगाभावात्। अस्ति हि षोडशिसंस्थे यज्ञे अतिरात्रसंस्थे चोक्थ्यस्तोत्रम्। न च तत्र यज्ञे अस्त्युक्थ्यशब्दप्रयोगः। लक्षणा चेत्तत्रापि प्रयुज्येत, तत्संस्थ एव प्रयोगादभिधेयैव संस्था। सैवात्र फलाय चोद्यते। 'पशुकाम उक्थ्यं गृह्णीयात्' उक्थ्यात्मिकां संस्थां कुर्यादित्यर्थः। ग्रहणन्तु फलवत्समाप्त्यङ्गत्वेन वाक्यान्तरप्राप्तमनूद्यते। एवं षोडशिशब्दस्यापि स्तोत्रवचनत्वम्, संस्थावचनत्वञ्च व्याख्येयम्। तत्र त्वियं व्यवस्था—यदा समाप्तिवचनः, तदाश्रयतो लिङ्गलाभाद्यज्ञवत्पुल्लिङ्गम्। स्तोत्रवचनस्तु नपुंसकः, फलवाक्ये च पुल्लिङ्गः षोडशि-

---

कर्तृकस्य त्वग्निष्टोमसंस्थांतर्गतिरविरुद्धैवेति भावः। वाजपेयश्चेति। षोडशिस्तोत्रोत्तरं वाजपेयस्तोत्रकरणेऽपि वाजपेयस्य षोडशिवदेव पशुरित्याम्नानात्तदन्तर्भाव इति भावः। अप्तोर्यामश्चेति। अतिरात्र एव चतुर्थो रात्रिपर्यायः स्तोत्रत्रयात्मकोऽधिकश्चेदाप्तोर्यामसंस्थेति सा तदन्तर्भूतैवेति भावः। पशुकाम इति। अत्र ग्रहग्रहणं वाक्यान्तरेण प्राप्तं निर्वपेदितिवदनूद्यते। उक्थ्यसंस्थं क्रतुं कुर्यादुक्थ्यसंस्थां कुर्यादिति यावत्। एवमग्रिमवाक्ययोरपि स्तोत्रयागयोरनुवादः संस्थाविधिश्च फलार्थं इति बोध्यम्। भावार्थाधिकरणन्यायेन शंकते—नन्विति। ग्रहणादीत्यादिपदेन स्तोत्रयागयोः परिग्रहः। मुख्य उक्थ्यशब्दे लक्षणापत्तेः संस्थाविधिरेव युक्त इत्याह-उच्यत इति। तत्सम्बन्धात् स्तोत्रसंबंधात्। स च स्वपूर्वकालतारूपः 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति'इति वचनात्। न चेहेति। मुख्यत्वादिति भावः। ननु समाप्तिरूपसंस्थायामपि स्तोत्रसम्बन्धाद् उपचार एवेत्याशङ्क्याह—समाप्तेरिति। ननु स्तोत्रविशिष्टे प्रयोगाद्विशेषणभूतस्तोत्रमेवाकृत्यधिकरणन्यायाल्लाघवाद्वाच्यमस्त्विति शङ्कते—नन्विति। स्तोत्रमात्रविशिष्टे क्रतौ प्रयोगाभावान्नैवमित्याह—तत्सम्बन्धीति। स्तोत्रमात्रसम्बन्धीत्यर्थः। लक्षणा चेदिति। समाप्तौ लक्षणा चेत् तां विना स्तोत्रवैशिष्टयमात्रेण प्रयोगापत्तिरित्यर्थः। तत्र तथा सति। वाक्यांतरेति। ग्रहं वेत्यादिवाक्यप्राप्तमित्यर्थः। एवमिति। षोडशी यज्ञ इति प्रयोगादित्यर्थः। ननु स्तोत्रस्याप्युक्थ्यादिशब्दवाच्यत्वात्तदेव फले विधीयतामत आह—तत्र त्विति। स्तोत्रतत्समाप्त्युभयवाचित्वे सतीत्यर्थः। आश्रयतः यज्ञरूपात्। 'गुणवचनानामाश्रयतो लिंगवचनानी'त्युक्तेरिति भावः। व्यवस्थायाः प्रकृतोपयोगमाह—फलवाक्ये चेति। 'स वै षोडशी नाम यज्ञ' इत्यादिरूपो वाक्य-

शब्दः वाक्यशेषादवगम्यत इति संस्थैव फलं चोद्यते, स्तोत्रं तु पूर्ववदनूद्यते। अतिरात्रः इति तु रात्रिमतीत्य यः सन्तिष्ठते यज्ञः, स उच्यते। तत्र सत्यपि संस्थाविशिष्टयज्ञवचनत्वे विशेष्यस्य यज्ञस्य प्राप्तत्वादप्राप्ता संस्थैव विधीयते। विधेयस्य च फलमिति संस्थैव फले साधनम्। तदिह विचार्यते—किं दीक्षणीयाद्यङ्गविधानं ज्योतिष्टोमस्य, संस्थानां च समानम्? उत ज्योतिष्टोमस्यैवेति। तत्र—

तुल्यप्रकरणत्वेन सर्वेषां फलवत्त्वतः।
तुल्यमङ्गविधानं स्यादिति प्राप्ते ऽभिधीयते॥
वैरूप्यमङ्गवाक्यानां प्रसज्येतोभयान्वये।
संभवत्येकरूपत्वे नानारूपं न युज्यते॥
न च क्रतुमनादृत्य संस्थाभिर्घटतेऽन्वयः।
संस्थावधारणेनैव युज्यते क्रतुसङ्गतिः॥

संस्था त्वक्रियात्मकत्वाद्दध्यादिवदाश्रयभूतां क्रियामपेक्ष्य फलं साधयति। साधननिवेशि चाङ्गजातम्, तद्यदा संस्थाभिः सम्बद्धुं प्रस्थितम्। तदा तत्साधनत्वनिर्वाहिका क्रियापि तत्रैव दृश्यते। सा च स्वयमपि फलवत्त्वात्संस्थार्थमपि प्रस्थितमङ्गजातं किमिति न गृह्णाति? तस्मात् संस्थासम्बन्धवादिनोऽप्यवर्जनीयः क्रतुसम्बन्ध इति। न केवलसंस्थार्थत्वम्, क्रतुस्तु स्वयमेव फलसाधनत्वादनादृत्यैव संस्थां शक्नोत्यङ्गजातमात्मसात्कर्तुमिति तदर्थमङ्गविधानम्, न संस्थार्थम्। अत एवागृह्यमाणविशेषत्वादुभयार्थमित्यपि न शक्यं वक्तुम्, विशेषग्रहणात्।

एवमपि संस्थार्थत्वं किं न भवति, वैरूप्यादिति ब्रूमः। अङ्गविधयो हि न स्वार्थमात्रे पर्यवस्यन्ति, आनर्थक्यप्रसङ्गात्। प्रयोगवाक्ये तु विशेषणत्वेन स्वार्थं समर्पयन्ति। तेन नित्यानित्यप्रयोगद्वयानुसारेण नित्यवदनित्यवच्च स्वार्थं बोधयन्तस्तात्पर्यभेदाद् भिद्येरन्, यो ज्योतिष्टोमेन फलं कुर्यात्, स एवम्। यश्च ज्योतिष्टोमे कदाचित्संस्थाफलार्थी, स एवमिति। किं च गुणः फलाय चोद्यमानः पूर्वप्राप्तां परप्रयुक्तां क्रियामाश्रित्य पश्चाच्चोद्यते, त्र्यंशयुक्ता च क्रिया प्रयुज्यते। तत्र प्राक्तनक्रियाविधिसमये व्यापृतानाम-

---

शेषः। एवमुक्थ्यादावपि ज्ञेयम्। विशिष्टेति। 'सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते' इति न्यायादिति भावः। विधेयस्य चेति। भावार्थाधिकरणन्यायस्याप्राप्तधात्वर्थविषयत्वात्तस्यात्रापवाद इति भावः। एवमुपोद्घातं समाप्य प्रकृतमाह—तदिहेति। वैरूप्यं नित्यानित्यसंयोगप्रयुक्तम्। उभयान्वये नित्यकाम्योभयसंस्थान्वये। अस्तु तर्हि काम्यसंस्थार्थमेवेत्यत आह—न चेति। स्वयममेव आश्रयानपेक्ष एव। एवं विशेषे सत्यपि संस्थाकाङ्क्षावशात्ताभिरप्यन्वयमाशंङ्क्य वैरूप्यदोषं प्रागुक्तं विवृणोति—एवमपीत्यादिना। तात्पर्यभेदात् नित्यानित्यप्रयोगद्वयान्वयतात्पर्यभेदात्। कालभेदावृत्तिरूपोऽपि वाक्यभेदः स्यादित्याह—किं चेति। निविद्धिः

ङ्गविधीनां पश्चात्तनेऽपि गुणफलविधौ व्याप्रियमाणानां विरम्य व्यापारः प्रसज्यते। अयञ्चापरोऽत्र विशेषः—सोमस्तावच्छ्रुत्या यागार्थः; तत्संस्कारार्थाश्च क्रयाभिषवग्रहणादयस्तद्द्वारत्वाद्यागार्था एव न संस्थाभिः सम्बध्येरन्, सर्वं च प्रकरणं सोमसंस्कारविधिमिश्रमिति, तैरसम्बन्धिपदैर्विच्छिन्नं संस्थानां प्रकरणं न दीक्षणीयादिकमप्यङ्गमलं ग्रहीतुम्। तस्मादसमानविधानाः संस्थाः॥

इति संस्थाधिकरणम्॥ १६॥

इति शास्त्रदीपिकायां तृतीयस्याध्यायस्य षष्ठः पादः॥ ६॥

## अथ तृतीयाध्यायस्य सप्तमः पादः

१

प्रकरण० समानासमानविधिप्रसङ्गाद्वाक्यप्रकरणविरोधाविरोधविचारेण दर्शपूर्णमासयोः 'वेद्यां हवींष्यासादयति, वेदिं खनति, बर्हिषि हवींष्यासादयति, बर्हिर्लुनाती'ति श्रुता वेदिर्बर्हिर्धर्माः किमङ्गप्रधानहविषां साधारणाः? उत प्रधानहविषामेव? इति चिन्त्यते। तत्र वाक्यस्वान्तन्त्र्ये सत्यानर्थक्यात्, क्रत्वन्तरे चातिप्रसङ्गादवश्यं प्रकरणेनैकवाक्यत्वमपेक्षितव्यम्, प्रकरणञ्च प्रधानस्यैवेति प्रधनहविषामेव वेद्याद्यङ्गम्, न प्रयाजादिहविषामिति प्राप्ते, ब्रूमः—

---

सामिधेनीप्रकरणस्येव सोमसंस्कारविधिभिः संस्थाप्रकरणस्य विच्छेदान्न तासामुपदेशप्रमाणेन धर्मलाभ इत्याह—अयं चेत्यादिना। प्रयोजनं पूर्वपक्षे यज्ञस्याशीरित्यादियज्ञपदवन्मन्त्रस्य संस्थासु लोपः। सिद्धान्ते तु यज्ञस्य संस्थायाश्चाशीरित्यूह इति। सूत्रं स्पष्टार्थम्॥

इति श्रीमत्पदवाक्यप्रमाणज्ञतत्सद्रामचन्द्रसूरिवरात्मज तत्सद्वैद्यनाथकृतायां
शास्त्रदीपिकाव्याख्यायां प्रभाव्याख्यायां
तृतीयस्य षष्ठः पादः॥६॥

## अथ तृतीयाध्यायस्य सप्तमः पादः

१

प्रकरण० संगतिमाह—समानेति। तन्त्रतारूपसाधारणस्य सामानविध्यविशेषरूपत्वात्प्रसङ्ग इत्यर्थः। विचारेण विचारद्वारेण। क्रत्वंतरे पिण्डपितृयाज्ञादौ। अतिप्रसङ्गात् वेद्यादि

सत्यम्, प्रकृतैकवाक्यत्वम्। तत्तु अवच्छेदकतया, न तु ग्राहकतया, वाक्यस्यात्यन्तसङ्कोचप्रसङ्गात्। प्रधानगृहीता हि वेदिस्तदर्थेष्वेव हविःषु स्यात्, तत्र वाक्यस्यात्यन्तसङ्कोचः स्यात्। तस्मान्नायं वाक्यार्थः-प्रधानार्थहविरासादनद्वारेण प्रधानापूर्वं वेद्यां कुर्यादिति। किं तर्हि ? यद्दर्शपूर्णमासोपकारि हविः तद्वेद्यामिति। एवं हि नातिसङ्कोचः कृतः स्यात्। न चानर्थक्यम्, अङ्गहविरपि च प्रधानस्योपकारकमेवेति तत्रापि वेदिः स्यात्।

अथ वाऽस्तु प्रधानस्य ग्राहकत्वम्, द्वारं तु न तदर्थमेव हविः, किं तु तदुपकारि हविर्मात्रम्, वाक्यसङ्कोचपरिहारात्। संभवति चोपकारिमात्रस्यापि द्वारत्वम्। अतः प्रधानप्रयुक्तानामपि वेदिबर्हिस्तद्धर्माणां प्रयाजाद्यपूर्वस्वरूपनिवृत्तिद्वारेण तादर्थ्यं प्रयाजादीनामिव भविष्यतीति सिद्धं प्रयाजाद्यङ्गत्वम् वेद्यादेः॥

इति बर्हिरादीनामङ्गप्रधानसाधारण्याधिकरणम्॥ १॥

२

फल० ज्योतिष्टोमे केशश्मश्रुवपनादयो यजमानसंस्काराः किमङ्गप्रधानार्थाः ? उत प्रधानार्था एवेति संशयः। तदर्थं च किमेते कर्तृत्वांशपातिनः ? किंवा भोक्तृत्वांश-

---

प्रसङ्गात्। ग्राहकतयेति। प्रधानेतिकर्तव्यताकाङ्क्षया गृहीतं यद् हविस्तद्द्वारा वेद्यादिना कुर्यादिति रीत्या विनियोजकतयेत्यर्थः। ग्राहकतयैकवाक्यत्वं प्रदर्शयन्नपाकरोति—तस्मादिति। वेद्यां प्रधानार्थेत्यन्वयः। वेद्यधिकरणत्वस्योक्तद्वारेणापूर्वभावनां प्रत्यङ्गत्वविधानं वेति ज्ञेयम्। किं तर्हीति। तथाच स्वाङ्गत्वापेक्षया स्वोपकारित्वस्य लघुत्वात्तेन संबंधेन हविरादिविशेषकतयैकवाक्यतेति भावः। तद्वेद्यामित्यनंतरमासादयेदिति शेषः। नन्वितिकर्तव्यताकाङ्क्षारूपस्य प्रकरणस्याविशेषकत्वादिति तत्र तत्रोक्तेस्तस्य ग्राहकत्वमेव युक्तमत आह—एवं हीति। तथा च बलवद्वाक्यविरोधे विशेषकत्वमप्युक्तरीत्याभ्युपगन्तव्यमिति भावः।

ननु दुर्वलस्यापि प्रकरणस्यानर्थक्यपरिहारायोपजीव्यत्वात्तत्स्वारस्यभंगो न युक्त इत्यस्वरसादाह—अथवेति। ननु प्रधानानङ्गस्य कथं तदङ्गद्वारत्वमित्याशङ्क्याह—संभवति चेति। अभ्युदितेष्ट्यङ्गयोर्दधिपयसोः पाकानङ्गयोरपि तदुपकारितामात्रेण प्रणीताधर्मद्वारतया नवमे वक्ष्यमाणत्वादिति भावः। तत्कार्योपयोगितया तदङ्गत्वे प्रयाजादीनामिवेति दृष्टान्तः। असंयुक्तं प्रकरणविरुद्धसंयोगरहितं प्रकरणरूपविशेषात्प्रधानस्याङ्गमिति सूत्रार्थः। प्रयोजनं स्पष्टम्॥

इति बर्हिरादीनामङ्गप्रधानसाधारण्याधिकरणम्॥ १॥

२

फलसंयोगात्तु०अङ्गप्रधानसाधारण्यापवादात्संगतिः। केशेति। 'केशश्मश्रु वपते' 'नखानि निकृन्तते' 'दतो धावते' इत्यादिवाक्यविहिता इत्यर्थः। यजमानेति आत्मनेपदाल्लिङ्गाच्चेति

पातिन इति। तत्र भोक्तृत्वस्य प्रधानफलत्वात्, तदर्थाः सन्तः संस्कारा प्रधानतुल्यकक्षतया न प्रधानार्था भवेयुः। तादर्थ्यञ्च प्रकरणादवगतम्। अतः कर्त्रर्थाः, कर्ता चाङ्गप्रधानार्थः, संस्कारा अपि तद्गता अङ्गप्रधानशेषाः स्युरिति प्राप्ते अभिधीयते—

**भोक्तृत्वस्य प्रधानत्वाददृष्टत्वाच्च तद्गुणाः।**
**संस्काराः कर्तृभावस्तु गुणो दृष्टश्च सोऽन्यतः॥**

प्रधानं हि भोक्तृत्वम्, गुणभूतं कर्तृत्वम्, भोक्तृत्वार्थत्वात्। संस्काराश्च गुणभूताः। ते प्रधानार्था एव युक्ताः, न गुणार्थाः, 'गुणानां च परार्थत्वादि'ति न्यायात्। अदृष्टञ्च भोक्तृत्वं शास्त्रगम्यमुपायमपेक्षते, कर्तृभावस्तु विनाऽपि संस्कारैरुत्पद्यमानः प्रमाणान्तरादेव दृष्ट इति न तादर्थ्यमेषाम्। न च भोक्तृत्वार्थानां प्रधानाङ्गत्वविरोधः, न हि ते फलं जनयन्ति, यतः प्रधानतुल्याः स्युः। किं तु तादृशं संस्कारं यजमाने कुर्वन्ति, येन यजमाने प्रधानं स्वफलं जनयितुमलम्। तेन क्षेत्रसंस्काराणामिव बीजावपनार्थत्वं प्रधानार्थत्वं संस्काराणाम्। प्रधानफलं हि यजमानो भुङ्क्ते, नाङ्गफलम्, तस्य क्रत्वर्थत्वात्॥

**इति स्वामिसंस्काराणां प्रधानार्थताधिकरणम्॥ २॥**

---

भावः। कर्त्तव्यांशेति। पुरुषस्य कर्तृत्वभोक्तृत्वाभ्यां क्रतूपयोगित्वादिति भावः। अतः प्रकरणानुरोधात्। तद्गुणा भोक्तृत्वाङ्गभूताः संस्कारा इत्यन्वयः। दृष्टश्चेति। एककर्तृभावः। अन्यतः संस्कारातिरिक्ते शरीरेच्छादिना दृष्ट इति न संस्कारापेक्ष इत्यर्थः। एतदेव विवृहणोति—प्रधानं हीत्यादिना। प्रमाणान्तरात् आगमातिरिक्तलौकिकप्रमाणात्। यद्यपि कर्त्तुरपि स्रुगादिवद् पूर्वसाधनत्वयोग्यतासिध्यर्थं संस्कारापेक्षा सम्भवति तथापि फलाश्रयत्वयोग्यता ततोऽप्यन्तरङ्गेति तदर्थतैव युक्तेत्याशयः। अत एव 'हिरण्यमालिनः प्रचरंती'ति बहुवचनबलात्कर्त्तृसंस्कारकतापि दृश्यत इति। न हीति। प्रमाणाभावादिति भावः। तर्ह्यङ्गत्वे कर्त्तृत्वार्थतैवेत्याशङ्क्याह—किं त्विति। फलाधानयोग्यताद्वारा प्रधानाङ्गत्वमित्यर्थः। अत्र दृष्टान्तमाह—क्षेत्रेति। बीजावापेनाङ्कुरे जननीये तद्योग्यतारूपोपकारेण क्षेत्रसंस्काराणां यथा बीजावापस्य नाङ्गत्वं तथात्रापीत्यर्थः। अनेनैव न्यायेनाङ्गाङ्गित्वमपि स्यादत आह—प्रधानेति। प्रयोजनं पूर्वपक्षेऽग्नीषोमीयपश्वङ्गत्वात्तद्विकृतावतिदेशः। सिद्धान्ते तु नेति। स्वामियुक्तं वपनादि प्रधानस्याङ्गम्। कुतः? फलसंयोगात् योग्यताजननद्वारा प्रधानफलोत्पत्यर्थत्वादिति सूत्रार्थः॥

इति स्वामिसंस्काराणां प्रधानार्थताधिकरणम्॥२॥

३

चिकी० सौमिकी वेदिः किं प्रधानार्था? उताङ्गार्थापीति चिन्ता। तत्र 'इयति शक्ष्यामहे, अस्यां कर्तुमि'ति तुमुना चिकीर्षितार्थता गम्यते। प्रधानञ्च फलवत्त्वाच्चिकीर्षितम् नाङ्गानि। तस्मात्प्रधानार्था वेदिः। स्थितं तावदपर्यवसितम् ॥

इति सौमिक्या वेदेरंगप्रधानार्थताधिकरणम् ॥३॥

४

तथा० संयोगादित्यनुवर्तते। तल्लिप्सयाऽन्तरोपक्रमः। दर्शपूर्णमासयोर्हविरभिमर्शनार्थौ मन्त्रौ 'चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्राऽमावास्यामि'ति। किन्तावङ्गप्रधानार्थौ? उत प्रधानार्थाविति। पौर्णमास्यमावास्याशब्दयोः प्रधानवचनत्वात्प्रधानार्थत्वम्।

स्थितादुत्तरम्—सत्यम् चिकीर्षितार्था वेदिः, साङ्गं हि चिकीर्षितम्। तद्धि फलाय पुष्कलम्, न करणमात्रम्। अतोऽङ्गप्रधानार्था वेदिरिति अग्नीषोमीयविकारे निरूढपशौ प्रवर्तते। नन्ववेदिमतामियम्, अग्नीषोमीयस्य तु प्राकृती वेदिरस्त्येवेति न तदङ्गमयम्। नैवम्; वचनबलात्सर्वार्थत्वावगतेः प्राकृती न प्रयोक्ष्यते।

द्वितीयस्योत्तरं पौर्णमास्यमावास्याशब्दौ कर्मवचनौ, न च कर्मणः अभिमर्शनं सम्भवति। तस्माद् द्वितीयेयं सप्तम्यर्थे व्याख्यातव्या। पौर्णमासीप्रयोगे चतुर्होत्राऽ-

---

३

चिकीर्षया च० आपवादिकी संगतिः। इयतीति। पट्त्रिंशत्प्रक्रमादिपरिमितां वेदिं विधायैतदाम्नातम्। प्रक्रमः पादविक्षेपः। इयति एतावत्स्थलात्मिकायामस्यां वेद्यामित्यर्थः। चिकीर्षति। इच्छायां तुमुन्विधानादिति भावः ॥

इति सौमिक्या वेदेरङ्गप्रधानार्थताधिकरणम् ॥३॥

४

तथा० तल्लिप्सया अनुवृत्तिलाभेच्छया। हविषोऽभिमर्शनं स्पर्शनम्। 'पृथिवी होता द्यौरध्वर्युः रुद्रोऽग्नीत् बृहस्पतिरुपवक्ते'ति चतुर्होतृमंत्रः। 'अग्निर्होता अश्विनावध्वर्यू त्वष्टाग्नीत् मित्र उपवक्तेति' पञ्चहोतृमन्त्रः। स्थितात् पूर्वाधिकरणपूर्वपक्षात्। वचनबलादिति। उपदेशेनातिदेशबाधादित्यर्थः। ननु कर्मणोऽभिमर्शनान्वयानुपपत्त्या तदङ्गहविर्लक्षणैव

भिमृशेत्, अमावास्याप्रयोगे पञ्चहोत्रेति हविर्मात्रस्य चाभिमर्शनं वाक्यान्तरप्राप्तम्—'आसन्नानि हर्वींष्यभिमृशेदि'ति। तस्मादङ्गप्रधानार्थौ मन्त्रौ॥

इत्यभिमर्शनमन्त्रस्याङ्गप्रधानोभयार्थताधिकरणम् ॥४॥

५

दीक्षा० ज्योतिष्टोमे दीक्षा 'दण्डेन दीक्षयति'त्यादि। दक्षिणा 'तस्य द्वादशशतम् दक्षिणे'ति। तत् दीक्षादक्षिणमङ्गप्रधानार्थम् उत प्रधानार्थमेवेति। तत्र दीक्षाणाम् यजमानसंस्कारत्वात्प्रधानार्थत्वे सिद्धेऽग्नीषोमीयादौ दीक्षितविनियोगादङ्गप्रधानार्थत्वशङ्का। दक्षिणा तु प्रयोगाङ्गत्वादङ्गप्रधानार्थैव। 'दीक्षाः सोमस्य, दक्षिणाः सोमस्ये'ति वचनं परम्परयापि षष्ठ्युपपत्तेर्नाङ्गार्थतां विरुणद्धीति प्राप्ते—

ब्रूमः,—वचनात्प्रधानार्थत्वम्, अन्यथा हि वचनं न्यायप्राप्तानुवादमात्रमनर्थकं स्यात्। न च साक्षादपेक्षिताङ्गाङ्गिभावपरत्वे अर्थवत्त्वे च संभवति परम्पराश्रयणम् आनर्थक्यञ्च युक्तम्। तस्मात्प्रधानार्थत्वम्॥

इति दीक्षादक्षिणयोः प्रधानार्थताधिकरणम् ॥५॥

---

कुतो नेत्यत आह—हविर्मात्रस्य चेति। तथा च किंविषयमभिमर्शनमित्यपेक्षाया अभावान्नाङ्गव्यावृत्यर्थत्वं वाक्यस्योचितम्। किन्तु मन्त्रव्यवस्थामात्रमेवापेक्षितमिति प्रयोगलक्षणैवोचितेत्याशयः। किञ्च प्रयोगस्य कर्माभिन्नत्वादपि तल्लक्षणायां लाघवमङ्गलक्षणायां तु गौरवमित्यपि ज्ञेयम्। वस्तुतः पौर्णमास्यादिपदस्य काल एव मुख्यत्वान्न प्रयोगलक्षणापीति बोध्यम्। प्रधानहविर्लक्षणायामपि न तदङ्गहविर्लक्षणा, किन्तु लाघवात्तत्सम्बन्धिहविर्लक्षणेत्यङ्गप्रधानार्थत्वसिद्धिरित्यप्याहुः। सूत्रप्रयोजने स्पष्टे॥

इत्यभिमर्शनमन्त्रस्याङ्गप्रधानोभयार्थताधिकरणम् ॥४॥

५

दीक्षा० आपवादिकी सङ्गतिः। दीक्षेति। विहितेति शेषः। क्रत्वङ्गयमनियमपरिग्रहसङ्कल्परूपदीक्षाव्यञ्जकत्वेन दण्डादिविधिः। 'मेखलया दीक्षयति कृष्णाजिनेन दीक्षयती'त्यादिसङ्ग्रहायादिशब्दः। तस्येति। गोरित्यर्थः। द्वादशाधिकं शतं द्वादशशतम्। यजमानेति। 'यजमानं दीक्षयती'ति द्वितीयाश्रुतेरिति भावः। दीक्षितेति। 'यो दीक्षितो यदग्नीषोमीयं पशुमालभेते'त्यनेनेत्यर्थः। आदिना 'दीक्षितः सोमं क्रीणाती'ति क्रयपरिग्रहः। तथा च तत्र विशेषणीभूतदीक्षाया अपि विधौ गौरवात्तदनुवाद एव। 'दण्डेन दीक्षयती'त्यादिदीक्षाविधेरङ्गप्रधानसाधारणकर्तृसंस्कारविधित्वतात्पर्यग्राहक इत्याशयः। वचनादिति। न च त्रिदोषा परिसंख्येति शङ्क्यम्। फलतः परिसंख्यायां त्रैदोष्याभावादिति भावः। प्रयोजनमग्नीषोमीयविकारेऽतिदेशानतिदेशरूपम्। सूत्रं स्पष्टार्थम्॥

इति दीक्षादक्षिणयोः प्रधानार्थताधिकरणम् ॥५॥

६

तथा० यूपे श्रूयते 'अर्धमन्तर्वेदि मिनोति, अर्धं बहिर्वेदी'ति। तत्र चिन्ता किमन्तर्वेद्येकदेशो यूपाङ्गत्वेन चोद्यते? उत बहिर्वेदिसहितो यूपस्य मानदेशम् लक्षयति? इति। तत्र लक्षणाया अन्याय्यत्वाद्वेद्येकदेशस्य श्रुतस्य यूपार्धाङ्गत्वेन विधेः, अर्द्धे च मीयमानेऽर्धान्तरं बहिरेव भवतीत्यर्थाद्बहिर्वेदीत्यनुवादः स्यात्। स्यादेवम्—यद्यर्धमेवान्तर्वेदीति वाक्यार्थः स्यात्। न त्वेवम्, परिसंख्यादोषात्। किं त्वर्द्धं तावदन्तर्वेदि मातव्यमिति। ततश्चार्धान्तरं न विहितम्, न प्रतिषिद्धम्। तस्यान्तर्बहिर्वा मानं स्यात्। तत्र 'अर्धं बहिर्वेदी'त्यपि विधातव्यम्, तत्र वाक्यभेदः। पाक्षिकानुवादत्वे नित्यवच्छ्रवणविरोधः।

नन्वर्धमिति विशेषणादर्धान्तरव्यावृत्तिः स्यात्। सत्यम्; विधितः व्यावृत्तिः। यत्र हि विशेषणं श्रुतम्, तत एवान्यव्यावृत्तिर्भवति। वेदिमानविधेश्चार्धम् विशेषणमिति विधानादेवार्धान्तरं व्यावर्तते, इच्छातस्तु वेद्यामेव मानमर्धान्तरस्य को वारयेत्? तस्मादर्धं बहिर्वेदीत्यपि विधातव्यमिति वाक्यभेदः स्यात्। उपलक्षितदेशविधाने त्वेकार्थविधानादवाक्यभेदः। तदयमर्थः—यत्र मीयमानस्य यूपस्यार्धमन्तर्वेदि भवति, अर्धं च बहिर्वेदि तत्र मिनुयादिति लौकिक एव देशविशेषो विधीयते न संस्कृतो वेदिदेशः॥

इत्यन्तर्वेदियूपानङ्गताधिकरणम्॥६॥

७

सामि० 'उत यत्सुन्वन्ति, सामिधेनीस्तदन्वाहुरि'ति। दक्षिणस्मिन्हविर्धानेऽभिषवः तत्र स्थित्वा सामिधेनीरनुब्रूयादित्यर्थः। तत्र संशयः— किं हविर्धानं सामिधेन्यङ्गम्?

---

६

तथा यूपस्य० पूर्वोक्तवाचनिकविनियोगापवादात्सङ्गतिः। यूपमानं यूपस्थितिदेशपरिमाणम्। मानदेशमिति। असंस्कृतसन्धिधिदेशमित्यर्थः। विधित इति। विधेयत्वेनेत्यर्थः। विधानादेवेत्यपादाने पञ्चमी। अर्धान्तरेऽन्तर्वेदिविधिर्नास्तीत्यर्थः। लक्षणीयमर्थं दर्शयति—तदयमिति। न चार्धं बहिर्वेदीत्येव विधीयताम्, अर्धान्तरे च सामान्यतः प्राप्तैव वेदिरित्यन्तर्वेदीत्यनुवादोपपत्तिरिति वाच्यम्, मिनोतीति सकृच्छ्रवणात्तदनुषङ्गे मानाभावेन द्वयोरेकवाक्यताया एव लक्षणयौचित्यात्, अनुवादवैय्यर्थ्याच्चेत्याशयात्। प्रयोजनं पूर्वपक्षे—यूपैकादशिन्यां वेदिविवृद्धिः, सिद्धान्ते नेति। यूपस्य वेदिस्तथा अङ्गमिति सूत्रार्थः॥

इत्यन्तर्वेदियूपानङ्गताधिकरणम्॥६॥

७

सामिधेनी० यत्तदिति लुप्तसप्तमीकम्। यत्र सुन्वंति सोमाभिषवं कुर्वन्तीत्यर्थः। तत् तत्र

उत तल्लिक्षितो देशः ? इति। तत्र पूर्ववद् वाक्यभेदाभावाल्लक्षणापरिहाराय हविर्धानमेवाङ्गमिति प्राप्तम्,

तदुच्यते—हविर्धानस्य हविर्धारणार्थत्वान्न प्रयोजनान्तरापेक्षा। प्रकृतेश्चाहवनीयप्रत्यग्देशः सामिधेन्यङ्गत्वेन प्राप्तः, स च दक्षिणस्योत्तरस्य वा हविर्धानस्य समीपे भवति। तत्र नियममात्रं लाघवाद्विधेयम्। हविर्धानस्य तु अत्यन्ताप्राप्तमङ्गत्वम्, अनपेक्षितञ्च न युक्तं विधातुम्। तदिहापि देशलक्षणा॥

इति सामिधेनीनां हविर्धानस्यानङ्गताधिकरणम्॥७॥

८

शास्त्र० प्रासङ्गिकी कथा वृत्ता समाख्यायास्त्वतः परम्।
विचिचारयिषुः पूर्वैविरुद्धत्वाविरुद्धते॥
तदुपोद्घातरूपेण ज्योतिष्टोमादिकर्मसु।
नानाकर्तृसमावेशं वक्तुमारभतेऽधुना॥

दर्शपूर्णमासज्योतिष्टोमादिकर्तृफलदक्षिणायुक्तं कर्म किं सर्वंयजमानेनैव कर्तव्यम्? उत द्रव्योत्सर्गमात्रे हविस्त्यागदक्षिणादानादिके यजमाननियमः? अन्यत्राऽनियमो यजमानः अन्यो वा? अथवोत्सर्ग एव यजमानः? अन्यत्रान्य एवेति विचारः। तत्र 'स्वर्गकामो यजेते'ति सामानाधिकरण्येनात्मनेपदेन च कर्तुरेव फलावगमादर्थात्सर्वं कुर्यात्, दक्षिणादानन्तु धर्ममात्रम्। ननु प्रधानस्यैव सामानाधिकरण्यात्मनेपदाभ्यां फलार्थिकर्तृकत्वम्, नाङ्गानाम्। तत्र भावनाया एव हि प्रत्ययवाच्याथास्ताभ्यां तत्कर्तृकत्वम्, सा च त्र्यंशेत्यङ्गानामपि स एव कर्ता।

उच्यते—सत्यमर्थिनः साङ्गे कर्तृत्वम्, तत्तु प्रयोजकत्वेनापि सम्भवति,

---

सामिधेनीः अन्वाहुरित्यस्य पर्यवसितार्थमाह। दक्षिणस्मिन्निति। हविर्धानं सोमाधारशकटम्। स्पष्टमन्यत्। इहापीत्यातिदेशिकसङ्गतिसूचनम्। सूत्रे इतीत्यनन्तरं वचनादिति अन्वयः। हविर्धानयोर्मध्ये दक्षिणं सामिधेनीनामङ्गमित्यर्थः।

इति सामिधेनीनां हविर्धानस्थानङ्गताधि॥७॥

८

शास्त्रफलम्० प्रासङ्गिकीति 'तुल्यः सर्वेषां पशुविधिरि'त्यारभ्य स्थानस्य पूर्वैः सह विरोधाविरोधचिन्तनेन सामानविध्यविचारस्तत्प्रसंगादाराच्छिष्टमित्यादिना वाक्यप्रकरणविरोधाविरोधचिन्तया ग्रहधर्माणामनारभ्याधीतग्रहसामानविध्यचिन्ता, तत्प्रसङ्गाच्चैतत्पादादौ वेद्यादेरंगप्रधानसाधारण्यचिन्ता समाप्तेत्यर्थः। विचिचारयिषुः विचारयितुमिच्छुः। धर्ममात्रमिति। अदृष्टार्थमित्यर्थः। ताभ्याम् सामानाधिकरण्यात्मनेपदाभ्याम्। तत्कर्तृकत्वम् फलार्थिकर्तृकत्वम्। त्र्यंशा, साध्यसाधनेतिकर्तव्यतारूपांशत्रयवती। प्रथमपक्षनिरासेन द्वितीय-

'तत्प्रयोजको हेतुश्चे'ति स्मरणात्, षड्भिर्हलैः कृषतीति प्रयोगाच्च। तत्रासति परम्पराप्रमाणे साक्षादेव कर्तृत्वं स्यात्, अस्ति तु प्रमाणं परिक्रयवचनम्। तच्च कर्त्रन्तरसद्भावे दृष्टार्थं भवति। सर्वश्च स्वयमशक्तोऽन्येन कार्यं कारयति। यजमानोऽपि शक्तः स्वयं कुर्यात्, अशक्तस्त्वन्येन कारयेत्। परिक्रयश्च पक्षे भविष्यति। द्रव्योत्सर्गन्त्वन्यस्याशक्यत्वात् स्वयमेव कुर्यादिति प्राप्ते,

ब्रूमः—सम्भवति प्रयोजकत्वेनापि कर्तृत्वे परिक्रयस्य नित्यवदाम्नातस्य पाक्षिकत्वायोगान्नित्यमुपसंहर्तुमुत्सर्गादन्यदन्येनैव कारयितव्यम्॥

इत्यङ्गानामन्यद्वारानुष्ठानाधिकरणम्॥ ८॥

९

तत्रा० उत्सर्गादन्यत्रान्य इत्युक्तम्। तत्र कति तेऽन्ये ? इति संशये, विशेषाभावादनियमः, सर्वथा परिक्रयसिद्धेः। अथवा यजमानस्यैव कर्तृत्वे प्राप्ते, परिक्रयवशादन्योपादाने स चैकेनापि सिध्यतीत्येक एवान्यः स्यात्। अध्वर्य्वादिसंज्ञास्तु कर्मनिमित्ताः-अध्वरं युनक्तीत्यध्वर्युः, आवाहयतीति होता, तथान्येऽपि। तथा च दर्शयति 'यः एवामुमावहामुमावहेत्यावाहयति, तदेव होतुर्होतृत्वमि'ति। ततश्चैकस्यापि तत्तत्कर्म कुर्वतः पाचकलावकवदुपपन्ना नानासंज्ञाः। तस्मादेकः स्यात्।

स्यादेवं० यदि प्रवृत्तिसमये तदुत्तरकालं वैताः संज्ञाः श्रूयेरन्। वरणन्त्वप्रवृत्ताभ्यर्थनम्। तत्रैताः श्रूयन्ते 'स ब्रह्माणं वृणीते' इत्यादि। न च तदा कर्म-

---

मुत्थापयति उच्यत इत्यादिना। परिक्रयेति। कर्त्रानतिसंपादनं परिक्रयस्तत्साधनविधायकं दक्षिणावचनमित्यर्थः। सिद्धान्तव्यावर्त्तनार्थमाह—सर्वश्चेति। तं परिक्रयम्। नित्यमिति। नित्यतया प्रयोगविषयीकर्त्तुमित्यर्थः। प्रयोक्तरि साङ्गप्रधानकर्त्तरि फलम्, तल्लक्षणत्वात् शास्त्रप्रमाणकत्वादित्यर्थः। तस्मादित्यादि स्पष्टम्। एवं प्रयोजनमपि॥

इत्यङ्गानामन्यद्वारानुष्ठानाधिकरणम्॥८॥

९

तत्रार्थात्० अल्पबाधेनोपपत्तौ बहुबाधायोगात्कतीति संशयान्तर्गतमेकर्त्विक्पक्षमाह-अथवेति। अध्वर्य्वादिनानासंज्ञानां कथमेकत्र समावेश इत्याशङ्क्याह अध्वर्य्वादीति। तथान्येऽपीति कर्मणो वृंहणादवेक्षणेन वर्द्धनाद्ब्रह्मेत्यादि व्युत्पत्त्या ब्रह्मादयोऽपीत्यर्थः। तथा च चत्वार ऋत्विज' इति तत्र कर्मसंख्यानिमित्तो भाक्त एव व्यवहार इति भावः। होत्रादिशब्दानां तत्तत्कर्मनिमित्तत्वे वैदिकवाक्यशेषोऽपि मानमित्याह—तथाचेति। प्रवृत्तिसमये आवाहनाद्यनुष्ठान-

निमित्तत्वं सम्भवतीति वरणनिमित्तत्वम्, भिन्नानि च वरणानि 'एकस्यैवं पुनः' श्रुतिरि'ति न्यायात्। न चैकस्मिन्पुरुषे बहूनि वरणानि समवयन्ति, दृष्टार्थत्वात्। न हि वृतस्य वरणं दृष्टार्थम्। तेन वरणानां तन्निमित्तानां च संज्ञानामसङ्कीर्णविषयत्वाद्यावद्वरणम् तावत्संज्ञं च कर्तृभेदः कर्माङ्गम्। अतस्तावत्संख्यैः कर्तृभिर्ज्योतिष्टोमस्य निर्वृत्तिः। किं पुनरिदं वरणम्? उक्तं प्रार्थनमिति। तच्च महर्त्विजां होत्रकाणां च मन्त्रेण 'अग्निर्होताऽसौ मानुषः' इत्यादिना। अन्येषां तु लौकिक्या वाचा प्रतिप्रस्थाता मे भवानस्त्वित्यादि। किमेतावता होत्रादित्वं भवति? को दोषः? न ह्येताः संज्ञाः प्राग्दृश्यन्ते। वरणोत्तरकालं च य एवं वृत, स्वयं चैवमसानीति मनसा सङ्कल्पयति, तत्र होत्रादिसंज्ञाः प्रसिद्धवद्वेदे याज्ञिकप्रयोगे च व्यवह्रियमाणा दृष्टाः। तस्माद्य एवं वृतः, य एवं च सङ्कल्पयति, स एव होत्रादिसमाख्यां लभते। सत्रेषु तु दृष्टार्थत्वाद्वरणस्यार्थलोपान्निवृत्तिः। तदभावे च 'आध्वर्युं गृहपतिं दीक्षयित्वे'त्यादिव्यवहारदर्शनात्सङ्कल्पादेव होत्रादित्वसिद्धिः। प्रकृतावपि हि सङ्कल्पो निमित्तमेव। यो हि व्रियमाणो नेच्छति, न स होतेत्युच्यते। तस्मात्प्रकृतौ वरणविधानात्तन्मिश्रः सङ्कल्पो निमित्तम्। सत्रेषु तु सङ्कल्पमात्रम्, प्रयोगदर्शनात्। न चैवं वैरूप्यादशोभनमिति मन्तव्यम्, प्रमाणबलादीदृशस्यैव शोभनत्वात्। न हि सत्रे होत्रादिशब्दानां गौणत्वे किञ्चित्प्रमाणमस्ति। अथाप्यत्यन्तमैकरूप्येण

---

काले। वरणनिमित्तत्वमिति। यूपं छिनत्तीत्यादौ यूपशब्दस्य छेदनादिनिमित्तत्ववदिति भावः। वरणैक्ये तन्निमित्तभिन्नसंज्ञानुपपत्तेराह—भिन्नानि चेति। कुत इत्याकांक्षायामाभ्यासादित्याह—एकस्यैवमिति। एकस्मिन्नेव तावद्वरणानुष्ठानादनेकसंज्ञासमावेशशङ्कानिरासायाह—न चैकस्मिन्निति। ननु ब्रह्मा भवेत्यादिवरणवाक्ये ब्रह्मत्वकीर्तनाद्ब्रह्मणः सतो वरणम् तेन च ब्रह्मत्वमतोऽन्योन्याश्रय इत्याशयेन शङ्कते—किंपुनरिति। प्रार्थनरूपेण वरणेन प्रार्थ्यमानत्वेन ब्रह्मादेरन्वयाद्वरणेन ब्रह्मत्वम् न तु पूर्वसिद्धत्वं तस्यापेक्षितमिति सूचयन्नाह—उक्तमिति। ननु 'ब्रह्माणं वृणीते' इत्यत्र वरणेन ब्रह्मत्वं भावयेदिति नोपपद्यते, वरणसंस्कारस्यैव ब्रह्मत्वेनाभेदादित्याशयेन शंकते—किमिति। प्रागिति। वरणमपूर्वमित्यर्थः। तथात्वे हि वरणसाध्यतानुपपत्तिः स्यान्न त्वेवमित्यर्थः। यत्तु वरणहोतृत्वयोरभेदाद् 'होतारं वृणीत' इति वाक्यार्थानुपपत्तिरिति तत्राह—वरणोत्तरमित्यादि। वरणेनानतिसंकल्पयोर्दृष्टत्वात्तद्भाव्यता। तावेव च ब्रह्मादिशब्दनिमित्तमिति न काप्यनुपपत्तिरिति भावः। अर्थलोपात् आनतिरूपप्रयोजनलोपात्। ननूभयविशिष्टवाचकस्यान्यतरविशिष्टे प्रयोगे लक्षणापत्तिरिति शंकामपाकरोति—नहीति। न चानतिविशिष्टं संकल्पस्यानतिसंकल्पयोर्वा वाच्यत्वे सत्रसाधारणाभावाद्गौरवात् होता वृतः सामिधेनीरन्वाहेत्यस्यासामञ्जस्याच्च न वरणजन्यानतिसंकल्पवाचिता युक्तेत्यत आह—अथापीति। प्रयोगबहिर्भूतसंकल्पवारणायाह—क्रतुप्रक्रम इति। प्रयोगकालिककर्मविशेषकर्तृत्वाध्यवसाय अध्वर्य्यादिपदप्रवृत्तिनिमित्तमित्यर्थः।

कार्यम्. ततः सङ्कल्प एव निमित्तम्। य एव क्रतुप्रक्रमे तदौपयिकं होत्रादिभावमात्मनः सङ्कल्पयति, स एव होत्रादिशब्दैरुच्यते। तथा च वक्ष्यति 'सत्रे तु स्वयं कर्तृकत्वाद्वरणभरणयोरनपेक्षितयोरग्रहणाद्विनैव ताभ्यामवैगुण्यमिति' योग्यतामात्रेणाध्वर्यु त्वादिसिद्धिः' इति।

नन्वदृष्टमध्वर्यु त्वादिकं कथमविहितेन सङ्कल्पेन जायते ? विहितमेव तु वरणं तस्य जनकं युक्तम्। यद्यदृष्टमध्वर्यु त्वादिकं तदर्थञ्च वरणम्, तत्र सत्रेऽपि तत् ऋतुयाज्यावरणवत् कर्तव्यमिति सुतरांम् अध्वर्य्वादित्वसिद्धिः। न चादृष्टाध्वर्यु - त्वादिसद्भावे प्रमाणमस्ति, वरणविधिर्हि दृष्टार्थतयोपपत्तेर्नादृष्टकल्पनायालम्। यदि चादृष्टमिदं विहितोपायसाध्यञ्च ततो दर्शपूर्णमासयोर्होता 'वृतः सामिधेनीरन्वाहे'ति वचनात् प्रागेव वरणात्सामिधेनीषु प्रवृत्तस्य प्रसिद्धहोतृभावस्य पश्चाददृष्टार्थं वरणं न होतृत्वोपयोगीति होतृत्वं न स्यात्। तस्मादध्यवसायादेव होतृत्वमङ्गीकर्तव्यमिति सत्रेऽपि होत्रादित्वसिद्धिः।

ननु होतृशब्दवाच्यः स्यामित्यध्यवसायादेव तद्वाच्यो भवतीत्येतदलौकिकमेव, तत्र तच्छब्दवाच्यो भवेति प्रार्थनादेव तच्छब्दवाच्यो भवतीत्येतद्वा किं लौकिकम् ? तत्सिद्धं संज्ञया कर्तॄणां भेदः। मा भूत्संज्ञया, वरणानां तु बहूनां युगपत्प्रयोगवचनपरिगृहीतानां दृष्टार्थत्वेनैकपुरुषासमवायाद्यावद्वरणं वरीतव्याः कर्तारो भिद्यन्ते ॥

इति परिक्रीतानामृत्विजां संख्याविशेषनियमाधिकरणम् ।९॥

१०

**चम०** ज्योतिष्टोमे पूर्वाधिकरणे षोडश कर्तारः सिद्धाः। सन्ति च चमसाध्वर्यवो

---

वक्ष्यति इति। अत्रैव पादे 'कर्म कार्यादि'त्यादिसूत्रे वार्त्तिककारैरित्यर्थः। योग्यतामात्रेण अध्यवसायमात्रेण। वरणजन्यादृष्टविशेषस्याध्वर्युत्वस्य मुख्यवरणाभावेन सत्रेऽसंभवाद्गौणमेव- तत्राध्वर्य्वादिपदमिति प्राभाकरः शंकते–नन्विति। तत्र तस्मिन् पक्षे। तत् अध्वर्य्वादिवरणम्। दूषणान्तरमाह–यदि चेति। तथा च वरणजन्यादृष्टं विनापि होत्रादिपदप्रयोगाद्वरणोत्तरमपि तत्प्रयोगे व्यभिचारेण न वरणनिमित्तकत्वाभ्युपगमो युक्त इत्याशयः। ननु स्ववाचकशब्दे स्वेच्छाया निमित्तत्वं न क्वापि दृष्टमिति शंकते–नन्विति। वरणनिमित्तत्वेऽपि तुल्यमेतदित्याह–तच्छब्देति। प्रमाणवशेन तु नामकरणादौ पित्रिच्छावत्स्वेच्छाया अपि निमित्तत्वे न किंचिद्बाधकमिति भावः। माभूदिति। यौगिकत्वादिति भावः। सूत्रप्रयोजने स्पष्टे ॥

इति परिक्रीतानां ऋत्विजां संख्याविशेषनियमाधिकरणम् ॥९॥

१०

**चमसा०** अध्वर्य्वादिसंज्ञानां रूढत्वात्परस्परवैलक्षण्याच्च भेदकत्वेऽपि प्रकृते यौगिक-

नाम ते । किं तेषामेवान्यतमाः ? उत तेभ्योऽन्ये ? इति । यौगिकत्वात्संज्ञाया अध्वर्युपुरुषा एव चमसाध्वर्यव इति प्राप्ते ब्रूमः—

संज्ञा नामाऽस्तु योगेन वरणं तु पृथक् श्रुतम् ।
तत्तेष्वसम्भवात् तेषां तेभ्यो भेदं करिष्यति ॥

एतेन सदस्यो व्याख्यातः, तस्यापि वरणसमाम्नानात् ॥

इति चमसाध्वर्यूणां पृथक्त्वाधिकरणम् ॥ १० ॥

११

उत्प० तेषु संदेहः—कति चमसाध्वर्यव इति । बहुवचनस्य संस्कार्यगतत्वेनाविवक्षितत्वादनियमः एकः, द्वौ, बहवो वा । उच्यते—वरणाङ्गतया सत्यमविवक्षितं बहुत्वम् । क्रत्वङ्गतया तु तेषामुपादेयत्वाद्विवक्षितमेव बहुत्वम् । न ह्यन्यत्र सिद्धक्रतुसम्बन्धानुद्दिश्य वरणमात्रं ग्रहसंमार्गवद्विधीयते, किं त्वनेनैव वचनेन प्रकरणसहायेन वरणसंस्कारयुक्ताश्चमसाध्वर्यवः क्रतुं प्रति विधीयन्ते—वरणेन चमसाध्वर्यून्नाम कर्तॄन् क्रत्वङ्गत्वेनोपाददीतेति । तस्मादुपादेयत्वात्तेषां कर्माङ्गतया विवक्षितं बहुत्वम् । तथा च 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनसंस्कार्यस्यापि स्वाध्यायस्यार्थावबोधं प्रत्युपादेयत्वाद्विवक्षिता संख्येति शाखान्तराधिकरणे दर्शितम् ।

एतेन 'पुरोहितं वृणीते' इत्यत्राप्येकत्वविवक्षा व्याख्याता । तथा 'अध्वर्युं वृणीते' इत्यादावेकत्वमध्वर्युकार्यार्थम् । अतः सर्वमाध्वर्यवमेकेन कर्तव्यम्, अध्वर्युणा च कर्तव्यमित्यरुणैकहायनीन्यायेन मिथो नियमः, पश्वेकत्वयोरिव । तथा हौत्रादिकमपि, हौत्राध्वर्यवयोस्तु मिथो भिन्नकर्तृत्वमङ्गम्, समाख्याभेदात् ॥

इति चमसाध्वर्यूणां बहुत्वनियमाधिकरणम् ॥११॥

---

त्वनिश्चयाद्बहुष्वेकरूपत्वाच्च न भेदकतेत्यधिकाशङ्कया पूर्वपक्षमाह—यौगिकत्वादिति । चमसाध्वर्यवश्च भिन्नाः । तैः ब्रह्मादिभिः सह भिन्नत्वेन व्यपदेशादिति सूत्रार्थः । स च व्यपदेशो 'मध्यतः कारिणां चमसाध्वर्यवः होत्रकाणां चमसाध्वर्यवः' इति प्रैषो ज्ञेयः । मध्यतः कारिणः होतृब्रह्मोद्गातृयजमाना होत्रकाः । प्रशास्तृब्राह्मणाच्छंसि पोतृनेष्ट्रच्छावाकाग्नीध्राः ॥

चमसाध्वर्यूणां पृथक्त्वाधिकरणम् ॥१०॥

११

उत्पत्तौ० क्रत्वङ्गतयेति । संस्कार्यस्य पूर्वं विनियोगानवगमस्थले विनियोगकल्पनस्यावश्यकत्वात्तत्रोपादेयत्वेनोपस्थितसङ्ख्याया विवक्षेति भावः । एतदेव 'ग्रहं संमार्ष्टि' इत्यादिवैलक्षण्यप्रदर्शनपूर्वकमुपपादयति—न ह्यन्यत्रेति । उक्तन्यायमध्वर्य्वादिवरणविधिष्वतिदिशति—तथेति । सूत्रप्रयोजने स्पष्टे ॥

इति चमसाध्वर्यूणां बहुत्वनियमाधिकरणम् ॥११॥

१२

दश० स्थिते बहुत्वे कियन्तो बहव इति, अनियमे त्रित्वे वा प्राप्ते—चमसदशत्वाद्दशभिस्तावद्भवितव्यम्, आधिक्ये प्रमाणाभावाद्दशैव ॥

इति चमसाध्वर्यूणां दशसंख्यानियमाधिकरणम् ॥१२॥

१३

शमि० अस्ति शमिता । स किं प्रकृतेभ्योऽन्यः ? तेषां वाऽन्यतमः ? इति संशये, संज्ञाभेदादन्यत्वम् । यौगिकत्वात्संज्ञाया वरणाभावाच्च तेषामेवान्यतमः । तत्राध्वर्योः 'पराङावर्ततेऽध्वर्युः पशोः संज्ञप्यमानादि'ति वचनाद् असामर्थ्यात् अन्ये तत्पुरुषाः संज्ञपयेयुः ॥

इति शमितुरपृथक्त्वाधिकरणम् ॥१३॥

१४

उप० सन्त्युपगाः, ते किं प्रकृतेभ्योऽन्ये ? उत त एवेति । तत्र गातॄणां गुणभूता उपगातारो लोकवत् । न चर्त्विजामृत्विजस्तुल्यकक्षा गुणभूता भवितुमर्हन्तीत्यन्य इति प्राप्ते—

उच्यते—उत्पत्तौ वरणाभावात्संज्ञायाश्च यौगिकत्वात्, ऋत्विजामेव प्रैषप्रैषार्थकारित्ववत्परस्परोपकारसम्भवादृत्विज एवोपगायेयुः ॥

इत्युपगस्यापृथक्त्वाधिकरणम् ॥१४॥

---

१२

दशत्वं० स्पष्टमेतत् ॥

इति चमसाध्वर्यूणां दशसंख्यानियमाधिकरणम् ॥१२॥

१३

शमिता० संज्ञप्यमानात् हन्यमानात् । तत्पुरुषा इति । प्रतिप्रस्थात्रादय इत्यर्थः । 'शमिता पशुं कण्ठे गृह्णाती'त्याध्यवर्यवे समाम्नानात्समाख्ययाध्वर्योः कर्तृत्वात्तस्यान्यत्र व्यापृतत्वे 'इतरदन्यस्तेषां यतो विशेषः स्यादि'ति न्यायेन प्रतिप्रस्थात्रादेः कर्त्तव्यमित्यर्थः ॥

इति शमितुरपृथक्त्वाधिकरणम् ॥१३॥

१४

उपगाश्च० 'चत्वार उपगायंती'ति विहिताः सन्त्युपगा इत्यर्थः । 'नाध्वर्युरुपगायेदि'ति निषेधः प्रत्यभावोऽनुपपन्न इत्यध्वर्युभिन्नानामुपगातृत्वलिंगदर्शनादिति सूत्रार्थः ॥

इत्युपगस्यापृथक्त्वाधिकरणम् ॥१४॥

१५

विक्र० अस्ति सोमविक्रयी। स किं तेषामन्यतमः? उतान्यः? इति। पूर्ववद्वरणाभावात्तेषामन्यतमः।

मैवम्--विक्रयस्याक्रत्वर्थत्वात्, क्रत्वर्थोपात्ता ऋत्विजो न तं कुर्युः। तस्मादन्यः विक्रयी।

इति सोमविक्रेतुः पृथक्त्वाधिकरणम् ॥१५॥

१६

कर्म० ब्रह्मादयश्चमसाध्वर्यवश्च बहवः कर्तारः समधिगताः, ते सर्वे किमृत्विक्शब्दवाच्याः, ? उत केचिदेवेति। तत्र—

ऋतौ कार्यं हि सर्वेषां तेनर्तुयजनादमी।
सर्वे तदभिधेयाः स्युरविशेषेण यष्टृवत् ॥

ऋतुयजननिमित्तो ह्ययमृत्विक्शब्दः कृदन्तः। सर्वे च ते तत्कार्यंकरणादृतौ यजन्तीति यष्टृशब्दस्येव ऋत्विक्शब्दस्याप्यभिधेयाः। 'सप्तदशर्त्विजः' इति वचनमवयुत्यानुवाद इति प्राप्ते, ब्रूमः—

ऋतुयागनिमित्तत्वे भवेत्सर्वाभिधायिता।
संख्याश्रुतिविरोधात्तु तन्नैवं संश्रयामहे ॥
वरणं तन्निमित्तं स्याद् ब्रह्माध्वर्य्वादिशब्दवत्।
ततो नातिप्रसङ्गस्स्याद्वचनं ह्येवमर्थवत् ॥

'ऋत्विजो वृणीत' इति 'यूपं छिनत्ती' तिवद्वरणेनर्त्विजः कुर्यादित्यर्थः। न तु प्रसिद्धानृत्विजो वृणीत इति। ननु वरणनिमित्तत्वेऽप्यतिप्रसङ्गः स्यात्, चमसाध्वर्यूणामपि वरणसद्भावात्। उच्यते-न वरणमात्रं निमित्तम्, किन्तु ब्रह्मादिगतो वरणविशेषः। ननु ब्रह्मादिष्वनुगतं चमसाध्वर्युभ्यो व्यावृत्तं वरणावान्तरसामान्यं

---

१५

विक्रमी ० स्पष्टार्थमेतत् ॥

सोमविक्रेतुः पृथक्त्वाधिकरणम् ॥१५॥

१६

कर्मकार्यात्० गुरुमतेन सिद्धान्तमाह–वरणं तन्निमित्तमिति। वचनमिति सप्तदशर्त्विज इतीत्यर्थः। वृताः सप्तदशैव ऋत्विज इत्यर्थोपपत्तेः। त्वन्मते तु ऋतुयजनकर्तारः सप्तदशेवेत्यर्थानुपपत्तिः, चमसाध्वर्यूणामपि तथात्वेन सप्तदशत्वासंभवादित्यर्थः। अतिप्रसंग इति।

न किंचित्। मा भूदवान्तरसामान्यम्, विशेष एव निमित्तम्। योऽयमृत्विक्-शब्दो ब्रह्मादिशब्दवदेकैकस्यैव न वाचकः सोऽयं साधारणशब्दः, न सामान्य-शब्द इति, यथाश्रुतभाष्यार्थः। नत्वेतद् युक्तम्, क्लृप्तावयवशक्तिपरित्यागाददृष्ट-शक्त्यन्तरकल्पनाप्रसङ्गात्। स्मृतिविरुद्धं च, क्विबन्तत्वेन निपातनात् 'कर्तरि कृदि'ति वचनात्।

तथाऽन्यदपि स्मरणम्—'ऋत्विग्यज्ञकृदुच्यते' इति। एवमपि वरणनिमित्तताऽऽश्रीयेत, यद्यन्यथा सप्तदश श्रुतिर्नोपपद्येत। सा तु यथा वरणनिमित्तत्वे तद्विशेष-निमित्तत्वादुपपन्ना, तथर्तुयजनमपि ब्रह्मादिगतमेव ऋत्विक्शब्दस्य निमित्तमिति हरिशब्दस्येव पशुगतं हरित्वम्। एवं च प्रसिद्धावयवशक्तिपरित्यागः, स्मरणविरोधश्च न कृतो भवति, श्रुतिश्चोपपादिता। वरणविधिश्चैवम् प्रसिद्धपदार्थको भवति। यावदुक्तं भवति—'याजकान् वृणीते इति तावदृत्विजो वृणीते' इति। तेन नाप्रसिद्धपदार्थकत्वम्। वरणनिमित्तकत्वे तु यूपादिवदप्रसिद्धपदार्थकत्वम्, वचनव्यक्ति-विपर्यासश्चैवं स्यात्, न चैतन्न्याय्यम्। अध्वर्य्वादिशब्दानां तु प्रसिद्ध्यभावाद्य एव च वरणेन, प्रकारान्तरेण वाऽध्वर्युत्वेन क्रतुस्वामिभिः परिकल्पितः, स एवाध्वर्युरिति युक्तम्। ऋत्विक्शब्दस्तु प्रसिद्धावयवत्त्वात्संख्याश्रुतेश्च ऋतु [क्रतु] यजनविशेषनिमित्त इति विवेकः॥

इति ऋत्विगिति नाम्नोऽसर्वगामिताधिकरम्॥१६॥

---

तथा च वृताः सप्तदशैवेत्यर्थानुपपत्तिस्त्वन्मतेऽपि तुल्येत्यर्थः। न किंचिदिति। प्रमाणसिद्धमिति शेषः। विशेष एवेति। ब्रह्मादिगततत्तद्वरणव्यक्तिरेवेत्यर्थः। तथाचाक्षादिपदवत् नानार्थऋत्विक्-शब्द इत्यर्थः। यद्यपि ब्रह्माद्यन्यतमगतत्वेनानुगमः संभवति, तथापि गौरवात्तदुपेक्षितेति ज्ञेयम्। कथं तर्हि भाष्ये सामान्यशब्दत्वोक्तिरित्यत आह—योऽयमिति। तथाचैकमात्रावाचकत्वरूप-साधारणशब्दत्वं सामान्यशब्दत्वमभिप्रेतमिति भावः। तदिदं दूषयति—न त्वेतदिति। शक्त्यन्तरम् रूढिः। निपातनादिति। 'ऋत्विक् दधृगि'त्यादि सूत्रेणेत्यर्थः। गमेर्डो इत्या-दिवद्व्युत्पत्तिमात्रार्थतामाशंक्याह – कर्त्तरीति। धर्मस्मृतिविरोधमप्याह – ऋत्विगिति। दृतिहरीति हरतेर्दृतिनाथयोः पशावित्यनुशासनादिति भावः। श्रुतिश्चेति। सप्तदशे-त्यादिकेत्यर्थः। योगरूढतयोपपादितेत्यर्थः। प्रकारान्तरेण अध्यवसायेन। विशेषेति। ब्रह्मादिगतस्वरूपेत्यर्थः। प्रयोजनं पूर्वपक्षे 'हिरण्यमालिन ऋत्विजः प्रचरंती'त्यादिधर्मश्चमसा-ध्वर्यूणामपि, सिद्धान्ते नेति॥

इत्यृत्विगिति नाम्नोऽसर्वगामिताधिकरणम्॥१६॥

१७

नियः सप्तदशेत्युक्तम्, के ते इत्यनियमे प्राप्ते, 'ऋत्विग्भ्यो दक्षिणां ददाती'-त्युक्त्वा 'अग्नीध्रे ददाती' त्युक्त्वा 'ब्रह्मणे ददाती' त्यादिना ब्रह्मादीनां षोडशानां कीर्तनात्तेषामृत्विक्त्वम् ॥

इति ऋत्विक्त्वाधिकरणम् ॥१७॥

१८

स्वामि०—अथ सप्तदशः किं सदस्यः ? उत यजमान इति संशयः। तत्र कर्मक-त्वात्सदस्यः, न चासौ नास्तीति मन्तव्यम्, वरणाम्नानात्। न च ब्रह्मण एवेदं वरणम्। तस्य हि 'ब्रह्माणं वृणीते' इति वरणं विहितम्, न पुनर्विधातुं शक्यम्, अनुवादे चानर्थक्यम्, अध्वर्य्वादिष्वपि तथा प्रसङ्गात्। न च सदस्यव्यतिरेकेण ब्रह्मवरणं नास्ति, 'ब्रह्माणं वृणोते' इति वरणवचनमृत्विग्बहुत्वसाधनाधिकरणे भाष्यकृतोदा-हृतम्। तस्मात्सदस्यः सप्तदश इति प्राप्ते -

ब्रूमः—सदस्यवरणमदृष्टार्थम्, न तु कश्चिदपि पदार्थस्तेन कर्तव्यः। येन यजमानादन्य ऋत्विक् स्यात्। तस्मात्स्वामी सप्तदशः ॥

इति स्वामिसप्तदशत्वाधिकरणम् ॥१८॥

१९

ते सर्वा० नानाकर्तृषु सिद्धेषु साम्प्रतं सम्प्रधार्यते।
किमव्यवस्थितं तेषां कार्यं किं वा व्यवस्थितम् ॥

तत्र प्रकरणाविशेषात्सामर्थ्याच्च यद्येन शक्यं कर्तुम्, तत् सर्वमव्यवस्थया कुर्यात्, दुर्बला हि लिङ्गप्रकरणाभ्यां समाख्या न तद्विरोधेन नियमं कर्तुमलम्, ततः सर्वे सर्वार्थाः। स्थितं तावदपर्यवसितम्।

---

१७, १८

नियः स्वामिसप्तदशः० उभयमप्यतिस्पष्टार्थम्। अदृष्टार्थमिति। सदस्यकर्त्तव्य-पदार्थाश्रवणात् सक्तुवद्विनियोगभङ्गेन सदस्यवरणमदृष्टार्थं विधीयत इति भावः ॥

इति ऋत्विक्त्वाधिकरणम् ॥१७॥

ऋत्विजां स्वामिसप्तदशत्वाधिकरणम् ॥१८॥

१९

ते सर्वार्थाः० उपोद्घाततया विचारस्य संगतिः। 'तस्योपदेशे'त्यात्रत्यसूत्रम्। उपदेशो वचनम् 'मैत्रावरुणः प्रेष्यती'त्यादि। समाख्यानं विशेषरूपम्। तेन तस्य कर्मणो निर्देश इत्यर्थः।

अग्निषु चिन्ता। ते ह्यनारभ्यवादेन 'यदाहवनीये जुहोती' त्यादिना होमर्थतया विहिताः। ते किं प्रकृत्यर्थाः? उत वैकृतानामप्यामनहोमादीनां साधारणाः? इति। पर्णतादिवत् प्रकृत्यर्थत्वं मन्यमानस्योत्तरम्। 'अग्नयश्च सर्वार्थो' इत्यनुवर्तते। तदनुवृत्त्यर्थञ्चान्तरा सूत्रकरणम्। स्वकालत्वात् स्वतन्त्राम्नानात्। अप्रकरणाधीतत्वादित्यर्थः। न चात्र द्विरुक्तिदोषः, प्रकृतिसमकालमेव विकृतावप्युपदिष्टत्वाद्धोमस्य। यत्र तु यागमात्रे चोदिते प्रकृतित एव 'चतुरवत्तञ्जुहोती' त्येतदतिदेशात्प्राप्यमाणं प्रतीक्षितव्यम्, तत्र पर्णमयीन्यायः। उपदिष्टेषु तु वैकृतेष्वपि होमेषु समानमेवाग्निविधानम्।

स्थितादुत्तरम्—लिङ्गप्रकरणाभ्यां हि न सर्वेषां समुदितं कर्तृत्वं, प्राप्तम्, येन समाख्याविरोधः स्यात्, किन्त्वनियमेन। तत्र किं केन इत्यस्ति व्यवस्थापेक्षा। तां च कुर्वती समाख्या अनुगुणत्वान्न बाधितव्या। तस्माद्यथासमाख्यं नियमः, हौत्रं होत्रा, आध्वर्यवञ्चाध्वर्युणा। तथा किमेष एवोत्सर्गः? सर्वम् हौत्रं होत्रा आध्वर्यवमध्वर्युणेति न क्वचिदपोद्यते। यत्र प्रत्यक्षं वचनम्—नेष्ट्रीयम्, याजमानमिति तत्र विशेषसमाख्याबलाद्वचनबलाच्च सामान्यसमाख्या अपोद्यते। तदुक्तम् 'तस्योपदेशसमाख्यानेन निर्देशः' इति। तदिदम् समाख्याविनियोगस्यैवातिप्रसङ्गनिवारणे शेषभूतं सूत्रम्, नाधिकरणान्तरम्। अत एव तस्यैव लिङ्गं पश्चादुच्यते प्रातरनुवाके होतृदर्शनादिकम्॥

इति आध्वर्यवादीनामध्वर्युकर्तव्यतानियमाधिकरणम्॥१९॥

२०

प्रेषा०—उपदेशात्सिद्धे समाख्याबाधे, तद्विशेषचिन्ता। 'मैत्रावरुणः प्रेष्यति चान्वाहे' ति किं प्रैषमात्रे, अनुवचनमात्रे च मैत्रावरुणोपदेशेन हौत्रादिसमाख्याबाधः? अथवा यानि प्रैषान्तान्यनुवचनानि 'होता यक्षदग्निमि' त्यादीनि, तेष्वेवेति संशयः।

---

पोत्रीयमित्यादौ पूर्वपक्षानुक्तौ बीजमाह—तदिदमिति। 'तत्संयोगात्कर्मणो व्यवस्था स्यादि'ति सूत्रस्य शेषभूतमित्यर्थः। उच्यते इति। 'तद्वच्च लिंगदर्शनमि'त्यग्रिमसूत्रे इत्यर्थः। हौत्रसमाख्याते प्रातरनुवाके होतुः 'प्रातरनुवाकमनुब्रुवत' इति होतुः प्राप्तस्य दर्शनं समाख्याविनियोगे लिङ्गमित्यर्थः॥

इत्याध्वर्य्वादिष्वध्वर्य्वादीनां कर्तृतानियमाधिकरणम्॥१९॥

२०

प्रैषानुवचनम्० प्रसंगसंगतिं दर्शयति—उपदेशादिति। प्रैषाः 'अग्नये समिध्यमानायानुब्रूही'त्यादयः। प्रैषमनु उच्यमानानि अनुवचनानि 'प्रवो वाजा अभिद्यवे' इत्यादीनि। कानिचित्प्रैषत्वे सत्यनुवचनानि—'होता यक्षदि'त्यादीनि। अत्र हि 'होतर्यजे'त्यंशे प्रैषरूपता।

'प्रैषानुवचनोद्देशात्साहित्यमविवक्षितम् ।
विधीयते प्रशास्ताऽतः समस्तव्यस्तयोस्तयोः ॥
नैवं समस्तयोरेव मैत्रावरुणचोदना ।
अज्ञातकर्तृकत्वेन व्यस्ते हि ज्ञातकर्तृके ॥

प्रैषाणामध्वर्युः, अनुवचनानाञ्च होता निर्ज्ञात इत्यनपेक्षितं कर्तृविधानम्। यानि तु प्रैषान्तान्यनुवचनानि, तेषु प्रैषांशेनाध्वर्योः, अनुवचनांशेन होतुः प्राप्तेरेकमन्त्रत्वेन नानाकर्तृसमावेशासम्भवाद्धोतुरध्वर्योश्च प्रच्युतानामज्ञातकर्तृकाणां मैत्रावरुणविधानमपेक्षितार्थं भवति। तदधिकारे चेदं वचनमिति तत्रैव मैत्रावरुणविधिः ॥

इति प्रैषानुवचनयोर्मैत्रावरुणकर्तृकत्वनियमाधिकरणम् ॥२०॥

२१

चम० चमसेषु संशयः—किं तैश्चमसाध्वर्यवो जुहुयुः? उताऽध्वर्युः। तत्राध्वर्यवसमाख्यां सामान्यभूतां बाधित्वा विशेषसमाख्यया चमसाध्वर्यव एव तैर्जुहुयुः। नैवम्,

सामान्यनिरपेक्षो हि विशेषस्तस्य बाधकः।
चमसेऽध्वर्युसंज्ञेयमध्वर्युप्राप्त्यपेक्षिणी ॥
चमसेऽध्वर्युसद्भावाच्चमसाध्वर्यवो यतः।
ततः साध्वर्यवपेक्षत्वान्न तद्बाधेन वर्तते ॥

तद्बाधे हि चमसाऽध्वर्युसंज्ञैव न स्यात् अतद्भावात्। काममजुह्वतामेव तद्भावः

---

प्रेष्येत्यध्वर्युप्रैषानन्तर्यच्चानुवचनत्वमपीति। ननु प्रैषान्तानुवचनानामपि वार्त्तिके होत्र एव पाठोक्तेः उभयत्रापि पाठे वा विकल्पेनोभयनिवेशोपपत्तेस्ततप्रच्युतेरसंभव इत्यस्वरसादाह—तदधिकारे चेति। प्रैषान्तानुवचनरूपपुरोनुवाक्याधिकारे चेत्यर्थः। एवञ्चाधिकारादेवोद्देश्यविशेषान्वयसिद्धेर्वाक्यभेदपरिहारेण सिद्धान्तसिद्धिरित्यर्थः। सूत्रप्रयोजने स्पष्टे ॥

इति प्रैषानुवचनयोर्मैत्रावरुणकर्तृकत्वाधिकरणम् ॥२०॥

२१

चमसाध्वर्यवः० प्रसंगसंगत्याह—चमसेष्विति। चमसहोमेष्वित्यर्थः। संशयः अध्वर्युकर्तृकत्वचमसाध्वर्युकर्तृकत्वसंशयः। अतद्भावादिति। अयमर्थः—चमसाध्वर्युपदं हि न रूढम्, किन्तु यौगिकमेव। तत्र चाध्वर्युपदस्य मुख्याध्वर्युवाचकस्यात्र गौणत्वं तत्सादृश्यात्। तच्च चमसहोमकर्तृत्वेनैव मुख्याध्वर्योरन्यत्र व्यापृतत्वे बोध्यत इति। अध्वर्योस्तत्राकर्तृत्वे तु सादृश्याभावाद्गौणचमसाध्वर्युपदप्रयोगानुपपत्तिरिति नाध्वर्यवसमाख्यायाश्चमसहोमेषु बाध इति। सूत्रप्रयोजने स्पष्टे ॥

इति चमसहोमेऽध्वर्युचमसाध्वर्युकर्तृताधिकरणम् ॥२१॥

स्यात् । अतोऽध्वर्युर्जुहुयात् । तस्य ग्रहहोमादिव्यापृतत्वेनाऽशक्तौ सत्यां ते जुहुयुः ।

इति चमसहोमेऽध्वर्युचमसाध्वर्युकर्तृताधिकरणम् ॥२१॥

२२

वेदो० औद्गात्रे समाम्नातः श्येनः, वाजपेयश्चाध्वर्यवे । द्वावपि ज्योतिष्टोमविकारौ । तत्र किं प्रधानवेदसमाख्यात उद्गाताऽध्वर्युश्चेतरत्र च सर्वपदार्थानतिदिष्टान् कुर्यात् ? उत प्रकृतिवन्नाना कर्तारः ? इति । तत्र प्रधानविधिविधेयत्वादङ्गानां तत्समाख्यालाभात्तस्याश्चोपदेशरूपत्वेनातिदेशाद्बलीयस्त्वात्तत्समाख्यात एक एव कर्ता सर्वं कुर्यात्, प्रकृतौ तु प्रत्यक्षवचनैरेव नानर्त्विग्विधानात्सत्यामपि प्रधानद्वारेणाध्वर्यवसमाख्यायां नानेव कर्तारः, इह तु चोदकदौर्बल्यात् तद्बाधेन समाख्याप्राप्त एक एव कर्ता स्यात् ।

अत्रोच्यते भवेदेवञ्चोदको यदि दुर्बलः ।
स तु प्रथमभावित्वात्समाख्यां बाधते बलात् ॥
अङ्गानां हि समाख्यानं प्रयोगवचनाश्रयम् ।
चोदकप्राप्त्यपेक्षस्तु प्रयोगविधिसंग्रहः ॥

प्राकृतानामङ्गानां वैकृतप्रयोगविधिसंस्पर्शोत्तरकालं तत्समाख्या भवेत्, तत्संस्पर्शश्च चोदकप्रापितानां स्यात्, तेन च ते प्राप्यमाणाः सकर्तृका एव प्राप्यन्त इति कर्त्रपेक्षाभावादपेक्षानिबन्धनश्रुतिकल्पना समाख्या न कर्त्रन्तरमलं कल्पयितुम् । न चात्र 'शरमयं बर्हिरि' तिवत्प्राप्तबाधः, कल्प्यत्वात्समाख्याविनियोगस्य । कल्पनायाश्चापेक्षाधीनायास्तदभावेऽनुदयात् । अपि च पाठनिमित्ता अध्वर्य्वादिसमाख्या, न विधिनिमित्ता । न चौद्गात्रे पदार्थानां पाठः ।

तेन नास्ति समाख्यैषा विद्यमानाऽपि दुर्बला ।
श्येनादौ तेन नानैव कर्तारः प्रकृताविव ॥

इति श्येनवाजपेययोरनेककर्तृताधिकरणम् ॥२२॥

इति शास्त्रदीपिकायां तृतीयाध्यायस्य सप्तमः पादः ॥

---

वेदोपदेशात्० औद्गात्रे सामवेदे । आर्ध्वयवे तत्समाख्याते काण्डे । प्रधानविधिविधेयत्वादिति । समाख्यायाः कर्त्तृप्रापकत्वात्कर्त्तुश्च सांगप्रधानप्रयोगविध्यन्वयात्प्रयोगस्य चैकत्वात्प्रधानकर्त्तैव समाख्यालब्धः सर्वत्रौपदेशिकतयातिदेशिकात्प्रबल इत्यर्थः । अपेक्षानिबन्धनेति । अपेक्षानिबन्धना श्रुतिकल्पना यस्या इति विग्रहः । अपि चेति । आध्वर्यवसमाख्यातकाण्डपठितत्वमाध्वर्यवत्वं न तु तद्गतविधिविधेयत्वमिति भावः । वेदोपदेशात्प्रधानवेदविधानाद्वेदान्यत्वे प्रकृतौ सत्यपि यथोपदेशमेव पूर्ववत्प्रकृताविव स्युरिति सूत्रार्थः ॥

इति श्येनवाजपेययोरनेककर्तृकत्वाधिकरणम् ॥२३॥

इति श्रीमत्पदवाक्यप्रमाणाभिज्ञश्रीमत्तत्सद्रामबुधात्मजतत्सद्वैद्यनाथकृतायां शास्त्रदीपिकाटीकायां प्रभाख्यायां तृतीयस्य सप्तमश्चरणः ॥

## तृतीयेऽध्याये अष्टमः पादः

१

स्वामि० अस्ति हि परिक्रयो ज्योतिष्टोमे द्वादशशतदानमाध्वर्यवे समाम्नातम्, औद्गात्रे च। दर्शपूर्णमासयोश्चान्वाहार्यदानमाध्वर्यवे। ते किमध्वर्य्वादिना कर्तव्ये ? उत यजमानेनेति संशये, स समाख्यानादध्वर्य्वादिना। यथा चाध्वर्युः स्वद्रव्येणेतरान् परिक्रीणीते तमुपायं यजमानः कुर्यादिति प्राप्ते—

अभिधीयते-स्वामिकर्तृकत्वे सर्वत्र प्राप्ते परिक्रयवशात्परम्परया यागकर्तृत्वमाश्रितम्, न हि समाख्यामात्रात्साक्षात्कर्तृत्वं प्रधानवाक्यस्वरसावगतं शक्यते बाधितुम्। न हि 'यः कामयेत वीरो म आजायेतेति स चतुर्होतारं जुहुयादि'त्यादिष्वध्वर्य्वाश्रयणमिति। अतः परिक्रयात् प्रागध्वर्य्वादेरभावान्न तत्कर्तृकत्वं परिक्रयस्य। यजमान एव कर्ता। तस्य चात्मनि परिक्रयविरोधात् वर्त्मान्तराणि प्राप्नुवन्त्यन्यत्रैव भवन्ति, नियममात्रं समाख्यया क्रियत इति न परिक्रयेऽध्वर्युः समाख्यया भवति।

किंच सत्यपि कर्त्रन्तरप्रवेशेऽवश्यं स्वयं यजमानेन किञ्चित्कर्तव्यम्, तन्नियम एवायं परिक्रयविधिः, लाघवात् अध्वर्य्वादिरत्यन्ताप्राप्त एव विधेयः। तस्माद्याजमानं दानम्। यत्र तु वचनमस्ति 'य एतामिष्टकामुपदध्यात्, स त्रीन् वरान्दद्यादि'त्यादि, तत्र ऋत्विजामपि स्यात् वचनस्यातिभाराभावात्। अन्यत्र यजमानस्यैव॥

इति क्रयस्य स्वामिकर्मताधिकरणम् ॥१॥

---

## अष्टमः पादः

१

स्वामिकर्म० समाख्याया अपवादात्संगतिः। परिक्रयः ऋत्विगानतिसम्पादनम्। अन्वाहार्यश्चरुः। सः परिक्रयः। अध्वर्य्वादेर्द्रव्यार्जनप्रवृत्तस्य स्वद्रव्यव्ययानुपपत्तिमाशंक्याह— यथा चेति। समाख्यामात्रेण स्वरसावगतसाक्षात्कर्तृत्वबाधे बाधकमाह—न हि य इति। मे मम वीरः पुत्रो जायेतेति यः कामयेत स चतुर्होतृमंत्रेण जुहुयादित्यर्थः। परकार्यप्रवृत्तस्याध्वर्योः स्वगतफलार्थपरागिनषु होमासामर्थ्यादिति भावः। तस्मात्परिक्रयवशेनैव कर्त्रन्तरप्राप्तिरर्थात्परिक्रयातिरिक्त एवेत्याह—अत इति। प्राप्नुवन्तीति शत्रन्तम्। एवञ्च समाख्यायामपि विधिलाघवमित्याह—नियममात्रमिति। परिक्रयस्य नियमविधिलाघवादपि यजमानकर्तृकत्वमित्याह—किञ्चेति। वरान् वृषान्। परिक्रयः स्वामिन एव कर्म कर्मणो यजमानार्थत्वादिति सूत्रार्थः॥

इति क्रयस्य स्वामिकर्मताधिकरणम् ॥१॥

२

संस्का० पुरुषसंस्काराः कैश-श्मश्रुवपनादयः किमाध्वर्यवाः ? उत याजमाना एवेति। **समाख्यानादाध्वर्यवत्वे प्राप्ते,**

**ब्रूमः**—संस्काराः संस्कृतस्य कार्ययोग्यतामाधातुं क्रियन्ते। न च कश्चित् कार्ययोग्यताजननार्थं कर्तारं परिक्रीणीते, स्वयमेव योग्यत्वात्। स्वतश्च कार्यम् प्रति गुणभावेन परिक्रीणीते। तेन गुणतयैव परिक्रीतानां कर्तॄणां प्राप्तेः, यथाप्राप्तानामेव च समाख्यया व्यवस्थानात् यत्रैवं पुरुषाणां गुणभावः, तत्रैव समाख्यया नियमः। संस्कारास्तु याजमाना वचनादृत्विजामपि भवन्ति 'हिरण्यमालिन ऋत्विजः' इतिवत्॥

**इति वपनादिसंस्काराणां याजमानताधिकरणम्॥२॥**

३

**तपश्च०** अस्ति ज्योतिष्टोमे तपः कायशोषणं कर्म 'द्व्यहं नाश्नाती'त्यादि। तदाध्वर्यवम्? उत याजमानमिति। समाख्यानादाध्वर्यवम्, **दुःखात्मकत्वेन च कर्तृ-प्रतिकूलत्वान्नासौ संस्कार इति मन्यते।**

दुःखात्मकत्वादस्य दुःखफलं कार्यविरोधिनमधर्मं क्षपयितुं योग्यतास्तीति

---

२

संस्कारास्तु० समाख्यानादिति। आध्वर्यवसमाख्यावशात्कर्तृसंस्कारत्वमुचितमित्येवं फलिसंस्कारत्वमाक्षिप्य पूर्वपक्ष इति भावः। अथवात्र यजमानसंस्कारत्वे स्थिते सति 'फल-संयोगादि'त्यत्र कर्तृत्वभोक्तृत्वांशविचार इत्यर्थत एतस्य पूर्वत्वं बोध्यम्। संस्कारा इति। कार्ययोग्यताम् फलोत्पत्तियोग्यताम्। ननु ऋत्विजामपि कर्मकर्तृत्वयोग्यताजननार्थं संस्काराः स्युरित्याशंक्याह—न चेति। स्वयमेवेति। फलोत्पत्तियोग्यताजनकसंस्कारस्याधिकारित्वांश एवोपयोगस्योक्तत्वाद्यजमान एव तद्योग्य इति भावः। किमर्थं तर्हि परिक्रयस्तत्राह—स्वत-श्चेति। स्वार्थमित्यर्थः! एवञ्च कर्तृसंस्कारकत्वेऽपि समाख्याप्रवृत्त्यभावाद्याजमानत्वमेवे-त्याह-संस्कारास्त्विति। तेषु गुणत्वाभावेन समाख्यया कर्तृत्वाप्राप्तेरिति भावः। वचनादिति। कर्तृत्वांशेनोपयोगं कल्पयित्वेति भावः। न च स्वामिसंस्कार एव नापितवदध्वर्युकर्तृकता-पत्तिरिति वाच्यम्, आचारविरोधादात्मनेपदानुपपत्तेश्चेति ध्येयम्। संस्काराः पुरुषरूपे साध्ये संस्कार्ये यथावेदं यथासमाख्यं कर्मवदवघातादिवत् व्यवस्थिता भावन्तीति सूत्रार्थः॥

इति वपनादिसंस्काराणां याजमानताधिकरणम्॥२॥

३

तपश्च० दुःखात्मकत्वादिति। दुःखजनकत्वादित्यर्थः। अस्य तपसः दुःखं फलमिति बहुव्रीहिः। कार्यविरोधिनम् फलप्रतिबन्धकम्। योग्यतेति। फलनाश्यत्वादधर्मस्येति भावः।

क्रतुफलप्रतिबन्धकपापक्षपणेन वास्य क्रत्वर्थत्वं लिङ्गप्रकरणाभ्यामवगम्यते। यजमाने च फलेनोत्पत्तव्यम्। अतोऽस्यापि फलिसंस्कारत्वाद्याजमानत्वम्। वचनादृत्विजामपि स्यात्। यथा 'ऋत्विज उपवसन्ती'ति ॥

**इति तपसो याजमानताधिकरणम् ॥३॥**

**४**

**गुण०** ये च संस्कारा वचनादृत्विजां जाता हिरण्यमालित्वादयः, किं ते समाख्यया तत्पुरुषैः कार्याः ? उत सर्वैर्ऋत्विग्भिरिति। **समाख्यया तत्पुरुषैरिति प्राप्ते,**

**ब्रूमः—यत्र पुरुषस्य गुणभावः, तत्र केनचिदेकेन तत्सिद्धेः कः कुर्यादित्यपेक्षिते** नियमः समाख्यया क्रियते। संस्कारणान्तु यावत्संस्कार्यमावृत्त्यवगमात्तद्विरुद्धमनपेक्षितञ्च नियमं न शक्नोति समाख्या कर्तुमिति सर्वविषयता ॥

**इति लोहितोष्णीषादीनां सर्वर्त्विग्धर्मताधिकरणम् ॥४॥**

**५**

तथा० ज्योतिष्टोमे सदोमाने गुणकामश्रुतयः 'यदि कामयेत वर्षुकः पर्जन्यः स्यात् नीचैः सदो मिनुयादि'ति। स किमाध्वर्यवः—यदि कामयेताऽध्वर्युरिति ? उत याजमानः—यदि कामयेत यजमानः इति। तत्र मिनुयादित्यध्वर्योर्वचनात्तत्स मानाधिकरण्यादाध्वयवे च प्रवचनेऽध्वर्योः समाख्याधिकृतत्वात्स एव कामयतिना निर्दिश्यत इति तस्यैवेदं फलम्।

नैवम्; मिनुयादिति परस्मैपदश्रुत्याऽध्वर्युव्यापारः परार्थः श्रूयते, तया श्रुत्या विरोधात् वाक्यगम्यं तत्सामानाधिकरण्यं कामयतेर्बाध्यते।

किञ्च अन्यो गुणो नित्यतया विहितः 'नाभिदघ्नाः पर्यन्ताः' इत्यादिः

---

वचनादिति। तत्रागत्या आरादुपकारकत्वं कल्प्यत इति भावः। तपश्च फलसिद्धित्वात्फलसाधकत्वाल्लोकवत्संस्कार इति सूत्रार्थः ॥

इति तपसो याजमानताधिकरणम् ॥ ३ ॥

**४**

गुणत्वाच्च० स्पष्टार्थम् ॥

**५**

**तथाकामः० सदस्संज्ञो मण्डपस्तस्य मानं प्रमाणं तत्रेत्यर्थः। तया परस्मैपदरूपया। वाक्यगतस्य कामयतेस्तत्सामानाधिकरण्यम् अध्वर्युव्यापारसामानाधिकरण्यं बाध्येत इत्यन्वयः। ननु 'यो वृष्टिकामः स सौभरेण स्तुवीते'त्यादौ परस्मैपदाभावादृत्विग्गामिता स्यादत आह—किञ्चेति। नाभिदघ्नः नाभिप्रमाणः। स यजमानः तेन काम्यगुणेन। नित्यस्य नाभिदघ्नताख्यगुणस्य बाधमनुमन्यत इत्यर्थः। कुतस्तत्राह—नहीति।**

सः क्रत्वर्थत्वाद्यजमानस्य कर्तव्यः। तद् यदि काम्योऽपि गुणस्तस्यैव चोद्यते, ततः स तेन नित्यस्य बाधमनुमन्यते। अध्वर्य्वर्थेन तु गुणेनात्मार्थस्य गुणस्य बाधं यजमानो नानुमन्येत। न हि तस्याध्वर्युस्थेन काम्यगुणज्ञानेनात्मस्थं ज्ञानं नित्यविषयं निवर्तते। तस्माद्यदि कामयेत यजमान इति सम्बन्धात् याजमानं गुणफलम्। यत्र तु पृथगुपदेशः यथा 'आत्मने यजमानाय वा यं कामं कामयेत एनमुद्गाता उद्गायेदि'ति, तत्र पृथग्यजमानग्रहणाद् वाशब्दाच्चाऽऽत्मने इत्युद्गातैवोच्यते। वचनस्य चातिभाराभावात् तस्यैव फलम्॥

इति गुणकामानां याजमानताधिकरणम्॥५॥

## ६

**मन्त्रा०** इहाकरणभूताः प्रत्यगाशिषो मन्त्रा उदाहरणम्। 'आयुर्दा अग्नेऽसि, आयुर्मे देही'त्यादयः। ते किमध्वर्युणा प्रयोक्तव्याः? उत यजमानेनेति? समाख्यया आध्वर्यवत्वे प्राप्ते,

**ब्रूमः**—कर्मफलमत्राशास्यम्, नर्त्विक्फलम्, अक्रत्वर्थत्वप्रसङ्गात्। यजमानाच्चर्त्विक्फलं दक्षिणालाभात्मकमाशास्यम्, नाग्नेः। कर्मफलञ्च यजमानगामित्वात्प्रत्यगात्मविषयत्वेन प्रार्थ्यत इति लिङ्गात्समाख्यां बाधित्वा यजमान एव प्रयुञ्जीत॥

इत्यायुरादिमन्त्राणां याजमानताधिकरणम्॥६॥

## ७

**द्व्याम्ना०** दर्शपूर्णमासयोः केचिन्मन्त्राः सामान्यरूपेणाध्वर्यवे, पुनश्च विशेष-

---

तस्य यजमानस्य। वैयधिकरण्यादिति भावः। आत्मन इति यजमानविशेषणं स्यादत आह-वाशब्दाच्चेति। ननु यजमानप्रयोगस्य वैगुण्यापत्तिरित्याशङ्क्याह-वचनस्येति। अतिभारो न्यायविरोधस्तदभावादित्यर्थः। तत्र वचनबलादेवावैगुण्योपपत्तेरिति भावः। कामोऽपि तथा न समाख्यया व्यवस्थितः। अर्थसंयोगात् अर्थतो यजमानसंयोगादिति सूत्रार्थः। प्रयोजनं यजमानकामनाभावे गुणकामाननुष्ठानम्॥

इति गुणकामानां याजमानताधिकरणम्॥५॥

६

मन्त्राश्च० प्रत्यगाशिष इति। स्वगतफलाशंसनप्रकाशका इत्यर्थः। प्रत्यक्शब्दस्यास्मत्प्रत्ययविषयार्थकत्वात्। अक्रत्वर्थत्वेति। क्रतुसम्बन्धिप्रकाशनेन हि क्रत्वर्थत्वम्, तदसम्बन्धिप्रकाशने तु तन्न स्यादित्यर्थः॥

इत्यायुरादिमन्त्राणां याजमानताधिकरणम्॥६॥

रूपेण याजमाने काण्डे समाम्नाताः—'वाजस्य मा प्रसवेने'त्यादयः। ते किं येन केनचित्प्रयोक्तव्याः? उत यजमानेनैव? अथाध्वर्युणैव? अथवोभाभ्यामपीति? संशयः। तत्र मन्त्रैकत्वादेकेनैव सिद्धेः यः कश्चित् ब्रूयात्। विशेषसमाख्याबलीयस्त्वाद्वा यजमान एव। अथवार्थस्य स्रुग्व्यूहनादेराध्वर्यवत्वान्मन्त्रोऽपि तेनैव प्रयोक्तव्य इति प्राप्ते,

ब्रूमः—सत्यपि हि मन्त्रैकत्वे पाठद्वयं प्रयोगवचनेन गृहीतं कर्तारमपेक्षते। न च मन्त्रस्वरूपमेव प्रकरणिना गृह्यते, किन्तु पाठविशिष्टमेव, तादृशस्यैव प्रकरणे विपरिवृत्तेः। अपेक्षितश्च मन्त्राणां प्रकाशनोपायः। न ह्यप्रकाशिताः स्वार्थमभिदधति, तत्र पाठस्य विपरिवृत्तेः तदतिक्रमे कारणं नास्तीति। अत एव प्रयोगकाले मन्त्राणां पाठसिद्धिः। अन्यथा हि स्मृतिस्थैरर्थप्रकाशनसम्भवान्नैकान्तेनोच्चारणं सिध्येत्। अतो यत्र पाठद्वयम्, तत्र समाख्याद्वयेन कर्तृद्वयं प्राप्नुवद्भिन्नविषयत्वेनाविरोधात्समुच्चीयते॥

इति द्व्याम्नातस्योभयप्रयोज्यताधिकरणम्॥ ७॥

८

ज्ञाते० वाजपेये 'क्लृप्तीर्यजमानं वाचयती'ति श्रुतम्। तत्र किं ज्ञश्चाज्ञश्च द्वावपि वाचयितव्यौ? उत ज्ञ एव? अथवा अज्ञ एव? इति याजमानमन्त्रप्रसङ्गाच्चिन्त्यते। तत्र

अविरोधादुभौ यद्वा स्वयमेव वदेद् बुधः।
अज्ञस्तु वाच्यते नैवं न ह्यज्ञो विद्यते क्रतौ॥

---

७

द्व्याम्नातेषु० पूर्वोक्तैककर्तृकत्वापवादात्संगतिः। न चेति। सिद्धरूपत्वेनेतिकर्त्तव्यतात्वाभावात्तदाकांक्षारूपप्रकरणविषयत्वादिति भावः। पाठेति। उच्चारणेत्यर्थः। तदुक्तम्—

नावान्तरक्रियायोगादृते वाक्योपकल्पितात्।
गुणद्रव्ये कथं भावैर्गृह्णन्ति प्रकृताः क्रियाः॥ इति।

मन्त्रस्याप्युच्चारणापेक्षामाह—अपेक्षित इति। ननु स्मृतिरेवोपायोऽस्त्वित्यत आह—तत्रेति। अतएव उपस्थितोच्चारणोपायनियमादेव। भिन्नविषयत्वेनेति। भिन्नोच्चारणविषयत्वेनेत्यर्थ। उच्चारणान्तरप्रयोजनं तु स्रुग्व्यूहनादिक्रियां प्रत्यवेक्षणं यजमानेनेति दृष्टरूपमेवेत्याशयः। सूत्रप्रयोजने स्पष्टे॥

इति द्व्याम्नातस्योभयप्रयोज्यताधिकरणम्॥७॥

८

ज्ञाते च० क्लृप्तीरिति। 'आयुर्यज्ञेन कल्पतामि'त्यादिमन्त्रानित्यर्थः। अविरोधादिति। ज्ञाज्ञयोर्द्वयोरपि वाचनसंभवादित्यर्थः। ज्ञवाचनस्यादृष्टार्थत्वापत्तेराह—यद्वेति। ज्ञवाचन-

अधिकारो हि विदुषां नान्येषामिति निश्चयः ।
ब्रूहीति स्मरणात् ज्ञस्य सम्भविष्यति वाचनम् ।।
इत्यभिज्ञस्यैव वाचयितव्यत्वाधिकरणम् ।। ८ ।।

९

याज० दर्शपूर्णमासयोः 'वत्समुपावसृजति, उखाञ्चाधिश्रयति, अव च हन्ती'त्यादिभिः प्रत्येकं कर्माणि सामान्यरूपेणाध्वर्यवे विहितानि । पुनश्च याजमाने 'वत्सञ्चोपावसृजति, उखाञ्चाधिश्रयति' इत्याद्यनुकीर्त्य 'एतानि वै द्वादश द्वन्द्वानि, [दश यज्ञायुधानि] दर्शपूर्णमासयोस्तानि सम्पाद्य यजेते'ति श्रुतम् । तदेतेषां द्व्याम्नातमन्त्रवदुभयकर्तृकत्वं न सम्भवति, एकेन कृतानाम् इतरेण कर्तुमशक्यत्वात् । अत एकः कुर्यादिति स्थिते, कः कुर्यादिति ? विशेषसमाख्यानाद्यजमान इति प्राप्त उच्यते—

कर्माणि यत्र चोद्यन्ते तत्रैषां कर्त्रपेक्षिता ।
आध्वर्यवे च चोद्यन्ते कर्माण्याध्वर्यवाण्यतः ।।

याजमाने तु द्वन्द्वतासम्पादनमात्रं विहितानां निर्ज्ञातकर्तृकाणां विधीयते । द्वयोर्द्वयोर्मिथः प्रत्यासन्नत्वसम्पादनमित्यर्थः । न तु कर्मणां विधिः । न चान्येन क्रियमाणानामन्येन द्वन्द्वत्वसम्पादनं शक्यम् । ननु 'द्वन्द्वानि सम्पाद्य यजेते'ति क्त्वाप्रत्ययेनात्मनेपदसमानकर्तृकत्वात् द्वन्द्वतासम्पादनं वचनादेव याजमानम् । तद्बलात्कर्मणामपि स एव कर्ता स्यात् । न; प्रयोजकत्वेनापि कर्तृत्वसम्भवात् । अतोऽध्वर्युणैव क्रियमाणानां द्वन्द्वतां यजमानोऽध्वर्युः स्मारयिष्यतीत्यदोषः ।।

इति द्वादशद्वन्द्वानामाध्वर्यवत्वाधिकरणम् ।। ९ ।।

---

स्याददृष्टार्थतां वारयति—ब्रूहीतीति । इमं मन्त्रं ब्रूहीत्यध्वर्युवाक्येन यजमानस्य स्मरणादित्यर्थः ।।

इत्यभिज्ञस्यैव वाचयितव्यत्वाधिकरणम् ।।८।।

९

याजमाने० वत्समिति । धेनुसमीपगमनाय मुञ्चतीत्यर्थः । उखा मृत्पात्रम् । द्वन्द्वतासंपादनपदार्थमाह—द्वयोरिति । धेनुवत्सयोरित्यर्थः । नन्वस्य गुणस्य क्रियाकर्तृभिन्नेनानुष्ठातुमशक्यत्वात् क्रियायाश्चाध्वर्यवत्वाद्गुणस्यापि तथात्वापत्तिरिति याजमानविशेषसमाख्या निर्विषया स्यात्, तद्बलाद्वा कर्माण्यपि याजमानानि स्युरिति शंकां निरस्यति—न चेति । द्वन्द्वतां कुर्विति स्मारकतया याजमानत्वोपपत्तेरिति भावः । साक्षात्कर्तृत्वन्त्वङ्गगुणविरोधन्यायेनाध्वर्योरेव न तु यजमानस्येत्याशयः । वचनेनोक्तन्यायबाधं शंकते—नन्विति । आत्मनेपदसमानकर्तृकत्वात् आत्मनेपदार्थक्रियाफलसमानकर्तृकत्वात् । सूत्रे याजमानमिति क्रियाविशेषणमित्येकवचनोपपत्तिः ।।

इति द्वादशद्वन्द्वानामाध्वर्यवत्वाधिकरणम् ।।९।।

१०

विप्र० ज्योतिष्टोमेऽग्नीषोमीये पशौ युगपदध्वर्युणा होत्रा च प्रयुक्तौ परिव्याणकरणक्रियमाणानुवादिनौ 'परिवीरसि' 'युवा सुवासाः' इति मन्त्रौ चोदकपरम्परया कुण्डपायिनामयनसत्रे प्राप्तौ। तत्र ऋत्विक्समासः समम्नातः—'यो होता सोऽध्वर्यु'रिति। तत्रैको होता तौ प्रयोक्तुमशक्तः किं हौत्रं ब्रूयात्? उताध्वर्यवमिति संशये, अनियमः। अथवा होतुः सतोऽध्वर्युत्वविधानादपरित्यक्तस्वधर्मो होता नाध्वर्युधर्मैः सम्बन्धुमर्हति परिधिरिव स्वधर्माविरोधेन यूपधर्मैरिति क्रियमाणानुवादिनमेव वदेत्। एवं प्राप्ते, ब्रूमः—

प्रत्यक्षवचनात्प्राप्तिर्होतुराध्वर्यवेषु हि।
हौत्रेषु चोदकाद्वाक्यं चोदकाद्बलवत्तरम्॥

'यो होता सोऽध्वर्यु'रि'ति मुख्यत्वाच्छ्रुतिवृत्तो होता जघन्याध्वर्युलक्षितेषु कार्येषु प्रत्यक्षेण वाक्येन विधीयते, हौत्रेषु तु चोदकतः प्राप्तिरिति वाक्यबलादाध्वर्यवमेव वदेत्। 'परिधौ पशुं नियुञ्जीते'ति नियोजनमात्रे परिधिर्वचनेन विधीयते न यूपधर्मेष्विति वैषम्यम्।

---

१०

विप्रतिषेधे० पूर्वोक्ताध्वर्यवत्वस्य करणमंत्रापवादात्संगतिः। युगपदिति। 'यूपाय परिवीयमाणायानुब्रूहो'ति प्रैषानन्तरपाठात्करणमन्त्रः। प्रैषवशाच्च क्रियमाणानुवादी। एकस्मिन्नेव काले पठितावित्यर्थः। 'परिवीरसि परि त्वा देवीर्विशो व्ययन्तामि'त्यादिः करणमन्त्रः। इतरः क्रियमाणानुवादी। चोदकेति। ज्योतिष्टोमात् सत्रात्मके द्वादशाहे ततो गवामयने ततः कुण्डपायिनामयन इत्यतिदेशपरंपरयेत्यर्थः। समासः संक्षेपः। हौत्रम् अनुवादमन्त्रम्। आध्वर्यवम् करणमन्त्रम्। अनियम इति। वरणनिमित्तहोत्रादिशब्दानां सत्रे वरणाभावेन मुख्यार्थबाधाल्लक्षणयोभयकर्मानुवादेनैकस्य कर्त्तुर्विधानाद्बलाबलकृतविशेषाभावादिति भावः। ननु होत्रादिशब्दानामध्यवसायविशेषनिमित्तत्वस्योक्तत्वात्सत्रेऽपि होत्रादिसत्त्वेन केवलं सामानाधिकरण्यानुपपत्त्या जघन्याध्वर्युपदलक्षिताध्वर्युकर्मैव होतारमुद्दिश्य विधेयं स्यादतस्तमेव पक्षमाह— अथवेति। अध्वर्युत्वम् तत्कार्यम्। परिधिरिवेति। 'परिधौ पशुं नियुञ्जीते'ति यूपकार्ये पशुबंधने परिधिः स्वधर्मसत्वक्त्वाद्यविरोधेन प्रवर्त्तते, न तु तत्क्षणादि तत्र क्रियते, तथात्रेत्यर्थः। यद्यपि दार्ष्टान्तिके होतर्युद्देश्यत्वं दृष्टान्ते परिधौ विधेयत्वमिति वैषम्यम्, तथाप्यतिदेशतो यूपधर्मविधौ परिधेरप्युद्देश्यत्वमिति साम्यमूहनीयम्। मुख्यत्वादिति। अनेन होतृशब्दलक्षिते होतृकार्येऽध्वर्युविधानमिति पक्षस्य निरासः सूचितः। होत्रनुद्देशेनाध्वर्युकर्मविधाने त्वध्वर्युकर्मणः प्रकृतौ प्रधानस्यात्र होतृसंस्कारकर्मत्वमप्राकृतं प्रसज्येतेति भावः। परिधिदृष्टान्तवैषम्यमाह— परिधाविति। पुरोडाशप्रयुक्तकपालस्य तुषोपवाप इवाग्निपरिधानप्रयुक्तस्यैव परिधेर्विनियोगात्स्वधर्मविशिष्टस्यैव च प्रयोज्यत्वात् त्वक्साहित्यादिधर्माविरोधेन यूपकार्यकारिता युक्ता।

यस्तु सत्रेषु होत्रादयो न सन्ति, तदभावाच्च न हौत्रादिषु चोदकतः प्राप्तिरित्याह, तस्य 'हौत्रेण होतुश्चोदकात्समवायः' इति भाष्यविरोधः। सत्रन्तु कुण्डपायिनामयनम्। वक्ष्यति हि 'सत्रे चोपायिचोदनादि'ति। किञ्चैवं 'यो होता सोऽध्वर्यु'रि'ति वचनेन किं विधीयते? न हि होताऽस्ति योऽध्वर्युकार्ये विधीयते। अथ हौत्रमाध्वर्यवञ्चैकः कर्ता कुर्यादित्येतावद्विधीयते तदोभयोरपि प्रत्यक्षवचनादिष्टत्वेन तुल्यबलत्वादाध्वर्यवस्य बलीयस्त्वं न स्यादित्यधिकरणविरोधः। 'प्रत्यक्षविधानादिष्टमि' ति च निबन्धनग्रन्थतो विरुध्यत इत्यास्तां तावत्।।

इति होतुराध्वर्यवकरणमन्त्रानुष्ठातृत्वाधिकरणम् ।।१०।।

११

प्रैषे० 'प्रोक्षणीरासादय' 'अग्नीदग्नीन् विहारे' त्यादयः प्रैषाः, प्रोक्षण्यासादनाग्निविहरणादयः प्रैषार्थाः किमध्वर्युणैकेन कर्तव्याः? उतान्यः प्रेषितुः तदर्थानां कर्ता? इति संशये, समाख्यानादुभयत्राऽध्वर्युः, प्राप्तकालतायाञ्च लोड् भविष्यति, न प्रैषे समाख्याबलादिति प्राप्ते,

ब्रूमः—मध्यमपुरुषस्य 'अग्नीदि'ति च संबोधनस्य चेतनान्तरविषयत्वादृतेऽनुपपत्तेः। प्राप्तकालतापि पुरुषान्तरं प्रति वक्तव्या, तद्वरं प्रैष एवायम्, प्रैषसमाख्यानात्। स चात्मनि न सम्भवतीति लिङ्गेन समाख्यां बाधित्वा अन्यः प्रेषिता अन्यश्च प्रैषार्थकर्ता।।

इति प्रैषप्रैषार्थयोर्भिन्नकर्तृकत्वाधिकरणम् ।।११।।

---

होतुस्त्वध्यवसायनिमित्तहोतृत्वेनैवाध्वर्यवे विनियोगान्न स्वकार्यप्रयुक्तिरिति वैषम्यमित्याशयः। गुरवस्तु-सत्रे मुख्यहोत्राद्यभावाद् हौत्राध्वर्यवयोर्होत्रादिपदलक्षितयोरेककर्तृविधिरेव वाक्यार्थः। अन्तरङ्गतया करणमन्त्रेणेतरबाधाच्च सिद्धान्त इति वदन्ति। तन्मतमनूद्य दूषयति—यस्त्विति। सत्रत्वे प्रमाणमाह-वक्ष्यति हीति। उपपूर्वेकेण् धातुना उपेयुरित्यनेन चोदनादित्यष्टमे वक्ष्यतीत्यर्थः। युक्तिविरोधमप्याह—किञ्चेति। बलीयस्त्वमिति। न चान्तरङ्गतयाध्वर्यवस्य बलवत्त्वं शंकनीयम्, द्वयोरपि क्रियाप्रकाशकतया साम्यात्। तदीयग्रन्थविरोधमप्याह—प्रत्यक्षेति। सूत्रार्थस्तु विप्रतिषेधे विरोधे करणमंत्र एव प्रयोज्यः समवायेऽन्वये विशेषादुपदेशस्वरूपाद् इतरं मन्त्रं तेषां होत्रादीनामन्यः पुरुषो वदेत्। कोऽसौ तत्राह यतो यस्मिन् विशेषः प्रत्यासत्तिरूपः स्यादिति।।

इति होतुराध्वर्यवकरणमन्त्रानुष्ठातृत्वाधिकरणम् ।।१०।।

११

प्रैषेषु० प्रासंगिकी संगतिः। अग्नीदिति सम्बोधनम् प्रेषितुः प्रैषप्रयोक्तुः। तदर्थानां प्रैषार्थानाम्। सूत्रन्तु इतरमन्य इत्यनुवृत्या प्रैषेषु चेतरं प्रैषार्थमन्यतः कुर्यात् परस्मिन् पुरुषे प्रैषमध्यमपुरुषयोरविकारात्प्रयोगादिति व्याख्येयम्।।

इति प्रैषप्रैषार्थयोर्भिन्नकर्तृकत्वाधिकरणम् ।।११।।

१२

**अध्व०** प्रेषितुरन्यः प्रैषार्थंकर्तेति स्थितम्। स किमध्वर्युः प्रैषार्थंकर्ता अग्नीच्च प्रेषिता ? उत विपरीतम् ? इति संशये, अर्थानां प्रधानभूतत्वाद् भूयस्त्वाच्च न तत्राध्वर्युबाधो युक्तः। प्रैषस्य त्वेकत्वात् गुणत्वाच्चाध्वर्युं बाधित्वा अग्नीत्कर्ता भवत्विति प्राप्ते,

**उच्यते—अध्वर्युरेव** प्रेषिता स्यात्, एवं हि तेनैव प्रयोजकेन प्रैषार्था अपि कृता भवन्तीति न क्वचित्समाख्या बाधिता स्यात्। इतरथा प्रैषेऽत्यन्तं बाधिता स्यात्। न चाबाधसम्भवे तद्युक्तम्। अतोऽध्वर्युः प्रैषम् अग्नीत् प्रैषार्थान् कुर्यादिति ॥

**इति प्रैषमन्त्राणामाध्वर्यवत्वाधिकरणम् ॥१२॥**

१३

**ऋत्विक्०** अकरणभूताः प्रत्यगाशिषो मन्त्रा लिङ्गाद्याजमाना इत्युक्तम्। ये तु करणमन्त्राः 'ममाग्ने वर्चो विहवेष्वि' त्यादयः, ते प्रत्यगाशिषोऽपि क्रियाकर्त्राध्वर्युणैव वक्तव्याः। न ह्यन्येनोच्यमाना अध्वर्योः क्रियां प्रकाशयन्ति। न च मन्त्रवशेन प्रधानभूतायां क्रियायामध्वर्युबाधो युक्तः। तेन मन्त्रास्तावदाध्वर्यवा एव तद्गतञ्च वर्चःप्रभृति सूक्तवाकगतायुरादिवत्फलमिति स्थिते, किम् तत्फलमध्वर्योः ? उत यजमानस्येति। ममेति लिङ्गादध्वर्योरिति प्राप्ते, ब्रूमः—

प्रधानवाक्यगतात्मनेपदश्रुत्या साङ्गप्रधानभावनाविषयाङ्गफलनामपि यजमानगामित्वं युक्तमिति, तद्विरुद्धं लिङ्गं नर्त्विग्गामित्वं बोधयितुमलम्। अतः ममेति यजमानव्यतिरेकजनिता षष्ठी मम यो यजमानः तस्य वर्च इति, यजमान एव वोपचारान्ममेति निर्दिश्यते। अतस्तस्यैव फलम्।

**इति करणमन्त्रफलस्य याजमानताधिकरणम् ॥१३॥**

१४

**कर्मार्थं०** यत्तु 'मा मा सन्ताप्समि' त्यसन्तापनादिकं फलं कर्मानुष्ठानोपयिकं यजमानस्यात्मीयकर्माविघातार्थमृत्विग्गामित्वेनैवेष्टमिति, आत्मनेपदानुगुण्यादृत्विग्गामीति युक्तम् ॥

**इति करणमन्त्रेषु कर्मार्थफलस्यार्त्विग्धर्मताधिकरणम् ॥१४॥**

---

१२

**अध्वर्युस्तु०** स्पष्टमेतत् ॥

१३—१५

**ऋत्विक्०** करणेति। 'ममाग्ने वर्चो विहवेष्वस्त्विति पूर्वमग्निं गृह्णाती'त्यन्वाधाना

१५

व्यप० यत्र व्यपदेशो भवति 'तन्नौ सहे' ति। तत्रापि द्विवचनस्यानुपपत्तेः ऋत्विग्गामित्वम् ॥

इति भद्रमित्यस्योभयगामिताधिकरणम् । १५॥

१६

द्रव्य० बर्हिर्धर्माणामङ्गप्रधानार्थत्वं पूर्वमुक्तमुत्तरविवक्षया प्राप्यते। अथ वा पूर्वपक्षसूत्रमिदम्। यस्मात्प्रकृतावङ्गप्रधानार्था बर्हिर्धर्माः, तस्माद्विकृतावपि यूपावटास्तरणबर्हिषि कर्तव्या इति प्राप्ते—

सिद्धान्तसूत्रं निर्देशा दिति प्रकृतौ यद्बर्हिः कार्यम्, तत्प्रयुक्ता बर्हिर्धर्माः कार्यद्वारेण विकृतिं गच्छन्ति, न स्वरूपतः। तेन प्राकृतकार्यसाधन एव धर्मा विकृतौ कर्तव्याः, न च यूपावटस्तरणं प्राकृतं बर्हिःकार्यम्। अतो न तत्साधने बर्हिधर्माः ॥

इति द्रव्यसंस्कारस्यऽङ्गप्रधानार्थताधिकरणम् ॥१६॥

१७

विरो० इदानीं प्रकृतावपि नातीव सर्वार्थतेत्युच्यते। दर्शपूर्णमासयोर्विधृत्यर्थं पवित्रार्थं च यद्बर्हिः तदपि धर्मवत्स्यात्। अविशेषादिति प्राप्ते,

ब्रूमः—धर्मवतः कृत्स्नस्य बर्हिषो यथा लूनस्य संनद्धस्यासादितस्य स्तरणे विनियोगान्नान्यत्र विनियोगः संभवतीति बलादसंस्कृतादेव पवित्रादि कार्यम् ॥

इति विधृतिपवित्रयोः परिभोजनीयबर्हिषा कर्तव्यताधिकरणम् ॥१७॥

---

दी करणत्वेन विहिता इत्यर्थः। न चेति। मन्त्रस्याङ्गत्वादङ्गगुणविरोधे च प्रधानगुणस्य बलीयस्त्वादित्यर्थः। वर्चस्तेजोविशेषः। आत्मनेपदं विधिश्रुतेरुपलक्षणं बोध्यम्। 'अग्निहोत्रं जुहुयादि'त्यादावात्मनेपदाभावेनाव्यापकत्वात्। एतदुत्तरं सूत्रद्वयं स्पष्टार्थम् ॥ १३–१५

१६

द्रव्यसंस्काराः० यूपावटः यूपखननार्थो गर्त्तः। विकृतावपूर्वस्य यूपावटास्तरणस्य निर्देशाद्बर्हिर्धर्माणामनधिकारोऽननुष्ठानमिति द्वितीयसूत्रार्थः ॥

१७

विरोधे च० पूर्ववत्साधारण्यापवादादातिदेशिकी संगतिः। धर्मवदिति। समन्त्रकलवनादिसंस्कारवदित्यर्थः। संनद्धस्य बद्धस्य। स्तरण इति। 'बर्हिस्तृणाती'ति वचनेनेत्यर्थः। असंस्कृतादेवेति। अमन्त्रकलवनमात्रविशिष्टाद्बर्हिषः परिभोजनीयाख्यादित्यर्थः। स्तरणविनियोजकश्रुतिविशेषात्तेन बर्हिषा पवित्रकरणे विरोधादव्यक्तः। 'समावप्रच्छिन्नाग्रौ दर्भाविति' विधृति पवित्रार्थः। सामान्यविधिः शेषे परिभोजनाये बर्हिषी ज्ञेय इति सूत्रार्थः ॥

इति विधृतिपवित्रयोः परिभोजनीयबर्हिषा कर्तव्यताधिकरणम् ॥१७॥

१८

अप० ज्योतिष्टोमाधिकारे 'पुरोडाशशकलमैन्द्रवायवस्य पात्रे निदधाती'ति 'आमिक्षा मैत्रावरुणस्य धाना आश्विनस्य पात्रे' इत्यादि किं सन्निहितात्स-वनीयपुरोडाशादपनीय शकलः पात्रे निधातव्यः ? उत पुरोडाशान्तर-मुत्पाद्य तच्छकलस्य निधानमिति विचारे, पूर्ववद्यागार्थस्य निधाने विनियोगा-सम्भवादन्योत्पादनम् ।

स्यादेवं यद्यन्यत्र विनियोगः स्यात्, यगार्थस्यैव तु शकलस्य संस्कारोऽयम्, द्वितीयानिर्देशात् । अतः प्रकृतैकदेशस्यायमपनयः । एवं पयस्यादिष्वपि । पयस्याद्यर्थं चेदमधिकरणम् । पुरोडाशशकलनिधानविधेरेकदेशद्रव्यत्वेनाप्रयोज-कत्वस्य सिद्धत्वात् ॥

इति प्राकृतपुरोडाशादीनां निधानाधिकरणम् ॥१८॥

१९

विकृतौ० 'यज्ञाथर्वणं वै काम्या इष्टयः ता उपांशु कर्तव्याः' इति श्रुतमुपांशु-त्वं किमङ्गप्रधानार्थम् ? उत प्रधानार्थम् ? इति संशयः । तत्र—

मन्त्रोच्चारणसद्भावात् द्वयोरङ्गप्रधानयोः ।
तद्विशेष उपांशुत्वं बर्हिस्तद्धर्मवद् द्वयोः ॥
उच्यते बर्हिषां धर्मा वाक्यादङ्गप्रधानगाः ।
उपांशुता च वाक्येन काम्यानामेव चोद्यते ॥

कामप्रयोजनानि प्रधानान्येव काम्यशब्देनोच्यन्त इति तेषामेवोपां-शुत्वम् । ननु यथा प्रवर्ग्यशब्दसंयुक्तस्योच्चैस्त्वस्यावभृथशब्दसंयुक्तानामप्यपामङ्ग-प्रधानार्थतेष्यते, तथोपांशुत्वमपि स्यात् । विषम उपन्यासः । तत्र हि 'उच्चैः

---

१८

अपनयस्तु० विनियोगासम्भवादिति । विनियुक्तविनियोगायोगात् क्लृप्तप्रतिपत्त्यन्तर-बाधापत्तेश्चेति भावः । स्यादेवमिति । तथा च विनियुक्तविनियोगविरोध इति भावः । पयस्येति । 'आमिक्षां मैत्रावरुणपात्रे प्रास्यति धाना आश्विनपात्र' इति विहितामिक्षादिष्व पीत्यर्थः । एकदेशेति । 'एकदेशद्रव्यं चोत्पत्तौ विद्यमानसंयोगादिति' चातुर्थिकन्यायेनोत्तरार्धा-दिवदेकदेशवाचितया संनिहितविद्यमानावयविसम्बन्धित्वावगमेन द्रव्यान्तराप्रयोजकत्वसिद्धे-रित्यर्थः । क्लृप्तप्रतिपत्तिबाधस्तूपदेशावगतप्रतिपत्त्यन्तरेण युक्त एवेति भावः ॥

इति प्राकृतपुरोडाशादीनां निधानाधिकरणम् ॥१८॥

१९

विकृतौ० यज्ञेति । यज्ञरूपमाथर्वणम् अभिचारकर्मसदृशमित्यर्थः । कर्त्तव्यत्वनिर्देशा-

प्रवर्ग्येण प्रचरन्ति, अप्स्ववभृथेन चरन्ती'ति तृतीयासंयोगात्प्रवर्ग्याविभृथ-करणिकायां भावनायामुच्चैस्त्वमापश्च विधीयन्ते, तदन्तर्गतानि चाङ्गानि युक्तं-यदुच्चैष्ट्वमापश्चाङ्गं लभन्ते। अत्र तु 'काम्या उपांशु कर्तव्याः' इति कर्तव्यत्व-निर्देशात्प्रधानक्रियायामेवोपांशुत्वं विहितम्, न तत्करणिकायां फलक्रियायामिति विशेषः ॥

इति काम्येषूपांशुत्वधर्मस्य प्रधानार्थताधिकरणम् ॥१९॥

२०

सन्नि० श्येने श्रूयते 'दृतिनवनीतमाज्यं भवती'ति। तत् किं प्रधानार्थम्? उताङ्गार्थमिति संशयः। तत्राज्यस्याप्रकृतत्वान्न तदनुवादेन दृतिनवनीतत्वं विधीयते, किन्तु दृतिनवनीतत्वविशिष्टमाज्यं विहितं प्रकरणात्प्रधानार्थं सोमप्रत्याम्नानेनेति प्राप्ते—

उच्यते—विशिष्टविधिगौरवादुपदेशतोऽप्रकृतस्याप्याज्यस्यातिदेशतः प्राप्ति-सम्भवात् तदनुवादेन दृतिनवनीतत्वं विधीयते—यदाज्यन्तद्दृतौ नवनीतं प्रकृतिर्यस्य तत् स्यात्। अङ्गेषु चाज्यप्राप्तिरिति तत्रैव दृतिनवनीतत्वम् ॥

इति श्नेनांगानां नवनीताज्याधिकरणम् ॥२०॥

२१

तत्काले० स्थितमङ्गेषु दृतिनवनीतमिति। तत् किं सुत्याकालेष्वेवाङ्गेषु स्यात्? उत सर्वेषु? इति संशये, सामान्यतो दृष्टात् सुत्याकालानाम्। पशुसाहित्यं हि 'सह पशूनालभते' इति श्येनाङ्गत्वेन विहितं सुत्याकालं दृष्टमग्नीषोमीयानुबन्ध्यस्थानयोः पुरोडाशामिक्षाभ्यामनुग्रहवचनेन पशुशून्यत्वावगमात्तद्वद् दृतिनवनीतमपि श्येनवैशेषि-काङ्गत्वात्सुत्याकालमेव भवितुमर्हति।

---

दिति। तव्यप्रत्ययेन काम्येष्टिकर्मकभावनाप्रतीतेस्तत्र च फलकर्मकभावनेतिकर्त्तव्यताया अनन्तर्भावादित्यर्थः ॥

इति काम्येषूपांशुत्वधर्मस्य प्रधानार्थताधिकरणम् ॥१९॥

२०

सन्निधान० प्रधानार्थत्वापवादात्संगतिः। दृतिश्चर्म। स्पष्टमन्यत् ॥ २० ॥

२१

तत्काले० सामान्यतोऽङ्गावतारे सिद्धे तद्विशेषचिन्तनात्प्रसङ्गसङ्गतिरिति सूचयितुमाह—स्थितमिति। सामान्यतो दृष्टादिति। अनुमानात्, सामान्यतः प्रधानप्रत्यासन्नत्वदर्शनादिति वार्थः। सुत्याकालानां दृतिनवनीतं स्यादित्यनुषङ्गः। अनुग्रहवचनेनेति। अग्नीषोमीयस्य स्थानेऽग्नीषोमीयः पुरोडाशः अनुबन्ध्यायाः स्थाने मैत्रावरुण्यामिक्षेति वाक्याभ्यामित्यर्थः। तद्वत्

मैवम्—न हि वाक्येन सर्वार्थं गम्यमानमनुमानेन व्यावर्तयितुं शक्यम्। अप्रयोजकश्च हेतुः। न हि पशुसाहित्यस्यैतदर्थत्वात्सुत्याकालता, किं तर्हि? न्यायान्तरात् साहित्यमवश्यं कस्य चिदेकस्य स्थाने कर्तव्यम्, तत् प्रधानप्रत्यासत्तिलिप्सया सवनीयस्थाने कृतम्। न त्विहैव किं चित्कारणमस्तीति वाक्याविशेषात्सर्वार्थता ॥

इति सर्व श्येनांगानां नवनीताज्यकत्वाधिकरणम् ॥२१॥

२२

मांसं० शक्त्यानामयनं नाम सत्रं षट्त्रिंशदाब्दिकम्। तत्रैतच्छ्रूयते वाक्यम्-'संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति, स यान्मृगान्हन्ति, तेषां तरसमयाः सवनीयाः पुरोडाशा भवन्ती'ति। किमिदं तरसं सर्वपुरोडाशानाम्? उत सवनीयानाम्? इति संशयः। तत्र—

न ह्युद्देश्यः पुरोडाशः सवनीयेन शक्यते।
विशेष्टुं तेन सर्वार्थं तरसं नवनीतवत् ॥

सवनीयपदन्त्ववयुत्याऽनुवादः। प्राणभृच्छब्दवद्वा लिङ्गसमवायेन सवनीयासवनीयेषु वर्तत इति प्राप्ते, अभिधीयते—

पुरोडाशं समुद्दिश्य तरसं चोद्यते यदि।
ततः स्यात्सर्वगामित्वमुद्देश्यस्याविशेषणात् ॥

---

पशुसाहित्यवत्। अत्रैवं प्रयोगः—दृतिनवनीतं सुत्याकालम्, श्येनविशेषविहितांगत्वात् पशुसाहित्यवदिति। सिद्धान्तमाह—मैवमिति। अनुमानेनेति। आगमविरुद्धस्यानुमानस्य प्रामाण्याभावात् धर्मविषये प्रामाण्यस्य विशेषतस्तर्कपाद एव निरासाच्चेति भावः। अप्रयोजकत्वमप्याह—अप्रयोजकश्चेति। एतदर्थत्वात् श्येनांगत्वात्। नन्वत्रापि प्रधानप्रत्यासत्तिरेव नियामिकास्त्वित्याशंक्याह—नत्विति। आज्यं क्व कार्यमित्यपेक्षाया अभावात्। प्रधान प्रत्यासत्तिमात्रेण वाक्यावगतसर्वाङ्गार्थत्वबाधायोगाच्चेति भावः। पशुसाहित्यस्य सुत्याकालिकत्वे तु नैवंविधवाक्यबाध इति वैषम्यम् ॥

इति सर्व श्येनाङ्गानां नवनीताज्यकत्वाधिकरणम् ॥२१॥

२२

मांसन्तु० अत्र सुत्याकालिकाङ्गमात्रसम्बन्धाभिधानादपवादसङ्गतिः। तरसं मांसं तन्मया इत्यर्थः। सवनीयानामिति। सवनीयहविषामित्यर्थः। स्थान इति च शेषः। अवयुत्य पृथक्कृत्य एकदेशानुवाद इत्यर्थः। सवनीयशब्दस्य सवनीयपुरोडाशमात्रानुवादत्वे बहुवचनस्य सवनीयाः पुरोडाशा इति सामानाधिकरण्यस्यानुपपत्तेराह—प्राणभृदिति। सृष्टिशब्दवदित्यपपाठ एव, तस्य भूमोदाहरणत्वात्। लक्षणेति। भ्रमनिमित्ता गौण्येवोक्ता जघन्यवृत्तित्वसाम्यात्।

उद्दिश्य सवनीयांस्तु मांसमत्र विधीयते ।
पुरोडाशापुरोडाशसमवाये तु लक्षणा ॥
पुरोडाशपदे तद्धि जघन्यां लक्षणां व्रजेत् ।
प्रकृतौ चास्य दृष्टा सा पुरोडाशानलंकुरु ॥
सवनीयपदं मुख्यं न मुख्यार्थं परित्यजेत् ।
दृष्टा च प्रकृतौ नैव सवनीयस्य लक्षणा ॥
अव्यवायाच्च तेनैव युक्ता तरससङ्गतिः ।
तद्व्यवेतः पुरोडाश इति तेन न सङ्गतिः ॥
सवनीयपदं खलु सन्निहितं तदतीत्य पदान्तरमेति न हि ।
तरसं नवनीतविधर्मतया सवनीयहविर्विकरोति ततः ॥
उक्तश्शेषस्तद्विनियोगस्य विधौमानं श्रुत्याद्यत्र विरोधे परमानम् ।
पूर्वस्मात्स्याद् बलमत्रास्ति विरोधो नात्रेत्येवं शेषकथोक्ता संपूर्णा ॥
इति द्वाविंशं तरसमयाधिकरणम् ।
इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां तृतीया-
ध्यायस्याष्टमः पादः समाप्तः ।
इति तृतीयोऽध्यायश्च समाप्तः ॥

---

दृष्टेति । 'पुरोडाशानलंकुर्वि'त्यत्र सवनीयहविर्मात्रस्यालंकरणप्रकाशनादिति भावः । सवनीयस्य सवनीयपदस्य । अव्यवायाच्चेति । उद्देश्यविधेययोरव्यवधानलाभाच्चेत्यर्थः । तद्व्यवेतः सवनीयव्यवहितः । उक्तसिद्धान्तं श्लोकेन संगृह्णाति सवनीयेति । तरसमिति पूर्वार्धान्वितं मध्यमणिन्यायेनोत्तरत्रापि संबध्यते । विकरोति बाधते । अध्यायार्थं श्लोकेनोपसंहरति—उक्त इति । हेतुः परार्थत्वरूपः । अत एतदुत्तरम् । अत्र श्रुत्यादौ विरोधे परं परं मानं पूर्वस्माद्दुर्बलं स्यादित्युक्तमिति लिंगविपरिणामेनानुषज्यते । अत्रास्तीति । विरोधः क्वास्ति क्व नास्तीति चोक्तमित्यन्वयः । एवं प्रकारेण शेषकथा शेषनिरूपणमित्यर्थः । मांसं सवनीयानामङ्गम् चोदनाया अविशेषात् । पुरोडाशत्वेनोद्देश्यसवनीयविशेषणायोगादिति सूत्रार्थः ॥

इति तरसमयाधिकरणम् ॥२२॥

इति श्रीमत्पदवाक्यप्रमाणज्ञश्रीमत्तत्सद्रामचन्द्रसूरिवरात्मज
तत्सद्वैद्यनाथकृतायां शास्त्रदीपिकायां प्रभाख्यायां
तृतीयस्याष्टमः पादः तृतीयोऽध्यायः सम्पूर्णः ॥

## अथ चतुर्थाऽध्यायस्य प्रथमः पादः

१

अथातः० प्रसिद्धे शेषशेषित्वे प्रयुक्तिरधुनोच्यते ।
शेषिणैव च शेषस्य प्रयुक्तिरिति हेतुता ॥

यद्यपि न सर्वः शेषी शेषस्य प्रयोजकः, तुषोपवापादेः कपालादिप्रयोजकत्वाभावात्, तथाऽपि शेषिण एव तावच्छेषाणां प्रयोक्तार इति भवति शेषलक्षणस्य प्रयुक्तिलक्षणं प्रति हेतुतेति ततः परमारम्भः ।

ननु विधिरेव प्रयोजकः, सर्वश्च विधिः स्वविषयस्य प्रयोजक एव, अप्रयोजकस्य विधित्वानुपपत्तेः, तदेकरसत्वाद्विधेः । अथ प्रधानविधिरेव प्रयोजकः नाङ्गविधयः,

---

## अथ चतुर्थाध्यायस्य प्रथमः पादः

१

अथातः० पूर्वाध्यायेन सहोपजीवकत्वसङ्गतिपूर्वकमेतदध्यायार्थमाह—प्रसिद्ध इति । प्रकर्षेण प्रकारप्रमाणादिवैशिष्ट्येन सिद्धे निर्णीत इत्यर्थः । शेषशेषित्वे अङ्गाङ्गिभावे । प्रयुक्तिरिति । अनुष्ठानापरपर्यायः प्रयोगः किमर्थतया प्रयोगविधिना बोध्यत इति निरूप्यत इत्यर्थः । शङ्कानिरासार्थत्वेनोत्तरार्धं व्याचष्टे—यद्यपीति । 'पुरोडाशकपालेन तुषानुपवपति' इति शेषशेषित्वसत्वेऽपि पुरोडाशप्रयुक्तस्यैव कपालस्य ग्रहणात्तुषोपवापस्य प्रयोजकत्वाभावेनान्वयव्यभिचाराद्धेतुत्वानुपपत्तिरिति शङ्कार्थः । कारणसत्वेऽपि हेत्वन्तराभावे कार्यानुदयादन्वयव्यभिचारस्य कारणत्वाविरोधित्वाद् व्यतिरेकव्यभिचारस्य च तद्विरोधिनोऽसत्वान्न हेतुत्वानुपपत्तिरिति समाधानार्थः । न च निमित्तस्याशेषिणोऽपि नैमित्तिकप्रयोजकत्वाद् व्यतिरेकव्यभिचार इति वाच्यम्, स्वार्थतया प्रयोजकत्वस्यैतदध्यायार्थत्वात्, तस्य च शेषिण्येव सत्वात् । निमित्ते तु फलार्थं प्रयोजकत्वं न स्वार्थमिति भेदात् । ननु दध्यानयनादिविधिरेव दध्यानयनाद्यनुष्ठापकतया प्रयोजको न त्वामिक्षादीति दध्यानयनमामिक्षा प्रयोजयति ? किं वा वाजिनमपीति करिष्यमाणविचारानुपपत्तिरिति शङ्कते—नन्विति । अङ्गविधेरप्रयोकत्वमाशङ्क्याह—सर्वश्चेति । कुतस्तत्राह—अप्रयोजकस्येति । अननुष्ठापकस्येत्यर्थः । कुतस्तत्राह—तदेकेति । प्रवर्तनारूपस्य विधेः प्रवृत्तिप्रयोजकस्वभावत्वादित्यर्थः । ननु प्रधानविधेरेव साङ्गप्रधानानुष्ठापकत्वात्प्रयोजकत्वम् अङ्गविधिस्तूत्पत्त्युत्पत्तिविनियोगपर एव सन् कर्तव्यतां शेषतात्पर्याभावादनुवादक एव । तथा च दध्यानयनं प्रधानभूतामिक्षाविधिप्रयुक्तं न तु वाजिनविधिप्रयुक्तमिति विचारोपपत्तिरिति शङ्कते—अथेति । अन्यतः प्रधानविधेः । दूषयति—तत्यमिति । इदम् अप्रयोज-

अन्यतः सिद्धत्वात् । तुल्यमिदमामिक्षाविधेर्वाजिनविधेश्च, द्वयोरप्यङ्गविधित्वात् । ततः किमत्र चिन्त्यते ? उच्यते—सत्यम् विधिरेव प्रयोजकः । प्रयोजनाय तु कस्मै किमनुष्ठापयति ? कस्मै न ? किं दध्यानयनविधिः आमिक्षार्थतयैवानयनमनुष्ठापयति ? एवं कपालादिष्वपि द्रष्टव्यम् । यदर्थञ्चानुष्ठापयति तत्प्रयोजकमित्युच्यते । यत्तु साध्यमपि साधनमन्यतः सिद्धमुपजीवति, न स्वयमनुष्ठापयति तदप्रयोजकमुच्यते ।

यद्वा—विधिः क्रियायामेव साक्षात्प्रयोजकः, विशेषणेषु त्वर्थात् । तद्यत्र परप्रयुक्तमेव विशेषणत्वेनाङ्गीक्रियते, यथैकहायनी क्रयप्रयुक्ता पदग्रहणस्य, पुरोडाशकपालञ्च पुरोडाशप्रयुक्तं तुषोपवापस्य, तत्र तुषोपवापादिविधेः परप्रयुक्तविशेषणोपजीवित्वात्तद्विषया प्रयुक्तिशक्तिर्लुप्यते । 'कपालेषु श्रपयति, एकहायन्या क्रीणाती'त्यादयस्तु विधयः स्वतन्त्रकपालैकहायन्यादिग्राहित्वाद् भवन्ति प्रयोजकाः, तत्र किङ्कस्य प्रयोजकम् ? किङ्कस्य नेति युक्ता चिन्ता । सर्वस्मिंश्चाध्याये क्रत्वर्थपुरुषार्थादिविचारद्वारेण प्रयुक्तिरेव चिन्त्यते । तदेतत्प्रतिज्ञासूत्रम् ।

यत्पुनर्भाष्ये श्रुत्यादिकीर्तनम्, तेनान्यत् शेषप्रमाणं तृतीयस्याविषयभूतमस्तीति गम्यते । अन्यथा हि नानाकर्मलक्षणं वृत्तमितिवत्, शेषलक्षणं वृत्तमित्येवाऽवक्ष्यत् ।

---

कल्प्यम् । आमिक्षाविधेः विशिष्टविध्यन्यथानुपपत्त्या कल्प्यस्यामिक्षारूपविशेषणविधेः । यथाश्रुते आमिक्षावाक्यस्य प्रधानविधित्वादसङ्गतेः । विधिरेवेति । प्रधानविधिः सर्वोऽपि वा विधिरित्यर्थः । एवमिति । कपालविधिः किं पुरोडाशार्थतया कपालमनुष्ठापयति उत तुषोपवापार्थतयापीति रीत्यर्थः । आदिनैकहायन्यादिपरिग्रहः । एवमप्यामिक्षादौ कथं प्रयोजकत्वव्यवहारस्तत्राह—यदर्थञ्चेति । तथाच प्रयोजकशब्दः प्रयोजनविशेषपर इति भावः । ननु 'पुरोडाशकपालेन तुषानुपवपति' इति विधिस्तुषोपवापार्थया कपालं न प्रयोजयतीत्येतदनुपपन्नम्, तस्य स्वविषयानुष्ठापकस्वभावस्य किञ्चिदंशेऽनुष्ठापकत्वं किञ्चिदंशे नेति वक्तुमशक्यत्वादत आह—यद्वेति । पदग्रहणस्य पदपांसुग्रहणस्य । पदं कस्येत्यपेक्षायां सन्निहितैकहायनीविशेषणत्वेनाङ्गीक्रियत इत्यर्थः । प्रयुक्तिशक्तिः प्रयोगे तात्पर्यम्, लुप्यते नास्ति लाघवात् । अनन्यलभ्यस्यैव शब्दतात्पर्यविषयत्वादिति भावः । स्वतन्त्रेति । अनन्यप्रयुक्तेत्यर्थः । ननु क्रत्वर्थत्वादिविचारस्याप्यत्र दर्शनात्कथं प्रयुक्तिरध्यायार्थ इत्यत आह—सर्वस्मिंश्चेति । तदुक्तम्—

'फलविध्यर्थवादत्वकालार्थाङ्गप्रधानताः ।
फलक्रतुप्रयुक्तत्वविचाराय विचारिताः ॥' इति ॥

विचाराप्रदर्शनात्सूत्रप्रयोजनमाह—तदेतदिति । सूत्रार्थस्तु—अथ शेषलक्षणानन्तरम् अतः उपजीवकत्वसङ्गतिवशात् क्रत्वर्थपुरुषार्थजिज्ञासा प्रयुक्तिनिर्णयाय क्रियत इति । शङ्काव्याजेन गुरुमतमुपन्यस्यति—यत्पुनरिति । 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानैः शेषविनियोग-

अथ तत्र द्वितीयेऽध्याय इत्यनुक्त्वा इह तृतीयेऽध्याय इति किमर्थमुक्तम् ? वक्तृविवक्षा-वैचित्र्यादिति । इदमेव श्रुत्यादिकीर्तनेऽप्युत्तरम् ॥

इति क्रत्वर्थपुरुषार्थजिज्ञासाधिकरणम् ॥१॥

२

**यस्मि०** वक्ष्यमाणयोः क्रत्वर्थ-पुरुषार्थयोर्लक्षणार्थमिदं सूत्रम् । यद् भावना-कथम्भावपूरणं विधीयते, तत् क्रत्वर्थम् । अन्यत्करणम् फलञ्च पुरुषार्थम् ॥

---

लक्षणमुक्तम्' इति भाष्यम् । तत्र श्रुत्यादिकीर्तनेन श्रुत्यादिप्रमाणकमुक्तम्, अन्यप्रमाणकं नोक्त-मिति गम्यते । तच्चान्यत्प्रमाणमुपादानाख्यं चतुर्थे कथ्यते । उपादानं नाम कार्यान्विताभिधान-प्रयुक्त आक्षेपः । तथाहि—'व्रीहीन् प्रोक्षति' इति कार्यान्वितप्रोक्षणावगतौ प्रोक्षणस्य करणत्वेन कार्येऽन्वयस्य यागकरणकेऽसम्भवात्करणाङ्गद्वारा तत्पर्यवसानकल्पनमित्यौपादानिकं प्रोक्षणस्य यागाङ्गत्वम् । श्रुत्यादिकन्तु व्रीह्यादिद्वारशेषतायां यागाङ्गत्वोपपादिकायां प्रमाणमिति । प्रति-बन्द्या तावदुत्तरयति—अथेति । तत्र 'नानाकर्मे'ति तृतीयादिग्रन्थे । प्रोक्षणादेर्यागाङ्गत्वन्तु प्रकरणगम्यमेवेति नातिरिक्तप्रमाणकल्पना युक्तेत्याशयः ॥

इति क्रत्वर्थपुरुषार्थजिज्ञासाधिकरणम् ॥ १ ॥

२

यस्मिन्० सूत्रस्य प्रकृतोपयोगितामाह—वक्ष्यमाणयोरिति । सामान्यतो ज्ञाने ह्ययं क्रत्वर्थोऽयं पुरुषार्थ इति निरूपणम् । अतो लक्षणसूत्रमिदमित्यर्थः । तत्र पुरुषार्थलक्षणं श्रुत्या, क्रत्वर्थलक्षणन्त्वर्थादिति ज्ञेयम् । प्रथमसूत्रगतक्रमानुरोधादादौ क्रत्वर्थं लक्षयति—यदिति । भाव-नायाः कथम्भाव इतिकर्तव्यताकाङ्क्षा तत्पूरकमित्यर्थः । सिद्धरूपद्रव्यकालादेरपि प्रयोगविध्यव-गतोपादानप्रक्षेपप्रतीक्षणादिपुरुषव्यापारविषयतयेतिकर्तव्यतात्वमविरुद्धम् । एवं निषेधानामपि स्वाविनाभूतसङ्कल्परूपपुरुषव्यापारविषयतया तथात्वम् । अत एवाप्राशस्त्यज्ञानस्य तत्रेतिकर्तव्यतात्वोपपत्तिरिति न क्वाप्यव्याप्तिः । अन्यदिति । एतच्च स्वरूपकीर्तन-मात्रम् । फलतत्करणान्यतरत्वमात्रं लक्षणम्, अन्यथा खादिरत्वादेरुभयार्थत्वेन क्रत्वर्थभिन्न-त्वाभावादव्याप्तेः । फलत्वञ्च शास्त्रानधीनेच्छाविषयत्वं स्वर्गपश्वादिषु । अन्यथर्थज्ञान-योस्तु शास्त्राधीनेच्छाविषयत्वान्न फलत्वमिति नाधानाध्ययनयोरतिव्याप्तिः । कलञ्जभक्षणादि-निषेधानामपि प्रत्यवायपरिहाररूपफलकारणत्वात् पुरुषार्थत्वोपपत्तिः । सूत्रमपि यस्मिन् यागादौ सति पुरुषस्य प्रीतिः स्वर्गरूपा जायते, तदुभयमपि पुरुषार्थ इति शेषः । कुतः ? तस्य लिप्सा इच्छा अर्थलक्षणा शास्त्रानधीनेत्यर्थः । ननु साधने शास्त्राधीनैवेति कथं तस्य पुरुषार्थत्वमत आह—अविभक्तत्वादिति । फलाविनाभूतत्वात्तस्य पुरुषार्थतेत्याशयः । अविनाभूतत्वं तत्कारण-त्वमित्युक्तार्थलाभः ॥

इति क्रत्वर्थपुरुषार्थलक्षणाधिकरणम् ॥

### द्वितीयं वर्णकम्

अथवा फलांशस्य किं विधिः प्रयोजकः ? नेति चिन्त्यते । विधेयभावनाविशेषणत्वात्करणादिवत्फलस्यापि विधेयत्वशङ्का, रागतस्तु प्रवृत्तिसिद्धेरविधेयत्वम् ॥

### इति द्वितीयं वर्णकम्

### तृतीयं [ गोदोहनाधिकरणम् ] वर्णकम्

**अथवा**—दर्शपूर्णमासयोः श्रूयते–'गोदोहनेन पशुकामस्य प्रणयेदि'ति । तत्र संशयः—किं गोदोहनं क्रत्वर्थमपि ? उत पुरुषार्थमेवेति । तत्र षष्ठीश्रुत्या पुरुषार्थम्, क्रतूपकारकत्वाच्च क्रत्वर्थमित्युभयार्थत्वम् ।

नैवम्; उपकारलक्षणशेषत्वनिराकरणात् अन्यार्थस्यापि क्रतूपकारकत्वाविरोधात् । श्रुत्या पुरुषार्थमेवेति फलप्रयुक्तमेवैतत्, न क्रतुप्रयुक्तम् ॥

### इति तृतीयं वर्णकम्

### चतुर्थं [ द्रव्यार्जनाधिकरणम् ] वर्णकम्

एवं वा—किमिहोदाहरणम् ? द्रव्यार्जनमेव । द्रव्यस्य प्राप्तिरित्यर्थः । येयं पुरुषस्य तेन तेन नियमेन द्रव्यप्राप्तिः ब्राह्मणस्य प्रतिग्रहादिना, राजन्यस्य जयादिना, वैश्यस्य कृष्यादिना, शूद्रस्य सेवादिना, सर्वेषां दायादिनेति । सैव चिन्त्यते—किं क्रत्वर्था पुरुषस्य द्रव्यप्राप्तिः, उत पुरुषार्थेति । तत्र—

---

### वर्णकान्तरम्

विचारशास्त्रे तत्परत्वस्यैवौचित्यादाह—अथवेति । तद्विषयप्रवृत्तिप्रयोजकस्यैव तद्विधित्वात्फलस्य च प्रवृत्तिरूपभावनाविशेषणत्वेन विधेयत्वमाह—विधेयेति । विशिष्टभावनाविषयविधिना विशेषणेऽप्राप्त एव विधिकल्पनम् । फले तु रागत एव प्रवृत्तेर्न तदंशे विधिकल्पनेत्याह—रागतस्त्विति । पूर्वपक्षे श्येनफलस्य हिंसारूपाभिचारस्य विधेयतया 'न हिंस्यादि' ति निषेधाविषयत्वम् । सिद्धान्ते तु तद्विषयत्वमिति प्रयोजनम् ॥

### वर्णकान्तरम्

प्रयोजकाप्रयोजकविचारस्याग्रे करिष्यमाणत्वात्तदुपयोगितया प्रतिज्ञातः क्रत्वर्थपुरुषार्थविचार एव कर्तुमुचित इत्याशयेन वर्णकान्तरमाह—अथवेति । दुह्यतेऽस्मिन् तद्दोहनं पात्रम् ॥

### वर्णकान्तरम्

अत्रापि पूर्वपक्षस्यातिमन्दत्वादाह—एवं वेति । कैश्चिद् द्रव्यार्जनोपायनियमस्योदाहरणतोक्ता । भाष्ये तु इह द्रव्यार्जनमुदाहरणमित्युक्तमतः किमिति प्रश्नः । भाष्योक्तमेवेत्याह—द्रव्येति । द्रव्यमर्ज्यतेऽनेनेति व्युत्पत्तिभ्रमनिरासायाह—द्रव्यस्येति । कीदृशी क्व विहितेत्याकाङ्क्षायामाह—येयमिति । दायादिनेत्यनन्तरं स्मृतिविहितेति शेषः । अत्राद्येनादिपदेन याजनाध्यापनसङ्ग्रहः, द्वितीयेन दण्डादेः, तृतीयेन वाणिज्यादेः, चतुर्थेन शिल्पादेः । दायं पित्रा-

नियमस्यार्थवत्त्वाय क्रत्वर्थो द्रव्यसङ्ग्रहः।
पुरुषार्थत्वपक्षे हि नियमोऽनर्थको भवेत्॥

प्रतिग्रहाद्युपायनियमस्तावद् द्रव्यार्जनोद्देशेन ब्राह्मणादीनां विधीयमानस्तदङ्गं विज्ञायते। स्वरूपे कार्ये चोपयोग्यङ्गम्भवति, सोऽयन्नियमो न तावदर्जनस्वरूपे उपयुज्यते, अन्तरेणापि नियमम् अर्जनसम्भवात्। अतः कार्योपयोगी, पुरुषार्थत्वे च दृष्टमेव प्रयोजनं क्षुत्प्रतिघातादि द्रव्यार्जनस्य कार्यं स्यात्। तदपि च विनापि नियमेन निष्पद्यत इति तादर्थ्ये सति अर्जनस्य नियमस्तदङ्गं न स्यात्। अतो नियमविध्यनुपपत्त्या नूनं द्रव्यप्राप्तिः क्रत्वर्थेत्यनुमीयते। तथा सति हि क्रत्वपूर्वस्यादृष्टत्वान्नियतोपायमेवार्जनं तन्निष्पादयतीति कल्पनात् नानर्थक्यं नियमविधेः। न चाऽर्जनविशेषोद्देशेनायं नियमविधिः, विशेषाश्रवणात् प्रकरणाद्यभावाच्च। तस्मादर्जनमात्रोद्देशेन विधीयमानो नियमस्तन्मात्रस्य क्रत्वर्थत्वङ्गमयति। तस्मात्सर्वमेव पुरुषस्य स्वं क्रत्वर्थम्। एवञ्च क्रत्वर्थैकान्तहिरण्यादिसम्बन्धात् क्षामवत्यादीनां खादिरवत् क्रत्वर्थत्वात् फलं न कल्पनीयम्भवति। तस्मात् सर्वं द्रव्यं क्रत्वर्थम्। तथा च स्मृतिः— 'यज्ञार्थं पशवः सृष्टाः' इति। एवं प्राप्ते ब्रूमः—

पुरुषार्थत्वमेतस्य प्रत्यक्षेणाऽवगम्यते।
क्रत्वर्थताऽनुमानेन प्रत्यक्षात्तच्च दुर्बलम्॥

---

दिधनम्। तदङ्गमिति। द्रव्यार्जनाङ्गमित्यर्थः। तादर्थ्ये सतीति। अर्जनस्य तादर्थ्ये सति पुरुषार्थत्वे सति नियमस्तदङ्गम्। द्रव्यार्जनाङ्गत्वेनायं नियमस्सार्थकः स्यादिति शङ्कते—न चेति विशेषः शब्दावगतो वा, तदभावेऽपि 'व्रीहीन् प्रोक्षति' इतिवत्प्रकरणावगतो वा नास्तीत्याह— विशेषेति। स्वं धनम्। एवञ्चेति। सर्वद्रव्यस्य क्रत्वर्थत्वे चेत्यर्थः। क्रत्वर्थेति भावप्रधानम्। क्रत्वर्थत्वेनैकान्ततो नियम यस्य तादृशेत्यर्थः। 'यस्याहिताग्नेरग्निर्गृहान् दहेत् सोऽग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत् एतामेव निर्वपेद्यस्य हिरण्यं नश्येत्' इति क्षामवतीष्टिः। आदिना 'यस्य हिरण्यं नश्येदाग्नेयादीनि निर्वपेत्' इत्याग्नेयादीष्टिसङ्ग्रहः। खादिरवत्। 'यस्य खादिरस्स्रुवो भवति स छन्दसामेव रसेनावद्यति' इति विहितखादिरत्ववत्। तस्यापि क्रत्वविनाभूतस्रुवसम्बन्धेन क्रत्वर्थत्वात्। क्रत्वर्थता च क्रत्वङ्गद्रव्यनाशकृतवैगुण्यपरिहारात् क्षामवत्यादेर्बोध्या। द्रव्यस्य पुरुषार्थत्वे तु तन्नाशे क्रतुवैगुण्याभावात्स्वतन्त्रफलकल्पनागौरवमिति भावः। सर्वद्रव्यस्य पुरुषार्थत्वे स्मृतिरूपलिङ्गदर्शनमप्याह—तथा चेति। एवञ्च न्यायोपष्टब्धैतत्स्मृतिवशात् 'षण्णान्तु कर्मणामस्य त्रीणि कर्माणि जीविका' इत्यादिस्मृतिः क्रतुनैव स्वसिध्यर्थं जीवनमात्रविनियोगानुमतेस्तदनुवादमात्रमिति भावः। अनुमानेनेति। नियमान्यथानुपपत्तिरूपार्थापत्तेरित्यर्थः, अनु पश्चान्मानमिति व्युत्पत्तेः। अविधेयत्वादपि न क्रत्वङ्गत्वमित्याह—

रागप्राप्तं तावदर्जनम्, न शास्त्रीयम्। रागतश्च पुरुषार्थतया प्राप्तिः। प्रत्यक्षेण चार्जितं द्रव्यं पुरुषं प्रीणयत् पुरुषार्थं विज्ञायते, न तदनुमानेन क्रत्वेकशेषतया शक्यं विज्ञातुम्। तस्मात्पुरुषार्थं द्रव्यम् क्रतुरपि पुरुषकार्याणामन्यतम इति कार्यान्तर इव क्रतावप्युपयुज्यत इत्येतावान्विशेषः न तु तस्यैवाङ्गम्, तथा च सति जीवनलोपात्क्रतुरेव न संवर्तेत, द्रव्यप्राप्तिमात्रादेव च क्रतूपक्रमात् 'अप वा एष सुवर्गात् लोकादि'त्यनुपक्रमदर्शनं नोपपद्येत। तस्मात्पुरुषार्थम्। एवञ्च दृष्टार्थम्भवति, नियमस्तु दृष्टकार्याभावात् काममदृष्टार्थः स्यात्। अदृष्टमपि पुरुषार्थार्जनविषयत्वान्नियमस्य तदङ्गमेव कल्प्यते। तेनासावुपायान्तरेणार्जयन् प्रत्यवैतीति कल्प्यते। तस्मात्पुरुषार्थो द्रव्यपरिग्रहः।

केचित्तु नियम एवात्र चिन्त्यत इत्याहुः। तदयथाभाष्यम्। तथा च सति पुरुषार्थस्यापि द्रव्यस्य पूर्वपक्षेऽपि सद्भावात् सिद्धान्तवत् पूर्वपक्षेऽपि क्षामवत्याः क्रत्वर्थता न सिध्यतीति तदुपन्यासो नावकल्पेत। तथा द्रव्यार्जनप्रक्रमादेव क्रतुप्रक्रमे दोषो यः सिद्धान्तिना पूर्वपक्षिणं प्रत्यापादितः, सोऽपि न स्यादित्यास्तां तावत्॥

इति लिप्साधिकरणम्॥ २॥

३

तदुत्सर्गे० 'तस्य व्रतमि'त्युपक्रम्य 'नोद्यन्तमादित्यमीक्षेते'ति श्रुतम्। तत्र विचार्यते—किं क्रत्वर्थम्, उत पुरुषार्थमिति। तथा किं प्रतिषेधः? पर्युदास इति। तत्र—

प्रतिषेधे श्रुतिः शब्दः पर्युदासे तु लक्षणा।
प्रतिषेधश्च सन् प्राप्तिम्मार्गमाणः क्रतुं व्रजेत्॥

पर्युदासे नञीक्षतिभ्यां क्रियान्तरं लक्ष्यते। प्रतिषेधे त्वाख्यातेन श्रुत्यभिहिता-

---

रागेति। ननु क्रत्वन्यथानुपपत्त्या क्रत्वर्थेनापि जीवनं स्यादतो दोषान्तरमाह—द्रव्यमिति। 'अप वा एष सुवर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी सन्नमावास्यां पौर्णमासीं वातिपातयेत्' इत्यत्रातिपातनमनुपक्रम इत्याशयः। एवं पुरुषार्थत्वे। दृष्टार्थं दृष्टमात्रार्थम्। क्रत्वङ्गत्वे तु दृष्टद्वारा तदपूर्वार्थित्वमपीति भावः। तदङ्गम् पुरुषाङ्गम्। यदर्था क्रिया तदर्थो नियमोऽपीत्यर्थः। अयथाभाष्यं भाष्याननुसारि। तत्र द्रव्यार्जनस्यैवोदाहरणात्। तदुपन्यासः क्षामवत्यादेः क्रत्वर्थतोपन्यासः। प्रयोजनं पूर्वपक्षे प्रतिग्रहाद्यर्जितस्यैव क्रतावुपयोगः, सिद्धान्ते नेति॥

इति लिप्साधिकरणम्॥ २॥

३

तदुत्सर्गे० प्रीत्यविभागे द्रव्यार्जनस्यास्तु पुमर्थता, तदभावे तु प्रजापतिव्रतानां क्रत्वर्थतास्तु इति प्रत्यवस्थानात्सङ्गतिः। पर्युदासत्वेऽपि क्रत्वर्थत्वपूर्वपक्षस्तु नादर्तव्य इति सूचयितुमाह—तथेति। श्रुतिः शब्द इति जातावेकवचनम्। नञीक्षती वाचकौ भवत इत्यर्थः।

मीक्षणकर्तव्यताम्, श्रुत्यैव नञ् प्रतिषेधतीति न लक्षणा। स च प्राप्त्यपेक्षो वैदिकत्वसामान्याद्वैदिकीमेव प्राप्तिं शीघ्रमनुगच्छतीति। तेन यत्र कर्माङ्गभूतमादित्येक्षणं विहितम्, तत्रोद्यतोऽस्तंयतश्च प्रतिषेधः, फलञ्चैवं न कल्प्यम्। अथापि पर्युदासः, तथाऽपि फलकल्पनाभयात्क्रत्वर्थ इति प्राप्ते, ब्रूमः—

उपक्रमे श्रुतं कर्मवाचि व्रतपदं यतः।
तदन्वयबलात्कर्मविशेषोऽतोऽत्र चोद्यते॥
तेन लक्षणयाऽप्यत्र पर्युदासः स च क्रतोः।
बहिःश्रुतः फलाकाङ्क्षी पुरुषार्थत्वमृच्छति॥
श्रुत्यादि क्रतुसम्बन्धे प्रमाणं नात्र विद्यते।
पुरुषापेक्षितार्थत्वं विधिना चावबोधितम्॥
साक्षादपेक्षितं तस्य फलमेव न तु क्रतुः।
अतः फलार्थता तच्च वाक्यशेषादघक्षयः॥

इति प्रजापतिव्रताधिकरणम्॥३॥

४

द्रव्याणि० 'स्फ्यश्च कपालानि चे'त्यनुक्रम्य 'एतानि वै दश यज्ञायुधानी'

---

क्रियान्तरम् अनीक्षणसङ्कल्परूपम्। तावता कथं क्रत्वर्थतात आह—स चेति। प्रतिषेध इत्यर्थः। ननु विहितप्रतिषेधे विकल्पापत्तिरित्याशङ्क्याह—उद्यत इति। यदादित्यमीक्षेत तन्नोद्यन्तमित्युद्यदवस्था निषिध्यते, न तु विहितमीक्षणम्, येन विकल्पस्स्यादिति भावः। फलम्—'एतावता हैनसावियुक्तो भवति' इत्यार्थवादिकपापक्षयरूपम्। क्लृप्तक्रतूपकारेण निराकाङ्क्षत्वादिति भावः। भाष्योक्तपक्षान्तरमप्याह—अथापीति। उपक्रम इति। अतस्तदन्वयबलादित्यन्वयः। क्रतोः क्रतुप्रकरणाद् बहिः श्रुत इत्यन्वयः। क्रतुसम्बन्धे क्रत्वङ्गत्वे श्रुत्यादि यत्प्रमाणं तदत्र न विद्यत इत्यर्थः। तस्य पर्युदासस्य तल्लभ्यानीक्षणसङ्कल्पस्य साक्षात्पुरुषापेक्षितार्थत्वं यतो विधिना बोधितम् अतः फलमेवापेक्षितं न क्रतुरिति योजना। तच्च फलञ्च। प्रयोजनं पूर्वपक्षे क्रतुमध्य एव निषेधपालनम्। सिद्धान्ते सर्वदा सङ्कल्पाधिवयञ्चेति। तदुत्सर्गे प्रीत्यनुपलम्भेऽपि कर्माणि प्रजापतिव्रतादीनि पुरुषार्थाय फलाय शास्त्रस्यानतिशङ्क्यत्वान्निर्विचिकित्सप्रमाणत्वात्। क्रत्वर्थता न कुतस्तत्राह—न च क्रत्वङ्गद्रव्यं चिकीर्ष्यते संस्क्रियते। तेन अर्थेन फलेनाभिसम्बन्धादर्थवादे सम्बन्धात् क्रियायां पुरुषस्य भाव्यतया श्रुतिः पुरुषार्थत्वमिति सूत्रार्थः॥

इति प्रजापतिव्रताधिकरणम्॥ ३॥

४

द्रव्याणि० प्रजापतिव्रतानां क्रत्वङ्गत्वे यथा प्रमाणाभावस्तथा स्फयादीनामपि साक्षाद् क्रत्वङ्गत्व इत्यातिदेशिकी सङ्गतिः। तृतीये सर्वमुद्धननादि सर्वैः कार्यमुत यथासंयोगं व्यवस्थेति

ति श्रुतम् । किमयं प्रधानयागहविष्ट्वेन स्फ्यादीनां विधिः ? उत 'स्फ्येनोद्धन्ती'-त्यादिवाक्यप्राप्तानुवादः ? इति संशये,

अर्थवत्त्वाद्विधिर्न्याय्यो वादमात्रं ह्यनर्थकम् ।
यज्ञशब्दः प्रकरणादाग्नेयादिषु वर्तते ॥
गौणेनायुधशब्देन तत्साधनतया ततः ।
स्फ्यादिद्रव्याणि चोद्यन्ते पुरोडशादिभिः सह ॥
समुच्चयो विकल्पो वा स्यादिति प्राप्त उच्यते ।
न ह्यत्राख्यातशब्दोऽपि श्रूयते न तरां विधिः ॥
विकल्पोऽपि न वैषम्यात्पुरोडाशादिभिः सह ।
समुच्योऽपि नैकार्थ्यान्निरपेक्षश्रुतेरपि ॥

'यज्ञायुधानि सम्भरती'ति चाऽनन्तरश्रुतेन विधिनैकवाक्यत्वात्तच्छेषोऽयमुद्धननादिद्वारा प्राप्तयज्ञसाधनत्वानुवादः ॥

इति यज्ञायुधाधिकरणम् ॥४॥

५

तत्रैक० उपादेयभूतपश्वादिगता विभक्त्यभिहितैकत्वादिका संख्या किमयज्ञाङ्गमविवक्षिता ? उत यज्ञाङ्गं विवक्षितेति संशयः । तत्र—

---

चिन्तितम् । इह तु प्रदेयत्वमाशङ्क्य निराक्रियत इत्यगतार्थत्वम् । न च यज्ञायुधवाक्ये सम्भरणविध्यर्थवादत्वस्योक्तत्वादिह पूर्वपक्षासम्भव इति वाच्यम्, 'यज्ञायुधानि सम्भरति' इति विधेर्यज्ञायुधत्वं विनानुपपत्त्या यज्ञायुधवाक्यस्यापि पृथग्विधित्वस्यावश्यकत्वमित्यर्थवादत्वाक्षेपेण पूर्वपक्षोपपत्तेः । उपांशुयाजे विधानेनोत्पत्तिशिष्टगुणविरोधस्याप्यभावाच्चेति ज्ञेयम् । वादमात्रम् अनुवादमात्रम् । प्रयाजादिव्यावर्तनायाह—यज्ञशब्द इति । ननु यज्ञोद्देशेन साधनविधावेकप्रसरताभङ्ग इत्याशङ्क्याह—तत्साधनतयेति । एतानीत्यनूद्य यज्ञसाधनानि कर्तव्यानीति यज्ञसाधनत्वेन रूपेण विधानमित्यर्थः । इदञ्चापाततो यज्ञायुधवाक्यानर्थक्यपरिजिहीर्षयोच्यते । वस्तुतः कैमुत्यन्यायेनोपांशुयाजे विधानमेव ज्ञेयम् । न हीति । अत्र यज्ञायुधवाक्ये । वैषम्यात् उत्पत्त्युत्पन्नशिष्टत्वरूपात् । नन्वनुवादानर्थक्यात् सर्वमङ्गीकार्यमत आह—यज्ञेति । सम्भरणस्तावकतया तदेकवाक्यताप्रतीतेरानर्थक्याभावादुद्धननादिसाधनतया च यज्ञायुधत्वोपपत्तेः । 'सर्वस्मै वा एतद्यज्ञाये' त्याद्यनन्यार्थवाक्यविहिताज्यस्यान्यार्थेनानेन बाधायोगादिति भावः । सूत्रप्रयोजने स्पष्टे ॥ इति यज्ञायुधाधिकरणम् ॥ ४ ॥

५

तत्रैकत्वं० श्रुतोद्धननार्थस्य स्फ्यादेर्वाक्यादयज्ञाङ्गत्ववदेकत्वस्यापि पदश्रुत्या पश्वन्वितस्य न वाक्याद्यज्ञाङ्गतेति प्रत्यवस्थानात्सङ्गतिः । तत्रे ति । पश्वङ्गता पशुविशेषणता । यथा-

श्रुत्या पश्वङ्गता तस्याः समानपदरूपया ।
पदान्तरस्थयागाङ्गभावो वाक्यात्प्रतीयते ॥
दुर्बलञ्च श्रुतेर्वाक्यमित्ययज्ञाङ्गमेकता ।
तदभावे च यज्ञावैगुण्यात्तदविवक्षितम् ॥
उच्यते—समानप्रत्ययस्थेन कारकेणाऽऽत्मसात्कृता ।
क्रियायै नीयते संख्या न पश्वङ्गं पदाद्भवेत् ॥

समानप्रत्ययोपात्तेन प्रातिपदिकार्थादपि सन्निहिततरेण प्रधानभूतेन कारकेणाऽवरुद्धमेकत्वं प्रातिपदिकार्थमनादृत्य क्रियाङ्गमवगम्यमानं वाक्यसमर्पितेन क्रियाविशेषणन च सम्बध्य पश्चादरुणैकहायनीन्यायेन पशुना विशेषणत्वेनार्थात्सम्बध्यते, तादर्थ्यन्तु यज्ञं प्रत्येवेति विवक्षितमेकत्वम् ॥

इति पश्वेकत्वाधिकरणम् ॥ ५ ॥

६

तथा० एवं वा–लिङ्गन्तु अलिङ्गे विपरीतलिङ्गे वृक्षादौ मक्षिकादौ च शब्दप्रयोगादशब्दार्थं इत्यविवक्षितत्वाशङ्का । सिंहः सिंहीत्यादावनन्यथासिद्धलिङ्गप्रतीतिः शब्दस्य वाचकत्वं कल्पयतीति शब्दार्थत्वात्सङ्ख्यावल्लिङ्गं विवक्षितम् ॥

इति पशुलिंगस्य विवक्षितत्वाधिकरणम् ॥ ६ ॥

---

श्रुतेऽङ्गत्वस्य विध्यधीनतया विधेश्चापूर्वसाधनत्वलक्षणां विनानुपपत्त्या अविवक्षानुपपत्तेः । अत एवायज्ञाङ्गमित्येव पूर्वपक्षकोटिः सूत्रे च स्वयञ्चोक्तेति । तस्याः सङ्ख्यायाः । तदभावे च अयज्ञाङ्गत्वाभावे च । तत् अयज्ञाङ्गम् । प्रत्ययस्थेन प्रत्ययाभिहितेन । आत्मसात्कृता स्वान्वितत्वेनावगता । अर्थात् योग्यतारूपलिङ्गात् । तादर्थ्यन्तु अङ्गत्वन्तु । पशोर्द्वारत्वमात्रं आरुण्यं प्रतीवैकहायन्या इत्यर्थः । न चैवं ग्रहैकत्वस्यापि विवक्षापत्तिः । तत्र ग्रहैकत्वयोरुद्देशेन सम्मार्गभावनाविधौ वाक्यभेदापत्तेः । इह तु तदभावेन विवक्षोपपत्तेः । न चैवं सति 'यदि सोममपहरेयुरेकां गां दक्षिणां दद्यात्' इत्यत्रैकपदवैयर्थ्यम् । दक्षिणानुवादेनैकत्वगोत्वविशिष्टकारकस्य 'धेनुर्दक्षिणा' इतिवद्विधानेऽश्वादिनिवृत्तिप्रसङ्गात्तद्वारणाय गोरुद्देशेनैकत्वमात्रविध्यर्थं तदुपादानादिति ॥ ५ ॥

इति पश्वेकत्वाधिकरणम् ॥५॥

६

'तथा च लिङ्गम्' इति सूत्रस्याधिकरणान्तरत्वं भाष्यानुसारेणाह–एवं वेति । शब्दप्रयोगादिति । 'सुप्प्रातिपदिकटाबादिप्रयोगादित्यर्थः । अशब्दार्थः व्यभिचारादुक्तशब्दानभिधेयम् । शब्दस्येति । सुब्विकारङीबादेरित्यर्थः । तथा च क्वचिद् बाधादनन्वयेऽपि साधुत्वमात्रार्थत्वमिति भावः ॥ ६ ॥

७

आश्रयि० उत्तमः प्रयाजः, पशुपुरोडाशः, स्विष्टकृदित्यादयोंऽशेन परकीयं द्रव्यदेवतं संस्कुर्वन्तः किन्तदर्था एव ? उतापूर्वार्था अपीति चिन्त्यते । तत्र—

एकस्य कर्मणो युक्तमेकमेव प्रयोजनम् ।
दृष्टे च सति नादृष्टं कल्प्यं नापूर्वमस्त्यतः ।

उच्यते—देवतास्मरणं मन्त्रात् प्रक्षेपाद् द्रव्यसंस्कृतिम् ।
त्यागांशस्य तु नादृष्टादृते किञ्चित्प्रयोजनम् ॥

तस्मात् त्यागांशेनादृष्टार्था अपीत्युभयार्थाः ॥

इत्याश्रयिकर्माधिकरणम् ॥ ७ ॥

८

अर्थे० एवं तावत्फलभूतं प्रयोजकाप्रयोजकत्वमाश्रित्य शेषशेषित्वमेव साक्षाच्चिन्तितम् । अतः परमेतदेव साक्षाच्चिन्त्यते । हेतुत्वेन तु शेषशेषिविचारः क्वचित्करिष्यते । तदेतद् वृत्तवर्तिष्यमाणविवेककथनमात्रार्थं सूत्रम् ॥

इति प्रयुक्तिविचारप्रतिज्ञाधिकरणम् ॥ ८ ॥

---

७

आश्रयिषु० अत्र पूर्वोक्ताश्रयद्वारकाङ्गत्वस्यापवादात्सङ्गतिः । उत्तमः अन्तिमः स्वाहाकाराख्यः । आश्रयिशब्दार्थमाह—अंशेनेति । देवतोद्देशेन द्रव्यत्यागरूपस्य हि यागस्योद्देशत्यागरूपमंशद्वयम् । प्रक्षेपाख्यांशत्वव्यवहारस्तु यागशरीरानन्तर्भावेऽपि तत्समकालिकतयौपचारिकः । होमे तु तस्यांशत्वं मुख्यमेव । तत्र स्वाहाकारपुरोडाशौ मन्त्रसाधनकेनोद्देशांशेनाग्नेयादिदेवतानां पशुयागदेवतायाश्च क्रमेणोद्देशांशेन स्मरणरूपसंस्कारजनकौ । स्विष्टकृत्तु परकीयद्रव्यशेषस्य प्रक्षेपांशेन प्रतिपत्तिरूपसंस्कारजनकः । उद्देशांशेन च मन्त्राङ्गकेन इष्टदेवतास्मारक इत्यर्थः । तदर्था एव द्रव्यदेवतासंस्कारार्था एव । एकस्येति । यागस्य हि विधानात्प्रयोजनाकाङ्क्षा, न त्वंशानां पृथगिति भावः । किञ्चिदंशानर्थक्ये तद्घटितावयविविधेरयोगादंशानामपि प्रयोजनमावश्यकमित्याह—उच्यत इति । प्रयोजनं पूर्वपक्षे स्वाहाकारेऽपूर्वप्रयुक्ताभिक्रमणाननुष्ठानम्, सिद्धान्ते त्वनुष्ठानम् । पशुपुरोडाशे चैष्टिकधर्मानतिदेशातिदेशौ । स्विष्टकृति शेषनाशे लोपः । सिद्धान्ते त्वाज्येन समापनम् । 'यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वा आज्येनैना देवताः परिसङ्ख्याय यजेत' इति वचनात् । आश्रयिष्वंशेन द्रव्यदेवतासंस्कारकेषु प्रयाजादिभ्यो विशेषाभावेन भावो भाव्योऽर्थः अपूर्वं प्रतीयेतेति सूत्रार्थः ॥

इत्याश्रयिकर्माधिकरणम् ॥७॥

८

अर्थे० एतदेव प्रयोजकाप्रयोजकत्वमेव ॥

इति प्रयुक्तिविचारप्रतिज्ञाधिकरणम् ॥८॥

६

एक० 'तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनमि'ति श्रुतम्। तत्र संशयः—किमामिक्षायागेनैव दध्यानयनम्प्रयुज्यते? उत वाजिनयागेनापीति। तदर्थं च किमुभयार्थम्? उतामिक्षार्थमिति। ततोऽपि पुनर्विचारयितव्यम् किमामिक्षाख्यं दधिपयोभ्यामर्थान्तरं वैश्वदेवयागस्य हविः? उत पय एव दधिसंसृष्टमिति।

मधुराम्लरसामिक्षा घनरूपा च तेन सा।
पयसोऽर्थान्तरं तद्धि मधुरैकरसं द्रवम्॥

वैश्वदेवयागस्य तावदामिक्षा हविः, सा च रूपरसान्यत्वात् अर्थान्तरं क्षीरात्। अतो यद्दध्यानयनमसंयुक्तमामिक्षया विहितं केवलन्तज्जननसामर्थ्याल्लिङ्गादामिक्षार्थं स्यात्। सामर्थ्यञ्च वाजिनेऽप्यस्तीति तादर्थ्यमपि युक्तम्। अत उभयप्रयुक्तमानयनम् इति। उच्यते—

पयस्तदा परामृष्टं वैश्वदेवं विधीयते।
मन्त्रवर्णाच्च पयसो हविष्ट्वमवगम्यते॥
पयस्त्वन्न द्रवापेक्षं रसमात्रनिमित्तकम्।
पय एव घनीभूतमामिक्षेत्यभिधीयते॥

आस्तान्तावदामिक्षापदम्, 'सा वैश्वदेव्यामिक्षे'ति यतच्छब्दपरामृष्टं तद्धविः, स च पयः परामृशति, तद्धि पूर्ववाक्ये प्रधानभूतं प्रकृतम्, तादर्थ्येनानयतेर्विधानात्। कथं तादर्थ्यम्? आनयनं द्विकर्मकम्, यदानीयते तत्प्रथमं कर्म, यत्प्रत्यानीयते तद् द्वितीयम्। तच्चेह पयः। तच्च प्रथमेन कर्मणा व्याप्यमानं प्रधानम्। प्रधानपरामर्शी च सर्वनामेति तच्छब्दः पय एव विश्वेदेवैः सम्बध्नातीति तदेव हविः।

---

६

एक० उभयार्थमित्यनन्तरं दध्यानयनमित्यनुषङ्गः। आमिक्षायाः पयोभिन्नत्वसाधनस्य प्रकृतोपयोगमाह—अत इति। आमिक्षया असंयुक्तमित्यन्वयः। तदा सेति तच्छब्देन। मन्त्रेति। 'जुषन्तां युज्यं पयः' इति वक्ष्यमाणादित्यर्थः। नन्वामिक्षापदावष्टम्भेन पूर्वपक्षात्तद्विचारमुपेक्ष्य प्रथमं तच्छब्दार्थमुखेन सिद्धान्तारम्भः कथमित्याशङ्क्याद्यार्धं व्याचष्टे—आस्तामिति। आमिक्षापदार्थनिर्णयस्याष्टमसिद्धत्वात् नैतदधिकरणविषयत्वम्, किन्तु तत्पदपरामृष्टं दधि पयो वामिक्षापदार्थ इत्येतावत इति तत्पदार्थमुखेनारम्भ इत्याशयः। स च तच्छब्दश्च। ननु दध्न एव कर्मतया तादर्थ्यमेवानयनस्य युक्तम् पयस्त्वधिकरणतया गुणभूतमित्याशङ्कते—कथमिति। नन्वजां ग्रामं नयतीत्यादावुभयत्र द्वितीयाश्रवणेऽपि विवक्षावशेन प्रथमस्य द्वितीयस्य

तथा च मन्त्रः 'जुषन्तां युज्यम्पयः' इति। पय एव च घनीभूतमामिक्षेति आमिक्षापदं। नित्यानुवादः। तत्सामानाधिकरण्याच्च सेति स्त्रीलिङ्गम्। सोऽपि नित्यानुवाद एव। न च पयस्त्वं द्रवापेक्षम्, रसविशेषमात्रापेक्षं तदतितापेन सान्द्रीभूतेऽपि पयस्त्वप्रतीतेः। यस्त्वम्लो रसः, स संस्कारकस्य दध्नः, न त्वसावामिक्षापदस्याभिधेयः। यस्त्वत्र मधुरः पयोंऽशः स एवामिक्षा, पयःप्रतिनिर्देशकतच्छब्दसामानाधिकरण्यात्, मन्त्रवर्णाच्च। तस्मात्पय एवामिक्षा वैश्वदेवयागहविरिति वैश्वदेवयागप्रयुक्तमानयनम्, न वाजिनयागप्रयुक्तम्॥

इति दध्यानयनस्यामिक्षाप्रयुक्तताधिकरणम्॥ ९॥

१०

पदकर्म० 'एकहायन्या क्रीणाती'ति प्रकृत्य श्रूयते, 'षट् पदान्यनुनिष्क्रामति, सप्तमं पदमध्वर्युरञ्जलिना गृह्णाति, यर्हि हविर्धाने प्राची प्रवर्तयेयुः, तर्हि तेनाक्षमुपाञ्ज्यादि'ति। तत्र संशयः—किं यदेतदक्षाभ्यञ्जनं सप्तमपदसाध्यम् तदर्थमप्येकहायनीनयनम्, तेनापि प्रयुज्यते? उत क्रयार्थमेव नयनम्, तेनैव प्रयुज्यत इति। तत्र—

द्वयोर्नयनसाध्यत्वाद्वाक्ये चाश्रवणात्तथा।
सन्निधानात् क्रयार्थत्वं तथैव पदशेषता॥

दध्यानयनमामिक्षासंयुक्तम् न वाजिनेन। नयनं तु द्वाभ्यामसंयुक्तम्, द्वयोरपि सन्निधानात्, नयनसाध्यत्वाच्चाऽविशेषः।

---

वानियमेन प्राधान्यात्। इह तु सप्तमीश्रवणेन सुतरां पयःप्राधान्यासम्भव इत्यत आह—तथा चेति। युज्यं दधियुक्तं पयो विश्वेदेवा जुषन्तामित्यर्थके मन्त्रे देवताभागत्वेन पयःप्रकाशनेन पय एव प्राधान्येन तात्पर्यविषय इत्यवगमात्सप्तम्या अपि 'अगारे गावो वासयन्ताम्' इतिवत्प्राधान्यबोधनार्थत्वमेवेति भावः। अभिधेयः अभिधेयतानिमित्तम्। सूत्रार्थस्तु—एकस्माद्दध्यानयनादेर्निष्पत्तेः सर्वमामिक्षावाजिनादि सर्वं समं प्रयोजकं स्यादिति। प्रयोजनं पूर्वपक्षे वाजिननाशे तदर्थं दध्यानयनम्, सिद्धान्ते तु न, किन्त्वाज्येन समापनमिति॥

इति दध्यानयनस्यामिक्षाप्रयुक्तताधिकरणम्॥९॥

१०

पदकर्म० षडिति। क्रयदेशं प्रति नीयमानायाः षट् पदानि अध्वर्युरनु निष्क्रामति तत्तत्पदोपरि स्वपदं निदधातीत्यर्थः। यर्हि यदा हविर्धानशकटे प्राची प्राङ्मुखे प्रवर्तयेयुस्तर्हि तदा तेन पदरजसा अक्षं शकटसम्बन्धिनमुपाञ्ज्यादित्यर्थः। द्वयोः क्रयाक्षाभ्यञ्जनयोः। आमिक्षातो वैषम्यमाह—वाक्ये चेति। 'षट् पदान्यनुनिष्क्रामती'ति नयनवाक्येऽश्रवणादित्यर्थः। एवंविधाशङ्काधिक्येन पूर्वपक्षोत्थानात्सङ्गतिरिति सूचितम्। पदशेषता पदपांसुग्रहणशेषता। नयनवाक्ये

नैवं तृतीयया तावत्क्रयार्थैवैकहायनी ।
यदर्था सा तदर्थश्च तत्संस्कारात्मको नयः ॥
नयनस्य परार्थत्वात्पदकर्माप्रयोजकम् ।
परार्थानुष्ठितं तत्तु पदकर्मोपजीवति ॥
इति पदकर्माधिकरणम् ॥ १० ॥

११

अर्था० 'कपालेषु श्रपयति, पुरोडाशकपालेन तुषानुपवपती' ति च श्रुतम् । तत्र संशयः किम्पुरोडाशश्रपणम् तुषोपवापश्च उभयं प्रयोजकं कपालस्य ? उत तुषोपवापो न प्रयोजक इति । तत्रोपवापशेषत्वं कपालस्य तृतीयया निर्विवादम् । अतः सोऽपि कपालस्य प्रयोजकः ।

सत्यमस्ति तदङ्गत्वं तथापि त्वप्रयोजकः ।
पुरोडाशप्रयुक्तस्य कपालस्येह चोदनात् ॥

पुरोडाशार्थिनोपात्तमासादितञ्च कपालं तुषोपवापे चोद्यते, न कपालमात्रम्, न च प्रयुक्तस्य पुनः प्रयुक्तिः सम्भवतीत्यप्रयोजकस्तुषोपवापः ॥
इति तुषोपवापाधिकरणम् ॥ ११ ॥

---

क्रयाश्रवणेऽपि तदङ्गैकहायनीसंस्कारतयैव तदङ्गत्वावगमात् तत्प्रयुक्तमेव नयनमित्याह— नैवमिति । पदकर्म पदपांसुग्रहणमञ्जनं वा । परार्थेति । क्रयार्थेत्यर्थः । प्रकृतपरामर्शितच्छब्दादपि परार्थावगमो बोध्यः । प्रयोजनं पूर्वपक्षे प्राण्णि सप्तमपदपाते पांस्वर्थं पुनर्नयनम्, सिद्धान्ते नेति । सूत्रं व्याख्यातम् ॥

इति पदकर्माधिकरणम् ॥१०॥

११

अर्थाभिधान० तुषोपवापः अवघातकालिकतुषनिरसनम् । तत्रेति । कपालस्येत्येतावन्मात्रोक्त्या न पुरोडाशार्थकपालत्वेन पुरोडाशविनियोगसापेक्षता तुषोपवापे विनियोगस्येत्यप्रयोजकता तुषोपवापस्य स्यात् । विनियुक्तविनियोगस्य नैराकांक्ष्येणायोगात् । अनुष्ठाने प्रसक्तस्य पुरोडाशार्थोपात्तस्यैव लाघवान्न्यायेन प्राप्तेः पुरोडाशसम्बन्धांशेऽनुवादमात्रत्वमिति सूचितम् । तृतीयाश्रुत्या विनियोगाच्चाधिकाशङ्कया सङ्गतिः। तदङ्गत्वं तुषोपवापाङ्गत्वम् । अत्र प्रयोजक इत्यनन्तरं तुषोपवाप इति शेषः । पुरोडाशप्रयुक्तस्येति । पुरोडाशस्य कपालमिति षष्ठ्यर्थः प्रयुक्तत्वमित्यर्थः । एवञ्च विनियुक्तविनियोगविरोधः परिहृतः । प्रयोजनं पूर्वपक्षे चरावपि कपालेनैव तुषोपवापः, सिद्धान्ते तु हस्तादिनापीति । अर्थः प्रयोजनं तद्युक्तमभिधानं यस्य पुरोडाशकपालस्य तत्कर्म तुषोपवापरूपं तदप्रयोजकमिति नकारार्थः । कुतः ? भविष्यता

१२

पशा० 'अग्नीषोमीयं पशुमालभेते'ति प्रकृत्य 'हृदयस्याग्रेऽवद्यती'ति श्रुतम्। तथा 'शकृत्संप्रविध्यति, लोहितन्निरस्यती'ति श्रुतम्। तत्र संशयः—किं हृदयादि, शकृल्लोहितञ्च द्वयमपि पश्वालम्भस्य प्रयोजकम्? उत हृदयाद्येवेति। उभयत्र पशोरश्रवणात्प्रकृतसम्बन्धे चाविशेषादुभयं प्रयोजकम्। नैवम्—

यागार्थः पशुरुत्पन्नो हविःप्रकृतिभावतः।
हवींषि हृदयादीनि तैरेवातः प्रयुज्यते॥

यद्यपि हृदयादिवाक्ये पशोरश्रवणम्, यागार्थता तु श्रूयते, तादर्थ्यं च न हविष्ट्वेन, विशसनश्रवणात्। किन्तु हविःप्रकृतित्वेन। हृदयादीनि हवींषि, नान्यदिति दशमे स्थितम्। अतस्तदर्थ एव पश्वालम्भः। शकृल्लोहितकर्म तु प्रतिपत्तिमात्रम्॥

इति लोहितनिरसनाधिकरणम्॥ १२॥

१३

एका० 'उत्तरार्धात्स्विष्टकृते समवद्यती'ति स्विष्टकृत् किमुत्तरार्धपुरोडाशयोः अन्ययोः प्रयोजकः? उताग्नेयादिप्रयुक्तोपजीवीति संशये,

नाग्न्याद्यर्थस्य हविषो देवतान्तरसङ्गतिः।
कृत्वा ह्यन्यद्धविस्तस्मादवद्येतोत्तरार्धतः॥

उच्यते—उत्तरार्धादिशब्दानां साकाङ्क्षार्थाभिधायिनाम्।
नापेक्षणीयसम्बन्धात्प्रागर्थोऽध्यवसीयते॥

---

पुरोडाशेन संयोगस्य तन्निमित्तत्वात्पुरोडाशप्रयुक्तानिनिमित्तत्वात्तदर्थं हि कपाले सति तुषोपवापस्य विधीयत इति सूत्रार्थः॥

इति तुषोपवापाधिकरणम्॥११॥

१२

पशौ० तुषनिरसनेन लोहितनिरसनादिस्मरणात्सङ्गतिः। सम्प्रविध्यति प्रक्षिपति। शकृल्लोहितञ्चेति। शकृल्लोहितयोरनुपयोगात्तन्निरसनस्यार्थकर्मतया शकृल्लोहितप्रयोजकत्वं तयोश्च पशुप्रयोजकत्वमित्यर्थः। प्रतिपत्तीति। अनुपयोगेऽपि अनुनिष्पन्नाकीर्णकरस्य प्रतिपत्तिर्वाजिनवदिति भावः। प्रयोजनं पूर्वपक्षे लोहिताभावे पश्वन्तरालम्भः, सिद्धान्ते तु निरसनलोप इति। सूत्रार्थस्तु पशुस्थले लोहितशकृतोरकर्मत्वम् अप्रयोजकत्वम् तदर्थतया पशोरनालम्भादिति॥

इति लोहितनिरसनाधिरणम्॥१२॥

१३

एकदेश० प्रतिपत्तित्वेऽपि स्यागांशेनार्थकर्मत्वादधिकाशङ्केति सङ्गतिः। अन्यद्धवि-

उत्तरार्धादिशब्दा हि प्रतिसम्बन्ध्यपेक्षा न स्वातन्त्र्येणार्थं बोधयन्ति। स्ववाक्ये च न प्रतिसम्बन्धी श्रुतोऽस्योत्तरार्द्धादिति। तेन विना साकाङ्क्षं वाक्यं प्रकृतसम्बन्धेन निराकाङ्क्षीभवति, प्रकृतञ्चाग्नेयादिप्रयुक्तं हविरिति तदुत्तरार्धग्रहणादप्रयोजकत्वम्। अन्यार्थस्याप्यन्यसम्बन्धो वचनात् प्रतिपत्तित्वाच्चाविरुद्धः।

इति पुरोडाशस्य स्विष्टकृदप्रयुक्तत्वाधिकरणम् ॥१३॥

१४

अभि० वाजपेये क्रतुपशवः, प्राजापत्याश्च प्रातःसवने तन्त्रेणोपक्रम्यन्ते। पर्यग्निकरणान्ते कृते प्राजापत्यानामालम्भनस्योत्कर्षः श्रूयते—'ब्रह्मसाम्न्यालभते' इति। क्रतुपशवः प्रातःसवने एवालभ्यन्ते, प्रयाजाश्च तत्रैवाऽनुष्ठिताः। प्रकृतौ च 'प्रयाजशेषेण हवींष्यभिघारयती'ति श्रुतम्। तदिह प्राप्तं सन्दिह्यते—किं प्रातःसवनानुष्ठितानां प्रयाजानां शेषो माध्यन्दिनकाले प्राजापत्यवपाभिघारणाय धारयितव्यः? तदर्थञ्च पात्रान्तरमुत्पाद्यम्, जुह्वा व्यापृतत्वात्, उत नेति। तदर्थञ्च किं हविसंस्कारार्थमभिघारणम्? उत शेषस्य प्रतिपत्तिः? इति। संस्कारत्वे प्राजापत्यवपासंस्कारः मा विलोपीति धारणं स्यात्, प्रतिपत्तित्वे तु सन्निहितास्वेव क्रतुपशुवपासु तत्सिद्धेर्न धारणम्।

तत्रोपयोक्ष्यमाणानां द्वितीयायोगिनां तथा।
हविषामेव संस्कारो न शेषस्य विपर्ययात् ॥

उपयोक्ष्यमाणसंस्कारो ह्युपयुक्तसंस्कारादभ्यर्हितः, हवींषि च तथा, शेषस्तूपयुक्तः, किं तस्य संस्कारेण। द्वितीयया च हविषामेव प्राधान्यम्, न शेषस्य विपरीतविभक्तिनिर्दिष्टस्य। तस्मान्न्यायात् शब्दतश्च हविःसंस्कारोऽभिघारणम्।

---

रिति। न च 'शेषात्स्विष्टकृते समवद्यति' इति शेषशब्दानुपपत्तिः, 'आज्येन शेषं संस्थापयति' इत्यत्र कर्मान्तर इवात्रापि प्रकृतभिन्ने तदुपपत्तेरित्याशयः। प्रयोजनं स्पष्टम्। सूत्रार्थस्तु—एकदेशो द्रव्यं यस्य तत् स्विष्टकृदादि अप्रयोजकम्, उत्पत्तावुच्चारण एव विद्यमानेन प्रकृतेनावयविना संयोगात्तदवगमादिति ॥

इति पुरोडाशस्य स्विष्टकृदप्रयुक्तत्वाधिकरणम् ॥१३॥

१४

अभिघारणे० एकदेशद्रव्यत्वादुक्तस्य प्रतिपत्तित्वस्याक्षिप्य समर्थनात्सङ्गतिः। क्रतुपशवः सवनीयाग्नेयादयः। प्राजापत्याः 'सप्तदश प्राजापत्यान् पशूनालभेत' इति विहिताः। ब्रह्मसाम्नि माध्यन्दिनसवनस्थब्रह्मसामाख्यस्तोत्रकाले। व्यापृतत्वादिति। आज्यभागादाविति शेषः। विपर्ययात् उपयुक्तत्वतृतीयान्तत्वाभ्यां हविर्विपरीतत्वात्। अभ्यर्हित इति। अपूर्वोत्पादकत्वात्तदविनाशकादुपयुक्तसंस्कारादादरणीय इत्यर्थः। तथा उपयोक्ष्यमाणानि। विपरीतेति। प्राधान्यविपरीतगुणत्वबोधकेत्यर्थः। न्यायात् उपयोक्ष्यमाणत्वरूपन्यायात्। शब्दतः द्वितीयाव-

सत्यमेवं तथापीह शेषस्य प्रतिपादनम् ।
न्याय्यं दृष्टार्थतालाभादन्यथादृष्टकल्पनात् ॥

शेषस्य प्रतिपत्तिरपेक्षिता, तादर्थ्येऽभिघारणं दृष्टार्थं भवति । हविःसंस्कारस्त्वनपेक्षितोऽदृष्टं कल्प्येत । न च दृष्टे सति तद् युक्तम्, अतः प्रयाजशेषं हविष्षु क्षारयतीति वाक्यार्थः ।

हविराधारनियमात्तत्संस्कारोपि गम्यते ।
तस्मादुभयसंस्कारः स्विष्टकृत् सूक्तवाकवत् ॥

यस्तु हविःसंस्कारं नेच्छति, प्रतिपत्तौ च द्रव्यस्याधारत्वादेकस्मिन्नेव हविषि सर्वक्षारणम्, बहुवचनन्त्वनियमाभिप्रायमित्याह, स कथम् 'स वै ध्रुवामेवाग्रेऽभिघारयति, ततो हि प्रथमावाज्यभागौ यक्ष्यन् भवती'ति लिङ्गं समर्थयेत् । अनेन हविषां संस्कार्यत्वम्, समुच्चयश्चावगम्यते । प्रधानयागाद्युपयोगिनां हविषामपि प्रयाजशेषम्प्रति गुणत्वमत्यन्तानुपपन्नमित्यास्तान्तावत् ॥

इति प्रयाजशेषाभिघारणाधिकरणम् ॥१४॥

१५

**समा०** दर्शपूर्णमासयोराज्यग्रहणं प्रकृत्य श्रूयते 'यज्जुह्वां गृह्णाति, प्रयाजेभ्य-

---

शात् । विनियोगस्य विध्यधीनत्वाद्विधेश्चापेक्षितदृष्टफलपक्षपातितया प्रयोजनशेषप्रतिपत्त्यर्थत्वेनाभिघारणविधायकत्वात्तद्वशेन विभक्तिर्लक्षणया व्याख्येयेति सिद्धान्तमाह—सत्यमिति । शेषस्येत्यनेन प्रयोजनशेषेणेति मुख्यशेषपदस्वारस्यादपि जघन्यतृतीयाया अन्यथात्वौचित्यं ध्वनितम् । दृष्टार्थम् जुह्वा रिक्तीकरणरूपदृष्टफलकम् । अन्यथा हि सशेषायां तस्यामाज्यभागार्थाज्यग्रहणे हविः सङ्कीर्णं स्यादिति भावः । नन्वेवं सति हविषामुपादेयत्वात्तद्गतबहुत्वं त्रित्वपर्यवसितं विवक्षितं स्यादत आह—हविरिति । तत्संस्कारः हविस्संस्कारः । यद्यप्ययमदृष्टरूप एव तथापि नियमादृष्टरूपत्वान्न दृष्टार्थतां विहन्तीत्यर्थः । एवञ्च हविषामुद्देश्यत्वान्न संख्याविवक्षेति भावः । वस्तुतः प्रधानार्थमुपात्तानामेवान्यत्र शेषत्वेन तदर्थमुपादेयत्वाभावान्न संख्याविवक्षेति ज्यायः । न चैवं प्राजापत्यवपासंस्कारार्थं धारणापत्तिः, तदभिघारणस्याप्रसक्ततया नियमाविषयत्वेन धारणाप्रसक्तेः । सूक्तवाकवत् सूक्तवाककरणकप्रस्तरप्रहरणवत् । तत्र यथा प्रक्षेपोद्देशाभ्यां हविर्देवतोभयसंस्कारत्वं तथाभिघारणाधारतानियमाभ्यामत्र शेषहविरुभयसंस्कारत्वमित्यर्थः । अभिघारणे प्राजापत्यवपानां विप्रकर्षात्कालविलम्बात्पात्रभेदः स्यात् अनूयाजेष्वाज्यधारणार्थं पात्रवदिति सूत्रार्थः । प्रयोजनं स्पष्टम् ॥

इति प्रयाजशेषाभिघारणाधिकरणम् ॥१४॥

१५

**समानयनं०** पूर्वोक्तप्रयोजकत्वापवादात्सङ्गतिः । आज्येति । 'चतुर्जुह्वां गृह्णाति' 'अष्टा-

स्तत्, यदुपभृति प्रयाजानूयाजेभ्यस्तदि' ति। तथा 'अतिहायेडो बर्हिः प्रति समानयते जुह्वामौपभृतमि'ति। तत्र विचार :—यदेतच्चतुर्थप्रयाजोपक्रमे समानयनम्, तत्किमौपभृतस्याज्यग्रहणस्य प्रयोजकम् ? उत नेति। तदर्थञ्च किमुपभृति यत्प्रयाजार्थमाज्यं तस्येदं समानयनम् ? उत यदनूजयाजार्थं तस्येति। तत्र—

**सर्वार्थं हि प्रयाजार्थमविशेषाद्बहुश्रुतेः।**
**सर्वादौ तत्समानीतमिदानीन्नोपभृत्यदः॥**

'प्रयाजानूयाजेभ्यस्तदि'त्यविशेषश्रवणात्सर्वप्रयाजार्थमौपभृतम्, प्रयाजशब्दाच्च विभक्त्यश्रवणात्। अनूयाजशब्दात् परा या विभक्तिः साऽनुषज्यते—प्रयाजेभ्य इति। ततश्च बहुवचनात्सर्वार्थम्, न चतुर्थोत्तमयोरेव। अतः सर्वप्रयाजादावानीतमिदनीमुपभृति न तदस्ति। केवलमनुयाजार्थमेवास्ति। तस्येदं—समानयनमनुयाजप्रयुक्तस्य संस्कारमात्रार्थत्वादप्रयोजकम्, उभयोरपि जौहवौपभृतयोः प्रयाजार्थयोर्ग्रहणयोः सर्वप्रयाजविषययोरेकार्थत्वाद्विकल्पः। उच्यते—

**समानयनमुद्दिश्य कालमात्रं विधीयते।**
**अदृष्टकल्पनाऽनेकविधानञ्चाऽन्यथा भवेत्॥**

यदुपभृति प्रयाजार्थे गृहीतम्, तस्य प्राप्तमेव जुह्वामानयनमनूद्य कालमात्रं विधीयते—'अतिहायेडो बर्हिः प्रती'ति। तथा हि सति अल्पार्थविधानम्, दृष्टार्थञ्च समानयनम्भवति। अनुयाजार्थस्य तु अदृष्टार्थमत्यन्ताप्राप्तं क्षारणं विधीयते, तस्य च काल इत्यनेकार्थविधिदोषः अदृष्टकल्पनं च स्यात्। अतः प्रयाजार्थस्येदं समान-

---

वुपभृति गृह्णाति' इति विहितमित्यर्थः। कृतोपयुक्तं प्रदर्श्य प्रकृतमुदाहरति—अतिहायेति। 'इडो यजति' इति विहितं तृतीयप्रयाजमतिलङ्घ्य (लङ्घनं) कृत्वेत्यर्थः। बर्हिस्संज्ञकप्रयाजोपक्रमे जुहूपात्रे उपभृत्पात्रसम्बन्धि आज्यं समानयत इत्यर्थः। पूर्वपक्षकोटेरपि निषेधस्य प्रतियोगिसापेक्षत्वादन्ते कथनम्। एवमग्रेऽपि। सर्वार्थमिति। उपभृति यत् प्रयाजार्थमाज्यं तत्सर्वप्रयाजार्थं न त्वन्तिमद्वयमात्रार्थमित्यर्थः। तत् प्रयाजार्थचतुर्गृहीतम्। इदानीम् बर्हिःप्रयाजोपक्रमे। अदः प्रयाजार्थमाज्यम्। बहुश्रुतेरिति व्याचष्टे—प्रयाजशब्दाच्चेति। 'द्वन्द्वान्ते श्रूयमाणं प्रत्येकमभिसम्बध्यते' इति न्यायादित्यर्थः। एतच्चोद्देश्यविशेषणस्यातन्त्रत्वादभ्युच्चयमात्रम्। ननु यज्जुह्वां गृह्णाति प्रयाजेभ्यस्तत्' इति जौहवस्यापि प्रयाजार्थत्वश्रवणात्कथमौपभृतस्य सर्वप्रयाजार्थत्वमित्याशङ्क्याह—उभयोरपीति। प्राप्तमेवेति। 'जुह्वा जुहोति' इति होमे जुहूविधानवशादित्यर्थः। प्रयोजनं पूर्वपक्षे जौहवोपभृतयोः प्रयाजेषु विकल्पः। औपभृतपक्षे सर्वादौ तत्समानयनम्, बर्हिरुपक्रमे औपभृतस्य किञ्चित्क्षारणं पक्षद्वयेऽपि। सिद्धान्ते तु जौहवेन प्रयाजत्रयं कृत्वौपभृतार्धेनान्तिमप्रयाजद्वयं कार्यम् न विकल्प इति। सूत्रार्थस्तु समानयनं मुख्यं प्रयोजकं स्यात् 'चतुर्गृहीतान्याज्यानि भवन्ति' इति चतुर्गृहीतबहुत्वरूपलिङ्ग-

यनं प्रयाजद्वयङ्कर्तुं क्रियत इति प्रयोजकमेवाज्यस्य । 'प्रयाजानूयाजेभ्यः' इत्यविशेषश्रवणं कालविधिबलादुपरितनप्रयाजद्वयविषयमुपसंह्रियते । एवञ्च जौहवमाद्यानामेव त्रयाणाम्भवतीति विषयभेदात्समुच्चयः ।

इति समानयनस्याज्यधर्मप्रयोजकताधिकरणम् ॥१५।

१६

तत्रो० 'चतुर्जुह्वां गृह्णाति अष्टावुपभृति, चतुर्ध्रुवायामि'त्युत्पन्नान्याज्यानि सर्वाणि किमविशेषेण सर्वकार्यार्थानि ? उत जौहवं प्रयाजार्थम्, औपभृतमनुयाजार्थम् ? अथवा जौहवं प्रयाजार्थम्, औपभृतमुभयार्थम्, ध्रौवन्तदतिरिक्तविषयम् इति ? संशये,

**उत्पत्तावविशेषेण सर्वार्थप्रतिभोद्गमः ।**
**अवयुत्यानुवादश्च प्रयाजाद्यर्थतावचः ॥**

यदि तु 'यज्जुह्वां गृह्णाति, प्रयाजेभ्यस्तदि'ति वचनात् तत्केवलप्रयाजार्थं स्यात्, ततो 'यदुपभृति अनुयाजेभ्यस्तदि'ति वचनात्तदपि केवलानुयाजार्थम् प्रसज्यते । अथ तदनुवादमात्रम्, प्रयाजवाक्यमपि तथाऽस्तु, अविशेषादित्येतावानत्र प्रथमपक्षः ।

**नानर्थकं वचोयुक्तमर्थवत्त्वस्य सम्भवे ।**
**तेन जुह्वां प्रयाजार्थमितरार्थं तथेतरत् ॥**

न हि प्रमाणबलादायातमनिष्टमिति शक्यमुत्स्रष्टुम् । अतो भवत्वौपभृतं केवलानुयाजार्थम्, जौहवं च प्रयाजार्थमिति द्वितीयः पक्षः ।

**जौहवस्य प्रयाजैकशेषत्वं युक्तमितीरितम् ।**
**अनूयाजैकशेषत्वमितरस्य न मृष्यते ॥**

'यदुपभृति प्रयाजानूयाजेभ्यस्तदि'ति वचनादुभयार्थं तत् । 'अनुयाजेभ्यः तदि'ति वचनमगत्यावयुत्याऽनुवादः ॥

इति जौहवौपभृतयोः क्रमेणोभयार्थताधिकरणम् ॥ १६ ॥

---

दर्शनादिति । विकल्पे हि सति चतुर्गृहीतद्वयमेव स्यात् समुच्चये तु जौहवामौपभृतं ध्रौवञ्चेति बहुत्वमुपपन्नमिति ॥

इति समानयनस्याज्यधर्मप्रयोजकताधिकरणम् ॥१५॥

१६

तत्रोत्पत्तिः० समानयनस्य प्रयोजकत्वमुक्तमाक्षिप्य समाधीयत इति सङ्गतिः । प्रतिभेति पूर्वपक्षमान्द्यद्योतनम् । ननु प्रत्यक्षवचने सति कथं प्रकरणेन सर्वार्थत्वकल्पनेत्यत आह—यदि त्विति । पूर्वत्रास्वरसोद्भावपूर्वकं पक्षान्तरमाह—नेति । इतरार्थम् अनुयाजमात्रार्थम् । इतरत् औपभृतम् । आज्यानामुत्पत्तिस्तत्र कार्ये अविभक्ता अव्यवच्छिन्नेति सूत्रार्थः । प्रयोजनं स्पष्टम् ॥

इति जौहवौपभृतयोः क्रमेणोभयार्थताधिकरणम् ॥१६॥

१७

तद० 'अष्टावुपभृति गृह्णाती'ति किमष्टसंख्यैकग्रहणविधिः ? उत चतुःसंख्या-ग्रहणद्वयविधिः ? इति विचारः ।

विधीयतेऽष्टसंख्याकं ग्रहणं श्रूयते हि तत् ।
लक्ष्यते तु चतुःसंख्याद्वयमत्राष्टसंख्यया ॥

न च श्रुतिसम्भवे लक्षणा युक्ता । 'चतुर्गृहीतं जुहोती'ति सामान्यवचनं प्रयाजानुयाजयोः विशेषतोऽष्टगृहीतविधानाद् बाध्यते । उच्यते—

चतुर्गृहीतं होमाङ्गमष्टसंख्याश्रुतिः पुनः ।
ग्रहणे तेन होमाङ्गं चतुष्ट्वं बाधते न सा ॥

ननु ग्रहणस्य होमार्थत्वादर्थात्तुल्यार्थतां प्राप्य बाधः स्यात् । केवलग्रहणाङ्गत्वे हि अष्टसंख्या निष्फला स्यात् । उच्यते—

प्रधानाङ्गं चतुःसंख्या ग्रहाङ्गमितरा पुनः ।
प्रधानाङ्गं च नाङ्गाङ्गमलं भवति बाधितुम् ॥

तेनेयमष्टसंख्या प्रधानाङ्गभूतां चतुःसंख्यां बाधितुमशक्नुवन्ती ग्रहणमात्राङ्गतां च निष्फलत्वादनासादयन्ती चतुःसंख्याद्वयलक्षणार्था विज्ञायते ॥

इत्यष्टसंख्यानियमनाधिकरणम् ॥१७॥

इति महामहोपाध्यायश्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां
चतुर्थाध्यायस्य प्रथमः पादः ॥ १ ॥

---

१७

तदष्टसंख्यं० प्रासङ्गिकी सङ्गतिः । सिद्धान्तमाह—उच्यत इति । तेन होमाङ्गग्रहण-गुणत्वेन । सा अष्टसंख्याश्रुतिः । तेनेत्यनेन भिन्नविषयत्वमबाधे हेतुरुक्त इति भ्रमाच्छङ्कते-नन्विति । अङ्गगुणत्वकृतदौर्बल्यं तेनेत्यनेन हेतुत्वेनोक्तम्, न भिन्नविषयत्वमिति सूचयन्नाह-उच्यत इति । प्रयोजनं प्रयाजद्वयार्थमर्धन्यूनसमानयनम् । अष्टगृहीतस्य पञ्चस्वपि 'सर्वं स्यादश्रुतित्वात्' इति न्यायेन विभागात्, सिद्धान्ते त्वर्धसमानयनमिति । सूत्रं स्पष्टम् ॥

इत्यष्टसंख्यानियमनाधिकरणम् ॥१७॥

इति श्रीमत्तत्सद्रामभट्टात्मजवैद्यनाथो-
न्नीतायां शास्त्रदीपिकाप्रभायां
चतुर्थस्य प्रथमः पादः ॥

## अथ द्वितीयः पादः

### १

**स्वरुस्तु०** अग्नीषोमीये पशौ श्रूयते 'यूपस्य स्वरुङ्करोति, स्वरुणा पशुमनक्ती'ति। तत्र विचारः—किमेष स्वरुर्यूपात् पृथक् निष्पन्नः छेदनादीनां यूपधर्माणां खादिरादेश्च वृक्षस्य प्रयोजकः? उत यूपमनुनिष्पन्नः शकलो ग्रहीतव्यः? इति। तदर्थमिदं चिन्त्यते किं स्वरुङ्करोतीति स्वरुभावना विधीयते? तस्याश्च करणेतिकर्तव्यताकाङ्क्षायां 'यूपस्य स्वरुमि'त्यनेन यूपशब्दलक्षणया खदिरादिवृक्षं करणत्वेन छेदनादीन च कर्माणीतिकर्तव्यतात्वेन समर्पयति, तथोत्पन्नश्च 'स्वरुणा पशुमनक्ती'ति विनियुज्यते? उताऽनेन वाक्येनाञ्जनसाधनं स्वरुरित्यवगते कुतोऽसावुपादेय इत्यपेक्षायाम् 'यूपस्य स्वरुमि'त्यनेन यत्स्वरुमुपादत्ते तद्यूपादिति विधीयते? तत्र—

**करोतिर्भावनावाची सा च श्रुत्याभिधीयते।**
**वाक्यार्थविधिरन्याय्यो लक्षणा चान्यथा भवेत्॥**

अञ्जनसाधनत्वेनावगतस्य हि स्वरोरर्थप्राप्तमादानमनूद्य यूपादिति विधौ वाक्यार्थविधानम्, करोतिश्चापूर्वभावनावचनस्सन्नुपादानं लक्षयेत्। स्वरुभावनाविधिस्तु श्रुत्या भवति, करोतिश्च श्रौत इति स एव न्याय्यः। तस्याश्च करणेतिकर्तव्यता वाक्यगतेनैव यूपशब्देन समर्प्यत इति प्रयोजकः स्वरुः। **नैवम्—**

**बह्वर्थविधिरेवं स्यान्मुख्यशब्दस्य लक्षणा।**
**अल्पार्थविधिरस्माकं जघन्यस्य च लक्षणा॥**

स्वरुभावनायां हि करणेतिकर्तव्यताविशिष्टायां विधीयमानायामतिभाराद्वरं विशेषणमात्रविधानम्। मुख्यस्य च यूपशब्दस्य त्वत्पक्षे लक्षणा, मत्पक्षे

---

## अथ द्वितीयः पादः

### १

स्वरुस्तु० पूर्वपादे साक्षाद्यागसाधनविषया चिन्ता। इह तु व्यवहिततद्विषयेति विभागः। स्वरुः काष्ठशकलम्। स्वरुभावना स्वरुकर्मिका भावना। लक्षणयेति। खादिरत्वादिधर्मलक्षणयेत्यर्थः। तथाच यूपस्येत्यस्य यूपधर्मसम्बन्धिनमित्यर्थः। तत्र योग्यतावशात्करणेतिकर्तव्यताविभागं दर्शयति—खादिरादीति। तथा तेन प्रकारेण। अन्यथा सिद्धान्तपक्षे। वाक्यार्थविधानं तन्मात्रविधानम्। श्रौतः वाक्यार्थः। मुख्यस्य चेति। उपक्रमस्थस्य विधायकस्य चेत्यर्थः। 'न विधौ परशब्दार्थः' इति न्यायात्। करोतेरनुवादकत्वं दर्शयति—

जघन्यस्य करोतेः। प्राप्तस्वरूपादानानुवादेन यूपानुनिष्पन्नशकलस्योपादानादप्रयोजकः स्वरुः॥

इति स्वरोश्छेदनाद्यप्रयोजकताधिकरणम् ॥ १ ॥

२

शाखा० शाखामधिकृत्य 'प्राचीमाहरती'ति श्रुतम्। तत्र किमयं दिग्वादः? उत शाखावादः? इति संशयः। तत्र—

श्रुत्या दिग्वचनः शब्दः शाखायां लक्षणा भवेत्।
आहर्तव्याभिधानात्तु शाखावादत्वनिश्चयः॥

'प्राचीमाहरती'त्याहर्तव्यवचनः प्राचीशब्दः। न च शक्या दिगाहर्तुम्। अथ दिशं प्रत्याहरतीत्युच्यते, प्रतिशब्दाध्याहार एव दोषः। प्रकृतशाखापदसामानाधिकरण्याच्च शाखावाद एवायम्–वृक्षस्य या प्राची शाखा तामिति॥

इति शाखाहरणाधिकरणम् ॥ २ ॥

---

प्राप्तेति। सूत्रार्थस्तु स्वरुस्तु यूपैकनिष्पत्तिको न भवति। कुतः? स्वकर्मकक्रियाशब्दवत्त्वादिति। प्रयोजनं स्वरुनाशे पुनः खादिरादिश्छेदनादिना तदुत्पादनं पूर्वपक्षे, सिद्धान्ते तु नेति॥

इति स्वरोश्छेदनाद्यप्रयोजकताधिकरणम् ॥ १ ॥

२

शाखायां० यूपशब्दवत्प्राचीशब्देऽपि न लक्षणेत्यतिदेशेनाक्षेपात्सङ्गतिरिति सूचयन्नाह—श्रुत्येति। सिद्धान्तमाह—आहर्तव्येति। हरतेर्द्विकर्मकत्वेऽपि प्रथमकर्मणोऽवश्यापेक्षितस्योत्कटाकांक्षया स्ववाक्योपात्तत्वमेवोचितम्, न तु वाक्यान्तरस्थत्वमित्याशयः। प्रतिशब्दयोगे स्यादपि वाक्यान्तरस्थेनान्वयः, न तु सोऽस्तीत्याह—अथेति। विहारदेशाद्या प्राची दिक् तां प्रतीत्यर्थः। वाक्यान्तरेण विशेषमात्रसमर्पणमिति दर्शयति—प्रकृतेति। प्राचीशब्दः शाखायां स्यात्तत्प्रधानत्वात्तस्या एवाहर्तव्यत्वेनेप्सिततकर्मत्वेन च प्रधानत्वादिति सूत्रार्थः। प्रयोजनं स्पष्टम्॥

इति शाखाहरणाधिकरणम् ॥२॥

३

शाखा० 'शाखामाच्छिनत्ति, शाखामाहरति, मूलतः शाखां परिवास्योपवेषं करोति, उपवेषेण कपालान्युपदधाति, शाखया वत्सानपाकरोती' ति श्रूयते। तत्र संशयः—किं शाखाच्छेदनाहरणपरिवासनानां वत्सापाकरणं कपालोपधानञ्च द्वयमपि प्रयोजकम् ? उतोपधानमप्रयोजकम् ? इति। तदर्थमिदं मूलार्थमपि छेदनादिकम् ? उताग्रार्थमेव ? इति। तत्र—

शाखाशब्दः समूलस्य नाग्रमात्रस्य वाचकः।
छेदनादि च शाखार्थं द्वयं तस्मात्प्रयोजकम् ॥

'शाखां छिनत्ती'ति द्वितीयया शाखार्थं छेदनादिकम्, द्वयमपि मूलमग्रञ्च सहैव शाखाशब्दोऽभिधत्ते, नाग्रमात्रम्। अतो यदुपवेषसंज्ञस्य मूलस्य कार्यमुपधानम्, यच्चाग्रकार्यं वत्सापाकरणादिकम्, तयोरुभयोरपि छेदनादिकमङ्गम्, परिवासनञ्च द्वयोर्विभागार्थम्। तस्मादुभयं प्रयोजकम्। उच्यते—

मूलापादानकं ह्यत्र परिवासनमुच्यते।
तच्चाग्रस्य न मूलस्येत्यग्रार्थं परिवासनम् ॥
तद्विशेषणभूतत्वान्मूलस्यापि तदर्थता।
अन्यार्थेन तु मूलेन कपालमुपधीयते ॥

यद्यपि छेदनादिवाक्ये समूलमग्रमाचष्टे शाखाशब्दः, परिवासनवाक्ये तु त्वग्रमेव। मूलतः परिवासनं हि तत्र विधीयते, न परिवासनमात्रम्। न च मूलस्य मूलतः परिवासनं सम्भवतीत्यग्रमेव परिवासनवाक्ये शाखाशब्देनोच्यते। तदर्थञ्च परिवासनम्। परिवासनविशेषणञ्च मूलं तद्द्वारेणाग्रार्थमेव, समूलस्य च छेदनमाहरणञ्च कथं नाम मूलतः परिवासनं शाखायाः स्यादित्येवमर्थम्। न ह्यनाहृते मूले मूलतः परिवासनं सम्भवति। तस्मात् परिवासनं समूलाहरणं छेदनञ्च सर्वमग्रकार्यार्थम्। न च 'परिवास्ये'ति क्त्वाप्रत्ययादुपवेषकरणार्थं परिवासनम्, वाक्यसंयोगाद्बलीयस्या

---

३

शाखायां० प्राच्याः शाखाप्रयोज्यत्वेऽभिहिते केवलाग्रप्रयोज्यत्वमुत मूलाग्रोभयप्रयुक्ततेति तद्विशेषविचारात्सङ्गतिः। परिवास्य छित्वा। मूलस्यापीति। मूलापादानकपरिवासनसंस्कार्यत्वाच्छाखाया इत्यर्थः। अन्यार्थेन तु उक्तरीत्या शाखार्थेन। क्त्वाप्रत्ययादिति। तस्य धातुसम्बन्धाधिकारविहितत्वेन परिवासनस्योपवेषकरणसम्बन्धावगमादित्यर्थः। शाखां परिवास्येति द्वितीयाश्रुत्या शाखार्थपरिवासनस्योपवेषपूर्वकालताख्यसम्बन्धमात्रेण क्त्वाप्रत्ययोपपत्तिरित्याह—वाक्येति। वाक्यरूपात्संयोगाद्विनियोजकप्रमाणादित्यर्थः। ननूपवेषकर्मकभावनायाः करणाकाङ्-

द्वितीयया शाखाभिधानार्थत्वावगमात्। 'उपवेषं करोती'ति साकांक्षमन्यार्थ-निष्पन्नेन मूलेन निराकाङ्क्षीक्रियते। करोतिश्च पूर्ववदादाने वर्तते। यदिदमग्रार्थं परिवासनानुनिष्पन्नं तत् कपालोपधानसाधनतयाऽवगतोपवेषत्वेनोपादत्त इति। न शाखां परिवास्य मूलत उपवेषं करोतीत्यन्वयः, येन मूलस्योपवेषार्थता लभ्येत, व्यवहितकल्पनाप्रसङ्गात्। तस्मादग्रार्थत्वात्सर्वस्य च तदेव प्रयोजकम्॥

इति छेदनस्य शाखाप्रयुक्तताधिकरणम्॥ ३॥

४

हरणे० 'सूक्तवाकेन प्रस्तरं प्रहरती'ति। हरतिर्यागः, मान्त्रवर्णिको देवताविधि-रिति च स्थितम्। इदमपरं श्रूयते 'सह शाखया प्रस्तरं प्रहरती'ति। तत्र संशयः—किं शाखाप्रहरणं यागस्यैवोपलक्षणम्? शाखायाः प्रयोजकमर्थकर्म? उत प्रतिपत्तिर-प्रयोजकम्? इति।

तत्र प्रस्तरतुल्यत्वाच्छाखा यागस्य साधनम्।
निर्वापवच्च हरणं यागस्यैवोपलक्षणम्॥

---

खायां सन्निहितस्य मूलस्यैव करणत्वेनान्वयादुपवेषार्थमपि मूलमित्याशङ्कायामाह—उपवेषमिति। तथाच परार्थस्य करणत्वेनाश्रयणान्नोपवेषकरणप्रयोज्यत्वमित्यर्थः। वस्तुतः 'स्वरं करोति' इतिवदत्राप्यर्थ इत्याह—करोतिश्चेति। वार्थश्चकारः। तृतीयासमर्थात्तसिप्रत्ययाङ्गीकारेणोपवे-षार्थत्वमेव मूलस्य कुतो न स्यादित्याशङ्कामपाकरोति—नेति। शाखायां तल्लक्षिते मूलव इति वाक्ये तत्प्रधानत्वात् शाखाप्रधानत्वात्परिवासनस्योपवेषेण विभागः असम्बन्धस्स्यात्। कुतः? वैषम्यात् श्रुतिवाक्यरूपप्रमाणवत्वादिति सूत्रार्थः। प्रयोजनं पूर्वपक्षे उपवेषनाशे पुनः शाखाहरणम्, तथा पूर्णमास्यामपि तत्, सिद्धान्ते नेति॥

इति छेदनस्य शाखाप्रयुक्तताधिकरणम्॥३॥

४

हरणे० पूर्णमास्यामपि प्रस्तरप्रहरणार्थं शाखाहर्तव्येति पूर्वाधिकरणप्रयोजनाक्षेपा-त्सङ्गतिः। पूर्वपक्षोपयोगितया वृत्तं स्मारयति—सूक्तेति। यागः यागलक्षकः। मान्त्रवर्णिकः करणतया विनियुक्तसूक्तवाकरूपमन्त्रवर्णकल्प्यः। स्थितमिति। तृतीयाध्याय इत्यर्थः। अर्थकर्म अदृष्टार्थप्रधानकर्म। निर्वापवच्चेति। 'यः कामयेतोत्तरोत्तरं वसीयान् स्यामिति तस्याग्नये पवमानाय निरूप्य पावकशुचिभ्यामुत्तरे हविषी निर्वपेत्' इत्यादौ श्रुतनिर्वापवदित्यर्थः। 'सौर्यं चरुम्' इत्यादिवाक्यगतस्तु न दृष्टान्तः, तत्र यागस्य द्रव्यदेवतासम्बन्धाक्षिप्तत्वेन निर्वपतेर-

प्रस्तरप्रहरणं तावद्यागः, स चार्थकर्म। तत्साधनभूतः प्रस्तरः शाखा च सहशब्दात्प्रस्तरेण समाना गम्यते। तेन सापि यागं प्रति गुणभूता, हरतिश्चाविवक्षितो निर्वापालम्भादिवद् यागोपलक्षणार्थः। तस्माच्छाखाप्रहरणं होमः अर्थकर्म, द्रव्यकर्मसंयोगन्यायादिति प्राप्ते अभिधीयते—

**यागे यदि सहत्वं स्यात्स्यादेवं हरतौ तु तत्।**
**तत्र च प्रतिपाद्यत्वात्प्रस्तरस्य तथैव सा॥**

'सूक्तवाकेन प्रस्तरं प्रहरती' त्यत्र मान्त्रवर्णिकदेवताविधिबलाद्यागः कल्पितः, न तु हरतिर्यागवचनः। अत्र तु प्रहरणमात्रं श्रुतम्,' सह शाखया प्रस्तरं प्रहरती'ति। न च प्रहरणे सूक्तवाकः साधनम्, येन मान्त्रवर्णिकदेवताविधिबलाद् यागः स्यात्। तस्माद्धरतिमात्रे शाखायाः सहभावात् हरतौ च प्रस्तरस्य प्रतिपाद्यत्वात् शाखाया अपि प्रतिपत्तिः। यथा हरतौ सहभावे प्रतिपत्तिः न गुणत्वं शाखायाः, तथा षष्ठे वक्ष्यते। अत्र हरतावेव साहित्यम्, न यागे इत्येतावत्स्थितम्।

**इति शाखाप्रहरणस्य प्रतिपत्तिकर्मताधिकरणम्॥ ४॥**

**५**

उत्प० दर्शपूर्णमासयोः 'अपः प्रणयती'ति प्रयोजनासंयुक्ताः प्रणीता उत्पाद्य, तत्र श्रूयते 'प्रणीताभिर्हवींषि संयौती'ति। तथा 'अन्तर्वेदि प्रणीता निनयति' इति। तत्र सन्देहः—किमासां संयवनं निनयनञ्चोभयं प्रयोजकम्, उभयार्थाः प्रणीताः? उत संयवनार्था एव तदेव प्रयोजकम्, निनयनं प्रतिपत्तिः? इति।

---

नुवादमात्रत्वात्। यागः। यागोपलक्षणम्। ननु सह शाखयेति वाक्ये यागलक्षणायां मानाभावात्कथं शाखाप्रहरणस्यार्थकर्मत्वमत आह—शाखा चेति। प्रस्तरप्रहरणानुवादेन शाखासाहित्यविधानात् यथात्रगतस्य च होमरूपस्यानुवादाद्यागलक्षणा गम्यत इत्यर्थः। द्रव्यकर्मेति। 'द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसम्बन्धः' इति षष्ठाद्यन्यायादित्यर्थः। हरतौ हरणे। तत्र च हरणांशे च। सा शाखा। तथैव प्रतिपाद्यैव। सहशब्दस्वारस्यादपेक्षितत्वाद् दृष्टरूपत्वाच्चेत्यर्थः। ननु षष्ठचतुर्थपादान्त्यविचारेण पौनरुक्त्यमत आह—यथेति। प्रतिपत्तित्वं तत्रत्यमेवेह हरणमात्रे साहित्यकथनप्रसङ्गादुक्तमिति भावः। सूत्रार्थस्तु - हरणे जुहोतिर्होमः सहशब्दोक्तप्रस्तरयागे साम्यात् द्रव्याणाञ्चार्थक्रियारूपं प्रति शेषत्वात् प्रतिपत्तित्वं नेति शेषः॥

इति शाखाप्रहरणस्य प्रतिपत्तिकर्मताधिकरणम्॥४॥

५

उत्पत्त्य० 'उत्पत्तौ येन संयुक्तम्' इत्यग्रिमसूत्रोक्तप्रतिपत्तिलक्षणाभावशङ्काधिक्येनारम्भात्सङ्गतिः। प्रणीताः प्रणयनसंस्कृता आपः। संयवनं संमिश्रणम्। अन्तर्वेदि वेदिमध्ये। निनयति क्षिपति। उभे संयवननिनयने कर्तृभूते प्रणीताः स्वीकुर्वाते। साधनत्वेनेति

तत्रोत्पत्तावसंयोगात्कैमर्थ्यस्याभिलाषिणोः ।
स्वीकुर्वाते उभे तस्मादुभयार्थास्तदुच्यते ॥
हविःसंयवने तासां गुणभावस्तृतीयया ।
द्वितीयया निनयनं प्रतिपत्तिर्विधीयते ॥

उत्पत्तावसंयुक्तानामपि प्रयोजनेन प्रणीतानां कैमर्थ्याभिलाषिणीनां तृतीयया सयवनार्थत्वं गम्यते, निनयनन्तु द्वितीयाश्रुत्या तासामेव प्रतिपत्त्यर्थमप्रयोजकम् ॥

इति निनयनस्य प्रतिपत्तिकर्मताधिकरणम् ॥ ५ ॥

६

प्रास० दीक्षितस्य दण्डधारणं विधाय पुनराम्नातम् 'क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छती'ति । किं मैत्रावरुणाय दण्डप्रदानं दण्डस्य प्रयोजकमर्थकर्म ? उत प्रतिपत्तिकर्माप्रयोजकम् ? इति । तत्र—

द्वितीयाश्रुतिसंयोगात्कृतार्थत्वाच्च धारणे ।
मैत्रावरुणहस्तेऽस्य प्रक्षेपः प्रतिपादनम् ॥

दीक्षितधारणे कृतार्थो दण्डः प्रतिपत्त्यपेक्षः, द्वितीयया च तत्प्राधान्यं गम्यते न दानस्य । अतो मैत्रावरुणहस्ते प्रक्षिप्यते । उच्यते—

चतुर्थ्या सम्प्रदानत्वं प्रशास्तुरवगम्यते ।
कर्मणा यमभिप्रैति सम्प्रदानं तदुच्यते ॥

तेन दीयमानेन दण्डेनाभिप्रेयमाणत्वान्मैत्रावरुणस्य तत्प्रधानं दानम् । द्वितीया

---

शेषः । वक्ष्यमाणप्रतिपत्तिलक्षणे उत्पत्तावित्युपलक्षणम् । प्रयोजनासंयोगमात्रमेव विवक्षितमित्याह—उत्पत्ताविति । प्रयोजनेनासंयुक्तानामपीत्यन्वयः । प्रयोजनं संयवनोत्तरं प्रणीतानाशे निनयनार्थं पुनरुत्पादनं पूर्वपक्षे, सिद्धान्ते नेति । सूत्रार्थस्तु उत्पत्तौ कार्यविशेषेणासंयोगादाज्यवत् ध्रौवाज्यवत् विभागेनानेकत्र विनियोग इति ॥

इति निनयनस्य प्रतिपत्तिकर्मताधिकरणम् ॥५॥

६

प्रासनवत्० दण्डप्रदानमिति । 'दण्डेन दीक्षयती' त्यनेनेत्यर्थः । कैश्चिद्दण्डधारणमिति पठ्यते तदप्ययमेव, दण्डकरणकदीक्षासंस्कारस्य धारणरूपत्वात् । निनयनवत्प्रसक्तस्य प्रतिपत्तित्वस्यापवादसङ्गतिसूचनाय सिद्धान्तकोटेः प्रथममुपन्यासः । धारणे सति कृतार्थत्वादिति सम्बन्धः । मैत्रावरुणः प्रैषानुवचनकर्ता ऋत्विक् । अस्य दण्डस्य । अतः प्रतिपाद्यत्वात् । प्रशास्तुः मैत्रावरुणस्य । अभिप्रैति उद्दिशतीत्यर्थः । तथा च सम्प्रदानस्येप्सितत्वाद्दण्डस्या-

तु 'तथायुक्तञ्चानीप्सितमि'ति भविष्यति। अथ सक्तुवद्विभक्तिव्यत्ययोऽत्र न भवति, तत्र हि सक्तुसाधनकेन होमेनापूर्वम्, इह दानकर्मभूतेन दण्डेन संस्कारः न तु दण्डसाधनकेन दानेनेति वैषम्यम्।

उपयुक्तस्य संस्कारादुपयोक्तव्यसंस्क्रिया।
गरीयसी प्रशास्तुश्च दृष्टं तेन प्रयोजनम्॥

स्थित्वा हि प्रैषानुवचने कुर्वत आलम्बनं भवन् दृष्टार्थ एव दण्ड इति मैत्रावरुणार्थं दण्डदानं प्रयोजकं दण्डस्येति। अग्नीषोमीयविकारे निरूढपशौ असत्यपि दीक्षिते मैत्रावरुणार्थेन दण्डदानसिद्धिः॥

इति दण्डदानस्यार्थकर्मताधिकरणम्॥ ६॥

७

उत्प० 'कृष्णविषाणया कण्डूयते' इति विधाय श्रूयते 'चात्वाले कृष्णविषाणां प्रास्यति' इति। तत्र संशयः—किं चात्वाले प्रासनमर्थकर्म? उत प्रतिपत्तिः? इति। तत्र—

न द्रव्यस्य कृतार्थस्य संस्कारेण प्रयोजनम्।
प्रतिपत्तिरतो नेयमिडास्विष्टकृदादि च॥

चात्वाले प्रासनम्, इडाभक्षणम्, स्विष्टकृदित्येवमादि यत्किञ्चित् कृतकरद्रव्याश्रयं कर्म तत्सर्वमर्थकर्म, निर्वृत्तेऽर्थे संस्कारेण प्रयोजनाभावात्। उच्यते—

कृतार्थमपि तु द्रव्यमाकीर्णकरमित्यतः।
प्रतिपत्तिमपेक्षेत तद्विधानमतो वरम्॥

---

नीप्सितकर्मतया द्वितीयेत्यर्थः। तत्प्रधानं तदर्थम्। यत्तु कृतार्थतया प्रतिपत्त्यपेक्षित्वमुक्तं तत्राह—उपयुक्तस्येति। अदृष्टार्थतामाशङ्क्य निराकरोति—प्रशास्तुश्चेति। तेन दण्डेन। किं दृष्टं तदाह—स्थित्वा हीति। प्रयोजनमाह— निरूढेति। 'पशुः प्रत्ययनं तथा' इत्ययनद्वये विहितो निरूढपशुयागः स्तत्रेत्यर्थः। सूत्रे प्रासनवदिति कृष्णविषाणाप्रासनं दृष्टान्तः। शेषं स्पष्टम्॥

इति दण्डदानस्यार्थकर्मताधिकरणम्॥६॥

७

उत्पत्तौ० इह सर्वत्र प्रतिपत्तित्वमुक्तमाक्षिप्य समाधीयत इति सङ्गतिः। कृष्णमृगस्य विषाणा शृङ्गम्। चात्वालो गर्त्तः। न द्रव्यस्येति। संस्कारस्य कार्यार्थत्वादिति भावः। न केवलं प्रासनमेवोदाहरणम् किन्त्विडादिकं सर्वमित्याह—इडेति। इडाभक्ष इत्यर्थः। कृतकरेति।

अपेक्षिततया प्रतिपत्तिविधौ निश्चिते तद्बलादेव तल्लोपे निर्वृत्तमपि प्रयोजनं विपद्यत इति कल्प्यते ॥

इति प्रासनस्य प्रतिपत्तिकर्मताधिकरणम् ॥ ७ ॥

८

सौमिके० 'वारुणेनैककपालेनावभृथमभ्यवयन्ती'ति विधाय, पुनराम्नायते-यत्किञ्चित् सोमलिप्तं 'तेनावभृथं यन्ती'ति। किमवभृथसाधनं सोमलिप्तम् ? उतावभृथदेशे नयनमस्य प्रतिपत्तिरिति ।

तत्रावभृथशब्देन श्रुत्या कर्माऽभिधीयते ।
तत्साधनतया सोमलिप्तमुक्तं तृतीयया ॥
देशेऽवभृथशब्दस्य प्रकृतौ लक्षणा भवेत् ।
सोमलिप्तं हविष्ट्वेन चोद्यतेऽवभृथं प्रति ॥

उच्यते—उत्पत्तिवाक्यविहितपुरोडाशावरोधतः ।
हविष्ट्वेन तु सम्बद्धुं सोमलिप्तन्न शक्नुयात् ॥

'यन्ती'त्यनेन च सोमलिप्तावभृथयोः सम्बन्धविधौ सति अत्यन्तं वाक्यं स्यात् ।

उद्दिश्य सोमलिप्तन्तु यानमात्रं विधीयते ।
धात्वर्थोऽवभृथपदं तं देशं लक्षयिष्यति ॥

---

करणं करः भावे ऋदोरप् कृतक्रियेत्यर्थः । आकीर्णं वेद्यादिदेशं करोतीति तथा । अतः प्रचार-सौकर्याय देशस्य तदाकीर्णत्वनिवृत्तये प्रतिपत्तिराकांक्षिता निर्माल्यादेरिवेत्यर्थः । तद्बलात् प्रतिपत्तिनियमविधिबलात् । प्रयोजनमपूर्वम् । विपद्यते नश्यति । उत्पत्तिविधौ येन कण्डूय-नादिप्रयोजनेन संयुक्तं कृष्णविषाणादि तदर्थमेव श्रुत्या तृतीयादिरूपया संयोगाद् विनि-योगात् । तस्य चार्थान्तरगमने सम्बन्धे शेषत्वादुपयुक्तावशिष्टत्वात्प्रतिपत्तिस्स्यादिति सूत्रार्थः ॥

इति प्रासनस्य प्रतिपत्तिकर्मताधिकरणम् ॥७॥

८

सौमिके० इह प्रतिपत्तिलक्षणस्यातिव्याप्तिशङ्का प्रतिपत्तिसिद्धान्तेन निरस्यत इति सङ्गतिः । अध्यायसङ्गतिस्तु प्रासङ्गिकी । पक्षद्वयेऽपि परार्थसोमलिप्ताप्रयोजकत्वात् । वारुणेने-त्यवभृथोत्पत्तिवाक्यस्य सिद्धान्तोपयोगितयोपन्यासः । सोमेन लिप्तं चमसादिपात्रम् । अवभृथ-शब्दः कर्मपरो देशपरो वेति संशयोऽत्र मूलमित्याह—किमिति । उत्पत्तिवाक्येत्यनदनीयत्वदोषो-पलक्षणम् । ननु सोमलिप्तचमसादेर्जुह्वादिवत्साधनतायां नैतद्दोषद्वयापत्तिरत आह—यन्तीत्यनेन

अवभृथदेशं गच्छन्तः सोमलिप्तान्यादाय गच्छेयुः। तानि तद्देशे प्रक्षेप्तव्यानीत्यर्थः ॥

इत्यवभृथगमनस्य प्रतिपत्तिकर्मताधिकरणम् ॥ ८ ॥

९

कर्तृ० दर्शपूर्णमासयोश्चत्वार ऋत्विजः, 'समे यजेत, पौर्णमास्यां पौर्णमास्या यजेत, व्रीहिभिर्यजेत, सोमेन यजेते'त्यादि यत्किञ्चित्कारकश्रवणम्, तत्सर्वमुदाहृत्य विचार्यते किमनुवादमात्रम् ? उत विधिरिति। तत्र

सर्वं क्रियाविधेरेव कारकं प्राप्यते यतः।
ततस्तन्न विधातव्यमप्राप्ते ह्यर्थवान् विधिः ॥
विषमादिनिवृत्त्यर्थं समादिश्रवणं यदि।
परिसंख्या प्रसज्येत नातोऽन्यास्ति विधेर्विधा ॥

समादिस्वरूपं विषमादिनिवृत्तिर्वा विधीयेत। स्वरूपन्तावन्न विधातव्यम्, प्राप्तत्वात्। विषमादिनिवृत्तिविधौ परिसंख्या प्रसज्येत, सा च त्रिदोषा। न च प्रकारान्तरं विधेरुपलभामहे, येनैते परिसंख्यादोषमनासाद्यैव विधिं लभेरन्, तस्मादनुवादः।

नैवम्—नियमेन न हि प्राप्तिः समादीनां क्रियाविधेः।
समे वा विषमे वापि सोमेनाऽन्येन वा यजिः ॥

---

चेति। अत्यन्तमिति। स्वपदस्थस्य यानस्य विधेयतयोद्देश्यतया वा त्रिव्यसंस्पर्शात्केवलकारकयोरेव सम्बन्धविधानादित्यर्थः। धात्वर्थं इत्यस्य विधीयत इति पूर्वार्धगतेनान्वयः। अवभृथशब्दे देशलक्षणा तु सोमलिप्तपदे सोमार्थत्वाधिष्ठानलक्षणया तुल्या। तेनेति तृतीया तु सहार्थ इति न तत्रापि लक्षणादोष इत्याशयः। न च प्रयाजशेषन्यायेनैव गतार्थता शङ्कनीया, अवभृथकर्मणोऽभिघारणवद् द्रव्यसंस्कारत्वायोग्यतया तद्वैषम्यादिति। कीदृशी प्रतिप्रत्तिस्तत्राहृतानीति। यज्ञदेशादवभृथदेशनयनस्याकांक्षावशेन दृष्टप्रक्षेपप्रतिपत्तौ पर्यवसानमिति भावः। सूत्रप्रयोजने स्पष्टे ॥

इत्यवभृथगमनस्य प्रतिपत्तिकर्मताधिकरणम् ॥८।

९

कर्तृदेश० देशप्रसङ्गादन्यदपि देशादि विचार्यत इति संगतिः। कालानामिति बहुवचनस्याद्यर्थतया द्रव्यमपि विषय इत्याशयेनाह—व्रीहिभिरिति। विधेरिति पञ्चमी। परिसंख्या दुष्टा परिसंख्या। अतः अप्राप्तविधिपरिसंख्याम्। विधा प्रकारः। त्रिदोषेति। श्रुतसमदेश-

प्राप्नोति तेन सोमादेः प्राप्तिर्न स्यादपि क्वचित् ।
यस्मिन्पक्षे न सोमादेः प्राप्तिस्तत्र विधिर्भवेत् ॥
नैषामतोऽनुवादत्वम्परिसंख्या च नासजेत् ।
अप्राप्तिपक्षसद्भावान्नियमार्थो विधिः स्थितः ॥

इति कर्तृदेशकालविधीनां नियमाधिकरणम् ॥ ९ ॥

१०

तथा० 'श्वेतम्पशुमालभेत, शुक्लानां व्रीहीणाञ्चरुमि' त्यादौ गुणानाममूर्तानां क्रियासाधनत्वासम्भवान्न तादर्थ्येन नियमः सम्भवति। द्रव्योपादानानुषङ्गप्राप्तानामनुवादमात्रं गुणश्रवणम् । 'शुक्लानाञ्चरुमि'त्यादौ चापरो विशेषः-शुक्लस्य चरुविशेषणत्वात् शब्दतोऽपि न क्रियासम्बन्धोऽवगम्यत इति-उत्तरम् — असत्यपि शुक्लत्वस्य साक्षात्क्रियान्वये द्रव्यद्वारेण तदुपपत्तेः, शुक्लविशिष्टचरोः क्रियार्थत्वादत्रापि नियमविधिः ॥

इति द्रव्यसंस्काराणां नियमार्थताधिकरणम् ॥१०॥

११

संस्कारे० 'व्रीहीनवहन्ती'ति नावघातस्य यागार्थतया श्रवणं देशादिवत् । न च चरुवद्विशिष्टं द्रव्यं क्रियासम्बन्धि श्रूयत इति तण्डुलाक्षिप्तक्रियानुवादमात्रमित्यधिका शङ्का ।

---

विधिहानम्, अश्रुतविषमदेशनिवृत्तिकल्पनम्, प्राप्तविषमदेशबाधश्चेति दोषत्रयवतीत्यर्थः । एते कर्त्रादिविधयः । यस्मिन्निति । एवञ्च समाद्ययोगव्यवच्छेदरूपनियमांशे विधिसाफल्यमिति भावः । नैषामिति । नियतप्राप्त्यभावादित्यर्थः । नासजेत् नापद्येतेत्यर्थः । एवञ्च सति विधौ प्रधानप्रयुक्तत्वसिद्धिरित्यध्यायसङ्गतिर्बोध्या । सूत्रं स्पष्टम् ॥

इति कर्तृकालविधीनां नियमाधिकरणम् ॥९॥

१०

तथा० अनुषङ्गः प्रसङ्गः । शब्दतोऽपीति । षष्ठ्या अकारकविभक्तित्वात् कारकस्यैव च क्रियान्वयात् । श्वेतमित्यस्यामूर्ततया क्रियानन्वयमुक्तं परिहरति—असत्यपीति । द्रव्यद्वारेणेति । आरुण्यवत् द्रव्यपरिच्छेदकत्वेनेत्यर्थः । शुक्लानामित्यत्र समाधिमाह—शुक्लेति । सूत्रे उत्पत्त्यैव गुणस्य द्रव्यसम्बन्धात् तद्द्वारा क्रियाप्रयुक्तिरित्यर्थः ॥

इति द्रव्यसंस्काराणां नियमार्थताधिकरणम् ॥१०॥

११

संस्कारे० विशेषाशङ्कामाह—व्रीहीनिति । प्रधानसाधनम् प्रधानापूर्वसाधनत्वम् ॥

इत्यावघातादिसंस्काराणां नियमार्थताधिकरणम् ॥११॥

उत्तरम्—यद्यपि न श्रवणमस्ति, तथाऽपि प्रकरणवशादेव प्रधानसाधनं लक्षयित्वा तत्र विनियुक्तस्यावघातादेः प्रधानाङ्गत्वमस्त्येवेति तत्प्रयुक्तिरव्याहतेति ॥

इत्यवघातादिसंस्काराणां नियमार्थताधिकरणम् ॥ ११ ॥

१२

यजति॰ यागाङ्गभूतानां देशादीनां नियमविधौ स्थिते, तत्प्रसङ्गाद्यागादिलक्षणं क्रियते। देवतोद्देशेन स्वद्रव्यपरित्यागो यागः, स एव प्रक्षेपाधिको होमः, स्वीयस्य परकीयत्वापादनं दानमिति।

आचार्यस्तु लोकसिद्धपदार्थव्यवहारिण्यां मीमांसायां तल्लक्षणमनुचितमिति यागाद्यनुष्ठानप्रकारकथनमिति व्याख्यातवान्। यो देवतामुद्दिश्य द्रव्यं त्यजति, तेन यागचोदनार्थः सम्पादितो भवति, प्रक्षेपन्त्वधिकं कुर्वता होमविध्यर्थ इति। एवञ्च चोदनाग्रहणमर्थवद्भवति, न लक्षणपरत्वे।

प्रदेशान्तरे त्विदं सूत्रमन्यथा व्याख्यातमाचार्येण। पूर्वं दर्शादियागानुवादेन देशादयो नियम्यन्त इत्युक्तम्, तत्रेयमाशङ्का—कथं नु दर्शादेर्यागत्वम्, न ह्युत्पत्तिचोदनास्वाग्नेयादिषु यजिः श्रूयत इति। तत्रेदमुच्यते-द्रव्यदेवताक्रियं श्रूयमाणं यजतिचोदनेति मन्तव्यम्। तदविनाभावात्तस्येत्येकस्यार्थः। इतरस्य तु यजत्यभिहिते कर्मणि पुनर्जुहोतिश्रवणं 'चतुरवत्तं जुहोती'ति तत्कथमुपपादनीयम्, यागहोमयोर्भेदात्, अत आह-'आसेचनाधिकः स्यात्'प्रक्षेपमात्रं तत्राप्राप्तं चतुरवत्तं संस्कारार्थं विधीयते। यागांशस्तु प्राप्तानुवाद इत्यक्षरान्जस्यं सूत्रयोर्भवति ॥

इति यागहोमलक्षणाधिकरणम् ॥ १२ ॥

१३

विधेः॰ 'यदातिथ्यायां बर्हिः तदुपसदामि'ति किमिदमाच्छिद्य विधानम्?

---

१२

यजति॰ सङ्गतिमाह—यागाङ्गेति। एवम् अनुष्ठानप्रकारकथनपरत्वे। अर्थवदिति। अनुष्ठानवाचित्वादित्यर्थः। अनतिप्रयोजनकत्वादिहाप्यरुचेराह—प्रदेशान्तरेत्विति। प्रथमसूत्रस्यार्थः। तस्य द्रव्यदेवताक्रियस्य। तदविनाभावात् यागव्याप्यत्वात्। इतरस्य तदुक्त इत्यादिसूत्रस्य। कर्मणि तदनुवादे ॥

इति यागहोमलक्षणाधिकरणम् ॥१२॥

१३

विधेः॰ दण्डस्य दीक्षामैत्रावरुणरूपानेकप्रयुक्तत्ववदिहापि बर्हिषोऽनेकप्रयुक्तत्वकथनादातिदेशिकी सङ्गतिः। प्रसक्तानुप्रसक्तसमाप्तौ तस्यैव बुद्धिस्थत्वेन सङ्गतिनिरूपकत्वात्। सोमप्रकरणस्थवाक्यमुदाहरति—यदिति। तदग्नीषोमीयस्येति वाक्यशेषः। आच्छिद्येति। आतिथ्यायां

उत निरिष्टिकोपदेशः ? अथवा धर्मातिदेशः ? अथवा बर्हिःसाधारण्यविधिरिति ?

डित्थस्य गौर्डपित्थाय तत आच्छिद्य दीयताम् ।
ईदृग्वचनसारूप्यादाच्छिद्य विधिरिष्यते ॥
एवञ्चाच्छिद्यमानस्य बर्हिषः स्यादनर्थकः ।
आतिथ्यायां विधिस्तस्मान्निरिष्टिकविधिर्वरम् ॥
शिष्टाचारविरोधात्तु नैतदप्युपपद्यते ।
तस्माद्धर्मातिदेशोऽयमातिथ्यायां हि यादृशम् ॥
अश्ववालादिभिर्बर्हिस्तादृगेवोपसत्स्वपि ।
बर्हिःशब्देन धर्माणां लक्षणैवं भवेदतः ॥
साधारण्यविधिर्ज्यायांस्तत्र दोषो न कश्चन ।
आतिथ्यार्थमुपादेयं यद्बर्हिस्तन्न केवलम् ॥
तदर्थत्वेन सङ्ग्राह्यन्तदेवोपसदामपि ।
बर्हिर्धर्माश्च तद्द्वारा तद्वत्सर्वाङ्गतामियुः ॥
इत्यातिथ्याबर्हिष साधारण्याधिकरणम् ॥ १३ ॥

इति शास्त्रदीपिकायां चतुर्थस्याध्यायस्य द्वितीयः पादः ॥ २ ॥

---

विहितस्य ततोऽपहृत्यान्यत्र विधानमित्यर्थः । निरिष्टिकम् इष्टेर्निर्गतम् । कृतेष्टिकमिति यावत् । धर्मातिदेशः यादृशधर्मकमातिथ्याबर्हिस्तादृशधर्मकमुपसदादावित्यर्थः । साधारण्यविधिः आतिथ्यादित्रय ९कं बर्हिरित्यर्थः । पक्षचतुष्टयं पूर्वपूर्वदूषणपूर्वकं क्रमेणाह—डित्थस्येत्यादिना । अश्ववालाः काशा इत्युक्तं प्रथमाध्याये । कीदृक्साधारण्यविधिस्तं दर्शयति—आतिथ्यार्थमिति । तद्वत् बर्हिर्वत् । अत्राद्यपक्षे आतिथ्यार्थमुपादानमात्रम् । हविरासादनादिकार्यं तूपसदग्नीषोमयोः । द्वितीये तु उपादानव्यतिरिक्तसर्वसंस्कारा आतिथ्याबर्हिष एवोपसदादौ पुनः कार्याः । तेषामातिथ्यापूर्वेण नाशात् । तृतीये तु त्रयाणां पृथक् त्रीणि बर्हींषि, परन्त्वातिथ्याधर्मकाणि । सिद्धान्ते त्रयाणामप्यर्थे सकृदेकमेव बर्हिरुपादेयं संस्कार्यञ्चेति प्रयोजनं ज्ञेयम् । विधेर्विधेयस्य बर्हिषः कर्मापवर्गेऽपवृक्तत्वादर्थान्तरे भिन्ने उपसद्बर्हिषि विधिप्रदेशो धर्मातिदेशः स्यादिति सूत्रार्थः ॥

इति बर्हिष आतथ्यादिसाधरण्याधिकरणम् ॥ १३ ॥

इति श्रीमत्पण्डिततत्सद्रामभट्टात्मजवैद्यनाथकृतायां शास्त्रदीपिकाटीकायां प्रभाख्यायां चतुर्थस्य द्वितीयः पादः ॥

## चतुर्थाध्यायस्य तृतीयः पादः

१

द्रव्य० 'यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोती'त्यत्र संशयः—किं पर्णमयीत्वं क्रत्वर्थम्? उत पुरुषार्थम्? आहोस्विदुभयार्थमिति। तत्र फलश्रवणात् पुरुषार्थत्वम्। यद्यपि चैवंजातीयकस्य फलविधित्वमौदुम्बराधिकरणे निराकृतम्, तथाऽपि विहितस्य पर्णत्वस्य फलापेक्षायां क्रतुप्रयोगवचनात्सन्निहितमपापश्लोकश्रवणमेव रात्रिसत्रप्रतिष्ठावद्विपरिणामेन फलमाश्रयितुं युक्तम्।

अथवा साधनांशमात्रमौदुम्बराधिकरणे विचारितम्। विधिरहितस्य 'भवती'त्येतावन्मात्रस्य साधनप्रतिपादकत्वं न सम्भवतीति, विध्युन्मीलनायैवार्थव दत्वं 'ऊर्जं पशूनाप्नोति न स पापं श्लोकं शृणोतीत्या' देराश्रयितव्यम्। इह तदुपेक्ष्याभ्युपेत्य वा साध्यांशो विचार्यते। तत्रैवं जातीयकमपि फलप्रतिपादकम्, लोके दर्शनात्। अतः पुरुषार्थमित्येकः पक्षः। क्रत्वर्थजुहूद्देशेन विधीयमानं भवतु क्रत्वर्थं फलसंयोगात्तदर्थमपि स्यात्, दध्यादिवदित्यपरः।

सिद्धान्तस्तु युक्तं दध्नः संयोगपृथक्त्वादुभयार्थम्। इह त्वेकं वाक्यं, तदुभयपरत्वे भिद्येत। तन्न तावदुभयार्थम्। न च 'शृणोती' ति वर्तमानापदेशात्साध्यत्वं शक्यं प्रतिपत्तुम्। न च विपरिणामेन फलपरत्वम्, यथास्थितस्वरूपहानप्रसङ्गात्, पर्णतायाश्च जुहूस्थितक्रत्वर्थत्वेन निराकाङ्क्षत्वादयुक्तं शब्दस्वरूपस्य बाधनम्। न च पर्णत्वस्य फलं प्रति विधीयमानस्याश्रयः प्रकृतोऽस्ति। तत्र वाक्येनैवाश्रये दीयमाने वाक्यभेदः। तस्मादपापश्लोकश्रवणस्याऽर्थवादत्वात्क्रत्वर्थमेव पर्णमयीत्वम्॥

इति पर्णमय्यधिकरणम्॥ १॥

---

## अथ तृतीयः पादः

१

द्रव्यसंस्कार० अत्र प्रथमसूत्रोक्तक्रत्वर्थपुरुषार्थत्वं तत्तत्प्रयुक्तत्वसिध्यर्थं प्राधान्येन चिन्त्यत इति पादान्तरत्वमवगन्तव्यम्। 'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' 'वर्म वा एतद्यजमानस्य क्रियते यत्प्रयाजाः' इति संस्कारकर्मणोरुदाहरणमुपलक्षणीयम्। पापश्लोकम् अपकीर्तिम्। भ्रातृव्यः शत्रुः। वृङ्क्ते पिधत्ते। क्रत्वर्थतोक्ति विनोभयार्थमित्युक्तेरसम्भवात् सिद्धान्तकोटेः प्रथममुक्तिः। विपरिणामेनेति। यः पापश्लोकं न शुश्रूषति स पर्णमयीं जुहूं कुर्यादिति रीत्येत्यर्थः। लोक इति। यो घृतं पिबति स बलवान् भवतीति लोके घृतपानस्य बलरूपफलसाधनताबोधदर्शनात् इत्यर्थः। स्वरूपस्य वर्तमानव्यपदेशस्य। प्रयोजनं पूर्वपक्षे फलसंकल्पः, सिद्धान्ते नेति। सूत्रं स्पष्टम्॥

इति पर्णमय्यधिकरणम्॥ १॥

२

**नैमित्तिके०** 'अपः प्रणयती' ति प्रकृत्य श्रूयते—'मृन्मयेन प्रतिष्ठाकामस्य प्रणयेदि'ति, तथा 'बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यादि'ति। तत्र संशयः–यदेतत्काम्यं मृन्मयम्, नैमित्तिकञ्च बार्हद्गिरम्, तदेव नित्यार्थम् उत अन्यदुपादेयमिति। तत्र नित्येऽपि प्रयोगे प्रणयनब्रह्मसामादेः साधनापेक्षत्वादश्रुतसाधनान्तरकल्पनाद्वरङ्कामनिमित्तयोरपि श्रुतस्य मृन्मयादेः सन्निहितस्य नित्यार्थेऽप्युपादानम्। वारणाभीवर्तादिनित्यविधिमदृष्ट्वा पूर्वः पक्षः। भवन्ति हि ईदृशान्यप्यधिकरणानि 'ऐन्द्रवायवे तु वचनात्प्रतिकर्मभक्षः स्यादि' त्यादीनि। नित्यविधिर्वा नास्तीति कृत्वा चिन्त्यते।

अथ वा 'वारणो यज्ञवचर' इति 'अभीवर्तं ब्रह्मसामे'ति च सामान्यविधिरयम्। मृन्मयम्, बार्हद्गिरञ्च विशेषतः प्रणयने, द्वादशाहे च। अतस्तदेव नित्यार्थेऽपि सन्निधिविशेषाद् युक्तमिति मन्यते।

**ब्राह्मणेन निमित्तेन बार्हद्गिरमिति श्रुतम्।**
**मृन्मयञ्च प्रतिष्ठायान्नित्ये स्यातामतो न ते॥**

नह्यन्यत्र श्रुतं सन्निहितमपि अन्येन सम्बद्धुमर्हति, साधनाकाङ्क्षा च नित्यस्यार्थाक्षिप्तेन सामान्यविहितेन वा विवर्तते। न तु नैमित्तिकेन, सन्निधिमात्रस्य सम्बन्धकारणत्वाभावात्, निमित्तश्रुतिविरोधाच्च। सति असति च निमित्ते क्रियमाणस्य कीदृशं नैमित्तिकत्वम्। तस्मदन्यान्नित्यर्थम्॥

**इति नैमित्तिकानामनित्यार्थताधिकरणम्॥ २॥**

---

२

नैमित्तिके० इह पर्णतादेः क्रतो नियमानुष्ठानस्य काम्यनैमित्तकयोरपवादात्सङ्गतिः। तथेति। बृहद्गिरापदवत्यामृचि भवं बार्हद्गिराख्यं साम तत्साधकं ब्रह्मसामाख्यं स्तोत्रं कुर्यादिति द्वादशाहे श्रुतमित्यर्थः। ननु 'वारणो यज्ञावचरः' इति वारणकाष्ठेन, 'अभीवर्तो ब्रह्मसाम' इति चाभीवर्ताख्यसाम्ना च नित्ये आकांक्षानिवृत्तेर्न काम्यनैमित्तकयोस्तत्रान्वय इत्याशङ्क्याह—वारणेति। अर्थाक्षिप्तेनेति कृत्वाचिन्तिते पक्षे। तृतीयपक्षे सामान्यविहितेनेति भेदः। निमित्तश्रुतीति। ब्रह्मणस्येति ब्राह्मणकर्तृकत्वे निमित्ते श्रवणस्य तदभावेऽपि स्वीकारे विरोध इत्यर्थः। तदाह—सति चासतीति। ननु 'पार्शुरथ्यं राजन्यस्य रायोवाजीयं वैश्यस्य' इति श्रवणाद्वर्णत्रयेऽपि नैमित्तिकावरोधे क्वाभीवर्तस्यावकाश इति चेत्-सत्यम्; तथापि मूर्धाबसिक्तादावनुलोमे (?) क्रत्वधिकारिणि तस्यावकाश इत्यभिप्रायात्। प्रयोजनं स्पष्टम्। नैमित्तिके विकारत्वाद्विशेषश्रुतत्वात्क्रतुप्रधानं क्रत्वर्थमन्यत्स्यादिति सूत्रार्थः॥

इति नैमित्तिकानामनित्यार्थत्वाधिकरणम्॥ २॥

३

एकस्य० अग्निहोत्रे 'दध्नेन्द्रिकामस्य जुहुयादि'ति श्रूयते। तत्र किङ्काम्यार्थमेव दधि नित्येऽपि स्यात् ? उत ततोऽन्यत् नित्यमिति संशये—

**पूर्वाधिकरणन्यायात्काम्यत्वेन श्रुतं हविः।**
**न नित्यार्थमुपादेयमतोऽन्यन्नित्यमिष्यते॥**

नन्वत्र दध्येव नित्यार्थे श्रूयते 'दध्ना जुहोति'ति।

**नैवमेतस्य वाक्यस्य कामवाक्यैकवाक्यता।**
**गम्यतेऽतो नित्यार्थे पृथग्दधि विधीयते॥**

**दध्नेन्द्रियं** कुर्यादित्युक्ते किमाश्रितेनेत्यपेक्ष्यते, होमसंयुक्तस्य च दध्नः फलापेक्षा, तयोरेवमाकाङ्क्षावशादेकवाक्यता—यद्दध्नेन्द्रियं कुर्यात् तद्धोमाश्रितेन, यच्च दध्ना जुहोति, तदिन्द्रियार्थमिति। तस्मान्नित्ये दध्यविधिनात्काम्यमेव तत् स्यात्। मैवम्—

**द्वयोरेकस्य वाकाङ्क्षा भवेद्यदि ततस्तयोः।**
**प्रकल्प्यतैकवाक्यत्वं निराकाङ्क्षन्त्विहोभयम्॥**

कामवाक्यन्तावद्विपरिवृत्तिलब्धहोमाश्रयं नाश्रयसम्बन्धकरं प्रमाणमपेक्षते। दधिस्वरूपमपि लोकसिद्धं नोक्थ्यव्यूढादिवदलौकिकम्। अतो न तदर्थमन्यापेक्षम्। दध्नोऽपि फलवद्धोमसंयुक्तस्य न फलान्तरापेक्षा। तस्मात्पृथक् संयोगादुभयार्थन्दधि स्यात्॥

इति संयोगपृथक्त्वाधिकरणम्॥ ३॥

---

३

एकस्य० इह काम्यस्य मृण्मयादिवदक्रत्वर्थतोक्तापोद्यत इति सङ्गतिः। सन्निधानादपि होमाश्रितेनेत्यर्थलाभसम्भवान्न दध्ना जुहोतीत्यनेनैकवाक्यतालभ्यत्वमुक्तार्थस्येत्यत आह—यच्चेति। विपरिवृत्त्या लब्धो होम आश्रयो यत्रेति बहुव्रीहिः। उक्थ्येति। 'पशुकाम उक्थ्यं गृह्णीयात्' इति फलविधावुक्थ्यस्वरूपस्यालौकिकत्वात्तत्स्वरूपज्ञापकस्य 'यदुक्थ्यो गृह्यते' इति वाक्यस्यापेक्षा। एवं 'यः कामयेत बहु स्यां प्रजायेयेति स व्यूढेन यजेत' इति द्वादशाहप्रयोगविशेषव्यूढाख्यस्यालौकिकत्वात्तद्बोधकस्य 'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ अथेतरेषां दशानामन्हाम् ऐन्द्रवायवाग्रं प्रथममहः अथ शुक्राग्रम् अथ द्वे आग्रयणाग्रे अथैन्द्रवायवाग्रमथ द्वे शुक्राग्रे अथाग्रयणाग्रमथ द्वे ऐन्द्रवायवाग्रे' इत्यग्रताविशेषबोधकवाक्यस्य चापेक्षा। प्रकृते तु दध्नो लोकप्रसिद्धत्वान्न तत्स्वरूपाकांक्षेति भावः। सूत्रव्याख्यां दर्शयन्नुपसंहरति—तस्मादिति। पृथक्क्रतुपुरुषशेषिभेदेन संयोगाद्विनियोगादित्यर्थः। उभयत्वे क्रत्वर्थपुरुषार्थोभयरूपत्वे संयोगस्य विनियोजकवाक्यस्य पृथक्त्वं हेतुरिति सूत्रार्थः। प्रयोजनं दध्ना नित्यहोमानुष्ठानं पूर्वपक्षे सिद्धान्ते त्वननुष्ठानमिति॥

इति संयोगपृथक्त्वाधिकरणम्॥ ३॥

४

द्रव्याणां० ज्योतिष्टोमे 'पयो ब्राह्मणस्य व्रतमि'त्यादि श्रूयते। तत्पुरुषार्थम्? उत क्रत्वर्थमिति संशये, पुरुषसंयोगात् व्रतस्य पुरुषप्रीत्यर्थतया लब्धफलस्य जञ्जभ्यमानमंत्रवचनन्यायासम्भवात् पयोनियमस्यापि व्रतसंयुक्तस्य तत्फलनिराकाङ्क्षत्वात् न प्रकरणग्रहणमिति पुरुषार्थत्वम्। उच्यते—

नियममन्तरेणापि पुरुषप्रीतिदर्शनात्।
नियमस्य फलङ्क्लृप्यं तच्च प्रकारणात्क्रतोः॥

कल्पनीये हि फले प्रकृते क्रतुफलसिद्धिरेव तदधिकृतसंस्कारद्वारेण पयोनियमस्य फलं युक्तमाश्रयितुमिति क्रत्वर्थता॥

इति पयोव्रताधिकरणम्॥ ४॥

५

चोदनायां० 'विश्वजिता यजेते'त्यादिष्वश्रुतफलासु चोदनासु फलमस्ति, नेति संशयः।

---

४

द्रव्याणां० इह दध्यादिवत् क्रत्वर्थतया पृथक्संयोगाभावादक्रत्वर्थत्वमस्त्विति प्रत्यवस्थानात्सङ्गतिः। व्रतं भोज्यम्। आदिना 'यवागू राजन्यस्यामिक्षा वैश्यस्य' इत्यस्य संग्रहः। तत् व्रतम्। पुरुषार्थं केवलपुरुषार्थम्। क्रत्वर्थम् पुरुषसंस्कारद्वारा क्रत्वर्थम्। पुरुषेति षष्ठीश्रुत्या पुरुषशेषित्वरूपस्वामित्वावगमादित्यर्थः। जञ्जभ्यमानेति। 'जञ्जभ्यमानोऽनुब्रूयान्मयि दक्षक्रतू इति' इति मन्त्रवचनस्य जञ्जभ्यमानपुरुषमात्रार्थत्वे फलकल्पनागौरवात्पुरुषसंस्कारद्वारा क्रत्वर्थत्वमिति न्यायस्यात्र प्रीतिरूपफलस्य क्लृप्ततया असम्भवादित्यर्थः। ननु नियमस्य फलाक्लृप्तेः क्रत्वर्थता स्यादत आह—व्रतसंयुक्तस्येति। भोजनाश्रितप्राङ्मुखत्वनियमस्येव पयोनियमस्यापि व्रतद्वारा पुरुषार्थत्वमेवेति नियमाभावे प्रत्यवायकल्पनमिति भावः। क्रतोरिति। क्रतोर्यत् फलं तदेव नियमस्य कल्प्यम्, प्रकरणोपस्थितत्वात्, न प्रत्यवायाभावरूपमनुपस्थितत्वादित्यर्थः। ननु पयोव्रतस्य क्रत्वर्थत्वे राजकर्तृके तदभावात्फलं न स्यादत आह—तदधिकृतेति। क्रत्वधिकृतब्राह्मणादिसंस्कारद्वारा क्रत्वपूर्वार्थतेत्यर्थः। क्रियार्थानां द्रव्याणां पुरुषरूपाणां संस्कारो व्रतरूपः क्रतुधर्मः स्यादिति सूत्रार्थः। प्रयोजनं पूर्वपक्षे क्रत्वौ पयोनियमाभावः, सिद्धान्ते तन्नियम इति व्यक्तम्॥

इति पयोव्रताधिकरणम्॥ ४॥

५

चोदनायां० व्रतनियमवत्फलाश्रवणान्न पुरुषार्थतेति प्रत्यवस्थानात्सङ्गतिः। 'यस्स्त्रायागुरते स विश्वजिता यजेत' इति विश्वजिन्नोदाहरणम्, तस्य वाक्येन सत्रफलार्थत्वावगमा-

नास्त्येव फलमेतस्यां चोदनायां फलाश्रुतेः ।
शब्दगम्यमदृष्टं हि फलन्तेन विना कथम् ।।
प्रत्येतुं शक्यते तच्चेदध्याहारेण कल्प्यते ।
परिपूर्णमिदं वाक्यं नाध्याहारमपेक्षते ।।

ननु यागेन कुर्यादित्युक्ते किङ्कुर्यादित्यपेक्षणादध्याहारोऽवकल्पते, सत्यं यदि यागेन कुर्यादित्युच्येत, यागङ्कुर्यादिति तूक्ते परिपूर्णत्वान्नाध्याहारापेक्षा। फलश्रवणे हि सति विध्यानुगुण्यात् समानपदोपात्तधात्वर्थातिक्रमेण वाक्यसमर्पितं फलम्भाव्यत्वेन भावनाऽवलम्बते ।

तदभावे तु धात्वर्थभाव्यत्वङ्को निवारयेत् ।
तथा च सति सम्पूर्णं वाक्यन्नाध्याहृतिक्षमम् ।।

नन्वेवं यागमात्रकर्तव्यतायामुच्यमानायां न कश्चित्प्रवर्तेत । सत्यम्; को दोषः ? विध्यानर्थक्यम्, तदपि भवतु । निष्फलस्य कर्त्तव्यत्ववचनमप्रमाणं स्यादित्येवमप्यस्तु । 'क्षेमोऽयं पन्थाः, गच्छतु भवानि'त्याद्यनाप्तवाक्यवत्किङ्कुर्मः । न च कर्त्तव्यताबलादेव फलमुपकल्पयितुं शक्यम् । तदात्वे दुःखदर्शनात्प्रत्यक्षविरोधादायत्याञ्च फलं न कृतमात्रविनष्टेन यागेन शक्यते कर्त्तुम् । न चापूर्वद्वारेण सम्भवति, तदभावात् ।

श्रुते हि फले शृङ्गग्राहिकतया धात्वर्थस्य तत्साधनत्वे शब्देन प्रतिपादिते तद्बलाददृष्टमप्यपूर्वं कल्प्यते । यागक्रियामात्रपर्यवसिते तु शब्दे कथमपूर्वसिद्धिः, तदभावे च कथङ्कालान्तरभाविफलकल्पनम् ? तदितरेतराश्रयं भवति—फलाधीनमपूर्वम् तदधीनं च फलमिति ।

असत्यपि भाव्यापेक्षणे कस्य यागः कर्त्तव्य इति नियोज्यापेक्षणात्फलकामस्याऽध्याहार इति चेत्—न; अध्याहारमन्तरेणापि तल्लाभात् । यथा निषेधाधिकारेषु

---

दिति सूचयितुमाह—अश्रुतेति । तथाचैकाहकाण्डपठितो विश्वजिदिहोदाहरणमित्याशयः । तेन विना शब्देन विना कथं प्रत्येतुं शक्यत इत्यन्वयः । तत्फलमध्याहारेण लभ्यते चेदिति शङ्का । विध्यानुगुण्यात् विध्यनुसारात् । तथा च षष्ठाद्याधिकरणं श्रुतफलविषयमिति न तेन गतार्थतेति भावः । विध्यानर्थक्यं दोष इत्यनुषङ्गः । किं कुर्म इति । न हि स्वेच्छावशेन वाक्यार्थो वक्तुं शक्यते, आकांक्षादिप्रमाणायत्तत्वात्तस्येति भावः । एवञ्चैतद्वाक्याध्ययनस्य ब्रह्मयज्ञाद्युपयोगमात्रमित्याशयः । तदात्वे तत्काले । तदिति । तस्मादित्यर्थः । गुरुमतानुसारेण शङ्कते—असत्यपीति । कृतिसाध्यरूपकार्यस्य लिङर्थस्य यथा कृत्यंशे विषयापेक्षा तथा कृतेराश्रयापेक्षापि कस्य कार्यमित्येवंरूपास्ति । आश्रय एव च नियोज्य इत्युच्यते । स चार्थात्फलकाम एव । कृतेरिच्छत्रायोनित्वादिति भावः । तल्लाभात् नियोज्यलाभात् । एतदेवोपपादयति-यथेति । 'न

अप्रवृत्तस्य निवर्तनासम्भवान्नञर्थविच्छेदकतयोपयुक्तापि प्रवृत्तिरेव विशेषणमिति तद्विशिष्टस्य नियोज्यत्वावगमात्, न प्रयुक्तिलाघवमाश्रित्य फलकामोऽध्याह्रियते, तथा प्रवृत्त्युपदेशेऽपि अशक्तस्याजीवतश्च तदसम्भवात्, शक्तो जीवंश्चाधिकारी लब्ध इति किमध्याहारेण ?

तस्मान्निष्फलमेवेदङ्कर्मेति प्राप्त उच्यते।
विधियुक्ता क्रिया नैव धात्वर्थं भाव्यमृच्छति ॥
भाव्येन च विना वाक्यं नैव तत्परिपूर्यते।
वाक्यसम्पूरणायातः फलमध्याहरिष्यते ॥

असत्यपि फलश्रवणे चेतनप्रवर्तनात्मकविध्यवरुद्धा भावना धात्वर्थं तावन्न कथञ्चिद् भाव्यमङ्गीकरोति, तदतिरिक्तभाव्यापेक्षणात्, अतल्लाभादपरिपूर्णं वाक्यम्फलपदाध्याहारमपेक्षते। तच्च लौकिकमपि वेदवाक्यैकदेशतयाध्याहृतं वैदिकमेव भवति। किमुत यदा वैदिकमेवान्यत्र स्थितमध्याह्रियते।

कथम्पुनर्व्यवेतस्याऽनुषङ्गाभ्युपगमः ? नायमनुषङ्गः, किन्त्वध्याहारः। स च यत्र क्वचिदपि व्यवस्थितस्याविरुद्धः।

तेनाश्रुतफलानामप्यध्याहृतफलान्वयात्।
सर्वेषाङ्कर्मणामत्र फलवत्त्वमवस्थितम् ॥

इति विश्वजिदादीनां सफलत्वाधिकरणम् ॥ ५ ॥

---

कलञ्जं भक्षयेत्' इत्यादिषु प्रवृत्यविषयस्य भक्षणादेर्निषेधायोगेन नञर्थनिषेधप्रतियोगिविशेषणत्वेनावगतापि प्रवृत्तिरप्रवृत्तस्य निवर्तनायोगादर्थान्नियोज्यविशेषणत्वेनाप्यवगम्यत इति भक्षणप्रवृत्त एव नियोज्यो यथा स्वीक्रियते तथा विधावप्यर्थाच्छक्तो जीवंश्च नियोज्यो लभ्यत इति नाध्याहार इत्यर्थः। ननु फलकामाध्याहारे फलत एव प्रयुक्त्युपपत्तेः न नियोगे प्रयोजकत्वशक्तिकल्पनेति लाघवमित्याशङ्क्य तथा सति निषेधाधिकारेऽपि फलकामाध्याहारःस्यादिति प्रतिबन्दीमाह—न प्रयुक्तीति। एवञ्चार्थान्नियोज्यलाभे न तदध्याहार इत्येव वाच्यमिति नात्रापि नियोज्याध्याहारस्स्यादिति भावः। स्वमतेन फलाध्याहारं समर्थयति—उच्यत इति। नन्वध्याह्रियमाणस्यावैदिकत्वापत्तिरत आह—तच्चेति। फलञ्चेत्यर्थः। लौकिकस्यापि वेदतात्पर्यविषयत्वाद्वैदिकत्वमेव। 'स्रुवेणावद्यति' इत्यादौ द्रवादिवदित्यर्थः। अन्यत्र ज्योतिष्टोमादिवाक्ये। ननु 'व्यवायान्नानुषज्यते' इति सूत्रविरोध इति शङ्कते—कथं पुनरिति। प्रकृताधिकरणविषयमुपसंहरति—तेनेति। सूत्रप्रयोजने व्यक्ते ॥

विश्वजिदादीनां सफलत्वाधिकरणम् ॥ ५ ॥

तत्स० स्थिते फलार्थत्वे, किं सर्वफलार्थम्, उतैकार्थमिति। विशेषानिर्देशात्सर्वार्थत्वे प्राप्ते, अभिधीयते—

येनैवैकेन तद्वाक्यं साकाङ्क्षम्परिपूरितम्।
तेनैवैतन्निराकाङ्क्षमिति नाऽनेककल्पना॥
इति विश्वजिदादीनामेकफलताधिकरणम्॥ ६॥

७

स स्वर्गः० एकं फलमित्युक्तम्। किन्तदेकमिति न ज्ञायते। अतः पुनरपि सर्वार्थत्वम्, अप्रामाण्यं वाऽनध्यवसायात् प्राप्नोति, तदुच्यते—

स्वर्गोऽनतिशयप्रीतिरूपो दुःखविवर्जितः।
भूयांसोऽभिलषन्त्येनमल्पे त्वल्पसुखन्नराः॥

सति सम्भवे शास्त्रस्य भूयोविषयत्वं न्याय्यम्, अविशेषप्रवृत्तस्यातिसङ्कोचपरिहारात्। स्वर्गश्च दुःखासंयुक्तनिरतिशयसुखात्मकः सर्वेषामभिमतः। पश्वादिसुखन्तु दुःखानुषक्तम्, अल्पञ्च केचिदेव प्रार्थयन्ते। प्रत्यवायपरिहारस्तु सर्वाभिलषितोऽपि प्रत्यवायापेक्षया कियताऽपि विलम्बेन हृदयमागच्छति।

ततस्तु सुकरज्ञानं सुखमेव परम्फलम्।
तच्चानतिशयत्वेन स्वर्गात्मकमिति स्थितम्॥
इति विश्वजिदधिकरणम्॥ ७॥

---

६

तत्सर्वार्थम्० अत्र सर्वकामपदाध्याहारे एकेनैव निराकाङ्क्षत्वमिति हेतौ सम्भवेऽपि अनेकफलप्रयुक्तत्वकल्पनागौरवदोषात्सिद्धान्तसिद्धिर्बोद्धव्या। स्पष्टमितरत्॥
विश्वजिदादीनामेकफलताधिकरणम्॥ ६॥

७

सः स्वर्गः० स्वर्ग इति। 'यन्न दुःखेन सम्भिन्नम्' इत्यादिवचनादित्यर्थः। भूयोविषयत्वं बहुपुरुषविषयत्वम्॥

इति विश्वजिदधिकरणम्॥ ७॥

८

क्रतौ० 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ती'ति श्रुतम्। रात्रिशब्देन 'ज्योतिर्गौरायुरि'त्यादिवाक्योत्पादितानि सौत्यानि कर्माण्युच्यन्ते। तदिदंरात्रिसत्रं स्वर्गार्थम्? उत प्रतिष्ठार्थमिति संशयः। तदर्थञ्च 'प्रतितिष्ठन्ती'ति किमयम्फलविधिः? उतार्थवाद इति।

अपापश्लोकवत्तत्र वर्तमानापदेशतः।
फलविध्यसमर्थत्वात्तद्वदेवार्थवादता ॥
अनादिष्टफलत्वेन तस्मात्स्वर्गफलार्थता।
निर्देशात्तु प्रतिष्ठैव फलत्वेन विनम्यते ॥
जुह्वन्नैव कर्मैतन्निराकाङ्क्षं फलं प्रति।
कल्पनीयं फलं तत्र विनामोऽध्याहृतेर्वरम् ॥

स्वर्गस्याध्याहारे तत्स्वरूपम्, तस्य च श्रुतकर्मसम्बन्धः, फलत्वञ्च कल्प्यम्। प्रतिष्ठायास्तु स्वरूपमेकवाक्यत्वञ्च क्लृप्तम्, फलत्वसिध्यर्थं सन्नन्ततया विपरिणाममात्रं लघीयः। 'उपयन्ती' त्यपि वर्त्तमानापदेशो विधिरूपेण विपरिणम्यते। यच्छब्दश्च व्यवहितान्वयः। तदयमर्थः—ये प्रतितिष्ठासन्ति, त एता रात्रीरुपेयुरिति। एवं हि धर्ममात्रकल्पनालाघवम्, इतरथा तु सर्वस्यैवार्थवादत्वात्सकल एव विध्युद्देशोऽप्रतिपन्नफलविशिष्टः कल्पनीयः—स्वर्गकामा एता रात्रीरुपेयुरिति। कल्पितोऽप्यसौ प्रतिष्ठार्थवादो न सुखं सङ्गच्छते। यस्मात्प्रतितिष्ठन्ति, तस्मात् स्वर्गकामा उपेयुरिति किं केन संगच्छते। ततश्च यद्यप्यध्याहारः स्यात्, तथाऽप्यर्थवादसङ्गत्यर्थं प्रतिष्ठेय ह 'व्येति प्रतिष्ठार्थता ॥

इति रात्रिसत्राधिकरणम् ॥ ८ ॥

---

८

क्रतौ० इह स्वर्गफलकत्वापवादात्सङ्गतिः। सौत्यानि सौमयागरूपाणि। अपापेति। अपापश्लोकश्रवणादित्यर्थः। अनादिष्टेति। अश्रुतेत्यर्थः। सिद्धान्तमाह—निर्देशादिति। प्रतितिष्ठन्तीतिपदेनाभिधानादित्यर्थः। विनम्यते विपरिणम्यते। सन्नन्तत्वकल्पनयेति शेषः। अङ्गवदिति सूत्रोक्तदृष्टान्तवैषम्यमाह—जुह्वदिति। विनामो विपरिणामः। अध्याहृतेः अध्याहारात्। विधिरूपेणेति। पञ्चमलकारत्वकल्पनयेत्यर्थः। धर्ममात्रेति। सन्नन्तत्वादिधर्मेत्यर्थः। एवमार्थवादिकफलकल्पने लाघवमुक्तम्, तदकल्पनेन स्वर्गकल्पनेऽर्थवादानुपपत्तिमप्याह—कल्पितोऽपीति। क्रतौ रात्रिसत्रे कार्ष्णाजिनिर्नाम ऋषिः फलार्थवादं मेने इति शेषः। अङ्गवत् अङ्गे जुह्वादाविवेति सूत्रार्थः। प्रयोजनं स्पष्टम् ॥

इति रात्रिसत्राधिकरणम् ॥ ८ ॥

९

काम्ये० यत्र स्वर्गादन्यत्फलं श्रुतम्–'सौर्यं चरुन्निर्वपेद् ब्रह्मवर्चसकामः' इति तत्कि स्वर्गार्थं श्रुतफलार्थञ्च ? उत श्रुतफलार्थमेवेति संशयः । तत्र—

विधिः सामान्यरूपेण सर्वेषां हि प्रवर्तकः ।
स्वर्गश्चाभ्यर्थितः सर्वैरिति तादर्थ्यनिश्चयः ॥

कतिपयाभिलषितब्रह्मवर्चसाद्यर्थत्वे विधेरविशेषतः सर्वपुरुषान् प्रति प्रवर्तकत्वमवगतं बाध्येत, सर्वाभिलाषितस्वर्गाद्यर्थत्वे तु तदनुग्रहः स्यादिति स्वर्गार्थता । ब्रह्मवर्चसादिश्रवणन्त्वन्वाचयत्वेन व्याख्येयम्, काष्ठाहरण इव शाकाहरणम् । सौर्येण स्वर्गं कुर्यात् ब्रह्मवर्चसमपि भवतीति । एवञ्च विधित एव स्वर्गार्थत्वेन परार्थत्वाद्रात्रिसत्रे फलश्रवणमर्थवादः पर्णमयोन्यायादिति पूर्वाधिकरणमप्याक्षिप्तम् । अत्रोच्यते—

अविशेषप्रतीतिर्या पदमात्रेण जायते ।
पदान्तरैकवाक्यत्वात् विशेषे स्थाप्यते हि सा ॥
ब्रह्मवर्चसकामादिविषयोऽयमतो विधिः ।
स्याच्चेदन्वाचयस्तस्य भवेदन्योन्यसंश्रयः ॥

स्वर्गार्थत्वे हि निश्चिते स्यादन्वाचयः, तन्निश्चये च सति फलान्तरापेक्षायां स्वर्गकल्पना । तस्माद् ब्रह्मवर्चसाद्येव फलम् ॥

इति काम्यानां श्रुतफलार्थत्वाधिकरणम् ॥ ९ ॥

---

९

काम्ये० इहाक्षेपरूपानन्तरसङ्गतिं वक्ष्यति । सामान्येति । अभिमुखानभिमुखसाधारण्येन प्रवर्तनाबोधकत्वेनेत्यर्थः । विधिबलादेव हि सन्निहितधात्वर्थातिक्रमेण पदान्तरोपात्तं फलमङ्गीक्रियते । तेन विधिप्राबल्यात्स्वर्ग एव फलत्वेन स्वीकर्तुं योग्यः, अन्यथा प्रवर्तकस्य विधेः सङ्कोचलक्षणबाधापत्तेरित्यर्थः । अन्वाचयत्वेनेति । अमुख्यत्वेनेत्यर्थः। सूक्तवाकगतायुरादिकमिव क्रत्वर्थप्रहरणादेरिति भावः । ननु रात्रिसत्रन्यायात् क्रतस्यैव फलत्वं स्यादत आह–एवञ्चेति । अविशेषेति । पदमात्रस्य प्रमाणत्वाभावेन पदान्तरसमभिव्याहारस्यावश्यकत्वादाकांक्षितपदेन संकोचो न बाधः, किन्त्वपेक्षितत्वादनुकूल एवेति भावः । तस्य ब्रह्मवर्चसादेः । प्रयोजनं स्पष्टम् । यज्ञाङ्गे प्रस्तरप्रहरणादौ क्रत्वर्थः क्रतूपकारो यथा नित्यस्तथा काम्ये कर्मणि स्वर्ग इति सूत्रार्थः ॥

इति काम्यानां श्रुतफलार्थताधिकरणम् ॥ ९ ॥

१०

सार्व० 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासावि'ति किमयमनुवादः ? उत विधिरिति संशये विधिभावनयोरश्रवणात्, तदभावे च साध्यसाधनसम्बन्धायोगात् वाजपेययूप योरिव गोदोहनादिगुणकामैः पश्वादिभिर्दर्शपूर्णमासयोः सम्बन्धसद्भावात् तदपेक्षोऽयमनुवादो दर्शपूर्णमासस्तुत्यर्थ इति प्राप्ते, ब्रूमः—

षष्ठीसम्बन्धमात्रेऽपि वर्तमाना न दुष्यति ।
तादर्थ्यञ्च चतुर्थ्यर्थस्तच्च प्राप्तन्न केनचित् ॥
स्यात्प्रधानफलार्थत्वमङ्गानान्तदनुग्रहात् ।
न त्वङ्गफलशेषत्वं प्रधानस्य कथञ्चन ॥
सर्वकामार्थता तस्मादप्राप्तेह विधीयते ।
कर्तव्याविति चाहार्यं विधिभावनयोः पदम् ॥
उत्पत्तिचोदनाभ्यो वा प्रसिद्धे विधिभावने ।
आश्रित्य फलसम्बन्धमात्रमत्रोपदिश्यते ॥

यद् दर्शपूर्णमासौ कर्तव्यौ, तत् सर्वकामार्थेनेति । तस्मात्फलविधिः ॥

इति दर्शपूर्णमासादीनां सर्वकामार्थताधिकरणम् ॥१०॥

११

तत्र० किमेकस्मिन्नेव प्रयोगे सर्वे कामा भवन्ति ? उत प्रयोगभेदेनेति संशये—

सर्वे युगपदेव स्युर्निमित्तस्याविशेषतः ।
यादृङ्निमित्तमेकस्य तादृगेवापरस्य हि ॥

कामनावशात् विशेषः । यदेव यदा काम्यते, तदेव तदा भवति नान्यदिति चेत् ? न ; अनङ्गत्वात् । न हि कामना कर्मणः, फलस्य वाऽङ्गम्, येन तदभावे फला-

---

१०

सार्वकाम्यं० एकफलकत्वस्यापवादात्सङ्गतिः । सम्बन्धसद्भावादिति । स्वोपकारकसम्बन्धिस्वरूपपरम्परासम्बन्धसत्त्वादित्यर्थः । तादर्थ्यमपि परम्परया स्यादत आह—न त्वङ्गेति । भावनाकर्तव्यतयोरपि नात्राज्ञातज्ञापनं किंतु तयोरप्यनुवादेन फलसम्बन्धमात्रस्य तदित्याह—उत्पत्तीत्ति । सूत्रप्रयोजने स्पष्टे ॥

दर्शपूर्णयासादीनां सर्वकामार्थताधिकरणम् ॥ १० ॥

११

तत्र० इह प्रसङ्गसङ्गतिः । निमित्तस्य कारणस्य । लिङ्गस्य पुंस्त्वस्य । प्राभाकरमतं दूषयितुमुपन्यस्यति—योऽपीति । तन्मते स्वर्गकामादेर्नियोज्यत्वेनान्वये सति कामासाधने

नुत्पत्तिः स्यात्। ननूपादेयभूतस्य कर्त्तुर्विशेषणभूता कामना कर्माङ्गमेव; न कामिन उपादानम्। उद्दिश्य हि कामिनं कर्मोपदिश्यत इति षष्ठे वक्ष्यते। अत एव लिङ्गस्याविवक्षा।

योऽपि कर्मण्यनुपादेयस्याऽपि कामिनोपूर्वं प्रति गुणभूतत्वात् कामनाऽपि नियोगसिद्धावङ्गमिति वदति, तस्याऽपि लिङ्गविवक्षा दुर्वारैव। अत्र चायमपरो विशेषः—यत्र फलकामो न श्रूयते, फलान्येव चतुर्थ्यन्तेन निर्दिश्य तादर्थ्येन कर्म विधीयते। कामोपबन्धस्तु फलत्वसूचनार्थः, न स्वयं तन्त्रम्। अपि च ये युगपत्काम्यन्ते, तेषामनिवार्यैव युगपदुत्पत्तिः स्यात्। तस्माद्युगपत्स्युः। एवं प्राप्ते, ब्रूमः—

**कामोद्देशेन कर्मैव साधनत्वेन चोद्यते।**
**तेषां चोद्दिश्यमानानां साहित्यं न विवक्षितम्॥**
**एकैकस्यैव कामस्य निरपेक्षस्य साधनम्।**
**कर्मेदं चोद्यते तच्च सापेक्षत्वे विरुध्यते॥**

यादृशं हि कारणं यादृशस्य कार्यस्य निरपेक्षस्य निष्पादकम्, तदेकमेव यगपज्जनयति। यथा मृत्पिण्डो युगपदेकमेव घटमुत्पादयति, नानेकम्। कामनावशाच्च विशेषः। विधिर्हि चेतनप्रवर्तनात्मकः समीहितस्यैव फलत्वमुपकल्पयति, न पश्वादिस्वरूपस्य। येष्वपि युगपत्कामना तेष्वपि कर्मणो युगपदसमर्थत्वात्

---

कार्ये तत्कामिनियोज्यत्वाभावादर्थात्स्वर्गादेः फलत्वसिद्धिः। एवञ्च कामनाविरहे तत्फलकनियोगासिद्धेर्न सकलफलयौगपद्यमिति। दूषयति—तस्यापीति। मत इति शेषः। किञ्च फलकामस्य नियोज्यस्य श्रवणे सति साक्षात्कामसाधने कर्मणि तद्योगान्नियोगे तदन्वयस्त्वदुक्तनयेन स्यान्न तु तदप्यस्तीत्याह—अत्रेति। ननु कामपदसमभिव्याहारात्कामनाविषयस्योत्पत्तिरिति शङ्कायामाह—कामोपबन्धस्त्विति। पश्वाद्यनेकफलानामेकेन शब्देनोपलक्षणार्थ इत्यर्थः। न स्वयमिति। न कामनाविषयत्वप्रधान इत्यर्थः। ननु सर्वपदस्य विशेष्यसाकांक्षत्वात्पुत्रपश्वादिना वानुपस्थितेरर्थवादगतकामपदोपस्थितानामेव सर्वपदेनोपादानात्कामनाविषयत्वेनैव तेषां फलत्वमतो न युगपदुत्पत्तिरित्यत आह—अपि चेति। समूहालम्बनात्मककामनाविषया यावन्तस्तेषामित्यर्थः। एकैकस्यैवेति। साहित्यस्याविवक्षायां प्रत्येकसाधनत्वेनावगमात्प्रत्येकफलोद्देशेनैव प्रयोगविधित्ता प्रयोगविधानान्नैकप्रयोगादनेकफलोत्पत्तिरित्यर्थः। कथं तर्ह्येकस्मादग्निहोत्रप्रयोगात्पापक्षयस्वर्गरूपानेकफलोत्पत्तिरित्याशङ्क्याह—यादृशं हीति। तत्र नित्यप्रयोगनिरपेक्षकाम्यप्रयोगासम्भवेन पापक्षयसापेक्षस्वर्गजनकत्वस्यैव प्रामाणिकत्वादेकप्रयोगादुभयोत्पत्तिर्न त्वन्यत्रेति भावः। किमेकमित्यत्र विनिगमकमाह—कामनेति। न पश्वादीति। अयोग्यत्वादिति भावः। अस-

यदुद्दिश्य यदा प्रयुज्यते, तदा तदेव भवति, नान्यत्। यथा ह्येकफलानि कर्माणि यथाविधस्य फलस्य स्वर्गस्य पशोर्वा साधनत्वेन चोदितानि, तदेकमेव तथाविधं फलं जनयन्ति, नानेकम्। इतरथा सकृदेव यावदिष्टफलं सिद्धमिति न काम्यमेकङ्कर्म पुनः प्रयुज्येत। इष्यते च पुनः प्रयोगः। तथेहाप्येकमेव युगपत्फलम्। न च साहित्येनैवात्र कामानां फलत्वम्, नैकैकश्येति वाच्यम्। साहित्यस्याविवक्षितत्वादित्युक्तम्। अतः पर्यायेण कामः।

**इति दर्शपूर्णमासादीनां प्रतिफलं पृथगनुष्ठानाधिकरणम् ॥ ११ ॥**

## १२

योगसिद्धिः० इदानीमैहिकामुष्मिकत्वं फलानाञ्चिन्त्यते। स्वर्गः तावदामुष्मिक एव। वृष्टिः अभिचारः वैश्वानरफलञ्च पुत्रगतब्रह्मवर्चसाद्यैहिकमेव कामनावशात्। पश्वादयस्तु चिन्त्यन्ते-किमामुष्मिका एव? उताऽनियताः। तत्र--

**प्रतिग्रहादिकं दृष्टं पश्वादेः कारणान्तरम्।**
**देहारम्भकतैवातश्चित्रादेः फलहेतुता ॥**

पश्वादिस्वरूपस्य प्रतिग्रहाद्युपायान्तरदर्शनाददृष्टानपेक्षत्वात् देहस्य तु मातापितृसंयोगमात्रेणानुत्पत्तेः कारणान्तरापेक्षणात् विशिष्टफलोपभोगार्हशरीरारम्भकत्वमेव चित्रादेः पश्वादिहेतुत्वमिति आमुष्मिकाण्येव पश्वादीनोति प्राप्ते, **अभिधीयते—**

**साध्यत्वमेव पश्वादेः शब्देन प्रतिपाद्यते।**
**अमुत्र वेह वेत्येवन्नास्ति शब्दो नियामकः ॥**
**देहारम्भमुखत्वञ्च फलानामप्रमाणकम्।**
**विपाकः कर्मणां येषाम्प्राग्देहविनिपाततः ॥**

---

मर्थत्वादिति। तथा च बाधनिश्चयान्नानेकमुद्दिश्य प्रयोग इति भावः। एकैकश्येन प्रत्येकं। पर्यायेण प्रयोगभेदेन। सूत्रप्रयोजने स्पष्टे ॥

दर्शपूर्णमासादीनां प्रतिफलं पृथगनुष्ठानाधिकरणम् ॥ ११ ॥

## १२

योगसिद्धिः० आमुष्मिकत्वं पारलौकिकत्वम्। कामनावशादिति। ऐहिकत्वेनैव तत्कामनाया अनुभवादित्यर्थः। देहारम्भमुखत्वं देहारम्भद्वारत्वम्। नन्वेवं कदाचिदैहिकत्वं कदाचिदामुष्मिकत्वमित्यत्र किं बीजमत आह—विपाक इति। प्रतिबन्धकाभावादिरूपफलोपधायकसम्पत्तिरित्यर्थः। पश्वादेरदृष्टानपेक्षत्वं दूषयति—दैवमिति। पुरुषकारः प्रयत्नः। तच्चैव हीति। प्रतिग्रहादिकं दृष्टमित्यर्थः। शब्दश्च शब्दगम्यचित्रादिकञ्चेत्यर्थः। योगे प्रतिबन्धका-

प्राप्तः तानीह भुज्यन्ते ततोऽन्यानि भवान्तरे ।
दैवंपुरुषकारश्च पश्वादेः कारणद्वयम् ॥

तदुक्तं भाष्यकारेण—'तच्चैव हि तत्र कारणम् शब्दश्चेति' तस्मादनियमः ॥

इति योगसिध्यधिकरणम् ॥ १२ ॥

## १३

**समवाये०** 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते'ति किमङ्गप्रयोजनसम्बन्धोऽयं वाजपेयाङ्गत्वेन बृहस्पतिसवस्य विधिः ? उत कालार्थः संयोगो वाजपेयोत्तरकालत्वं बृहस्पतिसवस्योपदिश्यते ? इति संशये—

उभयोर्वाजपेयस्य बृहस्पतिसवस्य च ।
प्रज्ञातफलयोर्नैव मिथोऽङ्गाङ्गित्वसम्भवः ॥
न च कर्मान्तरं युक्तं लक्षणा हि तथा भवेत् ।
क्त्वाप्रत्ययेन कालस्तु श्रुत्यैवोक्तो न लक्षणा ॥

प्रसिद्धस्य तावद्बृहस्पतिसवस्य पुरोध आदिफलार्थत्वान्न वाजपेयाङ्गत्वम्, तद्धर्मककर्मान्तरविधौ तु बृहस्पतिसवशब्दो धर्मलक्षणार्थः स्यात् । कालविधौ तु तस्य क्त्वार्थत्वात्, न काचिल्लक्षणा । तस्मात्प्रसिद्धस्य बृहस्पतिसवस्य वाजपेयपूर्वकत्वं विधीयत इति प्राप्ते, ब्रूमः—

वाजपेयश्रुतेरेव स्यादत्यन्तपरार्थता ।
तत्प्रक्रिया च बाध्येत न च दूरगतं प्रति ॥

---

भावयोग इहाप्यर्थस्य पश्वादेः सिद्धिर्न त्वमुत्रैव । अस्यार्थस्योत्पत्तौ फलोत्पादवाक्ये असंयोगादश्रवणादिति सूत्रार्थः । प्रयोजनमैहिकपश्वर्थतया चित्रादेरननुष्ठानमाद्ये, सिद्धान्तेऽनुष्ठानमिति ॥

इति योगसिध्यधिकरणम् ॥ १२ ॥

## १३

समवाये० ऐहिकत्वादेरशाब्दतयानियमेऽपि वाजपेयोत्तराङ्गत्वस्य शाब्दत्वान्नियम इति प्रत्युदाहरणसङ्गतिः । लक्षणा हीति । बृहस्पतिसवशब्दस्यानेकार्थतायोगात्तद्धर्मवति लक्षणा स्यादित्यर्थः । प्रसिद्धस्येति । 'यः पुरोधाकामः स्यात्स बृहस्पतिसवेन यजेत' इत्यादिना पौरोहित्यादिफलार्थत्वादित्यर्थः । तस्य कालस्य । क्त्वार्थत्वादिति । 'समानकर्तृकयोः पूर्वकाल' इत्यनुशासनादिति भावः । अत्यन्तेति । वाजपेयस्यान्यस्य वा वाजपेये विध्यभावात्कालोपलक्षणत्वाच्चेत्यर्थः । तत्प्रक्रिया वाजपेयप्रकरणम् । तत्र हि वाक्यश्रवणात्तदङ्गविधावगतिर्भवति । तस्याबाध इत्यर्थः । न चेति । दूरस्थबृहस्पतिसवानुवादेनानुपादेयकालविध्ययोगात्प्रकरणा-

कालः शक्य उपादातुङ्काले कर्म हि चोद्यते ।
काले च चोद्यमानं सत्कर्माविपरिवर्तनात् ॥
प्रसिद्धात्कर्मणो भिन्नमनिर्ज्ञातप्रयोजनम् ।
वाजपेयाङ्गभावेन वाक्येनैव विधीयते ॥

वाजपेयप्रयोगं यथोक्तन्निर्वर्त्य, न तावत्येव कृती स्यात्, इदमपरमङ्गन्तस्य पश्चात्कर्तव्यमिति । एवञ्च वाजपेये किञ्चिद्विधानात्तच्छब्दानुग्रहः, अन्यथा त्वसावत्यन्तपरार्थः स्यात्, कालोपलक्षणार्थत्वात् । वाजपेयप्रकरणञ्च बाध्येत । स्थिते च कर्मान्तरत्वे धर्मलक्षणाऽपि मासाग्निहोत्रवददोषः ॥

इति बृहस्पतिसवाधिकरणम् ॥ १३ ॥

१४

उभ० 'संस्थाप्य पौर्णमासीं वैमृधमनुनिर्वपती'ति किं पौर्णमास्याः वैमृधस्य चाङ्गप्रयोजनसम्बन्धः पौर्णमास्यङ्गं वैमृधः ? उत कालार्थः संयोगः ? तस्मिन्काले क्रियमाणः प्रकरणादुभयोर्दर्शपूर्णमासयोरङ्गमिति संशये—संस्थासंयोगात्संस्थितस्य पुनरङ्गासम्भवात् नाङ्गप्रयोजनसम्बन्धः । कालार्थस्तु संयोगः, प्रकरणाविशेषात् उभयार्थमिति प्राप्ते, उच्यते -

पौर्णमास्या हि संयुक्तो वाक्येनानेन वैमृधः ।
तस्य प्रकरणन्नेष्टे तद्वचसंयुक्तगोचरम् ॥

यत्तु सस्थिताया नाङ्गं सम्भवतीति तदुभयाङ्गत्वेऽपि तुल्यम् । न चामावास्याङ्गमेवेदमिति युक्तम्, प्रकरणाविशेषादिति त्वयैवोक्तम् । अतो यद्दार्शपौर्णमासिकं

---

न्तरन्यायेन तद्धर्मकर्मान्तरमेवाज्ञातफलं वाजपेयोत्तराङ्गतया विधेयमित्यर्थः । अविपरिवर्त्तनात् अनुपस्थितेः । ननु साङ्गवाजपेयप्रयोगसमाप्त्युत्तरं बृहस्पतिसवस्य क्रियमाणस्य कथं वाजपेयाङ्गत्वमत आह—वाजपेयप्रयोगमि'त । अपरं वाजपेयपरमापूर्वे फलजननानुकूलातिशयजनकमित्यर्थः । धर्मलक्षणा तु प्रामाणिकत्वाददुष्टेत्याह—स्थिते चेति । सूत्रार्थस्तु समवाये द्वयोः समभिव्याहारेऽङ्गत्वेन चोदना, संयोगस्यार्थवत्वात् वाजपेयपदस्यार्थवत्वात् अन्यथाकालोपलक्षणत्वापत्तेरिति । प्रयोजनं पूर्वपक्षे फलार्थस्य बृहस्पतिसवस्य वाजपेयोत्तरत्वनियमः, सिद्धान्ते त्वनियम इति ॥

इति बृहस्पतिसवाधिकरणम् ॥ १३ ॥

१४

उभयार्थम्०पूर्ववैषम्येण प्रत्यवस्थानात्सङ्गतिं सूचयन्नाह—संस्थासंयोगादिति । समाप्त्यर्थकसंस्थाशब्दसमभिव्याहारादित्यर्थः । असंयुक्तेति । 'असंयुक्तं प्रकरणात्' इत्युक्तेरिति भावः । संस्थाशब्दविरोधं परिहरति—अत इति । दर्शपूर्णमासोभयसाधारणतन्त्रसमाप्त्यभिप्रायः

तन्त्रन्द्वयोः साधारणं विहितम्, तद्युक्तां पौर्णमासीं समाप्य पुनरिदमङ्गङ्कर्तव्यमिति वाक्यार्थः। तथा च वाक्यशेषः 'वैमृधः पूर्णमासेनु निर्वाप्यो भवति, तेन पूर्णमासः सेन्द्रो भवती'ति इन्द्राभावेन पौर्णमास्याः वैगुण्यमाशङ्क्य तत्समाधानार्थतां दर्शयन्पौर्णमास्यङ्गत्वन्दर्शयति ॥

इति वैमृधाधिकरणम् ॥ १४ ॥

१५

**अनु०** 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ती'त्यत्रापि कालार्थत्वेन संयोगस्यात्यन्तपारार्थ्यं स्यादित्यङ्गप्रयोजनसम्बन्धं मन्वानस्योत्तरम्। आग्निमारुतस्य सोमार्थत्वेनोपदिष्टस्य अनुयाजानाञ्च पश्वर्थतया अतिदिष्टानां विपरिवर्तमानत्वान्न कर्मान्तरत्वम्। तेषान्तु निर्ज्ञातप्रयोजनानामङ्गाङ्गित्वापेक्षाभावात् कालार्थः संयोगः।

इति अनुयाजानामाग्निमारुतोत्तरकालताधिकरणम् ॥ १५ ॥

१६

**उत्प०** ज्योतिष्टोमे श्रूयते 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'ति। तत्र दर्शपूर्णमासशब्दस्यात्यन्तपारार्थ्यपरिहारायाङ्गप्रयोजनसम्बन्ध एव न्याय्यः। नैवम्—

दर्शोपलक्षिते काले सोमयागो विधीयते।
स च प्रकृत एवेति न कर्मान्तरसम्भवः॥

---

संस्थाशब्द इति भावः। पौर्णमासीमात्राङ्गत्वे लिङ्गदर्शनमप्याह—तथा चेति। प्रयोजनं पूर्वपक्षे अमावस्याविकृतावतिदेशः, सिद्धान्ते नेति ॥

वैमृधाधिकरणम् ॥ १४ ॥

१५

अनुत्पत्तौ० आपवादिकी सङ्गतिः। सोमे प्रकरणे 'आग्निमारुतं शंसति' इति विहितं शस्त्रं प्रकरणात्सोमाङ्गम् अनुयाजाश्चाग्नीषोमीयपशुतोऽतिदेशेन सवनीयाङ्गतया प्राप्ता इति फलाकांक्षाया अभावात्पूर्वपक्षो मन्द इत्याह—मन्वानस्येति। अनुत्पत्तिवाक्ये तु काल एव विधेयः स्यात् योजनेन पूर्वमेव सम्बन्धादिति सूत्रार्थः। अत्राग्निमारुतस्यानुयाजाङ्गत्वे सोमानङ्गपशुगणेषु आग्निमारुतानुष्ठानम्, सिद्धान्ते नेति। अनुयाजानां शस्त्राङ्गत्वे पश्वर्थानुयाजेभ्यस्ते भिन्ना एवेति न पञ्चमे वक्ष्यमाणस्तदाद्युत्कर्षः, सिद्धान्ते तु त एवानुयाजास्तदाद्युत्कर्षश्चेति प्रयोजनं ज्ञेयम् ॥

अनुयाजाजादीनामाग्निमारुतोर्ध्वकालताधिकरणम् ॥ १५ ॥

१६

उत्पत्ति० आतिदेशिकी सङ्गतिरिति सन्देहानुक्तिः। तत्र सोमस्याङ्गत्वं निराकर्तुमाह-

दर्शोत्तरकालमनुपादेयं प्रत्युपादीयमानोऽपि सोमः 'सन्निधौ त्वविभागादि'ति न्यायात्, न कर्मान्तरम्। प्रकृतश्चासौ फलार्थत्वान्न दर्शाङ्गतां प्रतिपद्यते। अतो न तावत्सोमस्य दर्शाङ्गत्वम्।

नापि दर्शादेः सोमाङ्गत्वम्, अविधीयमानत्वात्। न ह्यविधीयमानमङ्गम्भवति। न चात्र दर्शपूर्णमासौ विधीयेते, विधायकाभावात्। दर्शोत्तरकाले हि सोमस्य विधिः, न दर्शस्य। न चाकृतयोर्दर्शपूर्णमासयोस्तदुत्तरकाले सोमः शक्यते कर्तुमिति अर्थात्तयोरपि विधिः स्यात्। विध्यन्तरविहितयोस्तु तयोर्लाभान्नानुपपत्तिः। तदुत्तरकाले तु सोमश्चोद्यमानोऽपि सन्निधेर्न कर्मान्तरमित्युक्तम्। तस्मात्सोमस्यायं कालविधिः॥

**इति सोमादीनां दर्शपूर्णमासोत्तरकालताधिकरणम्॥१६॥**

## १७

फल० 'वैश्वानरं द्वादशकपालन्निर्वपेत्पुत्रे जाते' इति विधाय, आम्नायते—'यस्मिन् जात एतामिष्टिन्निर्वपति, पूत एव स तेजस्वी अन्नाद इन्द्रियावी पशुमान्भवती'ति। तदिदम्पूतत्वादिकं रात्रिसत्रप्रतिष्ठावत् फलमिति स्थितम्। तत्र किमिष्टिकर्त्तुः फलं पितुः? उत पुत्रस्य? इति विचारे, अन्यफले कर्मण्यन्यस्य प्रेरणासम्भवात्पितुरेव प्रेर्यत्वात् आधानगतात् त्वात्मनेपदादग्निसाध्यककर्मफलानामाधातृगामित्वनियमात्पितुरेव फलम्। **नैतदेवम्—**

**येनैव वाक्यशेषेण फलमेतत्प्रकल्प्यते।**
**तेनैव पुत्रगामित्वप्रतिपत्तिरपि स्फुटा॥**

---

नैवमिति। न कर्मान्तरेति। 'सन्निधौ त्वविभागात्' इत्यपवादादिति भावः। विधायकाभावादिति। क्त्वाप्रत्ययस्य विधात्रस्मरणादिति भावः। रेवतीवाक्यवद्विशिष्टविध्यर्थापत्तिकल्पितेन विधिना विधानं शङ्कते—न चेति। अनुपपत्त्यभावान्नैवमित्याह—विध्यन्तरेति। प्रयोजनं पूर्वपक्षे दर्शपूर्णमासोत्तरं सोमधर्मकं सोमात्प्राग्वा दर्शपूर्णमासधर्मकं कर्मान्तरमनुष्ठेयम्, सिद्धान्ते नेति। उत्पत्तिकालयोर्विशये विधेयत्वसंशये कालो विधेयः स्यात्, वाक्यस्य तत्प्रधानत्वात्तत्परत्वादिति सूत्रार्थः॥

सोमदीनां दर्शपूर्णमासोत्तरकालताद्यधिकरणम्॥ १६॥

## १७

फलसंयोगः० शेषिविरोधेन निमित्तानन्तर्यबाधस्य वक्ष्यमाणस्योपोद्घातत्वेन पुत्रस्य शेषित्वं कथ्यत इति सङ्गतिः। तत्रेति। किमिष्टिकर्तुः पितुः फलम् उत पुत्रस्येत्यन्वयः। यस्मि-

'यस्मिन्न् जाते निर्वपति स पूतो भवती'ति स्पष्टं पुत्रगामित्वम् । पुत्रफलमपि पितुरभिलषितमेवेति विधेरात्मनेपदस्य चाविरोधः ।

एवं वा—इयमेव वैश्वानरीया चिन्त्यते—किं जननानन्तरमेव कर्तव्या ? उत कृते जातकर्मणीति । निमित्तानन्तरं नैमित्तिकमुपसम्प्राप्तं विना कारणेन नाऽतिक्रमितव्यम् । अतोऽनन्तरमेव स्यात् । सत्यम्, इह त्वस्ति कारणम् । पुत्रफलार्थं हीदङ्कर्म । तस्य च कृते जातकर्मणि स्तनप्राशनम्, न पुनः प्राक्, अकृते हि जातकर्मणि इष्टिर्निरुप्यमाणा स्तनप्राशनमुत्कर्षेत्, तत्र कुमारविपत्तिप्रसङ्गात् इष्टिरेवेयमनर्थिका स्यात् । तस्मात्कृते जातकर्मणि कर्तव्या ।

पुनश्चिन्त्यते—किं जातकर्मानन्तरं कर्तव्या ? उताऽऽशौचापगमे स्वकाले वाऽऽगत इति ।

निमित्तानन्तरम्प्राप्ता प्रयोजनविरोधतः ।
उत्कृष्टा तदभावात्तु पुनर्नोत्क्रष्टुमर्हति ॥
शौचाङ्गेन विनाऽप्येषा कर्तव्यैव निमित्ततः ।
अपि वाऽप्येकदेशे स्यादिति षष्ठे हि वक्ष्यते ॥
उच्यते—निमित्तस्वरसात्प्राप्तिर्या तावत्सा निवारिता ।
प्रयोजनविरोधेन तस्मादङ्गोपसङ्ग्रहः ॥

निमित्तानन्तर्यन्तावत्प्रयोजनविरोधादेव बाधितमित्युत्कृष्टेष्टिः । उत्कृष्टा चेद्वैगुण्याय शौचकालप्रतीक्षया आशौचापगमे पौर्णमास्यादिकाले कर्तव्या ॥

इति जातेष्ट्यधिकरणम् ॥ १७ ॥

१८

प्रधा० 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते'ति वाजपेयाङ्गत्वेन चोद्यमानो

---

ज्ञात इति । यत्तदोरैकार्थ्यनियमादिति भावः । अत्र पूर्वपक्षे पुत्रनाशेऽपि जातेष्टिः, सिद्धान्ते नेति । फलसंयोगस्त्वचोदितेऽकर्तरि पुत्रे न स्यात्कर्तृत्वेन शेषत्वाभावादिति सूत्रार्थः ॥१७॥

एवं वा—तस्य पुत्रस्य । कृत इति । शङ्काभिवर्द्धनात्पुंसो जातकर्म विधीयते । 'स्तनप्राशनतः पूर्वं छिन्ने नाले तु सूतकम्' इति वचनादिति भावः । विचारान्तरं दर्शयति—पुनरिति । स्वकाले 'य इष्टया' इति विहितदर्शपूर्णमासरूपे । अपिवा इति षष्ठाध्यायगतं सूत्रम् । एकदेशे अङ्गैकदेशे । समस्ताङ्गविरहेऽपीति यावत् । प्रयोजनविरोधेनेति पूर्वान्वयि ॥

इति जातेष्ट्यधिकरणम् ॥१७॥

१८

प्रधानेन० इहापि जातेष्टिवत्स्वकालप्रयोजकत्वमाक्षिप्य समाधीयत इति सङ्गतिः । अतिदिष्ट इति । फलार्थबृहस्पतिसवस्य ज्योतिष्टोमविकृतित्वात्तदतिदेशप्राप्तो वसन्तकाल इत्यर्थः ।

बृहस्पतिसवः किम्प्रधानकाले शरदि तेन सहैकप्रयोगः कर्तव्यः? उतातिदेशप्राप्ते स्वकाले वसन्त इति संशयः। तत्र—

साङ्गस्य हि प्रधानस्य विधानं देशकालयोः।
अङ्गान्तरवदस्यापि तदङ्गत्वात्सह क्रिया॥

न हि वाजपेयः शरदि कर्तव्यश्चोद्यते, किन्तु वाजपेयकरणको यः फलार्थो व्यापारः प्रयोगः फलभावनाख्यः तस्याऽयङ्कालविधिः, 'शरदि वाजपेयेने'ति तृतीयानिर्देशात्तस्यैव फलसामग्रीभूतस्य चिकीर्षितस्य कालापेक्षितत्वात्। स च व्यापारोऽङ्गप्रधानव्यासक्त इति तुल्यः प्रधानस्याङ्गानाञ्च तत्कालयोग इति वाचनिककालविरोधादतिदिष्टः कालो बाध्येत।

नन्वयङ्कालो बृहस्पतिसववर्जिताङ्गेषु कृतार्थ इति नातिदेशम्बाधितुमुत्सहते, तर्ह्यतिदेशोऽपि कालातिरिक्ताङ्गेषु कृतार्थ इति न वचनसङ्कोचायालम्।

तस्मात्प्रधानकालत्वमेवम्प्राप्ते अभिधीयते।
सत्यं वाचनिकः कालो बाधेतैवातिदेशिकम्॥
बृहस्पतिसवे त्वेष शरत्कालो न चोद्यते।
यस्य कालविधिस्तस्मात् बहिष्ट्वेन हि स श्रुतः॥

वाजपेयकरणको यः स्वकार्यम्प्रति व्यापारः शरदि विहितः, तमेवेहापि समभिव्याहृतेन क्त्वाशब्देन प्रतिनिर्दिश्य ततः पश्चात्तनत्वेन बृहस्पतिसवश्चोद्यमानस्तत्प्रयोगबहिर्भावान्न तत्कालं लभते। यदि परं वाजपेये कृते कर्तव्यः सन्नतिक्रमकारणाभावादनन्तरमेव क्रियेत, अस्ति त्वतिक्रमकारणङ्कालोपसंहारः। क्त्वा च पूर्वकालतायां स्मर्यते नानन्तर्ये। तस्मात्स्वकाले प्रयोगः निर्वृत्तमपि च वाजपेयापूर्वमनेनाङ्गेन बलवत्क्रियते।

इति बृहस्पतिसवादेस्स्वकालेऽनुष्ठानाधिकरणम्॥१८॥

इति शास्त्रदीपिकायां चतुर्थाध्यायस्य तृतीयः पादः।

---

कालोपसंहारः वसन्तकालरूपाङ्गसङ्ग्रहः। ननु क्त्वाप्रत्ययेन तदानन्तर्योक्तेर्नातिक्रमो युक्त इत्याशङ्कामपाकरोति—क्त्वा चेति। ननु 'वाजपेयेनेष्ट्वा' इत्यस्य साङ्गवाजपेयेनापूर्वं कृत्वेत्यर्थः। एवं तदुत्तरं कृतेन बृहस्पतिसवेन किं प्रयोजनमत आह—निर्वृत्तमपीति। बलवत् फलोत्पत्यनकूलातिशयवत्। प्रयोजनं स्पष्टम्। सूत्रे मुख्यकालत्वं प्रधानकालत्वमित्यर्थः॥

इति बृहस्पतिसवादेः स्वकालकर्तव्यताधिकरणम्॥ १८॥

इति श्रीमद्भट्टरामचन्द्रात्मजतत्सद्वैद्यनाथ-
कृतायां शास्त्रदीपिकाव्याख्यायां
प्रभाख्यायां चतुर्थस्य
तृतीयः पादः॥

## अथ चतुर्थाध्यायस्य चतुर्थः पादः

१

प्रक० अनुमत्यादीनि विदेवनादीनि च यागायागकर्माणि प्रकृत्य श्रूयते 'राजसूयेन स्वाराज्यकामो यजेते' ति। तत्र संशयः—किं सर्वाण्येव फलवन्ति समप्रधानानि पुरुषार्थानि ? उतायागाः क्रत्वर्थाः ? इति। तत्र—

सर्वेषाम्प्रकृतत्वेन फलापेक्षितया तथा।
राजसूयपदस्यापि समानत्वात्फलान्वयः॥

राजसूयप्रातिपदिकं यद्यप्यप्रसिद्धम्, तथाऽपि तृतीयान्तत्वात्फलसाधनाभिधायित्वेन निर्णीतं प्रकृतानाम्फलापेक्षिणामविशेषात्सर्वेषान्नामेत्यध्यवसीयते। एवं साधनत्वेऽवगते स्वाराज्ये च फले भावनामात्रं विधियुक्तादाख्यातात्प्रतिपाद्यमपेक्षितमिति तन्मात्रपरमाख्यातम्। केवलप्रत्ययप्रयोगासम्भवात्तु यत्र क्वचन धातावुपादातव्ये छत्रिन्यायेन यागायागसमुदाये यजिरनुवादभूतः प्रयुज्यते। ततः सर्वेषां फलान्वयात्प्राधान्यम्। उच्यते—

धात्वर्थानाम्फलैर्योगो न नाम्नामिति हि स्थितम्।
यजिश्च यागमेवाह यजेस्तेन फलान्वयः॥
राजसूयपदं चापि यज्येकाधिकरण्यतः।
यागनामेव तेनात्र यागानां स्यात्प्रधानता॥

इतरत्तु फलवत्सन्निधानात्तदङ्गम्भवति॥

इति विदेवनादीनां राजसूयांगत्वाधिकरणम्॥ १॥

---

## अथ चतुर्थाध्यायस्य चतुर्थः पादः

१

प्रकरण० इह फलप्रयुक्तत्वापवादप्राधान्यात् पादान्तरतेति ज्ञेयम्। अनुमत्यादीनि 'अनुमत्यै पुरोडाशमष्टाकपालं निर्वपति' इत्यादिविहितानीष्ट्यादीनि। विदेवनं द्यूतम्। आदिनाभिषेकसंग्रहः। ननु वाजपेयपदेनायागानामप्युपादाने यजेतेति व्यर्थमित्याशङ्कायामाह—एवमिति। फलेऽवगत इत्यन्वयः। स्थितमिति। भावार्थाधिकरण इति शेषः। तत्र हि फलभावनायाः करणाकाङ्क्षायां समानपदोपात्तो धात्वर्थ एव करणम्, न तूपपदार्थं इत्युक्तम्। यज्येकेति। यजिसामानाधिकरण्यादित्यर्थः। प्रयोजनं पूर्वपक्षे सर्वेषां फलोद्देशेन सङ्कल्पः, सिद्धान्ते यागानामेवेति। प्रकरणे शब्दो राजसूयेनेति तस्य सामान्यरूपत्वादयागविधीनामनङ्गत्वं प्रधानत्वमिति सूत्रार्थः॥

इति विदेवनादीनांराजसूयत्वाधिकरणम्॥ १॥

२

मध्य० स्थितमयागानामङ्गत्वम्। तत्र विदेवनादयोऽभिषेचनीयाख्यसोमयाग-विध्यनन्तरं समाम्नातास्तदीयमाहेन्द्रस्तोत्रकालेऽपकृष्टाः 'माहेन्द्रस्तोत्रम्प्रत्यभिषिच्यत' इति। अयं च विदेवनादीनामभिषेकान्तानामपकर्ष इति। त इमे अभिषेचनीयाङ्गम्?उत राजसूयाङ्गमिति संदेहे, कथम्भावगृहीतप्राकृताङ्गमध्यपातादवान्तरप्रकरणेनाभिषेचनी-याङ्गतामाशङ्कमानस्यत्तरम्—

तत्र प्रयोजनापेक्षा कर्मणां यत्र चोदना।
विदेवनादिकानान्तु न मध्ये प्रकृतो विधिः॥

अभिषेचनीयानन्तरं विहिताः प्रयोजनापेक्षाः सन्निधिप्राप्ताभिषेचनीयाङ्गत्व-बाधेन प्रकरणाद्राजसूयाङ्गतान्नीताः नापकर्षसमये भूयः प्रयोजनमपेक्षन्ते, येनावान्तर-प्रकरणविषयतां प्रतिपद्येरन्। तस्माद्राजसूयाङ्गम्॥

इति विदेवनादेः कृत्स्नराजसूयांगत्वाधिकरणम्॥ २॥

३

प्रक० राजसूये एव 'सौम्यञ्चरुम् बभ्रुर्दक्षिणे'ति विधाय श्रूयते—'पुरस्तादुप-

---

२

मध्यस्थं० विदेवनादीनामङ्गत्वे सिद्धे तद्विशेषश्चिन्त्यत इति सङ्गतिं सूचयति—स्थितमिति। नन्व·········? नैकेष्वेकापकर्षे कथं विदेवनाद्यपकर्षोऽत आह—अयमिति। इतीत्यनन्तरं पञ्चमे वक्ष्यत इति शेषः। तन्मात्रापकर्षे हि तत्पूर्वानुष्ठेयानां बद्धक्रमाणां क्रम-भङ्गस्स्यादिति तदपकर्षोक्तौ तदन्तापकर्ष इति वक्ष्यते। मध्यपातादिति। मध्यानुष्ठाना-दित्यर्थः। अनुष्ठानस्य च प्रयोजनाधीनत्वादभिषेचनीय एव प्रयोजनमिति भावः। अंशत्रया-वशिष्टभावनाविध्युत्तरमनुष्ठानमतो विधिकाल एव भावना भाव्याकाङ्क्षायां यत्प्रमाणावतारस्ते-नैवाङ्गत्वनिर्णय इत्याह—तत्रेति। इहावान्तरप्रकरणनिरासः, बलाबलाधिकरणे तु सन्निधिमा-त्रेणाभिषेचनीयाङ्गत्वं प्रकरणबलीयस्त्वेन निरस्तमित्यपौनरुक्त्यम्। प्रयोजनं पूर्वपक्षेऽभिषेच-नीयारम्भे तदङ्गत्वेन विदेवनादेः परिगणनम्, तस्य किञ्चिदङ्गभ्रं शशङ्कापरिहाराय कारणस्या-चार्यैः 'न शास्त्रपरिमाणत्वात्' इत्यत्रोक्तेः। सिद्धान्ते तु राजसूयारम्भ एवेति। यस्य मध्यस्थं यत्तत्तन्मध्ये तदङ्गमिति सूत्रार्थः॥

इति विदेवनस्य कृत्स्नराजसूयाङ्गताधिकरणम्॥ २॥

३

प्रकरण० एवं पर्यवसितस्य सर्वयागमात्रप्राधान्यस्याक्षिप्य समाधानात्सङ्गतिः। वरं

सदां सौम्येन प्रचरन्ती'ति। किमयञ्चरुरुपसदामङ्गम् अङ्गप्रयोजनसम्बन्धोऽयम्? उत यागान्तरवत्फलार्थः कालार्थोऽयं संयोग इति चिन्त्यते। तत्र--

प्रकरणपेक्षात्सामान्यवचनादयम्।
स्वाराज्ये विनियुज्येत साक्षादुपसदङ्गता॥

न हि 'सौम्यने'ति स्वशब्देन तृतीयान्तेन षष्ठीनिर्दिष्टोपसदङ्गत्वेन विनियुज्यमानः सौम्यः प्रकरणापेक्षेण सामान्येन राजसूयवाक्येन फलसम्बन्धं लभते। पुरस्ताच्छब्दश्चाङ्गस्य तत्समीपेऽनुष्ठानात् यथाकथञ्चिदनुवादः।

अत्राभिधीयते नेयं षष्ठी तादर्थ्यवाचिनी।
दिग्योगलक्षणा त्वेषा पुरस्ताच्छब्दयोगतः॥
अङ्गाङ्गिभावमात्रे हि पुरस्तादित्यनर्थकम्।
प्रसज्येत पदं तस्मात्कालस्तावद्विधीयते॥
तथा च सति नाङ्गत्वं विधातुं शक्नुयाद्विधिः।
न ह्यनुत्पत्तिविधयोऽनेकार्थव्यापृतिक्षमाः॥

तस्मात्कालार्थ एव संयोग इति फलार्थः सौम्यः॥

इति सौम्यादीनामुपसत्कालकत्वाधिकरणम्॥ ३॥

४

फल० 'वैश्वदेवीं साङ्ग्रहणीन्निर्वपेत् ग्रामकामः' इति प्रकृत्य 'आमनमस्यामनस्य-देवाः इति तिस्र आज्याहुतीर्जुहोती'त्यामनहोमा विहिताः। किं ग्रामकामपदानुषङ्गेण साङ्ग्रहणीवत् फलार्थाः समप्रधानाः? उत साङ्ग्रहण्यङ्गमिति संशये, साङ्ग्रहण्याः प्राकृताङ्गनिराकाङ्क्षायाः पुनरङ्गापेक्षाभावात्, आमनहोमानाञ्च फलपदानुषङ्गेण प्रयोज-

---

निर्वपेदिति शेषः। बभ्रुः पिङ्गलवर्णो गौः। समीप इति। नियामकाभावेन पूर्वकालस्यापि कदाचित्प्राप्तेः पाक्षिकानुवाद इत्यर्थः। दिग्योगेति। षष्ठ्यतसर्थप्रत्ययेन इति सूत्रविहितेत्यर्थः। न हीति। प्राप्तानुवादेनानेकविधौ वाक्यभेदापत्तेरिति भावः। उत्पत्तिविधौ तु विशिष्टविधानान्न वाक्यभेद इत्यनुत्पत्तीत्युक्तम्। व्यापृतिः विधानम्। प्रयोजनमुपसद्धिकृतावनुष्ठानतदभावरूपं बोध्यम्। सौम्यादियांगप्रकरणाविभागेऽप्यङ्गमेव कालस्त्वनुवादमात्रम्, यत उभयविधानं विप्रतिषिद्धमिति सूत्रार्थः॥

इति सौम्यादीनामुपसत्कालकत्वाधिकरणम्॥ ३॥

४

फलवद्वा० फलार्थत्वापवादात्सङ्गतिः। प्राकृताङ्गेति। क्लृप्तोपकारेत्यादिः। सम्भवतीति। प्रयोजनाकांक्षायां साक्षात्तत्सम्भवे पारम्पर्याश्रयणानौचित्यादित्यर्थः। रूपेति। सकृदर्थ-

नावाप्तेरनपेक्षत्वात्सम्भवति च प्राधान्येऽङ्गत्वायोगात्फलार्थत्वे प्राप्ते अनुषङ्गे सकृदाम्नातस्य पुनरनुसन्धानात्, तथा च सति सकृदाम्नातरूपव्याघातादत्यन्तागतिकतया तदाश्रयणादिह चानपेक्षतया साङ्ग्रहण्याः प्रकरणाभावेऽपि सन्निधेरेव तदङ्गत्वसम्भवात्, आमनहोमानाञ्च प्राकृताङ्गमध्यविहितत्वेन प्रकरणसंस्पर्शस्यापि सम्भवादगतिकत्वाभावादनुषङ्गानाश्रयणात्परिधिमन्त्रव्यवायाश्रयणे तदसम्भवादङ्गत्वमेव न्याय्यम् ॥

इत्यामनहोमाधिकरणम् ॥ ४ ॥

५

दधि० ज्योतिष्टोमे श्रूयते 'यां वा अध्वर्युश्च यजमानश्च देवतामन्तरितः, तस्या आवृश्च्यते, प्राजापत्यन्दधिग्रहं गृह्णीयादि'ति, सोऽयं दधिग्रहः किं नैमित्तिकः? उत नित्यो नैमित्तिकश्चाप्य नित्य एवेति संशये ।

देवतान्तरितो यागो निमित्तेऽयं विधीयते ।
तस्मान्नैमित्तिकः सत्यं नित्योऽपि ज्येष्ठशब्दतः ॥

नैमित्तिक इति सत्यम्, नित्योऽपि स्यात् । कुतः? ज्येष्ठशब्दसंस्तवात्? 'ज्येष्ठो वा एष ग्रहाणामि'ति प्रशस्तवचनो ज्येष्ठशब्दो हि नित्यश्च प्रशस्तः न चञ्चलः । अथवा प्राथम्यनिमित्तं ज्यैष्ठ्यम् नित्यश्च सन्नयं पाठक्रमात् ग्रहान्तरेभ्यः प्रथमङ्गृह्यमाणो भवति ज्येष्ठः । नैमित्तिकस्तूपजाते निमित्ते क्रियमाणो न नियोगतः ज्येष्ठः स्यात् ।

तस्मादुभयरूपः स्यात् । नन्वेवं नित्य एव सः न तु नैमित्तिकः । कस्मात्? निमित्तत्वाश्रुतत्वतः ।

---

बोधकत्वाख्येत्यर्थः । अनपेक्षतया क्लृप्तोपकारप्राकृताङ्गनिराकांक्षतया । ननु सन्निधिना सांग्रहणीष्टयाकांक्षाकल्पने फलानुषङ्ग एव कुतो न स्यादत आह—आमनेति । 'यत्प्रयाजानां पुरस्ताज्जुहुयाद्बहिरात्मसजातानां दध्यादनुयाजानामुपरिष्टाज्जुहुयात्स्वर्गं लोकमपाक्रामेत् मध्ये जुहोति मध्यत एव सजातानां धत्ते' इति प्राकृताङ्गमध्यविधानादित्यर्थः । अनुषङ्गस्य तावं विषय इत्याह—परिधीति । प्रयोजनं स्पष्टम् । फलवदितरस्य प्रधानं स्यात्फलवत्सन्निधावफलं तदङ्गमिति हेतोरुक्तत्वादिति सूत्रार्थः ॥

इत्यामनहोमाधिकरणम् ॥ ४ ॥

५

दधिग्रहः० आमनहोमवदत्रापि फलार्थशङ्कानिरासात्सङ्गतिः । अन्तरितो विस्मृतः । तस्यै देवतायै । आवृश्च्यते द्रुह्यति । चञ्चलः कादाचित्कः । नैमित्तिकेऽपि प्रशस्तत्वरूपज्येष्ठत्वोपपत्तेराह—अथवेति । नियोगतः नियमतः । एवञ्च नित्यस्याप्यानुषङ्गिकदेवताद्रोहशमनफल-

न ह्यन्तरायो निमित्तत्वेन श्रूयते, यदिशब्दाद्यभावात्। यच्छब्दस्य चाकर्तृ-सामानाधिकरण्यस्य तत्प्रतिपादकत्वाभावात्। अर्थवादमात्रमन्तरायश्रवणमिति। नित्य एव स्यात्॥

इति दधिग्रहस्य नित्यत्वाधिकरणम्॥ ५॥

६

वैश्व० अग्नौ श्रूयते—'यो वै संवत्सरमुख्यमभृत्वाऽग्निं चिनुते यथा सामि गर्भो विपद्यते तादृगेव तत्, आर्तिमार्च्छेद्वैश्वानरं द्वादशकपालम्पुरस्तान् निर्वपेदि'ति। तत्रापि पूर्ववदर्थवादमात्रं संवत्सराभरणमिति नित्यतां मन्यते। यच्छब्दस्तु कर्तृसमभिव्याहृतो निमित्ततां संवत्सराभरणस्य प्रतिपादयतीति नैमित्तिकतैव स्थिता॥

इति वैश्वानरस्य नैमित्तिकत्वाधिकरणम्॥ ६॥

७

षट्० 'योऽग्निं चित्वा न प्रतितिष्ठति। पञ्च पूर्वाश्चितयो भवन्ति, अथ षष्ठीं चितिं चिनुते प्रतिष्ठित्या' इति। किमियं षष्ठीचितिर्नित्या, नित्य एवाग्निः षट्-

---

कत्वमित्याशयेनाह– तस्मादिति। अकर्त्रिति। 'यस्योभय' मित्यादौ तु कर्तृविशेषणत्वान्निमित्तत्वबोधकत्वमिति भावः। नन्वर्थवादोक्तदोषपरिहारार्थत्वेन कादाचित्कत्वरूपं नैमित्तिकत्वं स्यादत आह—अर्थवादेति। पर्णमयीन्यायेनेत्यर्थः। अत्राद्ये निमित्ते सत्येव करणम्। द्वैरूप्यपक्षे पाठक्रमादनुष्ठितोऽपि निमित्तानन्तरमपि ग्राह्यः। सिद्धान्ते नित्यं सकृदेवेति प्रयोजनम्। सूत्रं स्पष्टार्थम्॥

इति दधिग्रहस्य नित्यताधिकरणम्॥ ५॥

६

वैश्वानरश्च० अग्नौ चयनप्रकरणे संवत्सरपर्यन्तमुखायां मृद्भाण्डे भवमग्निमधृत्वा चयनं करोति यथार्धनिष्पन्न एव गर्भो नश्यति तादृक्तस्याग्नेरार्तिं नाशं प्राप्नुयात्। अतश्चयनात्प्राक् वैश्वानरयागं कुर्यादित्यर्थः। मात्रमिति। न तु निमित्तमित्यर्थः। अनेनापवादसङ्गतिरुक्ता। यच्छब्दस्त्विति। आलस्यादिकृताभरणस्यानुवाद्यतया यो न बिभृयात्स निर्वपेदित्यर्थपर्यवसानादिति भावः। नित्यैर्लौकिकैराग्नेयादित्यवैश्वानराणां त्रित्वेन समानसंख्यत्वादिति सूत्रार्थः॥

इति वैश्वानरस्य नैमिकत्वाधिकरणम्॥ ६॥

७

षट्चितिः० आतिदेशिकी सङ्गतिः। अधिकाशङ्कामाह—तत्रेति। षण्णां पूरयतीत्यर्थे 'तस्य पूरणे षट्' इति विधानात्। पञ्चभिस्साहित्यं विना तदसम्भवादित्यर्थः। एषा षट्संख्या।

चितिकः ? उत स पञ्चचितिक एव ? इदन्तु चयनान्तरमेकचितिकमप्रतिष्ठायां निमित्ते विधीयते ? इति। तत्र—

पूरणप्रत्ययो न स्यात्षट्सङ्ख्यापूरणाद्विना।
पञ्चभिः सहिता चैषा पूरयेत्तां न केवला॥

न हि केवला चितिः षष्ठीति शक्या वक्तुम्। तस्मान्नित्य एवाग्निः षट्चितिकः। नैवम्—

यच्छब्दो ह्यप्रतिष्ठायाः स्पष्टमाह निमित्तताम्।
अभिधानक्रियापेक्षं षट्सङ्ख्यापूरणम्भवेत्॥

नित्याः पञ्च चितयः प्रागभिहिताः, ततः परमियं नैमित्तिक्यभिधीयत इति, अभिधानापेक्षं षष्ठीत्वमुपपन्नमिति न यच्छब्दावगतनिमित्तापन्हवः शक्यते कर्तुमिति नैमित्तिकीयम्॥

इति षष्ठचितेर्नैमित्तिकत्वाधिकरणम्॥ ७॥

८

पितृ० 'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ती' ति अनारभ्याधीतः पितृयज्ञः क्रत्वर्थः ? उत पुरुषार्थ इति संशये-कर्मवचनेनामावास्याशब्देन समभिव्याहारात्तदङ्गत्वम्। यद्यपि कालस्यापि साधारणोऽयं शब्दः, तथापि फलकल्पनापरिहाराय कर्मवाचितैवाङ्गीक्रियते। तस्मात् क्रत्वर्थ एवायमाहिताग्नेः, अनाहिताग्नेरप्यनाहिताग्निना कार्य इति विहितः, तस्य क्रत्वभावाद्भवतु पुरुषार्थः। तथा च भगवता मनुना—

'न दर्शेन विना श्राद्धमाहिताग्नेर्द्विजन्मनः'। इति

वदता दर्शाङ्गत्वं प्रदर्शितम्। अनङ्गं हि तेन विना क्रियते, तस्माद्दर्शाङ्गम्।

नैवं साधारणत्वेऽपि सामानाधिकरण्यतः।
कालवाचित्वमेव स्यात्तत्सापेक्षश्च कर्मणि॥

यद्यपि तावत्साधारणोऽमावास्याशब्दः, तथाप्यपराह्णसामानाधिकरण्यलिप्सया कालवाचित्वमध्यवसीयते। न चायमतीव साधारणः। काले हि निर-

---

पूरणप्रत्ययोपपत्तिमन्यथा दर्शयति—अभिधानेति। पूर्वचितिमत्त्वात्तत्साहित्यात् षट्चितिर्नित्यः स्यादिति सूत्रार्थः॥

इति षष्ठचितेर्नैमिकत्वाधिकरणम्॥ ७॥

८

पितृयज्ञः० षष्ठ्याश्चितेः प्रतिष्ठाख्यफलवत्त्ववत् इहापि फलार्थतोच्यत इत्यातिदेशिक्येव

पेक्षोऽयम्, कालसम्बन्धापेक्षया तु कर्मणि वर्तते। तस्मात्कर्मसमभिव्याहाराभावादनङ्गम्। मनुवचनस्य त्वयमर्थः—श्राद्धशब्देन मासि मासि श्राद्धमुच्यते। दर्शशब्देनाप्यमावस्याकालः। तदयमर्थः—अमावस्यायामेवाहिताग्निः श्राद्धङ्कुर्यान्न तेन विना सर्वेष्वेवापरपक्षाहःसु क्रियमाणेऽपि 'पितॄन्प्रीणाती'ति स्मृत्यन्तरवशादन्येष्वप्यहःसु कुर्यादिति। एवञ्च स्मृत्यन्तरमनाहिताग्निविषयम्भविष्यति। तत्सिद्धं पितृयज्ञस्यानङ्गत्वम्॥

**इति पिण्डपितृयज्ञाधिकरणम्॥ ८॥**

## ९

प्रश्वङ्ग॰'आश्विनं गृहं गृहीत्वा, त्रिवृता यूपं परिवीय, आग्नेयं सवनीयम्पशुमुपाकरोती' ति येयं सवनीयस्याङ्गभूता द्वितीया रशना, सा किं पशुबन्धनार्था ? उत यूपसंकारार्थेति संशये—

**यूपार्था सत्यदृष्टार्था दृष्टार्था पशुबन्धनी।**
**अनपक्रमणात्तेन पश्वङ्गं रशना भवेत्॥**

न हि यूपस्य रशना किञ्चिद्दृष्टं करोति, पशोस्त्वनपक्रमणङ्कुर्वती भवति दृष्टार्था। तेन त्रिवृत्प्रातिपदिकाभिहिता रशना वाक्येन पशुयागाङ्गतया विधीयते—त्रिवृद्युक्तमाग्नेयमुपाकरोतीति। सा च दृष्टेनैव पश्वनपक्रमणेन तदङ्गतां प्रतिपद्यते। येयं त्रिवृच्छब्दे तृतीया, या च 'यूपं परिव्ययती'ति द्वितीया

---

सङ्गतिः। दर्शेन विना श्राद्धं पिण्डपितृयज्ञरूपमाहिताग्नेर्नेति मनुवचनार्थ इत्याह—अनङ्गं हीति। प्रयोजनं पूर्वपक्षे दर्शविकृतावनुष्ठानम्, सिद्धान्ते तु नेति॥

**इति पिण्डपितृयज्ञाधिकरणम्॥ ८॥**

**९**

पश्वङ्ग॰ दर्शाङ्गत्वेऽपराह्णपदसामानाधिकरण्यरूपबाधकवदिह पश्वङ्गतायां तन्नास्तीति प्रत्युदाहरणसङ्गतिः। त्रिवृत् त्रिगुणा दर्भमयी रज्जुः। परिवीय वेष्टयित्वा। सवने सुत्याकाले भवं सवनीयम्। समन्त्रकं दर्भेण स्पर्शनमुपाकरणम्। द्वितीयेति। अग्नीषोमीयातिदेशप्राप्तरशनातो द्वितीयेत्यर्थः। अनपक्रमणात् अपलायनात्। ननु त्रिवृतेति तृतीयोक्तकरणत्वस्य पशूपाकरणे पशुयागे वा सम्भवात्कथं त्रिवृतस्तदङ्गत्वमत आह—वाक्येनेति। रशनाया दृष्टार्थत्वायोपलक्षणार्थतृतीयाश्रयणेन समभिव्याहाररूपवाक्यात्पशुयागाङ्गता पश्वनपक्रमणरूपदृष्टोपकारद्वारेति भावः। नन्वेवं सति 'यूपं परिवीय' इत्यनर्थकं स्यादत आह—या चेति। करणत्वरूपमुख्यार्थस्याविवक्षायामपि परिव्याणे तत्सम्भवादनुवादयोग्यतामात्रेऽक्तिश्शक्यत इति। अनीप्सितकर्मत्वार्थत्वाद्यूपमिति द्वितीया इति भावः।

तत्सर्वं प्राप्तानुवादः। यूपे हि पशुबन्धश्चोदकप्राप्तः। यश्च रशनया यूपे पशुम्बध्नाति, सोऽवश्यं यूपे रशनां व्यापारयति, यश्च व्यापारयति, स शक्यते तया यूपं परिव्ययतीति वक्तुम्। अतोऽयमनुवाद इति पश्वर्था रशना चोदकप्राप्ता चान्या रशना ताभ्यामुभाभ्यां पशुर्बध्यते, ततः पश्वर्था रशना, तदर्थं च परिव्याणं यूपे तस्याः प्रतिमोचनम्। प्रतिमुक्ता हि सा अनपक्रमणाय कल्पते। यूपो हि स्थाणुस्थानीयः तदर्थं एवेति सर्वमेव दृष्टार्थं भवति। तस्मात्पश्वर्थेत्येवं प्राप्ते, ब्रूमः—

यद्यदृष्टार्थता यूपे स्यादेवङ्क्लिष्टकल्पना।
यूपार्था सत्यपि त्वेषा दृष्टार्था दार्ढ्यजन्मनः॥
परिव्याणं हि यूपार्थं द्वितीयातोऽवगम्यते।
रशना च परिव्याणशेषभूता तृतीयया॥
सर्वन्तद्विपरीतं स्यात्पश्वर्था रशना यदि।
यूपार्था रशना तस्माद्भवेन्न पशुबन्धनी॥

केचित्तु पूर्वपक्षेऽपि न पशुबन्धनार्था रशना किन्तु यूपस्यैव परिव्याणं पशूपाकरणस्यारादुपकारकमिति पूर्वपक्षः। सिद्धान्तस्तु यूपसंस्कारार्थमित्येवमाहुः। तथा सति अनुष्ठानाविशेषान्निष्प्रयोजना चिन्ता स्यात्। पशुगणे त्वेकयूपे सकृत्कृतमेव परिव्याण-

---

नन्वग्नीषोमीयपश्वतिदेशात्पशुबन्धनार्थरशनाप्राप्तेरस्या वैयर्थ्यमित्याशङ्क्याह-चोदकेति। सिद्धान्तेऽपि यूपपरिव्याणार्थरशनाया अतिदेशप्राप्ताया अत्र विधीयमानायाश्च यथा समुच्चयस्तथा पूर्वपक्षे पश्वर्थाया अपि समुच्चय इति भावः। एवञ्च रशनापरिव्याणयूपानां दृष्टार्थत्वमेवेति दर्शयति-तत इति। ततः पशुबन्धनात्। प्रतिमोचनम् बन्धनम्। त्वत्पक्षे तु परिव्याणस्य यूपार्थत्वमदृष्टोपकारेणेति गौरवमित्याशयः। यूपेऽदृष्टार्थता अदृष्टोत्पादकता यदीत्यर्थः। दार्ढ्येति। यूपस्यापि कदाचिदवयवविश्लेषसम्भवात्तत्परिहाराय दार्ढ्यम्। रशनाद्वयेन दृष्टमेव प्रयोजनमित्यर्थः। किञ्च द्वितीयातृतीयाश्रुतिकृतविनियोगानादरेण वाक्यीयविनियोग इत्ययुक्तमिति क्लिष्टकल्पनां विवृणोति—परिव्याणं हीति। प्रभाकरमतं दूषयितुमुपन्यस्यति—केचित्त्वति। बन्धनद्वारा न पश्वर्था। किन्तु पशूपाकरणाङ्गयूपपरिव्याणार्था सती परम्परया पश्वर्थाः। क्त्वाप्रत्ययेन यूपपरिव्याणस्योपाकरणाङ्गत्वस्यारादुपकारितया प्रतीतेरिति पूर्वपक्ष इत्यर्थः। यूपसंस्कारार्थमिति। द्वितीयाश्रुतिप्राबल्याद्यूपाङ्गत्वमित्यर्थः। दूषयति-तथा सतीति। यूपस्यैव रशनया परिव्याणं न तु पशुबन्धनमिति पूर्वपक्षे सतीत्यर्थः। अनुष्ठानेति। पक्षद्वयेऽप्यतिदेशप्राप्तयैकयैव रशनया पशोर्बन्धनादित्यर्थः। अस्मन्मते तु द्वितीययापि पशुबन्धनं पूर्वपक्षे, सिद्धान्ते तु यूपपरिव्याणमेवेत्यविशेष इति भावः। भाष्योक्तमपि प्रयोजनं त्वन्मते न सम्भव-

मगृह्यमाणविशेषत्वात्तन्त्रेण सर्वेषामुपकुर्यादिति प्रतिपशु रशना कार्येति प्रयोजनन्न सिध्येदित्यास्तां तावत् ॥

**इति रशनाया यूपांगताधिकरणम् ॥ ९ ॥**

**१०**

**स्वरु०** 'यूपस्य स्वरुङ्करोति, स्वरुणा पशुमनक्ती'ति। किं यूपार्थः स्वरुः, तस्य पश्वञ्जनं प्रतिपत्तिः ? उत पश्वर्थः तस्य यूपादुपादानमिति संशये—यूपस्येति षष्ठ्या देवदत्तस्य गौरितिवत्तादर्थ्यं मन्यते।

**स्वरुणा पशुमित्येवं शेषशेषिविभक्तितः।**
**स्वरोः पश्वञ्जनाङ्गत्वं पशोश्चापि प्रधानता ॥**

यूपस्येत्यवयवव्यतिरेकजनिता षष्ठी न तादर्थ्यङ्गमयतीति पश्वर्थः स्वरुः ॥

**इति स्वरोः पश्वंगताधिकरणम् ॥१०॥**

**११**

**दर्श०** दर्शपूर्णमासयोः किं सर्वेषां यागानां प्राधान्यम् ? उताग्नेयादीनामेककालयोगिनाम् ? इतरेषां तदङ्गत्वमिति चिन्त्यते। 'य एवं विद्वानि'त्येवं संयुक्तावनुवादकौ, न विधायकावित्यनुवादस्य तु प्रयोजनमाग्नेयादीनामेव प्राधान्यसिद्धिरित्येतावत्स्थितं द्वितीये। अधुना तु तदेव प्रयोजनं सिध्यति नेति चिन्त्यते।

---

तीत्याह—पशुगणे त्विति। एकादशपशुगणे एकयूपके इत्यर्थः। प्रतीति। पूर्वपक्ष इत्यर्थः। तस्य पशोरागमे वाक्यादवगमे विधानादिति सौत्रहेत्वर्थः ॥

इति रशनाया यूपाङ्गताधिकरणम् ॥ ९ ॥

१०

**स्वरुश्च०** रशनाया इव स्वरोरपि यूपार्थत्वमाशङ्क्यापोद्यत इति सङ्गतिः। तादर्थ्यमिति। स्वामित्वस्य षष्ठ्यर्थत्वादिति भावः। सिद्धान्तमाह—स्वरुणेति। शेषशेषिविभक्तितः तद्बोधकतृतीयाद्वितीयाभ्याम्। व्यतिरेकः सम्बन्धः। यूपार्थतायामदृष्टार्थत्वापत्तिरित्यपि ज्ञेयम्। प्रयोजनं पश्वनेकत्वेऽप्येकस्यैवाञ्जनम्, सिद्धान्ते तु सर्वेषामिति। स्वरुरपि यूपाङ्गं तदेकदेशत्वादिति सूत्रार्थः ॥

इति स्वरोः पश्वङ्गताधिकरणम् ॥ १० ॥

११

**दर्श०** प्रसक्तानुप्रसक्तचिन्तासमाप्तौ बुद्धिस्थराजसूयाधिकरणोक्तयागमात्रप्राधान्यमिहापोद्यत इति सङ्गतिः। पौर्णमास्यधिकरणेन पुनरुक्तिमाशङ्क्याह—य एवमिति। संयुक्तौ विद्व-

तत्राख्यातानुसारित्वात्संज्ञाया राजसूयवत् ।
तस्याऽविशेषतो वृत्तेः सर्वयागप्रधानता ॥

नामधेयन्तावदाख्यातानुसारि, यत्राख्यातं, तत्र वर्तते, न तु यत्र नाम तत्राख्यातम् । आख्यातञ्चाविशेषात्सर्वानेव रूपवतः प्रकृतान् यागान् उपादाय फले विनियुङ्क्ते । अतो नामाव्युत्पन्नं द्विवचनान्तप्रतिरूपकं सर्वत्र वर्तत इति सत्यामप्यनुवादेन समुदायद्वयसिद्धौ सर्वेषां प्राधान्यम् । उच्यते—

यद्धि नामाऽप्रसिद्धार्थं तदाख्यातवशम्भवेत् ।
इदं पुनः प्रसिद्धार्थमाख्यातस्य विशेषणम् ॥

प्रातिपदिकं तावत्कालद्वयसंयोगादाग्नेयादिषु प्रसिद्धार्थम्, द्विवचनमपि 'य एवं विद्वानि' त्येवं संयुक्तानुवादद्वयपरिकल्पितसमुदायद्वयाभिप्रायम्प्रसिद्धार्थमेव । न च दर्शशब्दस्याप्रसिद्धार्थत्वम्, अन्वारम्भणीयावाक्यशेषे आमावास्यापर्यायित्वेन प्रसिद्धत्वात् । तदेवं प्रसिद्धार्थविशेषवाचिनामधेयं शक्नोत्याख्यातं सामान्यवचनं स्वविषये स्थापयितुमिति षण्णामेव प्राधान्यम्, इतरेषां तु प्रकरणात्तदङ्गत्वम् ॥

इत्याघारादीनामंगताधिकरणम् ॥ ११ ॥

१२

ज्यो० दीक्षणीयाग्नीषोमीयादीष्टिपशुयागान् सोमयागञ्च प्रकृत्य श्रूयते—'ज्योतिष्टोमेन स्वर्गकामो यजेते' ति । तत्र चिन्त्यते—किं सर्वयागानां फलसम्बन्धेन प्राधान्यम् ? उत सोमयागस्यैव, इतरेषां तदङ्गत्वम् इति ।

तत्राख्याताविशेषेण सर्वयागप्रधानता ।
नामधेयं प्रसिद्धार्थमाख्यातं विशिनष्टि हि ॥

---

त्पदसंयुक्तौ । यजतीति शेषः । इत्येतयोः स्थितमित्यस्यनेनान्वयः । एतावदित्यनेनापाततस्तत्र प्रयोजनमभिहितम्, न तु समर्थितम् । इह तु तदेव समर्थ्यत इति कथितम् । तस्य आख्यातस्य । प्रतिरूपकं सदृशम् । विशेषणं व्यावर्त्तकम् । नन्वाग्नेयाद्युत्पत्तिवाक्येषु अमावास्यापदश्रवणाद्दर्शपदस्य कथं तत्र प्रसिद्धिरित्याशङ्क्ते—न चेति । वाक्यशेष इति । 'दर्शो वा एतयोः पूर्वः पूर्णमास उत्तरः' इत्यारभ्य 'अमावास्या वै सरस्वती' इत्युपसंहाराद्दर्शामावास्याशब्दावेकार्थाविल्यर्थः । प्रयोजनं प्रयाजादीनामतिदेशानतिदेशौ ॥

इत्याघारादीनामङ्गताधिकरणम् ॥ ११ ॥

१२

ज्योतिष्टोमे० आतिदेशिकी सङ्गतिः । दीक्षणीयादीष्टीरग्नीषोमीयादिपशुयागानिति सम्बन्धः । यत्र यस्मिन् यागे । एतच्च पूर्वान्वयि । ननु त्रिवृदादिस्तोमेषु 'तानि वाव एतानि

ज्योतिराख्या न हि स्तोमाः प्रसिद्धाः कस्यचिद्यजेः ।
यत्रावयवशो वृत्तिर्नामधेयस्य गम्यते ॥
त्रिवृदादिषु तच्छब्दः स्तुतिमात्रतयोदितः ।
न तु स्तोमाभिधेयत्वं ज्योतिःशब्दस्य तावता ।
अस्तु वा त्रिवृदादीनां ज्योतिःशब्दाभिधेयता ।
तथापि सर्वयागानां तत्सम्बन्धात् प्रधानता ॥
स्तोमा हि सर्वयागानामङ्गं स्युरविशेषतः ।
सर्वेषां फलवत्त्वेन प्रक्रिया न विशिष्यते ॥
अतः प्रकरणात्स्तोमाः सर्वयागाङ्गतामियुः ।
सोमयागेन संयुक्ताः स्तोमवाक्येन चेन्न तत् ॥
ग्रहणस्तोत्रयोर्वाक्ये कालार्था सङ्गतिर्यतः ।
द्वयोरपि कृतार्थत्वात्स्तोत्रस्य ग्रहणस्य च ॥

स्तोत्राणि तावत् 'आज्यैः स्तुवते' इत्यादिवाक्योत्पन्नानि प्रकरणात् यागाङ्गानि कृतार्थानि, ग्रहणमप्यैन्द्रवायवादिवाक्यविहितं सोमसंस्कारतया कृतार्थमेव। अतोऽत्र कालार्थ एव संयोगः 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यादि'ति। न त्वङ्गाङ्गिभावः, अङ्गत्वन्तु प्रकरणाविशेषात्सर्वयागान् प्रत्यवगम्यते। स्तोत्रीया संख्या च स्तोमशब्देनोच्यत इति तत्सम्बन्धः सर्वेषामविशिष्टः ।

तेनाख्याताविशेषेण नाम्नश्चाप्यविशिष्टतः ।
प्राधान्यं सर्वयागानामिति प्राप्तेऽभिधीयते ॥
ज्योतिष्टोमाभिधानस्य यागस्यात्र फलं श्रुतम् ।
ज्योतिष्टोमपदञ्चेदं वाक्यशेषे निरुच्यते ॥

ज्योतिष्टोमपदविवेचनार्थं ह्येतद्वचनम् 'त्रिवृत्पञ्चदशः सप्तदश एकविंशः, एतानि वाव तानि ज्योतींषि, य एतस्य स्तोमाः' इति। तदिह यदि त्रिवृदादिकस्तो-

---

ज्योतींषि य एतस्य स्तोमाः' इति ज्योतिष्ट्वकीर्त्तनादवयवप्रसिद्ध्या स्तोमसम्बन्धियागनामता स्यादत आह—त्रिवृदिति। तच्छब्दः स वाक्यशेषः 'तानि वे'त्यादिः। तावता स्तुतिमात्रेण। अर्थवादिकस्यापि विश्वेदेवकर्तृकत्वादेर्नामप्रवृत्तिनिमित्ततादर्शनादाह—अस्तु वेति। तत्सम्बन्धात् अङ्गत्वरूपसम्बन्धात्। तदेवाह—स्तोमा हीति। त्रिवृदादय इत्यर्थः। ननु 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति' इति वाक्ये न स्तोत्रस्य ग्रहचमसयागमात्राङ्गत्वात्तन्मात्रनामता ज्योतिष्टोमपदस्य स्यादित्याशङ्क्य निराकरोति—सोमेति। कालार्था ग्रहणोत्तरकालत्वविधानार्था। सङ्गतिः समभिव्याहारः। यागाङ्गानि सर्वयागाङ्गानि। स्तोत्रीयेति। स्तोत्रसाधनसंख्या नवाद्यभिधेयेत्यर्थः। यदुक्तं ज्योतिश्शब्दस्य न स्तोमवाचित्वमिति तत्परिहरति— तदिहेति। निर्वचनमात्रेण नामत्वबोधकत्वे न सन्देह इत्यर्थः। ननु नामप्रवृत्तिनिमित्त-

त्रीयसङ्ख्याचतुष्टयस्य ज्योतिःशब्दो वाचकः । अथापि न वाचकः, सर्वथा तावत्तत्सम्बन्धिनि यागे ज्योतिष्टोमपदं नामतया वर्तत इत्येतत् तावद्विस्पष्टमवगतम् । अतस्तत्सम्बन्धिन एव यागस्य फलमिदम्, नान्यस्य । न च दीक्षणीयादीनां फलवाक्यप्रवृत्तिवेलायां स्तोमसम्बन्धः प्रसिद्धः, यागानां स्तोत्राणाञ्च निष्फलत्वाविशेषेणाङ्गाङ्गिभावानिष्पत्तेः, फलसम्बन्धोत्तरकालभाविप्राकरणिकस्तोमसम्बन्धाभिप्रायं छेदनादिविधाविव यूपपदं ज्योतिष्टोमपदमित्याश्रयणीयं स्यात् । तत्र प्रसिद्धनिर्देशसरूपः शब्दो बाध्येत । सोमयागस्यापि यद्यप्यनेनैव न्यायेनाङ्गाङ्गिभावसम्बन्धः स्तोत्रैरसिद्ध एव, तथापि सोमग्रहणस्य स्तोत्रोपाकरणस्य च कालार्थोऽपि तावत्संयोगः प्रसिद्धः 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यादि' ति । तावता च सोमयागस्य स्तोमानाञ्च सम्बन्धमात्रं सिद्धम् । तन्मात्रनिमित्तश्च बहुव्रीहिरिति शक्यते ज्योतिष्टोमपदेन सोमयागोऽभिधातुमिति, तद्विशेषितो यजिस्तस्यैव फलसम्बन्धं करोति ॥

प्रसिद्धरूपे सति सोमयागे न दीक्षणीयादिषु वर्तते तत् ।
ततः स एवेह फलान्वयेन प्रधानमन्ये तु तदङ्गभूताः ॥

इति ज्योतिष्टोमे दीक्षणीयादीनामङ्गताधिकरणम् ॥ १२ ॥

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां
चतुर्थाध्यायस्य चतुर्थः पादः ।
चतुर्थाध्यायः समाप्तः ॥

---

मपि सर्वसाधारणमित्युक्तमत आह—न चेति । यश्छेदनादिसंस्कृतः स यूप इतिवद्यः स्वर्गसाधनं स ज्योतिष्टोम इति क्लिष्टं स्यादित्यर्थः । सोमयागसम्बन्धेऽपि तुल्यो दोष इत्याशङ्क्य समाधत्ते—तथापीति । तावता कालार्थसंयोगमात्रेण । सम्बन्धमात्रमिति । स्वपरिच्छेद्यस्तोत्रोपाकरणपूर्वकालिकग्रहणसाध्यत्वरूपसम्बन्धमात्रमित्यर्थः । मात्रञ्चाङ्गत्वव्यवच्छेदः । तत् ज्योतिष्टोमनाम । दीक्षणीयादीनामनतिदेशोऽतिदेशश्च क्रमेण प्रयोजनम् । सूत्रं स्पष्टार्थम् ॥

इति जोतिष्टोमे दीक्षणीयादीनामङ्गताधिकरणम् ॥ १२ ॥

इति श्रीमत्पदवाक्यप्रमाणज्ञतत्सद्रामभट्टात्मज-
तत्सद्वैद्यनाथकृतायां शास्त्रदीपिकाव्याख्यायां
प्रभाख्यायां चतुर्थः पादः
चतुर्थोऽध्यायस्समाप्तः ॥

## अथ पञ्चमाध्यायस्य प्रथमः पादः

१

श्रुति० प्रयुक्तिलक्षणे स्थितः प्रयोज्यवर्गनिर्णयः।
प्रयोज्यगोचरः क्रमस्तत्त्वतः परं निरूप्यते॥

प्रथमं तावच्छ्रुतिलक्षणो वेदविहित एव क्रमः पदार्थानामाश्रयणीयः ? अथवाऽनियम इति संशये, प्रयोगप्राशुभावादनियममाशङ्क्य, वेदप्रामाण्यात् तद्विहित एव क्रमः समाश्रयणीय इति प्राक् सिद्धचोदनाप्रामाण्यमेव 'बहुकृत्वोऽपि पथ्यं वदितव्यमि'त्येवं पुनः कथितमनेन सूत्रेण।

अथवा—भवति केषाचिन्मन्दधियामयं भ्रमः—क्रमस्याभावार्थत्वेन स्वतो विधिर्न सम्भवति। न च द्रव्यादिवत्तद्विशेषणतया, क्रमस्यैकैकपदार्थाश्रयत्वेनानवगमात्संघातविशेषणत्वात्, तस्याविधेयत्वात्, अशब्दाभिहितत्वाच्च क्रमस्य विध्य-

---

## पञ्चमोऽध्यायः

### तत्र प्रथमः पादः

१

श्रुतिलक्षणं० हेतुहेतुमद्भावरूपामध्यायसङ्गतिमाह—प्रयुक्तीति। प्रयोज्यनिर्णयस्य कथं क्रमविचारोपयोगित्वम् ? तदाह—प्रयोज्यगोचर इति। एतावन्तः प्रयोज्यपदार्था इत्यवगमे हि केन क्रमेण प्रयोज्या इत्यपेक्षायां तद्विषयकं निरूपणमिति प्रयोज्यनिरूपणानन्तरं क्रमनिरूपणमिति भावः। प्रथममिति। क्रमविशेषविचारात्पूर्वमित्यर्थः। तावत् एतत्सूत्रस्यैव वर्णकान्तरात्प्राक्। वेदेति सौत्रश्रुतिपदव्याख्यानम्। प्राशुभावः शीघ्रता। साङ्गप्रधानप्रयोगविधिर्हि विलम्बे सति साहित्यबाधापत्तेः प्राशुभावं विधत्ते। क्रमनियमे च तदनुसन्धानकृतविलम्बात्तद्बाधः स्यादिति भावः। तत्तत्प्रमाणावगतपदार्थाविरोधेनैव प्राशुभावस्य बोधनान्नियत एव क्रम इत्याशयेन सिद्धान्तमाह—वेदेति।

शङ्काविशेषनिरासार्थतया वर्णकान्तरमाह—अथवेति। क्रमस्य स्वतो विधिः ? क्रियाविशेषणतया वा ? नाद्य इत्याह—अभावार्थत्वेनेति। अक्रियारूपत्वेनेत्यर्थः। नान्त्य इत्याह—न चेति। तद्विशेषणतया भावार्थविशेषणतया। नन्वेकादशप्रयाजानित्येकादशत्वसङ्ख्यावत्संख्यानाश्रितस्यापि विधिः स्यादत आह—अशब्देति। संख्या तु शब्दाभिहितेति न दोष इति

न्वयासम्भवादविधेय एव क्रम इति। तदपनोदनार्थमिदं सूत्रम्। आनुपूर्व्यम् श्रुतिलक्षणं द्रव्यादिवत्क्रियाविशेषणत्वात्। न चासौ संघातविशेषणं तस्यैकत्वेनाक्रम-भाजनत्वात्। पदार्था यद्यपि प्रत्येकं न क्रममनुभवन्ति, परस्परमिलितास्तु संयोगा-दिवद्वितितिरूपं क्रमं बिभ्रति। बहवश्च ते प्रयोगविधिना विधीयन्त इति तद्विशेषणतया श्रुत्यादिसमर्पितः क्रमः सुखं विधीयते। अनभिहितोऽपि कथंचिद्बुद्धिमागतोऽपेक्षितो योग्यश्चेति प्राकृतोपकाराद्विकृतौ शक्यते विधातुमिति विधिलक्षणमेवानुपूर्व्यमाश्रयति-तव्यं भवति। अथवा—न सर्वः क्रमोऽत्र चिन्त्यते। किन्तु श्रुतिक्रम एव क्वचिदुदाहरणे चिन्त्यते। द्वादशाहे सत्रभूते श्रूयते 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयती'ति। तदिदं किं दीक्षा विधीयते? क्रमस्तु पाठतो लभ्यते, अथवा क्रम एव विधीयते? श्रुति-क्रमोऽयमिति। तत्र—

वाक्यार्थविधिरन्याय्यः श्रुत्यर्थविधिसम्भवे।
तत्स्याद्दीक्षाविधिः पाठाद्दीक्षाणां लभ्यते क्रमः॥
उच्यते—सर्वेषां यजमानत्वाद्दीक्षा प्राप्तैव चोदकात्।
क्रमस्तु नान्यतः प्राप्त इति सोऽत्र विधीयते॥

कर्तृनियमः कस्मान्न भवति? अध्वर्युरिमानिति, चोदकप्राप्तत्वादेव। नन्विह यजमानानामेवार्त्विज्यकारित्वादध्वर्युर्नास्ति, कथमस्य दीक्षायां प्राप्तिः? असतो वा कथं नियमः? नियमानुपपत्त्यैवाध्वर्यवं सर्वमेकेनैव कर्तव्यम्, तथा ब्राह्मादिकमप्ये-कैकेनेति कल्प्यते, तत्कारिणश्चाध्वर्य्वादिशब्दैर्गौणैरभिधीयन्त इति चेत्? सुतरां नियमानुपपत्तिः। सर्वस्याऽऽध्वर्यवस्यैकस्मिन् कर्तरि कल्पिते, दीक्षायामपि नियमेन तस्यैव कर्तुः प्राप्तत्वात्, न नियमविधिरवकल्प्यते। तदेवं नियमविधेरुपघातकं कथं नाम बालिशाः कल्पयन्ति। यदि परं व्यवस्थितविषया अध्वर्य्वादिसंज्ञा व्यवहार-सिद्ध्यर्थमेव कल्प्यते, तथा कल्पिते च तत एव दीक्षायामध्वर्योः प्राप्तत्वात् क्रमार्थं एव विधिरवशिष्यते। किञ्चाध्वर्य्वादिष्वसत्स्वपि प्रकृतित एव सर्वस्याध्वर्यवस्यैककर्तृकत्वं प्राप्तम्। उक्तं हि प्रकृतावाध्वर्यवेऽप्येककर्तृकत्वम् 'अध्वर्युं वृणीते' इति ह्युत्पत्तौ

---

भावः। तदिति। उक्तभ्रमेत्यर्थः। श्रुतिलक्षणं विधेयम् विततिरूपम् अव्यवहितपौर्वापर्यस-मुदायरूपम्। पाठक्रमादौ तद्बोधकशब्दाभावादाह—अनभिहितोऽपीति। पाठक्रमादुपस्थितिक्रमः तेन चानुष्ठानक्रमोऽवगम्यत इति कथञ्चिदित्यस्यार्थः। शक्यत इति। शब्दाध्याहारेणेति भावः॥

अस्यापि वर्णकस्यानतिप्रयोजनकत्वादाह—अथवेति। श्रुतिक्रमः तत्प्रमाणकः क्रमः। अहीनरूपे सर्वेषां दीक्षाया अप्रसक्तेः सत्रभूत इत्युक्तम्। गृहपतिः याजमानकारितया सम्प्रतिपन्नः। 'तत उद्गातारं ततो होतारं ततस्तं प्रतिप्रस्थाता दीक्षयित्वा अर्धिनो दीक्षयति ब्राह्मणाच्छंसिनं ब्रह्मणः प्रस्तोतारमुद्गातुः मैत्रावरुणं होतुः ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति आग्नीध्रं

बहुत्वाश्रुतेरिति । एवञ्चमसाध्वर्युबहुत्वन्यायेनोपादीयमानस्याध्वर्योरेकत्वं विवक्षितम् । तच्चाध्वर्युकार्यार्थम्, अन्यथाऽऽनर्थक्यात् । तेनाऽऽध्वर्यवस्याऽध्वर्यु-कर्तृकत्वम्, एककर्तृकत्वञ्च प्रकृतावगतम् । तत्र सत्रेऽध्वर्य्वाद्यभावात् तत्कर्तृकत्वे बाधितेऽपि, एककर्तृकत्वं संभवन्न बाधितव्यमिति सर्वथाऽऽध्वर्यवस्यैककर्तृकत्वात्, दीक्षायामपि स एव कर्ता प्राप्त । सन्ति चाध्वर्य्वादयः सत्र इति दर्शितं तृतीये । अध्वर्यु-दीक्षायां तु 'चित्पतिस्त्वा पुनात्वि'ति मन्त्रलिङ्गविरोधात्, उत्तरेषु च 'न पूतः पावये-दि'ति प्रतिषेधात् अध्वर्योः कर्तृत्वासम्भवात्, 'इतरमन्यस्तेषां यतो विशेषः स्यादि-त्येवं प्रतिप्रस्थातुरध्वर्यौ अर्द्धिषु च प्राप्तिः एवमेव तृतीयिषु पादिषु च नेष्टृ्रुन्नेत्रोः प्राप्तिः । अतो विधेयान्तराभावाद्गृहपतिं दीक्षयति ब्रह्माणं दीक्षयतीत्येवमानुपूर्व्येण कीर्त्यमानानां दीक्षाणां यो विततिविशेषः प्रतीयते, स एव विधीयते । अनभिहितोऽपि प्रातिस्विकेन विधिना विधीयमानत्वाच्छ्रुतिक्रम इत्युच्यते । अर्थादिषु प्रयोग-विधिसङ्ग्रहमात्रमिति विवेकः । एवञ्चाध्वर्युर्गृहपतिमित्यादि ब्रह्मचारी वाऽऽचार्य-प्रेषित इत्येवमन्तं विततिविशेषैकार्थविधानादेकं वाक्यम् । यदा तु पौर्वापर्यं क्रमः,

---

ब्रह्मणः प्रतिहर्तारमुद्गातुः अच्छावाकं होतुः ततस्तमुन्नेता दीक्षयित्वा पादिनो दीक्षयति पोतारं ब्रह्मणः सुब्रह्मण्यमुद्गातुः ग्रावस्तुतं होतुस्ततस्तमन्यो ब्राह्मणो दीक्षयति ब्रह्मचारी वाचार्यप्रेषित' इति वाक्यशेषः । अत्र मुख्यब्रह्मादिदक्षिणार्धभागित्वात्तदधस्तनोऽर्धी मुख्यतृतीयांशभागितया तदधस्तनस्तृतीयी, चतुर्थांशभागी पादीति ज्ञेयम् । दर्शितमिति । वरणाभावेऽप्यध्यवसाय-मात्रेणाध्वर्युसंज्ञेति कथितमित्यर्थः । विरोधादिति । त्वामिति संबोध्यत्वविरोधादित्यर्थः । उत्तरेषु ब्राह्मणच्छंस्यादिषु । पूतो दीक्षितः । न पावयेन्न दीक्षयेदित्यर्थः । इतरं मुख्येनाक्रिय-माणपदार्थं तेषां मुख्यानामन्यः पुरुषः कुर्यात्, यतो यस्य विशेषः प्रथमं वरणमित्यर्थः तृतीयाष्टम-पादसूत्रैकदेशः । एवमेवेति । प्रतिप्रस्थातुः स्वदीक्षायां मन्त्रलिङ्गविरोधादाग्नीध्रादितृतीयिषु न पूत इति निषेधादित्यर्थः । नन्वव्यवधानघटितपौर्वापर्यसमुदायरूपक्रमस्य क्त्वाप्रत्ययाद्यवाच्य-त्वात्कथं श्रौतत्वमत आह—अनभिहितोऽपि इति । प्रातिस्विकेन स्वमात्रविषयकेण । अर्था-दिष्विति । अर्थपाठादिलभ्यक्रमेष्वित्यर्थः । प्रयोगेति । प्रयोगविधिविधेयत्वमित्यर्थः । मात्र [ पदेन ] चास्वतन्त्रविधिविषयत्वव्यवच्छेदः । एवञ्च श्रुतस्वतन्त्रविधिविषयत्वं क्रमस्य श्रौतत्व-मित्यर्थः । विततिविशेषरूपक्रमाङ्गीकारे लाघवमपि प्रकृते लभ्यत इत्याह—एवञ्चेति । ननु द्वयोरपि क्रमप्रतीतेः अव्यवहितपौर्वापर्यमात्रमेव क्रमो न तु तत्समुदायो न वा पदार्थान्तरम्, क्लृप्तेनैवोपपत्तेः । तत्राव्यवहितोत्तरत्वं क्वचिद्विधीयते पूर्वत्वमर्थसिद्धम् । यथा 'वेदं कृत्वा वेदिं करोति' इत्यादौ । क्वचिदव्यवहितपूर्वकालत्वमेव विधीयते । यथा 'वषट्कर्तुः प्रथमभक्षः' इत्यादौ । प्रथमशब्दस्य तद्वाचकत्वादत आह—यदा त्विति । अव्यवहितपूर्वत्वं तादृशपरत्वञ्चे-

तदा कृत्वाशब्देन तदभिधानादनभिधानं नास्ति, प्रतिदीक्षं च तद्भेदान्नानावाक्यानीति विवेकः। तस्माच्छ्रुतिक्रमोऽयम् ॥

इति श्रुतिक्रमाधिकरणम् ॥ १ ॥

२

अर्थाच्च० 'अग्निहोत्रं जुहोति, यवागूं पचती'ति यवागूपाकहोमयोः किमनियमः? अथवा पूर्वं पाकः, ततो होम इति। नियमप्रमाणाभावाद् विध्योः पाकहोममात्रपर्यवसानान्न क्रमोऽत्र पूर्ववद्विधीयते। अतोऽनियमः। प्रयोजनवशात्तु नियमः। होमद्रव्यं हि यवागूः। तदुत्पत्त्यर्थं श्रुत्या लिङ्गेन च पाकः, स पश्चात् क्रियमाणोऽनर्थकः स्यात्। होमोऽप्यसति द्रव्ये न निर्वर्तते। अतः पक्त्वा होमः ॥

इत्यर्थक्रमाधिकरणम् ॥ २ ॥

३

अनि० यत्रोक्तवक्ष्यमाणनियमकारणाभावः, तत्रानियम एव क्रमस्य। यथा

---

त्यर्थः। अभिधानात् लक्षणयोपस्थापनात्। तद्भेदात्, क्रमभेदात्। एतन्मते च वृत्त्या श्रुतशब्दगम्यत्वमेव क्रमस्य श्रौतत्वं ज्ञेयम्। प्रयोजनं सत्यपि विपरीतक्रमबोधकवचने विकल्प एव न तु बाध इति। सूत्रं स्पष्टार्थम् ॥

इति श्रुतिक्रमाधिकरणम् ॥ १ ॥

२

अर्थाच्च० पाकहोमयोरित्यनन्तरं क्रमस्येति शेषः। पूर्वाधिकरणोक्तश्रुतिलक्षणप्रमाणरूपसिद्धान्तहेत्वभावात्प्रत्युदाहरणरूपेण पूर्वपक्षमाह—नियमेति। क्त्वाप्रत्ययादिरूपक्रमबोधकशब्दाभावादित्यर्थः। क्रमपरश्रूयमाणविधिरूपश्रुतिपदार्थपक्षेऽप्याह—विध्योरिति। सिद्धान्तमाह—प्रयोजनेति। अत्र हि प्रयोजनद्वयम्—'यवाग्वा जुहतीति वचनाद्यवागूप्रयोजनं होमः, 'यवागूं पचती' ति द्वितीयया लिङ्गेन च पाकप्रयोजनं यवागूः। तत्र पूर्वं होमे सति यथा होमस्य यवागूप्रयोनत्वबाधः, तथा यवाग्वाः पाकप्रयोजनत्वस्यापि। तस्यानुपयोगेन प्रयोजनत्वायोगादित्यर्थः। स्पष्टमन्यत् ॥

इत्यर्थक्रमाधिकरणम् ॥ २ ॥

३

अनि० श्रुत्यर्थयोरुक्तस्य नियमहेतुत्वस्योपपत्तये तद्व्यतिरेके नियमाभावस्य वाच्यत्वात्तस्य च पाठादिसत्त्वेऽसम्भवात् पाठादिव्यतिरेकसहितैतद्व्यतिरेके नियमव्यतिरेक इति सूत्रार्थ-

'वसन्तमृतूनाम्' 'एको ममैका तस्येत्ये'वमादीनां च शाखाभेदेनाम्नातानां प्रयाजानुमन्त्रणमन्त्राणां यच्छाखागतेनानुमन्त्रणमन्त्रणेन समित्प्रथममनुमन्त्रितः, तच्छाखागतेनैव तनूनपादपि प्रवृत्तिक्रमादिति चेत्? न; प्रत्यासत्त्यनुग्रहाय हि प्रवृत्तिक्रमः वक्ष्यते, न चेहानेकशाखागतानामनुमन्त्रणमन्त्राणां मिथः प्रत्यासत्तिर्विहिता, यद्वशात्प्रवृत्तिराश्रीयेत। अतोऽत्रानियमः ॥

**इति प्रयाजानुमन्त्रणमन्त्रेष्वनियमाधिकरणम् ॥ ३ ॥**

**४**

**क्रमेण०** 'समिधो यजति, तनूनपातं यजती'ति पठितानां यागानामनियमेनानुष्ठानम्? उत पाठक्रमेणेति। श्रुत्यर्थयोरभावात्पाठस्याविधायकत्वात् विधीनाञ्च पदार्थमात्रपर्यवसानादनियम इति प्राप्ते, ब्रूमः—

**यथापाठमनुष्ठानं तथैव प्रतिपत्तितः।**
**स्मृतिः प्रयोगवेलायां वाक्यैरेव च कर्मणाम् ॥**

क्रमपठितेषु हि पदार्थेषु गन्धपुष्पादिषु तथैवानुष्ठानं लौकिकाः प्रतिपद्यन्ते। वेदाच्चाध्ययनोपात्ताद्यत्प्रयोजनं शक्यते कर्तुम्, तस्य सर्वस्यार्थेन वेदोपादानम्।

---

माह—यत्रेति। 'वसन्तमृतूनां प्रीणामि स मा प्रीतः प्रीणातु' एवं ग्रीष्ममृतूनामित्यादि 'हेमन्तशिशिरावृतूनामिति द्वयोस्समासेन पञ्चानुमन्त्रणमन्त्राः। एवम् 'एको ममैका तस्य योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः' इत्यादयश्च शाखान्तरगताः पञ्च। तेषामदृष्टार्थतया समुच्चये सति क्रमचिन्ता। तनूनपादपीति। प्रथममनुन्त्रणीय इति शेषः। प्रवृत्तीति। 'प्रवृत्त्या तुल्यकालानाम्' इति वक्ष्यमाणादित्यर्थः। तन्न्यायाविषयतां दर्शयति—नेति। एकप्रयोगविधेरनुगतव्यवधानेनैव प्रत्यासत्तिबोधकत्वायेत्यर्थः न चेहेति। पञ्चानां मन्त्राणां पञ्चप्रयाजाङ्गत्वादेकशेष्यङ्गत्वाभावेनावान्तरप्रयोगविधिभेदेन मिथस्साहित्यविधानादिति भावः ॥

इति प्रयाजानुमन्त्रणमन्त्रेष्वनियमाधिकरणम् ॥ ३ ॥

**४**

क्रमेण० प्रयाजमन्त्रप्रसङ्गात्प्रयाजक्रमचिन्तेति सङ्गतिः पाठस्येति। पाठक्रमस्याशब्दरूपतयानुष्ठानक्रमबोधकत्वाभावादित्यर्थः। ननु कथञ्चिदुपस्थितो विधेय इत्यत आह—विधीनाञ्चेति। प्रयाजविधिमात्रपर्यवसानादित्यर्थः। यथापाठं पाठक्रमानुसारेण। तथैव पाठक्रमेणैव। नन्वध्ययनकालिकं ज्ञानं नानुष्ठानकालेऽस्तीत्यत आह—स्मृतिरिति। वाक्यैरेव वाक्यजन्यानुभवैरेव। ननु विधायकत्वेनोपक्षीणानां विधिवाक्यानां न प्रयोगकाले व्यापार इत्याह—वेदाच्चेति। तथा च मन्त्रपाठाभावे विधिवाक्यानामेव क्रमेण स्मारकत्वं स्मृतिक्रमाच्चानुष्ठानक्रम इति भावः। एवं सत्यध्ययनक्रमोऽपि दृष्टार्थः स्यादन्यथा त्वदृष्टार्थ इत्याह—स्वाध्याय-

शक्यते च विधिवाक्येभ्योऽपि सम्बन्धनिमित्तं स्मरणं प्रयोगकाले पदार्थानां कर्तुमिति तदपि प्रयोजनम्। स्वाध्यायविधिविहितश्च पाठक्रमो विध्यवस्थायामनुपयुज्यमानः स्मृत्यवस्थायामुपयुज्यते। यथापाठञ्च क्रियमाणं स्मरणं तत्क्रममेव भवति। स्मृतिकार्यञ्चानुष्ठानमिति तस्यापि स एव क्रमः। तस्मात्पाठक्रमेणात्र क्रमनियमः॥

इति पाठक्रमाधिकरणम्॥ ४॥

५

**प्रवृत्त्या०** वाजपेये प्राजापत्याः पशवः सह क्रियन्ते। तत्रोपाकरणनियोजनादयः सन्निपातिनः प्रतिपश्वावर्तनीयाः। तेषां चावृत्तिर्नैकस्य पशोः कात्स्न्र्येन कृत्वा परस्यापि तथैव क्रियत इत्येवम्। किं तर्हि? सर्वेषामुपाकरणं यतः कुतश्चित् पशोरारभ्य कृत्वा ततो नियोजनमिति वक्ष्यामः। तत्रोपाकरणं यतः कुतश्चित्पशोरारभ्य यत्र क्वचित्समाप्यते। नियोजनादौ तु सन्देहः—किं तत्राप्यनियमः? उत येन क्रमेणोपाकरणं प्रवृत्तं स एवोत्तरत्रापीति? नियामकाभावात्प्रथमवत् द्वितीयादावप्यनियमः।

**प्रवृत्त्या वा नियम्येत प्रत्यासत्तेरनुग्रहात्।**
**अन्यथा व्यवधानं स्यादनुज्ञाताधिकैरपि॥**

---

विधीति। एवञ्चाध्ययनक्रमस्य दृष्टार्थत्वाय प्रयोगकाले विधिवाक्यपठनमप्याक्षिप्यत इति दर्शयति—यथापाठञ्चेति। पाठक्रमेण वा पदार्थानामानुपूर्व्यं नियम्येत। क्रत्वैकत्वे एकप्रयोगविषयत्वे तेषां पदार्थानामङ्गभूतत्वात्। क्रतुभेदे तु काम्येष्ट्यादौ नाङ्गं परस्परं क्रम इति सूत्रार्थः॥

इति पाठक्रमाधिकरणम्॥ ४॥

५

प्रवृत्त्या० पाठवत्प्रवृत्तेरपि क्रियात्वसामान्येनोपस्थितेः प्रसङ्गसङ्गतिः। **प्राजापत्या** इति। 'सप्तदश प्राजापत्यान् पशूनालभते' इति विहिता इत्यर्थः। सहेति। 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति' इत्येकपदोपादानात् करणत्वेन श्रुतेश्च साङ्गयागानां प्रयोगविधौ साहित्यविधानादित्यर्थः। कात्स्न्र्येन सकलोपाकरणादि काण्डानुसमयेन। किन्तु पदार्थानुसमय इत्याह—किन्तर्हीति। अत्र च पूर्वोक्तसाहित्यविधिरेव मूलम्। वक्ष्याम इत्यनन्तरं द्वितीयपाद इति शेषः। स एव उपाकरणप्रवृत्तिक्रम एव। उत्तरत्र नियोजनादौ। पूर्वपक्षमाह—नियामकेति। प्रथममुपाकरणम् तद्वत् द्वितीयादौ नियोजनादावित्यर्थः। सिद्धान्तमाह—प्रवृत्त्या वेति। प्रथमपदार्थप्रवृत्तिक्रमेणेत्यर्थः। नियम्येत द्वितीयादिक्रम इति शेषः। प्रत्यासत्तेः साहित्यस्य। ननु

एकैकस्य हि पशोः पदार्था मिथः प्रत्यासन्नाः कर्तव्याः 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ती'ति वचनावगतपश्वन्तरसाहित्यबलादन्यदीयैः षोडशभिः पदार्थै-र्व्यवधिमनुजानन्ति नाधिकैः। प्रवृत्त्या च क्रमनियमे तावद्भिरेव व्यवधानं भवति, अन्यथाऽधिकैरपि स्यात्। तस्मात्प्रवृत्त्या नियमः॥

इति प्रवृत्तिक्रमाधिकरणम् ॥५॥

६

**स्थानाच्च०** साद्यस्के 'सह पशून् आलभते' ति श्रुतम्। साहित्यं च सवनीव-स्थान इति स्थितम्। तत्रोपाकरणादीनां प्रतिपशु भेदे किं नियमः क्रमस्य? उताग्नीषो-मीयस्य प्रथममुपाकरणम्? अथवा सवनीयस्य? इति। नियामकाभावादनियमे, प्रकृति-दर्शनाद्वाऽग्निषोमीयस्य प्राथम्ये प्राप्ते, सवनीयस्येत्याह—

आश्विनग्रहणेनासौ पर्युपस्थाप्यते यतः।
इतरश्चलितः स्थानान्नोपस्थाप्येत केनचित्॥

अग्नीषोमीयप्रणयनानन्तरं ह्यग्नीषोमीयस्य स्थानम्। स तेनोपस्थितोऽपि

---

प्रकृतिवदेकपशुसंबन्धिनामुपाकरणादीनां मिथः प्रत्यासत्तिः प्राप्ता सिद्धान्तेऽपि सानुगृह्यत इति आशंक्य विशेषविधिना तद्बाधेऽपि यावता व्यवधानेन विना वचनस्यार्थवत्त्वं न भवति तावद्व्य-वधानमेव शास्त्रानुमतं नाधिकमित्यनुगतव्यवधानसम्पत्तये प्रवृत्तिक्रमस्य नियामकतेत्याह— एकैकस्येति। पदार्था अन्यदीयैः षोडशभिः पदार्थैर्व्यवधिमनुजानन्तीत्यन्वयः। यथैकस्य पशोरुपाकरणेन नियोजनस्य पश्वन्तरोपाकरणैः षोडशभिर्व्यवधानम्। प्रवृत्तिनियमानभ्युपगमे त्वधिकैरपीति। तुल्यकालानां गुणानामुपाकरणादीनां प्रवृत्त्या क्रमः। तेषामङ्गानामुप प्रधान-समीपे क्रमात्करणादिति सूत्रार्थः॥

इति प्रवृत्तिक्रमाधिकरणम् ॥५॥

६

**स्थानाच्च०** स्थानस्यानुष्ठेयसामानाधिकरण्यान्मुख्यक्रमात्पूर्वं निरूपणम्। अग्नीषोमी-यस्थाने साहित्ये सति विचारायोगादाह—साहित्यञ्चेति। प्रधानप्रत्यासत्तिलाभादिति तृतीयोपान्त्ये निर्णीतमित्यर्थः। यद्यपि तत्र श्येने इत्युदाहृतम्, तथापि न्यायसाम्यादस्यापि तथात्वमित्यर्थः। तत्रेति। उपाकरणादीनां भेदे सति उपाकरणक्रमस्य किमनियम इति योजना। नियोजनादिषूपाकरणप्रवृत्त्यैव निर्णयेन तेषामविचार्यत्वादत एवोपाकरणमित्येव द्वितीय-कोटावुल्लेखः। प्रकृतीति। प्रकृतौ प्राथम्यदर्शनादित्यर्थः। आश्विनेति। 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति' इत्याश्विनग्रहणोत्तरकाले सवनी-योपाकरणविधानात्तदुत्तरं तस्यैवोपस्थितेस्तस्यैव प्रथममुपाकरणम् उपस्थित्यधीनत्वादनुष्ठा-नस्येत्यर्थः। स्थानस्याग्नीषोमीयसाधारण्यं व्यावर्तयति—अग्नीषोमीयेति। शालामुखीयस्या-

सहालम्भवचनेन तस्मात्स्थानाच्चलितत्वादननुष्ठितः। अत्र तु न किञ्चित्तस्य उपस्थापकमस्ति। सवनीयः स्वस्थानादस्खलितः सन् आश्विनग्रहणादुपस्थितत्वात् तदनन्तरमुपाक्रियते। ततः साहित्यवचनादितरोपाकरणम्। अतः सवनीयस्यैव प्राथम्यम्, इतरयोस्तु मिथः क्रमेऽनियम एव; तयोरुपस्थाने विशेषाभावात्। अथवा प्रकृतिदृष्टपौर्वापर्यमात्रमसति बाधकेऽनुग्रहीतव्यमग्नीषोमीयमुपाकृत्य आनुबन्ध्योपाकरणम्॥

इति स्थानक्रमाधिकरणम्॥ ६॥

७

मुख्य० 'सारस्वतौ भवतः' इति यागद्वयं विहितं स्त्रीपुंदेवत्यम्। 'एतद्वै दैव्यं मिथुनमि'ति वाक्यशेषात्। तत्र स्त्रीदेवत्यस्य प्रथममनुष्ठानं ततः पुंदेवत्यस्य, याज्यानुवाक्यापाठक्रमात्। तत्र चोदकप्राप्तो निर्वापः किमनियमेन कर्तव्यः? उत स्त्रीदेवत्यं निरूप्य ततः पुंदेवत्यमिति? नियमकारणाभावादनियमः। मुख्यक्रमात्तु स्त्रीदेवत्यं प्रथममिति स्थितम्। ननु च प्रवृत्त्या नियमः सिद्ध्यति, येन क्रमेण याज्यानुवाक्ययोः प्रवृत्तिः स एव निर्वापादीनामुपाकरणक्रम इव नियोजनादीनाम्। पूर्वपदार्थप्रवृत्त्या उत्तरेषां नियमः नोत्तरप्रवृत्त्या पूर्वेषामिति चेत्? न; प्रत्यासत्त्य-

---

ग्नेराग्नीध्रीये सोमस्य चासन्दीस्थस्य दक्षिणहविर्धानशकटे नयनोत्तरमित्यर्थः। इतरेति। अग्नीषोमीयानुबन्ध्येत्यर्थः। असति नियामकान्तरे प्रकृतिदृष्टपौर्वापर्यस्य नियामकत्वं न त्वनियम इत्याह—अथवेति। सवनीयोत्पत्तौ संयोगो यस्य तस्मात् स्थानान्नियम इति सूत्रार्थः॥

इति स्थानक्रमाधिकरणम्॥ ६॥

७

मुख्य० स्थानस्यैव प्रथमपदार्थक्रमनियामकत्वात् सङ्गतिः। नन्वेकदेवताकानेकद्रव्यक एव यागः कुतो न स्यादत आह—स्त्रीति। 'यत्सरस्वती सरस्वांश्चेति च मिथुनम्' इत्यनारभ्यशेषो बोध्यः। एवञ्च द्रव्यदेवताभेदात् द्विवचनान्तेन यागद्वयविधिरित्याशयः। याज्येति। एतेनैकैकस्य यागस्य द्विदैवत्यतया सम्प्रतिपन्नदेवताकत्वात्सकृदनुष्ठाने क्रमासिद्धिरिति शङ्का निरस्ता। याज्यानुवाक्ययोरेकैकदेवत्यत्वेन तदयोगादिति। मुख्यक्रमात्त्विति। अत्र चोपपत्तिरग्रे ग्रन्थकृतैवाभिधास्यते। ननु मुख्यक्रमेऽपि याज्यानुवाक्यापाठक्रम एव हेतुरिति तेनैव याज्याप्रवृत्तिक्रमेण निर्वापादिक्रमनियमसिद्धौ न मुख्यक्रमस्य नियामकतेति शङ्कते—ननु चेति। उपाकरणस्य नियोजनात्पूर्वं प्रवृत्तः नियोजनादिक्र नियामकता युक्ता। याज्यानुवाक्ययोस्तु निर्वापोत्तरभावित्वान्न तत्काले प्रवृत्तिरिति कथं तया नियम इत्याशङ्क्य निरस्यति—न प्रत्यासत्तीति। न

नुग्रहाविशेष।त्तन्निबन्धनत्वाच्च क्रमनियमस्य। सत्यम्; मुख्यक्रमादपि क्रमनियमः सिद्धयतीत्युदाहृतम्।

अन्यतोऽपि सिद्धयत्यर्थे किमर्थं कारणान्तरमुपन्यस्तम्? यद्यपीह प्रमाणयोः सङ्करः न तु सर्वत्रैते प्रमाणे सङ्कीर्णे। अस्ति हि तदुदाहरणम्, यत्रासिद्धयन् प्रवृत्त्या नियमो मुख्यक्रमादेव सिद्धयति। दर्शपूर्णमासयोर्दध्नः पूर्वं धर्माः प्रवर्तन्ते शाखाहरणादयः तत आग्नेयस्य निर्वापादयः। याज्यानुवाक्ययोस्तु विपरीता प्रवृत्तिः। पाठवशात्तत्र भूतभाविप्रवृत्तिद्वयवशात् प्रयाजशेषाभिघारणेऽनियमः प्राप्नोति। मुख्यक्रमात्त्वाग्नेयस्य प्रथममभिघारणम्। तदेतच्चतुर्थे पादे वक्ष्यामः। तस्मादनवद्यम्।

किं पुनः कारणं मुख्यक्रमेणाङ्गानां नियमे? प्रत्यासत्त्यनुग्रहः। एवं-ह्यङ्गप्रधानयोर्यावदनुज्ञातमेव व्यवधानं भवति, इतरथा तु पश्चाद्भाविनः प्रधानस्य प्रथमङ्गं क्रियमाणं प्रधानेनात्यन्तव्यवहितं स्यात्। तस्मान्मुख्यक्रमेण नियमः। अत्र प्रधानप्रत्यासत्तिरङ्गानां नियमकारणम्। प्रवृत्तिक्रमे तु अङ्गानां मिथः प्रत्यासत्तिरित्येतावान्विशेषः॥

इति मुख्यक्रमाधिकरणम्॥ ७॥

---

ह्यनुष्ठानकाले क्रमनियमावगतिः येनैतद् दूषणं स्यात्। किन्तु प्रयोगविधिकाल एवाकांक्षावशाद्भाविप्रयोगगतप्रवृत्तिमालोच्यानुगतव्यवधानेनाङ्गप्रत्यासत्त्यनुग्रहाय क्रमनियमविधानमिति तुल्यन्यायतयोत्तरप्रवृत्त्यापि पूर्वपदार्थक्रमनियमो युक्त इति भावः। नियोजनादाववश्यक्लृप्तेन प्रवृत्तिक्रमेणैवात्रापि क्रमनियमोपपत्तौ नान्यस्य मुख्यक्रमस्य नियामकत्वं युक्तमित्याक्षिपति— अन्यतोऽपीति। उक्तोदाहरणे द्वयोः सङ्करेऽप्यन्यत्र मुख्यक्रमस्यासङ्कीर्णतया क्रमनियामकत्वमावश्यकमिति समाधत्ते—यद्यपीत्यादिना। प्रत्यासत्त्यनुग्रहः अङ्गप्रधानप्रत्यासत्तिसाम्यानुग्रहः। तमेव दर्शयति—एवं हीति। मुख्यक्रमेणानुष्ठाने सतीत्यर्थः। यावदनुज्ञातमिति। विधिबलायातमवर्जनीयमित्यर्थः। तथाहि—मुख्यक्रमादरे तत्र प्रधानाङ्गानामेकद्व्यादिव्यवधानमनुगतं प्रधानेन भवति, तदनादरे तु केषाञ्चिदत्यन्तं सन्निकर्षः केषाञ्चिदत्यन्तं विप्रकर्षः स्वप्रधानेनेत्यननुज्ञातव्यवधानं स्यादिति। अत्र च मुख्यक्रमनियामकोक्तिः सौहार्दमात्रेण, तदभावेऽपि मुख्यक्रमानुसारित्वमङ्गक्रमस्येत्येतावन्न्यायशरीरमिति ज्ञेयम्। मुख्यक्रमेण वाङ्गानामानुपूर्व्यमित्यनुषङ्गः, तदर्थत्वान्मुख्यार्थत्वादङ्गानां तत्प्रत्यासत्त्यनुग्रहादिति सूत्रार्थः॥

इति मुख्यक्रमाधिकरणम्॥ ७॥

८

**प्रकृतौ॰** दर्शपूर्णमासयोराग्नेयानन्तरमाज्यहविरुपांशुयाजः ततोऽग्नीषोमीयं पुरोडाशहविः। तत्र किं मुख्यक्रमादाज्यनिर्वापः पूर्वम्? उत पाठक्रमादग्नीषोमीय-निर्वापः? इति।

**तत्र मुख्यक्रमादाज्यनिर्वापस्य पुरस्क्रिया।**
**पाठतस्त्वौषधस्यैव प्राथम्यमनपेक्षतः॥**

मुख्यक्रमो हि मुख्ययोः क्रमं प्रथमं केनापि प्रमाणेनावगम्य तदपेक्षया तत्साहित्यसंपत्तयेऽङ्गेषु कल्प्यमानो विलम्बते। पाठतस्त्वन्यानपेक्षादङ्गानामेव क्रमा-वधारणाद्बलीयस्त्वम्। अतः प्रथममौषधधर्माः, तत आज्यधर्माः॥

**इति पाठक्रमप्राबल्याधिकरणम्॥ ८॥**

९

**मन्त्र॰** इदानीं पाठयोरेव मन्त्रब्राह्मणगतयोर्बलाबलचिन्ता। दर्शपूर्णमासयोर-ग्नीषोमीयस्य प्रथमं ब्राह्मणम्, तत आग्नेयस्य। विपरीतं मन्त्राम्नानम्। तत्र—

**विधिक्रमबलीयस्त्वमुत्पत्ताववधारणात्।**
**उत्पन्नेषु नियुक्तेषु मन्त्रे मन्त्रक्रमो भवेत्॥**

---

८

प्रकृतौ॰ अत्र पाठक्रमबलीयस्त्वेन मुख्यक्रमनियमापवादादनन्तरसङ्गतिः। एतेषाञ्च बलाबलमनुगतरूपेण वार्तिककारेणाभिहितम्—'श्रुत्यर्थपठनस्थानमुख्यासत्तिप्रवृत्तिभिः। एका-ख्यातगृहीतानां नियतः कर्मणां क्रमः'॥ इत्युद्देशक्रमं परिकल्प्य, विरोधे पारदौर्बल्यमेतेषामपि पूर्ववद् इति श्रुतिलिङ्गाद्यतिदेशात्। पूर्वपक्षमाह—तत्रेति। मुख्यप्रत्यासत्तौ हि प्रधानो-पकारः, पाठक्रमे त्वङ्गोपकार इत्यङ्गगुणविरोधन्यायान्मुख्यक्रमबलीयस्त्वमित्याशयः। सिद्धान्त-माह—पाठत इति। प्रमाणाधीनत्वादुपकारस्य यथाप्रमाणमंगीकार्यत्वात्पाठस्य च निरपेक्षतया शीघ्रं क्रमबोधकत्वात्तदनुसारेण प्रयोजनकल्पनेत्याशयः। प्रकृतौ तत्रत्यनिर्वापे स्वबोधकशब्द-रूपपाठवत्त्वात्तदनुसारेणानुपूर्व्यं प्रतीयेतेति सूत्रार्थः॥

इति पाठक्रमप्राबल्याधिरणम्॥ ८॥

९

मन्त्रतस्तु॰ अपवादसंगतिं सूचयति—इदानीमिति। विपरीतमिति। प्रथममाग्नेयस्य याज्या तत उपांशुयाजमन्त्रानन्तरमग्नीषोमीयस्य याज्येतीत्यर्थः। नैवमिति। प्रथमावगतिर्हि अनुष्ठेयस्मृतेर्विप्रकृष्टा, मन्त्रपाठस्तु सन्निकृष्टस्तदानीं मन्त्रोच्चारणेन स्मृत्युत्पत्तेरिति भावः।

विधिक्रमो ह्युत्पत्तिदशायामेव पदार्थानां गम्यते। मन्त्रक्रमस्तूत्पन्नेषु पदार्थेषु मन्त्रेषु विनियुक्तेषु च पश्चादिति दुर्बलः।

नैवं स्मृतिक्रमेणैव ह्यनुष्ठानक्रमो भवेत्।
स्मारकक्रमतश्चापि स्मृतीनां क्रम इष्यते॥
मन्त्राश्चानन्यकार्यत्वात्स्मृत्यर्था विधयः पुनः।
विधिनैव कृतार्थत्वान्नावश्यं स्मारका मताः॥

तस्मान्मन्त्रक्रमेणैवानुष्ठानम्। तदभावे तु विधिरपि स्मारक इति तत्रैव क्रमस्य प्रामाण्यम्॥

इति मन्त्रपाठस्यप्राबल्याधिकरणम्॥९॥

१०

तद्व० 'आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्, सरस्वत्याज्यभागा स्यात्, बार्हस्पत्यश्चरुरि'ति। तत्रोपांशुयाजाग्नेयविकृत्योराज्यबार्हस्पत्योः कस्य धर्माः प्रथममनुष्ठेयाः? किं प्रयोगविधिचोदिताङ्गप्रधानप्रत्यासत्त्यनुग्रहान्मुख्यक्रमेण आज्यधर्माणां प्रथममनुष्ठानम्? उत चोदकवशादाज्यधर्मेभ्यः पूर्वं बार्हस्पत्यौषधधर्माः कर्तव्याः? इति।

तत्रौपदेशिकत्वेन प्रयोगवचनाश्रयः।
मुख्यक्रमोऽतिदेशेन प्रापितं बाधते क्रमम्॥
नैवम्—प्राप्तानां हि पदार्थानां विकृतौ क्रमचिन्तनम्।
ते च सक्रमका एव प्राप्यन्ते चोदकादिह॥
नैराकाङ्क्ष्यात् क्रमस्तेषां न भूयोऽन्यः प्रकल्प्यते।
शरवत्प्राप्तबाधोऽत्र कल्प्यत्वान्नोपपद्यते॥

'शरमयं बर्हिरि'ति क्लृप्तं शास्त्रं पूर्वप्राप्तकुशबाधेन प्रवर्तते। कल्प्यस्तु

---

एवं सति विधिपाठस्य प्रामाण्यं न स्यादत आह—तदभावे त्विति। विरोधे मन्त्रतो नियमः स्यात्प्रयोगस्वरूपे तस्य सामर्थ्यात्तस्मात्सविधिक्रम उत्पत्तिगत एवाध्ययनार्थो नानुष्ठानार्थ इति सूत्रार्थः॥

इति मन्त्रपाठस्यप्राबल्याधिकरणम्॥ ९॥

१०

तद्वचनात्तु० औपदेशिकपाठक्रमवदातिदेशिकस्यापि तस्य मुख्यक्रमाद्बलवत्वं कथ्यत इत्यातिदेशिकी सङ्गतिः। आज्याभागा आज्यहविष्का। प्रयोगवचनाश्रयः प्रयोगविधि-

प्रयोगवचनाश्रयः क्रमः, कल्पना चाकाङ्क्षाधीना, निराकाङ्क्षाश्चेह पदार्था इति न कल्पनं सम्भवति ॥

**इति प्रयोगवचनाच्चोदकस्यप्राबल्याधिकरणम् ॥ १० ॥**

**११**

**विकृतिः०** चातुर्मास्येषु साकमेधस्तृतीयं पर्व । तत्र श्रूयते–'अग्नयेऽनीकवते प्रातरष्टाकपालं निर्वपेत्, मरुद्भ्यः सान्तपनेभ्यो माध्यन्दिने चरुम्, मरुद्भ्यः गृहमेधिभ्यः सायमोदनमि'ति । किमेता द्व्यहकाला इष्टयः ? उत सद्यस्कालाः ? इति ।

**तत्रातिदेशतस्तासां प्राप्नोति द्व्यहकालता ।**
**प्रातःश्रुतेर्विरोधश्च नामावास्याश्रुतेरिव ॥**

'य इष्ट्वा पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेते'ति वचनं सांगानि कर्माणि अमावास्याकालं प्रत्युपाददानं द्वयोरह्नोस्तत्कालासम्भवात्, युक्तं यदातिदेशिकं द्व्यहकालत्वं बाधते । प्रातरादिश्रुतिस्तु अहर्द्वयेऽपि प्रातः कालसम्भवादतिदेशाविरोधिनी न तद्बाधं कर्तुमुत्सहते । तस्मादद्यतनेषु प्रातरादिषूपक्रम्य श्वस्तनेषु प्रातरादिषु समापनीया इति प्राप्ते, ब्रूमः—

**साङ्गं प्रारिप्सितं कर्म प्रातःकाले विधीयते ।**
**स चाविशेषात्तन्त्रेण सर्वस्यैको भविष्यति ॥**

चिकीर्षितार्थेन हि कालो विधीयते । सर्वाङ्गयुक्तप्रधानभावना चिकीर्षिता, नैकदेशमात्रम् । अतो य एवैकः प्रातरादिकालः प्रयोगाय संगृह्यते, स एव सर्वप्रारिप्सायां संगृह्यमाणः प्रारम्भापरनाम्नः प्रक्रमस्याविशेषात्तन्त्रेणैक एव सर्वाङ्गयुक्तप्रधानार्थेनोपात्तो भवति, न प्रातर्द्वयस्यावकाशः । तस्मादुपदेशात्सद्यस्कालाः ॥

**इति विकृतीष्टीनां सद्यस्कालताधिकरणम् ॥ ११ ॥**

---

बोध्यः । कल्प्यत्वादिति । क्रमस्येति शेषः । निराकांक्षाश्चेति । प्राकृतपाठक्रमेणेत्यर्थः । विकृतावन्तरकल्पायां यथाप्रधानमानुपूर्व्यं स्यात् तस्य वचनादुपदेशादिति सूत्रार्थः ॥

इति प्रयोगवचनाच्चोदकप्राबल्याधिकरणम् ॥ १० ॥

**११**

विकृतिः० इहातिदेशानुसारिक्रमापवादात्सङ्गतिः । उत्तरार्धं व्याचष्टे–य इष्ट्येतीति । उपक्रम्य अन्वाधानं कृत्वा । न च कर्मणि कर्मान्तरारम्भानुपपत्तिः । प्रमाणवशेन दर्शेष्टिमध्ये विकृतीष्टिप्रारम्भवदुपपत्तेरिति भावः । कालस्य साङ्गप्रधानभावनारूपप्रयोगान्वयित्वादङ्गप्रधानयोरेककालत्वमेकादशे वक्ष्यमाणमनुसृत्य सिद्धान्तमाह—साङ्गमिति । नन्वेकस्मिन्नहनीत्यश्रवणाद्दिनद्वयसम्बन्धिप्रातरादिग्रहणमविरुद्धमित्याशंक्याह—स चेति । प्रयोगस्यैव चिकीर्षितत्वेन सर्वस्य चिकीर्षितत्वाविशेषादित्यर्थः । न हि प्रत्येकं चिकीर्षेति भावः । एवं मध्यन्दिन इति साहचर्यात्प्रातरित्यस्याप्येकवचनान्तत्वादेकत्वविवक्षापि बोध्या । सूत्रप्रयोजने स्पष्टे ॥

इति विकृतीष्टीनां सद्यस्कालताधिकरणम् ॥११॥

## १२

अङ्गानां० अग्निषोमीये पशौ प्रकृतितो हविरासादनोत्तरकाले प्राप्तानां प्रयाजानामपकर्षः श्रुतः 'तिष्ठन्तं पशुं प्रयजन्ती'ति । तथोत्कर्षः सवनीयेऽनुयाजानाम्—'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ती'ति । तत्र किं श्रुतमात्रनिष्ठावुत्कर्षापकर्षौ ? उत तदाद्युत्कर्षः, तदन्तापकर्षः ? इति संशये—

श्रुतोत्कर्षापकर्षाभ्यां वचनस्योपपत्तितः ।
न तदन्ततदादीनां भवेतामप्रमाणकौ ॥
प्रधानसन्निधिश्चैवं बाधितो न भविष्यति ।
ऊर्ध्वपूर्वपदार्थानामेवं प्राप्तेऽभिधीयते ॥
पूर्वेणोपस्थितं कार्यमुत्तरं कर्मचोदकात् ।
प्राप्तं तदन्यथाभावे क्रमलोपाद्विलुप्यते ॥

अनुयाजोपस्थितास्तदुत्तरकालं सूक्तवाकादयः कर्तव्याः । अनुयाजेषूत्कृष्टेष्वनुत्कृष्टाः पूर्वं क्रियमाणा विगुणाः स्युः । एवमाघारोत्तरकाले कर्तव्याः प्रयाजाः केवला अपकृष्यमाणाः क्रमलोपाद्दुष्येयुः । तस्मात्तदादीनामुत्कर्षः, तदन्तानां चापकर्षः ॥

इति तदाद्युत्कर्षतदन्तापकर्षाधिकरणम् ॥ १२ ॥

## १३

प्रकृत्या० प्रातरनुवाकप्रैषं होत्रे दत्वा, अनन्तरं 'प्रतिप्रस्थातः सवनीयान्निर्व-

---

## १२

अङ्गानां० इह प्रयोगविधिप्राबल्याभवादादनन्तरसङ्गतिः । अपकर्षः औत्सर्गिककालात्प्रागनुष्ठानम् । एवमुत्कर्षः तस्मादुत्तरकालेऽनुष्ठानम् । तिष्ठन्तं जीवन्तमुपलक्ष्येत्यर्थः । अनूयाजानामिति । तेषां हि हविश्शेषोद्वासनानन्तरं काल इत्युत्सर्गः । इह तु हविरुद्वासनसवनीयपशुयागनानाग्रहचमसयागाभ्यासपात्नीवतग्रहयागानामुत्तरकाले आग्निमारुतं नाम शस्त्रं तदूर्ध्वमनूयाजानुष्ठानं विधीयत इत्यर्थः । तदादीनामित्यनन्तरम् उत्कर्षापकर्षाविति शेषः । ऊर्ध्वेत्यादि पूर्वान्वितम् । प्रधानप्रत्यासत्तेः प्रयोगविधिलभ्यत्वात्तस्य चातिदेशानन्तरप्रवृत्तिकत्वात्तद्बोधितपाठक्रमानुरोधेन सिद्धान्तमाह—पूर्वेणेति । पूर्वेण कर्मणोपस्थितमुत्तरं कर्म चोदकात्कार्यं कर्तव्यप्राप्तमिति योजना । विलुप्यते विगुणं भवति । अङ्गानां मुख्यकालत्वात्तत्प्रत्यासत्तिलाभायोत्कर्षे सति । इदमुपलक्षणम्-अपकर्षे च सति यथोक्तं यावदुक्तं स्यादिति सूत्रार्थः ॥

इति तदाद्युत्कर्षतदन्तापकर्षाधिकरणम् ॥ १२ ॥

## १३

प्रवृत्त्या० करिष्यमाणचिन्तोपयोगित्वेन पदार्थस्थितिमाह—प्रातरिति । सोमसुत्याया-

पस्वेति प्रेष्यती'ति विधायाऽनन्तरं प्रचरणीहोमादयः सौमिकाः पदार्थाः पठिताः। तत्र—प्रैषवशान्निर्वापस्तावत्तदैव कर्तव्यः तदनन्तरं सौमिकाः पदार्थाः कर्तव्याः। 'अग्नीदग्नीन्विहर, बर्हिस्तृणीहि, पुरोडाशानलङ्कुर्वि'त्येतत्प्रैषपर्यन्तास्तत ऐष्टिकाः प्रोक्षणादयः? उत प्रोक्षणादीन् प्रागलङ्करणात्कृत्वा ततः सौमिका इति। निर्वापः प्रतिप्रस्थातृकर्तृकत्वान्नाध्वर्योः प्रोक्षणमुपस्थापयति। सौमिकानामपि निर्वापव्यवहितानां नास्त्युपस्थापकम्। तस्मादनियमः। उच्यते—

निर्वापेऽध्वर्योरपि कर्तृत्वमस्ति, प्रयोजकत्वात्। अतोऽसौ प्रोक्षणादीन् उपस्थापयति। अतस्ते तावत्कर्तव्याः, ततः सौमिकाः॥

इति प्रवृत्त्या प्रोक्षणादीनां सौमिकपूर्वभाविताधिकरणम्॥ १३॥

१४

असं० ज्योतिष्टोमे अग्नीषोमीयप्रणयनात्परतो यूपच्छेदनं पश्वङ्गमाम्नातम्। तत् 'दीक्षासु यूपं छिनत्ती'त्यपकृष्यमाणमग्नीषोमीयप्रणयनादीनपकर्षति? उत नेति संशये, प्रयाजवदाघारादीनपकर्षतीति प्राप्ते, उच्यते—

---

मित्यादिः। प्रातः पठनीयानुवाकार्थं प्रैषं 'प्रातर्याविभ्यो देवेभ्योऽनुब्रूहि' इत्येवंरूपमध्वर्युर्होत्रे दत्वेत्यर्थः। सवनीयान् धानाकरम्भपुरोडाशादीन्। प्रचरणीति। प्रचरण्यां स्रुचि चतुर्गृहीतं जुहोतीति विहिता इत्यर्थः। ततस्सवनीयाविधिस्ततो बहिष्पवमानं ततोऽनीदग्नीन् विहरेत्यादिः प्रैष इत्यपि ज्ञेयम्। तदैवेति। प्रैषानन्तरमेवेत्यर्थः। प्रचरणीहोमाद्युत्तरं हि प्रधानकाले प्राप्तो निर्वापः प्रैषदृष्टार्थत्वबलात्प्रचरणीहोमादिभ्योऽपकृष्यत इति भावः। एवमलङ्करणस्यापि बहिष्पवमानादूर्ध्वं प्रैषबलादेवोत्कर्षो ज्ञेयः। पर्यन्ता इति। प्रैषस्तु प्रोक्षणावघाताद्यनुष्ठानोत्तरं पुरोडाशनिष्पत्तावभिघारणरूपालङ्करणावसर इत्यर्थः। अत्र च तदनन्तरमित्या [रम्य प्रोक्ष] णादय इत्यन्ता पूर्वपक्षकोटिः। अनियमस्याप्यनिष्टकोटिप्रसञ्जकत्वादेव निरसनीयत्वात्। पूर्वपक्षमाह—निर्वाप इति। अध्वर्योरित्य [नन्तरं] कर्तव्यमिति शेषः। प्रकृतौ हि पाठक्रमान्निर्वापः प्रोक्षणमेककर्तृकत्वादुपस्थापयति नात्र। भिन्नकर्तृकत्वादित्यर्थः। निर्वापेति। निर्वापप्रैषेत्यर्थः। असौ निर्वापः। अत्र च पूर्वाधिकरणोक्तस्योत्कर्षे तदादित्वस्यापकर्षे प्रत्युदाहरणरूपेणाभावमाशंक्य न्यायान्तरेण तत्समर्थनात्सङ्गतिर्ज्ञेया। कृतकालानां नियतक्रमाणां निर्वापप्रोक्षणादीनां पूर्वपदार्थप्रवृत्त्या नियम इति सूत्रार्थः॥

इति प्रवृत्त्या प्रोक्षणादीनां सौमिकपूर्वभाविताधिकरणम्॥ १३॥

१४

असंयोगात्तु० अपकर्षे तदन्तत्वस्यापवादात्सङ्गतिः। प्रयाजवदिति। पाठतः क्रमावगमान्महाप्रयोगविध्येकवाक्यत्वेन तस्यापि क्रमनियामकत्वसम्भवादिति भावः। सौमिकेनेति। न

सौमिकेन पदार्थेन पाशुकस्य न हि क्रमः।
अङ्गं तदपकर्षेण सौमिको नापकृष्यते ॥

आघारोत्तरकालत्वं प्रयाजादीनामङ्गम्, तन्मा बाधीति युक्तं यत्तदपकर्षे आघारोऽपकृष्यते। पाशुकस्य तु यूपच्छेदनस्य न सौमिकाग्नीषोमीयप्रणयनानन्तर्यमङ्गं यत्सिद्ध्यर्थं प्रणयनमपकृष्येत। भिन्नप्रयोगवचनपरिगृहीतत्वात्तयोः एकप्रयोगान्तर्गतानां हि मिथः क्रमोऽङ्गं भवति। तस्माच्छूतमात्रापकर्षः ॥

इति वैकृतयूपमात्रापकर्षाधिकरणम् ॥ १४ ॥

१५

प्रास०सवनीयपशुतन्त्रं सवनीयपशुपुरोडाशेषु प्रसज्यते। दाक्षिणाग्निकौ तु पिष्टलेपफलीकरणहोमौ पशावविद्यमानौ पशुपुरोडाशार्थं कर्तव्यौ। तौ पाशुकैरनुयाजैः आग्निमारुतादूर्ध्वमुत्कृष्य क्रियमाणैरुत्कृष्येते? उत न वेति संशये, प्रकृतौ तत्परत्वेन दाक्षिणाग्निकयोः क्लृप्तक्रमत्वादुत्कर्षे प्राप्ते—

अत्रापि प्रयोगभेदादनुत्कर्षः पाशुकैर्ह्यनुयाजैर्न पौरोडाशिकयोर्होमयोः क्रमोऽङ्गम्,

---

तावत्पूर्वविगतः क्रमोऽस्ति, पाठतस्त्वत्र कल्पनीयः। अनुष्ठाने च तदाकांक्षा, नोत्पत्तिविधौ प्रणयनानन्तरपठिते। अनुष्ठानन्तु दीक्षासु विहितमिति दीक्षानन्तरत्वमेव प्रमाणवन्न प्रणयनोत्तरत्वमिति भावः। वैकृतं यूपच्छेदनं सौमिकैरसंयोगादक्लृप्तक्रमत्वात्तदेव प्रतिकृष्येत तत्पूर्वपठितं प्रणयनमिति सूत्रार्थः ॥

इति वैकृतयूपमात्रापकर्षाधिकरणम् ॥ १४ ॥

१५

प्रासङ्गिकं० अपकर्षे तदन्तत्वापवादप्रसङ्गादुत्कर्षेऽपि तदादित्वापवाद उच्यत इति सङ्गतिः। तन्त्रम् अङ्गजातम्। प्रसज्यत इति। पुरोडाशस्य पशुतन्त्रमध्यपातितया प्रसङ्गत उपकरोतीत्यर्थः। दक्षिणाग्नावनुष्ठेयौ दाक्षिणाग्निकौ। दृषदुपलकपालादिषु संलग्नपिष्टलेपं जुह्वां चतुर्गृहीताज्ये प्रक्षिप्य होमः। एवं तण्डुलकणाख्यफलीकरणानामपि तथैव होमः। उत्कृष्य क्रियमाणैरिति। अग्नीषोमीये पशौ हृदयादियागोत्तरमेषां स्थानम्, तस्मादुत्कृष्याग्निमारुतशस्त्रादूर्ध्वं क्रियमाणैरित्यर्थः। पूर्ववद्भिन्नप्रयोगविधिविषयत्वेऽप्यधिकाशङ्कामाह—प्रकृताविति। दर्शपूर्णमासयोरनुयाजोत्तरपाठेनेत्यर्थः। क्लृप्तक्रमत्वेऽप्यत्र प्रासङ्गिकोपकारलाभादनुयाजानतिदेशान्न क्रमनियमप्राप्तिरित्याशयेन सिद्धान्तमाह—अत्रापीति। पौरोडाशिकाः अतिदेशतः पुरोडाशाङ्गत्वेन प्रसक्ताः। नैव क्रियन्ते न पुरोडाशाङ्गत्वेन विधीयन्ते न वानुष्ठीयन्ते। पश्वर्थैरेवोपकारसिद्धिरिति भावः। न चोपकाराणामपि क्रमिकाणामपेक्षेति शङ्क्यम्, तेषां सम्भूयैव कथम्भावाकां-

यत उत्कृष्येयाताम् । पौरोडाशिकास्त्वनुयाजा नैव क्रियन्ते, नोत्कृष्यन्ते यैरुत्कृष्यमाणे-दक्षिणाग्निकहोमयोरुत्कर्षः । तस्मात्तयोः स्वस्थान एवाऽनुष्ठानम् ॥

**इति दाक्षिणाग्निकहोमानपकर्षाधिकरणम् ॥ १५ ॥**

## १६

तथा० दर्शपूर्णमासयोर्हविरभिवासनोत्तरकाला वेदिराम्नाता पूर्वेद्युरमावास्यायामपकृष्यमाणा हविरभिवासनान्तान् पदार्थानपकर्षति नेति संशये, एकप्रयोगसम्बन्धित्वात्पाठतश्च क्रमक्लृप्तेरनपकर्षे क्रमलोपेन विगुणा वेदिः स्यादिति प्राप्ते, ब्रूमः—

**सामान्येन क्रमोऽङ्गं स्यात्पाठतः प्रक्रियावशात् ।**
**विशेषतः श्रुतं वाक्यादामावास्ये क्रमान्तरम् ॥**

हविरभिवासनोत्तरकालता हि दर्शपूर्णमासयोः सामान्यप्राप्त्यामावास्यायां स्यात्, पाठश्च तस्य प्रमाणम्, प्रकरणाच्च विनियोगः । पूर्वेद्युरनुष्ठानं त्वमावास्यायां विशेषतो विहितम्, श्रौतश्चायं क्रमः । वाक्येन चामावास्यायां विनियोगः । तत्र यावदेव हविरभिवासनोत्तरकालतारूपः क्रमो दुर्बलप्रमाणको नैव कल्प्यते तावत्पूर्वेद्युरनुष्ठानं चोद्यमानमक्लृप्तक्रमस्य वेदिमात्रस्य चोद्यते न ततः प्राचाम् । तस्मादत्रापि श्रुतमात्रापकर्षः ॥

**इति पुरोडाशाभिवासनान्तस्य दर्शेऽनपकर्षाधिकरणम् ॥ १६ ॥**

---

क्षया ग्रहणादित्याशयः । स्वस्थान एवेति । पुरोडाशाङ्गेडाभक्षोत्तरमेवेत्यर्थः । सूत्रप्रयोजने स्पष्टे ॥

इति दाक्षिणाग्निकहोमानपकर्षाधिकरणम् ॥ १५ ॥

१६

तथापूर्वं० पूर्ववत्प्रयोगभेदाभावात्प्रत्युदाहरणसङ्गतिः । हविरिति । हविषः पुरोडाशस्याभिवासनं भस्मनाच्छादनम् 'भस्मनाभिवासयति' इति वचनात् । अमावास्यायामिष्टौ । अपकृष्येति । 'पूर्वेद्युरमावास्यायां वेदिं करोति' इति वचनेनेत्यर्थः । ननु पूर्वेद्युरिति श्रुतिविरोधान्न पाठतः क्रमकल्पनेत्यत आह—पाठतश्चेति । अन्यथा पूर्णमास्यामपि हविरभिवासनोत्तरता वेदेर्न स्यादित्याशयः । सामान्येनेति । दर्शपूर्णमासोभयसाधारण्येनेत्यर्थः । पाठतोऽवगतः क्रमः प्रक्रियावशादङ्गं स्यादिति योजना । अमावास्यायां भवमामावास्यं तत्रेत्यर्थः । श्रुतं पूर्वेद्युः कालविधिगम्यम् । श्रौतश्चेति । श्रुतविधिविधेय इत्यर्थः । तावदिति । तथा च पाठकल्प्यः क्रमः पौर्णमास्यामेव भवतीति भावः । सूत्रे चापूर्वमित्यस्याक्लृप्तक्रममित्यर्थः, नापकर्षेदिति च शेषः ॥

इति पुरोडाशाभिवासनान्तस्य दर्शेऽनपकर्षाधिकरणम् ॥ १६ ॥

१७

**सान्त०** 'मरुद्भ्यः सान्तपनेभ्यो मध्यन्दिने चरु'मिति श्रुता सान्तपनीया मध्यन्दिने उपक्रान्ता दैवात् मानुषाद्वा प्रतिबलात्सायङ्कालं यावदुत्कृष्टाऽग्निहोत्रमुत्कर्षति, नेति संशयः। यद्यपि चात्र भिन्नप्रयोगयोः सान्तपनीयाग्निहोत्रयोर्न मिथः क्रमोऽङ्गम्, तथापि सायंकाले द्वयोः सन्निपतितयोरवश्यंभाविनि पौर्वापर्ये सान्तपनीयां कृत्वा क्रियमाणस्य चाग्निहोत्रस्य कालातिपत्तिप्रसङ्गे सति किं न्याय्यमिति युक्ता चिन्ता। तत्र सान्तपनीया तावत्स्वकालं मध्यन्दिनमतिपन्नैव, तस्याः कश्चिदुभयथाऽपि न विशेषः। अग्निहोत्रस्य तस्मिन् काले क्रियमाणस्य प्रणयनलोपः स्यात्। उत्कर्षे तु काललोपः। तत्र कस्यानुग्रहः ? कस्य लोप इति चिन्त्यते। तत्र-मुख्यत्वात्प्रणयनानुग्रहे साङ्गप्रयोगावधारणोत्तरकालप्राप्तेः कालस्य जघन्यत्वेन बाध इति प्राप्ते, उच्यते—

कालस्यानुपादेयत्वेन निमित्तविशेषणत्वात्तस्मिन्प्राप्तमग्निहोत्रं किञ्चिदङ्गमपहायापि कर्तव्यम्। तस्मादग्निहोत्रं हुत्वा सान्तपनीया समापनीया ॥

**इति सान्तपनीयाया अग्निहोत्रानुत्कर्षकताधिकरणम् ॥ १७ ॥**

१८

**षोडशी०** ज्योतिष्टोमे षोडशिनं प्रकृत्याम्नातम् तं पराञ्चमुक्थ्येभ्यो निगृह्णाति

---

१७

सान्तपनीया० पूर्वन्यायेन प्राप्तस्यानुत्कर्षस्याक्षिप्य समार्थनात्सङ्गतिः। श्रुतेति। चातुर्मास्येषु साकमेधाख्ये पर्वणीत्यर्थः। प्रतिबलात् प्रतिबन्धात्। उभयथापि अग्निहोत्रात्पूर्वमुत्तरं वानुष्ठानेऽपि। तस्मिन् काले स्वकाले। प्रणयनलोप इति। सान्तपनीयार्थप्रणीतस्याग्नेः पुनरग्निहोत्रार्थं मन्त्रवत्प्रणयनासम्भवात्तल्लोप इत्यर्थः। निमित्तेति। जीवनरूपेत्यर्थः। सायंकालावच्छिन्नजीवनस्य निमित्तत्वादित्यर्थः। किञ्चिदिति। उपादेयं प्रणयनादीत्यर्थः। कर्तव्य एव यथाशक्तीत्युपबन्धादिति भावः। सूत्रे सवनवदित्यस्य यथा प्रातस्सवनमुत्कृष्यमाणं माध्यन्दिनसवनमुत्कर्षति तथेत्यर्थः। स्पष्टमन्यत् ॥

इति सान्तपनीयाया अग्निहोत्रानुत्कर्षकताधिकरणम् ॥ १७ ॥

१८

षोडशी पूर्वोक्तानुत्कर्षापवादात्सङ्गतिः। उक्थ्येभ्य इति। उक्थ्यग्रहास्त्रयः तृतीय सवने गृह्यन्ते, तेभ्यः पराञ्चमनन्तरमित्यर्थः। नन्वनुक्तकालानामेवाङ्गानां प्रधानकालत्वमतो न स्वकालातिक्रम इत्यत आह—ग्रहं वेति। ग्रहणस्य यागार्थत्वाद्यागकाल एवानुष्ठानं तदुत्तरका-

षोडशिनमि'ति। तद्यदा देवादुक्थ्यानामुत्कर्षो भवति किं तदा षोडश्युत्कृष्यते नेति संशयः।

तत्र नोत्कर्षणं युक्तं स्तोत्रकालोपसङ्ग्रहात्।
उत्कर्षपक्षे हीयेत स्वकालात्स्तोत्रमस्य हि॥

यदि हि षोडशिग्रहयागाभ्यास उत्कृष्येत ततः प्रधानकालत्वादङ्गनाम् 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यादि'ति वचनात् तदङ्गभूतं स्तोत्रमप्युत्कृष्येत। तत्र 'समयाध्युषिते सूर्ये षोडशिनस्तोत्रमुपाकरोती'ति विहितः कालो बाध्येत। नन्वनुत्कर्षपक्षेऽप्युक्थ्यपरभावो बाध्येत, बाध्यतां क्रममात्रं हि, तत्कालस्तु बलीयानित्युक्तम्। तस्मादनुत्कर्षः। उच्यते—

क्रमोऽपि तु प्रधानाङ्गभूतत्त्वाद्बलवानसौ।
कालस्स्तोत्राङ्गभूतत्वाद्दुर्बलो बाधमर्हति॥

'तं पराञ्चमुक्थेभ्यः' इति वचनात् षोडशियागाभ्यासस्योक्थ्यपरभावोऽङ्गम्, सोऽनुत्कृष्यमाणे प्रधानाङ्गं सद्बाध्येत, न चैतद्युक्तम्। अतो वरमङ्गभूतस्तोत्राङ्गस्यैव कालस्य बाध इत्युत्कर्षः॥

इत्युक्थ्यानुरोधेन षोडश्युत्कर्षाधिकरणम्॥ १८॥

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां
पञ्चमाध्यायस्य प्रथमः पादः॥

---

लिकत्वाच्च स्तोत्रस्यापीति भावः। समयेति। अर्धास्तमित इत्यर्थः। क्रमम।त्रमिति। मात्रशब्दापदार्थत्वानुपादेयत्वयोः प्राबल्यहेत्वोर्व्यावृत्तिः। बलीयानिति। पदार्थत्वानुपादेयत्वाभ्यामिति भावः। अङ्गगुणविरोधन्यायेन सिद्धान्तमाह—प्रधानाङ्गेति। यदाप्युक्थ्यपरभावस्य केवलग्रहणाङ्गत्वं तदाप्यारादुपकारकस्तोत्रापेक्षयान्तरङ्गत्वेन तद्धर्मानुग्रहो न्याय्य इत्यपि वदन्ति। सूत्र प्रयोजने स्पष्टे॥

इत्युक्थ्यानुरोधेन षोडश्युत्कर्षाधिकरणम्॥ १८॥

इति श्रीमत्तत्सद्वैद्यनाथकृतायां शास्त्रदीपिकाव्याख्यायां
प्रभाख्यायां पञ्चमस्य प्रथमः पादः

## अथ पञ्चमाध्यायस्य द्वितीयः पादः

१

सन्नि० वाजपेये प्राजापत्याः पशवः 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ती' त्येकस्मिन्काले विहिताः सह प्रयोक्तव्याः। तेषामारादुपकारकाणां तन्त्रम्। द्रव्यसंस्कारास्तूपाकरणनियोजनादयः प्रतिपशु भेदेन कर्तव्याः। ते किमेकैकस्य कात्स्न्येंन कृत्वा ततोऽपरस्य कर्तव्याः? किं वोपाकरणं सर्वेषां कृत्वा ततो नियोजनमिति। तत्र एकैको हि पशुः स्वाङ्गान्यव्यवेतान्यपेक्षते। चोदकोऽप्येवमेव। अतः काण्डानुसमयो भवेत्। प्रयोगवचनावगतसाहित्यबलेन ह्येकैकस्य पशोर्धर्माः संश्लिष्टाः कर्तव्याः। प्रकृतौ चोपाकरणादीनामानन्तर्यं कृतम्। इहापि प्रतिकर्मावसायिना चोदकेन प्रतिपशु प्राप्यते। अत एकस्योपाकरणादिकं सर्वं गुणकाण्डं कृत्वा ततोऽपरस्य कर्तव्यम्। वाचनिकं तु साहित्यमारादुपकारकतन्त्रत्वादप्युपपन्नम्। उच्यते—

वचनेनैककालत्वं पशूनामिह चोदितम्।
न तत्प्रयोगवचनात् चोदकाद्वापि बाध्यते॥

काल्पनिकं प्रयोगवचननिबन्धनं साहित्यम्, चोदकं चानुमानम्, प्रत्यक्षवचनेन तु 'वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ती' त्येककालप्रयोगः पशूनामवगम्यते। अतो यस्मिन्नेव क्षणे एकस्योपाकरणं कर्तव्यमापतति, तस्मिन्नेवापरस्योपाकरणं कर्तव्यं सदशक्यतया केवलं न क्रियते। द्वितीये तु क्षणे न कश्चिद्धेतुर्येन पश्वन्तरं नोपाक्रियेत।

---

## अथ द्वितीयः पादः

१

सन्निपाते० अत्रोत्सर्गतः पदार्थानुसमयचिन्ता। क्वचित्तु तदपवादेन काण्डानुसमयचिन्तेति पादभेदः। अव्यवेतानि अव्यवहितानि। काण्डपदार्थस्समूहः। तमनु पश्चात्समयः प्राप्तिः पश्वन्तरपदार्थकाण्डस्येत्यर्थः। प्रयोगेति। तत्तत्पशुयागप्रयोगेत्यर्थः। तत्तत्पशुयागप्रयोगविधेर्मूलप्रमाणमाह—प्रकृतौ चेति। प्रतिकर्मावसायिना प्रतिकर्मसमाप्तेन भिन्नेनेति यावत्। गुणकाण्डम् अङ्गकाण्डम्। ननु प्राजापत्यैरिति तृतीयान्तैकपदोपादानात्साङ्गप्रधानानां साहित्यावगमात्सप्तदशाप्युपाकरणानि सह कार्याणीति पदार्थानुसमय एवोचितस्तत्राह—वाचनिकन्त्विति। आरादुपकारिषु मुख्यसाहित्यासम्भवा [ न्नेत ] रेष्वपि गौणप्रत्यासत्तिरूपसाहित्यपरतेत्यर्थः। वचनेनेति। उदाहृतप्रत्यक्षवचनेनेत्यर्थः। तथा च बलवतः प्रत्यक्षवचनस्यारादुपका [ रिविष ] यत्वरूपसङ्कोचायोगात् तदुक्तसाहित्यानुरोधेनैव दुर्बलप्रयोगविधिर्नेतव्यः। अतिदेशेन तु विरोध एव नास्ति, उपाकरणानन्तरं नियोजनानुष्ठानस्यात्रापि सत्वात्। प्रकृतावुपाकरणानावृत्तिरिह त्वावृत्तिरिति त्वार्थिकमिति भावः। अङ्गसाहित्यं विना प्रधानस्य फल-

अतः प्रथमं पदार्थं सर्वेषां कृत्वा ततो द्वितीयादिः कर्तव्यः। एवं दर्शपूर्णमासादिषु अनेकप्रधानसमवाये पदार्थानुसमय एव न्याय्यः, न तु काण्डानुसमय इति स्थितम्।

यत्र तु प्रधानविरोधो भवति पदार्थानुसमये, तत्र काण्डानुसमय एवेति। यथाऽश्वप्रतिग्रहेष्ट्यां शते सहस्रे वा पुरोडाशेषु श्रप्यमाणेषु यदि सर्वेषामधिश्रयणं कृत्वाऽऽद्यस्योद्वासनं क्रियेत, ततः स दह्येत। तस्मात्तत्र प्रधानविरोधेन न पदार्थानुसमयः॥

**इति पदार्थानुसमयकाण्डानुसमयाधिकरणम्॥ १॥**

**२**

**मुष्टि०** दर्शपूर्णमासयोराग्नेयाग्नीषोमीयनिर्वापयोः पदार्थानुसमये स्थिते संशयः, किमेकैकेन मुष्टिनाऽनुसमयः? उत चतुर्भिर्मुष्टिभिः? इति। यद्येकैको मुष्टिः पृथक् पदार्थः, तत एकैकेनाऽनुसमयः। अथ चतुर्मुष्टिनिर्वाप एकः पदार्थः, ततश्चतुर्मुष्टिभिरिति॥

**प्रतिमुष्टि यतीभावः पर्यवस्यन् हि दृश्यते।**
**मुष्टिना मुष्टिरेवातोऽनुसमयो न संघशः॥**
**उच्यते—अङ्गत्वं चोदनागम्यं पदार्थश्चाङ्गमेव नः।**
**चतुर्णामिह मुष्टीनां निर्वापः शास्त्रचोदितः॥**

अङ्गपर्यायो हि पदार्थशब्दः, तेन ययोः प्रधानयोः सहानुष्ठानम्, तयोर्यदङ्गं

---

साधनत्वानुपपत्तेस्तस्य काल्पनिकत्वम्। प्रकृतौ क्लृप्तस्य तु विकृतावनुमानमिति भेदः।एवमिति। 'पौर्णमास्यां पौर्णमास्या यजेत' इत्येककाले तन्त्रेण त्रिकोपादानान्निर्वापप्रोक्षणादिपदार्थानुसमय इत्यर्थः। संक्षेपेण 'कारणादभ्यावृत्तिः' इत्यपवादसूत्रार्थं दर्शयति—यत्र त्विति। 'यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेत्' इति विहितेष्टौ निमित्तसंख्याधिक्येन पुरोडाशसंख्याधिक्यात्प्रधानविरोध इत्यर्थः। प्रधानानां सन्निपाते साहित्ये एकैकस्य प्रधानस्य गुणानां सर्वकर्मकाण्डानुष्ठानमिति सूत्रार्थः॥

इति पदार्थानुसमयकाण्डानुसमयाधिकरणम्॥ १॥

२

मुष्टि० प्रधानाङ्गात्क्रियानेकः पदार्थ इति चिन्त्यते। तत्राद्यः फलसंशयः। तद्धेतुभूतस्तु विचाराङ्गसंशयो यदीत्यादिना दर्शितः। एकैको मुष्टिः एकैकमुष्टिनिर्वापः। प्रतीति। एकैकमुष्टिनिर्वापे सति यतीभावो यत्नः पर्यवस्यन् समाप्तो भवन्नित्यर्थः। अत इति। यत्नभेदात्स्कार्यभूतनिर्वापस्य भेदेन पृथक्पदार्थत्वादित्यर्थः। अनुसमयः आनन्तर्येण सङ्गमनीयः। सङ्घशः मुष्टिचतुष्टयसमूहेन तत्समूहो नानुसमेय इत्यर्थः। अङ्गपर्यायो हीति। क्रमस्यानुष्ठेयसम्बन्धित्वादङ्गस्यैव प्रयोगविधिनानुष्ठानबोधनात्पदार्थशब्देनाङ्गमेवात्र विवक्षितमिति भावः। एताव-

तदेकस्य कृत्वा परस्य कर्तव्यम्। 'चतुरो मुष्टीन्निर्वपती'ति शास्त्राच्च चतुर्मुष्टिनिर्वापोऽङ्गम्। एकैकस्तु मुष्टिस्तदवयवः, न पदार्थः, तथा विधानात्। पदार्थेन चानुसमयः न तदवयवैः। अतश्चतुर्भिरनुसमयः।

एवं कपालोपधानेऽपि नैकेकेनानुसमयः, किन्तु आग्नेयकपालानि सर्वाण्युपधाय, अग्नीषोमीयस्योपधानम्। एवं 'द्विर्हविषोऽवद्यती'त्यत्रापि नैकावदानेनानुसमयः। एवमञ्जनादिष्वपि योज्यम्॥

इति मुष्टिकपालाद्यनुसमयाधिकरणम्॥ २॥

३

संयुक्ते० दर्शपूर्णमासयोः 'द्विर्हविषोऽवद्यती'ति श्रुतम्। तत्र नैकेनाऽवदानेनानुसमय इति स्थितम्। इदानीं तु किं द्वाभ्यामवदानाभ्यामनुसमयः अथवावदानादिप्रदानान्तेनेति चिन्त्यते। तत्र—

वचनेन द्विसंख्याकमवदानं विधीयते।
तावानेकः पदार्थोऽतस्तावताऽनुसमीयते॥
नैवं होमविधेरर्थात् खण्डने प्रापिते सति।
विशेषमात्रं हविषो द्विरित्यत्र विधीयते॥

'चतुरवत्तं जुहोती'त्यवत्तहोमो विधीयते। न चाकृत्वाऽवदानमवत्तहो-

---

तापि कथमेकमुष्टिनिर्वापव्यावृत्तिस्तत्राह—चतुर इति। अङ्गत्वस्य विधिगम्यत्वादिति भावः। चतुर्मुष्टीति। यागमात्रपर्याप्तव्रीहिलाभे पृथक्करणरूपनिर्वापस्याप्राप्तेस्तदनुवादेन संख्यामुष्ट्युभयविधौ वाक्यभेदापत्तेश्च संख्यामुष्ट्युभयविशिष्टनिर्वाप एव विधीयत इति स एवाङ्गमिति भावः। तथेति। एकसंख्याविशिष्टयेनेत्यर्थः। एवमिति। 'कपालान्युपदधाति अष्टौ दक्षिणतः' इत्यष्टत्वसंख्याविशिष्टस्योपधानस्य विहितत्वादिति भावः। द्विरवदानेनानुसमयश्च सान्नाय्ये। पुरोडाशे त्ववदानादिप्रदानान्तेनानुसमयो वक्ष्यते। अत्र तु नैकावदानेनेत्येतावद्विवक्षितमिति न विरोधः। अञ्जनादिकमपि द्विबहुयजमानककुलायाहीनादावेकस्य नेत्रद्वयाञ्जनोत्तरमपरस्यापीत्येवं कार्यम्। अञ्जनादीत्यादिना वपनं 'एकविंशत्या पावयति' इति पावनञ्च गृहीतम्॥

इति मुष्टिकपालानुसमयाधिकरणम्॥ २॥

३

संयुक्ते० सान्नाय्यवत्पुरोडाशेऽपि प्रसक्तस्य द्व्यवदानानुसमयस्यापवादात्सङ्गतिः। वचनेनेति। 'द्विर्हविषोऽवद्यति' इत्यनेनेत्यर्थः। श्लोकं व्याचष्टे—चतुरवत्तमिति। 'उत्पत्तितादर्थ्यात्' इति दशमचतुर्थपादगताधिकरणटुप्टीकोक्तरीत्यावदानविशिष्टहोमविधावर्थाद्विशेषणी-

मसम्भव इत्यर्थप्राप्तमवदानं न विधातव्यम्। 'द्विर्हविषोऽवद्यती'त्यर्थप्राप्तस्यावदानस्य विशेषमात्रस्य विधानं 'हविषो द्विरिति' यद्यपि विधीयते, तथापि च दृष्टार्थत्वात् 'चतुरवत्तं जुहोती'त्यस्यावयवत्वेनैव विधेयत्वम्, न स्वातन्त्र्येण। अतोऽवदानादिप्रदानान्तेनानुसमयः॥

इत्यवदाने प्रदानान्तानुसमयाधिकरणम्॥ ३॥

४

वच० अग्नीषोमीये पशौ यूपधर्माः—अञ्जनम्, उच्छ्रयणम्, संमानम्, परिव्याणमिति यूपगणे चोदकप्राप्ताः किमेकैकशोऽनुसमेतव्याः? उताञ्जनादिना परिव्याणान्तेनानुसमय इति संशये, पूर्वेण न्यायेन पदार्थानुसमयः। नन्वञ्जनादिपरिव्याणान्तं 'यजमानो यूपं नावसृजेदि'ति प्रकृतावनवसर्गश्चोदकेनेह प्राप्तः कथमेकैकशोऽनुसमीयमाने शक्यते कर्तुम्। एवं मन्यते-प्रकृतावार्थिकोऽनवसर्गः यजमानेनाऽध्वर्योः साहाय्यमाचरताऽनुष्ठितः, तदनुवादमात्रं वचनम्। न चार्थिकं चोदकः प्रतिदिशति। अतः पदार्थानुसमयः।

नैवं नियोगतोऽप्राप्तेरनुत्सर्गो विधीयते।
वाक्यञ्चार्थवदेवं स्याद्वादमात्रं त्वनर्थकम्॥
गणेऽपि चोदकेनातः प्राप्यतेऽनवसर्जनम्।
तेनाञ्जनादिसंघोऽत्र संघेनानुसमीयते॥

इत्यञ्जनादिपरिव्याणान्तस्यानुसमयाधिकरणम्॥ ४॥

---

भूतावदानस्य प्राप्तिरित्यर्थः। नन्वेवमपि यद्धविषोऽवद्यतीति विशिष्टानुवादे वाक्यभेद इत्यत आह—हविषो द्विरितीति। अपादानत्वेन प्राप्तं हविरुद्दिश्य द्विरिति द्वित्वविधानम्। अपादानत्वञ्च हविषोऽवदान एव नान्यत्रे ति न विशिष्टानुवाददोष इति भावः। ननु चतुरवत्तमित्यवदानस्य विधेयत्वम् अवत्तस्य संस्कार्यत्वमित्येकप्रसरताभङ्ग इति नावदानविधायकत्वमत आह—यद्यपीति। अवयवत्वेन सम्पादकत्वेन दृष्टसम्भवेऽदृष्टार्थत्वायोगादिति भावः। अवदानसंयुक्ते होमेऽवदानेन प्रक्रमाद्धोमारम्भात्तदन्तम् अवदानादिहोमान्तं स्यादितरस्यावदानस्य होमार्थत्वादिति सूत्रार्थः॥

इत्यवदाने प्रदानान्तानुसमयाधिकरणम्॥ ३॥

४

वचनात्तु० पदार्थविचारस्य पदार्थानुसमयकोष्ठशोधनिकारूपतया व्यवधायकत्वाभावात्पादादावुक्तस्य पदार्थानुसमयस्यापवादसंगतिं सूचयति—पूर्वेणेति। साहाय्यमिति। अन्येन धृते यूपेऽञ्जनादेस्सौकर्यादित्यर्थः। नन्वनतिदेशेऽपि सौकर्यार्थमेव प्रकृतिवद्विकृतावप्यनवसर्गः स्यादित्याशङ्क्य प्रयोगवचनोक्तसाहित्यवशेन पदार्थानुसमयस्य विरोधात्सौकर्यमात्रेणानवसर्गो न युक्त इत्याशयेनोपसंहरति—अत इति। नियोगतः नियमेन। गणेऽपि यूपैकादशिन्यामपि॥

इत्यञ्जनादि परिव्याणान्तानुसमयाधिकरणम्॥ ४॥

५

पशु०अग्नीषोमीये पशाववदानानन्तरं प्रदाने प्राप्ते, वचनमिदमाम्नायते-'दैवतान्यवदाय न तावत्येव होतव्यम्, सौविष्टकृतान्यवद्यति, सौविकृष्टतान्यवदाय न तावत्येव होतव्यम्, ऐडान्यवद्यती'ति। तदेकदेवतेषु पशुगणेषु विचार्यते—किमेकस्य पशोर्दैवतसौविष्टकृतैडान्यवदायाऽपरस्यापि त्रयमवदातव्यम्? उत सर्वेषां दैवतान्यवदाय ततः सौविष्टकृतानि तत ऐडानि? इति। तत्र—

प्रकृतौ दैवतादीनामानन्तर्यमिहापि तत्।
एकैकस्य पशोः कार्यः काण्डानुसमयस्ततः॥

यद्येकस्य पशोर्दैवतान्यवदायापरस्य दैवतान्यवदीयेरन् ततः प्रथमस्य पशोर्यद्दैवतसौविष्टकृतानन्तर्यं चोदकप्राप्तं तद्बाध्येत। तस्मात्काण्डानुसमयः। नैवम्—

पश्वैक्यात्प्रकृतावर्थादानन्तर्यमनुष्ठितम्।
इह त्वनेकसाहित्यात्सजात्या नु समीयते॥

यावन्तः पदार्थाः कर्तव्याः ते मिथः संश्लिष्टाः कर्तव्या इत्येतावत् प्रकृतौ विवक्षितम्। तत्रैकत्वात्पशोर्दैवतसौविष्टकृतानन्तर्यमर्थात्संजातम्, न तु तदिह प्राप्यते। अत्र तु साहित्यसम्पत्तये समानजातीयैः समानजातीयानामनुसमयः दैवतैर्दैवतानामित्येवं कर्तव्यः॥

इति दैवताद्यवदानेषु पदार्थानुसमयाधिकरणम्॥ ५॥

६

नाना० राजसूये नानाबीजेष्टिः 'अग्नये गृहपतयेऽष्टाकपालं कृष्णानां व्रीहीणाम्,

---

५

पशुगण० पूर्वोक्तकाण्डानुसमयापवादात्सङ्गतिः। एकदेवतेषु प्राजापत्यादिषु। भिन्नदेवतेषु तु भिन्नदैवत्यहविर्मेलने विपर्यासप्रसङ्गेन पदार्थानुसमयाभावान्न तेषामुदाहरणत्वमिति भावः। सजात्या समानजात्या दैवतावदानत्वेन। न त्विति। आर्थिकस्यानतिदेशादिति भावः। पश्वेकत्वादिति। सौत्रहेतोः प्रतिव्यक्तिपश्वेकत्वात् प्रकृतिवदेकत्र त्रिकस्य प्राप्तेरित्यर्थः॥

इति दैवताद्यवदानेषु पदार्थानुसमयाधिकरणम्॥ ५॥

६

नानाबीजेषु० प्रत्येकमनुसमयस्यापवादात्सङ्गतिः। तन्त्रावृत्तिचिन्तनस्याध्यायासङ्गतेराह—फलेति। उलूखलस्याधिवर्तनं कृष्णाजिनोपरि स्थापनम् तस्मिन् बीजानामावापः प्रक्षेपः,

सोमाय वनस्पतये श्यामाकञ्चरुमि'त्यादि। तत्र प्रकृतितः प्राप्तमुलूखलं किं तन्त्रम्? उत भिन्नम्? इति विचारः। फलविचारश्चायम्। अधिकरणशरीरं तु किं कृष्णाजिनास्तरणोलूखलाधिवर्तनबीजावापावघातपरावपनविवेचनफलीकरणानि पृथक् पदार्थत्वादेकैकशोऽनुसमेतव्यानि? उत कृष्णाजिनास्तरणादिफलीकरणान्त एकः पदार्थः, तावता चानुसमयः? इति।

**तत्र नानापदार्थत्वं विधिभेदेन मन्यते।**
**तण्डुलीकरणांशत्वादपृथक्त्वं तु गम्यते॥**

यद्यपि 'कृष्णाजिनमधस्तादवस्तृणाति, शूर्पेण विविनक्ती'ति विधिभेदः, तथाऽपि तण्डुलभावनावयवत्वेन तद्विधानं न स्वातन्त्र्येण, अदृष्टार्थत्वप्रसङ्गात्। एका चासौ तण्डुलभावना कृष्णाजिनास्तरणादिफलीकरणपर्यन्तं प्रततेति तावानेकः पदार्थ इति तावताऽनुसमयः, 'संयुक्ते तु प्रक्रमादि'त्यत्र चतुरवत्तचोदनयाऽर्थप्राप्तावदाने संख्यामात्रं 'द्विर्हविष' इति विधीयते न तु द्वित्वविशिष्टमवदानमित्येकपदार्थत्वं निराकृतम्। इह तु सत्यपि विधिभेदेऽवयवत्वेन विधानादनन्यत्वमुच्यते। यत्तु तत्र सत्यपि विधिभेदेऽन्यत्वं नास्तीत्युक्तम्, तदिह सिद्धमेवोक्तमित्यनवद्यम्॥

**इति नानाबीजेष्ट्यधिकरणम्॥ ६॥**

**७**

**विकारे॰** दर्शपूर्णमासयोः 'अष्टावुपभृति गृह्णाती'ति प्रयाजानुयाजार्थं चतुर्गृहीतद्वयमेकस्यामुपभृति युगपद्गृहीतं तथैव पशौ प्राप्तम्। तत्रानुयाजानां द्रव्यविकारः श्रूयते 'पृषदाज्येनानुयाजान् यजती'ति। प्रयाजाज्यन्त्वविकृतमेव। तत्र द्वयोरसङ्करेऽवश्यं भाविनि चिन्त्यते-किं कालभेदेन तस्यामेवोपभृति द्वयं ग्रहीतव्यम्? उत तस्मिन्नेव काले पात्रभेदेनेति। तत्र—

---

शूर्पेण तुषनिरसनं परावपनम् कणेभ्यस्तण्डुलानां विवेचनम्। फलीकरणं तण्डुलमलचूर्णनिरसनम्। तण्डुलभावनेति। 'व्रीहीनवहन्ती' त्यनेनावघातेन तण्डुलीकरोतीत्यर्थकेनावाघातकरणकतण्डुलफलकभावनाविधानात्कृष्णाजिनास्तरणादेश्च तदन्तार्भावान्न स्वतन्त्रविधिविधेयत्वम्, किन्त्ववघातविधिप्राप्तानामेव नियमनमात्रमिति न भिन्नपदार्थत्वमित्यर्थः। एवञ्च सत्युलूखलतन्त्रत्वं फलितमिति ज्ञेयम्। सूत्रे विभवादेकेनैव सर्वावघातसिद्धेरित्यर्थः॥

इति नानाबीजेष्ट्यधिकरणम्॥ ६॥

७

विकारे॰ उलूखलवत्प्राप्तस्योपभृत्तन्त्रत्वस्यापवादात्सङ्गतिः। युगपदिति। कालैक्यं विनाष्टाविति निर्देशायोगादिति भावः। दधिमिश्राज्यं पृषदाज्यम्। असङ्कर इति। दृष्टार्थो-

पदार्थत्वाच्छ्रुतत्वाच्च पात्रैकत्वस्य सङ्ग्रहः ।
गुणत्वात्पाठकल्प्यत्वात् क्रममात्रं तु बाध्यते ॥

'अष्टावुपभृति गृह्णाती'ति श्रुतमेकपात्रत्वं पदार्थश्च । क्रमस्तु पदार्थानां गुणः पाठकल्प्यश्च । तत एकस्मिन्नेव पात्रे प्रयाजाज्यं गृहीत्वा प्रयाजेषु हुतेषु पश्चात्पृषदाज्यं ग्रहीतव्यमित्येवं प्राप्ते, उच्यते—

उभयोर्ग्रहणाङ्गत्वात्पात्रैक्यस्य क्रमस्य च ।
विकृतौ चानुमानेन प्राप्तेस्तुल्यं बलाबलम् ॥

एवं चाविशेषे सति प्रयाजाज्यग्रहणेनोपस्थितस्यानुयाजाज्यग्रहणस्याकरणे न किञ्चित् कारणमस्तीति तदेव पात्रान्तरमुपादाय ग्रहीतव्यम् ॥

इति पशौ प्रयाजानुयाजयोः पात्रभेदाधिकरणम् ॥ ७ ॥

८

प्रकृते:० 'अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेदि'ति नक्षत्रेष्टिं विधाय, उपहोमा विहिताः—'सोऽत्र जुहोति, अग्नये स्वाहा, कृत्तिकाभ्यः स्वाहे'ति । प्रकृतौ च प्रधानानन्तरं नारिष्ठहोमाः । ते चोदकेनात्र प्राप्ताः । तत्र संशयः—किमुपहोमान् हुत्वा ततो नारिष्ठहोमाः ? विपरीतं वा ? इति ।

तत्र प्रत्यक्षपाठेन प्रधानानन्तरश्रुतान् ।
उपहोमाननुष्ठाय नारिष्ठानामनुष्ठितिः ॥
उच्यते—क्लृप्तोपकारसाकाङ्क्षा विकृतिः प्राकृतं पुरः ।
गृह्णाति वैकृतं पश्चात्तदाकाङ्क्षावशीकृता ॥

---

त्ववनविधिवशेन सङ्करे वैगुण्यावगमादिति भावः । गुणत्वात् पदार्थधर्मत्वात् । पाठेति । ग्रहणमन्त्रपाठेत्यर्थः । तत इति । क्रमदौर्बल्यादित्यर्थः । उभयोरिति । एवञ्च द्वयोरप्यन्याङ्गत्वान्नान्योन्यं गुणप्रधानभाव इत्यर्थः । श्रुतत्वेनैकत्वस्य प्राबल्यमुक्तं निराकरोति—अनुमानेनेति । तथाच प्रकृतौ श्रुतत्वं न तु विकृतावित्यर्थः । तर्ह्येकत्वबाधे किं विनिगमकं तत्राह—एवञ्चेति । अनुष्ठानं प्रत्युपस्थितेरन्तरङ्गहेतुत्वात्तद्वशेनैकत्वबाध इत्याशयः । वस्तुतः क्रमस्य साक्षाद्ग्रहणाङ्गत्वमेकत्वस्य पात्रद्वारेति विप्रकर्षाद्दौर्बल्यमित्यप्याहुः ॥

इति पशौ प्रयाजानुयाजयोः पात्रभेदाधिकरणम् ॥ ७ ॥

८

प्रकृते:० इदानीं क्लृप्तक्रमाक्लृप्तक्रमयोः परस्परं क्रम आगन्तूनामन्ते निवेशेन चिन्त्यते । पूर्वञ्च प्राकृतक्रमादरस्योक्तस्याक्षेपेण समाधानादनन्तरसङ्गतिः । प्रकारशब्द उपकारपर्यायः । प्रधानेति । नक्षत्रेष्ट्या भावयेत्प्रकृतिवदिति प्रधानवाक्यैकवाक्यतयातिदेशकल्पनादित्यर्थः ।

प्रकारापेक्षा हि विकृतिभावना प्रत्यक्षश्रुतमपि संनिहितमक्लृप्तोपकारं परित्यज्य प्राकृतं प्रकारमुत्पादकपदार्थविशिष्टं प्रथमं गृहीत्वा पश्चात्सन्निध्याम्नाताङ्गप्रयोजनापेक्षावशेन वैकृतं गृह्णाति। तेन यत्र प्राकृतवैकृतयोरेकस्थानपतितयोः क्रमापेक्षा, तत्रावगतिक्रमानुसारेण प्राकृतं कृत्वा वैकृतं कर्तव्यम्। न च प्रत्यक्षपाठविरोधः, प्रधानवाक्यशेषेण हि प्रकृतिवच्छब्देन प्रापितात् प्राकृतात् पश्चादेव वैकृतं पठितं भवति। तस्मान्नारिष्ठान्कृत्वा पश्चादुपहोमाः कार्याः ॥

**इति नारिष्ठहोमानामुपहोमपूर्वभाविताधिकरणम् ॥ ८ ॥**

## ९

**कृत०** राजसूयेऽभिषेचनीयं सोमयागं विधाय, अनन्तरं विदेवनादयोऽभिषेकान्ताः पदार्था विहिताः। तत्राभिषेकोऽभिषेचनीयप्राकृताङ्गमध्येऽपकृष्टो 'माहेन्द्रस्तोत्रं प्रति अभिषिच्यत' इति। सोऽपकृष्यमाणः प्राचो विदेवनादीनपकर्षति ? नेति संशयः। तत्र—

**अपूर्वो ह्यभिषेकोऽतो न तदन्ताकर्षणम्।**
**करोति वेदिवत्तस्मात्तन्मात्रमपकृष्यते ॥**

'तथापूर्वमि'त्यत्र ह्येतदवस्थितम्—अपूर्वः पदार्थोऽपकृष्यमाणो न प्राचामपकर्षाय कल्पत इति। तेन यथा 'पूर्वेद्युरमावास्यायां वेदिं करोति'इति वेदिमात्रापकर्षः क्लृप्तक्रमत्वान्न पूर्वेषाम्, तथाऽत्राप्याभिषेकस्यैवापकर्षः, अन्ये 'त्वन्ते तु बादरायणः' इति न्यायादभिषेचनीयसकलप्राकृताङ्गोत्तरकाले कर्तव्या इति प्राप्ते, अभिधीयते—

**अभिषेकेण पूर्वेषाङ्क्रमः प्रत्यक्षपाठतः।**
**परत्वं प्राकृताङ्गेभ्यस्त्वनुमानेन गम्यते ॥**

---

तथा च येनैव पाठेनोपहोमानां प्रधानानन्तर्यं तेनैव नारिष्टहोमानन्तर्यमपीत्यर्थः। प्रकृतेः पूर्वोक्तत्वात्प्राकृतस्य प्रकृतिवच्छब्देनोक्तत्वाद् अपूर्वमुपहोमाद्यन्ते स्यात्, न ह्यविहिताया विकृतेरङ्गाम्नानम् विधानञ्च प्राकृताङ्गयुक्ताया एवेति सूत्रार्थः ॥

इति नारिष्ठहोमानामुपहोमपूर्वभाविताधिकरणम् ॥ ८ ॥

९

कृतदेशात्तु० आगन्तोरन्तनिवेशस्यापवादात्सङ्गतिः। माहेन्द्रस्य ग्रहस्य स्तोत्रं प्रति तत्काल इत्यर्थः। प्राचः स्वपूर्वपठितान्। अपूर्वः प्रकृतावविद्यमानः। अतश्चाक्लृप्तक्रम इत्यर्थः। 'अन्ते तु बादरायणस्तेषां प्रधानशब्दत्वात्' इति पूर्वाधिकरणे सूत्रान्तरम्। अत्रैव क्रमेति। विकृतावेवात्र विदेवनादेरभिषेकात्प्राक्पाठात्तत्पूर्वोऽनुष्ठानम् उताभिषेचनीयानन्तरपाठात्तदीयप्रा-

यद्यप्यत्राप्रकृतिपूर्वत्वेन प्रयाजादिवैलक्षण्यादपकर्षावस्थायां वेदिवदक्लृप्तः क्रमः, तथाऽप्यत्रैव क्रमकल्पनायामभिषेकात्पूर्वभावित्वं विदेवनादीनां प्रत्यक्षपाठनिमित्तम्। अभिषेचनीयप्राकृताङ्गोत्तरकालता तु तेषामनुमानात्, तच्च दुर्बलम्। अतः प्रत्यक्षपाठाद्विदेवनादीनामभिषेकात्पूर्वानुष्ठानात्तदन्तापकर्षः॥

इति विदेवनादीनाभिषेकपूर्वताधिकरणम्॥ ९॥

## १०

**प्राकृताच्च०** अग्नौ सावित्रहोमोखासम्भरणाद्यपूर्वपदार्थान् विधाय, पश्चाद्दीक्षणीयादयः प्राकृताः सगुणाः श्रुताः। तत्र दीक्षणायादीन् कृत्वा सावित्रादयः? उत विपरीतं वेति संदेहः। तत्र—

**प्रकृतेः पूर्वविज्ञानात्प्राकृतानां पुरस्क्रिया।**
**पश्चात्तु वैकृतानां स्याद्बादरायणदर्शनात्॥**

दीक्षणीयादिपुनःश्रवणन्तु गुणार्थत्वान्न पश्चादनुष्ठानं दीक्षणीयादीनाङ्गमयति। गुणानां परतन्त्रत्वात् यत्र गुणी तत्र तेषां विधानम्। अतः प्राकृतानां पूर्वमनुष्ठानम्। उच्यते—

**गुणार्थं श्रूयमाणानामपि प्रत्यक्षपाठतः।**
**पश्चादवगतेस्तेषां युक्ता पश्चादनुष्ठितिः॥**

---

कृताङ्गसमाप्त्यनन्तरमिति क्रमकल्पनायां कर्तव्यायामित्यर्थः। अनुमानादिति। अभिषेचनीयोत्तरत्वस्य प्रत्यक्षत्वेऽपि आतिदेशिकाङ्गोत्तरत्वमानुमानिकमेव। प्रकृतिवच्छब्दस्याश्रुतत्वादिति भावः। वेद्यान्तु प्रत्यक्षपाठः पौर्णमास्यां चरितार्थ इति वैषम्यं बोध्यम्। कृतमाहेन्द्रस्तोत्रदेशादभिषेकात्पूर्वेषां स एव देशस्स्यात्तेनाभिषेकेण प्रत्यक्षसंयोगात् इतरत्प्राकृताङ्गोत्तरत्वं न्यायमात्रमानुमानिकमिति सूत्रार्थः॥ ९॥

इति विदेवनादीनामभिषेकपूर्वताधिकरणम्॥ ९॥

## १०

प्राकृताच्च० आतिदेशिको सङ्गतिः। अग्नौ चयनप्रकरणे। 'सावित्राणि जुहोति' इति विहितः सावित्रहोमः। उखा अग्निधारणार्थं मृत्पात्रम्। तत्सम्भरणं सम्पादनम्। सगुणाः इह विधीयमानगुणयुक्ताः। बादरायणेति। अन्ते तु बादरायण इति तत्संमतेरित्यर्थः। सावित्राद्युत्तरप्रत्यक्षपाठात्तदानन्तर्यमेवोचितमिति शङ्कामपाकरोति—गुणार्थत्वादिति। ननु गुणपाठवशेन गुणस्यानुष्ठानेऽर्थद्गुण्यप्यनुष्ठेय इत्याशंक्याह—गुणानामिति। अनुष्ठेयगुणिपराधीनतया गुणिस्थान एव गुणानुष्ठानं न तु स्वस्थाने, स्वातन्त्र्याभावादित्याशयः। विध्यनुवादसाधारण्येन पाठमात्रस्योपस्थापकतया क्रमनियामकत्वोपपत्तेर्नानुमानिकपाठादर इत्याह—गुणार्थ इति। समानेति। भिन्नस्थानत्वे हि गुणस्य गुणिपर-

गुणवाक्येऽपि कीर्त्यमानानां दीक्षणीयादीनां तत्र तावदवगतिर्जायते। सा च प्रत्यक्षपाठनिमित्ता गुणगुणिनोः समानस्थानत्वात् तत्रैव गुणानामनुष्ठानं गमयतीत्यानुमानिकपाठनिमित्तं पूर्वानुष्ठानमनादरणीयम् ॥

**इति सावित्रहोमादीनां दीक्षणीयापूर्वप्रयोगाधिकरणम् ॥ १० ॥**

**११**

**सन्नि०** तत्रैव दीक्षणीयाद्यनन्तरं रुक्मप्रतिमोचनाद्याम्नातम्। प्रकृतौ च दीक्षणीयानन्तरं दीक्षितसंस्काराः। तदिह किं रुक्मप्रतिमोचनादि कृत्वा दक्षितसंस्कारा कार्याः? विपरीतं वेति संशयः।

**तत्र प्रत्याक्षपाठेन दीक्षणीयाद्यनन्तरम्।**
**रुक्मादिकमनुष्ठेयं पश्चाद्दीक्षितसंस्कृतिः ॥**
**उच्यते—दीक्षा दीक्षितसंस्कारानुपस्थापयति क्रमात्।**
**तेषामुपस्थितानां च नाऽक्रियाहेतुरस्ति नः ॥**

प्रकृतिक्लृप्तक्रमवशेनानन्तरमुपस्थितान् दीक्षितसंस्कारान् कृत्वा पश्चात् क्रियमाणस्य रुक्मप्रतिमोचनादेः पश्चात्पाठोपपत्तौ नावश्यमनन्तरानुष्ठानम्। अनन्तरपाठो ह्यवश्यं पठितव्यतयाऽप्युपपन्नो नानन्तर्यं गमयति। सावित्रहोमादेस्तु पश्चादनुष्ठाने पूर्वं न पाठः स्यादिति विशेषः ॥

**इति यजमानसंस्काराणां रुक्मप्रतिमोचनात्पूर्वभावित्वाधिकरणम् ॥ ११ ॥**

**इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां**
**पञ्चमाध्यायस्य द्वितीयः पादः ॥**

---

तन्त्रतया तद्देशत्वं स्यादत्र तु गुणिनोऽपि श्रवणाद् द्वयोरेकस्थानत्वमेवेत्यर्थः। प्राकृतदीक्षणीयादेः पुरस्तात्पूर्वं यत्सावित्रहोमादि तदपि न तद्देशं स्यादिति सूत्रार्थः ॥

इति सावित्रहोमादीनां दीक्षणीयापूर्वप्रयोगाधिकरणम् ॥ १० ॥

११

सन्निपातः० आपवादिकी संगतिः। तत्रैवेति। चयनप्रकरण एवेत्यर्थः। सौवर्णाभरणविशेषो रुक्मम् तत्प्रतिमोचनं कण्ठे धारणम्। संस्कारा वपनादयः। नन्वानन्तर्यप्रतीतेर्न पश्चाद्भावमात्रेणोपपत्तिरित्याशंक्याह—अनन्तरपाठो हीति। स्वरूपज्ञापनाय पाठस्यावश्यकत्वेऽवर्जनीयतया नानन्तर्ये तात्पर्यमित्यर्थः। सावित्राादावेतद्वैषम्यमाह—सावित्रेति। इह सामान्यतः परत्वानुग्रहवन्न तत्र पूर्वत्वानुग्रह इत्यर्थः। संस्काराणां रुक्मप्रतिमोचनादेश्च सन्निपाते युगपत्प्रसङ्गेऽन्ते वैकृतमिति यथोक्तमेव स्यादिति सूत्रार्थः ॥

इति यजमानसंस्काराणां रुक्मप्रतिमोचनपूर्वभावित्वाधिरणम् ॥ ११ ॥

इति श्रीमत्तत्सद्वैद्यनाथकृतायां शास्त्रदीपिका-
व्याख्यायां प्रभाख्यायां पञ्चमस्य द्वितीयः पादः ॥

## अथ पञ्चमाध्यायस्य तृतीयः पादः

१

**विवृद्धिः०** 'एकादश प्रयाजान् यजति, षडुपसदः' इति प्राकृतानां संख्याविवृद्धि-र्विकृतौ श्रूयते। सा किं प्रत्येकं भवति ? उत सर्वसम्पादिनीति चिन्त्यते—

**तत्रोद्दिश्य प्रयाजादि संख्या तस्योपदिश्यते।**
**उद्देश्यानां च साहित्यं शक्यते न विवक्षितुम् ॥**

तस्मात्प्रतिप्रयाजं प्रत्युपसदं च संख्या स्यादिति प्राप्ते, उच्यते—

**प्रयाजादिस्वरूपे हि नेयं संख्या विधीयते।**
**अशक्यत्वात्प्रयोगे तु लक्षिते सोपदिश्यते ॥**

न ह्येकैकशः समुदितानां वा स्वरूपेण संख्यान्वयः सम्भवति, एकस्य पञ्चानां चैकादशत्वासम्भवात्। अतः संख्यान्वयसिद्धये प्रयाजाः स्वप्रयोगं लक्षयन्ति। ते च तं लक्षयन्तस्तन्त्राभिधानात्सहावगतास्तथैव लक्षयन्ति। संख्या चेयमनेकवृत्ति-स्वभावा समस्तलक्षितप्रयोगगतापि शक्नोति सर्वेषां प्रयाजानामुपकर्तुम्। अतः सर्व-सम्पादिनी स्यात् ॥

**इति प्रयाजगतैकादशत्वादिसंख्यायाः सर्वसम्पाद्यत्वाधिकरणम् ॥ १ ॥**

२

**स्व०** 'षडुपसदः' इत्यत्र सर्वसम्पादिनी संख्येत्युक्तम्। अतस्तिसृणामुपसदां

---

## अथ तृतीयः पादः

१

**विवृद्धिः०** आवृत्तिनिबन्धनक्रमविचारात्पादान्तरत्वम्। तदुपोद्घातत्वेन चावृत्तिविशेष-श्चिन्त्यत इति सङ्गतिः। सर्वैः सम्पत्तुं शीलमस्यास्सा सर्वसम्पादिनी, समुदायगतेति यावत्। प्रत्येकमेकत्वेन समुदितानाञ्च पञ्चत्वेनैकादशत्वासम्भवादावृत्तौ लक्षितायां तद्बोधनीयम्। सा चैकपदोपात्तैः सहितैरेव प्रयाजैर्लक्ष्यत इति सर्वावृत्तावेकादशत्वसिद्धिरिति सिद्धान्त-माह—प्रयाजादीति। नन्वधिकप्रयोगानादायैकादशत्वं क्रियमाणमपि कथं पञ्चानां प्रयाजाना-मुपकारकं स्यात्तदवृत्तित्वादत आह – संख्येति। अनेकव्यासक्तसंख्यायाः पञ्चस्वपि सम्बद्धत्वान्न दोष इत्यर्थः। सूत्रे पृषदाज्यं यथा प्रत्येकानुयाजे तद्वदित्यर्थः। शेषं स्पष्टम् ॥

इति प्रयाजगतैकादशत्वसंख्यायास्सर्वसम्पाद्यत्वाधिकरणम् ॥ १ ॥

२

**स्वस्थानात्तु०** षडिति। प्रयाजैकादशत्वसंख्या तु चतुर्थोत्तमप्रयाजयोः चतुश्चतुर्वारमा-वृत्त्यैव सम्पाद्यते। तदङ्गभूतदेवताप्रकाशकमन्त्रयोर्मध्ये षण्णामन्येषामप्राकृतदेवत्यमन्त्राणां

द्विरभ्यासः। तत्र किं दण्डकलितवदावृत्तिः ? उत स्वस्थानविवृद्धिरिति चिन्तायाम्-आवृत्तिन्यायानां लोके त्रिरनुवाकः पठ्यतामित्यादौ दण्डकलितवदावृत्तिदर्शनादिहापि तथा स्यात्।

अतः सर्वाः सकृत्कृत्वा पुनः स्यादादितः क्रिया।
स्वस्थानात्तु विवृद्धय्रेरन् क्रमबाधोऽन्यथा भवेत्॥

तृतीयां कृत्वा प्रथमायां क्रियमाणायां प्राकृतक्रमबाधः स्यात्। अतस्तदबाधाय स्वे स्वे स्थाने द्विर्द्विरभ्यसितव्याः॥

इति स्वस्थानविवृद्ध्यधिकरणम्॥ २॥

३

समि० 'एकविंशतिमनुब्रूयादि'ति सामिधेनीविवृद्धिश्रुतावागमे कर्तव्ये सति, आगम्यमानानामृचां देशश्चिन्त्यते—किमन्ते निवेशः ? अथवा समिध्यमानवतीं समिद्धवतीं चान्तरा ? उत या धाय्याशब्दोक्ताः तास्तयोर्मध्ये, अन्ये त्वागन्तवोऽन्ते ? इति। तत्र 'अन्ते तु बादरायणः' इति न्यायात्सर्वाः प्राकृतीनामन्ते स्युरित्युपक्रममात्रेण प्रथमः पक्षः।

'इयं वै समिध्यमानवती असौ समिद्धवती, यदन्तरा तद्धाय्या' इति धाय्यानामाकाशत्वेन स्तवनं द्यावापृथिवीत्वेन संस्तुतयोः समिध्यमानसमिद्धवत्योर्मध्ये तासां निधानमनुमापयति। सर्वाश्चागन्तवो निधीयमानतया धाय्या इति सर्वासां तन्मध्ये निवेश इति द्वितीयः।

---

पश्चावाम्नानात्। आद्यत्रयाभ्यासे तु ततो मन्त्राणामपकर्षापत्तिस्स्यात्। अतस्तदुदाहरणस्यासम्भवादनुक्तिः। दण्डेति। दण्डमीयमानक्षेत्रवदित्यर्थः। क्षेत्रे हि मीयमाने यथा चतुर्हस्तादिमितदण्डपातनस्यैवावृत्तिस्तथात्राप्युपसत्त्रयं कृत्वा पुनस्तत्त्रितयकरणमित्यर्थः। स्वस्थानेति। एकोपसदो द्विवारमनुष्ठानानन्तरं द्वितीयादेरपि तथानुष्ठानमित्यर्थः। क्लृप्तक्रमत्वादिति सौत्रहेत्वर्थः॥ २॥

इति स्वस्थानविवृध्यधिरणम्॥ २॥

३

समिध्यमान० प्राकृतक्रमानुरोधस्य पूर्वोक्तस्यापवादात्सङ्गतिः। एकेति। प्रतिष्ठाकामस्येति वाक्यशेषः। अभ्यासेन संख्यापूरणे विचारायोगादाह—आगमे इति। संख्यायाः पृथक्त्वनिवेशित्वादित्यर्थः। 'समिध्यमानो अध्वर' इत्याद्या समिध्यमानवती। 'समिद्धो अग्न आहुत' इत्याद्या चापरा। उपक्रममात्रेणेति न्यायमान्द्यसूचनम्। इयमिति पृथिवीत्वेन, असाविति द्यौरूपेण, अन्तरेत्यन्तरिक्षत्वेन च स्तवनम्। अनुमापयतीति। स्तुतेर्विधेयविषयत्वनियमादित्यर्थः। ननु धाय्यासंज्ञकानामेवान्तरा निवेशः श्रुतो नान्यासामत आह—सर्वाश्चेति।

सिद्धान्तस्तु—न निधीयमानमात्रवचनो धाय्याशब्दः, स्तुतशस्त्राद्यर्थतया निधीयमानास्वपि तच्छब्दाभावात् । अतो यत्रैव धाय्याशब्दप्रयोगो वेदे दृष्टः पृथुपाजवत्यौ धाय्ये इत्यादिः ता एव धाय्याः, न त्वागन्तुकमात्रम् । अतस्तासामेव तन्मध्ये, अन्यासां त्वागन्तूनामन्त एव निवेशः । एवञ्च त्रैधातव्यायामधाय्याशब्दितायाः 'अग्ने त्री ते वाजिनेत्ये'तस्यास्त्रिष्टुभोऽन्ते निवेशात् 'त्रिष्टुभा परिदधाती'त्यादिदर्शनमुपपन्नं भवति । तस्माद् धाय्याशब्दितानामन्त एव निवेशः ॥

इत्यागन्तूनामन्ते निवेशाधिकरणम् ॥ ३ ॥

४

स्तोम० ज्योतिष्टोमे बहिष्पवमाने त्रयस्तृचाः-स्तोत्रीयः, अनुरूपः, पर्यासश्च । ते विवृद्धस्तोमकेषु क्रतुषु प्राप्ताः । तत्रागमेन संख्यापूरणं वक्ष्यते । तत्रागम्यमानानामृचामन्ते निवेशः, प्राग्वा प्राकृतात् पर्यासादिति संशयः । तत्र प्रत्यक्षपाठेन द्वादशाहे वृषण्वतां प्राक् पर्यासान्निविष्टत्वादन्यत्राप्यनुमीयते । द्वादशाहे षाडहिके द्वितीयेऽहनि विवृद्धस्तोमके प्राकृतौ स्तोत्रीयानुरूपौ पठित्वा, तत आगन्तवो वृषण्वत्य ऋचः पठिताः । ततः पश्चात्प्राकृतः पर्यासः पठित तदनेन पाठेन प्राक्पर्यासादागन्तूनां निवेशदर्शनात्, अन्यत्रापि सर्वत्र सर्वेषामागन्तूनां तत्रैव निवेश इति सामान्यतो दृष्टमात्रेण पूर्वपक्षप्रतिज्ञा । पर्यासशब्दश्चान्तवचनो लोके वेदे च प्रसिद्धः—क्षेत्रपर्यासो नदीपर्यास इत्येवमादिः । तद्यद्यागन्तवोऽन्ते स्युः, पर्याससमाख्या प्राकृतस्य तृचस्य बाध्येत । अतोऽपि प्राक्पर्यासान्निवेशः । उच्यते—

नेदृशेनानुमानेन शास्त्रार्थोऽध्यवसीयते ।
समाख्या प्रकृतावेव चरितार्थेति साऽप्यतः ॥

---

अनुगतप्रवृत्तिनिमित्ताभावेन रूढ्यसम्भवाद्यौगिक एव धाय्याशब्द इत्याशयः । त्रैधातव्यनामकेष्टिः ॥

इत्यागन्तूनामन्ते निवेशाधिकरणम् ॥ ३ ॥

४

स्तोम० विवृद्धेति । 'एकविंशेनातिरात्रेण प्रजाकामं याजयेत्' इत्येकविंशतिसंख्यारूपस्तोमस्य सर्वस्तोत्रेषु विधानस्थल इत्यर्थः । वक्ष्यत इति । दशम इति शेषः । वृषण्वतां तच्छब्दयुक्तमन्त्राणाम् । विवृद्धेति । पञ्चदशस्तोमकत्वादित्यर्थः । सङ्गतिमपि सूचयन् पूर्वपक्षसम्भावनार्थमाह—पर्यासेति । एवञ्च पूर्वत्र धाय्याशब्दवदिह पर्यासशब्दोऽस्तीति प्रत्यवस्था-

अन्ते निवेशमागन्तोर्न्यायप्राप्तं न बाधते ।
द्वादशाहविकारेऽपि केवलानां वृषण्वताम् ॥
प्राक्पर्यासान्निवेशः स्यादतिदेशविधेर्बलात् ।
अन्ये त्वागन्तवोऽन्ते स्युर्बादरायणदर्शनात् ॥
इति आगन्तूनां पर्यासोत्तरकालताधिकरणम् ॥ ४ ॥

५

अन्ते० त्रिवृद्धस्तोमकेऽन्वेव क्रतूपूत्तरयोर्माध्यन्दिनार्भवपवमानयोः सामागमः वक्ष्यते। तत्रागम्यमानानां साम्नां किमन्त्ये तृचे निवेशः ? अथवा गायत्रीबृहत्यनुष्टुप्स्विति। तत्रागन्तुत्वादन्ते निवेशः। यत्तु 'त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप्, अत्र ह्येवावपन्ति, अत एवोद्वपन्ती'ति तत्त्वविधिरूपत्वाद्यथाकथंचिन्नेयमिति। अपूर्वत्वात्तु वचनमेवेदमनारभ्याधीतं सर्वयज्ञविषयम्। अतो गायत्र्यादिष्वेव निवेशः।

अथवा नैवात्र विचारः। पूर्वोक्तबहिष्पवमानग्रहणप्रत्युदाहरणमात्रमिदम्। बहिष्पवमान एवान्ते विवेशः, उत्तरयोस्तु गायत्र्यादिष्वेव निवेशो वचनादिति ॥
इति बहिष्पवमान एवागन्तूनां साम्नां मध्ये निवेशाधिकरणम् ॥ ५ ॥

६

ग्रहे० 'अंशुं गृह्णाति, अदाभ्यं गृह्णाति, चित्रिणीरुपदधाति, वज्रिणीरुपदधाती,

---

नात्संगतिरिति सूचितम्। न्याय्येति। अनुरूपपर्यासयोः प्रकृतौ क्लृप्तक्रमत्वरूपेत्यर्थः ॥
इत्यागन्तूनां पर्यासोत्तरकालताधिकरणम् ॥ ४ ॥

५

अन्ते तु० अन्तनिवेशापवादात्सङ्गतिः। उत्तरयोरिति। बहिष्पवमानोत्तरभाविनोरित्यर्थः। बहिष्पवमाने तु न सामागमः, तत्र सामैकत्वस्य प्रत्यक्षविधिविहितत्वात्। एवञ्च तत्र ऋगागमः साम्नश्चाभ्यास इति स्थितिः। उत्तरयोस्तु सामागमः ऋचान्तु नागमः। 'अत्र ह्येवावपन्ति' इत्यावापस्य गायत्र्यादिऋगाधारत्वनियमादृचां तदसम्भवात्। अतस्तास्वेवर्क्षु निवेशे सति संशयमाह—तत्रेति। सिद्धान्तमाह—अपूर्वत्वादिति। अप्राप्तार्थकत्वादित्यर्थः। वचने सति पूर्वपक्षायोगादाह—अथवेति ॥
इत्यागन्तूनां साम्नां मध्यनिवेशाधिकरणम् ॥ ५ ॥

६

ग्रहेष्टकं० वचनाभावात्तु चित्रिण्यादीनामन्ते निवेशस्स्यादिति प्रत्यवस्थानेनाग्रे करिष्य-

त्यनारभ्याधीतं ग्रहेष्टकं किं सवनचितिशेषः, अतश्च प्रतिसवनं प्रतिचिति वावर्त्तनीयम्? उत यागाग्न्यङ्गं सकृदेव कर्त्तव्यम्? इति । प्रत्यक्षेण ग्रहैरिष्टकाभिश्च सवनानां चितीनां चारम्भदर्शनात् तादर्थ्यं मन्यते पूर्वपक्षवादी ।

निष्फलत्वात्सवनचितीनां 'फलवज्ज्योतिष्टोमाङ्गत्वं ग्रहाणाम्, इष्टकानाञ्च फलवदग्न्यङ्गत्वं युक्तम् । 'इष्टकाभिरग्निं चिनुते' इति च वाचनिकमेवाग्न्यङ्गत्वम् ॥

**इति ग्रहेष्टकादीनां क्रत्वग्निशेषत्वाधिकरणम् ॥६॥**

७

अन्ते० स्थिते सकृदनुष्ठाने क्रमश्चिन्त्यते— किं चित्रिण्यादीनामुत्तमायामुपधानम् ? उत मध्यमायाम् ? इति ।

**क्लृप्तक्रमाव्यवायार्थमन्तेऽनारभ्यचोदिताः ।**
**यां काञ्चिदिति वाक्यन्तु विधये न भवत्यलम् ॥**

सर्वासामिष्टकानां पठितेन कल्पितेन ब्राह्मणेन वा तद्वत्त्वात् सर्वासाञ्च मध्यमायामुपधानासम्भवात्, यासां मध्यमायामुपधानं प्राप्तं तदनुवादमात्रमिदम् 'यां काञ्चिद् ब्राह्मणवतीमिष्टाकामभिजानीयात्, तां मध्यमायां चितौ' इति, न तु विधायकम् । अतः क्लृप्तक्रमाणां प्राकरणिकीनामव्यवायार्थमनारभ्याधीतानामुत्तमायां निवेशः । उच्यते—

**वचनान्मध्यमायां स्युः प्रत्यक्षब्राह्मणोदिताः ।**
**जानातिरभिपूर्वोऽयं प्रत्यक्षे वर्तते यतः ॥**
**वाक्यं चार्थवदेवं स्याद्वादमात्रं त्वनर्थकम् ।**
**चित्रिण्यादेर्निवेशोऽतो मध्यमायां चितौ भवेत् ॥**

**इति चित्रिण्यादीनां मध्यमचितावुपधानाधिकरणम् ॥ ७ ॥**

---

मार्गविचारोपोद्घाततयास्य सङ्गतिः । अग्न्यङ्गं स्थण्डिलाङ्गम् । निष्फलत्वादिति । सोमयागाभ्यासैकदेशतया सवनस्य चितेश्चाग्न्यवयवरूपतया साक्षात्फलासाधनत्वादित्यर्थः । इष्टकानान्तु न न्यायमात्रेणापि तु वचनेनापीत्याह —इष्टकेति । सूत्रे औपानुवाक्यम् अनुवाक्याकाण्डाम्नातमित्यर्थः ॥

इति ग्रहेष्टकादीनां क्रत्वग्निशेषत्वाधिकरणम् ॥ ६ ॥

७

अन्ते स्युः० उत्तमायामिति । अन्तिमायां पञ्चम्यामित्यर्थः । तद्वत्त्वात् ब्राह्मणवत्त्वात् । प्रत्यक्षेति । प्रत्यक्षविधिविहिता इत्यर्थः ॥

इति चित्रिण्यादीनां मध्यमचितावुपधानाधिकरणम् ॥ ७ ॥

८

**प्राग्लोकं०** स्थितं मध्यमायां निवेश इति। तत्रापि किं प्राकरणिकीनामन्ते चित्रिण्यादीनां निवेशः? अथवा लोकम्पृणायाः प्रागिति? तत्राऽव्यवायार्थमन्ते स्युः लोकम्पृणायास्तु 'यदेवास्योनं यच्छिद्रं तदेतया पूरयति, लोकम्पृणच्छिद्रं पृणे'ति यत्पूरणार्थत्वम् तच्चित्यन्तरेऽपि सावकाशम्। न हि सा मध्यमामात्रविषया, मन्त्रमात्रस्य प्रत्यक्षविधानात् इष्टकायास्तु कल्प्यं विधानम्। अतश्चित्यन्तरेऽपि सावकाशत्वात् न न्यायप्राप्तः चित्रिण्यादीनामन्ते निवेशः शक्यते बाधितुमित्यन्ते निवेशः। **नैवम्**; अविशेषश्रुतस्य न्यायमात्रेण संकोचासम्भवात्॥

**मध्यममायामपि चितावन्ते लोकम्पृणा भवेत्।**
**पूरणार्थेति तस्याः प्राक् चित्रिण्यादेर्निवेशनम्॥**

**इति लोकंपृणातः पूर्वं चित्रिण्यादीनामुपधानाधिकरणम्॥ ८॥**

९

**संस्कृते०** आधानप्रकरणे पवमानहवींषि विहितानि। तान्याधानाद्विप्रकृष्यन्ते- 'द्वादशसु रात्रिष्वनुनिर्वपेदि'त्यादिभिः। तत्राग्निहोत्रादीनि किमाधानानन्तरमेव प्रवर्तन्ते? उत तेषु कृतेषु? इति विचारे-कर्तव्यानि, आहवनीयस्य निष्पन्नत्वादाधानमात्रस्य निरपेक्षस्य तदुत्पादकत्वात्। पवमानहविर्भिस्तु निष्पन्नस्यैवाहवनीयस्य

---

८

प्राक्० मध्यमचितिनिवेशसिद्धौ तद्विशेषचिन्तनात्सङ्गतिं सूचयन् आह—स्थितमिति। लोकंपृणेति सर्वान्तिमेष्टकोच्यते। ननु 'यदेवास्योनम्' इत्यादिप्रत्यक्षब्राह्मणविहितत्वान्मध्यमायामेव लोकं पृणेत्यत आह—मन्त्रमात्रस्येति। इतिकरणेन मन्त्रमात्रविधानादित्यर्थः। ननु 'सृष्टीरुपदधाति' इत्यादौ मन्त्रमात्रविधानेऽपि तदुपधेयेष्टकानामपि प्रत्यक्षब्राह्मणवत्त्वेन मध्यमचितिसम्बन्धस्य वार्तिकसम्मतत्वादिहापि तथा स्यादिति चेन्न; सृष्टीरितिशब्देन तन्मन्त्रकेष्टकानां निर्देशात्तासां तथात्वेऽप्यत्र लोकम्पृणाया ब्राह्मणनिर्देशाभावेन तथात्वासम्भवाल्लोकम्पृणेति मन्त्रमात्रस्यैव विधौ निर्देशादित्याशयः। सावकाशत्वे सति न न्यायप्राप्त इत्यादिरन्वयः॥

इति लोकम्पृणातः पूर्वं चित्रिण्यादीनामुपधानाधिकरणम्॥ ८॥

९

संस्कृते० अङ्गभूतक्रमप्रसङ्गादनङ्गमप्यार्थिकं पौर्वापर्यमात्रमतः प्रभृति चिन्त्यते। विप्रकृष्यन्त इति। आधानोत्तरं कालविलम्बेन क्रियन्त इत्यर्थः। 'सद्यो निर्वपे' दिति पक्षे विचारायोगादेतदुक्तिः। निरपेक्षस्येति। 'अग्निमाधत्ते' इत्यग्निरूपसाध्यसंयोगेनैव तदुत्पत्तेः, पवमानेष्टयस्तु स्वरूपतोऽवगत्युत्तरं भाष्यसम्मतेन 'यदाहवनीये जुहोति' इतिवाक्येनाधान-

संस्कारमात्रं क्रियते। पूर्वमेव त्वाहवनीयादयो निष्पन्नाः, निष्पन्नेषु तेषु भवितव्यं कर्मभिरिति प्राप्ते—

उच्यते–न निरपेक्षमाधानमग्नीनामुत्पादकम्, पवमानहविषामपि तदुत्पादकत्वात्। न च विकल्पः, तेषामाधानोत्तरकाले विधानात्। अतः समुच्चितानां तदुत्पादकत्वान्न तेभ्यः प्रागाहवनीयनिर्वृत्तिः। यदाऽप्याधानाङ्गं पवमानहवींषि, तदाऽप्यनङ्गेन प्रधानेन साध्यानिष्पत्तेस्तदुत्तरकालमेवाग्निनिष्पत्तिः। यत्तूक्तम् निष्पन्नस्यैवाग्नेः संस्कारमात्रं हविर्भिरिति, तथाऽप्यस्य संस्कारस्याहवनीयकार्योपयोगित्वात्तेन विना निष्पन्नस्याप्यग्नेरग्निहोत्रादिकार्याक्षमत्वात्तदुत्तरकाले एव कर्मणां प्रवृत्तिः॥

इति इष्टिसंस्कृतेऽग्नावग्निहोत्राद्यनुष्ठानाधिकरणम् ॥ ९ ॥

## १०

सञ्चिते॰अग्निचिद्व्रतानि 'वर्षति न धावेदि'त्यादीनि चयनानन्तरमेव भवन्ति? क्रत्वन्ते वेति संशये—

धात्वर्थश्चयनं भूतं निमित्तं तदनन्तरम्।
व्रतान्यतः प्रवर्तेरन्नाहिताग्निव्रतादिवत्॥
नैवम्—भावनाया निमित्तत्वं धातुस्तदुपसर्जनम्।
तस्याश्च फलनिर्वृत्त्या निर्वृत्तिरुपलक्ष्यते॥

न ह्यत्र चयनस्वरूपनिर्वृत्तिर्निमित्तम्, तत्करणिका त्वग्निकर्मिका भावना भूता निमित्तम्। तस्याश्चान्युपकारो भाव्यः, सोऽपि च क्रतुं साधयतोऽग्नेर्धार-

---

सिद्धाहवनीयोद्देशेन तत्संस्कारार्थतया विधीयन्ते। प्रसिद्धपदार्थकत्वसंभवे 'यूपं तक्षति' इतिवदप्रसिद्धपदार्थकत्वानौचित्यादित्याशयः। न निरपेक्षमिति। न ह्याधानसाध्यत्वमाहवनीयस्य तदुत्पत्तिवाक्यादवगम्यते, अग्निमित्येव श्रवणात्। किन्तु 'दिवाहवनीयम्' इति गुणवाक्यालोचनया पश्चादेवेति पवमानेष्टीनामपि तदुत्पादकत्वं तुल्यमिति भावः। तेषामिति। अनुनिर्वपेदित्याधानपश्चाद्भावस्य समुच्चयं विनासम्भवादित्यर्थः। यदापीति। वार्तिककृन्मत इत्यर्थः॥

इतीष्टिसंस्कृतेऽग्नावग्निहोत्रानुष्ठानाधिकरणम् ॥ ९ ॥

## १०

सञ्चिते॰आहिताग्निव्रतेति। 'आहिताग्निर्न क्लिन्नं दार्वादध्यात्' इत्यादिव्रतानि यथाधानानन्तरमेव प्रवर्तन्ते तद्वदित्यर्थः। एवञ्चाहिताग्निव्रतानामग्निहोत्रादिवैषम्यस्य पूर्वाधिकरणगुणसूत्रोक्तस्यावष्टम्भेनात्र पूर्वपक्षकरणात्सङ्गतिरपि सूचिता। नन्वेवमपि चयनकर्मिका भावनैव भूता निमित्तमिति चयनानन्तरमेव व्रतापत्तिरत आह - नहीति। 'कर्मणि भूत' इति चानुवर्तमाने 'अग्नौ चेः' इति सूत्रेण कर्तरि चिनोतेः क्विप्प्रत्ययविधानादग्नि-

णम्, तच्चाक्रतुसमाप्तेर्विततम्, न ततः प्राग् निर्वृत्तं भवति। तन्निर्वृत्त्या च विना न भावनानिर्वृत्तिः, फलापवर्गित्वाद्भावनानाम्। आधानस्य त्वग्निगतमदृष्टम् भाव्यम् तच्चानन्तरमेव निर्वृत्तमिति विशेषः ॥

इत्यग्निचिद्व्रतानां क्रत्वन्तेऽनुष्ठानाधिकरणम् ॥ १० ॥

११

परेणा० 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणः' इतीष्टिः, 'दण्डेन दीक्षयती'त्यादि च श्रूयते। तत्र किं सर्वैर्दीक्षितो भवत्युतेष्ट्यैव? दण्डादीनि तु तद्व्यञ्जनानीति। सर्वेषां तादर्थ्यावगमाददृष्टार्थानां चैकप्रयोगविधिसंग्रहात्समुच्चयसिद्धेः सर्वान्ते दीक्षासंग्रह इति प्राप्ते, अभिधीयते—

निरपेक्षैव वाक्येन दीक्षार्थेष्टिर्विधीयते।
दण्डादि त्वक्रियारूपं तद्व्यञ्जनतयोच्यते ॥

'दीक्षिष्यमाणः' इति लृट् क्रियार्थायां क्रियायामुपपदे विधीयते। तेन दीक्षार्थत्वमिष्टेः। दीक्षा च क्रत्वङ्गभूतयमनियमपरिग्रहः, तं करिष्यमाणस्य पुरुषस्य दीक्षिष्यमाणशब्दनिर्दिष्टस्य संस्कारार्थेष्टिः। सा च निरपेक्षाऽवगम्यते। तद्यदि दण्डादिश्रवणमन्यथा नोपपद्येत ततो नैरपेक्ष्यं बाध्येत। तत्तु व्यञ्जनतयापि उपपन्नं न निरपेक्षश्रुतिं बाधितुं क्षमते। किञ्च दण्डादीनि द्रव्यरूपाणि नोदासीनानि संस्कारं जनयन्ति। न चैषामाश्रयभूता इतिकर्तव्यताभूता वा काचित् क्रिया श्रूयते। ततः

---

कर्मिका चयनकरणिका भावनैव भूता निमित्तम्। अग्नेश्च स्वरूपेण चयनकर्मत्वायोगेन क्रतुं साधयतस्तस्य धारणोपकारद्वारा तत्पर्यवसानात् तस्य च यावत्क्रतुसमाप्त्यनपवर्गात् क्रत्वन्त एव तादृशभावनाया भूतत्वमिति तदनन्तरमेव व्रतानीत्यर्थः। दृष्टान्ते वैषम्यमाह—आधानस्य त्विति। अदृष्टमित्येकवचनेन पवमानेष्टिप्रतीक्षा निरस्ता। आहवनीयत्वस्याधानभाव्यत्वाश्रवणादिति ॥

इत्याग्निचिद्व्रतानां क्रत्वन्तेऽनुष्ठानाधिकरणम् ॥ १० ॥

११

परेण० चयनमात्रेणाग्निचित्त्वं यथा न भवति तथेष्टिमात्रेण दीक्षितत्वमपीति प्रत्यवस्थानात्सङ्गतिः। ननु दीक्षिष्यमाण इति शानजुक्तकर्त्रर्थतावगमात्तत्संस्कारार्थैवेष्टिरिति कथं दीक्षार्थतेत्यत आह—दीक्षा चेति। साक्षाद्यमनियमपरिग्रहार्थत्वस्येष्टावसम्भवात्कर्तृनिष्ठयमनियमपरिग्रहानुकूलयोग्यतारूपसंस्कारद्वारा दीक्षार्थत्वं लृटा बोध्यत इत्यर्थः। व्यञ्जनतयापीति। 'तत्करोति तदाचष्टे' इत्याचष्ट इत्यर्थेऽपि णिचो विधानादिति भावः। न केवलमिष्टिवाक्यानुरोधाद्दण्डादीनां व्यञ्जकत्वाश्रयणम् अपितु जनकत्वसम्भवादपीत्याह—किञ्चेति। नन्वभि-

कथं दण्डादिभिः संस्कारो जन्यत इति न ज्ञायते। अभिव्यक्तिस्तु दृष्टत्वात्प्रमाणान्तरदृष्टसंयोगादिवशेनैव शक्यते सम्पादयितुम्। तस्मादिष्टयन्ते एव दीक्षितस्याभिव्यञ्जनमात्रार्था दण्डादय इति, इष्टयन्त एव दीक्षितधर्माः प्रवर्तेरन्॥

इति दीक्षाया इष्टिसिद्धताधिकरणम्॥ ११॥

## १२

अङ्ग० क्रत्वन्तराणामैन्द्राग्नादीनां काम्यानां नैमित्तिकानां च क्रमेण पठितानामङ्गानामिव पाठवशात्क्रमनियममाशङ्क्य स्वयमविधायकत्वाद्विधायकस्य चैषामेकस्याभावान्नानाप्रयोगवचनेकैकश्येन विधीयमानानां मिथोऽनपेक्षणादनियमेन कामानां निमित्तानां चोपनिपातान्नास्ति क्रमनियम इति स्थितम्॥

इति काम्येष्टीनामनियमेनानुष्ठानाधिकरणम्॥ १२॥

## १३

य एते० क्रत्वन्तराणामनियम इति स्थितम्। क्वचिद्वचनबलात्पौर्वापर्यं भवति। तथाहि श्रूयते—'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः तस्माद्येतेनेष्ट्वान्येन यजेते' ति। तत्र किमेतच्छब्दः सर्वसंस्थं ज्योतिष्टोमं निर्दिशति? उताग्निष्टोमसंस्थमेवेति।

तत्राविशेषतः सर्वसंस्थोऽनेन विमृश्यते।
अग्निष्टोमस्तु नित्यत्वात्संस्था ह्यागन्तवो यतः॥

---

व्यक्तिरपि क्रियाविशेषाध्यवसायं विना कथं तत्राह —अभिव्यक्तिस्त्वति। लोके सम्बद्धस्यैव व्यञ्जकत्वदर्शनातसम्बन्धान्तरासम्भवे संयोगस्यैव निश्चय इत्यर्थः। आदिनाध्वर्युकर्तृकत्वाक्षिप्तं समर्पणमुक्तम्। आवेदनात् 'दीक्षितमावेदयति' इति विहितात्परेणानन्तरं दीक्षितस्यादिति सूत्रार्थः। 'एनपाद्विताया' इत्यत्र पञ्चम्या अभ्युसंङ्ख्यानमुक्तप्रयोगबलेन कार्यमित्याहुः॥

इति दीक्षाया इष्टिसिद्धताधिकरणम्॥ ११॥

## १२

अङ्गवत्० इह क्रमापवादात् सङ्गतिः। 'ऐन्द्राग्नमेकादशकपालं निर्वपेद्रुक्काम:' इत्यादिविहिताः काम्याः। भेदनहोमादयो नैमित्तिकाः। स्वयमिति। पाठस्याविधायकत्वादित्यर्थः। विधाकस्य प्रयोगविधेः॥

इति काम्यानामनियमेनानुष्ठानाधिकरणम्॥ १२॥

## १३

य एतेनेति० स्थितमित्यनेनोक्तस्योत्सर्गस्यापवादात्सङ्गतिः। अविशेषत इति। सर्वसंस्थासु ज्योतिष्टोमस्याविशेषादित्यर्थः। अनेन एतच्छब्देन। सिद्धान्तमाह—अग्निष्टोम-

ज्योतिष्टोमस्य ह्यग्निष्टोमसंस्था नैजं रूपमिति तादृश एव प्रतीयते न संस्थान्तरयुक्तः, तेषामागन्तुत्वात्। अपि च 'एतेने'ति करणनिर्देशाज्ज्योतिष्टोमकरणिका भावना इष्ट्वेति शब्देन कथ्यते। न च संस्थासु तस्य करणत्वम्, आश्रयमात्रत्वात्। न च संस्थानां क्रतुभावानान्तर्भावः, फलार्थत्वात्। अग्निष्टोमसंस्था तु क्रतुभावनान्तर्गतेति तत्संस्थस्यैव परामर्शः ॥

इति यज्ञानामग्निष्टोमपूर्वकत्वाधिकरणम् ॥ १३ ॥

१४

**अथा०** एतच्छब्दार्थे निरूपिते, तदपेक्षोऽन्यशब्दः किं संस्थासु वर्तते? उताग्निष्टोमान्यमात्र इति संशये,

संस्था एवान्यशब्देन कथ्यन्ते प्रकृता हि ताः।
न त्वेवं स्यान्न संस्थानामस्ति प्रकरणं यतः॥
ज्योतिष्टोमाधिकारोऽयं वाक्यशेषे च कीर्तनात्।
यज्ञानामिति शब्देन सर्वे सन्निहिता हि ते॥

तस्माज्ज्योतिष्टोमान्यत्वाविशेषात्संस्थानामेकाहाहीनसत्राणां चायमन्यवाद इति सर्वेषां तेषां ज्योतिष्टोमात्पश्चाद्भावोऽङ्गमनेन वाक्येन विधीयते॥

इति ज्योतिष्टोमविकाराणामग्निष्टोमपूर्वकत्वाधिकरणम्॥ १४ ॥

---

स्त्विति। अनेन विमृश्यत इत्यन्वयः। नित्यत्वात् अग्निष्टोमसंस्थायाः क्रत्वर्थतया स्वाभाविकत्वात्। संस्थासु अग्निष्टोमातिरिक्तसंस्थासु। आगन्तवः तत्तत्फलकामनाधीनाः। नैजं स्वाभाविकम्। तेषां संस्थान्तरयुक्तानाम्। एतच्छब्दरूपप्रकृतिवत्तृतीयारूपप्रत्ययसामर्थ्यादप्येवमित्याह—अपिचेति। अग्निचिदित्यत्र तन्यायोक्तिरिह श्लोकेऽनुक्तिः॥

इति यज्ञानामग्निष्टोमपूर्वकत्वाधिकरणम्॥ १३ ॥

१४

अथान्येनेति। सङ्गतिं सूचयन्नाह—एतदिति। प्रकृता हीति। अन्यशब्दः सर्वनामतया पूर्वप्रकृतभिन्नं सन्निहितमभिधत्ते। संस्थानाञ्च ज्योतिष्टोमाविनाभावेन प्रकरणादुपस्थितिरित्याशयः। संस्थानां स्वतोऽप्रकृतत्वाद्वाक्योपात्तयज्ञशब्दकृतोपस्थितेर्बलवत्वादग्निष्टोमभिन्नयज्ञमात्रमन्यपदार्थ इति सिद्धान्तमाह—न त्वेवमिति। अन्यवादः अन्यत्वेन वादः॥

इति ज्योतिष्टोमविकाराणामग्निष्टोमपूर्वकत्वाधिकरणम्॥ १४ ॥

१५

एक० पूर्वाक्षेपेणेदमारभ्यते । न सर्वनिर्देशः, किं त्वेकस्तोमानां त्रिवृदग्निष्टोमः, पञ्चदश उक्थः, एकविंशः षोडशीत्यादीनामेव । कुतः ? वाक्यशेषात् । 'यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते' इत्यादेरविशेषश्रवणं वाक्यशेषेण विशेषेऽवस्थाप्यते ।

**न त्वेवमन्यशब्देन ह्यविशेषः प्रतीयते ।**
**वाक्यशेषस्तु संयोगमात्रेणैवोपपद्यते ॥**

'यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयती'ति विनापि व्याप्त्या संयोगमात्रेण त्रिवृदादीनामेकस्तोमकेष्वपि दीपकत्वं सम्भवतीत्यविशेषात्सर्ववाद इति स्थितम् ॥

इति एकानेकस्तोमानामग्निष्टोमपूर्वकत्वाधिकरणम् ॥ १५ ॥

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां
पञ्चमाध्यायस्य तृतीयः पादः ॥

---

१५

एकस्तोमे० सङ्गतिमाह—पूर्वेति । एकेति । त्रिवृदादिमध्ये एक एव यत्र स्तोमस्तेषामित्यर्थः । तानेव षड्रात्राद्यहीनयागानुदाहरति—त्रिवृदिति । इत्यारभ्य वाक्यशेषेणेत्यन्वयः । 'स तं दीपयति' इति च वाक्यशेषः । यः पञ्चदशस्स तं यस्सप्तदशस्स तं य एकविंशस्स तं इत्यस्यारभ्येत्यनेनोपक्षेपः । अत्र यो वै त्रिवृदादिस्तोमः प्रकृतितोऽन्यं क्रतुमापद्यते प्राप्नोति स स्तोमस्सकलक्रतुं दीपयतीत्युक्त्या स्तोमस्य सकलक्रतुसम्बन्धः प्रतीयते । स्तोमान्तरसत्वे त्वेकदेशगतस्य दीपकत्वं न युज्यत इत्येकस्तोमकक्रतुप्रतीतिरित्यभिप्रायः । संयोगमात्रेणेति । सत्तामात्रेणेत्यर्थः । सम्भवतीति । प्रकृतावभ्यस्तस्य विकृतिदीपकत्वमनुष्ठानसौकर्येण सम्भवतीत्यर्थः । पूर्वार्धेन चोक्ताधिकरणवैषम्यमुक्तम् । एकस्तोमे वान्येनेति । कुतः ? वाक्यशेषे तादृशक्रतूनां समभिव्याहारादिति सूत्रार्थः ॥

इत्येकानेकस्तोमानामग्निष्टोमपूर्वकत्वाधिकरणम् ॥ १५ ॥

इति श्रीमद्रामभट्टात्मजतत्सद्वैद्यनाथकृतायां
शास्त्रदीपिकाव्याख्यायां प्रभाख्यायां
पञ्चमस्य तृतीयः पादः ॥

## अथ पञ्चमाध्यायस्य चतुर्थः पादः

१

क्रम० किं श्रुत्यर्थाभ्यां तुल्यबलः पाठः ? उत दुर्बलः ? इति चिन्त्यते। तत्र 'आश्विनो दशमो गृह्यते' इति श्रुतम्। किमाश्विनस्य पाठक्रमात् तृतीयस्थाने ग्रहणम् ? उत श्रुतिबलाद्दशम इति। तथा 'अग्निहोत्रं जुहोति, यवागूं पचती'ति किं पाठवशाद् हुत्वा पक्तव्यम् ? उतार्थवशाद्विपर्यय इति ? प्रामाण्याविशेषादनियमं मन्वानस्योत्तरम्--

क्रमे श्रुत्यैव विहिते पाठतः कोऽनुकल्पयेत्।
प्रयोजनविरोधे वा कः पाठमनुरुध्यते॥
हुत्वा हि पचमानस्य भवेद् द्वयमनर्थकम्।
पाकश्चैव यवागूश्च तां पक्त्वा जुहुयादतः॥

इति पाठक्रमापेक्षया श्रुत्यर्थयोर्बलवत्त्वाधिकरणम्॥ १॥

२

अव० दर्शपूर्णमासयोः सान्नाय्यधर्माः पूर्वं प्रवर्तन्ते, पश्चादाग्नेयधर्माः। प्रदानं त्वाग्नेयस्य प्रथमम्, पश्चात्सान्नाय्यस्य, ततः स्विष्टकृदवदानम् प्रयाजशेषाभि-

---

### अथ चतुर्थः पादः

१

क्रमलोपः० अत्र क्रमप्रमाणबलाबलचिन्तनात्पादभेदः। पूर्वन्तु क्वचित्तच्चिन्तनं प्रसङ्गान्न मुख्यतयेति। अग्निहोत्रं हुत्वा यवागूं पचतीति श्रुतिसत्वे पाकस्यादृष्टार्थतैवेति नार्थप्रमाणस्य तत्र प्रसङ्ग इति तयोर्विरोधाभावाद्बलाबलानुक्तिः। किमाश्विनस्येति। 'ऐन्द्रवायवं गृह्णाति मैत्रावरुणं गृह्णाति आश्विनं गृह्णाति' इति पाठक्रमात्तृतीयस्थानेऽपि कदाचित् ग्रहणम् ? उत दशम इति श्रुतिबलाद्दशम एवेति संशयार्थः। प्रामाण्याविशेषादिति। दशसंख्यापूरकत्वाभिधायकतया दशपदेनापि क्रमानभिधानादाक्षेपकत्वस्य चोभयत्र साम्यादित्याशयः। श्रुत्यैवेति। दशपदाक्षिप्तक्रमस्यैव वाक्ये विधेयत्वात्पाठस्य तु पदार्थबोधकत्वेनान्यथासिद्धेर्न क्रमकल्पकतेत्यर्थः। अन्यत्तूक्तप्रायम्। अर्थशब्दाभ्यां पाठक्रमस्य कोपो बाध इति सूत्रार्थः। स्पष्टमन्यत्॥

इति पाठक्रमापेक्षया श्रुत्यर्थयोर्बलवत्त्वाधिकरणम्॥ १॥

२

अवदान० पूर्वाधिकरणसिद्धान्तहेतुश्रुत्यर्थयोरभावात्प्रत्युदाहरणसङ्गतिः। यदुक्तं मुख्यक्रमाधिकरणे तदेतच्चतुर्थपादे वक्ष्याम इति तदिदमुच्यते—स्विष्टकृदिति। स्विष्टकृद्यागस्तु

धारणम्, वेद्यामासादनं च किं प्रवृत्तिक्रमात्सान्नाय्यस्य पूर्वं भवति ? उत मुख्यक्रमादाग्नेयस्येति ? प्रवृत्तिमुख्ययोर्बलाबलाज्ञानात्सन्देहे ऽ नियमे प्राप्ते—

मुख्यक्रमो बलीयानित्याह । तस्मिन्किलाश्रीयमाणे प्रथम एकः पदार्थः प्रधानाद्विप्रकृष्यते । अन्ये सर्वे सन्निकृष्टा भवन्ति । प्रवृत्तिक्रमे पुनराश्रीयमाणे बहूनां विप्रकर्षः । तस्मान्मुख्यक्रमो बलीयान् । न चात्र प्रधानावदानमुदाहरणमित्युक्तं तन्त्ररत्ने ॥

इति मुख्यक्रमेणाग्नेयस्य पूर्वमवदानाद्यनुष्ठानाधिकरणम् ॥ २ ॥

३

वच० इष्टिपूर्वत्वं सोमस्याम्नातम् 'दर्शपूर्णमाभ्यामिष्ट्वा सोमेन यजेते'ति । तत्किं नियतम् ? उत विपर्यासोऽपि लभ्यत इति । वचनादिष्टिपूर्वत्वम् । सोमपूर्वत्वस्य तु नैवं साक्षाद्वचनमस्ति । तस्मादिष्टिपूर्वत्वमेव स्यात् ।

सत्यम्; न साक्षादस्ति वचनम्, आधानानन्तर्यं तु सोमस्य श्रुतम् । तद्वशाच्चार्थादिष्टेः सोमपूर्वत्वं सञ्जायते । न ह्याधानानन्तर्यं सोमस्येष्टिपूर्वत्वे सम्पादयितुं शक्यम् । तच्च श्रुतं 'सोमेन यक्ष्यमाणोऽग्निमादधीते'ति । सर्वश्चादधानः सोमेन यक्ष्यमाण एव । अतस्सोमपूर्वत्वमपि स्यात् नित्यत्वात्सोमस्य । अतः सोमेनानन्तरं यक्ष्यमाण इत्येतदभिप्रायमिदम् ॥

इति इष्टिसोमयोः पौर्वापर्यनियमाधिकरणम् ॥ ३ ॥

---

सम्प्रतिपन्नदेवताकत्वेनोभयोस्तन्त्रमेवेति तदवदानमुदाहृतम् । प्रधानार्थावदानमपि अवदानादिप्रदानान्तस्यैकपदार्थत्वान्नोदाहरणमिति वक्ष्यति । प्रथमः शाखाहरणादिः । प्रधानात् सान्नाय्ययागात् । अन्ये हविरासादनादयः । बहूनाम् आसादनादीनाम् । तथाहि मुख्यक्रमे आग्नेयात्पूर्वं सान्नाय्याभिघारणम् आग्नेयेनैकेन स्वप्रधानाद्व्यवहितं भवति । प्रवृत्तिक्रमे तु आग्नेयाभिघारणेनाग्नेयेन चेति द्वाभ्याम् । एवमासादनादावपि ज्ञेयम् । मुख्यशब्देनाङ्गानां मिथः प्रत्यासत्यपेक्षया प्रधानप्रत्यासत्तेरनुग्रहौचित्यं ध्वनितम् ॥

इति मुख्यक्रमेणाग्नेयस्य पूर्वमवदानाद्यनुष्ठानाधिकरणम् ॥ २ ॥

३

वचनात्० क्रमनियमस्यापवादात्सङ्गतिः । सोमेनेत्यादि । 'नक्तं पृच्छेन्न नक्षत्रम्' इति वाक्यशेषः । अत्रानन्तर्यश्रवणेऽपि लक्षणया तदवगतिं प्रतिपादयितुं तात्पर्यग्राहकमाह—सर्वश्चेति । ततश्चैतावद्विशेषणमेवान्यथानुपपत्त्या लक्षणायां तात्पर्यग्राहकमिति भावः । पवमानेष्टीनामाधानाङ्गत्वात् व्रात्यपशोश्च सोमाधिकारसिध्यर्थत्वान्न व्यवधायकत्वमिति बोध्यम् । अत्र चाधानप्रकरणादादधीतेत्यन्तं नाधाने सोमाव्यवहितपूर्वकालताविधायकम्, उत्तरैकवाक्यतापन्नस्यापि सिद्धवन्निर्देशान्यथानुपपत्त्या वाक्यभेदेनापि विध्यवगमात् । उत्तरन्तु सोमाव्यवहितपूर्वकालिकाधाने निमित्ते कालानादरविधायकमिति वदन्ति ॥

इति इष्टिसोमयोः पौर्वापर्यनियमाधिकरणम् ॥ ३ ॥

४

उत्क० स्थिते कल्पद्वये चिन्त्यते—किं ब्राह्मणस्य सोमपूर्वत्वमेव ? उत तस्यापीतरवद् द्वावेव कल्पाविति ? तदर्थञ्च चिन्त्यते—'किमाग्नेयो वै ब्राह्मणो देवतया स सोमनेष्ट्वाऽग्नीषोमीयो भवति, यदेवादः पौर्णमासं हविः, तत्तर्ह्यनुनिर्वपेत् तर्हि स उभयदेवतो भवती'ति अनेन वचनेन कृत्स्नौ दर्शपूर्णमासावूर्द्ध्वं सोमादुत्कृष्येते ? अथवा कर्मान्तरविधिरयम् ? उत पौर्णमासीमात्रोत्कर्षः ? अथवैकहविरुत्कर्षः ? इति। यदि कृत्स्नोत्कर्षो ब्राह्मणस्य सोमपूर्वत्वमेव भवति, पक्षान्तरेषु तु तस्याप्युभौ कल्पाविति। तत्र—

**इष्टेरुत्कर्षणं यस्माद् ब्राह्मणस्य विधीयते।**
**तेनास्य सोमपूर्वत्वमुभयं क्षत्रवैश्ययोः॥**

यद्यपि 'यदेवादः पौर्णमासं हविरि'त्येकदेशोत्कर्षः श्रूयते, तथाऽपि समस्तसाध्यत्वेन श्रुतं फलं नैकदेशात्तदुत्पत्तुमर्हति। न चाफलस्यानुष्ठानमस्तीति तस्याप्युत्कर्षः। कृत्स्नोत्कर्षात्सोमपूर्वत्वमेव विप्रस्य, क्षत्रियवैश्ययोरेव कल्पद्वयमिति पूर्वः पक्षः।

अत्र सिद्धान्त्येकदेश्याह—कर्मान्तरमिदं पौर्णमासीधर्मकं तन्नामकं वा विधीयते। एवं धात्वर्थविधिर्भवति, अश्रुतस्य चोत्कर्षः कल्पितो न भवतीति। न त्वेतत्कर्मान्तरं विशिष्टविधिगौरवान्नाम्नश्चानेकार्थकल्पना धर्मलक्षणा वा युक्ता। प्रकरणात्तु पौर्णमास्या एवायं कालविधिः, तत्संयोगात् दर्शस्यापि उत्कर्ष एव इत्येवमपर्यवसितेऽधिकरणे,

अनन्तरोक्तोपजीवनेन पूर्वपक्षं वक्तुं चिन्तान्तरं क्रियते। 'सोमेन यक्ष्यमाणोऽग्निमादधीत, नर्तुं प्रतीक्षेन्न नक्षत्रमि'ति किमयमृतुनक्षत्रातिक्रम आधानस्य ? उत सोमस्येति ? प्रकरणादाधानस्येति प्राप्ते—

वचनान्तरेणास्यामेव शाखायां 'यदहरेवैनमि' त्यादिना आधानकालानादरस्योक्तत्वात्सोमकालबाध एवाऽयम्। यद्यपि शतपथे 'अपहतपाप्मानो वा ऋतवः असौ खलु वाव आदित्य उद्यंस्तेषां पाप्मानमपहन्ति, तस्माद्यदैवैनं श्रद्धा चोपनमेत्, अथादधीत,

---

४

उत्कर्षात्० सङ्गतिसूचनायाह—स्थित इति। अदः अग्नीषोमीयदैवत्यरूपम्। अनुनिर्वपेत्। सोमानन्तरं निर्वपेत्। एकदेशीति। सिद्धान्तिसम्मतब्राह्मणस्यापि कल्पद्वयस्याङ्गीकारात्। द्वितीयकल्पवादी तथोक्तः। अश्रुतस्य दर्शपूर्णमासद्वयस्य। दूषयति—न त्वेतदिति। यदहरिति। 'यदहरेनं श्रद्धोपनमेत्तदहरेवादधीत' इत्यनेनेत्यर्थः। तथा कुर्वन्नित्यनेन निमित्त-

अथ यजेते'त्युक्तम्। तथाऽन्यस्यां शाखायामाहित इति तत्पर एवायं सोमेनाधानानन्तरं यक्ष्यमाण आदधीत तथा कुर्वन् सोमस्य तु नक्षत्रं संपादादिकञ्च नाद्रियेत इति।

स्थितादुत्तरम्—न कृत्स्नोत्कर्षः पौर्णमासीमात्रश्रवणात्। यत्तु नैकदेशात् फलमिति समुदायादेव विहृतात्फलमित्यदोषः। तस्मात्कृत्स्नोत्कर्षाभावात् ब्राह्मणस्याप्युभौ कल्पौ।

सिद्धान्तस्त—गृह्णीम एतत्कृत्स्नोत्कर्षः विप्रस्यापि द्वौ कल्पाविति। यत्तु पौर्णमास्युत्कर्ष इति तन्न मृष्यामहे। न सकलपौर्णमास्युत्कर्षः। किन्तु—

अदःशब्दपरामृष्टमग्नीषोमीयमेव हि।
हविरुत्कृष्यते ऽन्यत्तु यथाप्राप्तमवस्थितम्॥
तन्मात्ररहितत्वेन विप्रस्यापि पुरा भवेत्।
तेन तस्याप्युभावेव कल्पौ क्षत्रियवैश्यवत्॥

इति ब्राह्मणस्यापीष्टिसोमयोः पौर्वापर्यानियमाधिकरणम्॥४॥

५

पुरो० स्थितमग्नीषोमीयस्योत्कर्ष इति। स किं पुरोडाशस्य? उताज्यस्यापीति चिन्तायाम्, तत्र—

अग्नीषोमाभिसम्बन्धादाज्यस्यापीति मन्यते।
विष्णुप्रजापतिभ्यां तु सोमात्प्रागपि तद्भवेत्॥

यद्यप्यग्नीषोमौ यष्टुमनर्हो यजमानः, तथाऽपि नाज्यमुत्क्रष्टुमर्हति। स हि प्रागपि विष्णुं प्रजापतिं वा यक्ष्यति। तस्मान्नाज्योत्कर्षः॥

इत्युपांशुयाजाज्यस्य सोमादनुत्कर्षाधिकरणम्॥५॥

---

तयाप्युत्तरत्रान्वयो दर्शितः। विहृतात् विप्रकर्षेणानुष्ठितात्। ब्राह्मणस्य प्रथमं सोमस्यात् कृत्स्नदर्शपूर्णमासोत्कर्षादिति सूत्रार्थः॥

इति ब्राह्मणस्यापीष्टिसोमयोः पौर्वापर्यानियमाधिकरणम्॥ ४॥

५

पुरोडाशः० पूर्वोक्तार्थस्याक्षेपसमाधानात्सङ्गतिरिति सूचयन्नाह—स्थितमिति। आज्यस्यापि उपांशुयाजाज्यस्यापि। अग्नीषोमीयाभिसम्बन्धात् 'तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पूर्णमास्यां यजन्' इत्यग्नीषोमदेवतासम्बन्धात्। ब्राह्मणस्य सोमादूर्ध्वमेवाग्नीषोमदेवतोद्देशेन त्यागार्हत्वमिति हेतोरुत्कर्षः। स च पुरोडाशस्यैव तत्र तयोरेव देवतात्वात्। उपांशुयाजे तु विष्णुप्रजापतिरूपदेवतान्तरस्यापि सत्वादग्नीषोमोद्देशेन त्यागानर्हत्वेऽपि विष्ण्वाद्युद्देशेन तत्सम्भवान्नोत्कर्ष इत्याह—विष्णिवति। तत् आज्यम्। प्रागपि सोमात्प्रागपि। सूत्रार्थस्तु-विशिष्यानिर्देशे पुरोडाश एवोत्युत्कृष्येत। तद्युक्ते तद्यागार्हत्वेऽग्नीषोमदेवतासम्भवादिति॥

इत्युपांशुयाजाज्यस्य सोमादनुत्कर्षाधिकरणम्॥ ५॥

६

**विकृतेः०** विकृतयो द्व्यहकालाः ? सद्यस्काला वेति संशये, प्रकृतिवत् द्व्यहकालाः। न च वचनविरोधः, प्रकृतिवदेव। प्रकृतौ हि 'पौर्णमास्यां पौर्णमास्या यजेते'ति वाचनिकं कालं वचनान्तरवशादेकदेशेन योजयित्वा द्व्यहकालत्वमेवाश्रितम्, तथा विकृतावपि 'य इष्ट्या पशुने'त्यादिविहितः काल एकदेश एव स्यात्। द्व्यहकालस्य प्रकृतितः प्राप्तत्वात्। वचनं त्विदं व्यवस्थानिवृत्त्यर्थम्। प्रकृतितो हि पौर्णमासीविकाराणाम् अमावास्याविकाराणां च तद्वदेव कालव्यवस्थायां प्राप्तायाम्, अव्यवस्थार्थम् 'य इष्ट्या पशुने'त्यादिवचनम्। सम्भवति च द्वयोरपि प्रकृतिविकृत्योर्द्व्यहकालत्वमेकस्याश्चतुर्दश्यामुपक्रमसम्भवात्। अतो द्व्यहकालाः उच्यते—

**न प्रत्यक्षश्रुतः कालः सङ्कोचं चोदकाद् व्रजेत्।**
**सर्वाङ्गयुक्ता विकृतिः पञ्चदश्यामतो भवेत्॥**
**इति विकृतीष्टीनां सद्यस्कालताधिकरणम्॥६॥**

७

**सान्ना०** 'नासोमयाजी सन्नयेत्, आग्नेयो वै ब्राह्मणः' इति वचनाभ्यां सान्नाय्याग्नीषोमीययोः सोमोत्तरकालत्वम्, तद्विकाराणामप्यतिदेशात् तत्कालत्वमिति सुहृद्भूत्वोपदिष्टवान्॥

**इति सोमात् सान्नाय्यविकाराणामुत्कर्षाधिकरणम्॥७।**

---

६

**विकृतेः०** प्रकृतिकालप्रसङ्गाद्विकृतिकालचिन्तेति सङ्गतिः। वचनेति। 'य इष्ट्या' इति वचनेन साङ्गप्रधाने पूर्णमास्यमावास्ययोर्विधानात् द्व्यहकालत्वे तद्विरोध इत्यर्थः। वचनवैयर्थ्यशङ्कामपाकरोति—वचनन्त्विति। नन्वेकस्मिन् कर्मणि कर्मान्तरारम्भायोगात्कथं प्रकृतिविकृत्योः पर्वण्युपक्रम इत्याशङ्क्याह—सम्भवति चेति। एकस्याः विकृतेः। य इष्ट्येति प्रधाने पर्वश्रवणादन्वाधाने तद्बाधेन पूर्वेद्युरनुष्ठानमिति भावः। सङ्कोचम् अन्वाधानातिरिक्तविषयत्वरूपम्। एवञ्च प्रकृतौ पर्वकालत्वं द्व्यहकालत्वञ्च द्वयमपि प्रत्यक्षत्वादङ्गीकृतम्। विकृतौ त्वानुमानिकं द्व्यहकालत्वं प्रत्यक्षेण पूर्वकालत्वेन दुर्बलत्वाद्बाध्यत इति वैषम्यमिति भावः। सूत्रार्थस्तु विकृतेः प्रकृतिकालत्वादानुमानिकततकालत्वादित्यर्थः। प्रकृत्युत्तरा विकृतिः सद्यस्काला स्यात् कुतः ? तयोः पौर्णमास्यमावास्ययोः प्रत्यक्षशिष्टत्वादिति॥

इति विकृतीष्टीनां सद्यः कालताधिकरणम्॥ ६॥

७

**सान्नाय्य०** अपवादसङ्गतिः। असोमयाजी न सन्नयेत् सान्नाय्ययागं न कुर्यादित्यर्थः। तद्विकाराणामिति। आमिक्षायागाग्नीषोमीयकाम्यपुरोडाशादीनामित्यर्थः। इदञ्च सोमात्प्राक् सान्नाय्यं नास्त्येवेति कृत्वा चिन्तनम्। 'तदु समेव नयेत्' इति वचनात्तु प्रागपि सोमात्सान्नाय्यमस्तीत्याहुः॥

इति सोमात्सान्नाय्यविकाराणामुत्कर्षाधिकरणम्॥ ७॥

८

तथा० इष्टिपूर्वत्वं सोमपूर्वत्वञ्चोभयमस्तीत्युक्तम्। अतः प्रकृतिवत्सोमविकाराणामपीष्टेः प्रागूर्ध्वं च सम्भवं मन्यते। न त्वेवम्;

न हीष्टेः प्रागनुष्ठानं सोमस्याहत्य चोदितम्।
आधानानन्तरोक्त्या तु सञ्जातं प्राक्त्वमर्थतः॥
आधानानन्तरत्वं च विकृतीनां न सिध्यति।
ज्योतिष्टोमोर्ध्वकालत्वात् द्वयोश्च तदसम्भवात्॥

'एष वाव प्रथमो यज्ञो यज्ञानामि'त्यनेन वचनेन ज्योतिष्टोमानन्तरकालत्वाद्विकृतीनां नाधानानन्तर्यं सम्भवति। एकश्चायमनन्तरकालो न द्वाभ्यां प्रकृतिविकृतिभ्यामवरोद्धुं शक्यः, प्रत्यक्षवचनात्तु प्रकृत्या संगृहीत इति न विकृतेः सम्भवति। तदसम्भवाच्च न विकृतयः प्राग्भावमिष्टेर्लभन्ते। न चाहत्य प्रकृतेरिष्टेः प्राक्त्वमुक्तं यदतिदिश्येत। इष्ट्युत्तरकालत्वन्तु साक्षादुक्तं प्रकृताविति तदेव विकृतिरितिव्यपदिश्यते।

अतः सोमविकाराणां दर्शादेः परतः क्रिया।
एवं निरूपिता सम्यक् षट्प्रमाणा क्रमस्थितिः॥

इति सोमविकाराणां दर्शपूर्णमासात्प्रागकर्तव्यताधिकरणम्॥८॥

इति श्रीमहामहोपाध्यायश्रीपार्थसारथिमिश्रकृतायां शास्त्रदीपिकायां
पञ्चमाध्यायस्य चतुर्थः पादः।

॥ इति पञ्चमोऽध्यायः समाप्तः॥

---

८

तथा० इहाप्यपवादिकी सङ्गतिः। प्रकृतितुल्यत्वापवादात्। विकृतीनां सोमविकृतीनाम्। द्वयोश्चेति व्याचष्टे—एकश्चायमिति। अवरोद्धुम् प्राप्तुम्। सूत्रे चोर्ध्वमित्यनुषङ्गो बोध्यः॥

इति सोमविकाराणां दर्शपूमासात्प्रागकर्तव्यताधिकरणम्॥ ८॥

इति श्रीमद्विद्वन्मान्यश्रीमत्तत्सद्रामभट्टात्मज-
वैद्यनाथकृतायां शास्त्रदीपिकाव्याख्यायां
प्रभाख्यायां पञ्चमस्य चतुर्थः पादः॥

पञ्चमोऽध्यायस्समाप्तः